योगतन्त्र-ग्रन्थमाला

[ नवमं पुष्पम् ]

# परमानन्दतन्त्रम्

महेश्वरानन्दनाथविरचितया

सौभाग्यानन्दसन्दोहाख्यव्याख्यया संवलितम्




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

# YOGATANTRA-GRANTHAMĀLĀ

[ *Vol. IX* ]

# PARAMĀNANDATANTRAM

With the Commentary

SAUBHĀGYĀNANDASANDOHA

BY

MAHEŚVARĀNANDANĀTHA



EDITED BY

Ācārya Raghunātha Miśra

Ex-Lecturer,

Department of Āgamaśāstra

Sampurnanand Sanskrit Vishvavidyalaya

VARANASI

1985

Published by :—
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi.

Available at :—
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi 221002.



First Edition—1100 Copies.
Price Rs. 96·00

Printed by—
Ghanshyam Upadhyaya
Manager,
Sampurnanand Sanskrit Vishvavidyalaya Press
Varanasi.

योगतन्त्र-ग्रन्थमाला

[ नवमं पुष्पम् ]

# परमानन्दतन्त्रम्

## महेश्वरानन्दनाथविरचितया

## सौभाग्यानन्दसन्दोहाख्यव्याख्यया

संवलितम्




सम्पादकः

**आचार्यरघुनाथमिश्रः**

अध्यापकचरः, आगमविभागस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

वाराणस्याम्

२०४२ तमे वैक्रमाब्दे १९०७ तमे शकाब्दे १९८५ तमे खैस्ताब्दे

प्रकाशकः—
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये,
वाराणसी ।

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२.

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम् :–९६.०० रूप्यकाणि

मुद्रकः--
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीय-मुद्रणालयस्य
वाराणसी ।

# प्रस्तावना

परमानन्दतन्त्रं महेश्वरानन्दनाथविरचितसौभाग्यानन्दसंदोहाख्यव्याख्यासहितं तन्त्रशास्त्ररसिकानां विदुषां पुरतः समुपस्थापयतामस्माकं परमं प्रसीदति चेतः। चिद्गगनचन्द्रिकाव्याख्यातृरूपेण लब्धयशस्कैः सम्पूर्णानन्दसंस्कृतविश्वविद्यालये आगमप्राध्यापकपदमलङ्कुर्वद्भिः पितृचरणैरस्माकं ग्रन्थस्यास्य सव्याख्यानस्य सम्पादनं प्रारब्धमासीत्। हन्त ! दैवदुर्विपाकान्मुद्रणाय सज्जस्याप्यस्य ग्रन्थस्य मुद्रणात् प्रागेव शिवसायुज्यमापन्नास्ते इति निवेदयतामस्माकं मानसं नितान्तं दूयमानमास्ते। जगदम्बिकाकृपया तेषां पितृचरणानां शुभाशीर्वादैर्लब्धबलैरस्माभिर्यथामति अवशिष्टं कार्यं सम्पूर्य ग्रन्थोऽयं संशोध्य प्रकाशित इति विद्वत्तल्लजा एवात्र प्रमाणम्।

## मातृका-परिचयः

अस्य संस्करणस्य मुख्यमालम्बनं सरस्वतीभवनस्था २३९२० इति संख्याका सटीका मातृका। मातृकायामस्यां १-५५, ५६-८८, ५६-२३१, २३१, २३१-३३९, ३३६-४०८ पत्राणि सन्ति, ग्रन्थस्य आकारः ९·८×५·१ प्रतिपत्रं पङ्क्तयः १५, प्रतिपङ्क्ति अक्षराणि ४३ च सन्ति। देवनागरलिप्यां लिखितोऽयं गंजमयो हस्तलेखः सम्पूर्णः सटीकः शोभनाक्षरः प्रायः परिशुद्धश्च। अत्रत्या यत्र क्वचन विद्यमानास्त्रुटयः पितृचरणैः श्रद्धेयैः सावहितं परिशोधिताः।

मूलग्रन्थस्य सन्ति तिस्रो मातृकाः सरस्वतीभवने २४०३५, २५१०२, २६३१८ इति संख्याकाः। एतासु २५१०२ संख्याका मातृका अपूर्णा, अन्ये च द्वे सम्पूर्णे स्तः। मातृकाणामासां परिचयः सरस्वतीभवनस्य तन्त्रविषयकहस्तलिखितग्रन्थविवरणपञ्जिकायां द्रष्टव्यः। मूलग्रन्थसंशोधने मातृकाणामासां यथावसरं साहाय्यं गृहीतमासीत्।

## ग्रन्थपरिचयः

भगवतीभैरवसंवादमुखेन प्रवृत्तमिदं सुन्दरीतन्त्रं २५ उल्लासात्मकं नानाविषयमण्डितं राजते। अत्र प्रथमे उल्लासे बहुविधेषु वैष्णव-शैव-सौर-गाणपत-शाक्तादितन्त्रेषु बहुविधेषु च सुन्दरीतन्त्रेषु प्रवृत्तेष्वपि परमानन्दतन्त्रस्य कोऽपि विशिष्टो महिमा वर्णितः। द्वितीये उल्लासे उपर्युक्तानां तन्त्राणामन्येषां च भैरव-मातृकातन्त्राणां दैगम्बर-वामन-कापाल - क्षपणक-अघोर - वामकेश-नग्निकामत-कालक- वार्धुष--पूर्वकौल-

मिश्रकचामुण्ड-शुद्धशाक्त-दक्षिण-समय-परामत-अवधूत-कौलिकाख्यानां सात्त्विक-राजस-तामस-विभागान्तःपातिनां तन्त्राणां च गणना स्वरूपं च माहात्म्यं च व्यावर्णि ।

अग्रे च तृतीयादिषु उल्लासेषु श्रीविद्यामन्त्रराजस्य द्वादशभेदाः, महादेव्यास्त्रिविधं रूपमित्यादयो विषया विस्तरेण व्यावर्णिता इति विषयसूच्यां वैशद्येन द्रष्टुं शक्यन्ते । मन्त्र-मुद्रा-न्यास-षडध्वशुद्धि-दीक्षा-अष्टाङ्गनिर्णय-शापमोचन-पारायण-चक्रविरचन-विविधचक्रविधान - पुरश्चरणविधान - मन्त्रिणीदण्डनाथादिसाधन - यन्त्रलेखन-साधनादिविधीनां दर्शनयोगयोश्च निरूपणमनितरसाधारणमत्र द्रष्टुं शक्यते । अत एवात्रोच्यते—

एतत्तन्त्रं महागोप्यं सर्वशक्तिमयं शिवे ।
सर्वतन्त्रसारभूतं परमानन्दसंज्ञकम् ॥
धर्मार्थकाममोक्षाणां निधानं ह्येतदुत्तमम् । इति ।
( २५।१७-१८ )

## व्याख्यातृपरिचयः

सौभाग्यानन्दसंदोहाख्याया व्याख्यायाः कर्ता महेश्वरानन्दनाथ इति तत्र तत्र व्याख्यायामेव दृश्यते । व्याख्यारम्भे समाप्तौ च तेन परमानन्दसंप्रदायगुरूणां केषांचन परिचयः प्रदत्तः । तत्र आद्यगुरुरूपेण भगवान् भैरवः, तस्य शक्तिर्महेश्वरी च स्तूयते । सौभाग्यप्रपञ्चोद्योतपद्धतेः, मातृकाचक्रव्याख्यानस्य च कर्ता शिवानन्दः, सौभाग्यकल्पद्रुमस्य कर्ता माधवानन्दनाथश्च अत्र सविशेषं स्मर्येते ग्रन्थारम्भे ।

ग्रन्थान्ते च बालगोपालेन्द्रयतिः, ईश्वरानन्दनाथः, लोकनाथाश्रमः, यादवानन्दनाथः, लक्ष्मणापराभिधो माधवानन्दनाथश्चेत्ययं गुरुक्रमः परमानन्दसंप्रदायीयः प्रदर्शितः । कल्पद्रुमस्य व्याख्यानकर्ता क्षेमानन्दनाथः, द्राविडान्वयसंभूतः श्रीनिवासबुधः, विद्याद्वयसुनिष्णातो विश्वनाथसूरिः, अमृतानन्दनाथः, कोङ्कणस्थो भास्करयज्वा—इत्येतेषां विदुषामपि तेन नामानि सादरं स्मृतानि । सोऽयं महेश्वरानन्दनाथश्चिन्तामणिशर्मापराभिधः शम्भुनाथबालकृष्णप्रभृतिज्येष्ठनियोगतः, गणेशविश्वनाथादिसाधकप्रार्थनेन च नन्दपक्षाङ्कजलधिमिते कल्यब्दव्यतीते भाद्रशुक्लानङ्गदिने भानुवासरे परमानन्दतन्त्रस्य गूढार्थैकप्रकाशिकां सौभाग्यानन्दसंदोहाख्यां व्याख्यां पूर्णतामनयत् ।

सैषा व्याख्या कुलार्णव-ज्ञानार्णव-त्रिपुरार्णव-वामकेश्वरतन्त्र-दक्षिणामूर्तिसंहिता-त्रिकूटारहस्य-परशुरामकल्पसूत्र-स्वतन्त्रतन्त्र-देवीरहस्य-स्पन्दकारिका - ईश्वरप्रत्यभिज्ञा-तन्त्रालोक-उद्योत-सेतुबन्ध-ताराभक्तिसुधार्णवप्रभृतीनां विशिष्टानां ग्रन्थानामाधारेण तांस्तान् विषयान् सुविशदं व्याकुर्वन्तो स्वीयं किमपि वैशिष्ट्यं ख्यापयति । ग्रन्थग्रन्थकारसूची दर्शनेन तान्त्रिकवाङ्मयविषयकं विस्तृतमध्ययनं व्याख्याकारस्य नितान्तं

चकासते । व्याख्याकारेण नैकवारं नित्याषोडशिकार्णव-ललितासहस्रनाम-वरिवस्यारहस्यप्रभृतिनानातन्त्रव्याख्याता श्रीमान् भास्करराय: स्मृत: । नूनं तत्परवर्ती महानयं तान्त्रिकाचार्य इति वक्तुं शक्यते ।

अत्र व्याख्यायां तन्त्राणां प्रामाण्यम्, वृत्रादिशापमोचनप्रकार:, पुरुषेभ्यो दीक्षणापेक्षया स्त्रीभ्यो दीक्षणमुत्तमम् साधकधर्मा:, मण्डलधर्मा:, मुख्यालाभे प्रतिनिधिविधानम्, आणवमलशोधनम्, अजपाजपप्रकार:, अष्टाङ्गनिर्णये मूलवाक्यव्याख्या, लघुषोडान्यासप्रकारान्तरम्, कुलार्णवोक्तो महाषोडान्यास:, कौलश्राद्धप्रकार:, वारोदयो नित्यायोगश्च, महापूजा स्वतन्त्रोक्ता, रुद्रयामलोक्ता विशेषन्यासा:, सन्ध्यादिप्रायश्चित्तविधि:, सन्ध्याकालनिर्णय:, पात्राणामुपघाते प्रायश्चित्तम्—इत्येते विषया: प्रसङ्गतो नानातन्त्रप्रामाण्येन विवृता व्याख्याकारस्य कामप्यनिर्वचनीयां वैदुषीं ख्यापयन्ति ।

## व्याख्याकारस्य काल:

व्याख्याकारेण मातृकाचक्रविवेकव्याख्याकारस्य शिवानन्दस्य, द्राविडान्वयसंभवस्य श्रीनिवासबुधस्य, अष्टाङ्गनिर्णयामृतचषककारस्य अमृतानन्दनाथस्य च उल्लेख: स्वीयव्याख्यायां कृत इति पूर्वमेवोक्तम् । तत्र शिवानन्दस्य मातृकाचक्रविवेकव्याख्यानम्, श्रीनिवासबुधस्य त्रिपुरारहस्यज्ञानखण्डव्याख्यानं च सरस्वतीभवनग्रन्थमालायामेव प्रकाशितपूर्वम् । अष्टाङ्गनिर्णयामृतचषकस्य च मातृका सरस्वतीभवनपुस्तकालये लभ्यते । माधवानन्दनाथक्षेमानन्दनाथप्रभृतीनामपि ग्रन्थानां मातृकास्तत्र सन्ति । सर्वेषामेषां मुद्रितानां हस्तलिखितानां च ग्रन्थानामवलोकनेन,

नन्दपक्षाङ्कजलधिमिताऽतीताब्दके कलौ ।
भाद्रे शुक्लानङ्गदिने भानुवारेण संयुते ॥
परमानन्दतन्त्रस्य गूढार्थैकप्रकाशिका ।
सौभाग्यानन्दसंदोहाख्या टीका रचिताऽभवत् ॥

इति व्याख्याकारस्य स्वीयेन वचनेन च ईशवीयायामष्टादश्यां शताब्द्यामस्य समयो निश्चीयते ।

## आभारप्रदर्शनम्

ग्रन्थस्यास्य सम्पादनकर्मणि प्रात:स्मरणीया: पितृचरणा: स्वनामधन्यै: पण्डितश्रीबदरीनाथशुक्लमहोदयै: सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पूर्वतनै: कुलपतिभिर्नियोजिता इति तेषामाभारप्रदर्शनमवसरप्राप्तम् । वर्तमाना: कुलपतय: सुरभारतीसमुपासनसमर्पितजीवना: श्रीमन्तो डॉ० रामकरणशर्ममहोदया: सत्वरमस्य ग्रन्थस्य

प्रकाशनाय सर्वान् प्रेरितवन्त इति तान् प्रति कार्तज्ञमावहामः। सम्पादनावसरे मुद्रणावसरे च सम्बद्धान् हस्तलेखान् सुलभीकृत्य सरस्वतीभवनपुस्तकालयग्रन्थाध्यक्षाः श्रीमन्तो लक्ष्मीनारायणतिवारीमहोदयाः, मुद्रणादिकर्मसु सर्वविधं सौविध्यमुपपादयन्तः प्रकाशनाधिकारिणो डॉ० हरिश्चन्द्रमणित्रिपाठिनश्च भृशमभिनन्द्यन्ते। पितृचरणानां शिवसायुज्यप्राप्त्यनन्तरं संदिग्धानां स्थलानां संशोधनाय किञ्चित् सावशेषस्य सम्पादनकर्मणः सम्पूर्तये च शास्त्रचूडामणिप्राध्यापकैः श्रीपण्डितव्रजवल्लभद्विवेदिभिः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयदर्शनविभागाध्यक्षैः डॉ० महाप्रभुलालगोस्वामिभिः न्यायविभागाध्यक्षैरपि सरसकाव्यनिर्माणलब्धयशस्कैः श्रीमद्भिः डॉ० श्रीरामपाण्डेयमहोदयैश्च कृपाभरित सर्वविधं साहाय्यमकारीति सर्वे एते विद्वांसः प्रसङ्गेऽस्मिन् सविनयं स्मर्यन्ते। ईक्ष्यशोधकर्मणि साहाय्यमाचरन्तश्च श्रीमन्तो हरिवंशत्रिपाठिमहोदया वरिष्ठकार्यालयपण्डिताः साधुवादैः सभाज्यन्ते।

लब्धेऽपि बहुविधे साहाय्ये, कृतेऽपि च सावधानं संशोधनादिके कर्मणि काश्चन त्रुटयोऽवशिष्टाः स्युः। गच्छतः स्खलनन्यायेन मर्षणीयास्ता मनीषिभिः।

श्रीवैकुण्ठनाथपवहारिसंस्कृतमहाविद्यालयः,
वैकुण्ठपुरम्, देवरिया।
(३।३।८५ ई०)

विदुषां वशंवदः
**त्रिगुणानन्दमिश्रः**
साहित्यप्राध्यापकः

# परमानन्दतन्त्रस्य विषयानुक्रमणी

## प्रथमोल्लासः



## द्वितीयोल्लासः



## तृतीयोल्लासः



## चतुर्थोल्लासः

## पञ्चम उल्लासः



## षष्ठ उल्लासः



## सप्तम उल्लासः



## अष्टमोल्लासः



## नवमोल्लासः



## दशमोल्लासः

## एकादशोल्लासः



## द्वादशोल्लासः



## त्रयोदशोल्लासः

## चतुर्दशोल्लासः



## पञ्चदशोल्लासः

## षोडशोल्लासः



## सप्तदशोल्लासः



## अष्टादशोल्लासः



## एकोनविंशोल्लासः

## विंशतितमोल्लासः



## एकविंशोल्लासः

## द्वाविंशोल्लासः



## त्रयोविंशोल्लासः



## चतुर्विंशोल्लासः

## पञ्चविंशोल्लासः

महेश्वरानन्दनाथविरचित-

## सौभाग्यानन्दसन्दोहाख्यव्याख्यासहितं

# परमानन्दतन्त्रम्

## प्रथम उल्लासः

अनाद्यनन्तमानन्दमप्रतिष्ठं परं शिवम् ।
यदन्तर्भाति तत्त्वानां चक्रं तं प्रणमाम्यहम् ॥ १ ॥

---

सौभाग्यानन्दसन्दोहाख्या व्याख्या

ॐ नमः शिवशक्त्यैक्यरूपिणेऽमृतरूपिणे ।
गुरवे करुणालेशतारितानन्तदेहिने ॥ १ ॥

भजामि तां विमर्शाख्यां शक्तिं कामेश्वराश्रयाम् ।
या पञ्चब्रह्मविलसच्छिवासनविराजिता ॥ २ ॥

स्मरामि वाङ्मयीं देवीं तां परादिशरीरिणीम् ।
यस्या विलासवैधुर्ये जगन्मूकान्धसम्मितम् ॥ ३ ॥

तं सदा शरणं यामि वारणास्यं घृणानिधिम् ।
यत्कृपा विघ्नतिमिरवारणे तरुणारुणः(णा) ॥ ४ ॥

नमामि परमानन्दतन्त्राद्यगुरुमीश्वरम् ।
भैरवं तां च तच्छक्तिमाद्यश्रोत्रीं महेश्वरीम् ॥ ५ ॥

शिवानन्दं च सौभाग्यप्रपञ्चोद्योतपद्धतेः ।
कर्तारं मातृकाचक्रव्याख्यानख्यातसत्कथम् ॥ ६ ॥

महागुरुं च सौभाग्यकल्पद्रुमविधायिनम् ।
श्रीमाधवानन्दनाथं सर्वशास्त्रार्थकोविदम् ॥ ७ ॥

आलोक्य पद्धतिद्वन्द्वं तन्त्राणि सुविमृश्य च ।
सम्प्रदायं गुरोर्ज्ञात्वा विचार्य स्वधियाऽखिलम् ॥ ८ ॥

परमानन्दसत्तन्त्रगूढार्थैकप्रकाशिकाम् ।
सौभाग्यानन्दसंदोहाभिधां व्याख्यां यथामति ॥ ९ ॥

महेश्वरानन्दनाथः करोम्यविततां स्फुटाम् ।
अनुगृह्णन्तु मां बालं श्रीविद्योपासकेश्वराः ॥ १० ॥
संवादयामि सौभाग्यकल्पद्रुममपि सर्वतः ।
परमानन्दतन्त्रेण चान्यैरपि यथातथम् ॥ ११ ॥

श्रीविद्याविदुषां करस्थमणिवज्जातं तथा हृद्गतं
तात्पर्यं सुनिगूढमप्यतितरां तन्त्रस्य तेनेहते ।
व्याख्यानेऽधिकृता भवन्ति न तथाप्यन्ये नु जीवन्ति मां
ये तान् बोधयितुं सुमन्दधिषणान् यत्नः कृतार्थो भवेत् ॥ १२ ॥

अथवा निजवाग्द्वारतन्त्रसम्बन्धतोऽप्यहम् ।
कृतार्थः स्यामनेनैव यत्नेन स्वात्मशुद्धितः ॥ १३ ॥

इह खलु जनानामनवरतजननमरणप्रवाहपतितानां तद्दुःखसिन्धुसमुत्तरणमेव पुरुषार्थः । तदुपायश्च परमकारुणिकेन परमशिवेन श्रुतिस्मृतिपुराणागमैरधिकारिभेदाद् बहुधोपपादितः । तत्र ज्ञानमुपासना कर्म चेति त्रयमेव निरूपितं सर्वत्र श्रुत्यादावागमे च । तत्र कर्मणा चित्तशुद्धिं संपाद्योपासनया चित्तैकाग्र्यं सम्पाद्य ज्ञानेनाज्ञाननिवृत्तौ स्वात्मपुरुषार्थलाभः । तत्र कर्मादिविधायकं स्वस्वाधिकारिणं प्रति यथा श्रुत्यादिकं प्रमाणम्, तथैवागमापरनामधेयं तन्त्रमपि । अत एव—"अष्टादशपुराणानां कर्ता सत्यवतीसुतः । कामिकादिप्रभेदानां यथा देवो महेश्वरः ॥" इति सूतसंहितायां पुराणप्रामाण्योपमानत्वेन तन्त्रप्रामाण्यमुक्तम् । यथाहि महेश्वरोक्तत्वात् कामिकादितन्त्राणां प्रामाण्यमेवं नारायणांशभूतव्यासोक्तत्वात् पुराणं प्रमाणमित्यर्थस्तद्व्याख्यायां श्रीविद्यारण्यस्वामिभिर्वर्णितः । पुराणेषु तन्त्रनिन्दा तन्त्रेषु वेदादिनिन्दा तु नहिनिन्दान्यायेन स्तुत्यस्तोत्रार्था । ऐहिकैकफलकनिषिद्धकर्मविधायकं तन्त्रं तु श्येनयागविधिवेदवाक्यवदनिष्टप्रयोजकमेव । एतच्चाग्रे मूले एव स्पष्टीभविष्यति । तस्मात् सर्वथा तन्त्राणामप्रामाण्यनिरूपणमपास्तम् । अप्रामाण्यकथनं पुराणादिषु तन्त्रविशेषपरत्वेन तन्त्रैकदेशपरत्वेन स्तुत्यर्थत्वेन वा योजनीयम् । अत एव श्रीमच्छङ्करभगवत्पादप्रमुखानां प्रपञ्चसारादिकृतिरनवद्या । तथा च प्रकृतं परमानन्दतन्त्रं शुद्धकर्मोपासनज्ञानप्रकाशकत्वेन प्रमाणभूतं व्याख्यातुमुचितमेवेति मम यत्नोऽतिसुफल एव । विस्तरेण तन्त्रप्रामाण्यव्यवस्थापनं तु क्षेमानन्दकृतपद्धतिटिप्पणादौ द्रष्टव्यम् । विस्तरभयान्नेह वितानितम् ।

इह सर्वाणि तन्त्राणि देवीशिवादिसंवादरूपाणि दृश्यन्ते । तत्र तन्त्रार्थः श्लोकरूपेण वाक्यरूपेण वा शिवेन देवीं प्रत्युक्तः । देव्युवाचेत्यादिप्रश्नोत्तरादिश्लोकात्मना रचनं तु तत्परम्परायां केनचित् साधकेन कृतमिति ज्ञेयम् । एवमेव सर्वतन्त्राणां श्लोकादिरूपत्वं श्रीमृगेन्द्रवृत्तौ श्रीनारायणकण्ठपादैर्निरूपितम् ।

श्रीदेव्युवाच—

महेश देवदेवेश विश्वकारण वल्लभ।
त्वन्मुखात्तु मया देव तन्त्राणि बहुशः पुरा॥ २॥

तत्रादावखिलविघ्ननिरसनद्वारा ग्रन्थसमाप्त्यर्थं शिवप्रणत्यात्मकं मङ्गलमाचरति—अनादीति। तम् अनादीत्यादिना वर्णनीयम्। शिवं मङ्गलात्मकम्। अहं ग्रन्थचिकीर्षुः। प्रणमामि प्रकर्षेण कायवाङ्मनसां तदेकप्रवणतां करोमि। कं तम्? यदन्तर्भाति तत्त्वानां चक्रम् यस्यान्तः शरीरे तत्त्वानां शिवादिक्षित्यन्तानां चक्रं समुदायः भाति प्रकाशते। सर्वं जगद्विज्ञानात्मनि शिवे एव भासते। अत एव "नहि ज्ञानादृते भावाः केनचिद्विषयीकृताः" इत्युक्तम्। पुनः कथंभूतं तम्? अनादि आदिरहितम्, अनुस्वारलोप आर्षः। अथवानन्तपदेन कर्मधारयः। अनन्तम् अन्तरहितम्। आनन्दं सुखरूपम्। अप्रतिष्ठम् अनाश्रितम्। परं तत्त्वातीतम्। शिवादिक्षित्यन्ततत्त्वानामधिष्ठानत्वेन भासकत्वात्तत्त्वातीतः, अनाश्रितश्च, "तत्त्वातीतः परः शिवः। आश्रयः सर्वतत्त्वानामस्य नास्त्यन्यदाश्रयम्" इत्युक्तेः। सर्वाधिष्ठानत्वेन सर्वात्मकत्वाद् द्वितीयाभावेन दुःखराहित्यात् सुखरूपः, "हर्षः संभृतभेदमुक्तिसुखभूर्भारावतारोपमः" इत्युक्तेः, जन्मनाशाभावादाद्यन्तरहितः सर्वजगज्जन्मनाशसाक्षित्वेनासाक्षिकयोस्तज्जन्मनाशयोरनङ्गीकारात्, "सर्वप्रकाशस्योत्पत्तिस्तं वा केन भासताम्" इत्युक्तेः। प्रणमामीत्यत्र कायस्य तत्प्रवणत्वं तत्कर्मानुष्ठानम्, वाचस्तत्प्रवणत्वं हृल्लेखाद्युच्चारादिरूपमुपासनम्, मनसस्तत्प्रवणत्वं विषयवासनात्यागपूर्वकं शिवतत्त्वविमर्शनं ज्ञानम्। एतेनात्र कर्मोपासनाज्ञानानां विषयत्वं सूचितम्। ईदृशप्रणतीच्छावानधिकारी च सूचितः। शिवमित्यनेन फलं सूचितम्। अनादीत्यादिविशेषणैः फलस्यापरिच्छिन्नत्वेन परमपुरुषार्थत्वं सूचितम्। सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः स्फुट एव। इत्यनुबन्धचतुष्टयसंगतिः॥ १॥

प्रश्नमवतारयति—श्रीदेव्युवाचेति। श्रीमती सर्वोत्तमा देवी परभैरवक्रीडाशक्तिः। एतेन परभैरव एव क्रीडार्थं स्वात्मशक्तिं विभज्य विभक्तेन स्वात्मशक्तिरूपेण स्वयमेव स्वात्मानं पृच्छतीत्यभिप्रायः सिद्धः, "गुरुशिष्यपदे स्थित्वा स्वयं देवः सदाशिवः। प्रश्नोत्तरपरैर्वाक्यैस्तन्त्रं समवतारयत्॥" इत्युक्तेः। महेश महांश्चासावीश्वरः, महत्त्वे हेतुः—देवदेवेशेति। देवानाम् इन्द्रादीनां देवा ब्रह्मादयस्तेषाम् ईशो नियन्ता सदाशिवात्मा परभैरवः। विश्वकारण विश्वेषां सर्वेषां कारणं हेतुः, तत्सम्बोधनम्। वल्लभ प्रियतम। वल्लभ इति रहस्यतममपि मह्यं वक्तुं योग्यमिति सूचितम्। विश्वकारण इति सर्वकारणत्वेन सर्वज्ञत्वाद्वक्तुः समर्थत्वं द्योतितम्। आद्यविशेषणद्वयेन सर्वनियन्तृत्वेन शास्त्रप्रणेतृत्वं महत्त्वेन तदुक्तौ प्रामाण्यं च सूचितम्। एवमग्रेऽपि सर्वेषां पदानामभिप्रायो ज्ञेयः। ग्रन्थविस्तरभयान्न सर्वत्र निरूप्यते। त्वन्मुखात्तु त्वन्मुखादपि। मयापि इति अप्यर्थस्य तु शब्दस्योभयत्रान्वयः। एतेनान्यतोऽपि अन्यैरपि श्रुतानि तन्त्राणि परमानन्दसम्प्लवं नैव जनयन्तीति एतद्भिन्नतन्त्राणामपूर्णत्वमुक्तम्। बहुशः बहुप्रकारेण॥ २॥

वैष्णवानि च शैवानि सौरगाणपतानि च ।
शाक्तान्यनेकरूपाणि विविधाचारकाण्यपि ॥ ३ ॥
संश्रुतानि तथाप्यद्य परमानन्दसंप्लवः ।
नैव जातोऽतिगहनभावात् संमिश्रणादपि ॥ ४ ॥
तस्मादद्य महादेव सुन्दर्यास्तन्त्रमुत्तमम् ।
सुस्पष्टं सुव्यवस्थं च परमानन्ददायकम् ॥
कृपया वद मे देव यद्यहं तव वल्लभा ॥ ५ ॥

श्रीभैरव उवाच –

शृणु देवि प्रवक्ष्यामि सुन्दरीतन्त्रमुत्तमम् ।
एतत्तन्त्रपराणां तु तव चापि महेश्वरि ॥ ६ ॥

---

बहुप्रकारत्वमेव विभजति – वैष्णवानीति । विष्णूपासनाविषयाणि । चोऽनुक्तानां स्कन्देन्द्रादिविषयतन्त्राणां समुच्चायकः । अनेकरूपाणि फलसाधनादिभेदात् । विविधाचारकाणि वामकौलाद्याचारभेदात् । अपिना समानाचारकाणि च ॥ ३ ॥

संश्रुतानि सम्यगर्थविबोधपर्यन्तं श्रुतानि । तथापि परमेण मुख्येनानन्देन सम्प्लवः परिपूर्णता आकाङ्क्षानिवृत्तिः, नैव जातो न जात एव, एवकारेणैतैस्तन्त्रैरग्रेऽपि न भविष्यतीति सूचितम् । तत्र हेतुद्वयमाह– अतिगहनभावात् संमिश्रणादपीति । अत्यन्तगहनत्वादगम्यः अज्ञेयो भावोऽभिप्रायो यस्य । भावादिति भावप्रधानो निर्देशः, भावत्वादित्यर्थः । सम्यङ्मिश्रणम् आचारादीनां सांकर्येण कथनम् । अपिना समग्रापेक्षितविषयाकथनस्यापि संग्रहः ॥ ४ ॥

ततः किं तदाह—तस्मादिति । तस्मात् परमानन्दसम्प्लवाभावात् । अद्येति तच्छ्रवणे कालविलम्बासहनेनात्युत्कण्ठा सूचिता । किंदैवत्यं तन्त्रं पृच्छसीति चेदाह—सुन्दर्या इति । सुन्दरी श्रीविद्या । अग्रिमोल्लासे "श्रीविद्या त्रिपुरा चैव सुन्दरी ललिता तथा" इत्युक्तत्वात् । उत्तमत्वे हेतुत्रयमाह—सुस्पष्टेत्यादि । सुस्पष्टं व्याकुलाक्षराद्यभावात् । सुव्यवस्थं वर्णाश्रमादिभेदेन भिन्नविधिम् । एतद्विशेषणद्वयेन पूर्वोक्तातिगहनेत्यादिदोषद्वयं क्रमेण वारितं ज्ञेयम् । अत एव परमानन्ददायकम् । आप्तकामत्वात् कथने तव प्रयोजनाभावेऽपि दीनजनोद्धारणाय वदेत्याह—कृपयेति । षट्चरणोऽयं श्लोकः ॥ ५ ॥

उत्तरमवतारयति—श्रीभैरव उवाचेति । भरणाद्रमणाद्वमनाद् भैरवः ब्रह्मादिद्वारा स्थितिसंहारसृष्टिकारी सदाशिवः । तन्त्रनाम्नोऽन्वर्थतामाह—एतत्तन्त्रेति । एतत्तन्त्र-

यस्माच्च जायते देवि परमानन्दसंप्लवः ।
तस्मात्तन्त्रमिदं प्रोक्तं परमानन्दसंज्ञितम् ॥ ७ ॥
शृणुष्वावहिता भूत्वा तन्त्रसारं ह्यनुत्तमम् ।
अतिगुह्यमतिस्वच्छमतिकल्याणदायकम् ॥ ८ ॥
पुरा कैलाशशिखरे प्रोक्तवान् शङ्करः स्वयम् ।
कदाचिद्देव्यहं तत्र स्थितस्तत्सेवनोद्यतः ॥ ९ ॥
पराशक्तिसहायस्य चन्द्रचूडस्य पार्श्वतः ।
तदा विरिञ्चिविष्णवीशसेवितः परमेश्वरः ॥ १० ॥
ब्रह्मादीनुक्तवान् देवो भवन्तः सर्व एव हि ।
नानाविधानि तन्त्राणि नानाकामप्रदानि च ॥ ११ ॥
कलौ सर्वमनुष्याणां कामोपहतचेतसाम् ।
मोहकानि विचित्राणि कुर्वन्तु द्रुतमेव हि ॥ १२ ॥

---

मेवात्युत्तमत्वेन परनुपादेयं येषाम् । तुरवधारणे । एतत्तन्त्रपराणामेव परमानन्दसम्प्लव इत्यर्थः । तव चापीत्यपिना उपासककोट्यनन्तर्गतत्वेन केवलश्रवणमात्रादेव परमानन्दसम्प्लवस्तव इति सूचितम् ॥ ६ ॥

यस्मात् कारणात्परमानन्दसम्प्लवो जायते तस्मात्प्रोक्तमिति सम्बन्धः ॥७ ॥

अत्युत्तमत्वेनैतत्तन्त्रस्य त्वया सावधानेन श्रोतव्यमित्याह--अवहितेति । कुत एतस्योत्तमत्वं तदाह–तन्त्रसार इत्यादि । तन्त्राणां मध्ये सारं हेयांशरहितम् । नास्त्युत्तमं यस्मादित्यनुत्तमम् । अतिगुह्यम् अत्यन्तगोप्यम् । अतिस्वच्छं राजसतामसविधिरूपमलरहितम् । अत एव सात्त्विकविद्ध्युपेतत्वादतिकल्याणदायकम् ॥ ८ ॥

प्रसङ्गात्तन्त्राणानुत्पत्तिं वक्तुमुपक्रमते— पुरेति । शङ्करः परशिवः । स्वयमिति अयं स्वयं शङ्करः, अन्ये सदाशिवादयस्तु तत्सेवासमासादितशङ्करभावाः । यद्वा स्वयं प्रोक्तवानित्यन्वयः । सेवनोद्यतः सेवने उद्युक्तः ॥ ९ ॥

सहायस्य सहितस्य ॥ १० ॥

नानाविधानि विविधविधानयुक्तानि । कामो विषयसुखं चेति केवलाभिचारपराणां समुच्चायकः ॥ ११ ॥

किमिति कामप्रदतन्त्रकरणम् ? तदाह—कलाविति । कामेति । कामाः इदं मे स्यादिदं मे स्यादिति वस्तुविषयेच्छाः, तैरुपहतं सदसद्विचारहीनं चेतश्चित्तं येषाम् । मोहकानि विपरीतबुद्ध्युत्पादकानि । विचित्राणि विविधविधिफलचित्रितानि । कामैरुपहतचित्तानां हि सति असद्बुद्धिः, असति सद्बुद्धिः । "यामिमां पुष्पितां वाचं प्रवदन्त्य-

एवं महेशेनाज्ञप्ताः स्वयंभ्वाद्याः प्रणम्य तम् ।
गतास्ततोऽहमाज्ञप्तस्तेन देवेन शंभुना ॥ १३ ॥
त्वं भैरव गणैर्युक्तः कुरु तन्त्राण्यनेकशः ।
पृथङ्नानाविधानीति ततोऽहं प्रणिपत्य तु ॥ १४ ॥
बद्धाञ्जलिः प्रोक्तवांस्तं देवदेवं जगत्पतिम् ।
भगवन् देव चित्तं मे जातं शङ्काकलङ्कितम् ॥ १५ ॥
तदाज्ञां देहि किञ्चित् त्वां पृच्छामि परमेश्वर ।
ततः परशिवेनाहमाज्ञप्तो वद वत्सक ॥ १६ ॥
इत्यथाहमुवाचेशं यत्तच्छृणु महेश्वरि ।
भगवन् करुणासिन्धुस्त्वं लोकस्य हिते रतः ॥ १७ ॥
किमर्थं लोकमोहाय आज्ञापयसि शङ्कर ।
अथ देव उवाचेदं शृणु भैरव तत्त्वतः ॥ १८ ॥
न मे द्वेष्योऽस्ति न परः प्रियोऽस्ति जगतीतले ।
उदासीनो ह्यसंगोऽहं शान्तमूर्तिरनुत्तरः ॥ १९ ॥

---

विपश्चितः । वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥" इति श्रीगीतायां भगवतैवैतदुक्तम् ॥ १२ ॥

ततः ब्रह्मादिगमनान्तरम् ॥ १३ ॥

तदेव शिववचनमाह—त्वमिति । भैरवगणैरित्यनेन भैरवगणनायकोऽयं परभैरव इत्युक्तं भवति । ततः तद्वचनान्तरम् ॥ १४ ॥

शिवं प्रति भैरववाक्यमाह—भगवन्निति । कलङ्कितं कलुषितम् ॥ १५ ॥

वद वत्सक इत्याज्ञप्त इत्युत्तरेणान्वयः ॥ १६ ॥

अथ आज्ञानन्तरम् । स्वशङ्काभिप्रायं वर्णयति—भगवन्निति ॥ १७ ॥

किमर्थम्, करुणासिन्धोर्लोकहितकारिणो लोकमोहाय ज्ञापनं विरुद्धमिति भावः । प्रत्युत्तरमवतारयति—अथेति । तत्त्वतः यथार्थतः ॥ १८ ॥

द्वेष्यः द्वेषविषयः । प्रियः प्रीतिविषयः । द्वेष्यः प्रियश्च नास्ति । कुतः ? यतो मत्तः परः अन्यः कोऽपि नास्ति, सर्वस्य स्वात्मरूपत्वात् । प्रीतिर्द्वेषश्च परस्मिन्नेव संभवति, न स्वस्मिन् । तत्त्वतस्त्वत्तोऽन्यस्याभावेऽपि कल्पितेषु तेषु प्रीत्यादिः कुतो नेति चेदाह—हि यस्मादुदासीन इति । उदासीनः तटस्थः, कल्पितेष्वभिनिवेशाभावात् । अत एवासङ्गः

**मामजानन्त एते वै लोकाः संचितकर्मणाम् ।**
**नानाविधानां पाकेन भोगेषु नियतं रताः ॥ २० ॥**
**तान् मोहयितुमेवैषा मम वामाङ्गसंगता ।**
**स्वातन्त्र्यशक्तिर्मायाख्या महादुर्घटकारिणी ॥ २१ ॥**

---

अहन्ताममतारूपसम्बन्धशून्यः । अत एव शान्तमूर्तिः अहन्तादिप्रयुक्तक्षोभादिविकाररहितः । अत एवानुत्तरः नास्त्युत्तरः उत्तमो यस्मात् ॥ १९ ॥

ननु यदि त्वमुदासीनस्तर्हि केन कारणेन जना भोगरताः ? संचितकर्मपाकेनेति चेत्, तत्कर्माचरणमपि कुत इति चेत्, मदज्ञानेनेत्याह—मामिति । मामुदासीनादिरूपं स्वात्मेत्यजानन्तः । वै निश्चयेन । लोक्यन्त इति लोका दृश्यदेहमयाः । आत्मनः शिवरूपत्वाज्ञानादतृप्ता भूत्वा कामनया कृतकर्मपाकेन कर्मफलं भुञ्जानाः पुनर्भोगे नियमेन रता इत्यर्थः ॥ २० ॥

ननु भोगरत्या कर्मकरणम्, कर्मणा फलभोगः, भोगेन भोगरतिरितीदृशभवचक्रपतितानां का गतिः, कश्च प्रवर्तक इति चेत् तत्राह—तानिति । तान् भोगरतान् वैषयिकसुखासक्तान् । मोहयितुम् एषा तन्त्राण्युद्भावयतीत्यग्रिमेणान्वयः । एषा का ? मम वामाङ्गसङ्गता मद्वामाङ्गे त्रिपुरसुन्दरीरूपेण संस्थिता । यद्वा मम यद्वामं सुन्दरं सकलजगत्स्पृहणीयम् अङ्गं परप्रकाशानन्दरूपम्, तत्र सङ्गता सम्यगनारोपितरूपेण गता विद्वद्भिर्ज्ञाता । सा किं विधा तदाह—स्वातन्त्र्येति । स्वातन्त्र्यं स्वतन्त्रत्वम् अनन्यापेक्षत्वम् । तदपि न शिवात् पृथगिति वक्तुं शक्यतीति । शक्तिशक्तिमतोरभेदस्य सर्वैरिष्टत्वात् । एतेन शान्तब्रह्मवादिनो निरस्ताः, तस्य शक्तिमत्त्वकथनात् । एतच्च—"चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता । स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥" इत्यादिप्रत्यभिज्ञाश्लोकव्याख्यायां श्रीमदभिनवगुप्ताचार्यपादैर्वितत्य निर्णीतम् । मायेत्याख्या यस्याः । ननु कथमिदं तव शक्तिर्जनान्मोहयति त्वमुदासीनः, सा च शक्तिस्त्वदभिन्नेति तदाह—महादुर्घटकारिणीति । सर्वथा अघटितमपि घटयति सा । तदुक्तं चित्रदीपे—"कूटस्थमनुपद्रुत्य करोति जगदादिकम् । दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः ॥ द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि । मायायां दुर्घटत्वं च स्वतः सिद्ध्यति नान्यतः ॥" इति । यथाहि दर्पणस्योदासीनत्वेऽपि निर्मलत्वेऽपि तच्छक्त्या तत्र प्रतिबिम्बसहस्रभासनेऽपि तन्निर्मलत्वादेर्न क्षतिरेवं शिवस्यापीति भावः ॥ २१ ॥

ममेति । मम आज्ञा विधिवचनम् । तद्रूपा भूत्वा । यथा हि लोके प्रभोः प्रभुत्वशक्तिस्त्वयेत्थं कर्तव्यमित्याज्ञावचनरूपेण भृत्यान्तः श्रोत्रादिना प्रविश्य तत्तत् कार्यं

ममाज्ञारूपमापन्ना ब्रह्मादिषु निविश्य सा ।
उद्भावयति तन्त्राणि नानाफलयुतानि वै ॥ २२ ॥

तेषां कर्मोपभोगाय पुनः पुनरनेकधा ।
कलिधर्मप्रवृद्ध्यर्थं लोकाः कामपरायणाः ॥ २३ ॥

दुष्पूरकामलोभेन हृतचित्ता दुराशयाः ।
विषयाभिमुखाः स्तब्धाः स्त्रीधनेहाः सदाऽशुभाः ॥ २४ ॥

आलोक्य तानि तन्त्राणि मोहात् पण्डितमानिनः ।
मन्मायापहृतज्ञाना गुरुहीना गुरुद्रुहः ॥ २५ ॥

---

संपादयति, एवमेव मच्छक्तिरपि आज्ञारूपेण ब्रह्मादिषु प्रविश्य विविधफलानि तन्त्राण्युद्भावयति । उद्भावयतीत्यनेन सिद्धस्यैव प्रकटनमुक्तम् । तेन तन्त्राणां वेदवदनादित्वमुक्तम् । एतच्चाग्रिमोल्लासे अखिलानि च तन्त्राणि कल्पान्ते परमेश्वरे स्थितानीति स्पष्टतरं वक्ष्यति ॥ २२ ॥

किमर्थमुद्भावनमिति चेत्तत्राह—तेषां कर्मेत्यादि । तेषां जनानाम् । कर्मणा स्वकृतेन शुभाशुभात्मकफलभोगार्थं शास्त्रेणैव प्रायः पुनः पुनरनेकविधभोगसाधकेषु कर्मसु प्रवर्त्तन्ते । अथ च कलिधर्मप्रवृध्यर्थं कलेः कलियुगस्य धर्माः लोभहिंसानृतादयः, तत्प्रवृध्यर्थं जना द्विविधाः सात्त्विका असात्त्विकाश्चेति । तत्रासात्त्विकानां शास्त्रेण फलभोगप्रकारं कलिधर्मप्रवृद्धिप्रकारं च कथयति—लोका इत्यादि । कामपरायणाः विषयतत्पराः ॥ २३ ॥

दुष्पूरेति । विषयाशेषप्राप्त्यापि परिहर्तुमशक्येन कामलोभेन, कामः अभिलाषः, लोभः दानयोग्यस्याप्यदाननिमित्तम् । एवं द्विविधचित्तवृत्त्या हृतचित्ताः, हृतं नाशितं सद्ग्रहणायोग्यचित्तं येषाम् । अत एव दुराशया दुष्टभावाः । विषयेषु स्त्रीधनादिषु अभिमुखाः तत्पराः । स्तब्धाः अनम्राः । सर्वदा स्त्रीधनेच्छाः । अत एवाशुभाः ॥ २४ ॥

तानि ब्रह्माद्युद्भावितानि मोहाद् भ्रान्त्या पण्डितमानिनः तत्तन्त्रसदर्थज्ञानाभिमानिनः । कुत एवम् ? तदाह—मन्मायेति । मन्मायया पूर्वोक्त्या मच्छक्त्या अपहृतं ज्ञानम् आत्मख्यातिर्येषाम् । कुतो मायया तज्ज्ञानापहरणम् ? तदाह—गुरुहीना इति । भवतु ईदृशान् जनान् गुरुरेव कुतो नानुगृह्णाति ? तदाह—गुरुद्रुह इति । गुरुवचने अविश्वस्ताः ॥ २५ ॥

तत्तत्तन्त्रसदंशेषु मोहेनान्धीकृता जडाः ।
असदंशेष्वेव जनाः प्रवृत्ताः कामनापराः ॥ २६ ॥
तदाशयमविज्ञाय मूढास्तत्कर्मसंरताः ।
अन्ते तत्कर्मपाकेन बहुधा विकृता नराः ॥ २७ ॥
अन्धं तमो विशन्त्येते सर्वं एवात्र मानवाः ।
ये तु मत्परमा धीरा वीतरागाः सुसद्ग्रहाः ॥ २८ ॥
तेषामियं महादेवी सदंशेष्वेव सर्वदा ।
रुचिमुत्पाद्य मत्तत्त्वं प्रकाशयति वै द्रुतम् ॥ २९ ॥
तस्माद् भैरव विद्ध्येवं न मे दोषोऽत्र विद्यते ।
स्वकर्मफलपाकेन सुखं दुःखं भवेन्नृणाम् ॥ ३० ॥

---

नन्वनुचितमिदं यत्तन्त्राणि लोकनाशार्थमुत्पादितानि, तत्र गुरुणापि किमधिकं वक्तुं शक्यमिति चेदाह—तत्तदिति। तन्त्रेषु ह्यधिकारिभेदेन सर्वं निरूपितम्। तत्र साधकाधिकारं दृष्ट्वा श्रीगुरुस्तस्य तदनुरूपमेवार्थं कथयति। अनादृतगुरवस्तु सदंशेषु स्वाधिकारानुरूपांशेषु मोहेनाज्ञानेनान्धीकृताः, अत एव जडाः स्वहिताज्ञानिनः। असदंशेषु स्वाधिकाराननुरूपांशेषु। कुत एवम्? यतः कामनापराः ॥ २६ ॥

तदाशयं तन्त्राभिप्रायम्। तत्कर्म स्वाननुरूपं कर्म। एतेनैवमनुष्ठानेन चित्तमालिन्याधिक्याद् हिंसादिकलिधर्माः प्रवर्तन्त एवेत्युक्तं भवति। अन्ते तद्देहावसाने। तत्कर्मणां पाकेन फलदानाभिमुख्येन कालकृतेन। विकृताः पिशाचत्वादिरूपविकारं प्रापिताः ॥ २७ ॥

अन्धं तम इति। अन्धतमसं स्थावरादिजन्म! अत्र लोके। एते सर्वे मानवाः। अथ सात्त्विकानां गतिमाह—ये त्विति। ये जनाः। तु इति पूर्वोक्तेभ्यो भिन्नाः। मत्परमाः। अहं श्रीगुरुरूपेण परमः मुख्यः फलसाधनं फलं च येषाम्। "उपायोपेयरूपाय शिवाय गुरवे नमः" इत्युक्तेः। धीरा बुद्धिमन्तः। वीतरागाः त्यक्तकामाः। सुसद्ग्रहाः सु समीचीनं ग्रहो ग्रहणं गुरुवाक्यादिषु श्रद्धारूपं येषाम् ॥ २८ ॥

इयं पूर्वोक्ता मत्तत्त्वं मम वास्तवं रूपं प्रकाशयति। कदेति चेदाह—द्रुतं शीघ्रं न जन्मान्तरे ॥ २९ ॥

तस्माद् उक्ताद्धेतोः। अत्र एवंविधेऽर्थे। सुखं दुःखं च स्वकर्मणा भवति। अयमाशयः—ईश्वरः सर्वलोकानुजिघृक्षया शास्त्राणि प्रणीतवान्। तत्र श्रद्धाभक्तियुतानां

तस्मान्मया त्वमाज्ञप्तो विविधानि बहून्यपि ।
तन्त्राणि कुरु शीघ्रं वै भैरवाणां गणैर्वृतः ॥ ३१ ॥
इत्यहं देवदेवेन महादेवेन शंभुना ।
आज्ञप्तस्तानि तन्त्राणि कृतवानस्मि सुन्दरि ॥ ३२ ॥

इति श्रीमत्परमानन्दतन्त्रे भैरवदेवीसंवादे
तन्त्रावतारकथनं प्रथमोल्लासः ॥१॥



---

गुरुवाक्येन स्वानुरूपकर्मानुष्ठातॄणां शुभफलप्राप्तिः, श्रद्धादिरहितानां स्वाननुरूपेऽसदंशे प्रवृत्त्या अशुभफलप्राप्तिः। केवलतन्त्रकरणाज्ञामात्रेण न मे दोषः। नहि दुष्टानां दण्डमन्तरा बुद्धिः समीचीना भवति। अत एव देवमायाविमूढानां दण्डस्तत्र धृतो मया "इति भागवते" उक्तम्। "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥" इति गीतायामभ्युक्तम् ॥ ३० ॥

उपसंहरेति– तस्मादिति ॥ ३१ ॥

अनन्तरं भैरवो वदति देवीं प्रति– इत्यहमिति ॥ ३२ ॥

सौभाग्यानन्दसन्दोहे खगपद्यार्थबोधकः ।
परमानन्दटिप्पण्यामुल्लासः प्रथमोऽभवत् ॥ १ ॥



# द्वितीय उल्लासः

श्रीदेव्युवाच—

देवेश श्रोतुमिच्छामि तन्त्राणां गणनां तथा ।
केषां कानि च तन्त्राणि फलं किं तत्र को विधिः ।
विस्तरेण ब्रूहि देव तन्त्राणां निर्णयं स्फुटम् ।। १ ।।

श्रीभैरव उवाच—

शृणु देवि महागुह्यं सर्वतन्त्रेषु गोपितम् ।
तन्त्राणां गणना कर्तुं शिवेनापि न शक्यते ।। २ ।।

---

पूर्वोल्लासान्ते तन्त्रावतारप्रकारो निरूपितः । तत्र ब्रह्माद्यैः सर्वज्ञकल्पैर्निर्मितत्वात्तन्त्राणां प्रामाण्यमुक्तं भवति । यद्यपि "मोहकानि विचित्राणि कुर्वन्तु द्रुतमेव हि" इति, "कलिधर्मप्रवृद्धचर्थम्" इति च वाक्येन सर्वेषां मोहानिष्टसाधनानि सर्वाणि तन्त्राणीति प्रतिभाति, तथापि "कामोपहतचेतसां मोहकानि" इति, "लोकाः कामपरायणाः । दूष्पूरकामलोभेन" इत्यादितदाशयमविज्ञायेत्यन्तेन ग्रन्थेन कामोपहतचेतसां पण्डितमानिनां गुरुहीनानां भक्तिश्रद्धाविरहेण गुरुद्रुहां मूढानामेव मोहानिष्टसाधनानि प्रोक्तानि, न त्वन्येषां सात्त्विकानाम् । ये तु मत्परमा धीरा इत्यादि मत्तत्त्वं प्रकाशयतीत्यन्तेन तेषां महाफलस्योक्तत्वात् । ननु कामनापराणामपि मोहनं करुणासिन्धोरनुचितमिति चेन्न, तेषां सम्यङ्मोहेन महानर्थसंपत्तावेव कामविमुखत्वे सतीश्वराभिमुख्यसंभवात् । तथा च सर्वशास्त्रेष्वपि काम्यकर्मप्रतिपादनस्यैवमेव तात्पर्यम् । जनो हि जन्मनैव कामपरः । एवं च जन्मनैवातिकामनाविष्टं कामेभ्यो विमुखीकर्तुं ब्रह्मणोऽप्यशक्यम् । तस्मात्तदर्थं काम्यविधयः । तथा च काम्यकर्मफलश्रुत्यातिकामुकरतादृशकर्मणि प्रवृत्तस्तादृशकर्मफलानामीषदङ्गलोपेनाप्यनुदयादुदितानामपि नाशादतिक्लेशितः क्रमाद् विरक्तो भविष्यति । तत ईश्वराभिमुख्यं घटिष्यतीति पूर्वोल्लासतात्पर्यसमन्वयः । पूर्वोल्लासान्ते तानि तन्त्राणि कृतवानस्मीत्युक्तम् । तेषां संख्यादिकं प्रष्टुं देव्युवाचेति । तथा किं फलम् ? तत्र फलसाधने कर्मणि इति कर्तव्यरूपो विधिः कः ? केषां प्रस्तोतॄणां कानि तन्त्राणीत्यत्र तन्त्रविषयं निर्णयं निश्चयं श्रोतुमिच्छामीत्यर्थः । स्फुटं स्पष्टम् । षट्चरणः श्लोकः ।। १ ।।

देवीप्रश्नस्योत्तरं वक्तुं भैरव उवाचेति । गोपितं गणनादिकमिति शेषः ।। २ ।।

प्रतिकल्पयुगे देवि ब्रह्माद्यैश्च पृथक् पृथक् ।
कृतान्यनेकतन्त्राणि सिद्धैर्ऋषिगणैस्तथा ॥ ३ ॥

क्रियमाणान्यनेकानि तस्मात् संख्या न विद्यते ।
अत्र कल्पे कृतान्येव संक्षेपात् कथयामि ते ॥ ४ ॥

अखिलानि च तन्त्राणि कल्पान्ते परमेश्वरे ।
स्थितान्यथ शिवस्याज्ञावशात् प्रादुर्भवन्ति वै ॥ ५ ॥

यदोच्छिन्नानि जायन्ते चिरकालेन सुन्दरि ।
पुनस्तदाज्ञावशतश्चोत्पन्नानि भवन्ति वै ॥ ६ ॥

शृण्वत्र तेऽभिधास्यामि तन्त्राणां गणनां प्रिये ।
षट्सहस्राणि तन्त्राणि वैष्णवानि महेश्वरि ॥ ७ ॥

शैवानि दशसाहस्रसंख्यानि परिगण्यते ।
शतसाहस्रसंख्यानि शाक्ततन्त्राणि वै पुनः ॥ ८ ॥

---

अशक्तावनन्तत्वमेव कारणं नाज्ञानमित्याह प्रतिकल्पेति । प्रतिकल्पे ब्रह्माद्यैः कृतानि चकारान्मया च प्रतियुगे तत्तज्जनबुद्ध्यनुगुणेन सिद्धादिभिर्ब्रह्मादिकृततन्त्राण्येव मन्दबुध्यारोहाय विशदतया सक्षेपेण कृतानीत्यर्थः। अत एवाग्रे तन्त्रगणनावसरे सिद्धादीनां तन्त्रकर्तृत्वेनागणनम् । तथा च तन्त्रालोकेपि तन्त्रान्तरवचनमुदाहृतम्—"युगे युगे तु तन्त्राणि तान्येव ऋषिमुख्यकैः । दूर्वासःप्रमुखैर्देवि संक्षेपेण कृतानि ह ॥" इति ॥ ३ ॥

क्रियमाणानि भविष्यत्कल्पादिषु । यतः संख्या नास्ति, अतः अस्मिन् कल्पे कृतान्येव कथयामीत्यर्थः । संक्षेपादिति विध्यादेः संक्षेपात् कथनं न तु संख्यायाः ॥ ४ ॥

कल्पादौ तन्त्रोत्पत्तिप्रकारमाह अखिलेति । परमेश्वरे परशिवे । पूर्वकल्पान्ते परशिवे स्थितानि न तु नष्टानि । अत एव प्रादुर्भवन्ति नोत्पद्यन्ते, अनादित्वात् । प्रादुर्भावादौ किं कारणमिति चेदाह—आज्ञावशादिति । परशिवस्य स्वातन्त्र्यशक्त्या ॥५॥

कल्पादौ तन्त्रोत्पत्तिप्रकारमुक्त्वा मध्येऽपि तत्प्रकारमाह—यदेति । चिरकालादुच्छेदे पुनरस्मदादिद्वारा उत्पद्यन्ते, आविर्भवन्तीत्यर्थः ॥ ६ ॥

तन्त्रगणनामाह—शृण्वित्यादि । अत्र अस्मिन् कल्पे वैष्णवानि विष्णूपासनाविषयाणि ॥ ७ ॥

पुनः आविर्भवन्ति ॥ ८ ॥

गणेशस्य सहस्राणि सौराणि द्विगुणानि तु ।
मदीयानि तु तन्त्राणि सप्तसाहस्रकाणि वै ॥ ९ ॥
अन्यानि द्विसहस्राणि यक्षभूतादिसाधने ।
कानिचिद्यामलान्यत्र सिद्धान्तार्णवसंज्ञया ॥ १० ॥
रहस्यतन्त्रनाम्ना च सूत्रागमपदैस्तथा ।
सारोपदेशादिशब्दैः ख्यातानि जगतीतले ॥ ११ ॥
सपादलक्षतन्त्राणि त्रीणि चापि महेश्वरि ।
तन्त्राणामयुतं तद्वत्त्रिशतं ब्रह्मणा कृतम् ॥ १२ ॥
विष्णुनापि कृतं तन्त्रमयुतद्वयसंयुतम् ।
पञ्चविंशतिसाहस्रं तन्त्राणां शिवनिर्मितम् ॥ १३ ॥
एकादशशतं रुद्रैस्तन्त्राणां निर्मितं तथा ।
पञ्चायुतं तु तन्त्राणां भैरवेण मया कृतम् ॥ १४ ॥
अष्टभिर्भैरवैश्चापि कृतमष्टसहस्रकम् ।
अष्टसंख्यामातृकाभिः कृतमष्टसहस्रकम् ॥ १५ ॥

---

मदीयानि मम भैरवस्य सम्बन्धीनि ॥ ९ ॥

तेषां नामान्याह - कानिचिदिति । यामलानि रुद्रयामलादीनि । सिद्धान्ताः त्रिपुरासिद्धान्तादीनि । अर्णवः ज्ञानार्णवादीनि । एवं संज्ञया ख्यातानीत्यन्वयः ॥ १० ॥

रहस्यानि त्रिपुरारहस्यादीनि । तन्त्राणि परमानन्दतन्त्रादीनि नाम्ना च ख्यातानीत्यन्वयः । सूत्राणि परशुरामसूत्रादीनि । आगमाः शैवागमादीनि । साराणि प्रत्यङ्गिरासारादीनि । उपदेशाः गुप्तोपदेशादीनि । आदिपदेन संहितासंग्रहः ॥ ११ ॥

विशिष्टसंख्यामाह—सपादेति । त्रीणीति । सहस्राणीति शेषः । तत्र कति तन्त्राणि केन कृतानीति चेदाह—तन्त्राणामिति । त्रिशतोत्तरमयुतमित्यर्थः ॥ १२ ॥

अयुतद्वयसंयुतद्वयसंख्यासंयुतम् । शिवस्त्रिमूर्त्यन्तर्गतः ॥ १३ ॥

रुद्रैरेकादशरुद्रैः । मया भैरवकुलपतिना परभैरवेण ॥ १४ ॥

अष्टभिर्भैरवैः असिताङ्गादिभिः, मन्थानाद्यपराभिधानैः । मातृकाभिः ब्राह्म्यादिभिः ॥ १५ ॥

पञ्चाशन्मातृकाभिश्च पञ्चाशच्छतकं कृतम् ।
श्रीकण्ठपञ्चवक्त्रेण निर्गतं शतपञ्चकम् ॥ १६ ॥
तस्यापानस्य मार्गेण जातं तन्त्रशतं प्रिये ।
तन्त्राणां शतसाहस्रं तमोविधिसमन्वितम् ॥ १७ ॥
रजोविधानयुक्तं तु तन्त्राणामयुतद्वयम् ।
तन्त्राणामष्टसाहस्रं सात्त्विकं परिकीर्तितम् ॥ १८ ॥
तामसादन्धतामिस्रं राजसाद् दुःखसंततिः ।
सात्त्विकात् सुखलाभो वै मिश्रिते मिश्रितं भवेत् ॥ १९ ॥
विप्राणां सात्त्विकं प्रोक्तं राजसं नृपवैश्ययोः ।
शूद्राणां तामसं प्रोक्तं तन्त्रेष्वेवं विनिर्णयः ॥ २० ॥
तत्र वै मतभेदांश्च शृणु देवेशि तत्त्वतः ।
दैगम्बरं वामनं च कापालं क्षपणं तथा ॥ २१ ॥
अघोरं वामकेशं च नग्निकामतमेव च ।
कालकं वार्धुषं चैव तामसे परिकीर्तितम् ॥ २२ ॥
पूर्वकौलं मिश्रकं च चामुण्डं पीतवाससम् ।
शाक्तं च शुद्धशाक्तं च राजसे परिकीर्तितम् ॥ २३ ॥

---

पञ्चाशन्मातृकाभिः अनुत्तरादिभिः । श्रीकण्ठः सगुणः परमशिवः ॥ १६ ॥

अपानमार्गेण पायुद्वारेण । अनादीनि तन्त्राण्येतावन्ति । सिद्धादिभिस्तु एतत्सारसंग्रहादिरूपेण क्रियत इति न तेषां पृथग्गणनम् । तेषां विधिमाह—तन्त्राणामिति । तमोविधिः तामसविधिः ॥ १७ ॥

रजोविधानं राजसविधिः । सात्त्विकं सात्त्विकविधियुतम् ॥ १८ ॥

तत्तत्तन्त्रपराणां फलमाह—तामसादिति । अन्धतामिस्रं स्थावरादिरूपता । सन्ततिः समूहः । मिश्रिते मिश्रणेनाचरणे । मिश्रितं सुखादिमिश्रितम् ॥ १९ ॥

वर्णभेदेन व्यवस्थामाह—विप्राणामिति । नृपाः क्षत्रियाः । एवम् उक्तप्रकारेणाधिकारिनिर्णयः ॥ २० ॥

क्रमेण तामसादितन्त्रेषु मतभेदानाह—तत्रेति । तत्त्वतः यथार्थतः ॥ २१ ॥

दैगम्बरादिवार्धुषान्तं तामसं मतम् ॥ २२ ॥

पूर्वकौलादिशुद्धशाक्तान्तं राजसम् ॥ २३ ॥

दक्षिणं समयं चैव परामतमनुत्तमम् ।
अवधूतं कौलिकं च सात्त्विके परिकीर्तितम् ॥ २४ ॥
तामसे नव संप्रोक्तं राजसे षण्मतं तथा ।
सात्त्विके पञ्च विख्यातमेवं विंशतिसंख्यकम् ॥ २५ ॥
शवसेवा शवाहारः संस्थितिः शवपीठके ।
पुरीषमूत्रदुर्मांसदुर्द्रव्यामिषसेवनम् ॥ २६ ॥
अस्थिमालास्थिपात्रं च शोणितं पूतिगन्धि च ।
वधः स्त्रीबालवृद्धानां जिह्वाङ्गच्छेदनं तथा ॥ २७ ॥
अशौचं चामेध्यसेवा त्यागो वर्णविधेः सदा ।
स्त्रीभेदस्य च संत्यागस्त्यागो वर्णाश्रमस्य च ॥ २८ ॥
इत्येवं तामसे देवि धर्माः सम्यङ्निरूपिताः ।
शीघ्रसिद्धिप्रदा नूनमैहिकैकप्रवर्तकाः ॥ २९ ॥
तन्निष्ठानां तु देवेशि पिशाचत्वं स्थिरं भवेत् ।
राजसैः सात्त्विकैर्द्रव्यैरुपास्तिः कामनायुता ॥ ३० ॥

---

अनुत्तममिति परामतविशेषणम् । दक्षिणादिकौलिकान्तं सात्त्विकम् ॥ २४ ॥

मतसंख्यामाह—तामसेति ॥ २५ ॥

तामसादिमतधर्मानाह—शवसेवेत्यादि । सेवा स्पर्शनादि । शवाहारः शवाङ्गभक्षणम् । शवपीठे शवरूपे आसने, संस्थितिः अवस्थानम् । दुर्मांसं निषिद्धमांसम् । दुर्द्रव्यामिषं दुर्गन्धादिदोषयुतमसंस्कृतं च यन्मद्यं मांसम्, एतेषां सेवनं भक्षणादि ॥ २६ ॥

अस्थिमाला अस्थिसम्बन्धि जपमाला "माला नृदन्तसम्भूता" इति त्रिकूटारहस्याद्युक्ता । अस्थिपात्रं नृमुण्डकच्छपपृष्ठादिसंभवम्, न तु हस्तिदन्तखड्गशृङ्गादिभवम्, तस्योत्तमत्वेन तन्त्रेषु परिगणनात् । शोणितं रक्तम् । पूतिगन्धि च दुर्गन्धवसादि ॥ २७ ॥

अशौचम्, उच्छिष्टमुखादित्वेनावस्थानम् । अमेध्यसेवा श्वानादिसेवा । स्त्रीभेदस्य स्वस्त्रीपरस्त्रीत्यादिभेदस्य । वर्णाश्रमस्य वर्णाश्रमलिङ्गस्य ॥ २८ ॥

ऐहिकैकेति । ऐहिकस्यैवेत्यर्थः ॥ २९ ॥

स्थिरम् आकल्पम् । राजसधर्मानाह—राजसैरिति । राजसैः राजोपभोग्यैः पवित्रैः । सात्त्विकैः ऋष्युपभोग्यैः ॥ ३० ॥

विषयोन्मुखभावश्च ऐहिकामुष्मिकं फलम् ।
राजसे देवि कथितं तन्निष्ठानां द्वयी गतिः ॥ ३१ ॥
यथोक्ताचरणे चोर्ध्वमन्यथाऽधोगतिर्भवेत् ।
सात्त्विके सात्त्विकद्रव्यस्थानासनपरिग्रहः ॥ ३२ ॥
साधुसङ्गः साधुभावः श्रद्धादार्ढ्यं परा रतिः ।
तन्निष्ठानां तु देवेशि सद्गतिर्निश्चला भवेत् ॥ ३३ ॥
एतन्मतत्रये देवि त्रितयं विद्यते स्फुटम् ।
स्फुटं च यद्येन कृतं तत्तेनैवोपभुज्यते ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ३४ ॥

इति श्रीपरमानन्दतन्त्रे तन्त्रभेदनिर्णयो नाम
द्वितीयोल्लासः ॥ २ ॥



---

विषयोन्मुखभावः विषयपरचित्तता । चेति तदभावश्च ॥ ३१ ॥

द्विविधगतिं स्पष्टयति—यथेति । सात्त्विकानाह—सात्त्विक इति । परिग्रहः सेवनम् ॥ ३२ ॥

साधुभावः शुभचित्तता । परा रतिः देवताभक्तिः । निश्चला पुनरावृत्तिरहिता, यद्वा निश्चला निःसंदिग्धा । सति सद्रूपे आत्मनि गतिर्ज्ञानम् ॥ ३३ ॥

मतत्रये सात्त्विकादौ । त्रितयं निश्चलगत्याद्युत्तममध्यमाधमफलम् । अस्फुटम् अस्पष्टम् । एवं सति येन यत्कृतं तेन तद्भुज्यत इति स्फुटमेव । अयं भावः—तामसमतोक्तात्यन्तहिंसादिकं त्यक्त्वा देवताप्रीत्यर्थं तदाचरतां तत्राधिकृतानां शूद्रादीनामुत्तमगतिरेव । तथैव दिव्यलोकप्राप्त्यर्थं कुर्वतां दिव्यलोकप्राप्तिर्मध्यमं फलम् । हिंसादिप्रधानं कुर्वतामधमं फलम् । एवं सात्त्विकस्यापि परहिंसाद्यर्थमनुष्ठानेऽधमादिफलं ज्ञेयम् । स्वस्वमततन्त्रे, स्वेतत् । स्पष्टं विद्यत इति । एतेन सर्वाण्यपि तन्त्राणि सर्वविषयाणीत्युक्तं भवति, स्पष्टास्पष्टतया सर्वस्यापि विधेस्तत्र सत्त्वात् । पृच्छसि पृष्टवत्यसि । षट्चरणोऽयं श्लोकः ॥ ३४ ॥

सौभाग्यानन्दसन्दोहे भागपद्यार्थबोधकः ।
परमानन्दटिप्पण्यां द्वितीयोल्लासकोऽभवत् ॥ २ ॥



# तृतीय उल्लासः

श्रीदेव्युवाच—

देवेश श्रोतुमिच्छामि श्रीविद्याविधिमुत्तमम् ।
कथयस्व महाभाग यद्यहं तव वल्लभा ॥ १ ॥

श्रीभैरव उवाच—

शृणु देवि प्रवक्ष्यामि श्रीविद्यां मन्त्रनायिकाम् ।
तस्याः स्वरूपं बहुधा तन्त्रेषु प्रतिपादितम् ॥ २ ॥
कोटिशः शक्तिमन्त्रास्तु प्रसिद्धास्तेषु चोत्तमः ।
श्रीविद्यामन्त्रराजोऽयं सोऽपि द्वादशधा स्थितः ॥ ३ ॥
तत्रापि द्वितयं श्रेष्ठं कादिर्हादिश्च सुन्दरि ।
तत्र कादिः परो देवि तत्समो नैव विद्यते ॥ ४ ॥

---

पूर्वोल्लासे तन्त्राणां संख्यादिकमुक्त्वा सर्वेषु तन्त्रेषु सात्त्विकादित्रिविधमपि विधानं त्रिविधमपि फलमस्तीत्युपसंहृतम् । तत्र क्वचित् किञ्चित् स्पष्टं किञ्चिदस्पष्टमिति चोक्तम् । तथा च यस्मिन् तन्त्रे यत् स्पष्टमुक्तं तत् तद् द्विविधं तन्त्रमित्युक्तं भवति । इदं हि तन्त्रं सात्त्विकत्वादुत्तमं ज्ञेयम् । अत एव "यस्माच्च जायते देवि परमानन्दसंप्लवः" इति प्रथमोल्लासे उक्तम् । युक्तं चैतत्, सुस्पष्टतया इतरानपेक्षतया सम्पूर्णकर्मानुष्ठानविधेः कथनेनैतच्छ्रवणमात्रेण सुस्पष्टतयावभासात् । सर्वेषामात्मत्वेनातिस्पृहणीयायाः श्रीसुन्दर्याः सर्वोत्तमदेवतायाः सम्बन्धात् । तथा आद्यन्तयोर्मध्ये चाद्वितीयात्मत्वप्रतिपादनात् तज्ज्ञानोपयोगित्वेनैव कर्मोपासनयोर्निरूपणात् परमानन्दसम्प्लवोऽत्रैवास्तीति प्रसक्तनिरूपणानन्तरं प्राक् पृष्टं सुन्दर्यास्तन्त्रं पुनः पुनः प्रष्टुं श्रीदेव्युवाचेति । उत्तमम् असम्पूर्णमिश्रितादिदोषरहितम् ॥ १ ॥

उत्तरं वक्तुं श्रीभैरव उवाचेति । श्रीविद्यां विद्यासु श्रेष्ठाम् अत एव मन्त्रनायिकाम् । स्वरूपं ध्यानोक्तं स्थलं रूपम् सूक्ष्मं मन्त्रात्मकं च ॥ २ ॥

सूक्ष्मरूपस्य बहुधात्वेऽपि तस्यैव तत्र मुख्यत्वं वक्तुमुपक्रमते—कोटिश इति । प्रसिद्धाः, तन्त्रेष्विति शेषः । द्वादशधा मनुचन्द्रादिभेदात् । स्थितः ज्ञानार्णवादिषु ॥३॥

तत्रापि द्वादशस्वपि कादिः कामराजविद्या हादिर्लोपामुद्रा विद्या । तत्र तयोर्मध्ये कादिः परः श्रेष्ठः । एतस्य श्रेष्ठत्वं च श्रीभास्कररायैर्वरिवस्यारहस्यादौ बहुतरहेतुप्रतिपादनपूर्वकं निरूपितम् ॥ ४ ॥

सा तु श्रीगुरुनाथस्य कृपयैव हि लभ्यते ।
अनेकजन्मसुकृतं विना शम्भुकृपां विना ॥ ५ ॥
न लभ्या सा कदाचित् स्यात् प्राक् शिवाराधनं विना ।
यदा सकृच्छ्रुता नाथवक्त्रात् सा परमेश्वरी ॥ ६ ॥
कर्णप्रवेशमात्रेण मुक्तः सद्यो न संशयः ।
यथा मणिस्पर्शमात्राल्लोहो भवति काञ्चनम् ॥ ७ ॥
तथा सकृच्छ्रुता देवी मोक्षायैव भवेन्नृणाम् ।
बहुना किमिहोक्तेन शृणु तत्त्वं वचो मम ॥ ८ ॥
अनेकजन्मसुकृतैर्विना सा नैव लभ्यते ।
शृणु तस्या महादेव्यास्त्रिविधं रूपमुत्तमम् ॥ ९ ॥
परं स्याद्वासनारूपमुपासकहृदि स्थितम् ।
सूक्ष्मं मन्त्रमयं देवि नाथवक्त्रगतं सदा ॥ १० ॥

---

कृपयैव, नान्यथा । तादृशगुरुकृपाया अपि किं कारणं इति चेत्तदाह— अनेकेति । विना न लभ्येत्यग्रिमेणान्वयः ॥ ५ ॥

सा कृपा । कुत एवं कादिविद्या मुख्या इति चेत्तन्महिमानमाह— यदेति । सकृत् एकवारम् । सा मन्त्रमयी ॥ ६ ॥

कर्णप्रवेशमात्रेण न जपाद्यपेक्षेति भावः । सद्यः शरीरसत्त्वेऽपि । न संशयः, नायमर्थंऽवाद इत्याशयः । अत्र दृष्टान्तमाह—यथेति ॥ ७ ॥

मोक्षायैव भवेत् मोक्षाय भवेदेवेत्यन्वयः । तत्त्वं यथार्थम् ॥ ८ ॥

सा कादिविद्या । सा परमेश्वरी श्रुता इति पूर्वमुक्तम् । विद्यायाः परमेश्वरीवाचकत्वात् । कथं विद्यैव परमेश्वरीत्याशङ्क्य विद्याया अपि तद्रूपतां वक्तुं तस्या रूपत्रैविध्यमाह—शृण्विति । उत्तमं परमित्यग्रिमेणान्वयः ॥ ९ ॥

वासनारूपं स्वात्माभेदेन भावनीयम् । उपासका ध्याननिष्ठाः । तेषां हृदि बुद्धौ स्थितम् । भावनादशायां सर्ववृत्तिनिरोधे निरोधसाक्षित्वेन भावनादशायां भाव्यमानम् । अत एव तस्याकल्पितत्वादुत्तमत्वमिति भावः । द्वितीयं रूपमाह— सूक्ष्ममिति । मन्त्रमयं मन्त्रात्मकम् । नाथवक्त्रगतं गुरुवक्त्रैकनिष्ठम् । गुरुवक्त्राच्छ्रुत एव मन्त्रः, पुस्तकादिदृष्टस्तु वर्ण एवेति भावः । एतदुक्तं योगिनीतन्त्रे—"गुरुवक्त्रासादितो यः काममोक्षप्रदस्तु सः । पुस्तकाद्वाचितो मन्त्रः केवलो वर्णमात्रकः ॥" इति ॥ १० ॥

श्रीनाथस्य कृपारूपा भक्तानां कर्णरन्ध्रतः ।
निविश्य शिवभावं या ददाति भजतां नृणाम् ॥ ११ ॥

तृतीयं स्वर्णशकलगौरं चन्द्रार्धशेखरम् ।
प्रसूनबाणपुण्ड्रेक्षुपाशाङ्कुशलसत्करम् ॥ १२ ॥

पादपद्मप्रभाक्षिप्तसुरवाटीप्रवालकम् ।
गतिशोभाजिताशेषमरालकुलवल्लभम् ॥ १३ ॥

नखेन्दुकिरणोच्छिन्नभक्तलोकतमोगुणम् ।
सिन्दूरारुणकौशेयसंशोभितलसत्कटिम् ॥ १४ ॥

सूक्ष्मावलग्नशोभाढ्यं निम्ननाभीविराजितम् ।
स्तनभारनमन्मध्यं स्वर्णकूर्पासशोभितम् ॥ १५ ॥

कम्बुकन्धरसंन्यस्तमणिहारातिसुन्दरम् ।
केयूराङ्गदसंराजन्मृदुबाहुचतुष्टयम् ॥ १६ ॥

---

कृपारूपा, कृपाप्राप्यत्वात् । शिवभावं शिवात्मत्वम् ॥ ११ ॥

अन्त्यमाह—तृतीयमिति । शकलं खण्डः, सद्यःखण्डितस्वर्णशकलवदतिभास्वरः गौरः पीतवर्णो यस्य तत् । प्रसूनेति । पुण्ड्रे क्ष्वति पुण्ड्रेक्षुः चापः । दक्षाधःकराद्दक्षोर्ध्वान्तमायुधानि । "दक्षे वामे करे चाधः पुष्पबाणेक्षुकार्मके । तथैव सृणिपाशौ तु करयोरूर्ध्वसंस्थयोः ॥" इति त्रिपुरार्णवोक्तेः । 'दक्षिणाधःकरे बाणान् वामाधस्तु शरासनम् । वामोर्ध्वे पाशमारक्तं दक्षोर्ध्वे तु सृणिं परम् ॥" इति दक्षिणामूर्तिसंहितोक्तेश्च । पाशस्वरूपमपि तत्रैवोक्तम्—"प्रवालवल्लीघटितः पाशः क्षौमगुणान्वितः" इति । प्रसूनबाणाः पञ्चसंख्याता उक्तास्त्रिपुरारहस्ये—"नीलोत्पलमशोकं च मल्लिका चूतमेव च । कमलं चेति बाणाः स्युः" इति । कादिमते त्वन्यथैवोक्तम् । यस्तु सहस्रनामभाष्ये रागस्वरूपपाशाढ्येत्यादिनामव्याख्यावसरे आयुधव्यत्यासः कतिपयपुस्तकेषूपलभ्यते, स लेखकप्रमाद एव, सेतुबन्धे निरुक्तसंहितावचनमुदाहृत्यैवमेवायुधवर्णनात् ॥ १२ ॥

आक्षिप्तं तिरस्कृतम् । प्रवालकं पल्लवः । मरालो हंसः ॥ १३ ॥

उच्छिन्नो नष्टः ॥ १४ ॥

अवलग्नः कटिप्रदेशः ॥ १५ ॥

कम्बुसदृशे शङ्खसमाने । कन्धरे कण्ठे ॥ १६ ॥

पक्वदाडिमबीजाभदन्तपङ्क्तिविराजितम् ।
चम्पकाकलिकाकारनासादण्डमनोहरम् ॥ १७ ॥
कुण्डलोल्लासिगण्डश्रीजितदर्पणसंपदम् ।
दलदिन्दीवराभासनयनत्रितयोज्ज्वलम् ॥ १८ ॥
अर्धचन्द्रनिभस्वच्छफालदेशातिसुन्दरम् ।
माणिक्यमयकोटीरकमनीयशिरोरुहम् ॥ १९ ॥
हेममाणिक्यभूषातिभूषितं सुमनोहरम् ।
स्वसमाकारकामेशवामाङ्कासनसंस्थितम् ॥ २० ॥
कनकाचलशृङ्गस्थे देवशिल्पविनिर्मिते ।
पञ्चविंशतितत्त्वात्मपञ्चविंशतिवप्रके ॥ २१ ॥
महापद्मवनान्तस्थचिन्तामणिसुमन्दिरे ।
सुवर्णवेदिकासंस्थचक्रराजे सुशोभने ॥ २२ ॥
बिन्दुचक्रसमारूढपञ्चब्रह्मात्ममञ्चके ।
कामेशाङ्कनिविष्टं तद्बाहुसंश्लेषसुन्दरम् ॥ २३ ॥
एवं श्रीललितादेव्याः स्वरूपं त्रिविधं स्थितम् ।
श्रीविद्या त्रिपुरा चैव सुन्दरी ललिता तथा ॥ २४ ॥

---

नासाया दण्डत्वम् ऋजुत्वदीर्घत्वादिना ॥ १७ ॥

गण्डश्रिया जिता दर्पणस्य सम्पत् शोभा यस्य । दलत् विकशितम् ॥ १८ ॥

कोटीरेण किरीटेन कमनीया शिरोरुहा यस्य ॥१९॥

भूषा भूषणम् ॥२०॥

एवं देवतायाः स्थूलं रूपं वर्णयित्वा तदधिष्ठितं स्थानं वर्णयितुमाह—कनकाचलेत्यादि । देवशिल्पी विश्वकर्मा । तत्त्वस्वरूपा वप्राः प्राकारा यस्य, तस्मिन् नगरे इति शेषः ॥२१॥

चिन्तामणिभिर्निर्मिते मन्दिरे ॥२२॥

बाहुना संश्लेषः क्रोडीकारः ॥२३॥

उपसंहरति—एवमिति । ललितादेव्या एवैतत्त्रिविधं स्वरूपम्, वाच्यवाचकयोः कार्यकारणयोश्चैक्यात् । एतच्चाग्रे स्पष्टीभविष्यति । अस्या देवतायाः सर्वोत्तमत्वं वक्तुं नामाष्टकमाह— श्रीविद्येति ॥२४॥

**सिंहासनेश्वरी तद्वद् राजराजेश्वरी तथा ।**
**कामेश्वरी परा चेति कथिता साष्टधा भुवि ॥ २५ ॥**
**चिदानन्दघनस्वच्छवपुषः परमेशितुः ।**
**प्रकाशत्वं विमर्शश्च स्पन्दः सत्ता चितिः क्रिया ॥ २६ ॥**

---

अष्टधा अष्टसंख्याकसर्वोत्तमगुणेन । भुवि जगति ॥२५॥

ननु केयमष्टभिर्नामभिरुच्यते ? मायाख्या ब्रह्मणः शक्तिरिति चेत्, तस्यास्तत्त्वज्ञानबाध्यत्वेन मायावादिभिर्जडत्वाङ्गीकारात् सर्वोत्तमत्वकथनं निष्प्रयोजनमेवेत्याशङ्क्य सा परब्रह्मणः स्वाभाविकी शक्तिरिति वक्तुमुपक्रमते—चिदानन्देत्यादि । परमेशितुः परमेश्वरस्य या स्फुरत्तेति ख्याता, सा त्रिपुरसुन्दरीत्यग्रिमेणान्वयः । ननु कोऽयं परमेश्वरः ? नीलश्वेतादिशरीरः कृष्णशिवादिः ? नेत्याह—चिदानन्देति । अत्रेयं प्रक्रिया—जडश्चेतन इति द्विविधोऽयं प्रपञ्चः । तत्र जडो नाम स्वस्मादन्यमाश्रित्यैव प्रकाशते तत्, यथा घटादिः । घटादिर्हि अन्यं ज्ञानात्मानमाश्रित्यैव भाति, ज्ञानं विना घटादेरप्रतीतिः । चेतनो हि घटादिकमनपेक्ष्यैवाऽहमस्मीति भासते । तत्र जडाश्चेतननिर्मिताः, कुलालनिर्मितघटवत् । एवं च यथा कुलालमन्तरा घटो न स्वतो भवितुं समर्थः, एवमेव सर्वे जडाश्चेतनमन्तरेण स्वतो भवितुं न समर्थाः ।तथा च स्वतःप्रकाशनभवनाभावाद् घटादयो जडाः । ननु कुलालोऽपि चेतनस्तत्पितृनिर्मित इति चेत्, सत्यम् । कुलालश्च जडचेतनसंघातात्मा । तत्र यः पित्रा निर्मितः शरीरात्मा कुलालः, स ज्ञानात्मानमाश्रित्यैव प्रकाशत इति घटादितुल्ययोगक्षेम इति जड एव । एवमेव प्राणमनोबुद्ध्यादेरपि जडत्वं ज्ञेयम् । येन ज्ञानेनेदं सर्वं भासते, स ज्ञानात्मा चेतनः । तच्च केनचिज्ज्ञानभिन्नेन न भासते । यथाहि—अयं घट इति ज्ञानम् । तत्र तेन ज्ञानेन स घटः प्रकाशते । न तु तेन घटेन तज्ज्ञानं प्रकाशते, किन्तु स्वत एव तज्ज्ञाने प्रकाशते । एवं सर्वत्र प्रकाशकं ज्ञानं स्वप्रकाशमेव, न तु भिन्नप्रकाश्यम् । तच्च ज्ञानं घटे पटे कुड्ये शरीरे वा न भिन्नम्, घटादीनामिव वैलक्षण्याप्रतीतेः । यच्च वैलक्षण्यमिदं घटज्ञानमिदं पटज्ञानमित्यनुभूयते, तद्घटादिगतमेव, न ज्ञानगतम्; ज्ञानानां ज्ञानमात्रस्वरूपत्वात् । नापि तेषां प्रतिक्षणमुत्पत्तिनाशौ, पूर्वज्ञाननाशस्योत्तरज्ञानोत्पत्तेरप्रकाशप्रसङ्गात्, तदानीं ज्ञानाभावात् । ज्ञानगतघटादिप्रतिबिम्बोत्पत्तिनाशयोर्भ्रान्त्या ज्ञानं कल्पनामात्रमेव । एवं च जन्मप्रभृतिमरणान्तमेकमेव ज्ञानं शुद्धं विषयविनिर्मुक्तं सर्वं चेतनशब्दवाच्यम् । तच्च ज्ञानं भूतभविष्यद्वर्तमानशरीरेष्वेकमेव । शरीरान्तरानुभूतानां स्मरणाभावस्तु स्वाप्नशरीरे जाग्रदनुभूतस्मरणाभाववत्, अतिबाल्यानुभूतस्तन्यपानादेस्तारुण्ये स्मरणाभाववच्चोपपादनीयः । एवमेव ब्रह्मादिस्तम्बान्तशरीरेषु सर्वज्ञानानुस्यूतं घटाकाशमठाकाशाद्यखिलाकाशानुस्यूतशुद्धाकाश इवैकमेव ज्ञानम् । तदेव हि वेदागमपुराणादिषु ब्रह्मशिव-

स्फुरत्तेति समाख्याता या सा त्रिपुरसुन्दरी ।
यत्सारं सर्वजगति जीवभूतं च दृश्यते ॥ २७ ॥
येन सर्वमिदं व्याप्तं सा वै त्रिपुरसुन्दरी ।
यया विना जगत्सर्वं मूकान्धबधिरोपमम् ॥ २८ ॥
जडवत् स्यान्नैव वा स्यात् सा वै त्रिपुरसुन्दरी ।
दृश्यं द्रष्टा दर्शनं च परं पूर्वं तथेतरत् ॥ २९ ॥
प्रकाशश्च तमश्चैव यया सा त्रिपुरा भवेत् ।
विद्यासु श्रेष्ठरूपत्वात् त्रिभावपुरतः स्थितेः ॥ ३० ॥

---

नारायणादिपदैरुच्यत इति । प्रकृते स एव ज्ञानात्मा परमेशः । चिदानन्दघनस्वच्छवपुः चिदानन्देन घनं निबिडम् अत एव स्वच्छं जडलेशेनाऽपि रहितं वपुः शरीरं यस्य । तस्य चित्त्वं स्वप्रकाशत्वम् आनन्दत्वमद्वितीयत्वम् । एतेन चिदानन्दशब्दाभ्यामेकमेवाखण्डं वस्तूच्यते । तदेव वस्तु सर्वजगत्प्रकाशकमपि न दीपादिवत् प्रकाशकम्, अपि तु दीपादिविलक्षणम् । दीपादिकं तु घटादिकं प्रकाशयति केवलम्, न तु घटः प्रकाशत इति स्वान्तर्विमृशति । ज्ञानात्मा तु घटादिकमयमीदृश इति विमृशत्यपि । एवं विमृशद्रूपश्चेतन एव, न तु जडो दीपादिः । एवं जडव्यावृत्तरूपतैव शक्तिरित्युच्यते । सैव शक्तिस्त्रिपुरसुन्दरीति वक्तुमागमप्रसिद्धनामान्तरैरनुवदति—प्रकाशत्वमित्यादि ॥ २६ ॥

प्रकाशत्वमित्यादिना या सम्यक् कल्पितरूपेण आख्याता प्रसिद्धा तन्त्रेष्विति शेषः । प्रकारान्तरेणोपपादयति—यत् सारमिति । चिदात्मनि विमृशद्रूपत्वाभावे जगति किमपि न व्यवस्थितं स्याद् इति तदेव सारभूतम् । अत एव जीवभूतमपि दृश्यते, विद्वद्भिरिति शेषः ॥ २७ ॥

अविमृष्टं किमपि न सिध्यति, इति तेन सर्वं व्याप्तमित्याह—येनेति । सा किमर्थमङ्गीकार्येति चेदाह—ययेति । विमर्शाभावे किमपि न सिध्यतीति भावः ॥ २८ ॥

जडवदिति । यया विना सर्वं जडचेतनात्मकं जडवत् स्यात् शून्यमेव स्यात् । शून्यमस्तीत्यत्र साक्ष्यभावान्नैव स्यात् । किं तज्जडवद स्यादिति चेदाह—दृश्यमित्यादि । इतरत् मध्यस्थम् ॥ २९ ॥

प्रकाशः प्रकाशमानता । तमः अप्रकाशमानता । वस्तूनामिति शेषः । एवं तस्या स्वरूपमभिधाय सर्वोत्तमत्वनिमित्तनामाष्टकप्रवृत्तिनिमित्तं वक्तुमाह—विद्येत्यादि । सर्वविद्याश्रेष्ठत्वादियं श्रीविद्या त्रयाणां भावानां मातृमानमेयात्मकादीनां पुरत आदावग्रे च स्थितेस्तुरीयत्वेन सर्वकारणत्वादियं त्रिपुरा ॥ ३० ॥

सर्वप्रेमास्पदत्वाच्च परमानन्दरूपतः ।
जगद्यात्रानियन्तृत्वाद्राजराजेशसंश्रयात् ॥ ३१ ॥
कामप्रदाननैपुण्यादनादित्वात् स्थिताऽष्टधा ।
इति ते कथितं सर्वं श्रीविद्यारूपमुत्तमम् ॥ ३२ ॥

इति श्रीपरमानन्दतन्त्रे श्रीविद्यास्वरूपकथनं
नाम तृतीयोल्लासः ॥ ३ ॥



---

सर्वेति । सर्वेषां प्रेमास्पदत्वात् प्रीतिविषयत्वात्, आत्मार्थमेव चान्यत्र प्रीतिरिति न्यायात् । इयं सुन्दरी । परमानन्दरूपतः निरतिशयसुखात्मत्वात् । इयं ललिता । जगतो यात्रा प्रवृत्तिनिवृत्तिरूपा गतिः, तत्र नियन्तृत्वान्नियामकत्वादियं सिंहासनेश्वरी । राज्ञाम् इन्द्रादीनां राजानो ब्रह्मादयः, तेषामीशः परशिवः, तस्य संश्रयात् संश्रयत्वात् । परशिवोऽपि स्वशक्तिमाश्रित्य तिष्ठतीति राजराजेश्वरी ॥ ३१ ॥

कामेति । भक्तानामिष्टप्रदाने चतुरत्वात् कामेश्वरी । अनादित्वाज्जन्मराहित्यादियं परा सर्वकारणमिति । श्रीविद्याविध्यङ्गभूतम् उत्तममितरदेवतानाम् असाधारणं रूपम् ॥ ३२ ॥

सौभाग्यानन्दसन्दोहे खिलपद्यार्थबोधकः
परमानन्दटिप्पण्यां तृतीयोल्लासकोऽभवत् ॥ ३ ॥



## चतुर्थ उल्लासः

श्रीदेव्युवाच—

भगवन् श्रोतुमिच्छामि त्रैपुरं मन्त्रमुत्तमम्।
तद्विधानं च देवेश कथयस्व सुविस्तरम्॥ १॥

श्रीभैरव उवाच—

शृणु देवि प्रवक्ष्यामि सुन्दर्या मन्त्रनायकम्।
सविधानं सविस्तारं साङ्गोपाङ्गं वरानने॥ २॥
सा तु त्रिधा स्थिता देवि तत्राद्या त्र्यक्षरी स्मृता।
द्वितीया पञ्चदश्युक्ता तृतीया षोडशी भवेत्॥ ३॥
श्रीषोडशाक्षरी देवी परा तत्र ह्यनुत्तमा।
सा वागगोचरा नित्या कृपया श्रीगुरोः सकृत्॥ ४॥
लक्षिता मनसा जप्या शुद्धसत्त्वेन सर्वदा।
आदौ वक्ष्ये त्र्यक्षरीं तां बालां त्रिपुरसुन्दरीम्॥ ५॥

---

एवं देवतायाः स्वरूपं श्रुत्वा तन्मन्त्रं विधानं च प्रष्टुं श्रीदेव्युवाच। त्रैपुरं त्रिपुरा सम्बन्धिनम्॥ १॥

उत्तरं वक्तुं श्रीभैरव उवाच। सविधानं जपादिविधिसहितम्। अङ्गं जपमालादि। उपाङ्गं तत्संस्कारादि॥ २॥

सा श्रीविद्या। त्रिधा अक्षरगणनायां त्रिप्रकारा। तदेवाह—तत्रेत्यादि॥ ३॥

तत्र तेषु मध्ये। परा द्वितीया श्रीषोडशाक्षरी। अनुत्तमा नास्त्युत्तमं यस्याः। कुत इति चेदाह—सेति। वागगोचरा वाचा अनुच्चार्या। अतिकृच्छ्रगतस्यापि तज्जपादिकमावश्यकमिति नित्या नित्यमुपास्या। यद्वा नित्या नाशरहिता। कृपया लक्षितेत्यग्रिमेणान्वयः॥ ४॥

लक्षिता उपदेशकालेऽपि श्रीगुरुणापि न वक्तव्या, किन्तूपलक्षणीया। तर्हि कथं जप्येति चेदाह—मनसेति। शुद्धसत्त्वेन कामादिरहितेन। सर्वदा न मानसादन्यप्रकारेण कदापि जप्येति भावः। तत्र त्र्यक्षरीं वक्तुमुपक्रमते—आदाविति। देवताभिधानमाह—बालेति॥ ५॥

सुगोप्यानां तु मन्त्राणामुद्धारार्थं महेश्वरि ।
समयः क्रियते येन सुज्ञेयत्वं भवेद् द्रुतम् ॥ ६ ॥
नित्या तत्त्वकलान्यासैर्ज्ञेया मन्त्रा ह्यनेकशः ।
चित्रास्थो विजयावर्णो वाग्भवं संप्रकीर्तितम् ॥ ७ ॥
शक्तिरूपयुता तुष्टिः कामराजं सबिन्दुकम् ।
ज्वालान्ते सुन्दरी तस्मिन् वायुः शक्त्याख्यमीरितम् ॥८॥
इयं बाला त्र्यक्षरी सा या पुरोक्ता मयाऽनघे ।
ऋषिः स्याद्दक्षिणामूर्तिर्गायत्री च्छन्द उच्यते ॥ ९ ॥
देवता त्रिपुरा बाला न्यसेद् बीजत्रयेण तु ।
नमोन्तं मूर्ध्नि वक्त्रे च हृदि ऋष्यादिकं न्यसेत् ॥१०॥

---

समयः सङ्केतः । तन्त्रान्तरकृतसङ्केतेन निर्वाहे पुनरत्र सङ्केतकरणफलमाह—सुज्ञेयत्वमित्यादि ॥ ६ ॥

नित्येति । नित्याः कामेश्वर्यादित्रिपुरसुन्दर्यन्ताः षोडश । तत्त्वानि शिवादि-भूम्यन्तानि षट्त्रिंशत् । कला धूम्रार्च्यादि अनन्तान्ता एकोननवतिसंख्याः । न्यासा मातृकान्यासस्थानान्येकपञ्चाशत् । तत्तन्नाम्ना तत्तद्वर्णद्वारा मन्त्रा ज्ञेया इत्यर्थः । अनेकशः अनेके तत्तद्वर्णस्तुत्यादिकथनावसरेषु स्पष्टीभविष्यन्ति । त्र्यक्षरीमुद्धरति—चित्रेति । चित्रा अनुस्वारः । तत्र स्थितस्तद्युक्तः । विजयावर्णः द्वादशः स्वरः । वाग्भवं बीजमिति शेषः ॥ ७ ॥

शक्तिः कवर्गाद्यः । रूपः अन्तस्थतृतीयः । ताभ्यां युता तुष्टिः तुर्यस्वरः । सबिन्दुकं बिन्दुयुतम् । कामराजं बीजम् । ज्वालान्ते चतुर्दशस्वरान्ते । सुन्दरी त्रिपुरसुन्दरी विसर्गः । तस्मिन् तत्र स्थितो वायुः ऊष्मतृतीयः । शक्त्याख्यं शक्तिबीजम् ॥ ८ ॥

पुरा आदौ वक्ष्ये त्र्यक्षरीमित्यत्र । न्यासमाह—ऋषिरिति ॥ ९ ॥

बाला त्रिपुरसुन्दरी देवता बीजत्रयेण वाग्भवादिना । न्यसेत्, कराङ्गेष्विति शेषः । न्यासप्रकारमाह—नमोऽन्तमिति ऋषये नम इति । आदिपदाच्छन्दसे नमः देवतायै नम इति । यद्यपि ऋषये इति चतुर्थ्यन्तं मूले नास्ति, तथापि "ङेऽन्तं नमोऽन्तं मूर्धादौ ऋष्यादिं देवि विन्यसेत्" इति नित्यातन्त्रवचनानुरोधेनैवं ज्ञेयम् । यद्यपि "ऋषिरस्य महेशानि दक्षिणामूर्तिरव्ययः । न्यसेच्छिरसि पूज्यत्वात् पङ्क्तिःछन्दो मुखे प्रिये ॥" इति ज्ञानार्णवादिषु पङ्क्तिच्छन्द उक्तम् । अत्र तु गायत्रीछन्द उक्तम् । तथा च कथं कर्तव्यमिति चेदुच्यते—स्वपरम्परागततन्त्रानुरोधेन कर्तव्यमिति । एतदुक्तं त्रिपुरारहस्ये—

अङ्गुष्ठमध्यमाऽनामायोगेनाङ्गं तु संस्पृशेत् ।
अशक्ये चाशुचौ तद्वन्मनसा भावयेच्छिवे ॥११॥
देवताप्रीतये वार्थलाभाय विनियोजयेत् ।
अङ्गुष्ठाभ्यां नमश्चैवं तत्तदङ्गुलिनामभिः ॥१२॥
अङ्गुष्ठतर्जनीमध्यमानामाश्च कनिष्ठिका ।
तलपृष्ठाविति करन्यासः षोढा प्रकीर्तितः ॥१३॥
अङ्गुष्ठयोस्तर्जनीभ्यामङ्गुष्ठाभ्यां तथान्ययोः ।
न्यसेदेवं विधानेन तलाभ्यां तलपृष्ठयोः ॥१४॥

---

"स्वपरम्परया प्राप्ततन्त्रोक्तं तु समाचरेत् । अनुक्तमन्यतो ग्राह्यं समर्थेनाप्रयोजकम् ॥" इति । अप्रयोजकम् अनावश्यकम् । स्वतन्त्रेऽसूचितादिरूपमावश्यकं त्वसमर्थेनाप्यन्यतो ग्राह्यमिति तदर्थ उद्योते उक्तः ॥ १० ॥

सर्वन्याससाधारणीं न्याससामान्यमुद्रामाह—अङ्गुष्ठेति । अङ्गुष्ठमध्यमानामायोगो न्यासमुद्रा । तया तत्तदङ्गस्पर्शनं न्यासविधिः । स्प्रष्टुमशक्ये आधारादिचक्रे न्यासप्रकारमाह—अशक्येति । अशुचौ दन्तजिह्वादौ । भावयेत् । शक्ये मन्त्रोच्चारान्ते उक्तमुद्रया स्पर्शः । अशक्यादौ मन्त्रान्ते तत्स्थानं चिन्तयेत् ॥ ११ ॥

यद्यप्यत्र बीजादिन्यासो नोक्तः, तथापि "कूटत्रयेण क्रमतो बीजं शक्तिश्च कीलकम्" इति त्रिपुरार्णवाद्युक्तमतमनुसृत्य गुरुसम्प्रदायात् पद्धतिकृता बीजादिन्यासस्तत्र तत्रोक्तः । देवतेति । नित्यादौ देवताप्रीतये विनियोग इति । काम्ये अर्थलाभाय वश्याय इत्यादि—"देवताप्रीतये नित्ये काम्ये स्वार्थाय च क्रमात् । जपे च पूजनादौ च विनियोग इतीरयेत् ॥" इति बृहद्वामकेश्वरतन्त्रवचनात् कथनमात्रम्, न तु न्यासः । केचित्तु सर्वाङ्गे न्यासो विनियोग इत्याहुः । तथा च देवताप्रीतये जपे विनियोगः, न्यासे विनियोग इत्यादि तत्तत्कर्मणि विनियोजयेत् । अत एव पद्धतिकृता न्यासे विनियोग इति मातृकान्यासादावुक्तम् ।

करन्यासमाह—अङ्गुष्ठेत्यादि । तत्तदङ्गुलिनामभिः । तर्जनीभ्यां नम इत्यादि । केचित्तु अङ्गुष्ठाभ्यां नमस्तर्जनीभ्यां स्वाहेत्यादिरीत्या शारदातिलकादिवचनानुरोधेन करन्यासमन्त्रमाहुः । राघवभट्टैस्तु—"अङ्गुष्ठाभ्यां नमो ह्रां ह्रीं तर्जनीभ्यां नमस्ततः" इत्यादिवचनानुरोधेन शारदातिलकवचनमस्मदुक्तरीत्यैव व्याख्यातम् ॥ १२ ॥

अङ्गुलीनामान्याह—अङ्गुष्ठेत्यादि । षोढा षट् प्रकारः ॥ १३ ॥

अङ्गुष्ठादावपि सामान्यतः प्राप्तां न्यासमुद्रामपवदितुं विशेषमुद्रामाह—अङ्गुष्ठयो-

हृदि शीर्ष्णि शिखायां च कवचे च त्रिनेत्रके ।
अस्त्रे च विन्यसेद् देवि तर्जन्यादित्रिभिस्तथा ॥१५॥
मध्यमानामिकाभ्यां च विमुष्ट्यङ्गुष्ठकेन च ।
व्यत्यस्तहस्ताङ्गुलिभिर्भुजयोः कवचं स्मृतम् ॥१६॥
तर्जन्यादित्रयेणैव दक्षफाले नराक्षिषु ।
तर्जनीमध्यमाभ्यां तु विमुष्टिभ्यां त्रिताडनात् ॥१७॥
वामे तले नमःस्वाहावषड्हुंवौषडन्तकैः ।
फडन्तेन चतुर्थ्यन्ताद् भूर्भुवःसुवरों तथा ॥१८॥
दिग्बन्ध इति दिक्ष्वेवं छोटिकां परिकल्पयेत् ।
अथ ध्यानं प्रवक्ष्यामि ध्येया निश्चलचेतसा ॥१९॥
जपाकुसुमसच्छायां बालां नेत्रत्रयोज्ज्वलाम् ।
स्थितां विकचकह्लारे स्वर्णकौशेयवासिनीम् ॥२०॥

---

रित्यादि। तत्तदङ्गुष्ठे तत्तत्तर्जन्या, तर्जन्यादावङ्गुष्ठेन करतलपृष्ठयोरितरेतरतलाभ्यां करतलकरपृष्ठाभ्यां नम इति न्यसेत्। अत्र करशब्दयोगः, "कनिष्ठाच्च करतलकरपृष्ठाभ्यां नमो वदेत्" इति त्रिपुरारहस्योक्तेः॥ १४॥

अङ्गन्यासमाह—हृदीत्यादि। त्रिनेत्रके नेत्रत्रये। अत्रापि शेषमुद्रां क्रमेणाह—तर्जन्यादीति। तर्जनीमध्यमानामाभिः॥ १५॥

विमुष्टीति। मुष्टिनिर्गताङ्गुष्ठेनेत्यर्थः। व्यत्यस्तेति वामभुजे दक्षपश्चाङ्गुलिभिः, दक्षे वामपश्चाङ्गुलिभिरित्यर्थः॥ १६॥

तर्जन्यादीति। तर्जनीमध्यमानामाभिः। अङ्गुलित्रयाणां स्थानत्रयमाह—दक्षेति। दक्षाक्षिफालवामाक्षिष्वित्यर्थः। वामे तले त्रिताडनादित्यग्रिमेणान्वयः॥ १७॥

श्रीषडङ्गन्यासमन्त्रानाह—नम इत्यादि। चतुर्थ्यन्तादिति। चतुर्थ्यन्ताद्धृदयादिशब्दाद् हृदयायेत्यादि रूपादनन्तरम्। नमः स्वाहा इत्यादिकं संयोज्य तदन्तेन मन्त्रेण न्यसेदिति योज्यम्। भूर्भुवःसुवरोमिति दिग्बन्ध इत्यग्रिमेण सम्बन्धः॥ १८॥

छोटिकां मध्यमाङ्गुष्ठगाढवियोगेन शब्दोत्पादिकाम् अङ्गुष्ठमूले मध्यमाग्राघातरूपाम्। परिकल्पयेत् परितः प्रादक्षिण्येन कल्पयेत्। ध्यानमाह—अथेति। निश्चलचेतसेत्यनेन तत्तन्मूर्त्युल्लेखः कर्तव्यः, न केवलध्यानश्लोकपाठमात्रमिति सूचितम्॥ १९॥

वरं चाभीतिकं चैव पुस्तकं जपमालिकाम् ।
दधानामष्टवर्षाभां बालां हृदि विभावयेत् ।।२१।।

गन्धैः पुष्पैर्धूपदीपैर्नैवेद्यैर्मानसैर्यजेत् ।
अनामान्तं कनिष्ठादि न्यासोक्तेन क्रमेण तु ।।२२।।

ततो विद्यां जपेद्देवि नियतेन्द्रियमानसः ।
हृदि ध्यायन् परां देवीं भक्तिभावसमन्वितः ।
अक्षमालाविधानेन प्रत्येकं गणयन् बुधः ।।२३।।

श्रीदेव्युवाच—

देवेश केयं प्रोक्ता ते चाक्षमालेति सम्प्रति ।
कथं वा सा भवेद्देव कोऽयमत्र विधिः स्मृतः ।।२४।।

श्रीभैरव उवाच—

शृणु देवेशि वक्ष्यामि सावधानेन चेतसा ।
या शिवस्य स्फुरत्तेति पुरा प्रोक्ता मयाऽनघे ।।२५।।

---

सच्छायां समानाङ्गकान्तिम् । विकचकह्लारे विकसितसौगन्धिके । स्वर्णेति । स्वर्णपरिष्कृतक्रमिकोशभवं वस्त्रं दधानाम् ॥ २० ॥

वरमिति । दक्षाधोहस्तमारभ्य तदूर्ध्वहस्तान्तमायुधध्यानम् । तदुक्तं ज्ञानार्णवे— "वामेन पाणिनैकेन पुस्तकं चापरेण तु । अभयं च प्रयच्छन्तीं साधकानां बरानने ॥ अक्षमालां च वरदं दक्षपाणिद्वयेन तु ॥" इति । अत्रायुधस्योर्ध्वाधः क्रमः । वरम् अधोग्रप्रसृतसंश्लिष्टपञ्चाङ्गुलबहिःकरतलम् । ऊर्ध्वाङ्गुलमिदमेवाभयम् । अष्टवर्षाभा चिरन्तनाऽप्यष्टवर्षतुल्या । हृदि हृदयकमले ॥ २१ ॥

एवं ध्यानोत्तरं कर्तव्यां पूजामाह—गन्धैरित्यादि । मानसैः मनसोल्लिखितैः । यजेदिति । यजनमपि मानसमेव । मन्त्रस्त्वष्टमोल्लासे वक्ष्यमाणः । पूजामुद्रामाह— न्यासोक्तेनेति । करन्यासोक्तेन । अङ्गुष्ठादिस्पर्शरूपेण ॥ २२ ॥

विद्यां त्र्यक्षरीम् । जपविधिमाह—नियतेत्यादि । भावः श्रद्धा । अक्षमालाविधानेन । अक्षमालायां पुरश्चरणोल्लासे वक्ष्यमाणविधिना । षट्चरणोऽयं श्लोकः ॥ २३ ॥

अक्षमालां प्रष्टुं श्रीदेव्युवाच । ते त्वया । सम्प्रति सद्यः । कथं किंरूपा ॥ २४ ॥

उत्तरं वक्तुं श्रीभैरव उवाच । सावधानेनेति । वक्ष्यमाणार्थस्यातिगहनत्वात् ।

सा पराहंभावरूपा जगद्व्याप्य शिवे स्थिता ।
शिवस्य कलयन्ती सा स्वाङ्गरूपमिदं जगत् ।।२६।।
स्वातन्त्र्यवशतः सैव स्वरूपाच्छादनोद्यता ।
आणवादिमलैश्छाद्य नानात्वं भासयत्यथ ।।२७।।
ग्राह्यग्राहकरूपेण विकल्पं समुपाश्रिता ।
ग्राह्ये विकल्पनायैव पञ्चाशद्धा स्थिता हि सा ।।२८।।

---

तत्रादावुक्तामक्षमालां वर्णमयीं वक्तुं वर्णस्य स्वरूपमुत्पत्तिं चाह--येति । पुरा तृतीयोल्लासे ॥ २५ ॥

सेति । शिवस्य सामान्यशुद्धचिदात्मनो जाड्यव्यावर्तकं यद्विमृशत्स्वरूपत्वम्, तत्तस्य स्वभावात्मकमपि मायापदे विमर्श, स्पन्दः, सत्ता, स्फुरत्तेत्यादिशब्दैर्भेदेन व्यपदिश्यते । सा विमर्शाख्या शक्तिः । पराहंभावरूपा पराहन्तारूपा । यथा सर्वेषां परिच्छिन्ने देहादौ घटादिज्ञानकालेऽप्यहमिति स्फुरणमस्ति, तत्स्फुरणमेव स्फुरत्ता विमर्श इत्यादिनामकं परिच्छिन्नाहन्तेत्युच्यते । तथा अपरिच्छिन्नस्य शुद्धचिदात्मनो यत्स्वरूपस्फुरणं सा पराहन्ता । सा जगद्व्याप्य जगत्सदाशिवादिक्षित्यन्तम्, व्याप्य कारणत्वेनानुस्यूततया क्रोडीकृत्य, शिवे षट्त्रिंशे तत्त्वे स्थिता सङ्गता शिवस्येति । सा पराहन्तारूपा शक्तिः शिवस्य निरुक्तस्य इदं स्वान्तस्तादात्म्येन विद्यमानं जगद् अङ्गरूपं स्वशरीररूपं कलयन्ती । यथाहि पुरुषस्य स्फुरत्तारूपा विमर्शशक्तिर्जाग्रति, अहन्तारूपेण हस्तपादादिकं व्याप्य स्वव्याप्तं हस्तपादादिकं पुरुषस्याङ्गत्वेनावभासयति, एवमेव शिवस्य सा शक्तिरखिलं जगदङ्गत्वेनावभासयति ॥ २६ ॥

सैव शक्तिः स्वातन्त्र्यवशतः स्वातन्त्र्यात्मत्वाद्धेतोः । स्वरूपस्य स्वात्मनः शिवस्य यद्रूपं परिपूर्णज्ञानक्रियात्मकम्, तस्याच्छादने तिरोधाने उद्यता उन्मुखी सती । आणवादिमलैः स्वपरिकल्पितैराणवकार्ममायिकाख्यैरपूर्णंमन्यताकर्मवासनाभेददृष्ट्यात्मकैर्मलैः । यथाहि पङ्कादिरूपं मलं स्वरूपाच्छादकम्, एवमेतैः स्वरूपाच्छादकत्वेन मलैः, छाद्य आच्छाद्य । केवलात् ल्यबार्षः । अथ आच्छादनानन्तरं नानात्वम् अनेकतां भासयति प्रकाशयति ॥ २७ ॥

कथमनेकत्वं भासयतीति चेदाह—ग्राह्येत्यादि । ग्राह्यं ज्ञेयम् । ग्राहकं ज्ञानम् । एवं रूपेण । विकल्पं भेदं समुपाश्रिता अवभासकत्वेन प्राप्ता सती भासयतीति पूर्वेणान्वयः । ग्राह्ये एव ज्ञेये एव । न तु ग्राहके ज्ञाने । विकल्पनाय भेदावभासनाय । ज्ञेये भेदाभासनिमित्त एव ज्ञाने भेदाभासः । इदं घटज्ञानम्, इदं पटज्ञानमिति घटपटादिभेदाश्रयेणैव

एकरूपा पुरा देवि द्वैविध्यमहकारतः ।
शिवशक्तिविभेदेन प्राप्ता सा परमेश्वरी ॥२९॥
पुनः सा शिवरूपे तु प्रविष्टा दशपञ्चधा ।
अन्ते निजस्वरूपेण संस्थिता सर्गरूपिणी ॥३०॥

---

ज्ञाने भेदाभासात् पञ्चाशद्धा एकपञ्चाशद्वर्णभेदेन । ईषन्न्यूनत्वात्पञ्चाशदित्येकपञ्चाशदुपलक्षणम् । कक्षयोरभेदात् पञ्चाशद्रूपा वा । सा पुरोक्ता पराहन्ता । घटादिग्राह्ये महान् सुन्दरः श्यामो घट इत्यादौ महत्त्वादिरूपं यद् विकल्पनं नहि तच्छब्दोल्लेखमन्तरा घटते । ते च शब्दा वर्णाश्रिता एवेति ग्राह्यविकल्पार्थमेव पञ्चाशद्वर्णरूपाश्रिता भगवती । यदुक्तमभियुक्तैः—"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते ॥" इति ॥ २८ ॥

पञ्चाशद्रूपापत्तिप्रकारमाह—एकेति । पुरा सृष्ट्यादौ । एकरूपा ग्राह्यग्राहकादिभेदविगलनाद्वाच्यवाच्यकभेदाभावेनानुत्तरशिवैकरूपा । यथाहि पुरुषस्य सुषुप्तौ शब्दमयी विकल्पशक्तिर्विमर्शाख्या पुरुषैकरूपेण तिष्ठति, तथा शिवे जगद्विकल्पनशक्तिः शिवशक्तिविभेदेन द्वैविध्यं प्राप्ता इत्यन्वयः । द्वैविध्यं द्विप्रकारत्वम् । अहकारतः अकारहकाररूपेण शिवशक्त्योर्भेदेन । यथाहि सुषुप्तौ पुरुषैकरूपापि शक्तिस्तदन्तेऽहमित्यकारहकाररूपैर्णैवोज्जृम्भते, तथैव शिवस्य सृष्ट्यादौ शक्तेरहमिति प्राथमिकोल्लासः । तत्र अकारः शिवात्मकः, हकारः शक्त्यात्मकः, बिन्दुस्तयोरभेदबोधकः । "अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः । हकारोऽन्त्यकलारूपो विमर्शाख्यः प्रकीर्तितः ॥" इत्युक्तेः । इयमेव प्राथमिकी अहंप्रतीतिः सकलजगद्बीजाङ्कुररूपा । द्विदलवत्यङ्कुरे यथा रूपेण वृक्षोऽस्ति, एवं जगद्वाचकात्मना सूक्ष्मरूपेण वर्णमयेन प्रत्याहाररीत्या अहं प्रतीतौ तिष्ठति । तदुक्तं विरूपाक्षपञ्चाशिकायाम्—प्रत्यवमर्शात्माऽसौ चितिः स्वरसवाहिनी परा वाग् या । आद्यन्तप्रत्याहृतवर्णगणा सत्यहन्ता सा ॥" इति ॥ २९ ॥

अथ तस्याः पञ्चाशत्प्रकारतामाह—पुनरिति । सा पुरोक्ता शक्तिः । शिवरूपे अकारे प्रविष्टा अकारस्य ताल्वादिस्थानसम्बन्धम्, एकानेकमात्राकालपरिच्छेदं स्थानविकृतादिसंयोगं च कुर्वन्ती । दश पञ्चधा अभवदिति शेषः । एतदुक्तं त्रिपुरारहस्ये—"अनुत्तरा तु सा शक्तिरभवत् पञ्चधा पुनः । ताल्वौष्ठमूर्धदन्ताख्यस्थानयोगात् स्वतोऽपि च ॥ एकमात्राऽनेकमात्राकालभेदाद् द्विधा पुनः । ताल्वोष्ठविकृतैर्योगात्तद्योगाच्च चतुर्विधा ॥ विकारेऽप्यविकारत्वं वक्तुं शून्यात्मकः परः । अनुत्तरं भेदयन्ती सर्गरूपा तथान्तिमा ॥ इति षोडशधा देवी स्वरात्मकतया स्थिता ॥" इति । द्विधेत्येकैकस्य ह्रस्वदीर्घभेदेन द्वैविध्यम् । ताल्वोष्ठविकृतैः इकारोकारैः । बहुवचनं ह्रस्वादिभेदाभिप्रायेण । योगात्, अकारस्येति शेषः । तेन अकारस्य इकारउकाराभ्यां योगे ए ओ इति जातम् ।

अथ स्वस्मिन्निविष्टेन शिवेन सह सा शिवा ।
पञ्चत्रिंशत्स्वरूपत्वं प्राप्ताऽऽदौ तु शिवः स्थितः ।।३१।।

अन्ते च शक्तिरूपेण स्थिता सा परमेश्वरी ।
एवं षोडशरूपेण नित्याषोडशरूपिणी ।।३२।।

स्वरात्मिका सा सञ्जाता तत्राद्यः शिव एव हि ।
अनुत्तरस्तथान्ते तु सुन्दरी सर्गरूपिणी ।।३३।।

---

तद्योगात् एकारओकारयोगात् ऐ औ इत्यपि जातम् । अनुत्तरशक्तेरविकारत्वं वक्तुं शून्यात्मकः पूर्णरूपः परः पञ्चदशः अन्तिमः षोडशो विसर्ग इति उदाहरणार्थः । अन्ते पञ्चदशानामन्ते । निजस्वरूपेण निजस्य हकारस्य सम्बन्धिस्वरूपेण । सर्गरूपिणी विसर्गरूपिणी । हकारस्यैवापरं रूपं विसर्गः ॥ ३० ॥

एवं स्वरोत्पत्तिमुक्त्वा व्यञ्जनोत्पत्तिमाह—अथेति । स्वस्मिन् शक्त्यात्मके हकारे । शिवेन अकारेण । सा शक्तिः पञ्चत्रिंशत्स्वरूपत्वं प्राप्तेत्यन्वयः । आदौ पञ्चत्रिंशतां ककारादिक्षकारान्तानाम् आदौ । शिवः अकारः । पञ्चत्रिंशद्वर्णाद्भेदेन षट्त्रिंशत्वेनादौ स्थित इति द्योतनाय तुशब्दः ॥ ३१ ॥

अन्ते अन्तसमीपे । स्थाने चतुस्त्रिंशके इति वक्ष्यमाणत्वात् । शक्तिरूपेण हकाररूपेण । पञ्चत्रिंशदन्तर्गतत्वद्योतनार्थश्चकारः । एतदप्युक्तं त्रिपुरारहस्ये—"कण्ठादिस्थानभेदेन पञ्चधा या पृथक् स्थिता । सा स्वांशपञ्चशक्तीनां प्रसरात् पञ्च पञ्चधा ॥ चिदादीनां क्रियान्तानां पञ्चवर्गात्मिता ततः । कचटाश्च तपौ चेति तृतीयस्यान्तसंस्थितिः ॥ कण्ठात् स्थानादान्तरात्तु बाह्यसंस्थितिहेतुतः । इति स्पर्शाः समाख्याताः पञ्चविंशतिसंख्यकाः ॥ तालुमूर्धदच्छदानां योगेऽनुत्तरया ततः । चत्वारो यादयोऽन्तस्थाः स्वरूपस्यान्तसंस्थितेः ॥ शाद्यास्तेषां शक्तिरूपाश्चोष्माणश्च चतुर्विधाः । शिवशक्त्यात्ममिथुनमन्ते लक्षयुगात्मकम् ॥" इति । पञ्चधा अकारादिलृकारान्तरूपेण । चिदादीनां चिदानन्देच्छाज्ञानक्रियाख्यानाम् । तृतीयस्य ओष्ठस्थानीयस्य पवर्गस्य । अन्तसंस्थितिः पञ्चमस्थाने स्थितिः, कण्ठादारभ्यौष्ठस्य सर्वस्थानबाह्यत्वात् । स्पर्शाः स्पर्शसंज्ञकाः । तालुमूर्धदच्छदानाम् अत्र दल् छद इति द्वयं दन्तोष्ठयोर्वाचकम् । तेन तत्स्थानीयानाम् इकारादिलृकारान्तानां चतुर्णाम् । अनुत्तरया अकारेण स्वरूपस्य अकारस्य । अन्तसंस्थितेः इकारादीनामन्ते विद्यमानत्वात् । तेषाम् अन्तःस्थानाम् । यथा वह्नेरूष्मशक्तिः, एवं शक्तिरूपा ऊष्माणः । इत्युदाहरणार्थः । एवम् उक्तप्रकारेण षोडशधा षट्त्रिंशद्धा च वाचकात्मना जाता । तत्र षोडशरूपेण । षोडश नित्यारूपिणी, वाच्यवाचकयोरभेदात् ॥ ३२ ॥

स्वरात्मिका अकारादिविसर्गान्तरूपेण । तत्र स्वरेषु । शिव एव अनुत्तर

षट्त्रिंशद्रूपभेदेन तत्त्वरूपं समाश्रिताः ।
व्यञ्जनत्वं तु संप्राप्तास्तत्राद्यः शिव एव हि ॥३४॥

स्थाने चतुस्त्रिंशके तु शक्तिः स्फुटतया स्थिता ।
अन्त्ये वर्णद्वयं देवि मिथुनद्वितयं भवेत् ॥३५॥

लसकारमयं देवि कषकारमयं तथा ।
शुद्धशक्तिमयत्वात्तु महाकाशमयत्वतः ॥३६॥

अन्त्ययोः शिवरूपत्वमप्रकाशमयत्वतः ।
आद्ययोः शक्तिरूपत्वं शक्त्याधिक्यात्तु शक्तिता ॥३७॥

---

अकारः । सुन्दरी शक्तिः । सर्गरूपिणी विसर्गः । शक्तिसंभिन्नाशिवात् प्रसृताः स्वराः शिवशक्तिसम्पुटिताः ॥ ३३ ॥

शिवसंभिन्नशक्तेः प्रसृताः षट्त्रिंशत्तत्त्ववाचकत्वेन तत्स्वरूपं प्राप्ताः । व्यञ्जनत्वम् अकारादिक्षकारान्तषट्त्रिंशद्रूपताम् । षट्त्रिंशद्रूपभेदेन व्यञ्जनत्वं सम्प्राप्ताः वर्णाः । तत्त्वरूपं समाश्रिता इत्यन्वयः । तत्र व्यञ्जनेषु । शिव एव अकार एव ॥ ३४ ॥

स्थाने चतुस्त्रिंशके । अकारमारभ्य गणनावसरे चतुस्त्रिंशत्तमस्थाने । शक्तिः हकारः । स्फुटतया स्पष्टत्वेन । स्वरान्ते शक्तिः, अस्पष्टतया विसर्गरूपेण स्थिता । व्यञ्जनान्ते तु द्वैविध्यमहकारत इत्यत्रोक्तस्पष्टहकाररूपेण स्थिता इत्यर्थः । एवं शिवशक्तिसम्पुटवर्णसंघद्वयमुक्त्वा संघद्वयमपि मियुनद्वयात्मकमिति निरूपयितुमाह— अन्त्ये इति ॥ ३५ ॥

तयोर्मिथुनयोर्वर्णद्वयं विभज्याह— लसकारेति । एतदुक्तं मातृकाचक्रविवेके— "ज्ञानं द्वयाद्वयमयं लसकाररूपं तादृक् च कर्म कषकारमयं मिथस्तत् ॥" (४।१४) इति । मिथुनद्वयस्यापि शिवशक्त्यात्मकत्वेऽपि लकारस्य शक्त्यात्मकत्वं क्षकारस्य शिवात्मत्वमिति सहेतुकमाह—शुद्धशक्तीति । शक्तिर्द्विविधा—भेदप्रधाना अशुद्धशक्तिर्माया, अभेदप्रधानशुद्धशक्तिर्द्वितीयं तत्त्वम् । तद्वाचकः ककारः । महाकाशः अपरिच्छिन्नः भूतपञ्चमः । तद्वाचकः षकारः । क्षकारस्यैतदुभयात्मकत्वात्तन्मयत्वम् ॥ ३६ ॥

अद्वैताखण्डत्वादिरूपशिवसाधर्म्याद् अन्त्ययोः कषकारयोः शिवरूपत्वम्, रूपस्य परप्रकाश्यत्वात् । वायोरप्यचाक्षुषत्वेनाप्रकाशमयत्वादाद्ययोस्तद्वाचकयोर्लसकारयोरद्वैताखण्डत्वाद्यभावेन च शक्तिरूपत्वम् । ननु कथं शिवशक्तिमियुनात्मकस्य लकारस्य शक्तिरूपत्वमत आह—शक्त्याधिक्यादिति । अप्रकाशमयत्वेन शक्त्यंशाधिक्यात् । तदुपलक्षणं शिवांशाधिक्येन क्षकारस्य शिवतेत्यत्र ॥ ३७ ॥

स्वराद्यं व्यञ्जनाद्यं च सदृशाकारभावतः।
एकत्वं तु गतं तस्मादेकपञ्चाशदीरिता ॥३८॥
तत्रान्त्यस्य सुमेरुत्वमन्ये मणिमयाः शिवे।
एकैकशः सबिन्दून् तानन्तरे प्रजपेत् क्रमात् ॥३९॥
क्रमव्युत्क्रमशो देवि ततो वर्गाष्टकं जपेत्।
एवमष्टोत्तरशतं कृते भवति वै जपः ॥४०॥
स्वरेण सप्तभिः काद्यैर्वर्गाष्टकमुदाहृतम्।
अष्टोत्तरं सहस्रं वा त्रिशतं शतमेव वा ॥४१॥
त्रिकालं वा द्विकालं वा सकृद् वा प्रजपेद् बुधः।
प्रणवाद्यैस्तु तैर्देवि सहस्रगुणितं फलम् ॥४२॥

---

ननु पूर्वमीषन्न्यूनत्वेनैकपञ्चाशतः पञ्चाशत् संख्योक्ता, तत्कथं प्रकृते द्विपञ्चाशत्संख्या जाता? इति चेदाह—स्वराद्यमिति। स्वराद्यं व्यञ्जनाद्यं च समानाकारत्वादकारमात्रात्मकत्वादेकतां प्राप्तमिति एकपञ्चाशदीरिता शक्तिः ॥ ३८ ॥

एवं वर्णक्रममुक्त्वा तत्प्रकृतिकामक्षमालामाह—तत्रेति। तत्र एकपञ्चाशतां मध्ये। अन्त्यस्य क्षकारस्य सुमेरुत्वम्। यथाहि सूर्यादिग्रहैः परिवर्तमानैरनुल्लङ्घनीयत्वं सुमेरोः पर्वतस्य, एवं जपमालायां सर्वतः स्थूलस्य सूत्रप्रान्तद्वयप्रोतस्यानुल्लङ्घनीयत्वेन सुमेरुत्वम्। प्रकृते वर्णमालायां क्षकारः सुमेरुरित्यर्थः। अन्ये अकारादिलकारान्ताः। तान् वर्णान् सबिन्दूननुस्वारयुतान्। अन्तरे आवृत्तमन्त्रमध्ये। क्रमात् एकैकान्तरे एकैकम्। अत्र वर्णोच्चारो मन्त्रादावन्ते वा। एतदुक्तं योगिनीतन्त्रे—"सबिन्दुवर्णान्मन्त्रादावन्ते वा क्रमतो जपेत्। मेरुमन्ते क्षकारं तु केवलं प्रजपेच्छिवे ॥" इति। क्षकारोच्चारस्तु केवलं मन्त्रावृत्तिं विनैव ॥ ३९ ॥

क्रमव्युत्क्रमशः। अकारादि लकारान्तं ककाराद्यकारान्तम्। ततः इष्टवक्ष्यमाणाशतापि संख्यापूर्त्यनन्तरम् ॥ ४० ॥

वर्गाष्टकमाह—स्वरेणेति। स्वरषोडशकमेको वर्गः, तेन। नित्यजपसंख्यामाह—अष्टोत्तरमिति। सहस्रादिषु त्रिष्वप्यष्टोत्तरमिति विशेषणम् ॥ ४१ ॥

जपस्य कालनियममाह—त्रिकालमिति। सकृत् एककालम्। अत्रैककालजपस्तु प्रातःकाले एव। द्विकालमिति प्रातः सायं च। एतदप्युक्तं योगिनीतन्त्रे—"प्रातर्मध्यन्दिने सायंकाले चाद्यन्तकालयोः। आद्ये वा प्रजपेद्देवि प्रोक्तेन विधिना क्रमात् ॥"

नमोन्तैस्तैर्लक्षगुणं चतुस्तारैरसंख्यकम् ।
मूलाधारादिमूर्धान्तं वर्णानादौ तु भावयेत् ॥४३॥
तत्राधारे तु यो नादः श्रूयते सर्वजन्तुभिः ।
तस्मिन् सूत्रे वर्णमणीन् ध्यायेन्मालास्वरूपतः ॥४४॥
सुषुम्नाख्या तु या नाडी मध्ये देहं समाश्रिता ।
तत्राधः कुलपद्मं स्यात् ततस्तु विषुसंज्ञकम् ॥४५॥
आधारपद्मं तु ततः स्वाधिष्ठानं च पूरकम् ।
अनाहतं विशुद्धिश्च लम्बिकाज्ञा ततः परम् ॥४६॥
बिन्दुस्ततोऽर्धचन्द्रश्च रोधिनी नाद एव च ।
नादान्तः शक्तिरिति च व्यापिका समनोन्मना ॥४७॥

---

इति । अत्यशक्तानामपि तत्रैवोक्ता संख्या—"रोगादिना चात्यशक्तो जपेच्छक्त्या न लोपयेत् । अष्टोत्तरशतार्धं वा पादमष्टौ त्रिधापि वा ॥ यदा कदापि काले वाऽप्यकाले वा जपं चरेत् ॥" इति । प्रणवाद्यैस्तैर्वर्णैः, जपे कृते इति शेषः ॥ ॐ अं इति प्रणवाद्यस्य फलश्रुत्या प्रणवरहितशुद्धवर्णैरपि जप उक्तप्रायः ॥ ४२ ॥

तैर्वर्णैः नमोऽन्तैः । अं नम इति । चतुस्तारैः, वक्ष्यमाणैर्बीजैः । आदौ प्रणवस्थाने योजितैरिति शेषः । अत्र वर्णमालाजपे भावनाविशेषं वक्तुमाह—मूलेति । आदौ जपादौ ॥ ४३ ॥

भावनाप्रकारमाह—तत्रेति । आधारे मूलाधारे । श्रूयते, कर्णे पिहिते सतीति शेषः । तस्मिन् नादात्मके । आधारनादः सूत्रम् । तत्र मणिरूपा वर्णा इति मणिमालावद् वर्णमाला विभावनीयेत्यर्थः । यथा हि मालायां सूत्रं मण्यन्तराले स्पष्टं मणिषु तादात्म्येन भासते, एवं नादोऽन्तराले स्वरूपेण वर्णेषु तादात्म्येन विभावनीय इति भावः । एतच्च वरिवस्यारहस्ये—"आधारोत्थितनादो गुण इव परिभाति वर्णमध्यगतः" इत्यस्य व्याख्याने सुस्पष्टमुक्तम् ॥ ४४ ॥

मालात्वेन भावनीयवर्णानां स्थानमाह—सुषुम्णेति । मध्येदेहं देहस्य मध्यम् । तत्र सुषुम्णायाम् । ततः कुलपद्मादूर्ध्वे ॥ ४५ ॥

ततः परमिति स्वाधिष्ठानादौ सर्वत्र योज्यम् । पूरमं मणिपूरकम् ॥ ४६ ॥

गुदोपरि कुलादित्रयं लिङ्गे नाभौ हृदि कण्ठे नासिकाधः भ्रूमध्ये चेति स्वाधिष्ठानाद्याज्ञान्तषट्कम् । तदूर्ध्वं बिन्द्वाद्युन्मनान्तनवकम् ॥ ४७ ॥

महाबिन्दुश्चाकुलाख्यमिति स्थानानि विंशतिः ।
अकुलोर्ध्वे क्षकारः स्यादेकैकस्य तु दक्षतः ॥४८॥

क्रमादेकैकवर्णस्तु ज्ञेयश्चैवं तु विंशतिः ।
आज्ञालम्बिकयोर्मध्ये चैकं शुद्धेरधः पुनः ॥४९॥

एकं चानाहताधस्तु द्वयमेवं तु जान्तकम् ।
झञौ कुलाधः संप्रोक्तौ क्रमादेवं तु वामतः ॥५०॥

एवं विभाव्य वर्णानां मालां यो जपते नरः ।
एकमालासमावृत्तौ पुरश्चर्य्याफलं लभेत् ॥५१॥

एवं प्रकारेण प्रोक्ता चाक्षमाला महेश्वरि ।
एतद्विज्ञाय जपतः शीघ्रं तुष्टा भवेत् परा ॥५२॥

अन्यथा केवलजपो वर्णमात्रः सुरेश्वरि ।
इयं सर्वोत्तमा माला मध्यमां कथयामि ते ॥५३॥

---

महाबिन्दुर्ब्रह्मरन्ध्राधः । तदुपर्यकुलम् । एतत्स्थानलक्षणं तु स्वच्छन्दसंग्रहादौ द्रष्टव्यम् । तत्र तत्तत्स्थाने वर्णानाह—अकुलेति । एकैकस्य अकुलादेः ॥ ४८ ॥

उक्तस्थानादधिकस्थाने वर्णानाह—आज्ञेति । अकुलाद्याज्ञान्तानां द्वादशानां दक्षभागेऽकारादि ऐकारान्तम् । आज्ञालम्बिकयोर्मध्ये ओकारः । ततो लम्बिकायां विशुद्धौ च औ अं इति द्वयम् ॥ ४९ ॥

विशुद्ध्यनाहतयोर्मध्ये अः । अनाहते कः । अनाहतमणिपूरमध्ये खगौ । मणिपूरादिकुलान्तपञ्चसु घकारादिजकारान्तम् । एवम् उक्तरीत्या । जान्तकं जकारान्तम् । कुलकमलाधः झकारञकारौ । एवम् उक्तरीत्या क्रमात् कुलाद्यकुलान्तानां वामभागे गादिलान्ताश्चतुर्विंशतिवर्णाः ॥ ५० ॥

वर्णानां मालां वर्णसम्बन्धिमालाम् । विभाव्यैतन्मालया यो विद्यां जपति तस्य जपफलमाह—एकेति । एवं भावनमपि फलश्रवणात् कृताकृतम् ॥ ५१ ॥

उपसंहरति—एवमिति ॥ ५२ ॥

उक्तप्रकारस्तुत्यर्थं व्यतिरेके दोषमाह—अन्यथेति । केवलजपः उक्तभावनारहितः । यद्वा मालां विना केवलयथेच्छजपे दोषमाह—अन्यथेति । केवलजपः गणनारहितो मालारहितो वा । वर्णमात्रः न मन्त्रइत्यर्थः । अथवा एवं वर्णोत्पत्त्यादिज्ञानाभावे दोषमाह—अन्यथेति । मणिमालां वक्तुमाह—मध्यमामिति ॥ ५३ ॥

मण्यादिनिर्मिता माला मध्यमा परिकीर्तिता ।
नवरत्नमयी सा स्याद् भोगमोक्षप्रदायिनी ॥५४॥
स्फाटिकी मुक्तिदा प्रोक्ता काञ्चनी त्वर्थसिद्धिदा ।
पुत्रजीवमयी माला पुत्रजीवनहेतुका ॥५५॥
कमलाक्षोद्भवा माला धनधान्यविवर्धिनी ।
श्रीचन्दनमयी माला सर्वपापौघनाशिनी ॥५६॥
रक्तचन्दनमाला तु कामितार्थप्रदायिनी ।
पुण्यकाष्ठोद्भवा माला देहशुद्धिकरी मता ॥५७॥
कुशग्रन्थिकृता माला चातिशुद्धिविधायिनी ।
रुद्राक्षेण कृता माला मोक्षसायुज्यदायिनी ॥५८॥
एकजातिमणीन् देवि पट्टसूत्रे निवेशयेत् ।
कार्पासकम्बलोत्थे वा सूत्रे मण्योस्तु मध्यतः ॥५९॥

---

मण्यादिभेदं तत्फलं चाह—नवरत्नमयीत्यादि सायुज्यदायिनीत्यन्तश्लोकपञ्चकेन। सा माला ॥ ५४ ॥

काञ्चनी काञ्चनमणिनिर्मिता ॥ ५५ ॥

कमलाक्ष इति कमलबीजम् ॥ ५६ ॥

पुण्यकाष्ठेति । एतदुक्तं बृहद्वामकेश्वरे—"कदम्बविल्वतुलसीशमीन्यग्रोधपिप्पलाः । अगरुश्रीगन्धदेवदार्वाद्याः पुण्यवृक्षजाः ॥" इति ॥ ५७ ॥

कुशग्रन्थीति । कुशमूलोद्भवा ग्रन्थयो रुद्राक्षसदृशाः । मोक्षसायुज्यदायिनी। रुद्राक्षमालायां विशेषस्त्रिपुरारहस्ये—"मुखे मुखं तथा पृष्ठे पृष्ठं कृत्वा तु योजयेत् ॥" इति ॥ ५८ ॥

एकजातिमणीनिति । अयं नियमस्तु नवरत्नातिरिक्ते, "नवरत्नैः समस्तैर्वा व्यस्तैर्वापि कृता प्रिये । जपमाला जपेऽनन्तफलदा परिकीर्तिता ॥" इति त्रिपुरारहस्यवचनात् । तथा—"वक्रैर्वा स्फुटितैर्वापि दग्धैर्वा विषमैरपि । मणिभिर्नैव कर्तव्या माला श्रेयोऽभिवाञ्छुभिः ॥" इति च । सूत्रभेदानाह – पट्टेत्यादि । अत्र पद्धतिकृता रजतोद्भवा शङ्खजेति मणिद्वयमधिकमुक्तम् । तथा मणीनां फलतारतम्यं सूत्रेषु मुञ्जकुशवल्कलानां च संग्रहः कृतः । त्रिपुरारहस्यानुरोधेन पद्धतौ तद्वचनान्येव लिखितानि । चन्दनरक्तचन्दनयोः पुण्यकाष्ठेऽन्तर्भावात् पृथगनुपादानम् । अत्र पृथगुपादानं फलभेदानुरोधेन ।

ब्रह्मग्रन्थिं विधायाथ सूत्रान्तद्वयमेकतः ।
कृत्वा सर्वस्थूलमणौ निवेश्य ग्रन्थयेद् दृढम् ॥६०॥

अथ वक्ष्ये महेशानि संस्कारविधिमुत्तमम् ।
प्रत्येकं मणिसूत्राणि क्षालयेत् पञ्चगव्यतः ॥६१॥

पञ्चामृतेन संस्नाप्य प्रत्येकं च महेश्वरि ।
संस्नापयेदष्टमूलमन्त्रितैश्च पुनर्जलैः ॥६२॥

अथ शुद्धेन वस्त्रेण सम्यक् तं मार्जयेत् सुधीः ।
अष्टगन्धेनानुघृष्य प्रोक्तवद् ग्रन्थयेत् क्रमात् ॥६३॥

अथ पीठे समारोप्य न्यस्य स्वाङ्गे षडङ्गकम् ।
देवतां तत्र चावाह्य पूजयेच्च यथाविधि ॥६४॥

सद्योजातादिमन्त्राणां पञ्चकेन स्पृशन् जपेत् ।
अथ मालां समादाय प्रतिबीजं जपेद् बुधः ॥६५॥

---

"न दिवा शाक्तमन्त्राणां जपो रुद्राक्षमालया" इति योगिनीतन्त्रवचनमपि तत्रैवोक्तम् । कार्पासमुञ्जकुशवल्कलसूत्रं द्विजनिर्मितमेव । सूत्रे मणिनिवेशनमपि सर्पाकारतया गोपुच्छाकारतया वा । एतदुक्तं त्रिपुरारहस्ये—'पट्टसूत्रैरपि भवेत् कार्पासादिचतुष्टयम् । द्विजनिर्मितमेव स्यादन्यत्र नियमो न हि ॥ स्थूलादिसूक्ष्मपर्यन्तं सर्पाकारतया मणीन् । आरोपयेद् वा मध्ये तु स्थूलं गोपुच्छवद् भवेत् ॥" इति । मणिसंख्यापि तत्रैवोक्ता—"अष्टोत्तरशतैर्वापि तदर्धैः पादसम्मितैः ॥ कर्तव्या प्रोक्तमणिभिर्जपमाला विचक्षणैः ॥" इति ॥ ५९ ॥

ग्रन्थिमाह—ब्रह्मग्रन्थिमिति । ग्रन्थिलक्षणमुक्तं बृहद्वामकेश्वरे—"ब्रह्मग्रन्थिस्त्रिधा देवि वेष्टनेनैव जायते ॥ नागग्रन्थिसार्धरीत्या मालादावुत्तमं द्वयम् ॥" इति । मेरुविधिमाह—सूत्रान्तेति ॥ ६० ॥

संस्कारमाह—अथेति ॥ ६१ ॥

अष्टमूलमन्त्रितैः मूलाष्टकमन्त्रितैः ॥ ६२ ॥

संमार्जनानुघर्षणे सूत्रमण्योः ॥ ६३ ॥

समारोप्य संस्थाप्य । यथाविधि वक्ष्यमाणोपचारादिना ॥ ६४ ॥

मालां स्पृशन् हृल्लेखामष्टधा जपेदित्यन्वयः ॥ ६५ ॥

हृल्लेखामष्टधा देवि मेरुं चाघोरमन्त्रतः ।
देवतां नित्यवद्धुत्वा पुनश्चाष्टोत्तरं शतम् ॥६६॥
अष्टविंशतिसंख्यं वा जुहुयात् पूजयेद् गुरुम् ।
दक्षिणाद्यैस्ततः पश्चात् समर्प्य प्रजपेत् क्रमात् ॥६७॥
अथवा पर्वमाला स्यात् तद्विधानं शृणु प्रिये ।
अनामामध्यमूले च कनिष्ठामूलमध्ययोः ॥६८॥
कनिष्ठादिचतुर्णां वै क्रमादग्रमनन्तरम् ।
तर्जनीमध्यमूले चेत्येवं व्युत्क्रमतोऽपि च ॥६९॥
अङ्गुष्ठाग्रेण संस्पर्शं कुर्यादेवं महेश्वरि ।
पर्वमालां समाश्रित्य साधकः प्रजपेत् क्रमात् ॥७०॥
मध्यमामध्यमूले च मेरुं ध्यात्वा महेश्वरि ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥
विस्तरेण मया प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥७१॥

इति श्रीपरमानन्दतन्त्रे चतुर्थोल्लासः ॥ ४ ॥

---

नित्यवत् नित्यपूजोक्तवत् । अष्टोत्तरशतम् अष्टाविंशतिसंख्यं वा जुहुयादित्यन्वयः ॥ ६६ ॥

नित्यहोमोक्तेन द्रव्येण जुहुयात् ॥ ६७ ॥

पर्वमालामाह—अथवेति ॥ ६८ ॥

व्युत्क्रमतोऽप्येवम् । उक्तप्रकारेण तर्जनीमूलाद्यनामामध्यान्तम् ॥ ६९ ॥

उक्तस्थानेषु गणनप्रकारमाह—अङ्गुष्ठेति ॥ ७० ॥

मेरुमाह—मध्यमेति । उपसंहरति—एतदिति । एतत्सर्वमन्यत्र आ इषत् ख्यातं प्रसिद्धम् । तदत्र मया विस्तरेण प्रोक्तम् । संस्कारकाल उक्तो योगिनीतन्त्रे—द्वादश्यामच्युतस्य स्यात् त्रयोदश्यां शिवस्य तु । शक्तेर्नवम्यामष्टम्यां चतुर्दश्यां निशासु वै ॥" इति । पुनः संस्कार उक्तो बृहद्वामकेश्वरे—"सूत्रच्छेदे मणेर्भङ्गे त्वमेध्यस्पर्शने तथा । अन्यविद्याजपे तद्वद् निर्माल्यस्पर्शने तथा ॥ चण्डालाद्यवलोकेऽपि संस्कुर्याज्जपमालिकाम् ॥" इति । तथा—"हस्ताच्च्युतौ तथोच्छिष्टमुखस्पर्शे प्रकाशने । भुवि संस्थापने चैवाष्टधा मूलेन मन्त्रयेत् ॥" इति । षट्चरणोऽयं श्लोकः ॥ ७१ ॥

सौभाग्यानन्दसन्दोहे कथापद्यार्थबोधकः ।
परमानन्दटिप्पण्यां चतुर्थोल्लासकोऽभवत् ॥ ४ ॥



## पञ्चम उल्लासः

श्रीदेवी उवाच—

श्रोतुमिच्छामि देवेश बालाया मन्त्रसाधनम् ।
यथोक्तविधिना देव वद विस्तरभावतः ॥ १ ॥

श्रीभैरव उवाच

शृणु देवेशि वक्ष्यामि श्रीबालामन्त्रसाधनम् ।
यद् ज्ञात्वा न पुनर्देवि ज्ञातव्यमवशिष्यते ॥ २ ॥

साधकः प्रातरुत्थाय ब्रह्मरन्ध्रे निजं गुरुम् ।
पूर्वोक्ताकुलपद्मान्तर्द्वादशान्तसरोरुहे ॥ ३ ॥

विधुमण्डलमध्यस्थं मातृशृङ्गाटमध्यगम् ।
श्वेताम्बरं श्वेतवर्णं मुक्तामयविभूषणम् ॥ ४ ॥

त्रिनेत्रं रक्तशक्त्यङ्कमन्दस्मितलसन्मुखम् ।
वराभयलसत्पुस्तचिन्मुद्राविलसत्करम् ॥ ५ ॥

---

एवं पूर्वोल्लासे जपविधिर्निरूपितः । अधुना बालामन्त्रसाधनं प्रष्टुं श्रीदेव्युवाचेति । यथोक्तविधिना यथाशास्त्रविधिना श्रोतुमिच्छामीत्यन्वयः । विस्तरभावतः विस्तरप्रकारेण ॥ १ ॥

उत्तरम्—श्रीभैरव उवाचेति । ज्ञातव्यं बालाविषये ॥ २ ॥

तदेव साधनं क्रमेणाह —साधक इति । प्रातः उषसि । उषस्युत्थायेति चतुर्दशोल्लासानुरोधात् । प्रातःसन्ध्यायाः सूर्योदयात् पूर्वं कर्तव्यत्वाच्च । अकुलपद्मान्तरिति ब्रह्मरन्ध्रोर्ध्वस्थाधोमुखश्वेतसहस्रदलकमलान्तः । द्वादशान्तसरोरुहे—"मण्डलत्रयबिन्द्वादि द्वादशान्ते यतः स्थितम् । अतस्तद् द्वादशान्तं वै यत्र देवः प्रतिष्ठितः ॥ श्वेतमष्टदलं तच्च राजत्पूर्णेन्दुकर्णिकम् ।" इति त्रिपुरारहस्योक्ते ॥ ३ ॥

तत्पद्मकर्णिका चन्द्रमण्डलरूपा । तत्र मातृशृङ्गाटं मातृकात्रिकोणं हेतुपात्रे वक्ष्यमाणरूपम् । तत्र स्थितगुरोर्ध्यानमाह—श्वेतेति ॥ ४ ॥

रक्तवर्णा शक्तिरङ्के यस्य तम् । दक्षाधःकरादि तदूर्ध्वपर्यन्तमायुधानि । पुस्तं पुस्तकम् । चिन्मुद्रा अङ्गुष्ठतर्जनीयोगरूपा । एवं गुरुं ध्यात्वेत्यन्वयः ॥ ५ ॥

एवं ध्यात्वा परां बालां हृदि ध्यात्वा च पूजयेत् ।
तस्या अङ्गप्रभापूरमज्जनोत्क्षिप्तकल्मषः ॥ ६ ॥

स्वात्मरूपां च तां ध्यात्वा निरालम्बो भवेत् क्षणम् ।
कृतशौचादिकृत्यः सन् स्नानं कुर्याद्यथाविधि ॥ ७ ॥

नद्यादौ तु शुभे तीर्थे त्रिकोणं स्वाभिमुख्यतः ।
तत्र बीजत्रयं कोणे मध्ये मायां विलिख्य च ॥ ८ ॥

आवाह्य हृदयाद् बालां देवतां तीर्थमेव च ।
संपूज्य मनुना तत्त्वमुद्रया प्रोक्ष्य मस्तके ॥ ९ ॥

ततः शिरोहृद्भुजेषु कुम्भमुद्राभिषेचनम् ।
जपन् तत्र निमग्नस्तां तीर्थरूपां विभावयेत् ॥१०॥

---

पूजयेत् पञ्चोपचारैर्मानसैर्गुरुं देवतां च । तस्याः बालायाः । मज्जनेन मज्जनध्यानेन ॥ ६ ॥

तां बालाम् । निरालम्बो निर्विषयचित्तः । शौचादिः मलोत्सर्गादिदन्तधावनान्तः शास्त्रोक्तः ॥ ७ ॥

आदौ वैदिकस्नानादिकं कृत्वा पश्चाद् द्विजेन तान्त्रिकं कर्तव्यम् । तदुक्तं त्रिपुरार्णवे--"त्रैवर्णिकैर्वैदिकान्ते तान्त्रिकं क्रियतेऽखिलम् । अन्यथा तान्त्रिकं व्यर्थमधिकारं विना शिवे ॥" इति । तीर्थे वैदिकस्नानं कृत्वा आचमनप्राणायामसंकल्पान् वक्ष्यमाणरीत्या कृत्वा त्रिकोणं स्वपुरतः स्वाभिमुख्यतः । स्वाभिमुखाग्रात्मना तत्त्रिकोणलेखनमनामया कर्तव्यम् । तदुक्तं त्रिपुरार्णवे—"अनामयाऽविशेषे तु लिखेत् सर्वत्र शङ्करि" इति । अविशेषे अनुक्ते । कोणे अग्राद्वामतः, त्रिकोणेऽग्राद्वामेनैव सर्वत्र पूजादिकथनात्, तथैव पद्धतिकारादिभिरुक्तत्वात् । मायां हृल्लेखाम् ॥ ८ ॥

तीर्थावाहनं कलशे वक्ष्यमाणप्रकारेण सम्पूज्य सम्प्रदायात् पञ्चोपचारैः । मनुना मूलविद्यया प्रोक्ष्येत्यन्वयः । सम्प्रदायात् सप्तधा प्रोक्षणं ज्ञेयम् ॥ ९ ॥

कुम्भमुद्रया अभिषेचनं त्रिवारं सम्प्रदायात् । मूलं जपन् तत्र जले । तां देवताम् ॥ १० ॥

त्रिपुण्ड्रं भस्मना । भस्मविधिरुक्तो रुद्रयामले—"शून्यफालेन यत् कर्म कृतं तद्व्यर्थमुच्यते । तस्माद् विभूत्या पुण्ड्रं तु कृत्वा कर्म समाचरेत् ॥ भस्म वामे समाच्छाद्य दक्षहस्तेन वै जपेत् । पञ्चब्रह्ममनुं तद्वत् कामेश्वरमनुं तथा ॥ ईशादिव्युत्क्रमान्मूर्ध-

पुनस्त्रिरवगाह्याथ धृतवस्त्रत्रिपुण्ड्रकः ।
सन्ध्यां कुर्याच्च देवेशि तत्क्रमं शृणु साम्प्रतम् ॥११॥
दक्षानामङ्गुष्ठयोगे तत्त्वमुद्रा तु तर्पणे ।
दक्षाङ्गुष्ठेतराङ्गुष्ठं क्षिप्त्वा हस्तद्वयेन तु ॥१२॥
कुम्भाकृतिश्चाग्रयोगाद् मुद्रेयं कुम्भसंज्ञिता ।
बीजत्रययुतं तत्त्वत्रयं व्यष्टिसमष्टितः ॥१३॥
स्वाहान्तं च चतुर्थैवमात्मविद्याशिवात्मकम् ।
आचम्यैवं कुम्भकं तु विद्यात्रययुतं चरेत् ॥१४॥

---

फालहृद्बाहुयुग्मके ॥ पादयोः प्रणवेनाङ्गे चोद्धूलनमथाचरेत् ॥ ततस्त्रिपुण्ड्रं वै कुर्यान्मस्तकादिषु वै क्रमात् ॥" इति । सुवासिन्या अपि विशेषस्तत्रैवोक्तः—"सभर्तृकाभिस्त्रीभिस्तु त्रिपुण्ड्रमशुभं कृतम् । तस्माज्जलामिश्रितं तु भ्रूमध्ये हृदि बिन्दुवत् ॥ धार्यं कर्मफलार्थं वै न त्रिपुण्ड्रं कदाचन ॥" इति ।

पञ्चब्रह्ममनून् सद्योजातादिपञ्चमन्त्रान् । कामेश्वरमन्त्रस्तु त्रिकूटारहस्योक्तः पद्धतिकृता अष्टमस्कन्धे उद्धृतः । स एवात्र स्पष्टत्वाल्लिख्यते—"बाला तारो रमा माया वह्निवायुधरास्ततः । उपस्थरूपशब्दास्तु रतिबिन्दुस्थमाद्यकम् ॥ वाय्वग्निक्ष्मोपस्थरूपरसस्पर्शयदीपिकाः । सबिन्दवो द्वितीयं वै शब्दादित्रयभूमिमाः ॥ रतिस्था बिन्दुसहितास्तृतीयं तार एव च । विलोमषट्बीजयुतः षोडशार्णो मनुर्मतः ॥" ह्क्ष्म्ल्व्यूं स्ह्-क्ष्म्ल्व्यूं ल्क्ष्मूं इति कूटत्रयम् । मूर्धाद्यङ्गपञ्चके ईशादिपञ्चकेन सर्वाङ्गे प्रणवेनोद्धूलनम् ॥ ११ ॥

तत्त्वमुद्रामाह—दक्षेति । दक्षहस्तस्य तर्पणे । कुम्भमुद्रामाह—दक्षेति । दक्षाङ्गुष्ठे दक्षाङ्गुष्ठतर्जनीमध्ये इतराङ्गुष्ठं वामाङ्गुष्ठम् । क्षिप्त्वा पृष्ठभागादन्तरग्ररीत्या प्रवेश्य । हस्तद्वयेन, कृतेति शेषः ॥ १२ ॥

तर्जन्यादिकरद्वयाङ्गुलाग्रयोगेनान्तः कृतावकाशेन आचमनविधिमाह—बीजेति । बीजत्रयं मूलस्य । तत्त्वत्रयं आत्मविद्याशिवात्मकम् । व्यष्ट्या प्रत्येकम् । समष्ट्या सर्वतत्त्वेति । सर्वतत्त्वं तुर्यशक्तिरिति तत्त्वन्यासे वक्ष्यमाणत्वात् ॥ १३ ॥

ऐं आत्मतत्त्वाय स्वाहेत्यादि बीजत्रयान्ते सर्वतत्त्वाय स्वाहेत्यन्तम् । प्राणायाममाह—कुम्भकमिति । कुम्भकं श्वासधारणम् । विद्यात्रयं मूलावृत्तित्रयम् । मूलावृत्तिश्च योग्यत्वान्मानसः । अत्र सर्वत्राचमनादौ कर्मणि मन्त्रादौ चतुस्तारयोगो ज्ञेयः, षष्ठोल्लासे तथा वक्ष्यमाणत्वात् ॥ १४ ॥

एतद्द्वयं तु सर्वत्र कर्मादौ तु भवेच्छिवे ।
संकल्प्य न्यस्तसर्वाङ्गस्तोये चक्रं समावहेत् ।।१५।।
वामहस्तेन चाच्छाद्य दक्षहस्तगतं जपेत् ।
भूतबीजं मूलविद्यां मालिनीं सप्तमन्त्रितम् ।।१६।।
वामहस्तगतं पश्चाच्छाखारन्ध्रविनिर्गतम् ।
तर्पयेन्मूर्ध्नि हृदये तेजोरूपं विचिन्त्य तत् ।।१७।।

---

एतद्द्वयम् आचमनप्राणायामौ। कर्मादौ कायिकवाचिककर्मणोरादौ। मानसे तु नैतयोरावश्यकत्वम्, "अनाचम्यापि चास्नात्वा मानसं नैव दुष्यति" इति नित्यातन्त्रोक्तेः। एतद्विस्तरस्तु त्रिपुरारहस्ये उक्तः—"स्नानसन्ध्यापूजनादौ तथा नैमित्तिकादिषु। पादप्रक्षालनान्ते च छिन्कोद्गाराद्यधःसृतौ ॥ उच्छिष्टस्पर्शने चैव कुर्यादाचमनं बुधः। श्रोत्राचमनमेव स्याच्छिन्कादिषु तु भार्गव ॥ विधानं शृणु तस्यैवं दक्षश्रोत्रं सकृत् स्पृशन्। स्वस्वमूलसमावृत्त्या मनसा श्रोत्रमीरितम् ॥" इति। स्नानादौ सर्वकर्मणि आदौ आचमनं प्राणायामश्च कर्तव्यः। आचमनाकरणेऽपि दोषस्तत्रैवोक्तः—"मोहादनाचम्य तु वै यः कुर्यात् पूजनादिकम्। तस्य सर्वफलं घ्नन्ति दैत्या ह्युच्छिष्टभागतः ॥" इति। अन्यश्च विशेषो नित्यातन्त्रे—"एवमाचम्य संमृज्य चौष्ठौ प्रक्षालयेत् करौ" इति। प्राणायामे विशेषो ज्ञानार्णवे—"कुम्भकेन त्रिरावृत्त्या दक्षिणेन तु रेचयेत्। कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ॥ प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥" इति। सन्ध्यां सङ्कल्प्य। संकल्पलक्षणमुक्तं रहस्यार्णवे—"यत्र देशे साधकस्तु स्थितस्तं देशमुच्चरन्। उल्लिख्य तत्कालमपि प्रतिज्ञा कर्मणस्तु या ॥ फलमुद्दिश्याहमिति संकल्पो जलहस्ततः ॥" इति। व्यतिरेके दोषोऽपि तत्रैव—"आदौ संकल्प उद्दिष्टः पश्चात्तस्य समर्पणम्। अकुर्वन् साधकः कर्मफलं नाप्नोति निश्चितम् ॥" इति। तत्राष्टाङ्गयोग उक्तो रुद्रयामले—"व्यापकं पूर्वमुच्चार्य व्याप्यं पश्चादुदीरयेत्। अवश्यं तान्त्रिकं कालमुल्लिखेदन्यथा शिवे ॥ बहिर्मुखं तु तत्कर्म भवेद् भस्महुतं यथा ॥" इति। एतदेवैकोनविंशतितमे—"देशकालौ समुल्लिख्य चाष्टाङ्गस्थितिमेव च" इति संक्षिप्य वक्ष्यति। अयं संकल्पो जपे स्तोत्रपाठे च तत्तज्जपस्तोत्रपाठादौ प्रत्येकं वा समष्ट्या वा कर्तव्यः। एवं समर्पणमपि। एतदुक्तं रहस्यार्णवे— 'अयं जपे स्तोत्रपाठे न्यासे पारायणे तथा। व्यष्ट्या वापि समष्ट्या वा स्यात् सामान्येषु कर्मसु ॥" इति। ऋष्यादिन्यासान्तं कृत्वा। तोये इति ध्यातचक्रे देवतावाहनम् ॥ १५ ॥

गतं तोयमाच्छाद्य तस्मिन् भूतबीजं जपेत्। मूलविद्यां मालिनीं सप्तमन्त्रितं कुर्यात् ॥ १६ ॥

शाखा अङ्गुलम्। सम्प्रदायात्तर्पणमुद्रया मूलेन सप्तवारं तर्पणम्। तत् तोयम् ॥ १७ ॥

अकुलामृतसंयुक्तं पापक्षालनपूर्वकम् ।
नासिकानिर्गतं दक्षकरस्थं वामभागतः ॥१८॥
प्रजपन् पाशुपताख्यामस्त्रविद्यां महेश्वरि ।
वज्ररूपशिलायां तदास्फाल्य क्षालयेत् करौ ॥१९॥
आचम्य मूलगायत्र्या त्रिरर्घ्यं परिकल्पयेत् ।
त्रिः संतर्प्य च मूलेन सूर्यायार्घ्यं तथैव च ॥२०॥
तर्पणं तस्य मन्त्रेण गायत्रीं दशधा जपेत् ।
रूपं रसः स्पर्शशब्दौ तेजः स्याद् भूतपञ्चकम् ॥२१॥
अमृतेति समुच्चार्य्य मालिनीवह्निवल्लभा ।
अष्टाक्षरी समुद्दिष्टा विद्या चामृतमालिनी ॥२२॥
तारान्ते पशुबीजं च पशुवर्मास्त्रयोगतः ।
षडक्षरः पाशुपतास्त्राख्यो देवि समीरितः ॥२३॥
पशुबीजं गन्धरूपतुष्टयो बिन्दुना युताः ।
वागीश्वरीति संलिख्य विद्महे च ततो लिखेत् ॥२४॥

---

अकुलामृतं तत्रस्थचन्द्रामृतं नेत्रान्निर्गतम् । पापेति । नासिकया प्रवेश्य क्षालनं ज्ञेयम् । इतरनासया निर्गतम् । एतदन्तं भावनम् । करस्थं कृत्वा ॥ १८ ॥

वामभागे भावितवज्रशिलायाम् ॥ १९ ॥

तथैव त्रिः ॥ २० ॥

तस्य सूर्यस्य । अत्र "आचम्य प्रजपेदथ", "आचम्य वै जपेदुमे" इति त्रिपुरार्णववचनाभ्यामर्घ्यन्ते जपान्ते चाचमनं ज्ञेयम् । भूतबीजान्याह—रूपमिति । रूपं ल । रसः व । स्पर्शः र । शब्दः य । तेजः ह । वीजत्वाद् बिन्दुयोगः ॥ २१ ॥

मालिनीमन्त्रमाह—अमृतेति । अमृत मालिनीस्वरूपम् । वह्निवल्लभा स्वाहा ॥ २२ ॥

पाशुपतास्त्रविद्यामाह-—तारेति । तारः प्रणवः । तस्यान्ते पशुबीजं वक्ष्यमाणम् । पशु इति स्वरूपम् । वर्म हुं । अस्त्रं फट् ॥ २३ ॥

गन्धः शकारः । रूपः लकारः । तुष्टिः इकारः । चतुरक्षर बीजम् । गायत्रीमाह—वागिति ॥ २४ ॥

कामेश्वरी धीमहि च तन्नः शक्तिः प्रचोदयात् ।
बीजत्रयं त्रिखण्डादौ पञ्चविंशार्णरूपिणी ॥२५॥
गायत्रीयं समुद्दिष्टा चार्घ्यदाने नियोजिता ।
अग्निस्पर्शौ प्रतिष्ठास्थौ बिन्दुना च सुशोभितम् ॥२६॥
माया हंसश्च सूर्यस्य मन्त्रो वेदाक्षरो मतः ।
बाला श्रीपादुकायै च एषोऽर्घ्यो वह्निवल्लभा ॥२७॥
पादुकां तर्पयामीति तर्पणेऽर्घ्ये समुच्चरेत् ।
प्रकाशशक्तिसहितमार्तण्डाद् भैरवाय च ॥२८॥
सूर्यस्यार्घ्यप्रदानादौ चैवं सर्वत्र योजयेत् ।
एवं सन्ध्यां विधायाथ पूजामन्दिरमाविशेत् ॥२९॥
द्वारं संपूज्य पश्चाद् वै भूमिं प्रार्थ्यासने स्थितः ।
भूतशुद्धिं तथा प्राणप्रतिष्ठामाचरेद् हृदि ॥३०॥
अन्तर्बहिर्मातृकां च न्यस्य देहे समाहितः ।
विशेषन्यासयोगेन देहं मन्त्रमयं स्मरेत् ॥३१॥

---

इति संलिख्य च ततो लिखेत् । च इति त्यक्त्वा वागीश्वरीत्यादि यात् इत्यन्तं स्वरूपम् । बीजत्रयं बालायाः । खण्डत्रयं सप्त-सप्त-अष्टवर्णात्मकम् ॥ २५ ॥

अर्घ्यदाने अर्घ्यदानादौ नियोजिता विनियुक्ता । सूर्यमन्त्रमाह—अग्नीति । अग्निः हः । स्पर्शः र । प्रतिष्ठा आ । सुशोभितं बीजम् ॥ २६ ॥

माया हृल्लेखा । हंसः स्वरूपम् । च पादपूरणार्थः । वह्निवल्लभा स्वाहा ॥ २७ ॥

बालाश्री इत्यन्ते पादुकां तर्पयामीति । तर्पणे अर्घ्ये इति विपरीतक्रमः । सूर्यार्घ्ये विशेषमाह—प्रकाशेति ॥ २८ ॥

अर्घ्यप्रदानमन्त्रादौ प्रकाशशक्तीत्यादि मार्तण्डभैरवायेति योजनीयम् । सर्वत्र तर्पणेऽपि । भैरवाय एषोऽर्घ्य इति । भैरवश्रीपादुकां इति च ज्ञेयम् । सन्ध्यामुपसंहरति--एवमिति ॥ २९ ॥

अग्रिमोल्लासार्थान् सूचयन्ति द्वाभ्याम्--द्वारमित्यादि ॥ ३०-३१ ॥

साधारणो विधिरयं सर्वतन्त्रेषु गोपितः ।
न्यासादिरहितो देवि नैव सिद्धिमवाप्नुयात् ।।३२।।

।। इति श्रीमत्परमानन्दतन्त्रे पञ्चमोल्लासः ।।५।।



---

साधारणः, सर्वदेवतोपासने इति शेषः । अयं प्रातःकृत्यादिन्यासान्तः । अस्य साधारणविधेर्नित्यत्वसूचनायाननुष्ठाने प्रत्यवायमाह—न्यासेति । आदिना विलोमेन प्रातःकृत्यान्तसंग्रहः । सिद्धिम् उपासनफलम् । अत्र तन्त्रेषु भिन्नानामपि कर्मणामनुष्ठान-निर्णय उक्तस्त्रिपुरारहस्ये—"क्वचित्तन्त्रेषु विस्तारं क्वचिदत्यन्तसंग्रहः । अत्यशक्ते संग्रहोक्तिरन्येषां वितता भवेत् ।। एकं तन्त्रं समाश्रित्य सम्यक् कर्म कृते तथा । सर्वं तेन कृतं राम तच्च श्रीगुरुमार्गतः ।। तत्रानुक्तं सूचितं तु तथाऽन्येष्वतिदूषितम् । अकृतं यत् कर्म राम विकल्पेन विवर्जितम् ।। तदन्यस्मादुपादेयमेष शास्त्रस्य निर्णयः ।।" इति । तच्च एकतन्त्राश्रयणं च । तत्र स्वाश्रिततन्त्रे । सूचितं यदनुक्तम् । एवमकृतं चेद् दूषितम् । तच्च विकल्पितं तन्त्रान्तरादुपादेयम् ।। ३२ ।।

सौभाग्यानन्दसन्दोहे फलपद्यार्थबोधकः ।
परमानन्दटिप्पण्यां पञ्चमोल्लासकोऽभवत् ।। ५ ।।



# षष्ठ उल्लासः

श्रीदेवी उवाच—

महेश द्वारपूजां वै वद विस्तरतो मम।
भूप्रार्थनां भूतशुद्धिं प्राणसंस्थां च मातृकाम्।
विशेषन्यासजालं च बाह्यान्तर्भेदभेदितम् ॥१॥

श्रीभैरव उवाच—

शृणु देवेशि वक्ष्यामि द्वारपूजादिकं स्फुटम्।
पूजागृहस्य द्वारेषु पूर्वादिक्रमयोगतः ॥२॥

---

पूर्वोल्लासे स्नानादय उक्ता बालोपासनाङ्गभूताः। तत्र प्रातःस्मरणं तु सौभाग्यविद्यायां विशेषेण वक्ष्यमाणम्। स्नानं त्विदमेव सर्वत्र। सन्ध्यायामपि विशेषोऽग्रे वक्ष्यते। बालोपासकस्यैतावदेव स्नानादिकम्। उक्तप्रकारस्नानाशक्तस्य मन्त्रस्नानमुक्तं त्रिपुरार्णवे—"वस्त्रेणार्द्रेण चाङ्गानां कृत्वा प्रोञ्छनमादितः। मूलं जपन् सप्तधा तु आपादतलमस्तकम्॥ तलाभ्यां संस्पृशन् देवि मन्त्रस्नानं प्रकीर्तितम्। एतत्स्नानमसक्तस्य विहितं शुद्धिहेतवे॥" इति। बालोपासने काले त्रयेऽपि सन्ध्या समानैव, विशेषानुक्तेः। अत्र मध्याह्नादौ सन्ध्यानुक्तेः प्रातःसन्ध्यामात्रमेव। बालोपासनेन मध्याह्नादावित्यपि केचिदाहुः। सन्ध्याकालस्तु त्रिपुरार्णवे—"सनक्षत्रः समानार्कस्तथार्धार्कस्तु मुख्यकः। प्रातर्मध्याह्नसन्ध्याख्यकालो मध्यः प्रकीर्तितः॥ द्वितीयकालपर्यन्तो गौणकालः प्रकीर्तितः।" इति। तथा—"प्रातःसन्ध्या प्राङ्मुखेन कर्तव्यान्यत्र वै शिवे। उदङ्मुखेन सूर्याभिमुखश्चार्घ्यं जपं चरेत्॥" इति मुखनियमोऽप्युक्तः। तथा—"आशौचे सति देवेशि न कुर्यात्पूजनं तथा। सन्ध्यादिसंक्षेपतो वै कुर्यान्नैव त्यजेत् क्वचित्॥ मन्त्रोच्चारो मानसः स्यात् कर्म सन्ध्यादिकं चरेत्। आशौचे मुख्यमेव स्यान्नाङ्गमेवं महापदि॥ जाताशौचे न्यासजपौ यथावत्तु समाचरेत्॥" इति। पूर्वोल्लासान्तसूचितं द्वारपूजादिकं प्रष्टुं श्रीदेव्युवाचेति। प्राणसंस्थां प्राणप्रतिष्ठाम्। मातृकां मातृकान्यासम्, बाह्यान्तरभेदेन भिन्नं न्यासम्। षट्चरणः श्लोकः॥१॥

उत्तरं श्रीभैरव उवाचेति। स्फुटं स्पष्टम्। पूर्वादिक्रमेण॥२॥

द्वाराद् बहिः पुरोभागे द्वाराभिमुखतः स्थितः ।
गन्धोदकेन पुरतो मण्डलं मत्स्यमुद्रया ॥३॥
वृत्तं च चतुरस्रं च तत्र पुष्पाक्षतैर्यजेत् ।
अखण्डमण्डलाकारं विश्वं व्याप्य व्यवस्थितम् ॥४॥
त्रैलोक्यं मण्डितं येन मण्डलं तत्सदाशिवम् ।
मण्डलेशं समावाह्य चैवं गन्धादिभिर्यजेत् ॥५॥
अथास्त्रेण क्षालितं वै साधारं ताम्रपात्रकम् ।
ह्रां ह्रीं मन्त्रेण संपूर्य तीर्थराजं समावहेत् ॥६॥
ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥७॥
सूर्यबिम्बात् समाकृष्य चैवमङ्कुशमुद्रया ।
निपात्य तस्मिन्नुदके पूज्य गन्धादिभिस्ततः ॥८॥

---

द्वारस्य पुरोभागे। स्वपुरतः, मण्डलं कृत्वेति शेषः। इदं च मण्डलम् आचम्य कर्तव्यम्' "आचम्य द्वारपूजां तु कुर्यादुक्तविधानतः" इत्येकोनविंशे वक्ष्यमाणत्वात् ॥ ३ ॥

वृत्तबहिश्चतुरस्रम्। मण्डले तत्र वृत्तचतुरस्रमण्डले पूजाप्रकारमाह--अखण्डेति। अखण्डः कालापरिच्छिन्नः, मण्डलवत् पूर्ण आकारः स्वरूपं यस्य तं नित्यं व्यापकं चेत्यर्थः। अत एव कालाध्वदेशाध्वरूपं विश्वं व्याप्य विशेषेण तत्तादात्म्येनावस्थितम्। कालदेशाकारैरपरिच्छिन्नमिति भावः ॥ ४ ॥

येन त्रैलोक्यं मण्डितं भूषितं विलसितं सदाशिवात्मकं ब्रह्मैव तत् कृतं मण्डलमिति ध्यायेदिति शेषः। एवं ध्यात्वा तत्र मण्डले मण्डलेशाय नम इति मण्डलेशमावाह्य गन्धाक्षतपुष्पैः पूजयेत् ॥ ५ ॥

अस्त्रेण फट् इति। साधारम् आधारसहितम्। तत्र संस्थाप्येति शेषः। ह्रां इति स्वरूपम्। हृन्मन्त्रः नमः। सम्प्रदायात् ह्रां हृदयाय नम इति। तत्पात्रं सम्पूर्य ॥६॥

आवाहने मन्त्रः--ब्रह्माण्डेति। तव करैः सर्वाणि तीर्थानि स्पृष्टानि यतः। सत्यं तेन सत्येन तीर्थं देहीत्यन्वयः ॥ ७ ॥

एवमुक्त मन्त्रं जपन् "आकृष्य चाङ्कुशेनाथो" इति त्रिपुरार्णवादङ्कुशबीजेनाकर्षणं तीर्थानाम्। तस्मिन् अर्घ्यस्थे तीर्थराजाय नम इत्यावाह्य पूजयेत् ॥ ८ ॥

वर्मणा हुं इति ॥ ९ ॥

त्रिधा मूलेनाभिमन्त्र्य चामृतीकृत्य धेनुना ।
निर्विषीकृत्य तार्क्ष्येण संरक्ष्यास्त्रेण वर्मणा ॥९॥

अवगुण्ठ्य ततः पुष्पेणोद्धृतैस्तोयबिन्दुभिः ।
अस्त्रेण द्वारमभ्युक्ष्य रविवारं ततो यजेत् ॥१०॥

सव्यवामकराभ्यां तु पूजयेत् तर्पयेत् सकृत् ।
पूजातर्पणमुद्राभ्यां पुष्पैः पुष्पगतोदकैः ॥११॥

अविघ्नमूर्ध्वदेहल्यां महालक्ष्मीं सरस्वतीम् ।
दक्षवामक्रमात् पार्श्वे गणेशं क्षेत्रनायकम् ॥१२॥

गङ्गां च यमुनां धात्रीं विधात्रीं शङ्खपद्मतः ।
निधिमित्यष्टधा चाधो देहल्यामस्त्रदेवताम् ॥१३॥

प्रतिद्वारे द्वयं देवि ब्राह्मीं माहेश्वरीं तथा ।
कौमारीं वैष्णवीं चैव वाराहीं च क्रमात् ततः ॥१४॥

---

वं इति धेनुमुद्राप्रदर्शनममृतीकरणम् । तार्क्ष्यमुद्राप्रदर्शनं निर्विषीकरणम् । फट् इत्यस्त्र मुद्राप्रदर्शनं संरक्षणम् । हुमित्यवगुण्ठनमावाहनप्रकरणे वक्ष्यते । तर्पणमुद्राधृतपुष्पेण अस्त्रेण फट् इति । रविवारं द्वादशधा ॥ १० ॥

सकृत् युगपत् । पूजातर्पणमुद्रे सप्तमोल्लासे वक्ष्यमाणे । पुष्पगतोदकैः पुष्पोद्धृतोदकैः ॥ ११ ॥

अविद्यादित्रयमूर्ध्वदेहल्यां "सन्तर्प्या चास्त्रदेवता" इति त्रिपुरार्णववचनानुरोधादविघ्नाय नम इत्यादि । केचित्तु अविघ्नश्रीपादुकां पूजयामि तर्पयामि नम इति प्राहुः । पार्श्वे अधोदेहलीदक्षवामपार्श्वे । दक्षे गणेशम् । वामे क्षेत्रनायकमिति क्रमेण ऊर्ध्वे सम्पूज्य "गणपक्षेत्रपालौ" इति त्रिपुरार्णवात् । पद्धतौ गणपतये क्षेत्रपालायेत्युक्तम् ॥१२॥

शङ्खनिधिं पद्मनिधिम् । अधोदेहल्यां ह्रः अस्त्राय फट् अस्त्रदेवतायै नम इति ॥ १३ ॥

पूर्वादिप्रतिद्वारे ब्राह्म्यादीनां द्वयम् । ब्राह्मीं माहेश्वरीं पूर्वद्वारे । कौमारीं वैष्णवीं दक्षद्वारे इत्यादि ॥ १४ ॥

माहेन्द्रीं चैव चामुण्डां महालक्ष्मीं समर्चयेत् ।
प्रत्येकं च चतुर्द्वारे चैकस्मिन्नपि वा यजेत् ।
पूजास्थानात् पश्चिमतोऽथवा द्वारं विचिन्तयेत् ॥१५॥

श्रीदेवी उवाच

देवेश भैरव कथं पूजामन्दिरमुत्तमम् ।
कर्तव्यं तद्विधिं ब्रूहि विस्तरात् कृपया विभो ॥१६॥

श्रीभैरव उवाच

शृणु देवेशि वक्ष्यामि मन्दिरक्रममुत्तमम् ।
यज्ज्ञात्वा ललिताप्रीतिं साधकः प्राप्नुयाद् द्रुतम् ॥१७॥
शुचौ देशे प्रथमतो भूमिं सम्यग् विशोधयेत् ।
अस्थिलोहत्वगङ्गारनखलोमादिकांस्त्यजेत् ॥१८॥
तत्र वाटीं सुगन्ध्याढ्यचित्रपुष्पलताद्रुमाम् ।
तन्मध्ये चतुरस्राभां वेदिकां रचयेच्छुभाम् ॥१९॥
तस्योपरि गृहं सम्यक् चतुर्द्वारसुशोभितम् ।
तन्मध्ये वेदिकां दिव्यामादर्शतलसन्निभाम् ॥२०॥

---

अत्र सर्वत्र अं अविघ्नाय नम इत्यादि "मन्त्रानुक्तौ चाद्यबीजनाम्ना सर्वत्र वै यजेत्" इति त्रयोदशोल्लासवचनान्नामादावाद्यबीजयोगः कर्तव्यः। चतुर्द्वारे पूजागृहे सति पूर्वद्वारबहिरर्घ्यपूजां कृत्वा तद्द्वारे अस्त्रदेवतान्तं सम्पूज्य ब्राह्म्यादिद्वयं पूजयेत् । ततो दक्षद्वारादिषु तेनैव क्रमेण द्वादशधा प्रोक्षणाद्यस्त्रदेवतान्तस्य कौमारीवैष्णव्यादिद्वयस्य पूजनम् । मण्डलपूजाद्यर्घ्यस्थापनमपि पृथक् कर्तव्यम् । चतुर्द्वाराभावे एकस्मिन्नपि वा द्वारे मन्दिराभावे द्वारं विचिन्तयेत् ध्यायेत् । षट्चरणः श्लोकः ॥ १५ ॥

अत्र पूर्वद्वारं देवतापृष्ठभागस्थितम्, तथा दिग्व्यवस्थाया वक्ष्यमाणत्वात् । पूजामन्दिरं प्रष्टुं श्रीदेव्युवाचेति । उत्तमं पूजामन्दिरं कथं कर्तव्यम् ॥ १६ ॥

उत्तरम्--श्रीभैरव उवाचेति । यस्य ज्ञानमात्रेणैव ललिताप्रीतिं प्राप्नुयात्, किमुत तथाविधमन्दिरे पूजायामिति पूजामन्दिरस्तुतिः ॥ १७ ॥

खननं कृत्वा त्यजेत् ॥ १८ ॥

वाटीं गृहोपवनम् ॥ १९ ॥

गृहं मन्दिरम् । तन्मध्ये मन्दिरमध्ये ॥ २० ॥

तत्र श्रीचन्दनाद्यैस्तु निर्मितं चातिसुन्दरम् ।
नानारत्नसमाकीर्णं मुक्ताजालसुशोभितम् ॥२१॥
मण्डपं सिंहसदृशचतुष्पादसुशोभितम् ।
तस्य दक्षिणभागे तु दीपनाथस्य वेदिकाम् ॥२२॥
रक्तक्षौमवितानेन सुन्दरं च समुज्ज्वलम् ।
सुवर्णकलशोपेतं नानाचित्रविचित्रितम् ॥२३॥
भित्तिषु श्रीपरादेवीं लीलाचित्राणि चालिखेत् ।
रम्भास्तम्भैः पुष्पगुच्छैः शोभितं धूपवासितम् ॥२४॥
तन्मध्यमण्डपे देवि देवतां पूजयेत् क्रमात् ।
तत्रान्तरीशकोणे तु कुण्डं होमाय कल्पयेत् ॥२५॥
मेखलात्रययोनिभ्यां युतं हस्तप्रमाणकम् ।
वृत्तं वा चतुरस्रं वा त्रिकोणं योनिमेव वा ॥२६॥
एवंविधं तु देवेशि पूजागृहमुदीरितम् ।
द्वारपूजां विधायैवं प्रविशेच्छ्वासमार्गतः ॥२७॥
वामं संकोचयन्नङ्गं तत्र संप्रार्थयेद् भुवम् ।
भूमि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥२८॥

---

चन्दनाद्यैः काष्ठैः ॥ २१ ॥

तस्य मण्डपस्य दक्षिणभागे मण्डपपृष्ठस्य पूर्वत्वम्, तद्रीत्या दक्षिणभागे । दीपस्थापनार्थं वेदिका ॥ २२ ॥

क्षौमं पट्टवस्त्रम् । मण्डपोपरि स्वर्णकलशोपेतं शिखरम् ॥ २३ ॥

लीला भण्डासुरवधादि । रम्भा कदली ॥ २४ ॥

कुण्डं होमार्थम् ॥ २५ ॥

कुण्डलक्षणमाह—मेखलेति ॥ २६ ॥

श्वासमार्गतः यन्नासया श्वासः प्रवहति, तत्पादस्यादावन्तः प्रवेशेन ॥ २७ ॥

वामाङ्गसङ्कोचो रहस्यार्णवे उक्तः—"पूजागृहप्रवेशे तु साधकस्यान्तरस्थिताः । तेषां निर्गमने मार्गं भूतानां वामभागतः ॥ तस्माद्वामाङ्गसंकोचं कुर्यादन्तः प्रवेशने ॥" इति । तत्र अन्तरासनस्थाने प्रार्थनमन्त्रमाह—भूमीति । अन्तःप्रवेशे अपसर्पन्त्विति मन्त्रस्तु पद्धतिकृता तन्त्रान्तरानुरोधेन लिखितः ॥ २८ ॥

त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।
संप्रार्थ्यैवं चाक्षताद्यैस्ततो भूमिं प्रपूजयेत् ॥२९॥
भूम्यै हृदयमालिख्य सबिन्द्वाद्यं पुरः स्थितम् ।
एवं पूज्याग्रतस्तत्र स्थापयेदासनोत्तमम् ॥३०॥
आसनस्य तु मन्त्रेण पूजयेदासनं शिवे ।
मायामाधारशक्तीति विलिख्य कमलासना ॥३१॥
यकाराद् हृदयं चेति मन्त्रस्त्वासनपूजने ।
पूज्य चैवमासनस्थो दक्षवामांसयोर्हृदि ॥३२॥
गुरून् गणपतिं स्वाद्यबिन्दुयुक्परदेवताम् ।
हृदन्तेन नमस्कृत्य पार्ष्णिघातत्रयेण वै ॥३३॥
आसनाधः फडित्येवं तालविघ्नान्निवारयेत् ।
सुदर्शनास्त्रमन्त्रेण रुद्रार्णेन महेश्वरि ॥३४॥

---

ततः प्रार्थनानन्तरम् ॥ २९ ॥

पूजामन्त्रमाह— भूम्यै इति । भूम्यै इति स्वरूपम् । हृदयं नमः । सबिन्द्वाद्यं भूं भूम्यै इत्यस्य पुरः आदौ । अत्र "मन्त्रानुक्तावाद्यबीजनाम्ना सर्वत्र वै यजेत्" इति त्रयोदशोल्लासे वक्ष्यमाणसामान्यवचनेनैव मन्त्रप्राप्तौ पुनर्मन्त्रविधानमन्यत्र मन्त्राणामनित्यत्वज्ञापनाय । अत एव पद्धतौ कलशादौ तीर्थपूजनादौ मन्त्रोऽनुक्तः । एवमग्रतः स्वपुरतः सम्पूज्य तत्र स्थापयेत् ॥ ३० ॥

आसनमन्त्रमाह—मायामिति । मायां ह्रीं । आधारशक्ति कमलासना स्वरूपम् ॥ ३१ ॥

यकारादनन्तरम् । हृदयं नमः । आसनस्थः आसने उपविष्टः । अत्रोपवेशे मुखनियम उक्तः कुलार्णवे—"सुखासने समासीनः प्राङ्मुखो वाऽप्युदङ्मुखः" इति ॥ ३२ ॥

दक्षवामांसयोर्हृदि, नमस्कृत्येति सम्बन्धः । क्रमेण गुरून् गणपतिं परदेवतां स्वाद्यबिन्दुयुक्तेन हृदन्तेन गुं गुरुभ्यो नम इत्यादि नमस्कृत्य अञ्जलिं संयोज्य "त्रिर्वामिपार्ष्णिघातं तु आसनाधो विधाय च" इति त्रिपुरार्णववचनात् पार्ष्णिर्वामो ग्राह्यः ॥ ३३ ॥

मन्त्रेण वक्ष्यमाणेन ॥ ३४ ॥

अस्त्रन्यासेन भूविघ्नान् दिग्बन्धात् खेचरानपि ।
वह्निप्राकारमभितो विभाव्याथात्मशोधनम् ।।३५।।
हंसेन कुम्भकं कुर्वन् मूलाधारस्थितां पराम् ।
कुण्डलीं धातुनाथाभिर्गणनाथादिभिस्तथा ।।३६।।
देहस्थाखिलदेवाद्यैर्ब्रह्मरन्ध्रोपरि स्थिते ।
संयोज्य परतत्त्वे तु स्वदेहं तु विचिन्तयेत् ।।३७।।
तत्त्वाधिष्ठातृदेवानां लयादात्मनि तज्जडम् ।
विभाव्य वामकुक्षौ तु चिन्तयेत् पापपूरुषम् ।।३८।।
अधोमुखं कृष्णवर्णं रक्तश्मश्रुशिरोरुहम् ।
खडगचर्मधरं क्रूरं महापापोपपातकैः ।।३९।।
उत्पन्नाङ्गं तेन सह स्थूलदेहं तु साधकः ।
शब्दस्पर्शरसैर्बीजैः पूरकुम्भकरेचकम् ।।४०।।

---

फट् इत्यासनाधो वामपार्ष्णिघातत्रयेण सुदर्शनास्त्रमन्त्रेणास्त्रन्यासेन दिग्बन्धेन क्रमेण तल-भूमि-आकाशस्थविघ्नान् विघ्नकरान् भूतान्निवारयेत् । अथ भूशुद्ध्यनन्तरम् । आत्मशोधनम्, भूतशुद्धिं कुर्यादिति शेषः ॥ ३५ ॥

हंसेन हंसः इति । धातुनाथा डाकिन्याद्याः । गणनाथो गणेशः । आदिना जीवात्मनः संग्रहः ॥ ३६ ॥

देवाद्यैः, देवा भैरवाः, आद्येन ग्रहादि, तैः संयुतां कुण्डलीं परतत्त्वे परशिवे । जडं चिन्तयेदिति सम्बन्धः ॥ ३७ ॥

तत्त्वं पृथिव्यादि । देवानां गणेशादीनाम् आधारादिचक्रेषु पृथिव्याद्यात्मकेष्वधिष्ठातारो गणेशाद्याः । आत्मनि परशिवे लयात् तत् शरीर एवं विभाव्य पापपूरुषं चिन्तयेत् ॥ ३८ ॥

पापपुरुषध्यानमाह — अधोमुखमित्यादि ॥ ३९ ॥

पातकैरुत्पन्नाङ्गमिति सम्बन्धः । तेन पापपुरुषेण । शब्दो य । स्पर्शो र । रसो व । बीजैः बिन्दुयुतैः । यं रं वं इति क्रमेण जपन् पूरकं कुम्भकं रेचकं कुरोतीति सम्बन्धः । अत्र पूरकादिकं यावत् कर्तुं शक्यं तावत् कर्तव्यम् । तदुक्तं त्रिपुरार्णवे—"पूरकुम्भरेचकेषु यावत् स्वाद्वेगरोधनम्" इति ॥ ४० ॥

कुर्वन् वाय्वग्निसलिलैः शोष्य दग्ध्वा निषिच्य च ।
पुना रूपाग्नि सोऽहं च पूरकुम्भकरेचकम् ।।४१।।

घनीकृत्य तु संचेत्य चानये हृदि पूरुषम् ।
उत्पाद्य तस्मादखिलां तत्त्वदेवमयीं तनुम् ।।४२।।

कुण्डल्याद्या देवताश्च स्वस्वस्थाने विचिन्तिताः ।
देवताप्रचुरं देहं गतदोषं विचिन्तयेत् ।।४३।।

भूतशुद्धिं विधायैवं प्राणस्थापनमाचरेत् ।
पाशं मायामङ्कुशश्च शब्दाद् वाय्वन्तसप्तकम् ।।४४।।

अग्निः प्रीतिगतः प्रीतिः पृथ्वी वायुस्तथा जपाः ।
माया प्रीतिः सप्तदश सर्वे बिन्दुयुताः प्रिये ।।४५।।

तत्तन्नाम विलिख्याथ प्राणा इह तथा पुनः ।
प्राणास्ततः सप्तदश नाम जीव इह स्थितः ।।४६।।

---

तत्तद्बीजोद्भूतैर्वाय्वग्निसलिलैः पुनः । रूप ल । अग्नि ह । सोऽहं स्वरूपम् इति बीजं पठन् इति शेषः । क्रमेण पूरकादि कुर्वन् ॥ ४१ ॥

भस्मीभूतदेहं जलेनाप्लावितं घनीकृत्य संचेत्य । जडात्मकं चेतनीकृत्य अखिलान् पुरुषं जीवं तस्मात्पुरुषात् तत्त्वदेवानुत्पाद्य तन्मयं तत्प्रचुरम् । तनुं शरीरम् । आदौ परशिवे लयं सर्वदेवानामुक्त्वा तस्मात्पृथक्कृत्य हृद्यानीताज्जीवाद्देवतोत्पादनकथनं जीवात्मनः परमात्माभेदद्योतनायेति ज्ञेयम् ॥ ४२ ॥

स्वस्वस्थाने स्थिताः विचिन्तिताः ॥ ४३ ॥

एवमुक्तप्रकारेण । प्राणप्रतिष्ठामन्त्रमाह—पाशेति । पाशः आं । माया ह्रीं । अङ्कुशः क्रों । शब्दात् यकारात् । वाय्वन्तं सकारान्तम् ॥ ४४ ॥

अग्निः ह । प्रीतिः ओ । तेन हो इति जातम् । प्रीतिः ओ । पृथ्वी क्ष । वायुः स । अजपा हंसः । सप्तदश पाशादिप्रीत्यन्तम् । अजपाया एकत्वेन गणनात् सप्तदश । सर्वे पाशादित्रयं अजपां च त्यक्त्वा ॥ ४५ ॥

तत्तन्नाम त्रिपुरसुन्दरीत्यादि । प्राणा इह । प्राणाः स्वरूपम् । सप्तदश । पाशादि-प्रीयन्तम् । नाम त्रिपुरसुन्दरीत्यादि । जीव इह स्थितः । स्वरूपम् ॥ ४६ ॥

पुनः सप्तदशाख्या च सर्वं लिख्येन्द्रियाणि च ।
इह स्थितानि तान्येव नाम वाङ्मन आलिखेत् ॥४७॥
श्रोत्रत्वक्चक्षुरथ वै जिह्वा घ्राणं च पाद वै ।
प्राणा इहागत्य सुखं चिरं तिष्ठन्तु वै शिरः ॥४८॥
षट्कं चान्त्यगतं चेति प्राणस्य स्थापने मनुः ।
एकोनत्रिंशदधिकशतवर्णो भवेत् प्रिये ॥४९॥
पाशबीजं बिन्दुयुता प्रतिष्ठा संप्रकीर्तितम् ।
वह्निस्पर्शौ तुष्टिगतौ माया बिन्दुयुता भवेत् ॥५०॥
शक्तिस्पर्शौ प्रीतिगतौ चाङ्कुशं बिन्दुयोगतः ।
अग्निः सबिन्दुः सर्गेण युतो वायुरथो जया ॥५१॥
ब्रह्मादयो वै ऋषयश्छन्दो वेदत्रयं भवेत् ।
प्राणशक्तिः परा देवी देवता संप्रकीर्तिता ॥५२॥
तेजस्पर्शयुतैर्दीर्घबीजैरङ्गानि विन्यसेत् ।
षण्ढस्वरविहीनैस्तु जातयस्ते प्रकीर्तिताः ॥५३॥

---

आख्या नाम । सर्वं इन्द्रियाणि । इह स्थितानि । स्वरूपम् । तानि । सप्तदश । वाङ्मनः स्वरूपम् ॥ ४७ ॥

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणपादप्राणा इहागत्य सुखं चिरं तिष्ठन्तु । स्वरूपम् । शिरः स्वाहा ॥ ४८ ॥

अन्त्यगतं षट्कं पृथ्व्यादि षडक्षराणि । अत्राजपाया अक्षरद्वयगणना । इन्द्रियाणि इह इत्यसन्धिः । एकोनत्रिंशदिति । सर्वत्राजपायाः वर्णद्वयगणनम् । आद्ये द्वितीये च कूटे चतुर्विंशतिः, तृतीये अष्टाविंशतिः, चतुर्थे त्रिपञ्चाशत् । सर्वत्र नाम्नो गणनाभावः ॥४९॥

प्रतिष्ठा आ । बह्नि ह । स्पर्श र । तुष्टिः ई ॥ ५० ॥

शक्तिः क । स्पर्शः र । प्रीतिः ओ । अग्निः ह । सर्गः विसर्गः । वायुः स ॥ ५१ ॥

ऋष्यादिन्यासमाह--ब्रह्मादय इति । ब्रह्मविष्णुरुद्रा इत्यर्थः । वेदत्रयम् ऋग्यजुःसामानि ॥ ५२ ॥

तेजः ह । स्पर्श र । दीर्घबीजैः बिन्दुयुतैर्दीर्घस्वरैः ह्रां ह्रीं इत्यादि ह्रः इत्यन्तैः । षण्ड स्वरः ऋ ॡ इति । एतद्द्वयरहितैः षट्दीर्घबीजैरित्यन्वयः । ते षण्डस्वरहीनाः षट्स्वरा जातय इत्यर्थः । जातिसंज्ञाकरणस्याग्रे उपयोगः ॥ ५३ ॥

शोणसागरमध्यस्थरत्नमाणिक्यपोतके ।
मणिमण्डपसंराजद्रक्तपद्मोपरि स्थिताम् ।।५४।।

जपाकुसुमसच्छायां रक्तस्रग्वस्त्रभूषणाम् ।
सृणिं पाशं तथा चापं पौण्ड्रं तद्वत् त्रिशूलकम् ।।५५।।

असृक्पूर्णकरोटं च पञ्च बाणांश्च बिभ्रतीम् ।
स्मरेत् त्रिनेत्रां स्वसमशक्त्यष्टकसुसेविताम् ।।५६।।

एवं ध्यात्वा स्वहृदये तलं न्यस्य त्रिधा जपेत् ।
ममेति नाम्नि संयोज्य चैवं प्राणस्थितिर्भवेत् ।।५७।।

मातृकाभिस्ततः प्राणायामत्रितयमाचरेत् ।
नृपेण भूतपक्षाभ्यां दिशा स्यात् पूरकादिकम् ।।५८।।

ब्रह्मा ऋषिः स्याच्छन्दस्तु गायत्री कीर्तिता भवेत् ।
जातिह्रस्वगुरुभ्यां तु षड्वर्गैः पुटितैर्न्यसेत् ।।५९।।

---

ध्यानमाह—शोणेति । शोणसागरः रक्तजलार्णवः । पोतके नौकायाम् ॥ ५४ ॥

सृणिः अङ्कुशः । पौण्ड्रम् पुण्ड्रेक्षुनिर्मितं चापम् ॥ ५५ ॥

करोटं नृकपालम् । दक्षोर्ध्वादिदक्षमध्यान्तं षडायुधानि ॥ ५६ ॥

आं ह्रीं क्रों इति बीजादिन्यासः, "आद्यैस्त्रिभिर्बीजशक्तिकीलकानि प्रविन्यसेत्" इति त्रिपुरार्णववचनात् । देवताप्रीतये प्राणस्थाने विनियोग इति ज्ञेयम् । न्यासस्थान-मुद्राबीजयोगपञ्चपूजाः सर्वत्र पूर्ववज्ज्ञेयाः । तलं करतलम् । नाम्नि नामस्थाने मम प्राणा इत्यादि । अत्र पद्धतौ लाघवानुरोधेन ज्ञानार्णवप्रोक्तमनुमुक्त्वा समर्थानां मूलतन्त्रत्यागा-नौचित्यादथवेति पक्षान्तरमुक्तम् ॥ ५७ ॥

मातृकान्यासाङ्गं प्राणायाममाह—मातृकाभिरिति । ततः प्राणप्रतिष्ठानन्तरम् । तत्प्रकारमाह--नृपेति । नृपेन षोडशभिः स्वरैः । भूतपक्षाभ्यां कादिमान्तैः पञ्चविंशति-संख्यैः । दिशा यादिक्षान्तैर्दशभिः । क्रमेण पूरकं कुम्भकं रेचकं कुर्यादित्यर्थः ॥ ५८ ॥

मातृकान्यासस्य ऋष्यादिन्यासमाह—ब्रह्मेत्यादि । न्यासस्यापि मन्त्रमयत्वा-दृष्यादिन्यासो युक्त एव । ऋष्यादितत्त्वमुक्तं त्रिपुरारहस्ये—"आद्यद्रष्टा तु मन्त्राणां ऋषिस्तत्र पृथक् पृथक् । गुरुत्वान्मूर्ध्नि तत्स्थानं मन्त्रवर्णाधिदेवता । छन्दःस्थानं मुखं योग्याद्देवता हृदि संस्थिता । मन्त्रवाच्यात्मिका तेन देवतां हृदि विन्यसेत् ॥ बीज-वर्णात्मना दृष्टाः पूर्वं मन्त्रा महर्षिभिः । तेन कारणभूतेन मन्त्रा दृष्टा अनन्तरम् ॥ तस्मात्

ब्रह्मरन्ध्रे स्मरेत् पद्ममष्टपत्रं सुकर्णिकम् ।
भूपुरं तद्बहिर्देवि सर्गयुक्प्रकृतिं स्मरेत् ॥६०॥
कोणेषु रसबीजं वै दिक्षु पत्रेष्टवर्गकम् ।
पञ्च पञ्च चतुर्युग्मद्वितयं चेति कादितः ॥६१॥
स्वरयुग्मं केशरेषु प्रासादपरकर्णिकम् ।
अग्निवाय्वङ्गदासर्गः प्रासादपरसंज्ञितम् ॥६२॥

---

तन्मन्त्रबीजं वै मन्त्रकारणभावतः । मन्त्रसामर्थ्यरूपेण फलदाने सशक्तिकः ॥ तद्वर्णे मन्त्रशक्तिस्तु तेन शक्तिरितीरितः ।न गच्छेच्छक्तिरन्यत्र चेति शक्तिस्तु कीलिता॥ यस्मिन् वर्णे स वर्णस्तु कीलकं समुदाहृतम् । बीजस्थानं गुह्यमिति तत्र बीजं प्रविन्यसेत् ॥शक्तिस्तु गमने दृष्टा तेन शक्तिस्तु पादयोः । नाभौ प्राणः कीलितो वै तस्मात्तत्र तु कीलकम् ॥ ऋष्यादिन्यासहीनस्तु गुर्वादिद्रोहहेतुतः । बीजादिहीनस्तद्वच्च न फलं विन्दते क्वचित् ॥" इति । जातयः षण्ढस्वरहीनाः षट्दीर्घस्वराः । तेषां ह्रस्वगुरुभ्यां पुटितैर्वर्गैः अं कं. ङं आं इत्यादि । बिन्दुयोगः सम्प्रदायात् । षड्वर्गाः क च ट त प इति पञ्चवर्णात्मकाः पञ्च-वर्गाः । यवर्गो दशवर्णः षष्ठः, "अनुस्वारविसर्गाभ्यां यशवर्गौ ह् ल कौ"इति ज्ञानार्णवोक्तेः । बीजादिन्यासस्तु—"ऋषिर्ब्रह्मा च गायत्री छन्दो देवी सरस्वती । मातृका देवता देवि हलो बीजानि शक्तयः ॥ स्वरास्तु परमेशानि तथा व्यक्तिस्तु कीलकम् ॥" इति दक्षिणा-मूर्तिसंहितायामुक्तः । त्रिपुरार्णवेऽपि—"हलो बीजानि तद्वत्तु स्वराः शक्तय ईरिताः । व्यक्तिश्च कीलकम्" इत्यादि । करादिन्यासे विशेषस्त्रिपुरारहस्ये—"करस्तु न्यासयोगेन मन्त्रात्मत्वाद्विशुद्ध्यति । ततः पूजाजपादौ तु विनियुक्तः फलप्रदः ॥ अङ्गन्यासमृते विघ्नैर्मूर्तिभूयोऽभिभूयते । तस्मादङ्गन्यासयोगाद्रक्षणं सर्वतो भवेत् ॥ युद्धे तु हृदयं चादौ रक्षणीयं प्रयत्नतः ।एवं मूर्धापि तु शिखाशेखरस्थानभावतः॥ तद्भङ्गे मानभङ्गः स्यादत-स्तद्रक्ष्यमेव हि । कवचं चाङ्गसन्त्राणं नेत्रं स्यात् करणोत्तमम् ॥ अस्त्रं च बाह्यकरण-मित्येतन्न्यासयोगतः । संरक्ष्य पश्चाद्दिग्बन्धाद्देशदिग्रक्षणं भवेत् ॥" इति ॥ ५९ ॥

ध्यानमाह—ब्रह्मरन्ध्रेति । भूपुरम् चतुरस्रम् । तच्च तद्बहिः पद्मबहिः । सर्ग-युक्प्रकृतिः ठः । कोणेष्वित्यन्वयः ॥ ६० ॥

रसबीजं वं । दिक्षु चतुरस्रस्य आग्नेयादिकोणेषु ठः । प्रागादिदिक्षु वम् । प्रागाद्यष्टपत्रेष्वष्टवर्गान् । वर्गानाह—पञ्चेति । कादितः ककारादितः । पञ्च पञ्च । पञ्चवर्णात्मकाः पञ्चवर्गाः । चतुर्युग्म चतुर्वर्णात्मकं वर्गद्वयम् । द्वितयं वर्णद्वयात्मक एकः । कं च ट त प य श ला वर्गाद्याः ॥ ६१ ॥

केसरेषु कर्णिकासमीपदलप्रान्तेष्वष्टसु स्वरयुग्मम् । प्रासादपरकर्णिकम् । प्रासाद-परामाह—अग्नीति । अग्नि ह । वायु स । अङ्गदा औ । सर्गो विसर्गः ॥ ६२ ॥

आधारध्वनिमालक्ष्य कुलपद्मनिवासिनीम् ।
सार्धत्रिवलयोपेतसुप्तसर्पनिभाकृतिम् ॥६३॥
तडित्कोटिप्रतीकाशां विसतन्तुतनोयसीम् ।
कालाग्निसदृशाभासां स्मरन् प्राणबलोद्यमाम् ॥६४॥
कुम्भकश्वाससम्पर्कप्रबुद्धां ब्रह्मवर्त्मना ।
तज्ज्वालास्पर्शविगलत्परचन्द्रामृतोद्भवाः ॥६५॥
सबिन्दवो मातृकार्णा ध्यात्वैवं विन्यसेदथ ।
विशुद्धौ षोडशदले स्वरान् कादीननाहते ॥६६॥
रविपत्रेऽथ दिक्पत्रे मणिपूरे तु डादिकान् ।
स्वाधिष्ठानेऽथ षट्पत्रे बाद्यान् वादींश्चतुर्दले ॥६७॥
आधारे हक्षकारौ च आज्ञायां द्विदलेऽम्बुजे ।
चतुस्तारादिकान् देवि हृदन्तान् विन्यसेत् क्रमात् ॥६८॥

---

एवं ध्यानान्तरं कर्तव्यमाह—आधारेति । आधारध्वनिमालक्ष्य श्रुत्वा । आधारध्वनिर्नाम कर्णपिधाने श्रूयमाण आन्तरः शब्दः । तस्य श्रवणं प्राणायामाद्यभ्यासवतां सुलभम् । अन्येषां कर्णपिधानेन भवति । कुलपद्मम् आधारसहस्रदलकमलम् ॥ ६३ ॥

प्राणः ज्ञानम् । बलम् इच्छा । उद्यमः क्रिया । एतत्त्रयात्मिकाम् । "जडाद्यावर्तकः प्राणो जन्तूनां ज्ञानमेव हि" इत्यत्र प्राणपदस्य ज्ञानार्थत्वम् । साधारणी (स्वाभाविकी) ज्ञानबलक्रिया च" इत्यत्र बलपदस्येच्छार्थत्वं चोक्तम् ॥ ६४ ॥

कुम्भकं कृत्वा तच्छ्वाससम्पर्केण प्रबुद्धां ध्यायेत् । ब्रह्मवर्त्मना सुषुम्णामार्गेण ॥ ६५ ॥

अथ ध्यानानन्तरम् । विशुद्धौ कण्ठे । अनाहते हृदि । कादीन् ठान्तान् ॥ ६६ ॥

अनाहतं रविपत्रं द्वादशपत्रम् । दिक्पत्रं दशपत्रम् । मणिपूरे नाभौ । डादिकान् फान्तान् । स्वाधिष्ठाने लिङ्गे । बाद्यान् लान्तान् । वादीन् सान्तान् ॥ ६७ ॥

आधारे गुदोपरि । हक्षकारौ हकारक्षकारौ । आज्ञायां भ्रूमध्ये । न्याससमन्त्रानाह–चतुस्तारेति । हृत् नमः । हृदन्तान् तत्तन्न्यासमन्त्रानिति शेषः ॥ ६८ ॥

प्रणवो वाग्भवं माया लक्ष्मीस्तारचतुष्टयम् ।
एतत्सर्वत्र कर्मादौ मन्त्रादौ विनियोजयेत् ।।६९।।
मन्त्राणां वीर्यसिद्ध्यर्थं तेषां तेजोमयत्वतः ।
आद्यहीनं त्रितारं वै द्वितारं चान्त्ययुग्मकम् ।।७०।।
गन्धस्पर्शयुता शान्तिर्लक्ष्मीर्बिन्दुयुता भवेत् ।
एवमन्तर्मातृकाया न्यासं कृत्वा बहिर्न्यसेत् ।।७१।।
तत्र स्थूलं मातृकाया ध्यानं शृणु समाहिता ।
अकचाद्यष्टवर्गाङ्गां शुद्धस्फटिकसन्निभाम् ।।७२।।
चन्द्रचूडां त्रिनयनां पद्मस्थामुन्नतस्तनीम् ।
वरदं पुस्तकं चैव सुधाकुम्भं जपस्रजम् ।।७३।।

---

प्रणवः ॐ । वाग्भवं ऐं । माया ह्रीं । लक्ष्मीः श्रीं । इदमेव चतुस्तारम् । ॐ ऐं ह्रीं श्रीं अं नमः इत्यादि न्यासमन्त्रः । एतत् चतुस्तारम् । सर्वत्र कर्मादौ पठनीयस्य मन्त्रस्यादौ चतुस्तारं योजयेत् । आचमनादिसर्वकर्मसु मन्त्रादौ चतुस्तारयोगः कर्तव्यः । अत्र कर्मादौ इत्यस्य कर्माङ्गभूते इत्यर्थः । तेन कर्माङ्गभूते मन्त्रजपे एव मन्त्रादौ चतुस्तारयोगः । केवलं जपस्य तु स्वस्यैव मुख्यत्वात् कर्माङ्गत्वाभावेन तत्र मन्त्रादौ न चतुस्तारयोगः । अभिमन्त्रणादौ तु कर्माङ्गत्वेन चतुस्तारयोगः कर्तव्य एव । एककर्माङ्गेषु अनेकमन्त्रेषु प्रतिमन्त्रं च पृथक् चतुस्तारयोगः । एककर्मणि मन्त्रावृत्तौ तु सकृदेव तद्योगः । एतदुक्तं योगिनीतन्त्रे—"मन्त्रावृत्तौ सकृद्योगस्ताराणामेककर्मणि । तथा मन्त्रविभेदे तु प्रत्येकं योजयेच्छिवे ॥" इति ॥ ६९ ॥

तद्योगप्रयोजनमाह—मन्त्राणामिति । तेषां चतुर्णां बीजानां तेजोमयत्वतो ब्रह्मसूर्याग्नीषोमात्मक तेजोमयत्वात् । एतदुक्तं त्रिपुरारहस्ये—"तारं ब्रह्ममयं तद्वद् वाग्भवं सूर्यमण्डलम् । अग्नीषोमात्मकं माया लक्ष्मीश्चापि क्रमाद्भवेत् ॥" इति । चतुस्तारस्य तेजोमयत्वेन तद्योगान्मन्त्राणां वीर्याधिक्यमिति भावः । चतुस्तारादिमन्त्रे तु न चतुस्तारयोगः, "त्रितार्यादिमन्त्रेषु तद्योगो नैव विद्यते" इति योगिनीतन्त्रवचनात् । अत्र त्रितारीपदं चतुस्ताराद्युपलक्षकम् । आद्यः प्रणवः । ऐं ह्रीं श्रीं इति त्रितारम् । ह्रीं श्रीं इत्यन्त्ययुग्मम् ॥ ७० ॥

गन्धः श । स्पर्शः र । शान्तिः ई । बहिर्मातृकां न्यसेत् ॥ ७१ ॥

मातृकासूक्ष्मध्यानम् अमृतोद्भवा इत्युक्तम् । स्थूलं ध्यानं वक्तुमाह— तत्रेति । बहिर्मातृकान्यासादावित्यर्थः । अष्टवर्गा एवाङ्गानि यस्याः सा ॥ ७२ ॥

जपस्रजं जपमालाम् । दधानामिति शेषः । वामाधःकराद्दक्षाधःकरान्तमाणु धानि ।

अशेषविद्यारूपां वै हृदि ध्यात्वा प्रविन्यसेत् ।
मस्तके मुखवृत्ते च नेत्रयोः श्रोत्रयोर्नसोः ॥७४॥
गण्डौष्ठदन्तयुगले जिह्वायां ब्रह्मरन्ध्रके ।
पाणिद्वये मूलमध्यमणिबन्धेषु वै क्रमात् ॥७५॥
शाखामूले तदग्रे च तद्वत् पदयुगे न्यसेत् ।
पार्श्वद्वये पृष्ठनाभिजठरेषु तथा हृदि ॥७६॥
स्कन्धयोर्गलपृष्ठे च हृदयात् पाणिपादयोः ।
नाभौ मूर्ध्नि च देवेशि क्रमादादींस्तु विन्यसेत् ॥७७॥
प्रसादपरयोर्मध्यगताः सेन्द्वखिलाक्षराः ।
मातृकाया मनुरयं स्यात्त्रिपञ्चाशदक्षरः ॥७८॥
सर्वमन्त्रमयश्चायमनेन तु महेश्वरि ।
बिलादिपादमूलान्तं व्यापकत्रितयं चरेत् ॥७९॥
तलाभ्यां निखिलाङ्गस्य स्पर्शनं व्यापकं भवेत् ।
विद्यान्यासमथो वक्ष्ये अन्तर्बाह्यविभेदतः ॥८०॥

---

मुखवृत्ते फालमध्याद्दक्षकपोलचिबुकवामकपोलफालमध्यान्तम् । एतदुक्तं योगिनीतन्त्रे—"फालमध्याद्दक्षतस्तु कपोलचिबुकादितः । फालमध्यान्तमेतच्च मुखवृत्तं प्रकीर्तितम् ॥" इति । दक्षादिनेत्रादिषु । नसोः नासिकयोः ॥ ७४ ॥

ओष्ठे दन्ते चोर्ध्वादि । पाणिपादपार्श्वस्कन्धद्वयेऽपि दक्षादि ॥ ७५ ॥

शाखा अङ्गुलिः । तदग्रे शाखाग्रे । तद्वत् पाणिवत् । मूलमध्यगुल्फाङ्गुलिमूलतदग्रेषु ॥ ७६ ॥

गलपृष्ठं ककुत् । हृदयात् हृदयमारभ्य । पाणिपादयोः पूर्वं क्रमेणाङ्गुल्याग्रान्तम् । नाभौ मूर्ध्नि च हृदयादिति सम्बन्धः । आदीन् अकारादीन् ॥ ७७ ॥

मातृकामन्त्रमाह—प्रासादेति । अन्तर्मातृकाध्यानोक्ता प्रासादपराहसौः । सेन्द्वखिलाक्षराः बिन्दुयुता आदिक्षान्ताक्षराणि ॥ ७८ ॥

वक्ष्यमाणव्यापकन्यासमहिमानं द्योतयितुं मन्त्रं स्तौति—सर्वेति । अनेन मातृकामन्त्रेण । बिलं ब्रह्मरन्ध्रम् । पादमूलं पादतलम् ॥ ७९ ॥

व्यापकलक्षणमाह—तलाभ्यामिति । तलं करतलम् । विद्या बालामन्त्रः ॥ ८० ॥

आधारानाहताज्ञासु रोधशक्त्युन्मनासु च ।
अथ बाह्ये पादबाहुशिखासु क्रमशो न्यसेत् ॥८१॥
नवयोनिमथो वक्ष्ये न्यासानामुत्तमोत्तमम् ।
कर्णयोश्चिबुके देवि शङ्खयोर्मुखमण्डले ॥८२॥
नेत्रयोर्नासिकायां च बाहुयुग्मे च वक्षसि ।
कूर्परद्वितये कुक्षौ जान्वोर्नाभौ वरानने ॥८३॥
पादयुग्मे तथोपस्थे पार्श्वयोर्हृदये तथा ।
स्तनद्वये कण्ठदेशे न्यसेद् बीजत्रयं पृथक् ॥८४॥
पञ्चबाणांश्च कामांश्च न्यसेदङ्गुलिषु क्रमात् ।
षडङ्गं च ततः कृत्वा व्यापकत्रितयं चरेत् ॥८५॥
चक्षुस्पर्शौ प्रतिष्ठास्थौ तौ पुनः शान्तिसंस्थितौ ।
कामराजं पादरूपे वामश्रोत्रगते मरुत् ॥८६॥
सर्वत्र बिन्दुयोगः स्यात् सर्गस्त्वन्त्ये प्रकीर्तितः ।
पञ्च बाणाः समाख्यातास्तेषां नाम शृणु प्रिये ॥८७॥

---

अन्तर्न्यासमाह—आधारेति । रोधो रोधिका । एतत्त्रयम् । भ्रूमध्योर्ध्वे त्रिव्यङ्गुलान्तेऽन्तःस्थानम् । एवं षट्सु स्थानेषु मूलत्रिबीजद्विरावृत्त्या न्यसेत् ॥ ८१ ॥

शङ्खयोः फालदक्षवामोर्ध्वयोः । मुखमण्डलं वक्त्रच्छिद्रम् ॥ ८२ ॥

बाहुर्भुजमूलम् । कुक्षिर्जठरम् ॥ ८३ ॥

पादयुग्मे चरणयुग्मे बीजत्रयम् । मूलस्य अत्र हृदयवक्षसोः पर्यायत्वेऽपि वक्षसः किञ्चिदूर्ध्वे हृदयमिति सम्प्रदाय इत्युद्योते उक्तम् ॥ ८४ ॥

अत्र न्यासे विशेष उक्तो योगिनीतन्त्रे—"तत्तन्मुद्राविधानेन स्थानं मन्त्रं च देवताम् । एकं विभावयन् यस्य फलानन्तरमवाप्नुयात् ॥ इति । अङ्गुलिषु अङ्गुष्ठादिषु । षडङ्गं व्यापकं च मूलेन" इति ॥ ८५ ॥

पञ्चबाणबीजान्याह—चक्षुरिति । चक्षुः द । स्पर्शः र । प्रतिष्ठा आ । तौ चक्षुस्पर्शौ । शान्तिः ई । कामराजं मूलद्वितीयम् । पादः ब । रूपं ल । वामश्रोत्रम् ऊ । मरुत् स ॥ ८६ ॥

अन्ते सकारे । सर्गः विसर्गः । तेषां पञ्च बाणानाम् ॥ ८७ ॥

क्षोभणो द्रावणो देवि तथाकर्षणवश्यकौ ।
उन्माद इति विख्याता मायामूलद्वितीयकम् ॥८८॥

वाग्भवं तुर्यबाणश्च मरुच्छ्रोत्रमरुद्गुणाः ।
बिन्द्वाढ्यवामनेत्रस्थाः पञ्च कामाः प्रकीर्तिताः ॥८९॥

कामो मन्मथकन्दर्पौमकरध्वज एव च ।
मीनकेतन इत्येवं तेषां नाम प्रकीर्तितम् ॥९०॥

अथ पूर्वोक्तमुद्राणां स्वरूपं क्रमतः शृणु ।
दक्षपाणितलं देवि वामपृष्ठोपरि न्यसेत् ॥९१॥

अङ्गुष्ठद्वितयं पार्श्वेऋजुरूपमधोमुखम् ।
मत्स्यमुद्रेयमाख्याता मण्डलादिप्रकल्पने ॥९२॥

ऊर्ध्वमुष्टौ दक्षहस्ते तर्जनी वक्ररूपिणी ।
मुद्रेयमङ्कुशाख्या स्यात्तीर्थाह्वानादिकर्मणि ॥९३॥

तर्जन्यादिचतुष्कं वै प्रोतं हस्तद्वयस्थितम् ।
दक्षतर्जन्यनामायां वाममध्यकनिष्ठिके ॥९४॥

---

पञ्चकामानाह—मायेत्यादि । मूलद्वितीयकं कामबीजम् ॥ ८८ ॥

वाग्भवं मूलाद्यम् । तुर्यबाणः ब्लूं । मरुत् स । श्रोत्रं त । मरुद्गुणः र । बिन्द्वाढ्यवामनेत्रम् ईं ॥ ८९ ॥

नामान्याह—काम इति । द्रां संक्षोभणबाणाय नमः । ह्रीं कामाय नम इत्यादि न्यसेत् ॥ ९० ॥

बामपृष्ठोपरि वामपाणिपृष्ठोपरि ॥ ९१ ॥

ऋजुरूपम् अवक्रम् । अधोमुखम् अधोमुखकरतलम् । कल्पने करणे । आदिना प्रदर्शने ॥ ९२ ॥

ऊर्ध्वमुखमुष्टौ मुष्टिनिर्गता तर्जनी वक्ररूपा । आदिः पूर्ववत् ॥ ९३ ॥

दक्षतर्जन्यां वाममध्यमादक्षमध्यमोपरितः वामानामादक्षानामोर्ध्वतः । एतदुक्तं त्रिपुरार्णवे—"वाममध्यानामिके च ऊर्ध्वस्थे दक्षयोस्तयोः" इति ॥ ९४ ॥

वामतर्जन्यनामायां दक्षमध्यकनिष्ठिके ।
अधोमुखी धेनुमुद्रा त्वमृतीकरणे मता ॥९५॥
ऊर्ध्वतो दक्षपृष्ठं तु वामपृष्ठे नियोजयेत् ।
तर्जन्यौ च कनिष्ठे च वेष्टिते तु परस्परम् ॥९६॥
मध्यमानामिके वक्रे चाङ्गुष्ठे चोर्ध्वयोजिते ।
तार्क्ष्यमुद्रेयमाख्याता निर्विषीकरणे शिवे ॥९७॥
अस्त्रं पूर्ववदेवेह रक्षणे संप्रकीर्तितम् ।
हस्तद्वयं मुष्टिरूपं ऋजुरूपा तु तर्जनी ॥९८॥
भ्रामयेद् दक्षवामाभ्यां मुद्रेयमवगुण्ठनी ।
इत्येतत् कथितं देवि द्वारपूजादिकं क्रमात् ।
रहस्यं परमं ह्येतत् किमन्यत् श्रोतुमिच्छसि ॥९९॥

इति श्रीमत्परमानन्दतन्त्रे षष्ठोल्लासः ॥६॥



---

दक्षमध्यकनिष्ठिके योजयेत् ॥ ९५ ॥

ऊर्ध्वतः वामहस्तयोर्ध्वतः । दक्षमणिपृष्ठम् ॥ ९६ ॥

अङ्गुष्ठे अङ्गुष्ठाग्रे । ऊर्ध्वयोजिते ऊर्ध्वाग्रतया योजिते ॥ ९७ ॥

पूर्ववत् षडङ्गन्यासवत् । इह मुद्राप्रदर्शने ॥ ९८ ॥

दक्षवामाभ्यां दक्षवामावर्तक्रमतः । षट्चरणोऽयं श्लोकः ॥ ९९ ॥

एवं बालायाः प्रातःस्मृत्यादिन्यासान्तविधिरुक्तः । तत्र प्रातःस्मृतौ सन्ध्यायां च विशेषः । पञ्चदशीप्रकरणे पञ्चदश्या उच्यते । मूलविद्यादिन्यासास्तु एते बालाया एव । पञ्चदश्यादिन्यासास्तु तत्प्रकरणे एवोच्यन्ते । स्नानविधिभूंशुध्यादिबहिर्मातृकान्यासान्तस्तु सर्वमन्त्रसाधारणो निरुक्त एवेति ज्ञेयम् ।

सौभाग्यानन्दसन्दोहेऽब्धिधीपद्यार्थबोधकः ।
परमानन्दटिप्पण्यामुल्लासः षष्ठको ह्यगात् ॥ ६ ॥



## सप्तम उल्लासः

श्रीदेवी उवाच

देवेश श्रोतुमिच्छामि बालायन्त्रस्य चोद्धृतिम् ।
पूजनं चापि साङ्गाया विस्तरेण विशेषतः ॥१॥

श्रीभैरव उवाच

शृणु देवि प्रवक्ष्यामि यन्त्रोद्धारं समाहिता ।
पूजनं चापि बालाया सविधानं सवासनम् ॥२॥

स्वेष्टवृत्ते ब्रह्मसूत्रमष्टादशविभाजितम् ।
मध्यस्थवेदभागस्य प्राक्प्रत्यक्तिर्यगायते ॥३॥

वृत्तसृष्टे विधाय द्वे रेखे तत्प्रान्तभागतः ।
पूर्वरेखाविभेदेन पूर्वसूत्राग्रयोगतः ॥४॥

प्रत्यग्रेखाविभेदेन प्रत्यग्सूत्राग्रयोगतः ।
षट्कोणमेवं संलिख्य डमरुद्वयशोभितम् ॥५॥

---

यन्त्रोद्धारादि प्रष्टुं देव्युवाचेति । यन्त्रस्योद्धृतिर्लेखनप्रकारः । साङ्गायाः सावरणाया बालायाः ॥ १ ॥

उत्तरं भैरव उवाचेति । सविधानं सक्रमम् । सवासनं भावनासहितम् ॥ २ ॥

यन्त्रलेखनप्रकारमाह—स्वेष्टेति । स्वेष्टवृत्ते स्वाभिमतविस्तृतकर्काटकभ्रमणेन निर्मिते वृत्ते । ब्रह्मसूत्रं वृत्तप्राङ्मध्यात् पश्चिममध्यान्तनिर्मिता रेखा । तां रेखाम् अष्टादशधा विभज्य उभयत्र भागसप्तकं परित्यज्य मध्यस्थभागचतुष्टयस्य प्राक्पश्चिमतः सप्तमैकादशयोश्चिह्नयोरिति यावत् । तिर्यगायते दक्षिणादुत्तरान्तविस्तृते ॥ ३ ॥

वृत्तस्पृष्टे रेखे विधाय पश्चिमरेखाप्रान्तद्वयात् पूर्वरेखाया विभेदः सम्बन्धः । तथा रेखाद्वयमाकृष्य पूर्वब्रह्मसूत्राग्रे योजयेत् ॥ ४ ॥

एवं पूर्वरेखाप्रान्तद्वयात् पश्चिमरेखाविभेदेन रेखाद्वयं पश्चिमब्रह्मसूत्राग्रे योजयेत् । तेन षट्कोणं भवति । डमरुर्नाम पार्श्वद्वयगतत्रिकोणद्वयं मिलिताग्रम् ॥ ५ ॥

प्राग्रेखासंधिभेदेन प्रत्यङ्मध्यमुखं परम् ।
एवं नवत्रिकोणं तु वृत्ते चाष्टदलं लिखेत् ।।६।।
वृत्तार्धमाने तद्बाह्ये पुनर्वृत्तं समालिखेत् ।
तद्बाह्ये तु चतुर्द्वारं भूपुरं विलिखेच्छिवे ।।७।।
प्रासादं मध्ययोनौ तु कामान् तद्बाह्ययोनिषु ।
केसरेषु स्वरद्वन्द्वं वसुपत्रेऽष्टवर्गकान् ।।८।।
पत्राग्रेषु त्रिशूलानि मातृकावेष्टनं बहिः ।
दलसंधिषु देवेशि केसराणि प्रकल्पयेत् ।।९।।

---

एवं त्रिकोणद्वयेन षट्कोणसम्पत्त्यनन्तरं तृतीयत्रिकोणलेखनप्रकारमाह—प्रागिति। प्राग्रेखा पूर्वरेखा, तस्यां विद्यमानं यत्सन्धिद्वयं रेखाद्वययोगात्मकं तद्भेदः तन्मध्यसम्बन्धः। तेन क्रमेण प्रत्यङ्मध्ये पश्चिमरेखामध्ये मुखमग्रं यस्य। एवं परं तृतीयं त्रिकोणम्। एतत्त्रिकोणस्य पार्श्वरेखाद्वयप्राक्प्रान्तयोर्वृत्तस्पृष्टयोस्तिर्यग्रेखा प्राग्रेखा वृत्तमध्ये कर्तव्या। एवं च नवत्रिकोणं सम्पद्यते। ततस्तत्कोणाग्रसम्बन्धवृत्तोपर्यष्टदलं लिखेत् ॥ ६ ॥

तत्प्रकारमाह—वृत्तेति। वृत्तार्धमाने तद्बाह्ये अष्टदलं लिखेदित्यन्वयः। नवकोणगर्भं यद्वृत्तं तदर्धमानेन। तद्वृत्तमष्टाङ्गुलं चेद् द्व्यङ्गुलप्रमाणेन पूर्ववृत्तबाह्ये कर्काटकभ्रामणेन द्वितीयं वृत्तं विलिखेत्। अत्र वृत्तार्द्धमानं चोभयपार्श्वमेलनेन। किन्तु प्रत्येकम्, "मध्ये तृतीयभागेन" इति द्वादशोल्लासानुरोधात्। वृत्तद्वयान्तरालं षोडशधा विभज्य अन्तर्वृत्तस्थदिङ्मध्यचिह्नाभ्यां बहिर्वृत्तदिक्चिह्नेषु दलाग्रयोजनेनाष्टदलं वक्ष्यमाण श्रीयन्त्राष्टदलवत् कर्तव्यम्। द्वितीयवृत्तबाह्ये च तथैव भूपुरं चतुरस्रमेकं विलिखेत् ॥ ७ ॥

यन्त्रे बीजलेखनक्रममाह—प्रासादेति। प्रासादं प्रासादपराबीजम्। मध्ययोनौ मध्यत्रिकोणे। कामान् बालाद्वितीयबीजानि, "ह्रौंकारं च त्रिकोणान्तः संलिख्य वरवर्णिनि। कामवीजं मध्यमं स्यादष्टकोणेषु संलिखेत् ।।" इति ज्ञानार्णवोक्तेः। बाह्ययोनिषु अष्टसु केसरेषु। वक्ष्यमाणेषु स्वरद्वन्दं अं आं इत्यादिद्वयं द्वयम्। वसुपत्रे अष्टपत्रे। अष्टवर्गान् वक्ष्यमाणान्। एतच्च पश्चिमदलादिक्रमाल्लेखनीयम्, "दलाष्टकेषु संलिख्य पश्चिमादि प्रदक्षिणम्" इति ज्ञानार्णवोक्तेः ॥ ८ ॥

पत्राग्रेषु त्रिशूलानि कृत्वा तद्बहिर्वृत्ताकारेण मातृकावर्णानकारादिक्षकारान्तान् पश्चिमादि विलिखेत्, "पश्चिमादि क्रमेण तु। तद्बाह्ये मातृकावृत्तम्" इति ज्ञानार्णवोक्तेः। अत्र सर्ववर्णेषु बिन्दुयोगः साम्प्रदायिकः। केसरस्थानमाह—दलसन्धिष्विति।

कचटास्तपया वर्गा शलौ चेत्यष्टसंख्यकाः ।
इति यन्त्रं महादिव्यं बालासान्निध्यकारकम् ।।१०।।
अत्र सा पूजिता देवी सुप्रीता वरदा भवेत् ।
नवरत्नैर्निर्मितं तु वाञ्छितार्थफलप्रदम् ।।११।।
स्फाटिकं मुक्तिदं तद्वद् गण्डकीदृषदुद्भवम् ।
साम्राज्यदं सुवर्णोत्थं भयघ्नं स्यात्त्रिलोहजम् ।।१२।।
राजतं शान्तिदं प्रोक्तं ताम्रोत्थं दुःखनाशनम् ।
पाषाणजं रोगहरं भूर्जपत्रे शुचिप्रदम् ।।१३।।
पट्टवस्त्रे रिपुहरं भूमौ पुण्यफलप्रदम् ।
एकादशविधं चैतत्पूर्वं लक्षगुणं भवेत् ।।१४।।

---

केसराणि दलमूलरेखावद्वक्ररेखाद्वयं वृत्तस्पृष्टमूलं स्थूलाग्रम् । एतत्स्थानं तु दलद्वयसन्धिष्विति सेतुबन्धे श्रीभास्कररायैरुक्तम् । शारदातिलके तद्व्याख्यायां राघवभट्टैश्च दलान्तरित्युक्तम् । कुण्डग्रन्थेषु केसरस्थानं दलान्तर्भागे एवोक्तम् । "दलसन्धिषु वृत्ते वै केसराणि प्रकल्पयेत् । वक्ररेखाद्वयं चाग्रे स्थूलं मूलयुतं भवेत् ।।" इति त्रिपुरारहस्योक्तदलसन्धिपदस्वारस्याच्च दलद्वयसन्धिस्थानमित्येव प्रतिभाति ।। ९ ।।

वर्गाष्टकमाह—कचेति । यन्त्रमुपसंहरति—इतीति । यन्त्र्यते पूजकभावनया देवता यत्र तद्यन्त्रम् । अथवा यन्त्रणाद्वा यन्त्रम् । एतदुक्तं कुलार्णवे—"कामक्रोधादिदोषोत्पसर्वदुःखनियन्त्रणात् । यन्त्रमित्याहुः" इति ।। १० ।।

यन्त्रं स्तौति—अत्रेति । इदं च षोडशे वक्ष्यमाणकुण्डल्याद्युपलक्षणम् तेषां सर्वसाधारण्येन वक्ष्यमाणत्वात् । यन्त्रनिर्माणाधिकरणं फलं चाह—नवरत्नैरित्यादि ।।११।।

तद्वत् स्फाटिकवन्मुक्तिदम् । गण्डकीदृषत् सालिग्रामशिला । त्रिलोहं वक्ष्यमाणम् ।।१२।।

पाषाणः स्फटिकगण्डकीभिन्नः ।।१३।।

पूर्वम् । उत्तरस्मात् ।।१४।।

सुवर्णाद्युद्भवे पीठे पुण्यवृक्षोद्भवेऽथवा ।
वस्त्रे वा स्थापयेद्यन्त्रं मृदुतूलादिसंभवे ॥१५॥
पाषाणे मृण्मये देवि नैव संस्थापयेत् क्वचित् ।
नाभेर्नीचं तथा कण्ठादुच्चं पीठं न कारयेत् ॥१६॥
तत्र पीठे पीठपूजां कुर्याद् भक्तिसमन्वितः ।
पूज्यपृष्ठे पूर्वदिक् स्यात्तदग्रे पश्चिमा हि दिक् ॥१७॥
इति ज्ञात्वैव सर्वत्र पूजयेत् त्रिपुराम्बिकाम् ।
मण्डूकमादौ संपूज्य उपर्युपरि वै क्रमात् ॥१८॥

---

यन्त्राधारपीठमाह—सुवर्णेत्यादि । तूलादिसंभवे कार्पासरोमादिनिर्मिते आसने । सुवर्णादिपीठे वस्त्रतूलाद्यासने यन्त्रं संस्थापयेत्, केवलपीठे स्थापनस्य निषिद्धत्वात् । तदुक्तं त्रिपुरार्णवे—'भूमौ वा केवले पीठे आसनादिविवर्जिते । संस्थाप्य देवतां रोगी भवेद्दारिद्र्यवानपि ॥" इति । पीठरहिते भूमौ केवले आसनादिरहिते पीठे चेति तदर्थः ॥१५॥

निषिद्धं पीठमाह—पाषाणेति । पाषाणस्तु स्फटिकमण्याद्यतिरिक्तः, "स्फाटिकं मणिजं चापि पीठं स्यात् सर्वतोऽधिकम्" इति त्रिपुरारहस्योक्तेः । इदमुपलक्षणं लोह-सीसादीनाम्, "आयसं सीसजातीयं मृण्मयं परिवर्जयेत्" इति त्रिपुरारहस्योक्तः । सीस-जातिः नागवंगसत्वभेदात् त्रिधा । तथा पुनः पाषाणनिषेधो न मणिजातीयपाषाणस्य । तदपि तत्रैवोक्तम्—पाषाणं मणिजातीयं शङ्खादिसदृशं शुभम् । श्वेतादिवर्णं जानीहि देवतापीठिकाविधौ ॥" इति । स्थावरयन्त्रं तु पाषाणे एव संस्थाप्यम्, "स्थिरं संस्थापयेद्देवि शिलायामेव नान्यतः" इति बृहद्वामकेश्वरोक्तेः । पीठोच्चप्रमाणमाह—नाभेरित्यादि ॥१६॥

एवंविधे पीठे पीठपूजां कुर्यादित्याह—तत्रेति । पीठपूजाद्युपयुक्तां दिग्व्यवस्था-माह—पूज्येति । पूज्यस्य यन्त्रादेः पृष्ठं प्राची । तदग्रे यन्त्रपुरतः पश्चिमादिकम् । "पूज्य-पूजकयोर्मध्यं प्राचीत्वेन प्रकल्पितम् । तद् दक्षिणं दक्षिणं स्यादुत्तरं चोत्तरं भवेत् ॥" इति, "यष्टुरभिमुखो देवो देवाभिमुखतोऽपि च । प्राच्यादिहरितो ज्ञेयाः पूजाहोमादिकर्मसु ॥" इति मानसोल्लाससारसंग्रहादिवचनं श्रीविद्येतरदेवताविषयं ज्ञेयम् । श्रीविद्यायास्तु पृष्ठभागस्यैव पूर्वत्वम्, ज्ञानार्णवादिषु तथैव सुस्पष्टमभिधानात् । अत्र भ्रान्ता बहवः पद्धतिकृतः श्रीभास्कररायैः सेतुबन्धे सम्यक् प्रबोधिताः ॥१७॥

इति एवम् । दिग्व्यवस्थां ज्ञात्वैव । एवकारेणेतरदेवतासाधारण्यमेतद्दिग्व्यवस्थाया द्योतितम् । अत एव ज्ञानार्णवादिश्रीविद्यातन्त्रेषु पुनः पुनर्दिग्व्यवस्थोपपादनम् । सर्वत्र

कालाग्निरुद्रं मूलाद्यां प्रकृतिं च ततः परम् ।
आधारशक्तिं कूर्मं चाप्यनन्तं च वराहकम् ॥१९॥
पृथिवीं तस्य दंष्ट्राग्रे तच्चतुर्दिक्षु वै ततः ।
पश्चिमादिक्रमाद्दिक्षु मदिराघृतदुग्धकान् ॥२०॥
समुद्रांस्तस्य मध्ये तु नवखण्डविराजितम् ।
रत्नद्वीपं मातृकाद्यं पूर्वाद्यष्टसु वामतः ॥२१॥
पुष्यरागं तथा नीलं वैडूर्यं विद्रुमं ततः ।
मौक्तिकं गोमेदपद्मरागौ वज्रं च मध्यतः ॥२२॥
भवेन्मरकतं ह्येते रत्नान्ता नववर्गगाः ।
अलृकाश्चटताः पश्च यषौ वर्गाः समीरिताः ॥२३॥

---

पीठावरणाध्यादिपूजादौ । अत्र पीठपरितो रङ्गवल्यादिकमप्युक्तं योगिनीतन्त्रे—"पूजागृहं वितानाद्यैः कदलीस्तम्भतोरणैः । चित्रैर्विचित्रैर्बहुभिर्दर्पणैर्दीपवृक्षकैः ॥ अलङ्कृतं तत्र पीठं स्थापयेत् परितस्ततः । सिन्दूराद्यैः सुशोभाढ्यां रङ्गवल्लीं प्रकल्पयेत् ॥ यथाविभवतः कुर्यादालस्यं परिवर्जयन् । अलङ्कारादिरहिते रङ्गवल्लीविवर्जिते ॥ देवता न प्रसीदेत पूजितापि विधानतः ॥" इति । पीठदेवतानामान्याह—मण्डूकेत्यादि । आदौ मण्डूकं सम्पूज्य क्रमेण पूर्वपूर्वोपर्युत्तरोत्तरं पूजयेत् ॥१८॥

मूलप्रकृतिम् ॥१९॥

तस्य वराहस्य । दंष्ट्राग्रे पृथिवीं पूजयेत् । तच्चतुर्दिक्षु पृथिवीचतुर्दिक्षु । पश्चिमादिप्रादक्षिण्यक्रमेण । दुग्धकान् समुद्रानित्यन्वयः ॥२०॥

इक्षुसमुद्रादीन् तस्य समुद्रचतुष्टयस्य । नवखण्डविराजितरत्नद्वीपमित्येकं मातृकाद्यमिति । तन्नामादौ आदिक्षान्तमातृकावर्णयोगः । न तु त्रिपश्चाशदर्णाया मातृकायाः, 'आदिक्षान्तार्णसंयुक्तं रत्नद्वीपं यजेत्ततः" इति बृहद्वामकेश्वरोक्तेः । रत्नद्वीपस्य पूर्वाद्यष्टदिक्षु वामतः अप्रादक्षिण्येन पुष्यरागादीन् ॥२१॥

मध्यतः मध्ये । मरकतमित्यन्वयः ॥२२॥

एते पुष्यरागादयो नवरत्नान्ताः पुष्यरागरत्नेत्यादयः । नववर्गानाह—अलृ इत्यादि । स्वरे द्वयम् । कादौ सप्तकम् । एकैकरत्ननामादौ एकैकं वर्गं योजयेत् ॥२३॥

सुवर्णपर्वतं तस्मिन् नन्दनोद्यानमेव च ।
कल्पद्रुवाटिकां तत्र वसन्ताद्यानृतून् क्रमात् ॥२४॥
इन्द्रियाश्वान् पश्चिमायां प्राच्यामर्थगजांस्तथा ।
विचित्ररत्नभूमिं च तत्र पूर्वादिवामतः ॥२५॥
मध्यान्तनवखण्डेषु कालं मुद्रां च मातरम् ।
देशं रत्नं गुरुं तत्त्वं ग्रहं मूर्तिं च वै क्रमात् ॥२६॥
एतत्तु नवकं देवि चक्रेश्वर्यन्तकं भवेत् ।
करुणातोयपरिखं स्वर्णप्राकारकं तथा ॥२७॥
मणिमण्डपकं मध्ये तन्नैर्ऋत्यादिकोणके ।
कालं देशं तथाकारं शब्दं चेति तु रूपिणी ॥२८॥
शक्त्यन्तांस्तु तथा मध्ये संगीताद्यां च योगिनीम् ।
तन्मध्ये मणिवेदिं च तत्पृष्ठे श्वेतछत्रकम् ॥२९॥

---

तस्मिन् मरकतमये मध्यखण्डे । तस्मिन्निति पर्वते उद्याने च योज्यम् । तेन पर्वते उद्यानम् उद्याने वाटिकां चेत्यर्थः । उद्यानं क्रीडावनम् । वाटिका गृहोपवनम् । तत्र वाटिकायाम् । वसन्तादिषड्ऋतुभ्य इति तु सम्प्रदायः । क्रमादेकैकस्यान्तरित्यर्थः ॥२४॥

वाटिकापश्चिमदिशि इन्द्रियाश्वान् । वाटीप्राच्याम् इन्द्रियार्थगजान्, "इन्द्रियार्थगजान् पश्चात्" इति बृहद्वामकेश्वरोक्तेः । तत्रेत्युभयत्र योज्यम् । तेन वाटीमध्ये विचित्ररत्नभूमिम् । तत्र रत्नभूमौ ॥२५॥

नवखण्डेषु कालादिमूर्त्यन्तनवकं क्रमेण ॥२६॥

एतन्नवकं कालादिमूर्त्यन्तं कालचक्रेश्वरीत्यादि । तथा पूर्ववत्तन्मध्ये । तेन मध्यखण्डे परिखं तन्मध्ये प्राकारम् ॥२७॥

तन्मध्ये मण्डपम् । तस्य मण्डपस्य नैर्ऋत्यादिकोणचतुष्टये प्रादक्षिण्येन रूपिणीशक्त्यन्तमित्येकं पदम् । कालरूपिणीशक्तीत्यादि ॥२८॥

चतुष्कोणमध्ये संगीतयोगिनीम् । मण्डपमध्ये मणिवेदिकाम् । वेदीपृष्ठे श्वेतछत्रम् ॥२९॥

रत्नसिहासनं तस्यां वायव्यादिपदेषु वै ।
ब्रह्मविष्णू तथा रुद्रमीश्वरं तस्य चोपरि ॥३०॥
सदाशिवमहाप्रेतफलकं वायुकोणतः ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं पश्चिमादितः ॥३१॥
अधर्मादिचतुष्कं च मध्ये चोर्ध्वोर्ध्वतः क्रमात् ।
मायां विद्यां तथानन्तं तिथिसंख्यफणायुतम् ॥३२॥
मध्यमे चार्कपत्राढ्यं पद्मं ध्यात्वाऽथ पूजयेत् ।
पद्मं चानन्दकन्दं च संविन्नालमतः परम् ॥३३॥
प्रकृतिमयपत्राणि विकारमयकेसरान् ।
मातृकातत्त्वविलसत्कर्णिकांस्तत्र पूजयेत् ॥३४॥
अर्कं सोमं तथा वह्निं प्रणवाद्यं तु मण्डलम् ।
सत्त्वं रजस्तमश्चैव बोधप्रकृतिमोहजान् ॥३५॥
आत्मानमन्तरात्मानं परमात्मानमेव च ।
ज्ञानात्मानं चादिमायं तच्चतुर्दिक्षु मध्यतः ॥३६॥

---

वेद्यां रत्नसिंहासनम् । सिंहासनपदेषु वायव्यादिनिर्ऋत्यन्तम् । ब्रह्मादीश्वरान्तान् । आसनोपरि सदाशिवमहाप्रेतफलकमिति सम्बन्धः ॥३०॥

फलकोपरि वायुकोणान्निर्ऋतिकोणान्तं धर्माद्यैश्वर्यान्तम् । तत्रैव पश्चिमादिदक्षिणान्तं चतुष्कमिति सम्बन्धः ॥३१॥

अधर्ममज्ञानमवैराग्यमनैश्वर्यम् । फलकमध्ये क्रमात्पूर्वपूर्वोपरि मायादित्रयम् । पञ्चदशफणायुतानन्तम् ॥३२॥

मध्यमे फणे द्वादशपत्रं पद्मं ध्यात्वा पद्मादिकं पूजयेत् ॥३३।

तत्र कर्णिकायाम् अर्कादिज्ञानात्मान्तं पूजयेत् ॥३४॥

अर्कमण्डलं सोममण्डलं वह्निमण्डलं प्रणवगतैकैकपर्णाद्यम् । "प्रणवाद्यैः क्रमाद्देवि यजेत् प्रोक्तत्रिमण्डलम्" इति त्रिपुरार्णववचने वर्णैः क्रमादिति पदस्वारस्यात् । बोधनं सत्त्वम् । प्रकृतिजं रजः । मोहजं तमः ॥३५॥

आदौ मायाबीजयुतं ज्ञानात्मानम् । पद्मचतुर्दिक्षु प्रागादिप्रादक्षिण्येन । मध्ये च ज्ञानमित्यादिसम्बन्धः ॥३६॥

ज्ञानं मायां कलां विद्यां परं तत्त्वात्ममन्ततः ।
प्रागादिदलमारभ्य पीठशक्तीश्च पूजयेत् ॥३७॥

वामां ज्येष्ठां च रौद्रीं चाम्बिकेच्छे ज्ञानरूपिणीम् ।
क्रियां च कुब्जिकां बिम्बीं विघ्नीं दूतरीं तथा ॥३८॥

सर्वानन्दां क्रमाद्देवि च्छत्रचामरवीटिकाः ।
पुष्पमालां भूषणाढ्यपेटीं व्यजनकं पुनः ॥३९॥

व्यजनं गन्धचषकं कङ्कतीं कज्जलोज्ज्वलाम् ।
शलाकां च करण्डं च कर्पूराढ्यं च चामरम् ॥४०॥

दधानाः क्रमशः पीठदेव्यः पूज्यास्तथाक्षतैः ।
तत्र ध्यात्वा मूलदेवीं भक्तिभावेन चावहेत् ॥४१॥

---

ज्ञानादिपरान्तपञ्चकान्ते तत्त्वात्मेति ज्ञानतत्त्वात्मेत्यादि । तत्पद्मप्राग्दलमारभ्य प्रादक्षिण्येन द्वादशदलेषु द्वादशपीठशक्तीः पूजयेत् ॥३७॥

अम्बिका इच्छा इति द्वयम् । ज्ञानरूपिणीं ज्ञानम् "ज्ञाना क्रिया कु ब्जिका" इति ज्ञानार्णवात् ॥३८॥

तेषां क्रमेणायुधान्याह—छत्रेत्यादि ॥३९॥

षष्ठीसप्तम्योरुभयोर्व्यजनम् । कज्जलोज्ज्वलशलाकाम् । कर्पूराढ्य-करण्डम् ॥४०॥

दधाना ध्यात्वा । अक्षतैः अक्षतादिभिः । अत्र मण्डूकादिश्वेतच्छत्रान्तं चक्रपीठे सिंहासनादिकं तु मध्यत्रिकोणमध्ये पूजयेत्, ललितोपाख्यानादिषु तथैव वर्णनात् । तथा यन्नामादौ बीजयोगो नोक्तः, तत्र तन्नामाद्यवर्णं सबिन्दु योजयेत्, "निर्बीजाद्यान् पीठ-मन्त्रानाद्यबीजेन संयुतान्" इति षोडशोल्लासे वक्ष्यमाणत्वात् । बीजपदस्वारस्यादन्य-त्रोक्तवर्णेष्वपि बिन्दुयोगः कर्तव्यः । तेन मं मण्डूकाय नमः । अं क्षं नवखण्डविराजितरत्न-द्वीपाय नम इत्यादि मन्त्रो ज्ञेयः । क्लीं सर्वतत्त्वकमलासनाय नम इति समष्ट्या सर्वान्ते पीठं पूजयेत्, "पीठपूजाविधावेवं सर्वत्रैव महेश्वरि" इति वक्ष्यमाणत्वात् । तत्र निरुक्त-यन्त्रमध्ये विभावितपीठशक्तिसंवृतसिंहासने उक्तरीत्या ध्यात्वा भक्तियुक्तभावेन भावनया आवाहयेद् वक्ष्यमाणप्रकारेण ॥४१॥

उपचारैः समभ्यर्च्य विशेषार्घ्यामृतैर्यजेत् ।
वामदक्षकराभ्यां च तर्पयेत् पूजयेत् क्रमात् ॥४२॥
तत्तन्मुद्राविधानेन द्वितीयोद्धृतबिन्दुभिः ।
पुष्पाक्षतैस्ततो देवीं त्रिवारं तर्पयेद् यजेत् ॥४३॥
अनामाङ्गुष्ठयोगेन तर्जन्यङ्गुष्ठयोगतः ।
तर्पणं पूजनं वामदक्षाभ्यां युगपद्भवेत् ॥४४॥
मध्यबीजे मूलदेवीं मूलेन तु त्रिधा यजेत् ।
श्रीपादुकां पूजयामि तर्पयामि नमो वदेत् ॥४५॥
चतुर्दशाक्षरी विद्या तर्पणे पूजने मता ।
चतुस्तारं ततो नाम चाग्रे चतुर्दशाक्षरी ॥४६॥

---

उपचारैः वक्ष्यमाणैर्विशेषार्घ्यामृतैः वक्ष्यमाणप्रकारस्थापितविशेषार्घ्यतीर्थैः । यजनमेवाह—वामेति । वामकरेण तर्पयेद्दक्षकरेण पूजयेत्, इत्येव क्रमः, न तु तर्पणानन्तरं पूजेति क्रमः, तयोर्युगपदित्येककालिकत्वस्य वक्ष्यमाणत्वात् ॥४२॥

तत्तन्मुद्रा पूजातर्पणयोर्मुद्रा । तयोर्विधानं धारणम् । तेन तर्पणमुद्राधृतवक्ष्यमाणद्वितीयोद्धृततीर्थबिन्दुभिस्तर्पयेत् । पूजा मुद्रासादितपुष्पाक्षतैः पूजयेदित्यर्थः । ततः उपचारार्चनानन्तरं देवीं बालात्रिपुरसुन्दरीम् ॥४३॥

पूजातर्पणमुद्रे आह—अनामेति । अनामाङ्गुष्ठाग्रयोगस्तर्पणमुद्रा । तर्जन्यगुष्ठाग्रयोगः पूजनमुद्रा । वामदक्षाभ्यां कराभ्याम् । युगपत् एककालम् ॥४४॥

अत्रावरणादौ "संविन्मये देवि" इत्यादिप्रार्थनं सप्तदशे वक्ष्यमाणमनुसन्धेयम् । त्रिधा यजनस्य मन्त्रं स्थानं च देवतामनूद्याह—मध्येति । मध्यबीजे मध्यत्रिकोणगतप्रासादपरबीजे । मूलेन बालामनुना । यजनसामान्यमन्त्रमाह—श्रीपादुकामिति ॥४५॥

यजनविशेषमन्त्रमाह—चतुस्तारमित्यादि । ततः चतुस्तारानन्तरम् । नाम बालात्रिपुरसुन्दरीत्यादि । तदग्रे नामाग्रे । चतुर्दशाक्षरीं श्रीपादुकामित्यादि नम इत्यन्तम् । ननु सर्वकर्मसु मन्त्रादौ चतुस्तारयोगः सामान्येनोक्तः, पुनः किमर्थमत्रोच्यते ? इति चेत्, उच्यते—सत्यं सामान्यवचनेन चतुस्तारयोगः प्राप्तः, तथापि यजनमन्त्रावयवत्वेनात्र चतुस्तारविधानमिति ज्ञेयम् । परे तु पुनर्विधानादन्यत्र कृताकृतस्तद्योगः ।

अत एव "मन्त्राणां वीर्यसिद्ध्यर्थम्" इत्यत्र वीर्याधिक्यसिद्ध्यर्थमिति व्याख्यातम् । अन्यथा चतुस्तारयोगाभावेन जपस्य निष्फलत्वप्रसङ्गः । यदि जपेऽपि तद्योगः,

मूलदेवो पृष्ठतस्तु गुर्वादित्रिगुरून् यजेत् ।
दक्षाद्युत्तरतो रेखां ध्यात्वा तन्मन्त्रकैः शिवे ॥४७॥
अङ्गदेवीमूलदेव्या अग्नीशासुरवायुषु ।
पुरतश्च चतुर्दिक्षु विशेषार्घ्येण तर्पयेत् ॥४८॥
षडङ्गन्यासमन्त्रेण हृदयदेवीति नामतः ।
त्रिकोणेष्वग्रतो वामाद् गतिप्रीतिमनोभवान् ॥४९॥
पञ्चबाणांश्च कामं च द्वयं द्वयमथैककम् ।
उदग्दक्षाग्रभागेषु बाह्ये कोणाष्टके ततः ॥५०॥

---

तदा "कर्मादौ विनियोजयेत्" इत्यस्य वैयर्थ्यप्रसङ्गः। तस्मात् सर्वत्र वीर्याधिक्यापेक्षायां तद्योगः। "अवश्यं कामनासिध्यै बीजान्येतानि योजयेत्" इति त्रिपुरार्णवे उक्तम्। निरुक्तस्थले तु नित्य इति प्राहुः ॥४६॥

मूलदेवी मध्ये पूजिता तस्याः पृष्ठतः पूर्वदिशि त्रिकोणाद् बहिः, "प्राग्योनिमध्ययोन्योस्तु मध्ये निजगुरून् यजेत्" इति ज्ञानार्णवे, "त्रिकोणपूर्वदेशे तु तिर्यग्रेखात्रयं स्मरेत्" इति सप्तदशोल्लासे च तथैव गुरुपूजास्थानस्योक्तत्वात्। गुर्वादित्रिगुरून् गुरुपरमगुरुपरमेष्ठिगुरुक्रमेण। त्रिकोणपूर्वे रेखां ध्यात्वा दक्षाद्युत्तरान्तं गुर्वादिमन्त्रैर्यजेत्। मन्त्रयोगस्तु तत्तन्नामादौ, "षडङ्गन्यासमन्त्रेण हृदयदेवीति नामतः" इति नामादौ मन्त्रकथनात् ॥४७॥

पुनरत्र विशेषार्घ्येणेति पदं गुरुपूजाशेषनिवृत्त्यर्थम्। दर्व्यां विशेषार्घ्यतीर्थमादाय गुरून् सम्पूज्य पुनस्तीर्थमादाय गङ्गाद्यावरणदवताः पूजयेत्, "अन्यत्रादाय दर्व्यां तु तर्पयेदावृतिक्रमात्" इति सप्तदशोक्तेः। अन्यत्र मध्यातिरिक्ते इति तदर्थः। अत्रापि त्रिकोणाद् बहिरेवाग्न्यादिष्वङ्गदेवीपूजा, "त्रिकोणाद् बाह्यतो देवि षडङ्गयुवतीर्यजेत्" इति सप्तदशोक्तेः। चतुर्दिक्षु अस्त्रदेवतां प्रागादिचतुर्दिक्षु व्यापकत्वेन स्थितामेकामेव पूजयेत्, सप्तदशोक्ताम्नायसमयविद्यावत् ॥४८॥

षडङ्गदेवतायजनमन्त्रमाह—षडङ्गेति। न्यासमन्त्रः ऐं हृदयाय नम इत्यादि। हृदयदेवी शिरोदेवीत्यादि नाम। त्रिकोणेषु मध्यत्रिकोणकोणेषु। अग्रतः अग्रकोणात् ॥४९॥

पञ्चबाणाः कामाश्च न्यासप्रकरणे उक्ताः। बाह्ये त्रिकोणबाह्येऽन्तराले उत्तरदक्षिणपार्श्वद्वये द्वयं द्वयम्, अग्रे चैकम्। ततः अन्तरालाद् बाह्ये कोणाष्टके ॥५०॥

अनङ्गानङ्गकुसुमे तथैवानङ्गमेखलाम् ।
अनङ्गमदनां पश्चात् सुभगां च महाभगाम् ॥५१॥
भगाद्ये सर्पिणीमाले चाग्निकोणादिवामतः ।
तद्बाह्ये चाष्टपत्रेषु मिथुनाष्टकमर्चयेत् ॥५२॥
असिताङ्गं तथा ब्राह्मीं रुरुं माहेश्वरीं तथा ।
चण्डं कौमारिकां चैव क्रोधं चैव तु वैष्णवीम् ॥५३॥
उन्मत्तं चापि वाराहीं माहेन्द्रीं च कपालिनम् ।
भीषणं चैव चामुण्डां संहारमथ शङ्करीम् ॥५४॥
महालक्ष्मीं पुरोभागात् प्रादक्षिण्येन वै यजेत् ।
दलाग्रेषु क्रमात्कामरूपं च मलयं ततः ॥५५॥
कोल्लगिरिं कुलान्तं चौहारं जालन्धरं ततः ।
ओड्याणं देवकूटं च पीठानामष्टकं यजेत् ॥५६॥
तद्बाह्ये मातृकावृत्ते दश दिक्ष्वग्रतः क्रमात् ।
हेतुकं वेतालमथो त्रिपुरान्तकमेव च ॥५७॥
अग्निजिह्वं महाकालं कपाल्येकपदौ ततः ।
भीमरूपा च लौहाटकेशं दश तु भैरवान् ॥५८॥

---

अनङ्गा अनङ्गकुसुमा इति द्वयम् ॥५१॥

भगाद्ये सर्पिणीमाले भगसर्पिणी भगमाला इति । तद्बाह्ये अष्टकोणबाह्ये । मिथुनाष्टकम् असिताङ्गादिवक्ष्यमाणम् ॥५२॥

"यजेद् ब्राह्म्यादिसहितानसिताङ्गादिभैरवान्" इति त्रिपुरार्णवाद् ब्राह्मीसहितासिताङ्गेत्यादि नाम ॥५३॥

महालक्ष्मीसहितसंहारेत्यन्तं दलमूलेषु पश्चिमदलादिप्रादक्षिण्येन मिथुनाष्टकपूजामुक्त्वा तथैव दलाग्रेषु पीठाष्टकपूजामाह—दलाग्रेष्वित्यादि । क्रमात् ॥५४-५५॥

चौहारम् ॥५६॥

तद्बाह्ये दलबाह्ये । अग्रतः पश्चिमतः, पश्चिमादिनिर्ऋत्यन्तम् । पूर्वेशानमध्ये पश्चिमनिर्ऋतिमध्ये चेत्यूर्ध्वाधोदिशोश्चेति दश दिक्षु ॥५७॥

कपाली एकपद इति भीमरूपः अचल इति च द्वयं द्वयम् । हेतुकभैरवेत्यादि नाम ॥५८॥

चतुरस्रे प्राग्दिगादि दशदिक्पालकान् यजेत् ।
इन्द्राग्नियमरक्षांसि पाशिमारुतयक्षपान् ॥५९॥
ईशब्रह्मानन्तकांश्च तद्बाह्ये तु पुनर्यजेत् ।
वटुकं योगिनीं क्षेत्रपालं गणपतिं वसून् ॥६०॥
रुद्रानथ तथादित्यानश्विनौ पश्चिमादिषु ।
वायव्यादिषु कोणेषु ततः पूजां समाचरेत् ॥६१॥
इयं सृष्टिक्रमात् पूजा मध्याद्बाह्यान्तरीतितः ।
बाह्यादिमध्यपर्यन्तं संहाराख्या प्रकीर्तिता ॥६२॥
सृष्टिं कामनया कुर्यात्संहृतिं मोक्षवाञ्छया ।
सृष्टिर्भेदमयी देवि संहृतिस्त्वैक्यरूपिणी ॥६३॥
भेदस्य दुःखमूलत्वान्निग्रहादौ तु सा भवेत् ।
मूलदेव्यास्त्वावृतीनां रश्मिभूतास्तु देवताः ॥६४॥

---

प्राग्दिगादि पूर्वदिशादि, ईशान्तम् ऊर्ध्वे अधश्च । रक्षः निर्ऋतिः । पाशी वरुणः । यक्षपः कुबेरः ॥५९॥

अनन्तकः अनन्तः । तद्बाह्ये चतुरस्रबाह्ये ॥६०॥

बटुकादिचतुष्टयं पश्चिमादिदक्षिणान्तम् । वस्वादिचतुष्टयं वायव्यादिनिर्ऋत्यन्तम् । ततः एवमावरणपूजानन्तरम् । पूजां पञ्चोपचारपूजाम्, सम्पूर्णा वरणोपेतां यजेत् "पञ्चोपकारकैः", इति सप्तदशोक्तेः । अत्र सप्तदशोल्लासानुसारेण योग्यतया चतुरस्राय नम इत्यादि पुष्पाञ्जलिदानं तत्तदावरणान्ते संक्षोभिण्याद्येकैकमुद्राप्रदर्शनम्, एताश्चतुरस्रदेवतः सायुधा इत्यादि समर्पणम्, त्रिमूलतर्पणम्, अभीष्टेति पुष्पाञ्जलिदानम्, योन्या प्रणामोऽपि ज्ञेयः । अत्र मध्यबीजत्रिकोणाष्टकोणाष्टदलमातृकावृत्तचतुरस्रात्मकपञ्चचक्रेषु पञ्चावरणानि । आयुधावरणवत् त्रिकोणादिबाह्यानां त्रिकोणाद्यावरणान्तर्भावो ज्ञेयः । तथा संहारपूजाया मुख्यत्वेनाङ्गपूजोत्तरं चतुरस्रादिमध्यबीजान्तं पूजयेदिति ॥६१॥

एवमावरणपूजामुक्त्वा तस्याः सृष्ट्यादिभेदमाह--इयमिति । इयं निरुक्ता । किंविधा सा इति चेदाह— मध्येत्यादि । मध्याद् बाह्यान्तरीतितः कृतेति शेषः । एवमग्रेऽपि ॥६२॥

तत्फल भेदमाह—सृष्टिमित्यादि । तत्र हेतुमाह—सृष्टिरिति । भेदाभासरूपत्वात् सृष्टिर्भेदमयी । संहृतिः संहारः । ऐक्याभासरूपत्वात् ऐक्यरूपिणी ॥६३॥

तद्व्यवस्थामाह--भेदस्येत्यादि । भेददृष्टेर्दुःखमूलत्वात् । निग्रहः स्तम्भनम् ।

तासां भेदव्यवस्थानाद्विकुर्वन्ति पदे पदे ।
संहृत्याभेदभावेन परानन्दमयास्तु ताः ॥६५॥
सदानन्तसुखायैव साधकस्य भवन्ति वै ।
चक्रोत्पत्तिं नासनां च वक्ष्ये शृणु समाहिता ॥६६॥
शिवो हकारः शक्तिर्वै सकारः परिकीर्तितः ।
स्वरस्त्वनुग्रहात्मा स्यात् सर्गः सृष्ट्यभिधो भवेत् ॥६७॥
तस्मादनुग्रहपरः शिवः शक्त्या जगत्सृजन् ।
वर्तते सर्वमध्यस्थो मध्यबीजस्वरूपतः ॥६८॥
तस्य नैसर्गिकी शक्तिर्यदा जाता त्रिधा शिवे ।
इच्छा ज्ञानं क्रिया चेति गुणत्रयमयी क्रमात् ॥६९॥

---

आदिना मारणादिसंग्रहः । सा सृष्टिपूजा । तस्याः परमं फलं सहेतुकमाह—मूलेत्यादि । आवृतीनां देवता मूलदेवीकिरणभूता इत्यन्वयः ॥६४॥

तासां किरणभूतानाम् । भेदेन व्यवस्थानात् स्थापनात् । विकारं प्रापयन्ति पदे पदे अनिशम् । अयमभिप्रायः—मध्याद्बाह्यान्तः क्रमेण क्रियमाणावरणपूजा मध्यस्थ-मूलदेवताङ्गात् किरणरूपेणोद्भूता आवरणदेवता बहिर्बहिःक्रमेण विभेदेन स्थिता इति भावनापूर्विका । तथा च पूर्णरूपमूले देवतातः परिच्छेदाद्विकृताः । तथोपासकं विकुर्वन्ति । संहारपूजा तु बाह्यबाह्यावरणदेवतानामन्तरन्तरावरणदेवताभेदभावनया क्रियमाणा पर्यन्ततो मूलदेव्यामभेदेन सर्वा अपि भाविताः, मूलदेव्याः परानन्दमयत्वेन तन्मयता-मापादिताः साधकस्य सुखं प्रयच्छन्तीति । ताः आवरणशक्तयः ॥६५॥

वै निश्चयेन । ता भवन्तीत्यन्वयः । परशिवाच्चक्रोत्पत्तिं चक्रे भावनाप्रकारं च वक्तुमाह—चक्रेत्यादि । वक्ष्यमाणार्थस्यात्यपूर्वत्वात् समाहितेति ॥६६॥

तत्रादौ चक्रमध्यगतप्रासादपराबीजार्थमाह—शिव इति । तत्र हकारसकारौ शिवशक्तिवाचकत्वात् तन्मयौ । स्वरः चतुर्दशः । स अनुग्रहवाचकत्वात् तन्मयः । सर्गो विसर्गः । सः सृष्टेरभिधो वाचकः, तस्मात्तन्मयः ॥६७॥

तस्मात् तदवयववर्णानामेवमर्थकत्वात् । अनुग्रहेत्यादि वर्तते इत्यर्थो विशि-ष्टस्य ॥६८॥

एवं मध्ये शिवो मध्यबीजरूपेण वर्तते इत्युक्तम् । तस्यानुग्रहादेव जगत्सृष्टिः । तदुक्तं त्रिपुरारहस्ये—"अनादिकालतो मायापाशितानणुसंघकान् । अनुग्रहान्मोचयितुं सृजत्येष महेश्वरः ॥" इति, "न मुक्तिः प्रलयस्थानामणूनां शून्यभावतः । देहभावं समा-पन्नाः सृष्टौ ज्ञातुं प्रभाविताः ॥" इति च । एवंविधाच्छिवाच्चक्रोत्पत्तिक्रममाह—

अहङ्कारात्मिका बिन्दुत्रयो कोणत्रिरूपिणी ।
तस्य सृष्ट्युन्मुखत्वेन कामनावीचिसंभवम् ।।७०।।
धर्मादिशक्त्यष्टकं तु कोणाष्टकतया स्थितम् ।
धर्मो ज्ञानं च वैराग्यमैश्वर्यं च चतुष्टयम् ।।७१।।

---

तरयेति । तस्य पूर्वोक्तस्य शिवस्य नैसर्गिकी स्वभावभूता । स्वस्वातन्त्र्याद्यदा गुणत्रयमयी इच्छादिभेदात्त्रिधा जाता । क्रमात् आवरणशक्तिक्रमात् । कोणत्रिरूपिणीत्यन्वयः ।।६९।।

सा अहङ्कारात्मिका बिन्दुत्रयरूपा त्रिकोणरूपिणी जाता । अयमभिप्रायः—शिवस्य जडव्यावर्तकं स्फुरद्रूपत्वं तस्यैव व्याख्यानपदे शक्तिरिति विभज्य कथनम् । तच्च स्वरूपस्फुरणमन्यानपेक्षमिति स्वातन्त्र्यमित्युच्यते । स्फुरणं तु लोके द्विविधम्—इदमहमिति परस्परापेक्षं परिच्छिन्नम् । इदं प्रत्ययानपेक्षं तु अपरिच्छिन्नं स्फुरणं पूर्णाहन्तारूपं परशिवशवत्यभिधम् । तस्य वाचकः सकारः । चक्रं जगच्चक्रप्रतिरूपकत्वाच्चक्रमित्युच्यते । यथाहि जगति सर्वकारणीभूतः शिवः शक्त्या युतः सर्वान्तरस्थः, एवं प्रकृते सर्वचक्रान्तरस्थः सकारयुतो हकारः शक्तियुतः शिवः । शक्त्या एव स्वातन्त्र्यशक्तेः पल्लवभूते अनुग्रहसृष्टिशक्ती । तयोरत्र प्रतिरूपमौकारो विसर्गश्च । एवं स्वभावभूता या पूर्णाहंरूपा शक्तिः, अकारहकारतदुभयैक्यगमकानुस्वाररूपा स्थूलवाचकात्मतां प्राप्ता सकारौकारविसर्गात्मना जाता । स्वातन्त्र्यानुग्रहसृष्टिरूपसूक्ष्मवाच्यशक्तिः स्थूलतां प्राप्ता, इच्छाज्ञानक्रियात्मना जाता रजः सत्त्वतमोभिधाना एतन्मूलभूताहकारयोर्बिन्दुत्रयशब्देन व्याहारः । यथाहि बिन्दुरविच्छिन्नः पूर्णः, एवं शक्तित्रयं शिवस्य अन्यस्येच्छादिकं हि यत् किंचिद्विशेषविषयकत्वात् पूर्णसृष्ट्यादिभूताः शिवस्येच्छादयस्तु सर्वसामान्यविषयकत्वात् पूर्णाः । अतो बिन्दुत्रयरूपाः । तत्र अकारस्यैकबिन्दुरूपत्वम् । हकारस्य विसर्गात्मकत्वात् बिन्दुद्वयरूपत्वम् । यथाहि बीजादङ्कुरं द्विदलमूर्ध्वमुत्पद्यते, एवमकारात्मकैकबिन्दोरूर्ध्वं द्विदलवद्विसर्गबिन्दुद्वयोद्गमेतेषां बिन्दूनां सूर्याग्नीषोमात्मकतेजोमयत्वेन परस्परं तेजःसमेलने त्रिकोणरूपतेति । एतच्च योगिनीहृदये स्पष्टमुक्तम् ।। "यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी । स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य संभवः । शून्याकाद्विसर्गान्ताद्बिन्दुप्रस्पन्दसंविदः । प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात् । प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम् ।।" इत्यादिना । एतद्व्याख्याने श्रीदमृतानन्दपादैर्भास्कररायैश्च स्पष्टतरमुपपादितम् । श्रीशिवानन्दाचार्यैस्तु मातृकाचक्रव्याख्यानेति विशदतया निरूपितम् । एवमिच्छादि शक्तित्रयोत्पत्त्यनन्तरं तस्य शिवस्य सृष्ट्युन्मुखत्वेन हेतुना न उपरमः, किन्तु कामनानामिच्छानां वीचयो विशेषेच्छानां परम्पराः । ततः सम्भवो येषां धर्मादीनाम् ।।७०।।

धर्मादिकमेवाह—धर्म इत्यादि ।।७१।।

अकादिदक्षभागान्तं पृष्ठभागाच्च वामतः ।
अधर्मादिचतुष्कं वै तासां पल्लवरूपतः ॥७२॥
अलुप्तता बुद्धता च तृप्तता च स्वतन्त्रता ।
लुप्तता चाऽबुद्धता चातृप्तता परतन्त्रता ॥७३॥
इत्यष्टकं चाष्टदलं मोहकत्वाच्छलात्मकम् ।
बन्धकत्वाद्वृत्तयुग्मबन्धितं जातमम्बिके ॥७४॥
मायाशक्तिर्बहिस्तस्य चतुरस्रतया स्थिता ।
अधर्मादिचतूरूपा चतूरेखात्मतां गता ॥७५॥
एवं चक्रं समुत्पन्नमथ तत्त्वात्मतां शृणु ।
शिवशक्त्यात्मकं बीजं मध्यस्थं स्यात्त्रिकोणकम् ॥७६॥

---

तत्र धर्माद्यष्टके कस्य कतमकोणात्मतेति शङ्कानिरासाय विभज्य कथयति—अग्रादीति । धर्माद्यैश्वर्यान्तिचतुष्टयस्य अग्रकोणमारभ्य दक्षभागस्थकोणत्रयान्तात्मकत्वम् । पृष्ठभागात् पृष्ठकोणमारभ्य वामभागस्थकोणत्रयान्तात्मकत्वम् । अधर्माज्ञानावैराग्यानैश्वर्याणाम् इच्छादिशक्तित्रयं त्रिकोणात्मकम् । धर्मादिशक्त्यष्टकमष्टकोणात्मकम् । तासां धर्मादिशक्तीनाम् । पल्लवरूपतः । यथाहि काण्डाद्वृक्षादौ पल्लवोत्पत्तिः, एवं धर्मादेः क्रमेण लुप्ताद्युदयः । स्पष्टं चैतत्—धर्मेणाऽलुप्तता ज्ञानेना बुद्धतेत्यादि ॥७२-७३॥

इति अलुप्तादिपरतन्त्रतान्तम् । अष्टदलम् अष्टदलात्मकम् । पूर्वमिच्छाद्यखिलशक्तीनां कोणात्मकत्वमुक्तम्, इदानीमलुप्ततादीनां दलात्मकत्वं कुत इति चेदाह—मोहकत्वादिति । मोहः स्मृतिप्रतिबन्धकः चित्तवृत्तिविशेषः । स चातिसुन्दरपदार्थावलोकनाद् भवति । दलं हि कोणापेक्षयातिसुन्दरम् । धर्मादिकं तु साधनं तत्फलभूतमलुप्ततादिकम् । फलं च कामनोत्पादकत्वान्मोहकं भवत्येव । अतो दलात्मकत्वम् । अधर्मादिपल्लवानां लुप्ततादीनां दुःखजनकत्वेन बन्धकत्वाद्दलाष्टकं वृत्तद्वयेन बन्धितं वेष्टितम् ॥७४॥

चतुरस्रोत्पत्तिमाह—मायेत्यादि । मायाशक्तिः इच्छादिपरतन्त्रता, तेषु भेददृष्टिः, "मायाविभेदबुद्धिर्निजांशभूतेषु निखिलभूतेषु" इत्युक्तेः । तस्याष्टदलस्य बहिः चतुरस्रतया चतुष्कोणतया । एकस्या अपि मायाया रेखाचतुष्टयात्मत्वे कारणमाह—अधर्मेत्यादि । अधर्माद्युक्तशक्तिचतुष्टययुक्तत्वात्तद्रूपा रेखाचतुष्टयात्मताङ्गता ॥७५॥

चक्रोत्पत्तिमुपसंहरति—एवमिति । उक्तप्रकारेण शिवशक्तिसमुदायेन चक्रमुत्पन्नम् । अयमाशयः—शिवो निजशक्तिसमुदायात्मकं चक्रं लोकानुग्रहेणोत्पादितवान् तत्तच्छक्तिरूपविभावनायेति । अथ अनन्तरम् । तत्त्वात्मतां षट्त्रिंशत्तत्वात्मताम् । बीजं

सदाशिवेशविद्याख्यं मायामारभ्य चाष्टकम् ।
प्रकृत्यन्तं चाष्टकोणमहङ्कारात् त्रयं तथा ॥७७॥
श्रोत्रादिपञ्चकं देवि चाष्टपत्रतया स्थितम् ।
कर्मेन्द्रियं तद्विषयस्तन्मात्रं स्थूलमेव च ॥७८॥
भूपुरं चेति देवेशि चक्रं तत्त्वात्मकं भवेत् ।
आत्मविद्याशिवाख्यं हि तत्त्वमुक्तं वरानने ॥७९॥
प्रकृत्यादिधरण्यन्तं मायादिपुरुषान्तकम् ।
शिवादिशुद्धविद्यान्तं बीजत्रयतया स्थितम् ॥८०॥
इच्छाज्ञानक्रियाख्यं च तथावस्थात्रयात्मकम् ।
यद्यल्लोके त्रिगुणितं सर्वकारणभावतः ॥८१॥

---

प्रासादपरात्मकम् । मध्यस्थं मध्यत्रिकोणगतम् । त्रिकोणकं सदाशिवेशविद्याख्यमित्यन्वयः ॥७६॥

सदाशिवेश्वरशुद्धविद्यात्मकं त्रिकोणम् । मायादिप्रकृत्यन्ताष्टकमष्टकोणात्मकम् । अहङ्कारात्त्रयमित्यस्याग्रे अन्वयः ॥७७॥

अहङ्कारादित्रयं श्रोत्रादिपञ्चकं च मिलित्वा अष्टदलात्मकम् । कर्मेन्द्रियं वागादि तद्विषया वचनादयः । तन्मात्रं शब्दादयः । स्थूलम् आकाशादयः । इति भूपुरमित्यग्रिमेणान्वयः ॥७८॥

कर्मेन्द्रियादिचतुष्पञ्चकं भूपुररेखाचतुष्टयात्मकम् । अथ प्रसङ्गान्मन्त्रवासनामप्याह—आत्मेत्यादि । तत्त्वं षट्त्रिंशत् संख्यातमपि आत्मविद्याशिवाख्यमिति त्रिधा भिन्नमुक्तम् ॥७९॥

तदेवाह—प्रकृत्यादीत्यादि । प्रकृत्यादिपृथिव्यन्तं चतुर्विंशतिसंख्यावदात्मतत्त्वम्, मायादिपुरुषान्तसप्तकं विद्यातत्त्वम्, शिवादिशुद्धविद्यान्तपञ्चकं शिवतत्त्वम् । एवं तत्त्वत्रयमपि मूलबीजत्रयात्मकम् ॥ ८० ॥

एवमिच्छाद्युक्तशक्तित्रयात्मकम् । तथा जाग्रदाद्यवस्थात्रयात्मकं च । एवं विशेषतोऽभिधाय सामान्यत आह - यद्यदिति । त्रिगुणितं त्रिसंख्यातं द्रष्टृदर्शनदृश्यादि । तत्सर्वस्यापि कारणत्वाद्बीजत्रयस्य तत्सर्वं बीजत्रयतया स्थितमिति सम्बन्धः ॥ ८१ ॥

बीजरूपपुरोभावात् त्रिपुरेति प्रकीर्तिता ।
एवं विद्याचक्रजगदात्मनामैक्यवेदनम् ।।८२।।
श्रीगुरोः कृपया लब्ध्वा भावयन् भवति प्रभुः ।
इत्येतत्कथितं देवि विस्तरात् पूजनादिकम् ।।८३।।

इति श्रीपरमानन्दतन्त्रे बालायन्त्रादिकथनं नाम
सप्तमोल्लासः ।।७।।



---

बीजरूपस्य कारणात्मकस्य पुरोभावात् पुरः स्थितेः । इयं विद्या त्रिपुरेत्युक्ता । एवम् उक्तप्रकारेण विद्यामन्त्रः । चक्रं निरुक्तं यन्त्रम् । जगत् षट्त्रिंशतत्त्वमयम् । एतेषाम् आत्मा स्वरूपम् । तस्यैक्यवेदनमभेदज्ञानम् ॥ ८२ ॥

श्रीगुरोः परशिवात्मकस्य कृपया कृपयैव न तु पुस्तकवाचनादिना लब्ध्वा प्राप्य उक्तमैक्यं भावयन् । प्रभुः स्वतन्त्रः परशिवो भवति । उपसंहरति--इतीति ॥ ८३ ॥

सौभाग्यानन्दसन्दोहे गजपद्यार्थबोधकः ।
परमानन्दटिप्पण्यामुल्लासः सप्तमोऽभवत् ॥ ७ ॥



# अष्टमोल्लासः

श्रीदेवी उवाच—

महेशार्घ्यविधिं ब्रूहि साङ्गोपाङ्गं च पूजनम् ।
आवृतीनां च बीजानि श्रोतुमिच्छामि तत्त्वतः ।।१।।

श्रीभैरव उवाच—

शृणु देवि प्रवक्ष्यामि सावधानेन चेतसा ।
रहस्यानां रहस्यं वै गोपनीयं विशेषतः ।।२।।
बीजहीना वृथा पूजा ज्ञानहीनशरीरवत् ।
मध्ये मूलेन पूजा स्यात्त्रिबीजेन त्रिकोणके ।।३।।
अनङ्गाद्यांश्चाष्टवर्गैः स्वरच्छन्देन भैरवान् ।
आद्यबीजयुतं पीठं तद्बाह्यांश्च तथा यजेत् ।।४।।

---

अघ्र्यादिविधिं प्रष्टुं देव्युवाचेति । पूर्वोल्लासोक्तावरणपूजायां तत्तन्नामादौ बीजमनुक्तम् । तत्पृच्छति—आवृतीनामित्यादि । तत्त्वतः यथार्थतः निःसन्दिग्धतः श्रोतुमिच्छामीति भावः ।। १ ।।

उत्तरं वक्तुं भैरव उवाचेति । एवं सुस्पष्टमन्यत्र प्रायोऽकथनाद् रहस्येष्वप्यतिरहस्यमिदं वक्ष्यमाणम् ।। २ ।।

परमपृष्टं बीजमपि सूचीकटाहन्यायेनादौ वक्तुं तस्यावश्यकत्वकथनाय तद्योगाभावे दोषमाह—बीजेति । मध्ये मध्यत्रिकोणमध्ये । मूलेन बालामनुना । यद्यपि पूर्वोल्लासे "मध्यबीजे मूलदेवीं मूलेन तु त्रिधा यजेत्" इत्युक्तमेव, तथापि तस्यैव बीजत्वकथनाय पुनरुक्तिः । एवमेव गुर्वादिपूजायां तत्तन्मत्रस्य बीजत्वमित्यपि ज्ञेयम् । मूलबीजत्रयेण क्रमाद्रत्यादिपूजा ।। ३ ।।

अष्टवर्गैः कचटतपयशकैः भैरवान् असिताङ्गादीन् । आद्यबीजं नामाद्यबीजं क्रों इत्यादि । पीठं कोल्लगिर्यादि । तद्बाह्यान् हेतुकादीन् । तथा आद्यबीजयुतान् ।।४।।

रूपस्पर्शौ तथाकाशः पृथिवी रसशब्दकौ ।
वायुस्तेजः पाशमाये बिन्द्वाढ्या दिक्पपूजने ॥५॥
स्वासनात्तु पुरोभागे त्यक्त्वा हस्तमितां भुवम् ।
संस्थाप्य यन्त्रराजं वै मध्ये पीठसमीपतः ॥६॥
पात्राण्यासादयेद् देवि दक्षिणाद्युत्तरान्तकम् ।
सामान्यकलशं तद्वद्विशेषार्घ्यं च शङ्खकम् ॥७॥
हेतुकुम्भं द्वितीयस्य तृतीयस्य च पात्रकम् ।
मुद्रापात्रं च देवेशि स्थापयेत् पात्रसप्तकम् ॥८॥
मणिसौवर्णरजतस्फाटिकं पुण्यकाष्ठजम् ।
नारिकेलालाबुजं वा दृषत्काचमृदुद्भवम् ॥९॥
अखण्डमच्छिद्रकं च श्लक्ष्णावक्रातिसुन्दरम् ।
हेतुकुम्भं विशेषार्घ्यमेवंभूतं सजातिकम् ॥१०॥

---

दिक्पालबीजान्याह—रूपेत्यादि । रूप ल । स्पर्श र । आकाशः ष । पृथिवी क्ष । रस व । शब्द य । वायुः स । तेजः ह । पाश आं । मायां ह्रीं । सर्वे बिन्दुयुताः क्रमेणेन्द्रादीनां बीजानि ॥ ५ ॥

अर्घ्यविधिमाह—स्वासनेति । पुरोभागे अग्रतः । मध्ये, त्यक्तहस्तमितभुवि पात्राण्यासादयेदित्यन्वयः । अत्र एकोनविंशे वक्ष्यमाणसंकल्पादिसूर्यार्घ्यान्तकर्मणां योग्यतयोपलक्षणं ज्ञेयम् । तिरस्करणिकाजपपूजनयोर्बालादीक्षावतस्तन्मन्त्रोपदेशाभावेनायोग्यत्वादनुपलक्षणमेवासंकल्पे कामेश्वरीपदस्थाने बालात्रिपुरसुन्दरीपदयोगो विशेषः ॥ ६ ॥

पात्राणां नामान्याह—सामान्येत्यादि ॥ ७ ॥

द्वितीयपात्रं तृतीयपात्रम् एवं पात्रसप्तकं दक्षिणादुत्तरान्तं पङ्क्त्याकारेण स्थापयेत् ॥ ८ ॥

पात्रलक्षणमाह—मणीत्यादि । पुण्यकाष्ठं चतुर्थोल्लासे मालाप्रकरणे उक्तम् । नारिकेलपात्रे विशेष उक्तस्त्रिपुरार्णवे—“नारिकेलं तु तिर्यक् स्यात् सार्धनेत्रसमन्वितम् । अनन्तयज्ञफलदं तस्मादुत्तमनुच्यते ॥ अनेत्रं वा द्विनेत्रं वा पिशाचानां प्रियंकरम् । एकनेत्रं राक्षसं स्यात्” इति । दृषत् शिला ॥ ९ ॥

अखण्डमखण्डितम्, अभग्नमित्यर्थः । श्लक्ष्णं निम्नोन्नतभावरहितम् । तत्र हेतुकुम्भविशेषार्घ्ययोः साजात्यनियमः । सुवर्णादिमयत्वरूपैकजातीयत्वं हेतुकुम्भविशेषार्घ्ययोरित्यर्थः ॥ १० ॥

शङ्खश्लक्ष्णादिगुणयुक् चालाभे कुम्भजातिकम् ।
सामान्यकलशं देवि ताम्रं कांस्यं शिलाभवम् ॥११॥
सौवर्णाद्युक्तरूपं वा काचमृण्मयवर्जितम् ।
द्वितीयादिकपात्रं तु ताम्रलोहादिवर्जितम् ॥१२॥
आधाराण्यपि चैतेषां वर्तुलं वा त्रिकोणकम् ।
योन्याकारं च षट्कोणमष्टकोणमथापि वा ॥१३॥

---

शङ्खलक्षणमाह—शङ्खमिति । श्लक्ष्णादीत्यादिना उक्ताखण्डेत्यादिसंग्रहः । कुम्भजातिकं हेतुकुम्भसजातीयम् । शङ्खे विशेषस्त्रिपुरार्णवे—"शङ्खोदरस्थितावर्तं युक्त्या निःसार्य तत्र तु । योनित्रयं तथैकं वा शङ्खं कुर्याद्विचक्षणः ॥" इति । तथा रुद्रयामले—"मुख्यः शङ्खः श्वेतवर्णो मध्यः पीतादिवर्णयुक् । नीलयुक्तः परित्याज्यस्तथैव कृमिभक्षितः ॥" इति ॥ ११ ॥

सौवर्णादीत्यादिना पूर्वोक्तस्य मणिमयस्यापि संग्रहः, "मणिनिर्मितपात्रं तु सर्वत्रानिन्दितं भवेत्" इति नित्यातन्त्रोक्तेः । मणिः पुष्परागादिः । सौवर्णादिषु काचं मृण्मयं च हेयमित्याह—काचेत्यादि । द्वितीयादीत्यादिना तृतीयमुद्रापात्रयोः संग्रहः । लोहादीत्यादिनोक्तकाचमृन्मययोरेव ग्रहणं सान्निध्यात् । अथवा "द्वितीयादिकपात्रं तु सौवर्णान्मृन्मयान्तकम्" इति काचमृन्मययोस्त्रिपुरारहस्ये संग्रहाद्रादिनां लोहावान्तरकान्तलोहादिरेव ग्राह्यः । कुलार्णवे तु—"स्वर्णरूप्यशिलाकूर्मकपालालाबुमृन्मयम् । नारिकेलं च शङ्खं च मुक्ताशुक्तिसमुद्भवम् ॥" इति । कूर्मं कूर्मपृष्ठभवम् । कपालं नृमुण्डम् । मुक्ताशुक्तिशङ्खयोः समग्रयोरेव ग्रहणम् । न तन्निर्मितचषकस्य, "मुक्ताशुक्ति च शङ्खं चाप्यखण्डं परिकल्पयेत्" इति योगिनीतन्त्रवचनात् । श्लक्ष्णावक्रेत्यादिवचनात् श्लक्ष्णीकरणादिना नाखण्डत्वापायः । कपालकूर्मपात्रं तु "कपालाद्यस्थिसम्भूतं पात्रं नित्ये तु निन्दितम्" इति योगिनीतन्त्रवचनात्, "अस्थिमालास्थिपात्रं च" इति मूले निन्दितत्वाच्च निषिद्धमेव । "हस्तिदन्तखड्गशृङ्गभवं पात्रमनुत्तमम्" इति त्रिपुरारहस्योक्तेः । अस्थिपात्रेषु द्वयोः संग्रहः । एवं "नारिकेलं तथालाबुं गृहस्थः परिवर्जयेत्" इति योगिनीतन्त्रवचनात्तत्पात्रद्वयं गृहस्थेतरविषयम् ॥१२॥

अथाधारमाह—आधाराणीत्यादि । तदभावे दोष उक्तः कुलार्णवे—"आधारेण विना भ्रंशो न च तृप्यन्ति मातरः" इति । योगिनीतन्त्रेऽपि—"अनाधारं तु यत्पात्रं भवेद्राक्षसभागकम् । अलाभे पत्रपुष्पाद्यैराधारं परिकल्पयेत् ॥" इति । एतेषां सामान्यकलशादीनाम् ॥१३॥

अपदं त्रिपदं पञ्च षट्सप्ताष्टपदं तथा।
मध्यच्छिद्रं यथा पात्रपृष्ठं न स्याच्च भूगतम् ॥१४॥
अन्तर्नैव निमग्नं स्यात्तथा कर्तव्यमम्बिके।
सामान्यकलशं पञ्चपलान्यूनजलैर्युतम् ॥१५॥
दिक्पलादधिकं नैव हेतुकुम्भं तदर्धकम्।
तदर्धं च विशेषार्घ्यं तदर्धं शङ्खमेव च ॥१६॥
अन्येषां नियमो नास्ति नातिसूक्ष्मं महन्न च।
मुख्यार्धं वा प्रकर्तव्यं ततो न्यूनं निरर्थकम् ॥१७॥
द्वैगुण्यं च महत्त्वेऽपि ततो दारिद्र्यहेतुकम्।
मण्डलं तत्र कर्तव्यमादौ तस्य च पूजनम् ॥१८॥

---

अपदं पादरहितं तदाधारं मध्ये छिद्रयुतं तच्च छिद्रं न बृहत्, किन्तु पात्रपृष्ठं यथा भूगतं न भवेत्तथेत्याह—मध्येत्यादि ॥१४॥

ननु अतिसूक्ष्मछिद्रकरणे आधारस्यात्युच्चत्वे वा पात्रपृष्ठं भूगतं न भविष्यतीत्याशङ्क्याह—अन्तरिति। अन्तः आधारान्तः। नैव निमग्नं सर्वथा न निमग्नं स्यात्। किन्तु ईषन्निमग्नमित्यर्थः। तदुक्तं बृहद्वामकेश्वरे—"पात्रपृष्ठनिमग्नार्हमाधारं छिद्रसंयुतम्" इति। पात्रपरिमाणमाह—सामान्येत्यादि। पलप्रमाणमुक्तम्—"पञ्चगुञ्जात्मको माषः कर्षस्तैः षोडशैर्भवेत्। कर्षैश्चतुर्भिर्विज्ञेयं पलं मानविचक्षणैः॥" इति ॥१५॥

दिक् दश। तदर्धकं सामान्यकलशार्धं हेतुपात्रं तदर्धं हेतुपात्रार्धं विशेषार्घ्यं तदर्धं विशेषार्घ्यार्धं शङ्खम् ॥१६॥

अन्येषां द्वितीयादिपात्राणाम्। विशेषतो नियमाभावेऽपि सामान्यतो नियममाह—नातीति। उक्तपात्रमानेषु सर्वतोऽपकृष्टं मानं शङ्खमानम्। सर्वत उत्कृष्टं सामान्यकलशमानं शङ्खाद् न्यूनं सामान्यकलशादधिकं न कर्तव्यमिति भावः। एवं मुख्यं प्रमाणमुक्त्वा गौणमप्याह—मुख्यार्धमिति। मुख्यं पञ्चपलाद्दशपलपर्यन्तं सामान्यकलशस्य तदर्धं सार्धद्विपलान्तादिपञ्चपलान्तं वा सामान्यकलशस्य मानं कर्तव्यम् ॥१७॥

न्यूनकरणेऽर्धं मानमुक्त्वाऽधिककरणेऽप्याह—द्वैगुण्यमिति। सामान्यकलशस्य महत्त्वे द्वैगुण्यं दशपलाद्विंशतिपलपर्यन्तम्। अत्र सर्वेषु पात्रेषु मुख्यं गौणं वा समानमेव परिमाणं ग्राह्यम्। नैकत्र मुख्यमन्यत्र गौणमिति, तदर्धकमित्यादिवचनविरोधापत्तेः। तत्र पात्रस्थाने। आदौ पात्रस्थापनादौ। तस्य मण्डलस्य ॥१८॥

मत्स्याख्यमुद्रया वृत्तं तद्बाह्ये चतुरस्रकम् ।
तत्तन्नाम पठित्वा तु मण्डलाय नमो वदेत् ॥१९॥
एवं वृत्ते तु संपूज्य चतुरस्रे षडङ्गकम् ।
सबीजमग्नीशयातुवायुमध्यदिशासु च ॥२०॥
क्रमात् पुष्पाक्षतैः पूज्य पात्रं साधारकं न्यसेत् ।
दक्षाङ्गुष्ठेन संस्पृश्य शङ्खमुद्रागतेन वै ॥२१॥
पूजयेन्मण्डलं देवि शङ्खमुद्रां वदामि ते ।
वामाङ्गुष्ठं दक्षमुष्टिगतं वामाङ्गुलानि वै ॥२२॥
ऋजुरूपाण्यग्रदेशे दक्षाङ्गुष्ठाग्रयोगतः ।
तत्र पूज्याक्षताद्यैस्तु सामान्यकलशं न्यसेत् ॥२३॥

---

मण्डलकरणप्रकारमाह––मत्स्येत्यादि । मत्स्यमुद्रया षष्ठोल्लासोक्तया । वृत्तं तद्बाह्ये वृत्तबाह्ये चतुरस्रं च कर्तव्यमिति सम्बन्धः । "गन्धोदकेन पुरतः" इति षष्ठवचनात् सर्वत्र मण्डलं गन्धोदकेन ज्ञेयम् । मण्डलपूजामन्त्रमाह––तत्तदिति । नाम सामान्यकलशेत्यादि ॥१९॥

एवमुक्तमन्त्रेण चतुरस्रे षडङ्गकं पुष्पाक्षतैः पूज्येत्यन्वयः । सबीजं षडङ्गमित्यनेन मूलबीजयुताङ्गमन्त्रैः पूजनम्, "अङ्गानि पूजयेत्तत्र षडङ्गन्यासमन्त्रतः" इति योगिनीतन्त्रवचनात् । ऐं हृदयाय नम इत्यादि षडङ्गन्यासमन्त्रो ग्राह्यः । न तु ऐं नमः क्लीं स्वाहा इत्यादि, न्यासपदस्वारस्यात् । तत्स्थानमाह––अग्नीत्यादि । चतुरस्राग्नेयादिषु । यातु राक्षसः । तेन निर्ऋतिदिगुक्ता ॥२०॥

क्रमात् एकेन मन्त्रेणैकत्र । पात्रम् आधारयुतं मण्डलोपरि न्यसेत् । मण्डलं शङ्खमुद्रायुतदक्षाङ्गुष्ठेन संस्पृश्य ॥२१॥

ननु दक्षाङ्गुष्ठेन संस्पर्शः कदेत्याशङ्कायामाह––पूजयेदिति । संस्पृश्येत्यनेन स्पर्शनोत्तरं पूजयेदित्युक्तम् । मण्डलं कृत्वा संस्पृश्य वृत्तादिषु पूजयेदित्यर्थः । शङ्खमुद्रामाह––शङ्खेति । दक्षमुष्टिगतं दक्षकनिष्ठामूलात् । प्रवेशरीत्या । वामाङ्गुलानि ऋजुरूपाणीत्यन्वयः ॥२२॥

वामाङ्गुलानामग्रदेशे । तत्र अङ्गुष्ठस्पृष्टमण्डले । पूजानन्तरं कलशस्थापनं वक्तुं कृतपूजाया अनुवादः––पूज्येति । सामान्यकलशं साधारमित्यन्वयः, "सुगन्धितोयभरितं स्थापयेत् कलशं ततः" इति त्रिपुरार्णवानुरोधेन सुगन्धितोयपूरितं पात्रमिति पद्धतिकृतोक्तम् । वस्तुतस्तु उक्तविधिनेति पदाद् द्वारपूजावदेवापूरणं युक्तम् ॥२३॥

साधारमुक्तविधिना तीर्थमर्कात् समावहेत् ।
तत्पात्रं संस्पृशन् देवि गङ्गायाः प्रजपेन्मनुम् ॥२४॥

अशेषतीर्थालवाले शिव पश्चाज्जटाधिरूढे ।
गङ्गे गङ्गाम्बिके च मूर्धा सप्ताक्षरीमुखे ॥२५॥

गङ्गामनुस्त्रिंशदर्णस्तीर्थानामभिमन्त्रणे ।
अमृतीकरणादीनि कृत्वा पूर्वोक्तवत् प्रिये ॥२६॥

सुदर्शनास्त्रेण देवि रक्षणं तु समाचरेत् ।
नमः सुदर्शनायोक्त्वाऽस्त्राय फट् प्रणवो मुखे ॥२७॥

रुद्राक्षरोऽयं देवेशि तीर्थसंरक्षणे मनुः ।
गन्धपुष्पैः समभ्यर्च्य मूलाष्टकजपं चरेत् ॥२८॥

अथ कुम्भाधःप्रदेशं पूर्ववन्मण्डलं यजेत् ।
तत्राधारं प्रतिष्ठाप्य तत्र चाग्निकला यजेत् ॥२९॥

---

उक्तविधिना द्वारपूजोक्तविधिना । तीर्थमावाहेत् । तत्पात्रं सामान्यकलशम् ॥२४॥

गङ्गामन्त्रमाह--अशेषेति । पश्चादिति त्यक्त्वा अम्बिकेत्यन्तं स्वरूपम् । मूर्धा स्वाहा सप्ताक्षरी ॐ नमो भगवति इति । मुखे आदौ भगवति अशेषे इत्यसन्धिः ॥२५॥

पूर्वोक्तवत् द्वारपूजावत् । अमृतीकरणादीनि चत्वारि ॥२६॥

रक्षणे विशेषमाह—सुदर्शनेति । अन्यत्र केवलास्त्रेण रक्षणम् । तन्मन्त्रमाह—नम इति । उक्त्वेति त्यक्त्वा फट् इत्यन्तं स्वरूपम् । मुखे आदौ प्रणवः ॥२७॥

कलशस्थतीर्थं समभ्यर्च्य मूलमन्त्रं कलशं स्पृशन्नष्टधा जपेत् । अभिमन्त्रयेदिति पद्धतावुक्तम्, "जपस्त्वालभ्य मन्त्राणामभिमन्त्रणमुच्यते" इति त्रिपुरारहस्योक्तेः ॥२८॥

अथ सामान्यकलशविध्यनन्तरम्, कुम्भाधः हेतुकुम्भाधः । पूर्ववत् सामान्यकलशवत् । अत्र यद्यपि "हेतुकुम्भं द्वितीयस्य तृतीयस्य च पात्रकम्" इति प्रायः सर्वत्र तन्त्रे हेतुकुम्भ इत्येव व्यवहाराद् हेतुकुम्भमण्डलाय नम इत्येव मन्त्र इति प्रतीयते, तथापि "हेतुपात्रं त्रिकोणे तु" इति एकोनविंशवचनानुरोधात्, "आपूरितं महापात्रम्" इति मन्त्रलिङ्गाच्च हेतुपात्रमण्डलाय नम इत्यादिरेव साम्प्रदायिकानां प्रयोगः । तत्र मण्डले । तत्र आधारे ॥२९॥

आधारपात्रामृतेषु बीजान्यपि च मण्डलान् ।
पुमर्थान्नाम संयोज्य प्रत्येकं क्रमशो यजेत् ॥३०॥
प्रागादिवृत्तभावेन दश याद्यक्षरान्विताः ।
धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ॥३१॥
सुश्रीः सुरूपा कपिला हव्यकव्यवहेति वै ।
अग्निमण्डलरूपं तं ध्यात्वा दशकलात्मकम् ॥३२॥
तत्र कुम्भं पूजितं च धूपितं पूर्ववन्न्यसेत् ।
तत्र सूर्यकलाः पूज्याः प्रागादि द्वादश क्रमात् ॥३३॥
कभादिमिथुनैर्युक्ताश्चतुर्विंशतिवर्णकाः ।
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ॥३४॥
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ।
कलाद्वादशरूपं तं ध्यात्वाऽर्च्यं सूर्यमण्डलम् ॥३५॥

---

तत्राधारपात्रद्रव्याणां पूजामन्त्रानाह—आधारेत्यादि । बीजानि वाग्भवादीनि । मण्डलान् अग्न्यादीन् । पुमर्थान् धर्मादीन् । नाम आधारेत्यादि, "बीजान्ते मण्डलायोक्त्वा धर्मप्रददशां ततः । कलात्मनेऽनुकान्ते चाधाराय हृदयं वदेत् ॥" इति त्रिपुरार्णववचनानुरोधात् ऐं अग्निमण्डलाय धर्मप्रददशकलात्मने हेतुपात्राधाराय नम इत्यादि मन्त्रो ज्ञेयः । क्रमश आधारपात्रामृतेषु तैस्तैर्मन्त्रैः पूजयेत् ॥३०॥

एवं समष्टिपूजोत्तरमग्निकलापूजनमाह--प्रागादीति । आधारे प्रागादिवृत्तभावेन अग्निकला यजेदिति सम्बन्धः । अग्निकलाश्च दश याद्यक्षरैः यकारादिक्षकारान्तैरन्विता युक्ताः । कलानामान्याह--धूम्रार्चीति ॥३१॥

हव्यवहा कव्यवहा इति नामद्वयम्, "हव्याद्वहा कव्यवहा" इति त्रिपुरार्णवात् । यं धूम्रार्चिकलायै नम इत्यादिप्रयोगः । एवमाधारं संपूज्य ध्यात्वा ॥३२॥

तत्र आधारे । कुम्भं हेतुपात्रम् । पूजितं गन्धालङ्कृतम्, "गन्धाद्यलङ्कृतं धूपधूपितं त्वर्घ्यपात्रकम्" इति नित्यातन्त्रानुरोधात् । पूर्ववत् यथापूर्वमासादितं तथैव न्यसेत् । तत्र पात्रे ॥३३॥

कभादिमिथुनैः कं भं खं बं इत्यादिद्वन्द्वैः चतुर्विंशतिर्वर्णा या सान्ताः कलाः, तन्नामान्याह—तपिनीत्यादि ॥३४॥

तं कुम्भकलाम् द्वादश रूपं सूर्यमण्डलं ध्यात्वा । अर्घ्यं हेपुपात्रायनम इति पूजनीयम् ॥३५॥

ततो ध्यायेद्योगिनीं तां भक्तिभावसमन्वितः ।
रक्तां रक्ताम्बरां रत्नभूषाभिः समलङ्कृताम् ॥३६॥
सुधापात्रधरां देवीं मदघूर्णितलोचनाम् ।
गन्धाद्यैस्तां प्रपूज्याथ सुधापात्रं स्पृशन् जपेत् ॥३७॥
वासुदेवं द्वादशार्णं सप्तकृत्वो महेश्वरि ।
अन्ते वर्मास्त्रहृदययुतं कृत्वा वरानने ॥३८॥
प्रणवं हृदयं चोक्त्वा भगान्ते तु वते वदेत् ।
वासुदेवाय च वदेद् विद्यैषा द्वादशाक्षरी ॥३९॥
समादाय च तत्पात्रं पथिकाख्याः प्रपूजयेत् ।
पुष्पोध्दृतसुधाबिन्दुक्षेपैर्द्वाराभिमुख्यतः ॥४०॥
खेचरीवीजतः पश्चात् पथिकान्ते तु देवता ।
भ्यो वर्मास्त्रं शिरः प्रोच्य चैवमन्यच्चतुष्टयम् ॥४१॥

---

ततः हेतुपात्रपूजानन्तरं योगिनीं प्रथमधारिणीं देवताम् । तदुक्तं त्रिपुरारहस्ये—"अर्घ्यस्योत्तरदिग्भागे योगिनीलोहितांशुका । अनर्घ्यरत्नाभरणा पद्मरागसमप्रभा ॥" इत्यादि । प्रकृते प्रथमपात्रहस्तां सुवासिनीं योगिनीरूपेण ध्यायेत् । तदुक्तं त्रिपुरार्णवे—"सुवासिनीं हेतुपात्रधरां ध्यात्वा समर्चयेत्" इति । ध्यानप्रकारमाह—रक्तामित्यादि ॥३६॥

सुधापात्रं प्रथमपात्रम् । मदेन पानजनितचित्तवृत्तिविशेषेण घूर्णितं मदकलया भ्रमल्लोचनं यस्याः सा तां योनिनीम् ॥३७॥

सप्तकृत्वः सप्तवारम् । अन्ते वासुदेवमन्त्रस्यावसाने । वर्म हुम् । अस्त्रं फट् । हृदयं नमः ॥३८॥

तन्मन्त्रमाह—प्रणवमिति । भगेत्यादि देवायेत्यन्तम् अन्ते तु वदेत् इति त्यक्त्वा स्वरूपम् ॥३९॥

एवं प्रजपानन्तरं तत्पात्रं समादाय । योगिनीहस्तात् पुष्पोद्धृतकलशामृतबिन्दुक्षेपैः पूजयेदिति सम्बन्धः । क्षेपणं च द्वाराभिमुख्यतो द्वारदिशि योगिनीहस्तात्तत्पात्रमादाय, स्वपुरतः स्थापनं तु "आदाय योगिनीहस्तात् कलशं न्यस्य चाग्रतः" इति त्रिपुरार्णववचनानुरोधेन ज्ञेयम् ॥४०॥

पथिकपूजामन्त्रानाह—खेचरीत्यादि । पथिकदेवताभ्य इति स्वरूपम् । वर्म हुम् । अस्त्रं फट् । शिरः स्वाहा । अन्यद् वक्ष्यमाणं पथिकदेवताया मन्त्रचतुष्टयम् ॥४१॥

ग्रामान्ते तपिनीप्रान्ते निन्दान्ते प्रोच्चरेत् पृथक् ।
चण्डालिनीति पश्चात्तु सर्वाग्रे पशुप्रान्ततः ॥४२॥
जनदृष्टि ततो दोषायान्ते सर्वत्र वै क्रमात् ।
वर्मादित्रयमालिख्य चादौ बिन्दुयुतो रसः ॥४३॥
अर्केशेनेशनृपतिवर्णाः स्युः पथिकाभिधाः ।
एवं संतर्प्य तत्पात्रं गन्धपुष्पादिभिर्यजेत् ॥४४॥
तत्र संस्पृश्य कुर्याद् वै शापमोचनमादितः ।
एकमेव परंब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ॥४५॥

---

ग्रामतपिनीनिन्दा इति त्रयाणामन्ते । पृथक् प्रत्येकं चाण्डालिनीति प्रोच्चरेत् । पश्चात् एतन्मन्त्रत्रयानन्तरम् । सर्व इत्युस्याग्रे पशु इत्युक्त्वा तदन्ततः ॥४२॥

तत इति त्यक्त्वा जनेत्यादि दोषायेत्यन्तं स्वरूपम् । अन्ते मन्त्रान्ते । सर्वत्र ग्राम-चण्डालिनीत्यादि सर्वपशुजनदृष्टिदोषायेति चतुर्ष्वपि मन्त्रेषु । वर्मादित्रयं हुं फट् स्वाहेति । आदौ सर्वत्रेति योज्यम् । रसः व ॥४३॥

मन्त्रवर्णसंख्यामाह--अर्केत्यादि । अर्क द्वादश । ईश एकादश । इन द्वादश । नृपतिः षोडश । पथिकाभिधा मन्त्राः । अर्कादिसंख्यवर्णाः । तत्पात्रं प्रशमपात्रम् ॥४४॥

तत्र कलशे । आदितः शापक्रमतः । शापक्रमस्तु--आदौ वृत्रादिशापाः, अन्ते शुक्रशाप इति क्रमेणाग्रिमोल्लासे वक्ष्यति । तेनादावुक्तमपि शुक्रशापमोचनमन्ते कर्तव्यम् । अत एवाग्रे—"इत्यष्टादशमन्त्रेण दोषजालाद्विमोचितम् । शुक्रशापाद् विमोचयेत्" इत्युक्तम् । अत्र प्रसङ्गाद्वैदिकमन्त्रा व्याख्यायन्ते । तत्र वृत्रशापमोचनमन्त्रो द्रव्यप्रार्थनरूपः—स्वदिष्ठयेत्यादि । हे सोम ! तद्रूपत्वेन ध्येयत्वात् । इन्द्राय ईश्वरात्मकगुरुरूपिण्यै देवतायै पातवे पातुं सुतः संपादितः । त्वं स्वदिष्ठया मदिष्ठया स्वादुरूपया मादयित्र्या त्वद्धारयाऽस्मान् पवस्व रक्ष । रक्षोहा अज्ञानरूपरक्षोहन्ता । विश्वचर्षणिः सर्वस्य ज्ञानकर्ता त्वं पूर्वं द्रुणा वृक्षेण निखिलौषध्या सधस्थं सहस्थानं क्षीराब्धिरूपम् अभ्यासदत् आस्थितवान् । प्रकृते अयोहतम् अयो लोहं स्वर्णादिरूपं हतं गतं प्राप्तं योनिं पात्ररूपं स्थानमास्थितवान् । वरिबोधा तमः । ऐश्वर्यादिरूपधनप्रदाता भव । यतस्त्वं वृत्रहंतमः वृत्रहन्ता । मं हिष्ठः दातृतमः । वृत्रं हत्वैन्द्रायैश्वर्यं दत्तवानसि । तस्मात् मघोनामिन्द्रादीश्वराणां राधो धनमैश्वर्यं पर्षि मह्यं प्रयच्छ । महानां महतां देवानाम्, त्रिपुरसुन्दर्यादिदेवतानाम् । वीतिं यज्ञं सपर्यामन्धसा अन्नरूपेण पातुं योग्यरूपेण । अभ्यर्थं अभिगच्छ । उत अपि च । मां श्रवः अन्नरूपेण भूत्वा त्वं वाजं बलम् । अभिगमय । त्वाम् अच्छा

स्वच्छान्तःकरणेन अहं चरामसि परिचरामि । दिवे दिवे प्रतिदिनम् । तदित् परिचरण-मेव मेऽर्थं कार्यं हे इन्द्रो ! त्वे त्वयि आशसः आशंसनापि । नान्यत्रेति ।

गर्भरूपेण भगवता दत्तः शापो गर्भशापः । तन्मोचनाय विष्णुर्योनिमिति विष्ण्वा-दिप्रार्थनारूपो मन्त्रः । विष्णुः योनिम् । गर्भघातदोषग्रस्तत्वाद् यज्ञेषु नष्टस्थानायाः स्थानं कल्पयतु । त्वष्टा तनुकर्ता । शापेन नष्टयज्ञादियोग्यरूपायाः रूपाणि पिंशतु अव-यवीकरोतु । प्रजापतिर्ब्रह्मा । शापेन नष्टरसां त्वां अमृतादिरसैरासिञ्चतु । धाता धारको देवः । हे सुरे ते तव गर्भं शापेन नष्टवीर्यायाः सकलसिद्धिप्रदवीर्यरूपं गर्भं दधातु धारयतु । हे सिनीवालि सरस्वति एतत्संज्ञे देवि ! तं गर्भं धेहि धारय । हे सुरे ते ते पुष्करस्रजा पुष्करमालिनौ देवौ अश्विनौ तमेव गर्भम् आधत्तां कुरुताम् । हिरण्ययी हिरण्मय्यौ अरणी दशमे मासि सूतवे प्रसोतुं यं वीर्यवत्तरं गर्भमुद्दिश्य हे अश्विनौ निर्मन्थतः मथित-वन्तौ । हे सुरे । ते तं गर्भं हवामहे अहूयामहे । अग्निप्रार्थनरूपोऽग्निशापमोचनमन्त्रः । त्रिष्टुभमिति । हे देव सवितः ! यागेषु हविर्ग्रहणाय देवोत्पादक । वर्षिष्ठैः वृद्धतमैरना-दिभिः । सोमधामभिः अमृतात्मकैर्नाशरहितैर्नित्यैर्धामभिः शरीरैः । त्रिभिः गार्हपत्या-दित्रिरूपैः । दक्षैः सामर्थ्यवद्भिः । हे अग्ने त्वं नः अस्मत्सम्बन्धि पूजार्थं सम्पादितं द्रव्यम् । पुनीहि परिशुद्धं कुरु । त्वया परिशुद्धीकृते सति त्वदनुग्रहाद् देवजनाः देवाः वसवः धिया स्वात्मीयेन कर्मणा विश्वेदेवा इति गणदेवताः । मा पूजार्थमासादितद्रव्यं मां पुनन्तु पूतं कुर्वन्तु । पुनीत पूतं कुरुतम् । हे जातवेदः अग्ने द्रव्यशुद्धिकरणद्वारा मामपि पुनीहि ।

एवं सोमशापमोचनाय सोमप्रार्थनारूपो मन्त्रः--प्रप्यायस्वेति । हे सोम ! प्रप्या-यस्व द्रव्यरूपं हविः प्रकर्षेण वर्धय । किञ्च, विश्वेभिः विश्वैः सर्वैः अंशुभिरमृतकिरणैः । देवेभ्यो देवतार्थं संपादितमुत्तमं हविर्द्रव्यम् । प्रस्पन्दस्व कलशादीन् प्रति प्रस्रव प्रगच्छ ।

एवं तीर्थशापमोचनमन्त्रोऽपि तीर्थप्रार्थनात्मकः—इमं मे इति । हे गङ्गाद्या नद्यः, परुष्ण्यादिभिर्नदीभिः सहिताः यूयम् । मे मत्कृतमिमं स्तोमं स्तोत्रं शृणुहि शृणुत । तत् श्रुत्वा ततः आसचत आगत्य द्रव्ये समवेता भवत । गङ्गायमुनासरस्वत्यः प्रसिद्धाः । शुतुद्रि इति नद्यन्तरसम्बोधनम् । मरुद्वृधे आर्जीकीये इति चान्ययोर्नद्योः संबोधनम् । परुष्णिया असिक्निया वितस्तया सुषोमया इति तृतीयान्तचतुष्टयं नद्यन्तरवाचकम् । सचता शृणुह्या इत्यत्राङ्गद्वयं यथासम्भवं योजनीयम् । एवं प्रार्थ्य तत्राप्युत्तमतमं प्रयागं स्तोतुमाह—सितासितेति । सितासिते श्वेतकृष्णे गङ्गायमुने । सरिते नद्यौ । यत्र यस्मिन् प्रदेशे । संगते सम्यङ्मिलिते । तत्र आप्लुतासः आप्लुताः कृतावगाहाः । दिवं स्वर्ग-मुत्पतन्ति प्राप्नुवन्ति । वै निश्चयेन ये धीरा धैर्यवन्तः तन्वं तनुं शरीरम् । विसृजन्ति परित्यजन्ति ते जनासो जनाः । अमृतत्वममृतभावं भजन्ते प्राप्नुवन्ति ।

एवं शिवप्रार्थनात्मकस्तच्छापमोचनमन्त्रः—तामन्देति । स्थाणुं शिवम् । पथेष्ठं शुभमार्गे कारणत्वेन स्थितम् । आधत्तं हृदि ध्येयत्वेन स्थापयामि । मनुषो मनुष्यस्यास्मदादेः । दुरोणे गृहे रयिं धनम् । दशवीरं दशेति बहुसंख्योपलक्षकं बहुपुत्रान् । एतयोर्वचस्यवे । सूतिकामायोत्पत्तये । अत्र धनपुत्राभ्यामर्थकामावुक्तौ । एतद्धर्ममोक्षयोरप्युपलक्षकम् । पुरुषार्थोत्पत्तये गृहेषु संपादितम् । ता तां सुरां मन्दसानां मन्दाः कृशीभूताः सानाः सूनाः पापानि यया, ताम् । यः शुभस्पती श्रेयःस्वामी तेन स्थाणुना शिवेन तीर्थं पवित्ररूपं सप्रमाणं शुभात्मकं प्रकर्षेण पानयोग्यं कृतं भवत्विति शेषः । तथा दुर्मतिं दुष्टबुद्धिं पशुं जनमपहतं करोत्विति शेषः । विष्णुशापमोचनाय तत्प्रार्थनात्मा मन्त्रः । श्रोणामिति श्रोणां श्रवणनक्षत्रमिव नीचोच्चसमभेदेन । त्रिविधाम् । गां भुवम् । एकः असहायः पर्जन्यरूपी सन् उदकमवाजति प्रत्यवगमयति । तेन जलेनान्नादिकमुत्पाद्य तदन्नं सूनया क्रयविक्रयादिना जनैः भृतं सम्पादितं भक्षितं भवति । एकः असहाय एव तेनान्नेन जनानां मांसं पिंशति वर्धयति । एवं वृष्ट्या जनान् संसृष्ट्वाऽन्नेन पालयित्वा आनिम्रुचः अस्तमयादर्वाक् महाप्रलयादौ । एकः असहाय एव शकृत् अग्नेः पुरीषरूपं भस्मात्मकं जगत् अपाभरत् संपादयति । ईदृशो जगज्जन्मादिहेतुर्विष्णुः । किंस्वित् किञ्चिद्रूपेणानिर्देश्यवपुषा स्थितः पुत्रेभ्यः पुत्रान् पितराविव मानुपावतु रक्षतु ।

अथ ब्रह्मशापमोचनाय तत्स्तुतिरूपो मन्त्रः—हिरण्यपात्रमिति । हिरण्यपात्रं हिरण्यवत् प्रकाशमानं सूर्यकलात्मकं पात्रम् । मधोः मधुना पूर्णं यो ददाति देवतायै समर्पयति । मधव्यः मधुवत्सर्वप्रियः आत्मरूपी असानि भवानि इति मत्वा तद्दत्तं हिरण्यपात्रम् एकधा देवतैक्यरूपेण स्थिताय ब्रह्मणे उपहरति उपहृतं दत्तं भवति । ततो ब्रह्मणः कृपया एकधव मुख्यरूपेणैव स्थितमायुस्तेजश्च यजमानो यागकर्ता दधाति धारयति ।

एवं शापैर्मुक्तस्य द्रव्यस्य सवीर्यत्वाय तेजोराशेः सूर्यस्य प्रार्थनरूपो मन्त्रः—घृणिरिति । घृणिर्दीप्तिमानादित्योऽदितिपुत्रः सूर्यः । न प्रभावाति न प्रभवति । उत्पत्तिरहितोऽनादिः । अक्षरं क्षरो नाशस्तद्रहितः । तत् तस्मै उपासका मधुरूपं रसं रसात्मकं द्रव्यं क्षरन्ति समर्पयन्ति । वै निश्चयेन । तद्रसं द्रव्यरूपं सत्यं सत्यफलदम् । आपः जलमयं जलमयत्वेऽपि ज्वलनयोग्यत्वात् । ज्योती रसः । अमृतं ब्रह्म नित्यब्रह्मरूपप्रापकम्, भूर्भुवःसुवरात्मकं ॐकारवाच्यप्रापकत्वात्तद्रूपमस्त्विति शेषः ।

एवं शापमोचनमन्त्रा व्याख्याताः । अत्र यद्यपि शुक्रशापस्यापि मोचनानन्तरमेव सवीर्यत्वाय घृणिरिति मन्त्रपाठो युक्त इव भाति, तथापि "इत्यष्टादशमन्त्रेण दोषजालाद्विमोचितम् । शुक्रशापान्मोचयेत्" इति वक्ष्यमाणवचनानुरोधादेवमुक्तमिति ज्ञेयम् ।

अथात्रैतत्प्रसङ्गादत्रोपयुक्ता अन्येऽपि वेदमन्त्रा व्याख्यायन्ते । तत्र प्रथमादिपञ्चपदार्थाः सदाशिवादिपञ्चब्रह्मरूपाः । एतदुक्तं त्रिपुरार्णवे—"आद्यं सदाशिवस्तद् द्वितीयं चेश्वरः स्मृतः । रुद्रस्तृतीयं तुर्यं तु विष्णुर्ब्रह्मा तु पञ्चमम् । तस्मात् पञ्चब्रह्ममयो

यज्ञः सर्वोत्तमोत्तमः ॥" इति। तत्रेश्वरस्तुतिरूपो मन्त्रो द्वितीयसंस्कारान्ते सद्योजातमित्यादि। सद्योजाताख्यं यत्परशिवस्य पश्चिममुखं तद्रूपं परमेश्वरं प्रपद्यामि प्राप्नोमि तस्मै वै नमः। भवे भवे तत्तज्जन्मनिमित्तं मां न भवस्व न प्रेरय। अतिभवे जन्मातिक्रमनिमित्ते भवस्व तत्त्वज्ञानाय प्रेरय। भवोद्भवाय संसारादुद्धर्त्रे नमः ॥१॥ उत्तरमुखात्मको वामदेवः। तस्यैव रूपभेदा ज्येष्ठादयो महादेवपीठशक्तिपुरुषाः। तेभ्यो नमः ॥२॥ दक्षिणवक्त्रात्मकस्य विग्रहा अघोराः सात्त्विकाः शान्ताः। अन्ये घोरा राजसा उग्राः। अपरे तु तामसा घोरादपि घोरतराः। हे सर्व सर्वात्मक। ते सर्वेभ्य ईश्वररूपेभ्यो रुद्ररूपेभ्यः सर्वेभ्यो मुखेभ्यो नमोऽस्तु ॥३॥ प्राग्वक्त्ररूपी तत्पुरुषः, तं द्वितीयार्थे चतुर्थी। विद्महे जानीमः। ज्ञात्वा महादेवं धीमहि ध्यायामः। तत्तस्मात् रुद्रो नोऽस्मान् प्रचोदयात् ध्यानार्थं ज्ञानार्थं च प्रेरयतु ॥४॥ ऊर्ध्ववक्त्ररूपी सर्वविद्यानामीशानो नियामकः। तथा सर्वभूतानामीश्वरः। ब्रह्म वेदास्तस्याधिपतिः पालकः। तथा ब्रह्मणो हिरण्यगर्भस्याप्यधिपतिः। ईदृशो यो ब्रह्मा प्रवृद्धः परमात्मा मे मदनुग्रहाय शिवः शान्तोऽस्तु। स एव सदाशिवः ॐ अहं भवामि ॥५॥

एवं तृतीयसंस्कारान्ते रुद्रस्तुत्यर्थो मन्त्रः—त्र्यम्बकमिति। त्र्यम्बकं त्रिनेत्रं यजामहे सुगन्धिं शोभनगन्धयुतं पुष्टिवर्धनं पुष्टिपोषकम्। हे रुद्र! मा मां मृत्योः सम्बन्धिनो मृतान्मरणात् मुक्षीय मोचय। यद्वा मृत्योर्मुक्षीय अमृतान्मा मुक्षीय बन्धनाद् वृन्तादुर्वारुकमिव।

तथा मुद्रासंस्कारान्ते विष्णुस्तवात्मा मन्त्रः—तद्विष्णोरिति। सूरयो विद्वांसः। विष्णोः परमं पदमुत्कृष्टस्थानम्। शास्त्रदृष्ट्या सदा पश्यन्ति दिवीव आकाशे इव। आततं प्रसृतं चक्षुः। निरोधाभावादाकाशे यथा चक्षुः पश्यति तथेति भावः। यद्विष्णोः परमं पदं तद् विप्रासो मेधाविनः समिन्धते दीपयन्ति विपन्यवो विशेषेण स्तोतारः। जागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः।

ब्रह्मादितत्तत्कलोत्तरं तत्तत्स्तुतिरूपाः पञ्च मन्त्राः––हंस इति। हन्ति विराड्रूपेण सर्वत्र गच्छति व्याप्नोतीति हंसो ब्रह्मा। शुचौ शुद्धे स्थाने सीदतीति शुचिषत्। सर्वं जनं प्राणरूपेण वासयतीति वसुर्वायुः। तद्रूपेणान्तरिक्षे सीदति। होता देवता ह्वाता तद्रूपेण वेद्यम्। होमस्थाने सीदति। अतिथिर्ब्राह्मणः। तद्रूपेण दुरोणेषु गृहेषु सीदति। नृषु मनुष्यदेहेषु अधिष्ठातृरूपेण सीदति। वरे उत्कृष्टवस्तुनि श्रेष्ठत्वनिमित्तरूपेण सीदति। ऋते सत्ये तद्रूपेण सीदति। व्योमन्याकाशे सूर्यादिरूपेण सीदति। अप्सु विष्णुनाभिकमलरूपेण। गोष्विन्द्रियेष्वधिष्ठातृत्वेन। ऋतेषु यज्ञेषु उद्देशरूपेण। अद्रौ मेरूर्ध्वस्थसत्यलोके ईश्वरत्वेन जायते। ईदृशस्त्वं सर्वव्यापी ऋतं सत्यरूपो बृहत् ब्रह्म असीति शेषः ॥ प्रतद्विष्णुरिति। तत् तस्मिन् सर्वकर्मणि। प्रस्तवते प्रकर्षेण स्तूयसे। कर्मणो वीर्याय बलाय। कुचरो भूमिस्थः। भीमो भयङ्करः। मृगो न सिंहः! यथोर्ध्वमुत्पत्य गिरिष्ठाः गिरिस्थो भवति, तथा यस्य विष्णोर्वामनस्य उरुषु विस्तीर्णेषु त्रिषु विक्रमणेषु विश्वा

कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ।
सूर्यमण्डलसंभूते वरुणालयसंभवे ।।४६।।

---

भुवनानि सर्वे लोकाः । अधिक्षियन्ति आधिक्येन निवसन्ति । स विष्णुः प्रस्तवते । रुद्रकलोत्तरमीश्वरकलोत्तरं च पठ्यमानस्त्र्यम्बकमिति तद्विष्णोरिति च मन्त्रो व्याख्यातः । सदाशिवकलोत्तरं पठितो गर्भशापमोचनमन्त्रः प्राग् व्याख्यातोऽपि प्रकृते सदाशिवप्रार्थनात्मना योजनीयः । तत्र विष्णुरीश्वरादिक्षितयस्तव्यापकः सदाशिव इति विशेषः । अन्यत् सर्वं पूर्ववत् ।

एवंविधद्रव्यस्य मधुरूपतासंपादनाय मधुवातेति मन्त्रः । ऋतायते सत्यप्रापकत्वात्तद्रूपाय द्रव्याय वाता वायवः सिन्धवः समुद्रा मधु क्षरन्ति वर्षन्ति । एवमोषधीस्तदभिमानिन्यो देवताः । नः अस्मदर्थं माध्वीर्मधुकर्यः सन्तु । तथा नक्तं रात्रिः उषस्तदुपलक्षितं दिनं मधुकरं पार्थिवं रजो रेणुः मधुमत् । वृष्ट्या पोषणात् पितृरूपी द्यौर्द्युलोकः मध्वस्तु। एवं वनस्पतिर्वृक्षादिः सूर्यश्च गावश्च मधुमानित्यादिरर्थः । एवं हेतुपात्रे संस्कृतस्य द्रव्यस्य पूर्णत्वार्थं तेजस्त्वार्थं च हिरण्यपात्रमिति घृणिरिति च मन्त्रः पूर्वं व्याख्यातः । शुक्रशापमोचनमन्त्रमाह––एकमिति ।।४५।।

मन्त्रार्थस्तु स्थूलसूक्ष्ममयं कार्यकारणरूपं जगद् ध्रुवं शाश्वतमेकमद्वितीयं ब्रह्मैव । यत एवं तेन हेतुना हे सुरे ! ते तव कचोद्भवां ब्रह्महत्यामह नाशयामीति । शुक्रशापस्यकचहिंसनात्मकब्रह्महत्यामूलकत्वादादौ ब्रह्महत्यामोचनमुक्त्वा शुक्रशापमोचनमाह––सूर्यमण्डलेति । एतदुक्तं कुलोत्तरे देव्युवाच–सुरादेवी कथं देव सूर्यमण्डलसंभवा । समुद्रजाता सा देवी सूर्यमण्डलसंश्रया ।। केन वै कारणेनेश वद मे करुणानिधे । भैरव उवाच––शृणु देवि प्रवक्ष्यामि गुह्याद् गुह्यतमं महत् ।। समुद्रमथने जाता सुरा देवी पुरा शिवे । आनन्दरूपिणी सर्वलोकानां च प्रियङ्करी ।। सा दैवतैर्यदा शप्ता स्वात्मानं लोप्तुमिच्छती । कान्तारान्तं समाश्रित्य तपस्तेपे सुदारुणम् ।। तपन्तीं तपसा तां तु साक्षाल्लक्ष्मीसहोदरीम् । तरुणीं चारुसर्वाङ्गीमुपतस्थे दिवाकरः ।। सा प्रार्थिता तु सूर्येण सम्यगाश्वासिता तदा । विवेश मण्डलं तस्य तत्र संभाविता सुरा ।। स्थिता बहुतिथं पश्चात् सुरा दीना वसुन्धरा । नराः सुरास्तथा देवि निरानन्दास्तदाऽभवन् ।। प्रसाद्य तपसा लोकधातारं तेन चोदिताः । तपसाराध्य मार्तण्डं सुरादेवीं तु वव्रिरे ।। तदा सुरोत्तमेनोक्ता गच्छ देवि महीतलम् । संभाविता सर्वलोकैरित्युक्ता सा परात्परा ।। तरुणारुणवर्णाभा चारुसर्वाङ्गसुन्दरी । निर्गता दिननाथस्य मण्डलात् परमेश्वरी ।। वरान् लब्ध्वा स्वाभिमतान् लोकानन्दनहेतवे । आगता वसुधायां सा सर्वलोकप्रियङ्करी ।।" इति ।।४६।।

उमाबीजमयत्वमपि तत्रैवोक्तम्—"शृणु देवि प्रवक्ष्यामि यथोमाबीजतां गता । पुरा कैलाशशिखरे लीलाखेलनतत्परा ।। सुरया प्रियया सख्या चोमा शङ्करवल्लभा ।

उमाबीजमये देवि शुक्रशापाद् विमुच्यताम् ।
वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ॥४७॥
तेन सत्येन ते देवि ब्रह्महत्या व्यपोहतु ।
अथ वेदभवान्मन्त्रान् पठेन्नियतमानसः ॥४८॥
स्वदिष्ठयेत्यादि ऋग्भिः पञ्चभिर्वृत्रशापतः ।
मोचयित्वा द्वयेनाथ विष्णुर्योनिं मुखेन वै ॥४९॥
हिरण्मयीति चैकेन गर्भशापाद् विमोचयेत् ।
त्रिभिष्ट्वादिद्वयेनैव मोचयेदग्निशापतः ॥५०॥
अप्यायस्वेति चैकेन सोमशापाद् विमोचयेत् ।
एकेनेममादिना च सितासितमुखैकतः ॥५१॥

---

सुप्रीता सखिभावेन वरं तस्यै ददौ तदा ॥ सा वव्रे च सुरा देवी गौरीं शिवसतीं तदा । देवि गौरि नमस्तुभ्यं यदि तुष्टासि मे शिवे ॥ वरं ददासि चेन्मह्यमहं शप्ता पुरा किल । बुद्धिभ्रंशकरी चेति जनानामत्र शङ्करि ॥ मां समुद्धर तस्मात्तु शापात् परशिवप्रिये । आत्मविद्यास्वरूपा त्वमुमाभगवती मता ॥ अहं पीता येन तस्मै प्रसीद त्वं च सत्वरम् । मया संतर्पिता च त्वं द्रुतं प्रीतिं समावह ॥ इति तद्वाक्यमाकर्ण्य संतुष्टा प्राह शङ्करी । शृणु वत्से सुरादेवि न यावत्तर्पिता त्वया ॥ न मे प्रीतिर्भवेत्तावत् सत्यं सत्यं न संशयः । यस्त्वां मह्यं समर्प्याथ सेवते भक्तिभावतः ॥ प्रविष्टा तं तस्य चान्तर्विद्या मां जनयिष्यसि । मम विद्यास्वरूपायाः कारणं भव सत्वरम् ॥" इति । उमाविद्या तत्कारणत्वादुमाबीजमयी । प्रणवः ॐकारः । बीजं कारणम् । तच्च बीजं ब्रह्मानन्दमयम्, तदुपासकानां ब्रह्मानन्दप्रापकत्वात् ॥४७॥

यदि वेदानां प्रणवो बीजं यदि तद्ब्रह्मानन्दमयं तेन सत्येन व्यपोहतु । अथ पात्रयजनानन्तरम् मन्त्रान् । वृत्रादिशापमोचकान् ॥४८॥

क्रमं परित्यज्यादौ शुक्रशापमोचनकथनं तु शुक्रशापस्य ब्रह्महत्यामूलकत्वेन महत्त्वद्योतनाय । अत एव तन्त्रान्तरेषु शुक्रशापमोचनमात्रमुक्तम् । वृत्रशापमोचनमन्त्रानाह—स्वदिष्ठयेति । आशस इत्यन्तपञ्चभिः । विष्णुर्योनिमित्यादि सृजेत्यन्तद्वयेन मन्त्रेण ॥४९॥

हिरण्ययीत्यादि सूतवे इत्यन्तैकेन । मोचयेत् त्रिभिष्ट्वमित्यादि पुनीहि मा इत्यन्तद्वयेन मोचयेत् ॥५०॥

अप्यायस्वेत्यादि हविः इत्यन्तैकेन विमोचयेत् । इमं म इत्यादि षोमयेत्यन्तैकेन, सितासित इत्यादि भजन्त इत्यन्तैकेन च विमोच्येत्यन्वयः ॥५१॥

तीर्थशापं विमोच्याथ तामन्देत्येककेन वै ।
श्रोणामेकेति चैकेन शिवविष्णोस्तु शापतः ॥५२॥
हिरण्यपात्रमन्त्राभ्यां ब्रह्मशापाद् विमोचयेत् ।
घृणिः सूर्येतिमन्त्रेण सवीर्यत्वं नियोजयेत् ॥५३॥
इत्यष्टादशमन्त्रेण दोषजालाद् विमोचितम् ।
शुक्रशापान्मोचयेद् वै द्रव्यं तत्र समाहितः ॥५४॥
तारं नमो भगवति वारुणीजलमूर्तये ।
ग्रामेश्वरि पथि प्रोक्त्वा ककाराद् देवते ततः ॥५५॥
गृहद्वयं सर्वदोषान्मोचयद्वयमेव च ।
लक्ष्मीमायाकामराजवाग्भवानि ततो लिखेत् ॥५६॥
गन्धं षड्जातिसंयुक्तं प्रत्येकं बिन्दुशोभितम् ।
शुक्रशापविमोचीति कायै पश्चाच्छिरो वदेत् ॥५७॥

---

ता मन्देत्यादि हृतम् इत्यन्तैकेन, श्रोणेत्यादि वतु इत्यन्तैकेन । क्रमेण शिवशापाद्विष्णुशापाच्च विमोच्येति सम्बन्धः ॥५२॥

हिरण्यपात्रमित्यादि दधातीत्यन्तमन्त्राभ्यां विमोचयेत् । घृणिरित्यादि सुवरोमित्यन्तमन्त्रेण । शापदग्धस्य शापमोचनेन निर्दोषत्वेऽपि निर्वीर्यत्वादपेक्षितं सवीर्यत्वमत आह—सवीर्यत्वमिति ॥५३॥

इति स्वदिष्ठयेत्यादि घृणिरित्यन्ताष्टादशमन्त्रेण । दोषजालाद् वृत्रादिशापसमूहात् । विमोचितं द्रव्यम् । तत्र कलशे स्थितमिति शेषः । शुक्रशापान्मोचयेत् । अत्र केचन ऋग्वेदगताः केचन यजुर्वेदगता मन्त्राः केचनोभयगताः । उभयगतेषु क्वचित् पाठभेदः । तत्र स्वस्वशाखापाठः सर्वैर्ग्राह्यः । तथा स्वरोऽपि । ऐकस्वर्यं वा सर्वमन्त्राणाम् । तदुक्तं बृहद्वामकेश्वरे—"वेदमन्त्राः स्वस्वशाखाप्रोक्तपाटस्वरैर्युताः । ऐकस्वर्येण वा पाठो ह्यन्यथा पापमाप्नुयात् ॥" इति ॥ ५४ ॥

तत्र शुक्रशापमोचनमन्त्रस्तु आथर्वणः पूर्वमुक्तः । इदानीं तान्त्रिकमाह—तारमिति । तारं प्रणवम् । प्रोक्त्वेत्यन्वयः । नम इत्यादि पथीत्यन्तं स्वरूपम् । तदनन्तरं ककाराद् देवते इति ॥ ५५ ॥

गृह्ण इति द्विः । सर्वदोषानिति स्वरूपम् । मोचय इति च द्विवारम् । लक्ष्मी श्रीं माया ह्रीं कामराजः क्लीं वाग्भव ऐं ॥ ५६ ॥

गन्ध श । बिन्दुयुक्तं षड्जातिसंयुतं शां शीं इत्यादि । शुक्रेत्यादि कायै इत्यन्तम् । इतीति त्यक्त्वा स्वरूपम् । शिरः स्वाहा ॥ ५७ ॥

षष्ट्यक्षरो महामन्त्रः शुक्रशापविमोचकः ।
इति प्रजप्य तद्द्रव्यलेशेन तलयुग्मकम् ॥५८॥
आर्द्रीकृत्याघ्राय बिन्दुं घ्राणमार्गाद् बिलस्थिते ।
ब्रह्मेन्दुमण्डलान्तस्थसुधारसयुतं स्मरेत् ॥५९॥
निरालम्बः क्षणं पश्चान्नेत्राद् द्रव्यगतं स्मरेत् ।
अशेषं तच्चिदमृतमयं ध्यात्वाऽथ मूलतः ॥६०॥
त्रिधा प्रजप्य कलशदक्षभागे निधापयेत् ।
एवं द्वितीयादिपात्रमण्डलादि प्रपूजयेत् ॥६१॥
सूर्यमण्डलरूपं तु पात्रं ध्यात्वाऽथ तत्र वै ।
निक्षिपेत् तत्र वै शुद्धिं संस्कृत्य सुविधानतः ॥६२॥
बिन्दुना प्रोक्ष्य चालभ्य तद्गायत्रीं त्रिधा जपेत् ।
पशुपाशाय वै विद्महे शिरश्छेऽथ दाय धीः ॥६३॥
महि तन्नस्ततो छागो लिखित्वा तु प्रचोदयात् ।
चतुर्विंशत्यक्षरैषा गायत्री तु पशोः स्मृता ॥६४॥

---

इति स्वदिष्ठयेत्यादि स्वाहेत्यन्तम् । तद्द्रव्यस्य कलशस्थद्रव्यस्य लेशेन । तलयुग्मकं ॥ ५८ ॥

बिन्दुं प्रथमबिन्दुं ब्रह्मरन्ध्रगतचन्द्रमण्डलस्थसुधारसेन अमृतरसेन युतं स्मरेत् ध्यायेत् ॥ ५९ ॥

निरालम्बः अकिञ्चित् चिन्तकः । नेत्रात् नेत्रमार्गात् । कलशस्थद्रव्यगतं तं बिन्दुं स्मरेत् । अनन्तरं तद्बिन्दुयोगात् । अशेषं समग्रं तत् कलशस्थं द्रव्यं मूलतः बालया ॥६०॥

कलशः सामान्यकलशः । द्वितीयादिविधिमाह-- एवमिति । एवं हेतुपात्रवत् । आदिना तृतीयचतुर्थयोर्ग्रहणम् । द्वितीयादिना आधारपात्रयोर्ग्रहणम् ॥३१॥

पात्रं द्वितीयपात्रम् । तत्र अग्निमण्डलरूपेण ध्याते आधारे स्थितं तत्र पात्रे शुद्धिं द्वितीयम् । सुविधानतः पाकशास्त्रोक्तरीत्या । संस्कृत्य निक्षिपेत् ॥ ६२ ॥

कलशस्थितद्रव्यस्य बिन्दुना द्वितीयं प्रोक्ष्य । तद्गायत्रीं पशुगायत्रीम् । वै अथ इति त्यक्त्वा पशु इत्यादि धी इत्यन्तं स्वरूपम् ॥ ६३ ॥

ततः । लिखित्वा इति त्यक्त्वा महीत्यादि यात् इत्यन्तं स्वरूपम् । मन्त्रार्थस्तु— पशूनां पाशो बन्धनं यस्मात् स पशुपाशः परमेश्वरः । द्वितीयार्थे चतुर्थी । तं पशुपाशं

शिवोत्कृतमिदं पिण्डमतस्त्वं शिवतां व्रज ।
उद्बुध्यस्व पशो त्वं हि न पशुस्त्वं शिवो ह्यसि ॥६५॥

एतच्चापि त्रिधा जप्त्वा सद्योजातादिपञ्चकैः ।
अथ सोमकलास्तत्र पूजयेत् पूर्ववत् क्रमात् ॥६६॥

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥६७॥
पूर्णा पूर्णामृता चादिस्वरषोडशसंयुताः ।
कलाषोडशरूपं तु ध्यात्वा शुद्धिं समाहितः ॥६८॥
त्र्यम्बकाख्येन मन्त्रेण तृतीयं प्रजपेत् सुधीः ।
अन्यत् पूर्ववदेवेह मुद्रां वै मण्डलोपरि ॥६९॥

---

विद्महे जानीमः । शिरः शिरोवत् मुख्यः । अविद्यात्मकः पाशः । तस्य छेदो नाशो यस्य स तं धीमहि छिन्नपाशं धीमहीति यावत् । तादृशं पशुं ध्यायामः । तत् तस्मादेवं ध्यानात् । नः अस्मदर्थं छागः पूर्वं छिन्नपाशत्वेन ध्यातः । तं प्रचोदयात् प्रेरयेत् । ईश्वरज्ञैरस्माभिश्छिन्नपाशत्वेन ध्यातं प्रथम ईश्वरः छिन्न पाशं करोत्विति तात्पर्यम् ॥ ६४ ॥

शिवाय शिवपूजनायोत्कृत्तं छिन्नमिदं पिण्डम् । तवाहमित्यभिमानविषयं शरीरमतः शिवपूजनाय छिन्नत्वात् । त्वं पशुशरीराभिमानी शिवतां शिवभावं व्रज प्राप्नुहि । कथं मम पशोः शिवत्वमिति चेदाह उद्बुध्यस्वेति । हे पशो त्वं न पशुः, किन्तु त्वं हि निश्चयेन शिवोऽसि इति त्वमुद्बुध्यस्व जानीहि । त्वया एवम् अद्यावधि न ज्ञातमिति कृत्वैव तव पशुत्वमिति भावः ॥ ६५ ॥

एतत् शिवोत्कृत्तेति पञ्चकैः, अभिमन्त्रयेदिति शेषः । अथ अभिमन्त्रणानन्तरम् । तत्र द्वितीये पूर्ववत् प्रागादिवृत्तक्रमात् ॥ ६६ ॥

कला आह—अमृतेत्यादि ॥ ६७ ॥

आदि अकारादि । अं अमृताकलायै नम इत्यादि ॥ ६८ ॥

पशुपाशायेत्यादि सदाशिवोमित्यन्तमन्त्रस्थाने तृतीयं त्र्यम्बकमित्यादि मृतात् इत्यन्तेन प्रजपेत् । अन्यत् मण्डलादिसोमकलान्तं पूर्ववद् द्वितीयवत् । मुद्राविधिमाह-- मुद्रामिति ॥ ६९ ॥

तद्विष्णोरिति मन्त्रेण बिन्दुना प्रोक्ष्य वै जपेत् ।
सर्वं तदमृतं बुद्ध्वा कुम्भे तल्लेशकं क्षिपेत् ॥७०॥
द्वितीयबीजं प्रजपन् बिन्दुना पूजयेत्ततः ।
ब्रह्माण्डखण्डसंभूतमशेषरससंभृतम् ॥७१॥
आपूरितं महापात्रं पीयूषरसमावह ।
इति मन्त्रं जपन् देवि तत्र सोमकला यजेत् ॥७२॥
संपूज्येन्दुकलारूपं विभाव्यामृतमध्यतः ।
प्रागादिमातृकारूपं प्रादक्षिण्यात् त्रिकोणकम् ॥७३॥
प्रागग्रमकथाद्याभी रेखाभिर्वै विराजितम् ।
हलक्षकोणं हक्षाढ्यपार्श्वं हंसोदरं ततः ॥७४॥

---

मुद्राया आधाराद्यग्निकलादिकं नास्ति । मण्डलोपरि न्यस्तमुद्रा बिन्दुना प्रोक्ष्य तद्विष्णोरित्यादिपदमित्यन्तेन प्रजपेत् । सर्वं द्वितीयादिमुद्रान्तम् । कुम्भे हेतुपात्रे तल्लेशकं द्वितीयादित्रयलेशम् ॥ ७० ॥

द्वितीयबीजं कामराजबीजम् । प्रजपन् क्षिपेदिति सम्बन्धः । बिन्दुना कलशस्थितेन द्रव्येण हेतुपात्रमापूरयेत् । ततः लेशक्षेपानन्तरम् । तत्र मन्त्रमाह—ब्रह्माण्डेति ॥ ७१ ॥

अस्यार्थः—हे सुरे महापात्रं हेतुपात्रं त्वया आपूरितं तत्र त्वं पीयूषरसममृतरसमावह सर्वतो धारय । रसस्य विशेषणद्वयं ब्रह्माण्डेत्यादि । ब्रह्माण्डस्य खण्डे एकदेशे क्षीरोदधिरूपे संभूतः । अशेषैरखिलै रसैरोषधिगतैः संभृतः संपादित इति । इति मन्त्रं जपन्नापूरयेदिति सम्बन्धः । तत्र द्रव्ये ॥ ७२ ॥

सोमकलां संपूज्य सोमकलारूपं द्रव्यं विभाव्य । अमृतमध्यतो हेतुपात्रगतद्रव्यमध्ये । प्रागादिदिशमारभ्य प्रादक्षिण्येन मातृकामयं त्रिकोणं विभाव्येत्यन्वयः ॥७३॥

तत्त्रिकोणं पूर्वाग्रमकारादिककारादिथकारादिरेखात्रयशोभितम् । तत्र पूर्वदिगारभ्य निरृतिपर्यन्तम् अकारादिविसर्गान्तम् । निरृत्यादि वायुपर्यन्तं कादितान्तम् । वाय्वादिप्रागन्तं थादिसान्तं क्रमेण कोणेषु बाह्यतः हलक्षान् । हक्षौ क्रमेण दक्षवामपार्श्वयोः । त्रिकोणोदरे हंस इति ॥ ७४ ॥

चतुरस्रं बहिर्वृत्तं त्रिषट्कोणाष्टपत्रकम् ।
विभाव्य मातृकागर्भे पञ्चरत्नानि पूजयेत् ॥७५॥
गगनस्वर्गमर्त्यानि पातालं नागमेव च ।
रत्नायान्ते मुखे बीजयुतानि क्रमतोऽर्चयेत् ॥७६॥
महाविद्यासमारूढे रूपे बिन्दुयुते क्रमात् ।
आदिव्यञ्जनयोगेन सर्वान्ते हृदयं वदेत् ॥७७॥
ततोऽर्चयेच्चतुरस्रे दक्षे वामे क्रमाच्छिवे ।
आनन्दभैरवद्वन्द्वं तर्पयेदपि बिन्दुना ॥७८॥
खेचर्याद्ये धरोपस्थे रूपतत्परपूर्वयाः ।
विद्यारूढा बिन्दुयुता ततस्त्वानन्दभैरवा ॥७९॥
यान्ते शिखाद्ययोरस्य व्यत्यासात्तुष्टिरेव च ।
विद्यास्थाने तु बीजं स्यात् सुधादेव्यै च नेत्रकम् ॥८०॥

---

मातृकात्रिकोणाद् बहिः चतुरस्रादित्रिकोणं पश्चिमाग्रम् । एतदुक्तं त्रिपुरार्णवे—"वर्णत्र्यस्राद् बहिर्देवि चतुरस्रं ततो बहिः । पश्चिमाग्रं त्रिकोणं च षट्कोणं वसुपत्रकम् ॥" इति । षट्कोणबहिरष्टदलप्रकृतिभूतं वृत्तमपि ज्ञेयम् । एवं विभाव्य मातृकागर्भे मातृका-त्रिकोणमध्ये ॥ ७५ ॥

रत्ननामान्याह—गगनेत्यादि । मन्त्रानाह—रत्नायेत्यादि । अन्ते गगनेत्यादिना-मान्ते । गगनरत्नायेत्यादि । मुखे आदौ ॥ ७६ ॥

बीजान्याह—महाविद्येत्यादि । महाविद्या ॐ । तदारूढे तत्संयुक्ते रूपे लकारे लूं इत्यस्मिन् आदिव्यञ्जनं गगनेत्यादिनामादिव्यञ्जनं गकारादिः । तेन ग्लूं गगन-रत्नायेति । एतत्सर्वस्यान्ते हृदयं नम एवं स्लूं स्वर्गरत्नाय नम इत्यादि ज्ञेयम् ॥ ७७ ॥

तत एवं त्रिकोणार्चनानन्तरम् । अर्चयेद् बिन्दुना तर्पयेदपीन्वयः ॥ ७८ ॥

आनन्दभैरवमन्त्रमाह—खेचर्याद्ये इत्यादि । खेचर्याद्ये हकारसकारौ धराक्ष उपस्थम् । रूप ल । तत्पर व । पूर्व र । च स्वरूपम् । विद्या महाविद्या ॐ आनन्द-भैरवा इति स्वरूपम् ॥ ७९ ॥

य स्वरूपमन्ते यकारान्ते । शिखा वषट् । आनन्दभैरवीमन्त्रमाह—आद्ययोरिति । अस्य मन्त्रस्याद्ययोर्हकारसकारयोर्व्यत्यात् सह इत्युच्चारात् । विद्यास्थाने ऊकारस्थाने तुष्टिः ईकारः । एतद्बीजान्ते सुधादेव्यै इति स्वरूपम् । नेत्रकं वौषट् ॥ ८० ॥

आनन्दभैरवं देवि तद्वदानन्दभैरवीम् ।
तर्पयेत् पङ्क्तिवर्णेन मुनिवर्णेन वै क्रमात् ।।८१।।
खेचरी ते प्रवक्ष्यामि वह्निवायुसदाशिवाः ।
ततः पाणिस्पर्शकौ च नीलास्या बिन्दुभूषिताः ।।८२।।
अथ बाह्यं त्रिकोणे तु शक्तीनां त्रितयं यजेत् ।
कामेश्वरीं च वज्रेशीं तथैव भगमालिनीम् ।।८३।।
क्रमाद् मूलार्णसंयुक्तान्नमोन्तानग्रतस्तथा ।
वामावर्तेन मध्ये तु बालां त्रिपुरसुन्दरीम् ।।८४।।
प्रादक्षिण्येन षट्कोणे चाङ्गदेवीः प्रपूजयेत् ।
असिताङ्गादिमिथुनाष्टकमष्टदलाम्बुजे ।।८५।।
ततस्तत्पात्रमालभ्य जपेत् प्रोक्ताः कलाः पुनः ।
पञ्च ब्रह्मकलाश्चापि तच्छृणुष्व समाहिता ।।८६।।

---

एवं मन्त्रद्वयेन हेतुपात्रद्वयं दर्व्यामादाय मन्त्रान्ते आनन्दभैरवम् आनन्दभैरवीं च पूजयेत्तर्पयेच्च । दर्व्यामादानं त्वावश्यकम् । अन्यथा हेतुपात्रादेव तर्पणे हेतुपात्रगतद्रव्यस्य शेषत्वापत्तेः । अत एव सप्तदश उक्तम्—"अन्यत्र दर्व्यामादाय तर्पयेदावृत्ति क्रमात्" इति । तर्पणशेषस्यावरणशेषेण सह सुवासिनीपूजान्ते स्वात्मनि प्रतिपत्तिर्ज्ञेया ।। ८१ ।।

वह्नि हं । वायुः स । सदाशिव ख । पाणि फ । स्पर्श र । नीला नीलपताका ए ।। ८२ ।।

अथ चतुरस्रपूजानन्तरं बाह्यत्रिकोणे वर्णत्रिकोणाद् बहिःस्थिते ।। ८३ ।।

मूलार्णाः मूलबीजानि वाग्भवादीनि । नमोऽन्तान् ऐं कामेश्वर्यै नम इत्यादिमन्त्रान् । अग्रतः अग्रकोणाद्वामावर्तेन । मध्ये सम्पूर्णमूलान्ते बालात्रिपुरसुन्दर्यै इति ।। ८४ ।।

अङ्गदेवीः । ऐं हृदयाय नमः । हृदयदेवी श्री इत्यादि । अङ्गदेवीति देवीपदस्वारस्यात् प्राचीनसम्प्रदायाच्च न केवलन्यासमन्त्रेण मण्डलवत् पूजा । असिताङ्गादिमिथुनमावरणोक्तम् । अत्रोभयत्र प्रागादिक्रमात् पूजा विशेषानुक्तेः ।। ८५ ।।

ततः अष्टदलपूजानन्तरं तत्पात्रं हेतुपात्रं प्रोक्ताः कला अग्निसूर्यसोमकलाः पुनः पूर्वमाधारादिपूजायां प्रजप्ताः ।। ८६ ।।

सृष्टिर्ऋद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा।
स्थितिः सिद्धिर्ब्रह्मकला दशकाद्यर्णसंयुताः ॥८७॥
जरा च पालिनी शान्तिरीश्वरी रतिकामिके।
वरदा ह्लादिनी प्रीतिर्दीर्घा विष्णोर्दश स्मृताः ॥८८॥
टादिवर्णयुतास्तीक्ष्णा तथा रौद्री भया स्मृता।
निद्रा तन्द्री क्षुधा क्रोधिनी क्रियोद्गारी मृत्युका ॥८९॥
दश रुद्रकलाः पादिवर्णयुक्ता महेश्वरि।
पीता श्वेतारुणा चासितानन्ता पादिसंयुताः ॥९०॥
पञ्चेश्वरकलाश्चादि षोडशस्वरसंयुताः।
सदाशिवस्य तु कलास्ताः शृणु प्रोच्यतेऽधुना ॥९१॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरथेन्धिका।
दीपिका रेचिका चैव मोचिका च परा तथा ॥९२॥
सूक्ष्मा सूक्ष्माऽमृता ज्ञाना मृता चाप्यायिनी तथा।
व्यापिनी व्योमरूपा चानन्ता वै षोडशोदिताः ॥९३॥

---

पञ्चब्रह्मकला आह—सृष्टीत्यादि। काद्यैः ञान्तैः संयुताः दशकलाः। कं सृष्टिकलायै नम इत्यादि ॥ ८७ ॥

विष्णुकला आह—जरेत्यादि। रतिः कामिका इति द्वयम् ॥ ८८ ॥

विष्णुकलाः टादिनान्तवर्णयुताः। टं जराकलेत्यादि। रुद्रकला आह—तीक्ष्णेत्यादि। क्रिया उद्गारीति द्वयम्। मृत्युका मृत्युः। दश रुद्रकलाः स्मृता इत्यन्वयः ॥ ८९ ॥

रुद्रकलाः पादिशान्तवर्णयुक्ताः। ईश्वरकला आह—पीतेत्यादि। चः पादपूरणार्थः। षादिक्षान्तसंयुताः पञ्चेत्यन्वयः ॥ ९० ॥

आदि अकारादिविसर्गान्तस्वरसंयुताः कलाः ॥ ९१ ॥

सदाशिवकला आह—निवृत्तीत्यादि ॥ ९२ ॥

अनन्तान्ताः षोडश ॥ ९३ ॥

नमोन्तास्तु क्रमाज्जप्या आदौ तेषां मनुं पठेत् ।
मूलबीजत्रयं तारवर्णत्रितयमेव च ॥९४॥
शिवशक्तियुगं बिन्दुनादयुग् बिन्दुयोगतः ।
तत्तन्नामकलान्ते तु हृदयं चेति वै भवेत् ॥९५॥
अन्ते च हंसः शुचिषत् प्रतद्विष्णुश्च त्र्यम्बकम् ।
तद्विष्णोरिति योनिं च ब्रह्मादीनां पठेत् क्रमात् ॥९६॥
ततस्तु मधुवातेति त्रयेण प्रजपन् बुधः ।
मधुरूपं च सम्पाद्य हिरण्येति च पूर्णताम् ॥९७॥
घृणिमन्त्रेण तेजस्त्वं ब्रह्मरूपं तु भावयेत् ।
अथ तत्र सुधादेवीं हृदि ध्यात्वा समावहेत् ॥९८॥

---

उक्ताः कला नमोऽन्ता जप्याः । तेषामग्न्यादिसदाशिवान्ताष्टकलामन्त्राणामादौ मनुमाह—मूलेत्यादि । मूलबीजत्रयं वाग्भवादि । तारस्य प्रणवस्य वर्णत्रितयम्, अकारोकारमकाराः ॥ ९४ ॥

शिवशक्तियुगं अकारहकारौ । शिवशक्तियुगं च बिन्दुनादयुक् बिन्दुनादपदाभ्यां युक्तम् । अं बिन्दुः । हं नादेति । बिन्दोर्योगो येषां ते । ततः तेभ्योऽनन्तरं तत्तन्नाम अग्निब्रह्मेत्यादि । कलेति स्वरूपम् । अन्ते हृदयं नमः । तेन ऐं अग्निकलायै नमः । अं ब्रह्मकलायै नमः । अं बिन्दुरीश्वरकलायै नमः । हं नादः सदाशिवकलायै नमः इत्यादिपद्धतिषु स्पष्टम् । तत्तन्नामकलेत्यनेनावृत्तेन सर्वकलामन्त्रोऽपि ज्ञेयः । यथा तत्तन्नामधूम्रार्चिः सृष्टीत्यादि । तेन यं धूम्रार्चिकलायै नमः, कं सृष्टिकलायै नमः इत्यादि ॥ ९५ ॥

हंसः शुचिषदित्यादि बृहद् इत्यन्तम् १, प्रतद्विष्णुरित्यादि विश्वेत्यन्तम् २, त्र्यम्बकम् इत्यादि मृतात् इत्यन्तं ३, तद्विष्णोरित्यादि पदमित्यन्तम् ४, योनिं विष्णुर्योनिमित्यादि स्रजेत्यन्तम् ५, ब्रह्मादिकलानामन्ते क्रमात् पञ्चमन्त्रान् पठेदिति सम्बन्धः ॥ ९६ ॥

तत एवं प्रजपानन्तरम् । मधुवातेत्यादि वन्तु न इत्यन्तमन्त्रत्रयेण हेतुपात्रद्रव्यस्य मधुरूपं मधुरूपतां भावनया सम्पाद्य अर्थात्तन्मन्त्रत्रयं प्रजपन् हिरण्यपात्रमिति पूर्वोक्तमन्त्रेण पूर्णरूपतां सम्पाद्य ॥ ९७ ॥

घृणिः सूर्येत्यादि सुवरोमित्यन्तेन तद् द्रव्यस्य तेजस्त्वं सम्पाद्य ब्रह्मरूपं भावयेत् । अत्र हंसः शुचिषदित्यादिमन्त्राः पूर्वमेव व्याख्याताः । अथ एतदनन्तरम् । तत्र हेतुपात्रे ॥ ९८ ॥

बालसूर्यारुणां देवीं स्वर्णवस्त्रां त्रिलोचनाम् ।
सृणिपाशवराभीतिकरां पद्मस्थितां स्मरेत् ॥९९॥
तामावाह्याखिलकला देवतासहितां शिवे ।
प्राणं द्विधा प्रतिष्ठाप्य मातृकां च त्रिधा पठेत् ॥१००॥
अखण्डैकरसानन्दकरे परसुधात्मनि ।
स्वच्छन्दस्फुरणामत्र निधेह्यकुलरूपिणि ॥१०१॥
अकुलस्थामृताकारे सिद्धिज्ञानकरे परे ।
अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥१०२॥
तद्रूपैकैकरस्यत्वं कृत्वार्घ्ये चित्स्वरूपिणि ।
भूत्वा परामृताकारे मयि चित्स्फुरणं कुरु ॥१०३॥

---

ध्यानमाह—बालेत्यादि । सृणिरङ्कुशः । दक्षोर्ध्वादिः पर्यन्तमायुधानि ॥ ९९ ॥

तां ध्यातां सुधादेवीम् आवाहयेति । एतदुक्तं त्रिपुरार्णवे—"आवाहनं च मुख्यस्य यथोक्तविधिना भवेत् । अन्यत्राङ्गेषु ध्यातानामागतानां विभावनम् ॥" इति । ध्याता सुधादेवी पात्रे आगतेति विभावनमेव प्रकृते आवाहनम् । एवमेव स्नानसन्ध्यादौ सर्वत्र ज्ञेयम् । समस्तकलासहितसुधादेव्याः प्राणप्रतिष्ठां त्रिधा तन्मन्त्रजपात्मिकां द्विवारं कृत्वा । मातृकां त्रिपञ्चाशद्वर्णमयीं विद्याम् ॥ १०० ॥

अखण्डेत्यादि चित्स्फुरणं कुरु इत्यन्तं मन्त्रत्रयं सुधादेवीप्रार्थनारूपम् । तस्यार्थः—हे अकुलरूपिणि । अकुलं ब्रह्मरन्ध्रस्थं सहस्रदलं तत्रस्थामृतमयत्वात्तद्रूपा । अत्र पात्रगतद्रव्ये । स्वच्छन्दस्य स्वतन्त्रस्य चिदात्मनः स्फुरणां स्फूर्तिं स्फूर्तिव्यञ्जकतां निधेहि । अत्रेत्यस्य विशेषणद्वयम्—अखण्डेत्यादि । अखण्डोऽविच्छिन्न एकरसो वस्त्वन्तरासंभिन्नो य आनन्दस्तं करोति अभिव्यञ्जयति तस्मिन् । परोत्कृष्टा सर्वामरत्वकारिणी या सुधा तदात्मनि ॥ १०१ ॥

हे क्लिन्नरूपिणि आर्द्ररूपिणि । अस्मिन् हेतुपात्रस्थे वस्तुनि द्रव्येऽमृतत्वं निधेहि, आत्मामृतत्वव्यञ्जकतां कुर्वित्यर्थः । वस्तुनो विशेषणत्रयमकुलेत्यादि । अकुले ऊर्ध्वसहस्रदलकमले स्थितं यदमृतं तदाकारे पूर्वं तन्मयत्वेन ध्यातत्वात् । सिद्धिरणिमाद्यैश्वर्यम् । ज्ञानमविद्याविरोधि । एतदुभयं करोति तस्मिन् परे उत्कृष्टे अनायासेनोक्तफलदे ॥ १०२ ॥

हे परामृताकारे परं यदमृतं मोक्षस्तदाकारे मयि देहाभिमानिनि । चितः संविदात्मनः स्फुरणं निर्विकल्पात्मस्फूर्तिं कुरु । कथं स्फुरणं कर्तव्यं तदाह—अर्घ्येत्यादि ।

एतत्त्रयं त्रिबीजाढ्यं चतुर्धा तत्र वै जपेत् ।
अमृतेशीं पञ्चधा च विद्यां तु नवधा जपेत् ॥१०४॥
गणेशं च त्रिधा जप्त्वा कुर्याद्धेन्वादिकं प्रिये ।
योनिं प्रदर्श्य तत्रैव तां यजेत् पञ्चधाऽपि वा ॥१०५॥
वाग्भवं चापि पातालं कालाग्निं चामृतं पुनः ।
अन्त्यबाणस्ततः पश्चादमृते चामृतोद्भवे ॥१०६॥
अमृतेश्वरि वै चामृतवर्षिणि तथामृतम् ।
स्रावयद्वितयं मूर्धा पञ्चत्रिंशाक्षरो मनुः ॥१०७॥
कालस्पर्शौ चाङ्गदास्थौ कालाग्निस्तु सबिन्दुकः ।
रागः सबिन्दुविद्यास्थश्चामृताख्यं भवेत् प्रिये ॥१०८॥
मन्त्रोऽयममृतेश्या वै साधकानां शुभावहः ।
तारो लक्ष्मीस्तथा माया कामश्चन्द्रस्तथेश्वरः ॥१०९॥

---

अर्घ्ये हेतुपात्रस्थे द्रव्ये । चित्स्वरूपिणी चित्प्रकाशस्वरूपिणी भूत्वा तद्रूपं परात्मरूपमेकं मुख्यं यदैकरस्यत्वमेकाकारत्वं तन्मयि कृत्वा हेतुपात्रद्रव्ये चित्प्रकाशरूपिणी भूत्वा मदन्तः प्रविश्य निर्विकल्पतां संपाद्य चित्स्फूर्तिं कुर्विति भावः ॥ १०३ ॥

एतत्त्रयमखण्डेत्यादिश्लोकत्रयमादौ वाग्भवादित्रयाणामेकैकबीजेनाढ्यं क्रमाद्युतम् । तत्र हेतुपात्रे अमृतेशीं वक्ष्यमाणां विद्याम् । विद्यां मूलविद्याम् ॥ १०४ ॥

गणेशं वक्ष्यमाणं मनुम् । धेन्वादिरिति सामान्यकलशोक्तामृतीकरणादिचतुष्टयम् । तत्रैव हेतुपात्रे एव । एवकारः पुनरर्थकः । तेन हेतुपात्रे धेन्वादिकं प्रदर्श्य पुनर्योनिं प्रदर्शयेदित्यर्थः । योनिमयीत्यन्वयः । तां सुधादेवीं पञ्चधा गन्धाद्यैः पञ्चोपचारैः । वाकारोऽङ्गपूजने वक्ष्यमाणदशोपचारपञ्चोपचारयोर्विकल्पस्य सूचकः ॥ १०५ ॥

अमृतेशीमन्त्रमाह—वाग्भवमित्यादि । वाग्भवं ऐं । पातालं प्लूं । कालाग्निं स्प्रौं । अमृतं जूं । अन्त्यबाणः सः । च ॥ १०६ ॥

वै च तथा इति त्यक्त्वा अमृते इत्यादि अमृतमित्यन्तं स्वरूपम् । स्रावयेति द्विवारं मूर्धा स्वाहा । अमृतेति स्थलचतुष्टयेऽप्यसन्धिः ॥ १०७ ॥

पातालबीजं पञ्चरत्नपूजायामुक्तम् । कालाग्निबीजमाह—कालेत्यादि । काल ल । स्पर्श र । अङ्गदा औ । अमृतबीजमाह—राग इत्यादि । रागः ज । विद्या महाविद्या ऊ ॥ १०८ ॥

गणेशमनुमाह—तार इत्यादि । तारः ॐ । लक्ष्मीः श्रीं । माया ह्रीं । कामः क्लीं । चन्द्रः ग्लौं । ईश्वरः सबिन्दुः इत्यन्वयः मं ॥ १०९ ॥

सबिन्दुर्गणपान्ते तु तये वरवरात्तुद ।
सर्वपश्चाज्जनं मे वशमानय शिरस्ततः ॥११०॥
अष्टाविंशाक्षरो ह्येष महागणपतेर्मनुः ।
ईशरूपौ चाङ्गदास्थौ सबिन्दुश्चन्द्र ईरितः ॥१११॥
शङ्खाधो मण्डलं पूज्य चाधारेऽग्निकला यजेत् ।
सामान्यार्घ्यपदेनाथो शङ्खे सूर्यकला यजेत् ॥११२॥
सामान्यतो येनापूर्य कुम्भबिन्दुं विनिक्षिपेत् ।
ततः सोमकलाः पूज्य चामृतीकरणादिकम् ॥११३॥
मूलाष्टकेनाभिमन्त्र्य दर्व्या सर्वं पवित्रयेत् ।
एवमेव विशेषार्घ्यपात्रे सूर्यकलान्तकम् ॥११४॥
कुम्भामृतापूरणं च ततः सोमकला यजेत् ।
मूलाष्टकेनाभिमन्त्र्य शिवरूपं विभावयेत् ॥११५॥
ततः पीठं समभ्यर्च्य यजेदात्मानमान्तरम् ।
विशेषार्घ्यात्मनोर्मध्ये मण्डले स्थापयेच्छिवे ॥११६॥

---

अन्ते तु आत्तु पश्चात् इति त्यक्त्वा गणपेत्यादि मानय इत्यन्तं स्वरूपम् । शिरः स्वाहा ॥ ११० ॥

चन्द्रबीजमाह—ईशेत्यादि । ईश ग । रूप ल । अङ्गदा औ ॥ १११ ॥

शङ्खविधिमाह—शङ्खेत्यादि । मण्डलं पूर्ववत् संपूज्य । मण्डलादिपूजनं सामान्यार्घ्यपदेन कर्तव्यम् । सामान्यार्घ्यमण्डलाय नम इत्यादि ॥ ११२ ॥

शङ्खं सामान्यकलशजलेनापूर्य कुम्भबिन्दुं हेतुपात्रद्रव्यबिन्दुं शङ्खजले विनिक्षिपेत् । अमृतीकरणादिकं चतुष्टयं कृत्वेति शेषः ॥ ११३ ॥

दर्व्या शङ्खजलमादाय सर्वं पुष्पाद्युपकरणं तज्जलप्रोक्षणेन पवित्रयेत् । एवमेव शङ्खवदेव सूर्यकलापूजनान्तम् ॥ ११४ ॥

शङ्खाद्विशेषमाह—कुम्भेत्यादि । कुम्भामृतेन हेतुपात्रद्रव्येण विशेषार्घ्यापूरणम् । मूलाष्टकेति । पुनरत्र कथनममृतीकरणादिनिवृत्त्यर्थम् । एवं पात्राणि संस्थाप्य सर्वं पात्रं शिवरूपं ध्यायेत् ॥ ११५ ॥

ततः पात्रस्थापनान्तरं सप्तमोल्लासोक्तपीठपूजां कृत्वा आन्तरमात्मानं कुण्डलीरूपं यजेत् । तद्विधिमाह—विशेषेत्यादि । मण्डले उक्तप्रकारे पात्रं स्थापयेदित्यन्वयः ॥ ११६ ॥

साधारपात्रं तत्कुम्भद्रव्येणापूर्य तेन तु ।
संतर्प्य पूजयेन्मूर्ध्नि त्रिगुरून् हृदि देवताम् ॥११७॥
रत्यादिसहितां पश्चात् स्वात्मीकुर्यात्त्रिधा च तत् ।
तत्त्वशोधनमन्त्रैस्तु कुण्डल्यग्नौ हुनेत् सुधाम् ॥११८॥
तत्प्रकारं प्रवक्ष्यामि शृणु देवि समाहिता ।
स्वात्मानं गन्धपुष्पाद्यैरलङ्कृत्य शिवं स्मरेत् ॥११९॥
आधाराद् ब्रह्मरन्ध्रान्तं ज्वलितानलसन्निभम् ।
कुण्डल्यग्निं विभाव्याथ हुनेद् द्रव्यं समन्त्रकम् ॥१२०॥
आणवं कार्मिकं देवि मायिकं च मलं दहेत् ।
आद्यबीजं चात्मतत्त्वं स्थूलदेहं समुल्लिखेत् ॥१२१॥
शोधयामि जुहोमीति मूर्धान्तो मनुरीरितः ।
द्वितीयबीजं विद्याख्यतत्त्वं कार्ममलं तथा ॥१२२॥
सूक्ष्मदेहं च तात्पर्यं शिवतत्त्वं च मायिकम् ।
कारणं देहमपि च शोधयेत् क्रमतः शिवे ॥१२३॥

---

कुम्भद्रव्येण हेतुपात्रद्रव्येण तेन द्रव्येण मूर्ध्नि त्रिगुरून् गुरुपरमगुरुपरमेष्ठिगुरून् हृदि देवतां बालां संतर्प्येति सम्बन्धः । तां देवतां रत्यादिसहितां मूर्ध्नि गुरुत्रयं संतर्प्य हृदि यन्त्रस्थमध्यत्रिकोणवत् त्रिकोणं ध्यात्वा तत्रावरणवत् त्रिकोणेषु रत्यादिमध्ये मूलदेवीं च संतर्पयेत् । तत्पात्रस्थं द्रव्यं त्रिधा स्वात्मीकुर्यात् । तद्द्रव्यमेव सुधा, तदात्मना ध्यातत्वात् । स्वात्मीकारः पानं तदेव कुण्डल्यग्नौ होमः, तथा ध्येयत्वात् ॥ ११८ ॥

तत्प्रकारमात्मयागप्रकारं शिवं स्वात्मानं शिवरूपं स्मरेद् ध्यायेत् ॥ ११९ ॥

ततो मूर्ध्नि हृदि चावरणवत् संतर्प्य कुण्डल्यग्निं ध्यायेत् । तत्प्रकारमाह—आधारादित्यादि ॥ १२० ॥

होमेन दहेत् । समन्त्रकमित्यत्रोक्तं मन्त्रमाह—आद्यबीजमित्यादि । आद्यबीजं ऐं ॥ १२१ ॥

समुल्लिखेदिति त्यक्त्वा आत्मतत्त्वमित्यादि जुहोमीत्यन्तं स्वरूपम् । मूर्धा स्वाहा । द्वितीयबीजं क्लीं आत्मतत्त्वमित्यादिस्थाने विद्यातत्त्वेत्यादि ज्ञेयम् ॥ १२२ ॥

सूक्ष्मदेहमित्यस्यान्ते शोधयामीत्यादि पूर्ववत् । तार्तीयं सौः । एवं मन्त्रैः । क्रमात्तत्त्वं

त्यजेद् ब्रह्मादिमूर्तिभ्यः पात्रं प्रक्षाल्य पुष्पयुक् ।
निधापयेत्ततः पश्चाद् ध्यायेन्मूर्ध्नि निजं गुरुम् ॥१२४॥
निरालम्बः क्षणं पश्चाच्छ्रीगुरुं प्रार्थयेत्ततः ।
श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहकारक ॥१२५॥
अनुज्ञां देहि भगवन् देवताय जनाय मे ।
एवं प्राथ्र्य गुरु पश्चादृष्यादिन्यासमाचरेत् ॥ १२६॥
ध्यात्वा संपूज्य हृदये मूलाधारस्थितां पराम् ।
परसूक्ष्मस्थूलरूपां स्वात्माभिन्नतया पुनः ॥१२७॥

---

शोधयेदित्यर्थः, अत्र द्वितीयतृतीयमन्त्रयोः कार्ममायिकमलकथनात् । "आणवं कार्मिकं देवि मायिकं च मलं दहेत्" इति कथनाच्चाद्यमन्त्रे आत्मतत्त्वमित्यस्यान्ते आणवमलमिति योजनीयम् । एतन्मन्त्रार्थस्तु--प्रकृत्यादिपृथिव्यन्तमात्मतत्त्वम् । मायादिपुरुषान्तं विद्यातत्त्वम् । शिवादिशुद्धविद्यान्तं शिवतत्त्वमित्युक्तम् । आणवमलमविद्या । अनादिकर्मसंस्कारः कार्ममलम् । भेदबुद्धिर्मायिकमलमिति मूले एवाग्रे वक्ष्यति । स्थूलदेहः जाग्रति भासमानः । सूक्ष्मः स्वाप्नः कारणं सौषुप्तः । तत्र ऐंकारात्मकं यदात्मतत्त्वम् । आत्मादितत्त्वत्रयस्य मूलबीजत्रयात्मकत्वं सप्तमोल्लासान्ते उक्तम् । तादृशात्मतत्त्वसम्बन्ध्याणवमलविशिष्टं स्थूलदेहमैंकारात्मकत्वेन भावनया शोधयामि तदनु जुहोमि पूर्वभावितं कुण्डल्यग्नौ हवनं करोमि इति । एवमेवाग्रे मन्त्रद्वयार्थोऽपि ज्ञेयः ॥ १२३ ॥

एवं मन्त्रेण हुत्वा त्यागमाह--त्यजेदित्यादि । होमत्रयान्ते क्रमेण ब्रह्मण इदं न ममेत्यादि त्यागं वदेत् । ब्रह्मादि इत्यादि पदान्मुकुन्दपशुपत्योर्ग्रहणम् । ब्रह्मणे तदनु त्यजेदित्यादि त्रयोदशोल्लासे तथा वक्ष्यमाणत्वात् । पुष्पयुक् पुष्पादियुतं निधापयेत् । मूर्ध्नि अकुलसहस्रदलान्तः ॥ १२४ ॥

पश्चाद् एवं गुरुध्यानानन्तरं निरालम्बः निर्विषयचित्तः । क्षणं स्थित्वेति शेषः । ततः प्रार्थयेदिति सम्बन्धः । प्रार्थनामाह--श्रीगुरो इत्यादि दक्षिणामूर्तिः सनकादीनां ज्ञानोपदेशकः परशिवः ॥ १२५ ॥

मूलस्य ऋष्यादिन्यासम् ॥ १२६ ॥

बालां यथोक्तरीत्या ध्यात्वा मानसैर्यथाशक्त्या सम्पूज्य हृदये ध्यात्वेति सम्बन्धः । मूलाधारस्थितां परां कुण्डलिनीम् । तृतीयोल्लासोक्तपरादिरूपां स्वात्माभिन्नतया ध्यात्वेति सम्बन्धः । पुनः निरालम्ब इत्यन्वयः ॥ १२७ ॥

निरालम्बः क्षणं देवि जगद् विद्यात्ममातृकाः ।
ध्यात्वैकरूपाः पुष्पाणि योजयेदञ्जलौ शिवे ॥१२८॥

ध्यात्वा चक्रस्थितां मूर्तिं कुण्डलीं देवतामयीम् ।
तेजोरूपां ब्रह्मरन्ध्रस्थितचिच्चन्द्रसंयुताम् ॥१२९॥

एकीभूतां चित्प्रकाशमयीं ध्यायन् पठेत् क्रमात् ।
मूलमुच्चार्य श्रीबाला ह्रींचान्ते त्रिपुरसुन्दरि ॥१३०॥

महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥१३१॥

एह्येहि देवदेवेशि त्रिपुरे देवपूजिते ।
परामृतप्रिये शीघ्रं सान्निध्यं कुरु सिद्धिदे ॥१३२॥

---

क्षणं स्थित्वेति शेषः । जगद्विद्यात्ममातृका एकरूपा ध्यात्वा जगन्मातृकविद्यानामैक्यं स्वात्मनि निश्चल इति। एतदेव षोडशोल्लासेऽपि वक्ष्यति। तदित्थं जगत्सर्वं शब्दानुविद्धमेव भासते, तत्तच्छब्दोल्लेखनपूर्वकमेव घटपटादिभासनात् । तथा च भासनात्मकं जगच्छब्दानुविद्धमिति शब्दमयम् । ते च शब्दा मातृकामया इति स्पष्टमेव । सा च मातृका स्वरादिखण्डत्रयरूपा त्रिबीजमयीति विद्यारूपा । विद्यावाच्यदेवतायाः स्वात्माभेदादात्ममयीति योजयेत् धारयेत् ॥ १२८ ॥

चक्रे पुरःस्थितयन्त्रमध्ये स्थिताम् उपविष्टाम् । ध्यानोक्तां मूर्तिं ध्यात्वा । आवाहनक्रममाह—कुण्डलीमित्यादि । कुण्डलीं मूलाधारस्थितां कुण्डलिनीं देवतामयीं पूज्यदेवताभिन्नां तेजोरूपां सुषुम्नामार्गेण षट्चक्रभेदरीत्या ब्रह्मरन्ध्रस्थिताकुलसहस्रदलान्तःस्थचिच्चन्द्रमण्डलेन संयुताम् ॥ १२९ ॥

तेन सहैकीभूतां चिद्रूपप्रकाशमयीं ध्यायन् । पठितव्यमन्त्रमाह—मूलेत्यादि । मूलं बाला । श्रीबाला इत्यस्यान्ते त्रिपुरसुन्दरि ॥ १३० ॥

महापद्मवनमुक्तं ललितोपाख्याने—"पद्माटवीस्थलं वक्ष्ये सावधानो मुने शृणु । समस्तरत्नखचिते तत्र षड्योजनान्तरे । स्थलपद्मानि महाकाण्डानि सन्ति वै" इत्यादि । कारणीभूतो य आनन्दो ब्रह्मानन्दः, यदंशभूताः सर्वे प्राजापत्याद्या आनन्दाः, स विग्रहः शरीरं यस्याः ॥ १३१ ॥

परामृतम् अकुलामृतम् ॥ १३२ ॥

देवेशि भक्तिसुलभे सर्वावरणसंवृत्ते ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥१३३॥
इति नासाध्वना पुष्पे योज्य तेजोबिलस्थितम् ।
निक्षिपेच्चक्रमयस्थमूर्तिमूर्ध्नि ततः शिवे ॥१३४॥
अन्तर्ध्यातां महादेवीं प्रविष्टां भास्वरूपतः ।
बाह्यमूर्तौ सावयवां ध्यायन्मुद्राः प्रदर्शयेत् ॥१३५॥
आवाहनं स्थापनं च सन्निधापनरोधने ।
संमुखीकरणं चावगुण्ठनं चेति षट् क्रमात् ॥१३६॥
हस्तद्वयं चोर्ध्वमुखमृज्वङ्गुलियुतं युतम् ।
अङ्गुल्यग्राणि भुग्नानि कनिष्ठामूलभागतः ॥१३७॥
अङ्गुष्ठाग्रसमायोगान्मुद्रैषावाहनी मता ।
अधोमुखी चेयमेव स्थापनाख्या समीरिता ॥१३८॥
मुष्टिद्वयोदरयुता भवेत् सा सन्निधापनी ।
इयमङ्गुष्ठगर्भात् तु सन्निरोधनरूपिणी ॥१३९॥

---

भक्त्या सुलभा ॥ १३३ ॥

इति पठित्वेति शेषः । नासाऽध्वना नासिकामार्गेण । पुष्पे अञ्जलिस्थिते । तेजः चन्द्रमण्डलयुतकुण्डलिन्यात्मकं बिलस्थितं ब्रह्मरन्ध्रस्थितं चक्रमध्यस्थत्वेन ध्यातमूर्ति मूर्ध्नि तेजोयुतमञ्जलिस्थं पुष्पं निक्षिपेत् । ततो निक्षेपानन्तरम् ॥ १३४ ॥

भास्वरूपतः तेजोरूपेण । बाह्यमूर्तौ चक्रमध्ये ध्यातायां प्रविष्टामिति ध्यायन्निति संबन्धः ॥ १३५ ॥

मुद्रानामान्याह– आवाहनमित्यादि । सन्निधापनरोधने सन्निधापनं सन्निरोधनं चेत्यर्थः ॥ १३६ ॥

एतेषां लक्षणमाह––हस्तेत्यादि । ऊर्ध्वमुखमूर्ध्वमुखकरतलम् । ऋज्वङ्गुल्यो युताः संश्लिष्टा यत्र हस्तद्वये, ईदृशहस्तद्वययुतम् । कनिष्ठाग्रादिमणिबन्धान्तयुतं भुग्नानि ईषद्वक्राणि । भागतः भागे ॥ १३७ ॥

कनिष्ठयोर्मूले तत्तदङ्गुष्ठाग्रयोगात् । इयमेव आवाहनी मुद्रैव अधोमुखी अधोमुख करतला । तर्जनीद्वयपार्श्वयोगेन अङ्गुष्ठमूलपृष्ठयोगेन च कृता ॥ १३८ ॥

मुष्टिद्वयस्य उदरं तलभागः । इयं सन्निधापनी ॥ १३९ ॥

इयमेवोत्तानरूपा संमुखीकरणाभिधा ।
गुरुमन्त्रानथो वक्ष्ये श्रृणु देवेशि संयता ॥१४०॥
चतुस्तारं मूलविद्या चाजपा सोऽहमेव च ।
मध्ये शिवः स्वरूपान्ते निरू च पणहेतवे ॥१४१॥
गुरवे हृदयं चाष्टाविंशत्यर्णो मनुर्भवेत् ।
सप्तार्णाः सोऽहमजपा शिवः स्वच्छप्रकाशतः ॥१४२॥
विमर्शहेतवे देवि परमाद् गुरवे नमः ।
रदनार्णो मनुरयं गुरोराद्यास्त्रयोदश ॥१४३॥
अजपान्ते स्वात्मारामपरमानन्दपञ्जरात् ।
विलीनतेजसे वै परमेष्ठिगुरवे नमः ॥१४४॥
द्विचत्वारिंशदर्णोऽयं परमेष्ठिगुरोर्मनुः ।
ततश्च सकलीकुर्याद् देवतामङ्गमुद्रया ॥१४५॥

---

इयमेव सन्निरोधिन्येव उत्तानरूपा करभद्वययोगेनोर्ध्वमुखतला । अवगुण्ठनमुद्रा तु षष्ठोल्लास उक्ता । गुरुत्रयमन्त्रान् वक्तुमाह--गुर्वित्यादि ॥ १४० ॥

मूलविद्या बाला अजपा हंसः सोऽहमिति स्वरूपम् । हंसः सोऽहमित्यनयोर्मध्ये । शिव इति । अन्ते च इति त्यक्त्वा ॥ १४१ ॥

स्वरूपेत्यादि । गुरवे इत्यन्तं स्वरूपम् । हृदयं नमः । सप्तार्णाः चतुस्तारं बाला । सोहं स्वरूपम् । अजपा हंसः । तः ॥ १४२ ॥

देवि आत् इति त्यक्त्वा शिव इत्यादि नमः इत्यन्तं स्वरूपम् । रदनार्णः द्वात्रिंशदर्णः । गुरोर्गुरुमन्त्रस्य । त्रयोदश सोहम् इत्यन्तम् ॥ १४३ ॥

अजपा हंसः । आत् वै इति त्यक्त्वा स्वात्मेत्यादि नम इत्यन्तं स्वरूपम् ॥१४४॥

परमेष्ठिगुरोर्मनुरित्यनेन आद्यौ द्वौ मन्त्रौ गुरुपरमगुर्वोरित्युक्तं भवति । तत आवाहनादिमुद्राप्रदर्शनानन्तरम् । एतन्मुद्राप्रदर्शने मन्त्रास्तु बालात्रिपुरसुन्दरि इहावाहिता भव इत्यादिनामान्ते इहेतुक्त्वा तिष्ठ तिष्ठ संनिधेहि सन्निरुद्धस्व सन्मुखीभव अवगुण्ठिता भवेति । एवं मन्त्रयोगस्तु--"आवाहनाद्यास्तार्तीयकूटाद्यास्तु प्रदर्शयेत्" इति षोडशोल्लासे वक्ष्यमाणवचनेन ज्ञापितः । तृतीयकूटस्थाने योग्यत्वात् तृतीयबीजयोगः स्पष्टमुक्तो योगिनीतन्त्रे—"आवाहनादिमुद्रा वै इह चावाहिता भव । तिष्ठद्वयं सन्निधेहि सन्निरुद्धस्व सम्मुखी" भवावगुण्ठिता चान्ते भवेत्युल्लिख्य नामतः ।" इति । नामतः

अमृतीकृत्य वै मूलमातृकाभिस्त्रिधा शिवे ।
प्रोक्षयेच्छङ्खतोयेन सञ्जीवन्या हृदि स्पृशन् ॥१४६॥
जीवं समर्प्य बालायाः प्राणस्थापनमाचरेत् ।
लक्ष्मी माया कामराजो नमो गणप कालिके ॥१४७॥
शक्तिः सकलमाया च कामराजो भयस्ततः ।
मायालक्ष्मीरूनविंशवर्णः सजवनीमनुः ॥१४८॥
पादरूपौ तुष्टिबिन्दूभयबीजमुदाहृतम् ।
अथ मुद्रास्तु देवीशं षट्संख्यकाः प्रदर्शयेत ॥१४९॥
संक्षोभिणी विद्राविणी चाकर्षिणी वशंकरी ।
उन्मादिनी तथा योनिः सर्वाद्या बाणयोगतः ॥१५०॥
आदौ तथा वाग्भवं च क्रमादेवं प्रदर्शयेत् ।
अथ तल्लक्षणं वक्ष्ये शृणु देवि समाहिता ॥१५१॥

---

तत्तन्नामोच्चारानन्तरमिहावाहितेत्यादिरित्यर्थः । देवतां षडङ्गन्यासमन्त्रैस्तत्तन्मुद्राप्रदर्शनेन ॥ १४५ ॥

अमृतीकरणं वमिति धेनुमुद्रया देवता हृदि स्पृशन् संजीवनीविद्यया जीवं समर्प्येत्यन्वयः ॥ १४६ ॥

बालायाः प्राणास्थापनं षष्ठोल्लासमन्त्रेण आवृत्तिसहितबालात्रिपुसुन्दरीत्यादिरीत्या कर्तव्यम्, सर्वावरणसंवृते इति मन्त्रलिङ्गादावृतिसहिताया एवावाहितत्वात् "प्राणान् प्रतिष्ठाप्य पश्चात् सावृतेहृंदि संस्पृशन्" इति त्रिपुरार्णवोक्तेश्च । संजीवनीमन्त्रमाह—लक्ष्मीरित्यादि । लक्ष्मीः श्रीं माया ह्रीं कामराजः क्लीं नभः हं गणपकालिके स्वरूपम् ॥ १४७ ॥

शक्तिः सौः । सकलं स्वरूपम् । माया ह्रीं । कामराजः क्लीं । भयः क्लीं । मायालक्ष्मीः ह्रीं श्रीं ॥ १४८ ॥

भयबीजमाह—पादेत्यादि । पादः ब । रूप ल । तुष्टि इ ॥ १४९ ॥

मुद्राणां नामान्याह—संक्षोभिणीत्यादि । सर्वाद्या सर्वसंक्षोभिणी । सर्वविद्राविणीत्यादि । आदौ बाणयोगत इत्यन्वयः ॥ १५० ॥

आदौ मुद्राप्रदर्शनमन्त्रादौ । पञ्चबाणबीजेष्वैकेकयोगतः । तथा योनिमुद्रामन्त्रे वाग्भवम् ऐं योजयेदिति शेषः ॥ १५१ ॥

मध्यमादित्रयाग्रं तु अङ्गुष्ठाग्रेण योजयेत् ।
ऊर्ध्वाभिमुखमथ वै तर्जन्यौ ऋजुरूपिके ॥१५२॥
अग्रयोगात्तयोराद्या मध्यमैवं तु पार्श्वयोः ।
तर्जन्यौ ऋजुरूपे च संश्लिष्टे चापरा मता ॥१५३॥
तर्जनीमध्यमाङ्गुष्ठाग्रमेकत्र तु योजयेत् ।
अनामे च कनिष्ठे च ऋजुरूपेऽग्रयोजिते ॥१५४॥
ऊर्ध्वाङ्गुष्ठा तृतीयैषा वामाङ्गुष्ठादिसन्धिषु ।
दक्षाङ्गुष्ठादिकं क्षिप्त्वा दक्षाङ्गुष्ठादिसन्धिषु ॥१५५॥
वामतर्जन्यादिकं तु निक्षिप्य परमेश्वरि ।
दृढसंयोजनेनैषा मुद्रा तुर्या भवेत् प्रिये ॥१५६॥
कृत्वाञ्जलिं वक्ररूपे मध्यमेऽथ कनिष्ठिके ।
व्यत्यस्य वामोर्ध्वरीत्या मध्यमोदरगे शिवे ॥१५७॥
तर्जन्यनामाः सरलाश्चाग्रदेशयुतास्ततः ।
मध्यमानखसंलग्नावङ्गुष्ठौ पञ्चमी भवेत् ॥१५८॥

---

तासां लक्षणमाह—मध्येत्यादि । हस्तद्वयस्य मध्यमानामाकनिष्ठात्रयाग्रमूर्ध्वाभिमुखमङ्गुष्ठद्वयाग्रेण सह सर्वं योजयेत् । ऋजुरूपिके अवक्रे ॥ १५२ ॥

तयोस्तर्जन्योरग्रयोगात् । आद्या संक्षोभिणी । एवं तर्जनीवद् ऋजुरूपा अग्रयुता हस्तद्वयस्य मध्यमा । मध्यमाद्वयस्य पार्श्वयोः । मध्यमा संश्लिष्टे ऋजुरूपे तर्जन्यौ । अपरा द्वितीया विद्राविणी ॥ १५३ ॥

हस्तद्वयस्य तर्जनीमध्यमाङ्गुष्ठाग्रमेकत्र योजयेत् । अनामेत्यादिरपि हस्तद्वयस्य ॥ १५४ ॥

तर्जनीमध्यमाग्रोर्ध्वे तत्तदङ्गुष्ठं यस्याः सा एषा । तृतीया आकर्षिणी । वामहस्तस्य अङ्गुष्ठाद्यङ्गुलसन्धिषु दक्षाङ्गुष्ठादिकं क्षिप्त्वा मुष्टयुदरगतत्वेन प्रवेश्य । एवं दक्षाङ्गुष्ठादिसन्धिषु ॥ १५५ ॥

वामतर्जन्यादिकं प्रवेश्य तुर्या वशङ्करी ॥ १५६ ॥

दक्षकनिष्ठोपरि वामकनिष्ठेति रीत्या कनिष्ठाद्वयं व्यत्यस्य । वक्रीकृतमध्यमाङ्गुलोदरगतं कुर्यात् ॥ १५७ ॥

तर्जन्यनामाः हस्तद्वयाभिप्रायेण बहुवचनम् । सरलाः अवक्राः । अग्रदेशे परस्परयुताः । तत्तन्मध्यमानखे सम्बद्धं तत्तदङ्गुष्ठाग्रम् । इयं पञ्चमी उन्मादिनी ॥ १५८ ॥

व्यत्यस्य वामोर्ध्वरीत्या चानामाद्वयमीश्वरि ।
मध्यमा पृष्ठतः कृत्वा तर्जन्यग्रं धृतं भवेत् ॥१५९॥
उन्मग्नाग्रं मध्यमयोः पार्श्वे मध्यमयोः शिवे ।
युक्ते चाग्रे तदूर्ध्वे तु कनिष्ठे ऋजुयोजिते ॥१६०॥
अङ्गुष्ठाग्रे तु संयोज्य कनिष्ठोपरि संन्यसेत् ।
एषा महायोनिमुद्रा गुप्ता देवीप्रसादिनी ॥१६१॥
ततः पुष्पाञ्जलिं दत्त्वा त्रिधा त्रिस्तर्पयेदपि ।
विशेषबिन्दुभिर्देवि उपचारांस्ततो यजेत् ॥१६२॥
सर्वसंक्षोभिणीमुद्रां प्रदर्शयामि वै वदेत् ।
नाम्नः श्रीपादुकां पूजयामि हृदि लिखेच्छिवे ॥१६३॥
मुद्राप्रदर्शने पुष्पाञ्जलिदानं मनुः स्मृतः ।
तच्चतुर्धा महेशानि चतुष्षष्टिविभेदितम् ॥१६४॥
भिन्नं षोडशधा देवि दशधा पञ्चधाऽपि च ।
तत्राद्यं शृणु देवेशि सावधानेन चेतसा ॥१६५॥

---

दक्षानामोपरि वामानामेति रीत्याऽनामाद्वयं व्यत्यस्य । तदनामाद्वयं मध्यमयोः पृष्ठतः कृत्वा तर्जन्यग्राभ्यां व्यत्यस्तानामाग्रद्वयं धृतम् ॥ १५९ ॥

तदनामाद्वयं मध्यमयोः पार्श्वे उन्मग्नाग्रं निर्गताग्रं मध्यमयोः अग्रे युक्ते । तदूर्ध्वे मध्यमयोरूर्ध्वे । अवक्रे कनिष्ठे संश्लिष्टे योजिते ॥ १६० ॥

एवंविधकनिष्ठोपरि अङ्गुष्ठाग्रे संयोज्य संन्यसेत् । अस्या अत्युत्तमत्वं वक्तुं महायोनीत्यत्र महत्पदम् । गुप्ता तन्त्रेषु गोपिता ॥ १६१ ॥

ततः एवं मुद्राप्रदर्शनान्तरम् । विशेषबिन्दुभिर्विशेषार्घ्यद्रव्यैस्त्रिस्तर्पयेदिति सम्बन्धः । ततः तर्पणानन्तरम् । तर्पणं तु सप्तमोल्लासोक्तचतुर्दशाक्षर्या ॥ १६२ ॥

मुद्राप्रदर्शनपुष्पाञ्जल्योर्मन्त्रावाह—सर्वेत्यादि । मुद्राप्रदर्शने मन्त्रा न्द्रां सर्वसंक्षोभिणीमुद्रां प्रदर्शयामीत्यादि । एवं नाम्नो बालात्रिपुरसुन्दरीति नामान्ते श्रीपादुकां पूजयामि नम इति पुष्पाञ्जलिः ॥ १६३ ॥

तत उपचारपूजनम् । चातुर्विध्यमाह—चतुःषष्टीत्यादि ॥ १६४ ॥

आद्यं चतुःषष्ट्युपचारपूजनम् ॥ १६५ ॥

आसनं स्वागतं चार्घ्यं पाद्यमाचनीयकम् ।
मधुपर्कं चाचमनं स्नानभूमिप्रवेशनम् ॥१६६॥
स्नानवस्त्रं चासनं वै दन्तधावनमेव च ।
गण्डूषणं मुखप्रक्षालनमाचमनीयकम् ॥१६७॥
मुखप्रोक्षणमभ्यङ्गद्रव्यकल्पनमेव च ।
अभ्यङ्गं केशसंशुद्धिमङ्गोद्वर्तनमेव च ॥१६८॥
स्नानमुष्णोदकेनाथो पञ्चामृतफलादिभिः ।
मन्त्रस्नानं चाचमनं तथा केशाङ्गमार्जनम् ॥१६९॥
परिधानं चोत्तरीयमाचाममुपवीतकम् ।
भूषणस्थानगमनमासनं भूषणं ततः ॥१७०॥
यागस्थानाभिगमनं पीठोपरि निवेशनम् ।
चन्दनं चाक्षतं पुष्पं धूपं दीपं च पाद्यकम् ॥१७१॥
आचाममथ नैवेद्यं प्रार्थनं ध्यानमेव च ।
पानीयं क्षालनं पाण्योरुद्वर्तनकमेव च ॥१७२॥
गण्डूषणं पाद्यमथाचमनीयं फलं ततः ।
ताम्बूलं दक्षिणां देवि नीराजनमतः परम् ॥१७३॥
पुष्पाञ्जलिं परिक्रामं प्रणामं प्रार्थनं ततः ।
छत्रं च चामरं देवि व्यजनं गीतवाद्यके ॥१७४॥

---

तदेवमाह—आसनमित्यादि समर्पणमित्यन्तम् । स्वागतमित्यागमनप्रश्नरूप उपचारः । अत्रोपचारा अर्थप्राधान्येनोक्ता न शब्दप्राधान्येन, चन्दनं गन्धमित्यादिशब्दभेदस्य स्पष्टत्वात् । तेन स्नानभूमिप्रवेशनमित्यस्य स्नानमण्डपप्रवेशनमित्यादिपद्धतिकृतां लेखनं संगच्छते ॥ १६६–१६७ ॥

अभ्यङ्गद्रव्याणां तैलादीनां कल्पनम् अग्रे स्थापनम् । १६८ ॥

फलादिभिः स्नानमित्यन्वयः ॥ १६९–१७१ ॥

उद्वर्तनं च पाण्योः चन्दनादिलेपनेन स्नेहांशनिवारणम् ॥ १७२–१७३ ॥

गीतं वाद्यमिति द्वयम् ॥ १७४ ॥

नृत्यं समर्पणं देवि गणयेच्च पृथक् पृथक् ।
एवं देवि चतुःषष्टिसंख्याः स्युरुपचारकाः ॥१७५॥
पाद्यमर्घ्यमाचमनं स्नानं वस्त्रं च भूषणम् ।
गन्धं पुष्पं धूपदीपौ नैवेद्यं चापि वीटिकाम् ॥१७६॥
नीराजनं चाञ्जलिं च परिक्रामं नतिं शिवे ।
गणयेदुपचारान् वै प्रत्येकं षोडशेश्वरि ॥१७७॥
पाद्यादित्रितयं गन्धं पुष्पं धूपं च दीपकम् ।
नैवेद्यं चाञ्जलिं देवि नमस्कारं तथा पृथक् ॥१७८॥
दशोपचारान् देवेशि गन्धं पुष्पं च धूपकम् ।
दीपं नैवेद्यमिति च पञ्चधा गणयेच्छिवे ॥१७९॥
भूतपञ्चकबीजेन पृथिव्याद्यात्मिकां पराम् ।
क्रमेण पञ्चभिर्देवि मानसेऽप्येवमर्चयेत् ॥१८०॥
तृतीयं च चतुर्थं च आपदङ्गादिपूजने ।
द्वितीयपूजने वाऽपि नैवालस्येन कुत्रचित् ॥१८१॥

---

आसनादिसमर्पणान्तं पृथग् गणयेत् ॥ १७५ ॥

षोडशोपचारमाह—पाद्यमित्यादि नतिमित्यन्तम् ॥ १७६-१७७ ॥

दशोपचारमाह—पाद्यादीत्यादि नमस्कारमित्यन्तम् । पाद्यादित्रयं पाद्यमर्घ्यमाचमनमिति दशोपचारानापादयेदित्यन्वयः ॥ १७८ ॥

पञ्चोपचारमाह—गन्धमित्यादि नैवेद्यमित्यन्तम् ॥ १७९ ॥

तत्र पञ्चोपचारपूजामन्त्रे विशेषमाह—भूतेत्यादि । भूतपञ्चकबीजं लं वं रं यं हं इति । तेन बीजेन सहितां पृथिव्यात्मिकां क्रमेणार्चयेत् । क्रमस्तु त्रिपुरार्णवे उक्तः—"धराव्योमवायुतेजोऽमृतरूपां क्रमाद्यजेत्" इति । तेन लं पृथिव्यात्मिकायै बालात्रिपुरसुन्दर्यै गन्धं कल्पयामि नम इत्यादि । हं आकाशात्मकं पुष्पम्, यं वाय्वात्मकं धूपम्, रं तेजआत्मकं दीपम्, वं अमृतात्मकं नैवेद्यमिति । मानसपूजायामप्येवमेव मन्त्रयोगः ॥ १८० ॥

तृतीयं चतुर्थं दशोपचारपञ्चोपचाररूपं पूजनमापत्पूजायामङ्गपूजायां कर्तव्यम् । आदिना मानसपूजायाम् । द्वितीयपूजने द्वितीयवारं कर्तव्यपूजायाम् । एतदन्यत्र कुत्रचिन्नित्ये नैमित्तिके वा नैव कर्तव्यम् । नित्यनैमित्तिकादिमुख्ये तृतीयं चतुर्थं च पूजनं नैव कर्तव्यमिति नियमः । आपदादौ तु तृतीयां चतुर्थीं वा सति संभवे प्रथमद्वितीययोर्न

अन्यथा निष्फला पूजा सर्वथा वै न संशयः।
बालात्रिपुरसुन्दर्यै चासनं कल्पयामि हृत् ॥१८२॥
एवमेव तु मूलान्ते कुर्यात् सर्वोपचारकम्।
तत्तद्द्रव्येणोपचारांश्चाभावे कुसुमाक्षतैः ॥१८३॥
मनसा भावयन् कुर्यात्तेन पूजाफलं भवेत्।
आसनं वास्त्रदार्वादिपीठं वा दर्भसंभवम् ॥१८४॥
पाद्यन्तु पादयोर्दद्यान्मनसार्घ्यं च हस्तयोः।
गन्धतोयेन पाद्यं तु गन्धपुष्पाक्षतैः सह ॥१८५॥

---

निषेधः। अत्र द्वितीयपूजा द्वितीयादिकाले क्रियमाणा। तन्त्रेण क्रियमाणानेकनैमित्तिके द्वितीयादिपूजा च ॥ १८१ ॥

अन्यथा आलस्यान्नित्यादौ कृता। दशोपचारपञ्चोपचारात्मिका पूजा सर्वथैव निष्फला। उपचारमन्त्रमाह—बालेत्यादि। बालेत्यादि यामीत्यन्तं च इति त्यक्त्वा स्वरूपम्। हृत् नमः॥ १८२ ॥

एवमेव उक्तमन्त्रे तत्तदुपचारनामयोगेनैव। मूलान्ते मूलमन्त्रान्ते बालात्रिपुरसुन्दर्यै इत्यादिदेवतान्तरपूजनेषु तत्तद्देवतानामयोगोऽपि ज्ञेयः। सर्वोपचारकं स्वागतादिसमर्पणान्तम्। तत्तद्द्रव्येण आसनादिद्रव्येण उपचारान् कुर्यादिति सम्बन्धः ॥१८३॥

उक्तद्रव्याभावे कुसुमाक्षतैस्तद्द्रव्यं मनसा भावयन् उपचारान् कुर्यादिति सम्बन्धः। एतच्च गन्धाद्युपचारपञ्चकातिरिक्ते एव। तदुक्तं योगिनीतन्त्रे—"उपचारानलाभे तु पुष्पाद्यैर्मनसा स्मरेत्। गन्धपुष्पधूपदीपनैवेद्यान्यन्महेश्वरि। गन्धादिपञ्चकाभावे पूजा व्यर्थैव सर्वथा ॥" इति। एवं क्रियमाणेऽपि न पूजावैकल्यमित्याह—तेनेति। एवं कृतेनेत्यर्थः। पूजाद्रव्याण्याह—आसनमित्यादि। आदिना स्वर्णरत्नादिग्रहणम्। वस्त्रादिनिर्मितमासनं दार्वादिकृतं पीठं दर्भसंभवमासनम् ॥ १८४ ॥

आसनं कल्पयामि नम इति पठन्नासनं पुरतो निक्षिपेत्। स्वायतस्य स्वागतमिति शब्दप्रयोगमात्ररूपत्वाद् द्रव्याभावे न कुसुमाद्यैरेवोपचरणम्। एवं स्नानमण्डपप्रवेशादावपीति पद्धतिकाराणामाशयः। यतश्चोक्तं योगिनीतन्त्रे—"वस्त्रदार्वाद्यासनं तु पुरतः परिकल्पयेत्। स्वागतं स्याद्वाचनिकं पाद्यं स्याद् गन्धतोयतः ॥" इति। पाद्यार्घ्ययोर्व्यत्यासः षोडशोपचारानुरोधेन। चतुःषष्ट्युपचारेऽर्घ्यं पाद्यं षोडशोपचारे पाद्यमर्घ्यमित्येव क्रमो व्यत्यस्तः, मूलवचनानुरोधात्, त्रिपुरार्णवादितन्त्रानुरोधाच्च। पाद्यं पादयोर्मनसा भावयन् दद्यात्। अत्र गन्धतोयैः। पादयोः पाद्यमिति तत्तदुपचारमन्त्रेषु

यत्रै रत्नैः सदूर्वाभिरर्घ्यकर्पूरमिश्रितैः ।
एलोशीरयुतैस्तोयैर्दद्यादाचमनं शिवे ॥१८६॥
स्वाहान्तेन तु पाद्यं स्यादथवा वौषडन्ततः ।
अर्घ्यं च मधुपर्कं च स्वधान्तेन सुधान्ततः ॥१८७॥
अथवा हृदयान्तेन सर्वं कुर्यान्महेश्वरि ।
आज्यं दधि क्षौद्रफलैर्मधुपर्कं समर्पयेत् ॥१८८॥
मधुपर्कं चाचमनं देवताया मुखेऽर्पयेत् ।
पादुके परिधायाम्ब त्रिपुरे देवनिर्मिते ॥१८९॥
स्नानमण्डपमायाहि स्नानार्थं शुक्रदिग्गतम् ।
एवं कुर्यात् स्नानभूमिप्रवेशं प्राणवल्लभे ॥१९०॥
कर्पूरसकलैर्देवि दन्तधावनकं भवेत् ।
गण्डूषणं सुगन्धेन तोयेन परमेश्वरि ॥१९१॥

---

तत्तद्द्रव्यतत्तदङ्गकथनं पद्धतिकृतां सम्प्रदायसिद्धम् । यन्त्रादिषु देवतापादाभावान्मनसा ध्यातयोः पादयोर्दद्यादित्यर्थः । एवं सर्वत्र । पाद्यार्घ्ययोर्द्रव्याण्याह—गन्धेत्यादि ॥१८५॥

गन्धपुष्पाक्षतैः यत्रै रत्नैः सहेति संबन्धः । सदूर्वाभिस्तोयैरिति विशेष्यस्यावृत्त्या योगः कर्पूरमिश्रितैस्तोयैरित्यन्वयः ॥ १८६ ॥

तत्र मन्त्रे विशेषमाह—स्वाहान्तेनेत्यादि । पाद्यं कल्पयामि स्वाहा इति द्वितीयं पक्षमाह—अथवेति । कल्पयामि वौषट् इति कल्पयामि स्वधा । कल्पयामि सुधा इति चार्घ्यं मधुपर्कं च क्रमेण । मधुपर्कपात्रमुक्तं त्रिपुरार्णवे—"मधुपर्के तु कांस्यं स्यादथवा हैमराजते" इति ॥ १८७ ॥

सर्वं पाद्यादिकं क्षौद्रं मधु । फलैर्मिलिते ॥ १८८ ॥

स्नानभूमिप्रवेशने विशेषमाह—पादुके इत्यादि । देवार्थं निर्मिता आविर्भूता देवता, तस्याः संबोधनमथवा देवेन विश्वकर्मणा निर्मिते पादुके । तदुक्तं त्रिपुरारहस्ये—"देवशिल्पिस्वचातुर्यसर्वसारविनिर्मितम् । नगरं श्रीमहादेव्या भूषणं छत्रपादुके ॥" इत्यादि ॥ १९० ॥

सुगन्धतोयेन गण्डूषणम् ॥ १९१ ॥

दधिक्षीरघृतक्षौद्रशर्करामृतपञ्चकम् ।
वस्त्रं तु बार्हस्पत्यं वै वैष्णवं चोपवीतकम् ॥१९२॥
अथाभरणनामानि वक्ष्ये शृणु महेश्वरि ।
मकुटं च ललाटस्याभरणं कर्णपूरकम् ॥१९३॥
हारग्रैवेयाङ्गुलीयप्रालम्बी रत्नसूत्रकम् ।
अक्षराणामावलिं च कर्णोत्तंसं च पार्श्वयोः ॥१९४॥
भूषणं च नखद्योतं चाङ्गुलीच्छदमेव च ।
कूटलम्बाधहारं च मृदुभारं ललन्तिकाम् ॥१९५॥
अङ्गदं चापि केयूरं वलयं बाहुवेष्टकम् ।
सीमान्तिकं गण्डभूषां भ्रूभूषां नाभिभूषणम् ॥१९६॥

---

पञ्चामृतद्रव्याण्याह--दधीत्यादि । क्षौद्रं मधु । अत्र दध्यादिस्नानोपचारः पृथगेव सति संभवे द्विजैर्वैदिकमन्त्रेणान्यैः पौराणादिमन्त्रैः कर्तव्यः । उपचाराधिक्यं तु न दोषाय । एतदुक्तं त्रिपुरार्णवे--'उक्तोपचारादधिकैः संभवे सति पूजयेत्'' इति । अत एव मूलेऽपि पूर्वापोशनादिकमुक्तम् । एतेन पद्धतिकृतां हरिद्राकुङ्कुमसुगन्धिद्रव्यदर्पणाद्युपचारलेखनमनवद्यम् । मन्त्रस्नाने तु विशेषो योगिनीतन्त्रे--''अब्लिङ्गैर्वैदिकैर्मन्त्रैः स्नानं पौराणिकैरपि'' इति । तथा--''स्नाने धूपे तथा दीपे नैवेद्येऽपि महेश्वरि । आरार्तिकेऽपि घण्टाया वादनेन महाफलम् ॥''इति । त्रिपुरारहस्ये तु--''लक्ष्मीसूक्तं षोडशर्चं देव्याः स्नानविधौ पठेत् । सकृदावर्तनाल्लक्ष्मीः सदा तस्य गृहे वसेत् ॥'' इत्यादि बहुतरं फलमुक्तम् । वैदिकतान्त्रिकेतरादि मन्त्रस्नाने पद्धतिकृतां लेखनं तन्त्रान्तरानुरोधेन ज्ञेयम् । बृहस्पतिदैवतं वस्त्रं विष्णुदैवतमुपवीतं यज्ञोपवीतम् ॥१९२॥

अत्रोत्तरीयं कञ्चुकमिति केचिदाहुः । 'दुकूलं कञ्चुकं चान्ते पुनराचमनं तथा । ब्रह्मसूत्रं भूषणानि स्थानयानं तथासनम् ॥'' इति त्रिपुरार्णवे उक्तम् । यत्तु ताराभक्तिसुधार्णवे--''यज्ञोपवीतं दत्वाऽथ भूषणानि समर्पयेत् । तानि नानाविधानि स्युर्मुकुटादिप्रभेदतः ॥ स्त्रीपुंप्रभेदतस्तानि ज्ञेयानि तु विचक्षणैः ।'' इति सारसंग्रहवचनमुदाहृत्य यज्ञोपवीतं पुंदेवते देयमित्यर्थो वर्णितः, तत्स्त्रीपुंप्रभेदत इति भूषणविषयत्वान्न यज्ञोपवीते इति भाति । भूषणनामान्येवाह--मकुटमित्यादि ॥ १९३ ॥

पार्श्वयोर्भूषणमित्यन्वयः ॥ १९४-१९६ ॥

रत्नमालां मणीनां वै मेखलां शृङ्खलां तथा ।
दन्तरत्नं कर्णकं च नीवरत्नं च जानुनोः ॥१९७॥
भूषां पादाङ्गुलीयं च नूपुरं तुच्छकं ततः ।
देवेशि पादकटकं हंसकं क्षुद्रघण्टिकाम् ॥१९८॥
मुखपत्रं तथा चूडारत्नं ताटङ्कमेव च ।
एवंविधानि चान्यानि भूषणानि समर्पयेत् ॥१९९॥
पादुकायुगमारुह्य पञ्चवाद्यपुरःसरम् ।
यागमण्डपमायाहि परिवारजनैः सह ॥२००॥
एवं प्रवेशयेद्यागमण्डपे परमेश्वरि ।
अष्टगन्धात्मकं गन्धं विष्णुदैवतमर्पयेत् ॥२०१॥
चन्दनागुरुकाश्मीरगोरोचनकचोरकाः ।
मांसीकर्पूरकपयश्चाष्टगन्धाः प्रकीर्तिताः ॥२०२॥

---

जानुनोर्भूषणमित्यन्वयः ॥ १९७-१९८ ॥

अन्यानि अत्रानुक्तान्यपि । मकुटं कल्पयामीति व्यस्ततया मकुटेत्यादिताटङ्क-नानाविधभूषणानि कल्पयामीत्यादि समस्ततया वा समर्पयेत् ॥ १९९ ॥

यागमण्डपप्रवेशे विशेषमाह—पादुकेत्यादि । मूलमन्त्रनामान्ते पादुकेत्यादि पठेत् । एवमेवाग्रेऽपि ॥ २०० ॥

विष्णुदैवतं गन्धम् ॥ २०१ ॥

अष्टगन्धमाह—चन्दनेत्यादि । काश्मीरं केसरम् । मांसी जटामांसी कपिः शिला-रस इति पद्धतिकृतः, रक्तचन्दनमित्यन्ये ।

अत्र देव्या कुङ्कुमादिसौभाग्यद्रव्याण्यपि कल्पयेत् । तदुक्तं त्रिपुरार्णवे—"हरिद्रां चापि सिन्दूरं कुङ्कुमं कज्जलं तथा । सौभाग्यद्रव्यकं देयं देव्यै सौभाग्यमिच्छता ॥" इति । अक्षतानां विशेषो योगिनीतन्त्रे—"श्वेताक्षतैर्न पूज्या स्यात्त्रिपुरा परमेश्वरी । काश्मीरैः कुङ्कुमैर्वापि रक्तचन्दनपङ्ककैः । रञ्जितान् शालिजान् शुद्धानखण्डानर्पयेद् बुधः ॥"इति । पुष्पाणि तु—"अपर्युषितमच्छिद्रं पुष्पं पत्रं समर्पयेत् । प्राप्ते च साष्टमे यामे पुष्पं पर्युषितं भवेत् ॥" पुष्पमिति पत्रस्याप्युपलक्षणम् । 'प्रोक्षितं शुद्धतोयेन जन्तुतद्गृहवर्जितम् । शूद्रानीतैः क्रयक्रीतैः पुष्पैर्नित्यं न पूजयेत् ॥ भक्त्या समाहृतं पुष्पं येन केनापि पूजयेत् ।

वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥२०३॥
मन्त्राद्यमेवं गन्धर्वदैवतं धूपमर्पयेत् ।
कामराजं सुरभ्यन्ते तेजसे वह्निवल्लभा ॥२०४॥
नवार्णो धूपमन्त्रस्तु धूपदाने समीरितः ।
सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ॥२०५॥

---

स्वयं शीर्णं च मलिनं गन्धशोभाविवर्जितम् ॥ आघ्रातं चोग्रगन्धं च पात्रेऽशुद्धे च स्थापितम् । वामहस्तेनापचितं जलेन क्षालितं तथा ॥ मस्तके च धृतं पादस्पृष्टं चापि विवर्जयेत् । विल्वकल्हारमरुवविष्णुक्रान्तकुशोद्भवैः ॥ धात्र्यपामार्गपनसचूताश्वत्थवटाङ्कुरैः । अन्यैः सुगन्धिपत्रैश्च यावन्न म्लानतां गतैः ॥ न गन्धहीनैस्तैः पूजां कुर्याद् भक्त्या समाहितः ॥" इति नित्यातन्त्रे उक्तानि । महास्वच्छन्दे—"बकुलं पारिजातं च स्वयं शीर्णमपीष्यते । तथा पद्मं पर्युषितमम्लानं कलिकामपि ॥ शूद्राद्यानीतमपि च सखण्डमपि चार्पयेत् । केशरं चापि संशुद्धं पूजयेन्न परित्यजेत् ॥ इति । त्रिपुरारहस्ये तु—"रक्तपुष्पं तु सामान्यं सगन्धं वाप्यगन्धकम् । त्रिपुरायाः प्रियं तद्वत्तुलसी विल्वपत्रकम् ॥ करवीरं जपा जाती मल्लिका मालती तथा । पद्मं कोकनदं तद्वत्कुमुदं चासितोत्पलम् ॥ सौगन्धिकं च बकुलं चम्पकं च कुसुम्भकम् । बन्धूकं तगरं चान्यत् सुगन्धं पत्रपुष्पकम् ॥ त्रिपुरायाः प्रियं तैस्तु पूजिता वाञ्छितार्थदा ।" इति । तथा योगिनीतन्त्रे—"अधोमुखैर्वस्त्रधृतैः शेषैः पुष्पैर्न चार्चयेत् । क्रयक्रीतैर्याचितैश्च निर्माल्यैरपि पत्रकैः ॥ केतकयगस्त्यकमलैर्यजेत् पर्युषितैरपि । यावन्निर्गन्धता न स्यात् यावन्न म्लानतां गताः ॥ तावत् पर्युषितैर्वापि स्वतः शीर्णैश्च पूजयेत् ।" इति । शेषैः इतरपूजावशिष्टैः ॥ २०२ ॥

धूपमाह—वनस्पतिरिति । धूपप्रकारस्त्रिपुरारहस्ये—"चन्दनागुरुकर्पूरोशीरमांसीशिलारसैः । गुग्गुलुप्रमुखैरन्यैः सुगन्धैः सुमनोहरैः ॥ निर्धूमाङ्गारविन्यस्तैर्धूपं कुर्याद्विचक्षणः । लोहसीसविभिन्ने तु पात्रे मृण्मयकेऽथवा ॥ निक्षिप्य धूपयेन्नोल्कामादाय पात्रहस्ततः ।" इति ॥ २०३ ॥

मन्त्राद्यं वक्ष्यमाणमन्त्राद्यम् । एवमुक्तश्लोकपाठपूर्वकम् । मन्त्रमाह—कामेत्यादि । कामराजः क्लीं । सुरभितेजसे स्वरूपम् । अन्ते इति त्यजेत् । वह्निवल्लभा स्वाहा ॥ २०४ ॥

दीपमन्त्रमाह—सुप्रकाश इति ॥ २०५ ॥

सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ।
विशेषार्घ्यस्य पुरतो मण्डलं तत्र पात्रकम् ॥२०६॥
सौवर्णादिभवं ताम्रलोहमृण्मयवर्जितम् ।
शाकभक्ष्यक्षीरमुखविविधौदनसंयुतम् ॥२०७॥
आधारे स्थाप्य कर्तव्यं वीक्षणादिचतुष्टयम् ।
वीक्षणं प्रोक्षणं देवि ताडनं मोक्षणं पुनः ॥२०८॥

---

दीपस्तु— "तस्य दक्षिणभागे तु दीपनाथस्य वेदिकाम्" इति षष्ठोल्लासोक्तस्थाने पूजारम्भात् पूर्वं संस्थाप्य समाप्तिपर्यन्तं रक्षणीयः मध्ये दीपनाशे प्रायश्चित्तश्रुतेः। दीपस्थानमुक्तं बृहद्वामकेश्वरे—"पीठदक्षे तैलदीपो वामे स्याद् घृतदीपकः" इति । स च दीपो भूमौ न स्थापनीयः । तदुक्तं कालिकापुराणे—"वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन" इति । वर्तिकास्नेहादिकमुक्तं योगिनीतन्त्रे —"कार्पासपद्मकदलीनवसूत्रसमुद्भवा । वस्त्रजा चाप्यमलिना युग्मा नैका कदाचन ॥ अलोहसीसके पात्रे निर्मले खण्डके तथा । आपूर्य तिलकौसुम्भनारिकेलमधूकजम् । तैलं सार्षपमप्युक्तं तथा वनतिलोद्भवम् । अतसीखस्तिलोत्थं वा घृतं गोमहिषादिजम् ॥ छागजं वापि संज्वाल्यमदक्षिणमुखं भवेत् ।" इति । दीपज्वालाप्रमाणं कालिकापुराणे —"लभ्यते यस्य तापो नु दीपस्य चतुरङ्गुलात् । न स दीप इति ख्यातः अग्निवृद्धिस्तु स स्मृतः ॥" इति । दीपोपचरणं त्वन्येन दीपेन कर्तव्यम् । तच्च घृतेनैव । तदुक्तं त्रिपुरारहस्ये-"एकद्वित्रिचतुःपञ्चसप्तोपरि यथेच्छतः । अतैलयुक्तान् दीपांस्तु भ्रामयेद् देवताग्रतः ॥ दक्षपादादिमूर्धान्तवामपादावधिक्रमात् । देवताया जपन्मन्त्रं त्रिवारान्यूनतोऽर्पयेत् ॥" इति । त्रिवारान्यूनतो भ्रामयेदित्यर्थः । एवं दीपं प्रदर्श्य निर्वापसमये दूरे स्थापयेत् । तदुक्तं त्रिपुरारहस्ये—"संमुखे दीपनिर्वापाद्देवता क्रुध्यति द्रुतम्" इति । स्नेहमिश्रणे दोषो योगिनीतन्त्रे—"स्नेहे मिश्रीकृते दीपे रौरवं नरकं व्रजेत्" इति । नैवेद्यविधिमाह—विशेषेत्यादि । मण्डलं पूर्वोक्तम् । मण्डलमिति तत् पूजान्तोपलक्षणम् । तत्र मण्डलोपरि पात्रकमाधारे स्थाप्येत्यन्वयः ॥२०६॥

पात्रमाह—सौवर्णेत्यादि । आदिपदान्निखिलधातुजातिग्रहणम् । तत्र धातुषु लोहं ताम्रं धातुभिन्ने मृन्मयं च वर्जयेत् । एतदुक्तं बृहद्वामकेश्वरे—"सौवर्णरौप्यकांस्यानां पात्रमुत्तममुच्यते । अलोहताम्रजं वापि चामात्स्नं तु निवेदने ॥" इति । अमात्स्नं मृन्मयभिन्नम् । नैवेद्यपदार्थानाह—शाकेत्यादि । विविधौदनं दध्योदनादि ॥ २०७ ॥

त्रिपुरार्णवे तु—"शाकसूपौदनापूपभक्ष्यलड्डुकसंयुतम् । पायसेन समायुक्तं नैवेद्यं परिकल्पयेत् ॥ पायसेन विना सर्वं न श्रीदेव्याः प्रियं भवेत् । केवलं पायसेनापि प्रीता भवति सुन्दरी ॥" इति । कुलार्णवे—"एवं संपूज्य धूपं तु दीपं नैवेद्यमेव च । सासवं

मूलास्त्रास्त्रैर्वर्मणा च वीक्षणादिचतुष्टयम् ।
प्रोक्षणं कलशोदैस्तु ताडनं कुसुमादिभिः ॥२०९॥

तारामृतमरुत्सर्गैर्नेत्रैरभ्युक्ष्य शङ्खजैः ।
चक्रमुद्रां प्रदर्श्याथ वाय्वग्निजलबीजकैः ॥२१०॥

शोष्य दग्ध्वा च तद्दोषान्नैवेद्य चामृतीकुरु ।
विशेषबिन्दुना देवि प्रोक्षयेन्मूलविद्यया ॥२११॥

धेन्वामृतीकृत्य तार्क्ष्यमुद्रया निर्विषोकुरु ।
पुष्पादिना तु नैवेद्यं विष्णुदैवत्यमर्चयेत् ॥२१२॥

अभिमन्त्र्य तु मूलेन पाद्याद्यैरुपचारयेत् ।
पूर्वापोशनकं देवि दक्षहस्ते समर्पयेत् ॥२१३॥

---

पिशितैर्युक्तं भक्ष्यैश्च विविधैरपि ॥" इति । नित्यातन्त्रे तु—"सर्वं यथोक्तं नैवेद्यं भक्ष्यभोज्यादिसंयुतम् । प्रयत्नेन तु कर्तव्यं लोभालस्यविवर्जितम् ॥ अभावे फलदुग्धाद्यैरन्नमात्रेनापि कल्पयेत्" ॥ इति । नैवेद्यप्रमाणमुक्तं रौद्रयामले —"नैवेद्यं षड्रसोपेतं पुरुषाहारसम्मितम् । तदर्धं वा ततो न्यूनं निष्फलं स्याद्वरानने ।" इति । तथा— "मुख्ये यथोक्तं नैवेद्यं पूजनेऽङ्गस्य शङ्करि । स्वल्पं वापि यथा शक्त्या द्वितीये पूजनेऽपि वा ॥" इति । नैवेद्यसंस्कारमाह —कर्तव्यमित्यादि । वीक्षणादिकमेवाह —वीक्षणमित्यादि ॥२०८॥

तत्र मन्त्रानाह—मूलेत्यादि । मूलं बाला, अस्त्रं फट् । वर्म हुं । मूलादिचतुर्भिः क्रमेण वीक्षणादिचतुष्टयं कर्तव्यम् । वीक्षणमवलोकनम् । कलशोदैः सामान्यकलशजलैः । कुसुमादीत्यादिना पत्रकुशादिकं ग्राह्यम् ॥२०९॥

तारा ॐ । अमृत जूं । मरुत्सर्गः सः । नेत्रं वौषट् । शङ्खजैः सामान्यार्घ्यजलैः । अथ मुद्राप्रदर्शनानन्तरम् । वायु यं अग्नि रं जलं व ॥२१०॥

बीजत्रयप्रजपेन कर्तव्यं क्रमादाह—शोष्येत्यादि । तद्दोषान् नैवेद्यदोषान् वाय्वग्निजपाभ्यां शोष्य दग्ध्वा जलेनामृतीकृतं ध्यायेत् । बिशेषबिन्दुर्विशेषार्घ्यद्रव्यम् ॥२११॥

अमृतीकरणनिर्विषीकरणे सामान्यकलशवत् । विष्णुदैवताय नैवेद्याय नम इति पूजनम् ॥२१२॥

पाद्याद्यैः पाद्याचमननैवेद्यैः । पूर्वापोशनादिकं वैदिकमन्त्रेण ज्ञेयम् ॥२१३॥

ग्रासमुद्रां वामकरे दर्शयन् दक्षहस्ततः ।
पञ्च प्राणादिमुद्रास्तु तत्तन्मन्त्रेण दर्शयेत् ॥२१४॥

प्राणाय वै त्वपानाय व्यानायाथ महेश्वरि ।
उदानाय समानाय चेत्यन्ते तु शिरो वदेत् ॥२१५॥

एकैकशस्त्रिबीजं तु संपूर्णं च द्विधा भवेत् ।
प्रणवान्तान् योजयेद् वै तेषामादौ क्रमेण तु ॥२१६॥

तन्मुद्रास्तु प्रवक्ष्यामि श्रृणु देवि समाहिता ।
ईषत्संकुचिता देवि ईषत्संश्लिष्टरूपिणः ॥२१७॥

ऊर्ध्वाग्रा अङ्गुला देवि मुद्रा ग्रासाभिधा भवेत् ।
कनिष्ठानामयोर्मध्या तर्जन्योर्मध्यनामयोः ॥२१८॥

कनिष्ठादित्रिषु तथा चतुर्ष्वङ्गुष्ठयोगतः ।
प्राणादिपञ्चसंख्याता मुद्रा ज्ञेया वरानने ॥२१९॥

---

वामकरे विरचितां ग्रासमुद्राम् । दक्षहस्ततः पञ्चप्राणादिमुद्रा दर्शयेदित्यन्वयः ॥ २१४ ॥

तत्र मन्त्रानाह—प्राणायेत्यादि । अन्ते प्राणायेत्यादिपञ्चानामन्ते । शिरः स्वाहा ॥२१५॥

त्रिबीजं बालायाः बीजत्रयमेकैकशः कृत्वा संस्थाप्य । सम्पूर्णबालाया बीजत्रयं च द्विधा संस्थापयेत् । तेन एकैकबीजरूपं त्रयम्, त्रिबीजरूपं द्वयमिति पञ्च जातम् । तान् मन्त्रान् प्रणवान्तान् कुर्यात् । ऐं ॐ क्लीं ॐ इत्यादि । तेषां प्राणाय स्वाहेत्यादि पञ्चमन्त्राणामादौ क्रमेणैकैकं ऐं ॐ प्राणायेत्यादि योजयेत् ॥२१६॥

तन्मुद्राः ग्रासादिमुद्राः । ईषत्संकुचिताः । नात्यन्तं प्रसृताः ईषत्संश्लिष्टाः । नात्यन्तविश्लिष्टाः ऊर्ध्वाग्राङ्गुला इत्यन्वयः ॥२१७॥

ईषद्वक्रपरस्परासंश्लिसमीपवृत्तिरूर्ध्वाङ्गुला ग्रासमुद्रा । प्राणादिमुद्रामाह—कनिष्ठेत्यादि ॥२१८॥

कनिष्ठानामेत्यादिपञ्चसु अङ्गुष्ठयोगतः प्राणादिपञ्चमुद्रा ज्ञेया इत्यन्वयः । मध्यनामयोरिति मध्यानामयोरित्यर्थः । कनिष्ठादित्रिषु कनिष्ठानामामध्यमासु चतुर्ष्व कनिष्ठादि इति संबध्यते ॥ २१९ ॥

एवमेष समाख्यातो मयाऽर्घ्यादिविधिः क्रमात् ।
एतद् गोप्यं विशेषेण किं पुनः श्रोतुमिच्छसि ॥२२०॥

॥ इति श्रीपरमानन्दतन्त्रेऽष्टमोल्लासः ॥८॥



---

उपसंहरति—एवमिति ॥ २२० ॥

सौभाग्यानन्दसंदोहे नखरापद्यबोधकः ।
परमानन्दटिप्पण्यामष्टमोल्लासकोऽभवत् ॥८॥



# नवमोल्लासः

श्रीदेवी उवाच

वृत्रादीनां शापमूलं वद मे करुणानिधे।
पवित्रस्यास्य हेतुं च तथोत्पत्तिं वद प्रभो ॥१॥

भैरव उवाच

शृणु देवि प्रवक्ष्यामि शापानां कारणं तथा।
उत्पत्तिं चापि माहात्म्यं विस्तरेण शुभानने ॥२॥
पुरा चतुर्मुखो देवः प्रजाः समसृजद् विभुः।
गुणत्रयमयास्तत्र सर्वे हेतुस्वभावतः ॥३॥
सत्त्वप्रकर्षास्त्वेवैके वीतरागा निरञ्जनाः।
अप्रकृष्टरजोरूपास्तमोरूपास्तथाऽपरे ॥४॥
देवा दैत्याः समभवन्नतस्ते भयमोहिताः।
महामृत्युभयाद् भीतास्तपश्चेरुर्महत्तरम् ॥५॥

---

अधुना पूर्वोल्लासोक्तद्रव्यशापकारणं प्रष्टुं देव्युवाचेति। पवित्रस्य अस्य शप्तद्रव्यस्य पवित्रत्वस्य हेतुं चेत्यर्थः। अस्य द्रव्यस्य शापमूलमिति संबन्धः। द्रव्यस्योत्पत्तिम् ॥ १ ॥

उत्तरं भैरव उवाचेति ॥ २ ॥

उत्पत्तिं वक्तुमाख्यायिकामुत्थापयति—पुरेति। हेतुस्वभावतः कारणीभूतत्रिगुणात्मकप्रकृतिस्वभावात् ॥ ३ ॥

तेषु चतुर्मुखसृष्टेषु एके केचन सनकादयः। सत्त्वप्रकर्षाः शुद्धसात्त्विकाः। अत एव वीतरागा निष्कामाः। अत एव निरञ्जनाः क्रोधमोहादिमलरहिताः। अपकृष्टं स्वल्पं रजोरूपं स्वभावो येषाम्। ईषद्रजोमिश्रसात्त्विकाः देवाः। तथा तमोरूपा स्वल्परजोमिश्रितमोरूपाः दैत्याः ॥ ४ ॥

यतो रजोरूपास्तमोरूपाः, अतो भयमोहिताः। सनकादीनां सत्त्वप्राधान्याद्देहाभिमानराहित्येन निर्भयाः। एते तु देहमयत्वेन महामृत्युभयाद्भीताः ॥ ५ ॥

तदा विधाता संतुष्टो वरेण विनियोजिताः ।
ते मृत्योरभयं वव्रुस्तदाह भगवानजः ॥६॥
अहं पुराणपुरुषादभूवं परमेश्वरात् ।
अचलेनैव तत्स्थानं विन्दथोन्मथ्य चामृतम् ॥७॥
उपास्य पुरुषं दिव्यं भजध्वं चाभयं ततः ।
रजःस्वभावास्ते सर्वे गूढवाक्यविमोहिताः ॥८॥
क्षीरार्णवं मन्दरेण ममन्थुरमृतेच्छया ।
तत्र विघ्नैर्हता देवा दैत्याश्च पुरुषोत्तमम् ॥९॥
तुष्टुवुस्तत्प्रसादेन ममन्थुः सागरं पुनः ।
तस्माद् भगवतः शक्तिराविर्भूता सुशोभना ॥१०॥
द्रुतहेमसमानाभा कौसुभांशुकधारिणी ।
फुल्लराजीववदना चलन्मीननिभेक्षणा ॥११॥
पीनस्तनभरोन्नम्रा चतुर्बाहुसुशोभिता ।
पङ्कजद्वितीयं हेमघटमासवपूरितम् ॥१२॥

---

विनियोजिताः वरं वृणीध्वमित्युक्ताः । तदावरणानन्तरमजः ब्रह्मा ॥ ६ ॥

ब्रह्मवाक्यमाह—अहमित्यादि । पुराणपुरुषान्नारायणात् । इदं ब्रह्मवचनं गूढाभिप्रायकम् । अचलेन पर्वतेन तस्य विष्णोः स्थानं क्षीराब्धिमुन्मथ्यामृतं विन्दथेति । गूढार्थस्तु अचलेन निश्चलेन मनसा तस्य विष्णोः स्थानमधिष्ठानं ब्रह्मचैतन्यमुन्मथ्य विचार्याहमस्तीति निश्चित्यामृतं मोक्षं विन्दथेति ॥ ७ ॥

दिव्यं पुरुषं भगवन्तमुपास्य तदुपासनया चित्तैकाग्र्यं सपाद्येति गूढार्थः । एवं वाक्यं श्रुत्वा ते देवा दैत्याश्च रजःस्वभावत्वेन चित्तमालिन्याद् गूढार्थानभिज्ञाः गूढवाक्यार्थे विमोहिताः ॥ ८ ॥

तत्र मथने सोल्कनीभूतवासुकिविषकालकूटोत्पत्तिमन्दराधःप्रवेशरूपैर्विघ्नैः ॥ ९ ॥

तस्य विष्णोः प्रसादेन कमठादिरूपेण पर्वतपृष्ठधारणादिना । भगवतः शक्तिः वारुणी देवी ॥ १० ॥

राजीवं पद्मम् ॥ ११ ॥

ऊर्ध्वहस्तद्वये पङ्कजद्वयमधोहस्तद्वये आसवपूर्णं घटम् ॥ १२ ॥

दधाना मदघूर्णाक्षी दिव्यद्रव्यसुवासिता ।
तां दृष्ट्वा काश्यपेयास्ते हर्षविभ्रान्तचेतसः ॥१३॥

तुष्टुवुस्तां नमस्कृत्य विष्णुमायां तु वारुणीम् ।
सुधा देवी तदा प्राह तान् प्रणम्रान् प्रहस्य वै ॥१४॥

भजध्वमेतं सुरसं ततः सिद्धिमवाप्स्यथ ।
इत्युक्त्वान्तर्हिता देवी दैत्यास्तन्नानुमेनिरे ॥१५॥

अथ देवास्तदा देवीं पूज्य स्वीचक्रुरुत्तमम् ।
सुधारसं तदा तुष्टाः संसिद्धिं परमां गताः ॥१६॥

सुरास्वीकारमात्रेणासुराः समभवन् हि ते ।
त्रैलोक्यमान्याः पूज्याश्च हविर्यज्ञादिभागिनः ॥१७॥

येषां तु भगवान् साक्षाद्योगक्षेमवहो हरिः ।
असुरास्तु ततो दैत्या जातास्तस्यापमानतः ॥१८॥

सर्वकर्मबहिर्भूताः क्लेशभाजः सदैव ते ।
तद् दृष्ट्वा मानवा दैत्या यक्षकिन्नरपन्नगाः ॥१९॥

देवेन्द्रं प्रार्थयामासुः सुरामानन्दकारिणीम् ।
तदा तुष्टः सहस्राक्षो यावत् पातुं समैच्छत ॥२०॥

---

मदेन पानजनितेन धूर्णं भ्रमदक्षि यस्याः । दिव्यमकृत्रिमं यद् द्रव्यं निजहस्तगृहीतं तेन सुवासिता वासनायुक्ता काश्यपेया देवाः ॥ १३ ॥

तां वारुणीं तान् देवान् ॥ १४ ॥

एतं कलशस्थम् । अन्तर्हिता अन्तर्धानं गताः । तद्भजध्वमिति वाक्यम् ॥ १५ ॥

अथ देव्यन्तर्धानानन्तरं तुष्टाः सन्तः ॥ १६ ॥

सुरास्वीकारात्ते देवाः सुराख्या जाताः ॥ १७ ॥

येषां सुराणां योगः अप्राप्तप्राप्तिः, क्षेमः प्राप्तरक्षणम्, तौ वहति । तस्याः सुराया अस्वीकाररूपावमानतः ॥ १८ ॥

तद्देवानां सुरासन्मानजनितं फलं दृष्ट्वा ॥ १९-२० ॥

तावत्सुराः पपुः शीघ्रं वायुः पात्रं तदाहरत् ।
तद्विज्ञायाक्रमं शक्रः शशापाशुगमं तदा ॥२१॥
यतस्त्वं वञ्चयित्वा मां पात्रं गृह्याशु गच्छसि ।
अतस्त्वं सर्वदा लोके न क्वचित्स्थातुमर्हसि ॥२२॥
सदागतिस्वभावस्त्वमदृश्यश्चाप्यदर्शनात् ।
अक्षयं च सुराकुम्भं निःशेषं पश्यसि द्रुतम् ॥२३॥
ततो वीक्ष्य जनान् दीनान् सुरार्थं समुपस्थितान् ।
सहस्राक्षः समालोच्य हर्षयन् तानुवाच ह ॥२४॥
वायुना नीयमानायाः सुराया बिन्दवो भुवि ।
पतिता वृक्षगुल्मेषु तृणेष्वपि च भूरिशः ॥२५॥
तद्रसं ते धारयन्तु बीजैः पुष्पैः फलैरपि ।
तत्र साक्षात्क्रियासिद्ध्या परिपाकाच्च लप्स्यथ ॥२६॥
तयास्मान् तर्पयित्वाथ पीत्वा सिद्धिं प्रपत्स्यथ ।
अथ तेऽपि तथा कृत्वा सिद्धिं प्राप्ता यथेष्टतः ॥२७॥
भोगदा योगदा सिद्धिस्तदा ज्ञानप्रदापि च ।
मोक्षदा च तदा देवि देवताप्रीतिवर्द्धिनी ॥२८॥

---

यावदिन्द्रः सुरां दातुमैच्छत् तावदिति सम्बन्धः । पात्रं सुरापात्रमहरत् अक्रममपराधमाशुगमं वायुम् ॥ २१ ॥

शापमेवाह—यत इत्यादि ॥ २२ ॥

अदर्शनात् अदर्शनं च गतत्वात् ॥ २३ ॥

ततः शापानन्तरम् ॥ २४ ॥

भूरिशो बहुशः ॥ २५ ॥

तद्रसं सुरारसं ते वृक्षादयः । तत्र वृक्षादिषु साक्षात् पाकादिकमनपेक्ष्य ताडवृक्षादिषु गुडोदकादिषु हस्तभ्रामणादिरूपक्रियाणां सिद्ध्या पाकात् कालकृतात् सूर्यादिकृताच्च सुरां लप्स्यथ ॥ २६ ॥

तया सुरया ॥ २७ ॥

प्रीतिवर्द्धनी जातेति शेषः ॥ २८ ॥

ततः कालान्तरे देवि शापजालसमावृता ।
तच्छृणु क्रमतो देवि यथा शापस्य कारणम् ॥२९॥
पुरा वृत्रासुरवधे हीनवीर्यं पुरन्दरम् ।
दृष्ट्वा देवाः सुरां देवीं प्रोचुश्च भयपीडिताः ॥३०॥
त्वं गच्छ देवि पानाय वृत्रं मोहय तत्र वै ।
गत्वा सा मोहयामास पीता वृत्रं महासुरम् ॥३१॥
तद्विज्ञाय महातेजा मोहयन्तीं सुरां तदा ।
आक्रम्य स्वबलं वृत्रः शशापासुरनायकः ॥३२॥
अद्य प्रभृति लोकेऽस्मिन् पीता तेजोपहारिणी ।
भव भद्रे सुरे यस्मान्मोहमेवं प्रयच्छसि ॥३३॥
एवं वृत्रस्य शापस्तु तस्माच्छापं तु मोचयेत् ।
गर्भशापमथो वक्ष्ये शृणु देवि समाहिता ॥३४॥
पुरा त्रैलोक्यमजयद् बलिर्वैरोचनिः शिवे ।
तदा पुराणपुरुषः प्रार्थितो देवतागणैः ॥३५॥
अदित्या गर्भ आसीन आखण्डलशुभाय वै ।
दितिर्विज्ञाय तत्सर्वं स्वसुतानां हितेप्सया ॥३६॥

---

एवमुत्पत्तिमुक्त्वा शापकारणमाह – तत इत्यादि ॥ २९ ॥

इन्द्रपराजयभयेन पीडिताः ॥ ३० ॥

देवानां वाक्यमाह—त्वमित्यादि । तत्र युद्धे सा सुरा पीता सती ॥ ३१ ॥

स्वस्य तपसो बलम् ॥ ३२ ॥

शापमाह—अद्येत्यादि ॥ ३३ ॥

एवं शापः प्राप्त इति शेषः । शापान्तरमाह—गर्भेत्यादि ॥ ३४ ॥

बलिं जेतुं प्रार्थितः ॥ ३५ ॥

आखण्डलः इन्द्रः । तत्सर्वमदितिगर्भावतरणादिकं स्वसुतानां दैत्यानाम् ॥३६॥

पीठपूजाविधौ तस्यै सुरया गरलं ददौ ।
अदितिर्व्याकुला जाता पुरुषं शरणं ययौ ।।३७।।
तदा गर्भस्थितो देव उवाचाऽभर्त्सयन् दितिम् ।
यतस्त्वया कृतं पापं पुत्राणां हितकाम्यया ।।३८।।
तस्मात्तव सुताः सर्वे नाशमेष्यन्ति वै द्रुतम् ।
सुरापीयं गर्भघातदोषयुक्तो भविष्यति ।।३९।।
इति गर्भस्य शापस्तु कथितः परमेश्वरि ।
अग्निशापमथो वक्ष्ये श्रृणु देवेशि यत्नतः ।।४०।।
देवानां मुखमग्निस्तु हव्यवाडभवद्विभुः ।
एकदा स्वःसभामध्ये उर्वशीलास्यप्रेक्षकः ।।४१।।
तदाग्निस्तु सभामध्ये स्वात्मानमभिमानयन् ।
अहं मुखं हि देवानां मदधीनः सुरेश्वरः ।।४२।।
इति मत्वा सुरान् सर्वानवज्ञाय पुरःस्थितः ।
तद्विज्ञाय सहस्राक्षो न तत्सम्यगमन्यत ।। ४३ ।।
तदा भुवि मुनिः कश्चित् पिप्पलाद इति श्रुतः ।
सुराग्रहेणायजत ते ग्रहाः समुपस्थिताः ।। ४४ ।।
मन्त्रयित्वा तदा शक्रः प्रोवाचाग्निं हसन्निव ।
त्वं मुखं सर्वदेवानामतस्तुष्टा वयं सुराः ।। ४५ ।।

---

पीठपूजाविधौ मूर्त्यादौ क्रियमाणबाह्यपूजने तस्यै अदित्यै सुरया सहितं विषं ददौ । पुरुषं नारायणम् ।।३७–३८।।

तस्मात् पापाचरणात् ।।३९–४०।।

स्वःसभा स्वर्गसभा । लास्यं नृत्यम् ।।४१।।

अभिमानप्रकारमाह—अहमित्यादि ।।४२।।

पुरः स्थितः इन्द्रादीन् पृष्ठतः कृत्वा अग्रे स्थितः । तत् स्वावज्ञानम् ।।४३।।

तदा नृत्तसमये । इन्द्रादिदेवान् समुपस्थिताः ।।४४।।

तुभ्यं दत्ता ग्रहाः सर्वे पिब त्वमचिरं शिवाम् ।
तदाऽपि बत तत्सर्वं पीत्वा मोहं समागतः ॥ ४६ ॥

इन्द्रेण प्रहिता देवी मोहयामास भूरिशः ।
उर्वश्याः सन्मुखे चाग्निर्ननर्त स्वयमुत्थितः ॥ ४७ ॥

मत्तं विमुक्तवसनं दृष्ट्वा सर्वे दिवौकसः ।
हासं चक्रुस्तदा ज्ञात्वा लज्जितो हव्यवाहनः ॥ ४८ ॥

सुरां शशाप त्वं देवि यज्ञार्हा न भविष्यसि ।
इत्यग्निशापः कथितः सोमशापं शृणु प्रिये ॥ ४९ ॥

आदिराजः पुरा सोमो बहुभार्यः प्रतापवान् ।
रोहिण्यामेव संसक्तस्तदा चान्याः सुदुःखिताः ॥ ५० ॥

तुष्टुवुश्च सुरां देवीं मोहितस्तु तदा तया ।
मोहिता रोहिणी चात्र नावबुध्यत किञ्चन ॥ ५१ ॥

तदान्या योषितः सर्वा अलमेव च रोहिणी ।
इति प्रोक्तस्तेन भोगं प्राप्ताः सर्वा वरस्त्रियः ॥ ५२ ॥

कालेन तदशेषं वै ज्ञात्वा रुष्टा च रोहिणी ।
तद्विज्ञाय तदा सोमः सुरां प्राह प्रकोपितः ॥ ५३ ॥

---

देवैः सह मन्त्रयित्वा । अन्तः रोषस्य सत्त्वाद्धसन्निवेति । इन्द्रवाक्यम्—त्वं मुखमित्यादि ॥४५॥

तुभ्यमग्नये । सर्वेऽस्मदीया अपि । शिवां सुराम् ॥४६॥

देवी सुरा । भूरिशः बहुशः ॥४७॥

दिवौकसः देवाः ॥४८-४९॥

बहुभार्यः अश्विन्यादिसप्तविंशतिभार्यः । अन्या भार्याः ॥५०॥

मोहितः सोमः । तया सुरया ॥५१॥

अवरस्त्रियः अप्रियस्त्रियः ॥५२॥

कालेन किञ्चित्कालानन्तरं तदशेषम् अश्विन्यादिचेष्टितम् ॥५३॥

ते यतोऽहमवज्ञातो भव नीचैस्तु सेविता ।
सन्तस्त्वां नैव सेवन्तु तस्माद् दुष्टा भविष्यसि ॥ ५४ ॥
इत्येवमभवत् सोमशापः पूर्वं महेश्वरि ।
अथ तीर्थादिशापं तु वक्ष्ये शृणु वरानने ॥ ५५ ॥
एवं बहुविधैः शापैः समाविष्टा सुरा यदा ।
तदा तपः सुबहुशश्चचार सुमहत्तरम् ॥ ५६ ॥
तेन दुस्करयोगेन त्रिलोकीं भयमाविशत् ।
तपोऽग्निधूमयोगेन सुमुहुर्लोकवासिनः ॥ ५७ ॥
तद्विज्ञाय चतुर्वक्त्रः सुरादेव्या महत्तपः ।
वरेण वरयामास सुरां सागरकन्यकाम् ॥ ५८ ॥
तदा प्राह सुरा देवी देवशापैः समावृता ।
अनादृता सर्वलोकैर्वरं मे दीयतां ततः ॥ ५९ ॥
मां विना यागयज्ञादि न भवेत् पूजनं तथा ।
सेवन्तु मां सदा सर्वे मनुष्या भूसुरादयः ॥ ६० ॥
देवाश्च दर्शनात् पानात् स्पर्शनान्मम वांछितम् ।
विन्दन्तु सततं सर्वे सर्वपापं प्रणश्यतु ॥ ६१ ॥
देवाश्च पितरः सर्वे तृप्ताः स्युर्नैव मां विना ।
तच्छ्रुत्वाऽथ सुरज्येष्ठः सुरां प्रोवाच सुन्दरि ॥ ६२ ॥

---

ते त्वया ॥५४॥

तीर्थादीत्यादिना ब्रह्मादिसंग्रहः ॥५५॥

बहुविधैः तेजोहरत्वादिभिः ॥५६॥

तेन सुराकृततपसा । दुष्करयोगेन दुःसहनियमधारणेन । तपोऽग्निजनितधूमयोगेन ॥५७–६०॥

देवाश्च सेवन्त्विति सम्बन्धः । सेवनात् सर्वपापं प्रणश्यतु इत्यन्वयः ॥६१-६२॥

त्वं शापेन समाविष्टा तस्माच्छापस्य मोचनम् ।
अद्य प्रभृति कुर्वन्तु तल्लिङ्गैर्वेदऋग्गणैः ॥ ६३ ॥

ततस्त्वं यागयज्ञेषु युक्ता भव सुसंमता ।
भवन्ति ते वांछितार्था इत्युक्त्वाऽन्तरधीयत ॥ ६४ ॥

ततः संमानिता सर्वैर्यागयज्ञेषु योजिता ।
ततः कदाचिद्देवेशि महायज्ञः प्रवर्तितः ॥ ६५ ॥

पुष्करे ऋषिभिस्तत्र देवाः सर्वे हविर्भुजः ।
आगतास्तीर्थसरितस्तस्मिन् दिव्ये महोत्सवे ॥ ६६ ॥

आगता तु यदा देवी जाह्नवी जगदीश्वरी ।
तदा देवाश्च ऋषयः सरितः प्रत्युपस्थिताः ॥ ६७ ॥

वरदानविमूढा तु सुरा नैवोत्थिताऽभवन् ।
तदा ताः पुण्यसरितः क्रुद्धा गङ्गापमानतः ॥ ६८ ॥

ब्रह्मविष्णुशिवान् प्रोचुः प्रणम्याभिमुखस्थिताः ।
एषा सुराऽस्मान् सततमवजानाति गर्विता ॥ ६९ ॥

अस्मासु या विशिष्टा वै गङ्गा साद्यापमानिता ।
अनन्तरं यद्भवद्भिर्विधेयं तद्विधीयताम् ॥ ७० ॥

तच्छ्रुत्वा ते विधिमुखाः सुरामाहूय शङ्करीम् ।
प्रोचुर्गङ्गामानय त्वं सर्वलौकिकपावनीम् ॥ ७१ ॥

---

तल्लिङ्गैः वृत्रादिलिङ्गैः ॥६३॥

ततः शापमोचनानन्तरम् । युक्ता विनियुक्ता ॥६४॥

संमानिता सुरा । ऋषिभिः प्रवर्तित इत्यन्वयः ॥६५-६६॥

प्रत्युपस्थिताः प्रत्युत्थाय सन्मुखे गतवन्तः ॥६७-६८॥

सरितः प्रोचुरिति सम्बन्धः ॥६९॥

विशिष्टाः श्रेष्ठा भवद्भिर्ब्रह्मादिभिः ॥७०॥

तत्सरितां वाक्यम् ॥७१॥

तच्छ्रुत्वा साभिमानं सा प्राह सर्वस्य शृण्वतः ।
न मेऽस्ति किञ्चित् कर्तव्यं भवद्भिर्विबुधेश्वरैः ॥७२॥

तीर्थैः सरिद्भिर्वा देवा नैव मान्या भवन्तु मे ।
तच्छ्रुत्वा चुक्रुधुः सर्वे ब्रह्माद्याः प्रोचुरुद्धताम् ॥७३॥

सुरां निर्भर्त्सयामासुः शेपुश्चैव पृथक् पृथक् ।
ब्रह्माह हे सुरे त्वं तु सदाऽशुद्धा भविष्यति ॥७४॥

विष्णुराह सुरे पुण्यनाशिनी पानमात्रतः ।
रुद्रः प्राह नराणां त्वं सत्त्वं नाशय सेविता ॥७५॥

अथोचुः सरितः सर्वाः पापाय त्वं भविष्यसि ।
अथ वक्ष्ये शुक्रशापं शृणु देवि समाहिता ॥७६॥

सुरासुराणामभवत् कलहस्तु पुरातनः ।
मृतान् युद्धे सुरान् शुक्रः संजीवन्या त्वजीवयत् ॥७७॥

अथ सेना हीयमाना सुराणामभवच्छिवे ।
आङ्गीरसं तदागत्य देवाः प्रोचुः सुदुःखिताः ॥७८॥

तदा कचं नाम सुतं प्रेषयामास वै शिवे ।
विद्यार्थं शुक्रसविधे भार्गवं चोपसन्नतः ॥७९॥

---

सा सुरा ॥७२-७३॥

कथं प्रोचुस्तदाह-निर्भर्त्सयामासुरिति । पृथक् पृथक् । न ब्रह्मादिशापानामेकरूपता । सदा अशुद्धेति च्छेदः ॥७४॥

सत्त्वं सत्त्वगुणम् ॥७५॥

पापायेत्यत्र सेवितेति संबध्यते ॥७६॥

युद्धेऽसुरानिति छेदः ॥७७॥

आङ्गीरसं गुरुम् ॥७८॥

गुरुः स्वसुतं प्रेषयामास संजीवनीविद्यार्थम् । सविधे समीपे । तदनन्तरं कचः भार्गवमुपसन्नतः उपसादितवान् ॥७९॥

तदाज्ञाय कचं तुष्टः शिष्यं मत्वा शिखण्डिजः ।
दृष्ट्वैतदसुराः सर्वे वधं चक्रुः कचस्य वै ॥८०॥

अजीवयद् भृगुसुतो जीवसूनुं पुनः पुनः ।
तं छित्वा देवकं तस्य दग्ध्वा योज्य सुरासवे ॥८१॥

पानाय प्रददौ तस्मै ज्ञात्वा तद्दैत्यदेशिकः ।
क्रुद्धः शशाप दैत्यान् सः सुरामपि महानृषिः ॥८२॥

इयं संजीवनी विद्या दैत्यानां नोपयोगिनी ।
देवान् नाछतु हे मूढा सुरा चापि कचोद्भवाम् ॥८३॥

ब्रह्महत्यां समाविष्टा ब्राह्मणेष्वशुभंकरी ।
इति ते कथितं देवि शुक्रशापस्य कारणम् ॥८४॥

**देवी उवाच**

एवं चेद्भैरव सुरा निषिद्धैव कथं हि सा ।
पूजायां विनियुक्ता वै त्वयैतत्प्रोच्यतां प्रभो ॥८५॥

**भैरव उवाच**

एवं शापकुलग्रस्ता सुरा त्यक्ता यदाऽभवत् ।
तदा लोकेषु सर्वे वै निरानन्दाऽभवन् सदा ॥८६॥

---

तस्योपसन्नतिमाज्ञाय ज्ञात्वा शिखण्डिजः शुक्रः कचं शिष्यं शिष्यगुणयुतं मत्वा तुष्टः । एतत् शुक्रतुष्टिम् ॥८०॥

पुनः पुनः भूयोऽपि हतमजीवयत् । तं कचम् ॥८१॥

तस्मै शुक्राय । तत् असुरकृत्यम् । दैत्यदेशिकः शुक्रः ॥८२॥

कचोद्भवां समाविष्टेत्यन्वयः ॥८३-८४॥

एवं निखिलशापकारणं श्रुत्वा । एवं शप्तायाः पूजायां कथं विनियोग इति देवी-प्रश्नमवतारयति—देव्युवाचेति । कथं सा त्वया भैरवेण पूजायां विनियुक्ता । विनियोगः कथित इति भावः । एतत् एतत्कारणम् ॥८५ ॥

उत्तरं भैरव उवाचेति । सर्वैस्त्यक्ता ॥८६॥

सुरादेव्यापि देवेशि तपस्तप्त्वा सुपुष्कलम् ।
दयया तु गृहीताऽभूत्पराशक्त्या महेशितुः ॥८७॥
ततः शक्रादिविबुधा भैरवा मातृकागणाः ।
ऋषयो नागगन्धर्वा मनुष्या यक्षराक्षसाः ॥८८॥
आनन्देन विना क्लिष्टा देवेशं शरणं ययुः ।
तदा प्रसन्नो भगवान् शिवश्चन्द्रार्धशेखरः ॥८९॥
प्रोवाच दयमानः सन्देवान् सन्नतरान् स्थितान् ।
सुरा देवी जगद्धात्री परमानन्दकारणम् ॥९०॥
लोके सुरामया यज्ञास्ते हीनाः शापकारणात् ।
तस्मात् सुरामयं यज्ञं शापमोचनपूर्वकम् ॥९१॥
संसेवध्वं तेन पुनरानन्दं प्राप्स्यथाऽमलम् ।
न तुष्टिः स्यात् सुराहीनयज्ञेन तु कदाचन ॥९२॥
तस्मात् सुरामयैर्यज्ञैरिष्ट्वा तुष्टा भवन्तु वै ।
इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत ॥९३॥
इति ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
नाभक्तेभ्यः प्रदातव्यं गोपितव्यं विशेषतः ॥९४॥

॥ इति श्रीपरमानन्दतन्त्रे नवमोल्लासः ॥



---

महेशितुः शिवस्य । पराशक्त्या भवान्या ॥८७-८९॥
दयमानः दयायुतः ॥९०॥
सुरामया यज्ञाः स्थिता इति शेषः । पूर्वकं कृत्वेति शेषः ॥९१॥
सुरां संसेवध्वम् । अमलं मोहरहितम् ॥९२-९३॥
उपसंहरति—इतीति । पृच्छसि पृष्टवत्यसि ॥९४॥

सौभाग्यानन्दसंदोहे वधूपद्यार्थबोधकः ।
परमानन्दटिप्पण्यां नवमोल्लासकोऽभवत् ॥ ९ ॥



## दशमोल्लासः

देवी उवाच

देवेश श्रोतुमिच्छामि नैवेद्यानन्तरक्रियाम् ।
विस्तरेण महेशान वक्तुमर्हस्यशेषतः ॥१॥

भैरव उवाच

शृणु देवेशि वक्ष्यामि नैवेद्यानन्तरक्रियाम् ।
प्राणादिमुद्रा पश्चात्तु कृत्वा चाञ्जलिबन्धनम् ॥२॥

आत्मतत्त्वव्यापिकान्ते नाम प्रोक्त्वा तु तृप्यतु ।
एवं विद्यातत्त्वमथ शिवतत्त्वं पठेच्छिवे ॥३॥

सर्वतत्त्वं मूलबीजव्यस्तसामस्त्ययोगतः ।
चित्पात्रे सद्धविः सौख्यं विविधानेकभक्षणम् ॥४॥

निवेदयामि ते देवि सानुगायै जुषाण तत् ।
इति संप्रार्थ्य भुञ्जानां ध्यायन् देवीं जपेच्छिवे ॥५॥

---

देवीप्रश्नमाह--देव्युवाचेति । नैवेद्यस्यानन्तरं कर्तव्यां क्रियाम् ॥१॥

उत्तरं भैरव उवाचेति । प्राणादिमुद्राप्रदर्शनस्य पश्चात् ॥२॥

आत्मतत्त्वव्यापिका इत्यस्यान्ते । नाम बालात्रिपुरसुन्दरी इति । एवम् आत्मतत्त्व इति स्थाने विद्यातत्त्वं शिवतत्त्व सर्वतत्त्वम् इति पठेत् ॥३॥

आत्मतत्त्वेत्यादि त्रयाणामादौ मूलव्यस्तस्यैकैकबीजस्य सर्वतत्त्वेत्यस्यादौ मूलसमस्तस्य योगः । प्रार्थनामन्त्रमाह--चिदित्यादि । चिन्मये पात्रे । अनेकभक्षणात्मकं सद्रूपं हविः सौख्यं यथा तथा जुषाणेत्यन्वयः ॥४॥

ध्यानोपचारप्रकारमाह--भुञ्जानां ध्यायन्निति । ध्यानमन्त्रः "ब्रह्मेशाद्यैः" इत्येकोनविंशे वक्ष्यमाणो ज्ञेयः । जपकाले कामकलाध्यानं तु नास्ति, तन्मन्त्रोपदेशाभावेनायोग्यत्वात् । मूलं जपेत् ॥५॥

समर्प्यैशदिशाभागे हावयेत् परदेवताम् ।
कुण्डे वा स्थडिले देवि पात्रे वा लोहभिन्नके ॥६॥
उल्लिख्य स्थाप्य मनुना निक्षिप्येन्धनसंचयम् ।
प्रज्वाल्य प्राणानायम्य ऋष्यादिन्यासमाचरेत् ॥७॥
व्यस्तसामस्त्यबीजैस्तं परिषिच्य प्रपूज्य च ।
ध्यात्वा देवीं तत्र वह्नौ पूजां शक्त्या समाचरेत् ॥८॥
अग्नये मूलदेव्यै त्रिरेकैकामङ्गदेवताम् ।
पुनर्मूलेनैकमेवं हावयेद् रुद्रसंख्यया ॥९॥

---

गुह्यातिगुह्येति जपं समर्प्य स्थण्डिलं हस्तमितं मृत्तिकया कृतमङ्गुष्ठपर्वमितोच्चं चतुरस्रम् । तदुक्तं बृहद्वामकेश्वरे—"स्थण्डिलं चतुरस्रं तु सुसमं हस्तमात्रकम् । उच्चमङ्गुष्ठाग्रपर्वसमं मृत्तिकया कृतम् ॥" इति ॥६॥

उल्लेखनं तूक्तं त्रिपुरार्णवे—"तिस्रो रेखास्तु पूर्वान्ता दक्षिणात् पश्चिमात्तथा । उत्तरान्ताः कुशाद्यैस्तु कृत्वा तन्मध्यतो न्यसेत् । मूलेन प्रोक्षितं त्यक्त्वा चाग्निं मूलेन निक्षिपेत् ॥" इति । एवं त्रिपुरार्णवानुरोधेनैव पद्धतिकृतोल्लेखनमुक्तम् । वस्तुतस्तु त्रयोदशोल्लासे दीक्षाप्रकरणे दक्षमध्योदक्सु पश्चादित्यादिनोक्तमुल्लेखनमेवात्रोचितमिवाभाति । एवमुल्लिख्य मनुना मूलेनाग्निं संस्थाप्य इन्धनानि जलप्रोक्षितान्यग्नौ निक्षिपेत् । तदुक्तं नित्यातन्त्रे—"प्रोक्षितान्येव काष्ठानि निक्षिप्य ज्वालयेत्ततः । अन्यथाग्निरशुद्धः स्याद्धुतं तत्र निरर्थकम् ॥" इति । ततः प्रज्वाल्य प्राणायामं कृत्वा बालात्रिपुरसुन्दरीनित्यपूजाङ्गहोमं करिष्य इति संकल्पमपि कुर्यात्, समर्पणस्याग्रे वक्ष्यमाणत्वात् । पृथक् समर्पणे संकल्पोऽप्यावश्यकः । एतदुक्तं रहस्यार्णवे—"आदौ संकल्प उद्दिष्टः पश्चात्तस्य समर्पणम्" इति । संकल्पविशेषलक्षणमेकोनविंशे स्पष्टीभविष्यति । ततः ऋष्यादिध्यानान्तम् । मूलस्य कृत्वा ॥७॥

व्यस्तैः मूलस्यैकैकबीजैः । समस्तैस्त्रिभिः । तमग्निं परिषिच्य । परिषेचनमुक्तं त्रिपुरारहस्ये—"दक्षप्रत्यगुदग्दिक्षु प्रत्यङ्नैर्ऋतवायुतः । सेचयेच्छुद्धतोयेन कनिष्ठामूलभागतः ॥" इति । ततः—"वह्निं देवीं प्रपूज्य" इति त्रिपुरार्णवे पूजासाम्योक्त्या वह्निमपि शक्त्या संपूज्य वह्नौ चक्रादौ पूजितां देवतां ध्यात्वा । शक्त्या पञ्चोपचारादिना ॥८॥

अग्नये सकृत् एकैकामाहुतिं हावयेत् । मूलेनैकं एकवारम् । एवं रुद्रसंख्यया एकादशधा हुनेदित्यर्थः । होममन्त्रस्तु—अग्नये स्वाहा । भूःस्वाहा । ऐं हृदयाय नमः स्वाहा

पायसापूपकुसुमभक्ष्यैर्वा येन केनचित् ।
घृताक्तेनाथवा देवि घृतेनैव तु होमयेत् ॥१०॥
पुनः पूज्याथ चोद्वास्य परिषिच्य च पूर्ववत् ।
समर्प्य न्यस्तदेहः सन् बलिपूजां समाचरेत् ॥११॥
ईशादिवेदिकोणेषु मण्डलानि प्रकल्पयेत् ।
चतुरस्रं तथा वृत्तं त्रिकोणं च प्रकल्पयेत् ॥१२॥
वाग्भवं च ततो मायां व्यापकान् मण्डलाय हृत् ।
इति सर्वेषु संपूज्य बटुकं योगिनीं ततः ॥१३॥

---

इत्यादि, "स्वाहान्ततत्तन्मन्त्रेण होमं कुर्याद् यथाविधि" इति त्रिपुरार्णववचनात् । "मूलविद्याषडङ्गकम् । स्वाहान्तं च पठन्" इति विंशतितमोल्लासे वक्ष्यमाणत्वाच्च । षडङ्गकमिति मूलषडङ्गन्यासमन्त्रः, सम्प्रदायाद् एवं हुत्वा तत्तन्नाम्ना अग्नय इदं न मम इत्यादि त्यजेत् । एतदुक्तं त्रिपुरारहस्ये—"होमान्ते तु त्यजेत्तत्तन्नाम्ना होमेषु सर्वतः" इति । तत्र शिरसे स्वाहेत्यस्यान्ते स्वाहान्तरस्य योगो नास्ति, "वह्निजायान्तमन्त्रेषु न स्वाहान्तरयोजना" इति रहस्यार्णवोक्तेः ॥९॥

होमद्रव्यमाह—पायसेत्यादि । विशेषतो होमद्रव्याण्युक्तानि नित्यातन्त्रे—"फलैः पुष्पैस्तण्डुलैर्वा सुगन्धिकुसुमैरपि । होमं कुर्याद्घृताक्तैस्तैरन्यैर्द्रव्यैः पवित्रितैः ॥" इति । रहस्यार्णवे च—"पायसोदनभक्ष्याद्यैरमिश्रैर्लवणेन तु" इति । येन केनचिदिति तिलयवादिभिः । अग्निनिर्णयस्तु रुद्रयामले—"नित्यं नैमित्तिकं होममाहिताग्निः समाचरेत् । स्मार्ताग्नौ लौकिके चान्यैर्होतव्यं विधिवत् प्रिये ॥" इति ॥१०॥

पुनर्देवतां संपूज्य उद्वास्य । अत्रोद्वासनमग्नावागता देवता पुनश्चक्रे गतेति । ध्यानम्—"होमान्ते तु पुनर्ध्यायेद् देवतां चक्रसंगताम्" इति त्रिपुरार्णवानुरोधात्, आवाहनाभावाच्च । होमं समर्प्य करन्यासादिपूजान्तं कृत्वा । बलिपूजामाह—बलिपूजामित्यादि ॥११॥

देवतापीठाधःस्थितवेदिकाया ईशादिकोणेषु तत्र मण्डले त्रिकोणं देवताभिमुखम्, बलिदेवतानां देवताभिमुखत्वात् । मण्डलं तु मत्स्यमुद्रया गन्धोदकेन कर्तव्यम्, "गन्धोदकेन पुरतो मण्डलं मत्स्यमुद्रया" इति षष्ठोल्लासवचनात् ॥१२॥

मण्डलपूजनमन्त्रमाह—वाग्भवमित्यादि । वाग्भवं ऐं, मायां ह्रीं, व्यापकपदानन्तरं मण्डलाय । हृत् नमः । सर्वेषु मण्डलेषु । ईशादिवायव्यान्तमण्डलचतुष्टयबलिदेवतापूजनमन्त्रनाह—बटुकमित्यादि ॥१३॥

क्षेत्रपालं गणेशं च बिन्द्वाढ्यमुखवर्णतः ।
हृदन्तैः क्रमतः पूज्य पञ्चभिश्चोपचारकैः ॥१४॥
मूलदेव्युन्मुखा ध्यात्वा न्यस्याऽग्रे बलिपात्रकम् ।
अन्नं व्यञ्जनसंयुक्तं क्षुद्रामलकसंमितम् ॥१५॥
विशेषामृतधाराढ्यशुद्धिलेशेन सुन्दरि ।
तत्तन्मुद्राधृतेनैव वामहस्तेन चार्पयेत् ॥१६॥
अनामायां तथाऽनामामध्ययोस्तर्जन्यामथ ।
मध्यमायां क्रमाद् देवि भवेदङ्गुष्ठयोगतः ॥१७॥
अथ मन्त्रान् प्रवक्ष्यामि शृणु देवेशि संयता ।
एह्येहि देवी पुत्रान्ते बटुकान्नाथतः शिवे ॥१८॥
कपिलान्ते जटाभारभासुरान्ते त्रिणेत्रतः ।
ज्वालामुखात् सर्वविघ्नान्नाशय द्वितयं पठेत् ॥१९॥

---

बिन्दुयुतो मुखवर्ण आद्यवर्णः । तस्मादनन्तरं बटुकादिनाम बं बटुकायेत्यादि । हृदन्तैस्तैर्नामभिरिति शेषः ॥१४॥

मूलदेव्यभिमुखा बलिदेवता ध्यात्वा । मण्डलाग्रे क्षुद्रामलकमनतिस्थूलामलकं तन्मितमन्नव्यञ्जनम् । तदुक्तं योगिनीतन्त्रे–"मध्यधात्रीफलमितमन्नव्यञ्जनकं न्यसेत्" इति ॥१५॥

वामहस्तकृततत्तन्मुद्राधृतशुद्धिलेशेन दक्षहस्तधृतदर्वीसमर्पितविशेषार्घ्यद्रव्यधारायुतेनार्पयेत् ॥१६॥

अत्र बलिपात्रं ताम्रमयमुक्तं बृहद्वामकेश्वरे--'बलिपात्रं चार्घ्यपात्रं ताम्रजं चोत्तमं भवेत्" इति । त्रिपुरार्णवेऽपि– 'बलिपात्रं ताम्रभवं नैवान्यत्तु कदाचन" इति । मुद्रा आह–अनामायामित्यादि । अनामामध्यमयोः । तर्जन्यामथेति चतुर्थ्यन्तगण आर्षः ॥१७॥

बलिमन्त्रानाह–अथेत्यादि । अन्ते आत् । तः शिवे ॥१८॥

अन्ते अन्ते तः । आत् इति त्यक्त्वा एह्येहीत्यादि सर्वविघ्नानित्यन्तं स्वरूपम् । नाशयेति द्विः ॥१९॥

सर्वोपचारसहितं बलिं गृह्णद्वयं शिरः ।
बटुकस्य बलेर्मन्त्रः पञ्चपञ्चाशदक्षरः ॥२०॥
योगिनीभ्यः शिरः सर्वयोगिनीभ्योऽथ वर्म वै ।
अस्त्रं शिरश्च यामादौ मन्त्रः सप्तदशाक्षरः ॥२१॥
आद्यर्णजातयोर्वर्मस्थानक्षेत्रात् तु पाल वै ।
धूपदीपा च सहितं बलिं गृह्णद्वयं ततः ॥२२॥
सर्वकामान् पूरयकं स्यात् पञ्चत्रिंशदक्षरः ।
गां गीं गूं गणपान्ते वै तये वरवरात्र द ॥२३॥
सर्वजनं मे वशमा ततो नय बलिं वदेत् ।
गृह्णद्वयं शिरश्चायं स्यादेकत्रिंशदक्षरः ॥२४॥
बलिदानेन सन्तुष्टो बटुकः सर्वसिद्धिदः ।
शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ॥२५॥
या काचिद्योगिनी रौद्रा सौम्या घोरतराऽपरा ।
खेचरी भूचरी व्योमचरी प्रीतास्तु मे सदा ॥२६॥

---

सर्वेत्यादिबलिभित्यन्तं स्वरूपम् । गृह्णेति द्विः । शिरः स्वाहा ॥२०॥

योगिनीबलिमन्त्रमाह—योगिनीत्यादि । शिरः स्वाहा । वर्म हुं । अस्त्रं फट् । शिरः स्वाहा । अथ वै इति त्यक्त्वा शेषं स्वरूपम् । सर्वादौ यां इति ॥२१॥

क्षेत्रपालबलिमन्त्रमाह-आद्यर्णेत्यादि । नाम्नः आद्यर्णः क्ष । तस्य जातयः क्षां क्षीं इत्यादि क्षः इत्यन्तम् । वर्म हुं । आतु वै आच्च दति त्यक्त्वा स्थानेत्यादि बलिम् इत्यन्तं स्वरूपम् । गृह्णेति द्विः ॥२२॥

सर्वकामान् पूरय स्वरूपम् । कं शिरः स्वाहा इत्यर्थः । गणेशबलिमन्त्रमाह—गामित्यादि । अन्ते वै आ च ॥२३॥

तत इति त्यक्त्वा गाम् इत्यादि बलिम् इत्यन्तं स्वरूपम् । गृह्ण द्विः । शिरः स्वाहा ॥२४॥

तत्तद्बलिदानान्ते क्रमेण प्रार्थनमन्त्रानाह—बलिदानेत्यादि ॥२५॥

योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालः स किङ्करः ।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ॥२७॥
सर्वदा सर्वकार्याणि निर्विघ्नं साधयन् मम ।
शान्तिं करोतु मे नित्यं विघ्नराजः सशक्तिकः ॥२८॥
एवमन्ते प्रार्थ्य नमेत् सर्वान् पूज्य त्रितालतः ।
बलिदानेन संतुष्टाः क्षमध्वं बलिदेवताः ॥२९॥
विहरन्तु यथासौख्यं यथेष्टासु दिशासु च ।
बटुकाद्याः सुराः सर्वे सर्वसिद्धिविधायिनः ॥३०॥
मे शान्तिपुष्टितुष्टयश्च सन्तु तत्तत्प्रसादतः ।
नाराचमुद्रया स्तुत्वा विसृज्य बलिदेवताः ॥३१॥
चतुस्तारैस्त्रिधात्मानं प्रोक्ष्याथ परमेश्वरि ।
विमुष्टयङ्गुष्ठतर्जन्यावूर्ध्वाङ्गुष्ठा प्रतर्जनी ॥३२॥
हस्तद्वयगता चैवं मुद्रा नाराचसंज्ञिता ।
मातः स्वर्णादिपात्रस्थं कर्पूरादिसुवासितम् ॥३३॥

---

रौद्रा राजसी । सौम्या सात्त्विकी । घोरतरा तामसी । परा त्रितयमिश्रभूता । खे शून्यात्मकेऽन्धकारमये पाताले चरतीति खेचरी ॥२६-२८॥

अन्ते तत्तद्बलिदानान्ते । सर्वान् बटुकादीन् । त्रितालतः तालत्रयदानानन्तरम् ॥२९॥

सर्वसिद्धिविधायिनः विहरन्तु इति सम्बन्धः ॥३०॥

तत्तत्प्रसादतः बटुकादिप्रसादतः । मे शान्त्यादयः सन्तु इत्यन्वयः । नाराचमुद्रया सहितः नाराचमुद्रां प्रदर्शयन्नित्यर्थः । विसृज्येति विसर्जनं गता इति ध्यानमात्रम् ॥३१॥

सामान्यकलशोदकेन प्रोक्ष्य । नाराचमुद्रामाह--विमुष्टीति । मुष्टेर्विगते अङ्गुष्ठतर्जन्यौ । तत्र ऊर्ध्वमुखमङ्गुष्ठमग्रे ऋजरूपा तर्जनी ॥३२॥

नैवेद्यशेषकृत्यमाह—मातरित्यादि ॥३३॥

जलं सुशीतलं स्वच्छं गृहाण परमेश्वरि ।
मध्ये जलं समर्प्यैवं पश्चात् ताम्बूलमर्पयेत् ॥३४॥
ताम्बूलदलकर्पूरपूगभागतरङ्गितम् ।
संशोधितं सुगन्धाढ्यं ताम्बूलं प्रतिगृह्यताम् ॥३५॥
तत आरार्तिकं कुर्यात् तद्विधानं शृणु प्रिये ।
आरार्तिकं विना देवि न प्रहृष्यति देवता ॥३६॥
लोहभिन्ने सुवर्णादिपात्रे सिन्दूररेणुभिः ।
नानाविधैर्वर्णकैश्चाप्यष्टपत्रं सुकर्णिकम् ॥३७॥
स्वस्तिकं वा प्रकल्प्याथ पिष्टजान् डमरुप्रभान् ।
घृतपक्वान् नव सप्त पञ्च त्रितयमेव वा ॥३८॥
सवर्तिकं घृतैः पूर्णं क्रमाद् विन्यस्य पात्रके ।
प्रज्वाल्य मायया पश्चान्नवरत्नैश्च मन्त्रयेत् ॥३९॥
चक्रमुद्रां प्रदर्श्याथ नवरत्नैः सुपूजयेत् ।
आमस्तकं तु तत्पात्रमुद्धरेत् स्वयमुत्थितः ॥४०॥

---

हस्तप्रक्षालनादिफलोपचारस्य पश्चात् ॥३४॥

ताम्बूलदलं नागवल्लीदलं कर्पूरपूगानाम् अंशैस्तरङ्गितं भरितम् । सम्यक् कीट-तद्गृहादिनिरसनेन शोधितम् ॥३५॥

आरार्तिकविधिमाह—तत इति । तस्यात्यावश्यकत्वद्योतनाय तदकरणे दोषमाह—आरार्तिकं विनेत्यादि । एतेन "अभावे कुसुमाक्षतैः" इति आरार्तिकविषये न भवतीति ज्ञेयम् । अत एव योगिनीतन्त्रे "गन्धादिपञ्चकमिव मुख्यमारार्तिकं चरेत्" इति मुख्यारार्तिकमेव कर्तव्यमित्युक्तम् । इदं चारार्तिकं नीराजनपदेनोपचारेषूक्तम् ॥३६॥

सुवर्णादीत्यादिना रजतादिनिखिलधातुसंग्रहः ॥३७॥

वर्णैः स्वस्तिकं वा प्रकल्प्येति सम्बन्धः । पिष्टजान् डमरुप्रभांश्च प्रकल्प्येति ॥३८॥

सप्ताद्यन्यतमसंख्यायुतदीपाधारं स्वर्णाद्युक्तपात्रे क्रमात् कर्णिकादौ दलादौ च विन्यस्येत्यन्वयः । मायया ह्रीं इति प्रज्वाल्य तत्पात्रं नवरत्नमन्त्रेणाभिमन्त्रयेत् ॥३९॥

अथ चक्रमुद्राप्रदर्शनान्तरं तत्पात्रमारार्तिकपात्रम् ॥४१॥

समस्तचक्रचक्रेशीयुते देवि नवात्मिके ।
आरार्तिकमिदं दिव्यं गृहाण मम सिद्धये ॥४१॥
इति घण्टां वादयन् वै देव्या आपादमस्तकम् ।
दक्षहस्तेन त्रिर्भ्राम्य पात्रं स्थाप्य नतिं चरेत् ॥४२॥
अधरोर्ध्वक्रमेणैव वामे दक्षतलं न्यसेत् ।
अङ्गुष्ठे च कनिष्ठा स्याद्विरलाङ्गुलयस्तथा ॥४३॥
आराभाः परितो देवि चक्रमुद्रैवमीरिता ।
पञ्चरत्नं संपुटितं लक्ष्मीमायाद्वयेव तु ॥४४॥

---

आरार्तिके विशेष उक्तस्त्रिपुरार्णवे—"स्वर्णादिपात्रे देवेशि पञ्चवर्णैः प्रकल्पयेत् । पद्मं वा स्वस्तिकं वापि चान्या वा रङ्गवल्लिका ॥ सुशोभना कृता तत्र षोडश द्वादशापि वा । नव सप्त पञ्च वापि त्रयं वा दीपपात्रकम् । डमर्वाकारमपि च पिष्टजं वोदनोद्भवम् । सुवर्णादिधातुजं वा चैकं वाप्युक्तसंख्यया । वर्तिकासंयुतं तच्च घृतपूर्णं प्रकल्पयेत् । सर्वतोभद्रसंयुक्तं महापुण्यफलप्रदम् । नानाविधसुयन्त्राढ्यं बीजाक्षरसमन्वितम् । देवताप्रीतिजनकमारार्तिकमिहेश्वरि ॥ इति । योगिनीतन्त्रे—"विचित्ररङ्गवल्याढ्यपात्रके डमरुप्रभे । घृतवर्तिसमायुक्तान् दीपान् कर्पूरखण्डजान् । प्रज्वालितद्रव्यदीपान् भ्रामयेद् देवताग्रतः ॥" इति । दीपपात्रप्रमाणमुक्तं कुलार्णवे—"घृते सुपक्वपिष्टेन कुर्याद्द्वेदाङ्गुलोन्नतान् । दीपान् डमरुकाकारान् त्रिकोणान् वातिशोभनान् ॥" इति । तत्र मन्त्रमाह—समस्तेत्यादि । समस्तं भूपुरादिबिन्द्वन्तं यच्चक्रं तत्सम्बन्धिन्यो याश्चक्रेश्वर्यः त्रिपुराद्या नव ताभिर्युते । नवात्मिके नवावरणरूपत्वात् । अथवा नवात्मिका सदा नूतनरूपा । एतदुक्तं त्रिपुरारहस्ये—"नवात्मिका सदा त्वं वै यतो नास्ति जरा तव" इति ॥४१॥

इति पूर्वोक्तमन्त्रेण । पात्रमारार्तिकपात्रम् । नतिं नमस्कारम् । एतद्दर्शनस्पर्शनफलमुक्तं त्रिपुरार्णवे—"एवमारार्तिकं सर्वैर्दर्शनीयं प्रयत्नतः । तज्ज्वालां तु स्पृशेद् देवि हस्ताभ्यां प्रणमेत्ततः ॥ दृष्ट्वा स्पृष्ट्वा च दौर्भाग्यं पातकं चापि नाशयेत् ॥" इति ॥४२॥

चक्रमुद्रामाह—अधरेत्यादि । अधः वामकरतलमूर्ध्वं दक्षकरतलमिति क्रमेण वामकरतले दक्षकरतलं न्यसेत् । वामाङ्गुष्ठे दक्षकनिष्ठायोगः । दक्षाङ्गुष्ठे वामकनिष्ठायोगः स्यात् । अन्ये हस्तद्वयाङ्गुलयो विरला असंश्लिष्टाः ॥४३॥

तलद्वयपरितः । आराभाः रथचक्रमध्यनिहिततिर्यक्काष्ठानि आराः, तदाभाः ।

नवरत्नाख्यबीजानि दीपान्तैरभिमन्त्रयेत् ।
ततः कुमारीबटुकौ शक्तिं चापि प्रपूजयेत् ॥४५॥
विशेषार्घ्यामृतैर्देवि देवतां तत्र भावयन् ।
प्रक्षाल्य पादौ गन्धाद्यैरभ्यर्च्य प्रणमेत् पृथक् ॥४६॥
आयाहि वरदे देवि मण्डलोपरि सर्वदा ।
पूजां गृहाण देवेशि शत्रूणां क्षयकारिणि ॥४७॥

---

पञ्चरत्नबीजमष्टमे उक्तम् । लक्ष्मो श्रीं माया ह्रीं उभाभ्यां संपुटितम् । सम्पुटलक्षणमुक्तं योगिनीतन्त्रे—"पुटितं मध्यपठितमनुलोमविलोमयोः" इति । अत्रैकबीजसम्पुटस्थले त्वनुलोमविलोमभावो भावनयैव संपादनीयः, अन्यप्रकारस्यासम्भवात् । एवमजपापुटितमित्यादौ हंसः ॐ हंस इत्येव न तु मन्त्रान्ते सः हं इति । तस्याऽजपात्वाभावादित्याद्यवधेयम् । एवं पुटितं पञ्चरत्नबोजमेव नवरत्नाख्यबीजानीत्यन्वयः ॥४४॥

तैः नवरत्नबीजैः । ततः आरत्यनन्तरम् । शक्तिं चेति चकारादेकोनविंशे वक्ष्यमाणगुरुपूजनमपि योग्यतया ज्ञेयम् ॥४५॥

तत्र कुमार्यादिषु देवतां बालां बटुकं च क्रमेण भावयन् पादौ प्रक्षाल्य गन्धाद्यैर्विशेषार्घ्यामृतैश्चाभ्यर्च्य प्रणमेदित्यन्वयः । विशेषार्घ्यामृतैरर्चनं तद्द्रव्यं पात्रान्तरे गृहीत्वा प्रदानमेवेति पात्रत्रयं दत्त्वेति कुमार्यादिसहचरितशक्तेः पात्रदानकथनात् । पृथग् इति न युगपत् पूजनम्, किन्तु एकपूजानन्तरमपरम् ॥४६॥

कुमार्या लक्षणमुक्तं त्रिपुरारहस्ये—"चतुर्थवर्षमारभ्य कुमारी नववर्षतः । उत्तमा स्यान्मध्यमा तु स्यात् त्रयोदशवर्षतः । अनूढैवोत्तमा ज्ञेया मध्यमोढापि चाक्षता । अधमान्या समाख्याता हीनाङ्गीं रोगिणीं तथा । विधवां च परित्यज्य कुमारीं पूजयेद् बुधः । त्रिवर्षान्तो बटुकोऽप्युक्तलक्षणः ॥ अहीनवर्णः संपूज्यश्चाव्रती तत्र चोत्तमः । एवंविधैव शक्तिः स्वाच्छुभरूपक्रियाशया ॥ हीनवर्णापि संपूज्या कुमारी च सुवासिनी ॥" इति । कुलार्णवे शक्तिलक्षणमुक्तम्—"सुरूपा तरुणी शान्तानुकूला मुदिता शुचिः । शङ्काहीना भक्तियुक्ता गुरुशास्त्रपरायणा ॥ प्रियाक्षरा विशेषज्ञा देवतापूजनोत्सुका । मनोहरा सदाचारा शक्तिरेवं सुलक्षणा ॥" इति । एवं निषिद्धलक्षणान्यपि तत्रैवोक्तानि—"दूष्या च कर्कशा लज्जाहीना च कुलदूषिणी । दुराचारा दुराराध्या भीता क्रुद्धा चलालसा ॥ निद्रासक्तातिदुर्मेधा हीनाङ्गी व्याधिपीडिता । दुर्गन्धा दुःखिता मूर्खा वृद्धोन्मत्ता रहस्यभित् ॥ ईदृशीं मन्त्रयुक्तां च पूजाकाले विवर्जयेत् ।" इति । तथा—"स्वशक्तिं वीरशक्तिं वा दीक्षितां गुरुरग्रणीः । पाययित्वा पिबेद् द्रव्यमिति शास्त्रस्य निश्चयः ॥" इति । तथा योगिनीतन्त्रे—"सवर्णा हीनवर्णा वा कुलस्था कुलदापि वा ।

आवाह्यैवं सुपूज्यार्थं पञ्चबाणैः प्रविन्यसेत् ।
मुखे स्याद्वाग्भवं युग्ममाद्यं स्तनयुगेऽपि तम् ॥४८॥

नाभावूर्वोः परद्वन्द्वमङ्घ्रयोः पञ्चाक्षतादिभिः ।
मनसा न्यस्य पुष्पाद्यैस्तयोत्थाय प्रपूजयेत् ॥४९॥

संक्षोभणादिषण्मुद्राः प्रदर्श्याथ समर्पयेत् ।
अलिपात्रमिदं तुभ्यं दीयते पिशितान्वितम् ॥५०॥

स्वीकृत्य सुभगे देवि श्रियं देहि रिपून् दह ।
कामेश्वरमनोऽभीष्टकामाचारविनोदिनि ॥५१॥

गृहाण पात्रमपरं सद्वितीयं कुलाङ्गने ।
पात्रं तृतीयकं तुभ्यं दीयते पिशितान्वितम् ॥५२॥

---

मन्त्रोपासनसंयुक्ता पूज्या स्याद् गणिकापि च ॥" इति । तथा—"योग्या वापि निषिद्धा वा बहुरोगाकुलापि वा । काले सुवासिनीं प्राप्तां सर्वथा भक्तितोऽर्चयेत् ॥" इति । सुवासिनीपूजायां विशेषमाह—आयाहीत्यादि । मण्डलोपरीति मण्डलस्थसुवासिन्यामित्यर्थः । अथवा देवतारूपिण्याः शक्तेराह्वानार्थोऽयं मन्त्रः । मण्डलं पूजास्थानम् । एतल्लक्षणं त्रयोदशोल्लासे स्पष्टीभविष्यति ॥४७॥

एवमुक्तमन्त्रेण सुवासिन्यां देवतामावाह्य पञ्चोपचाराद्यैः सुपूज्य अथ पूजानन्तरं न्यासप्रकारमाह—मुखेत्यादि । वाग्भवं ऐं आद्यं युग्मं पञ्चबाणेषु द्रां द्रीं इति । परं तृतीयं क्लीं नाभावित्यन्वयः ॥४८॥

परद्वन्द्वं चतुर्थं पञ्चमं ब्लूं सः इत्यूर्वोः । अङ्घ्रयोश्चरणयोः । पञ्च द्रां इत्यादिपञ्चकम् । अक्षतादिभिः पुष्पाक्षतक्षेपैस्तत्तदङ्गे मनसा न्यस्य । मन्त्रस्तु ऐं नम इत्यादि, "चतुस्तारादिकान् देवि हृदन्तान् विन्यसेत् क्रमात्" इति न्याससामान्यमन्त्रोद्धारवचनात् । तया सुवासिन्या सह । पुष्पाद्यैः प्रपूजयेत् त्रयोदशोल्लासे वक्ष्यमाणरीत्या पुष्पाञ्जलिं दद्यात् ॥४९॥

सुवासिन्यै प्रदर्श्य विशेषार्घ्यामृतयुक्तं पात्रं समर्पयेत् । तत्र मन्त्रः—अलिपात्रमित्यादि । अलिना प्रथमद्रव्येण युतं पात्रं पिशितं द्वितीयम् ॥५०॥

आद्यपात्रस्वीकारानन्तरं द्वितीयपात्रदाने मन्त्रमाह—कामेश्वरेति । कामेश्वरस्य मनोऽभीष्टा ये कामाचाराः कामविलासास्तैर्विनोदनशीला ॥५१॥

कुः पृथ्वी । इदं च पञ्चभूतोपलक्षकम् । तल्लीयते यत्र स कुलः परशिवः, तस्याङ्गना । तृतीयपात्रमन्त्रमाह—पात्रमिति ॥५२॥

गृहाण परमप्रीत्या मह्यं देहि वरं सदा ।
इति पात्रत्रयं दत्त्वा प्रक्षाल्याथ तुरीयकम् ।।५३।।
आनन्देन विना देवि न च तृप्यन्ति मातरः ।
तस्मादानन्दपात्रं मे देहि दिव्यं वरानने ।।५४।।
सा स्वीकृत्यावशेषं वै प्रदद्यात् साधकाय तु ।
पीतशेषं प्रदास्यामि वत्स तुभ्यं सुधारसम् ।।५५।।
तव शत्रून् हनिष्यामि दास्यामि परमां श्रियम् ।
आदाय च स्वयं साक्षादादिशक्तेर्मुखाम्बुजात् ।।५६।।
गलितं परमानन्दरससारं पिबाम्यहम् ।
इति स्वात्मनि तद्धृत्वा देवतारूपिणीं नमेत् ।।५७।।
ततः सामयिकान् पूज्य हेतुतीर्थैस्तु भक्तितः ।
दत्त्वा पुष्पाञ्जलिं प्राणानायम्य न्यस्य देवताम् ।।५८।।

---

इति उक्तप्रकारेण प्रथमतः विशेषार्घ्यद्रव्ययुतं पात्रं दत्त्वा ततः पात्रान्तरे तद्द्रव्यमादाय सुवासिनीहस्तस्थितपात्रे एव द्विवारं समर्प्य ततः प्रक्षालिते सुवासिनी-हस्तस्थे पात्रे तुरीयकं चतुर्थं पात्रं दत्त्वेति शेषः ।।५३।।

एवं चतुर्थपात्रं दत्त्वा शेषप्रार्थनामन्त्रमाह—आनन्देनेति । आनन्दपात्रमिति सुवासिनीशेषपात्रस्य संज्ञा । आनन्देन आनन्दपात्रेण । मातरः देहस्थमातृका शक्तयः ।।५४।।

ततः सुवासिन्याः कृत्यमाह—सेत्यादि । सा सुवासिनी । चतुर्थपात्रं सावशेषं स्वीकृत्य । साधकाय शेषप्रदाने मन्त्रमाह—पीतेत्यादि । सुधारसं पूर्वं त्वयाऽमृतीकृतं द्रव्यरसम् ।।५५।।

एवं मन्त्रपाठपूर्वकं सुवासिन्या दत्तं शेषपात्रमाचार्येण स्वीकर्तव्यम् । तत्र मन्त्रमाह—आदायेत्यादि । मुखाम्बुजाद् गलितमित्यन्वयः ।।५६।।

इति उक्तमन्त्रेण । तत् शेषपात्रम् । देवतारूपिणीं सुवासिनीम् ।।५७।।

ततः सुवासिनीपूजानन्तरम् । सामयिकान् समयः सङ्केतः, तज्ज्ञान् उपासकान् । तत्पूजनं हेतुपात्रद्रव्येण कर्तव्यमित्याह—हेतुतीर्थैरिति । सामयिकेषु शिष्यभूतेष्वप्यवज्ञा न कार्येत्याह—भक्तित इति । एतदुक्तं त्रिपुरार्णवे—‘‘मण्डले शिष्यभूताश्च नावमान्याः

ध्यायन् जप्त्वा वामकरे देव्याः शङ्खोदकेन वै ।
समर्प्य बहुधा स्तुत्वा दद्यात् पुष्पाञ्जलिं ततः ॥५९॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं तु यद् भवेत् ।
तत्सर्वं कृपया देवि क्षमस्व परमेश्वरि ॥६०॥
यन्मया क्रियते कर्म जाग्रत्स्वप्नसुषुप्तिषु ।
यन्मयोक्तमिहाज्ञानात् तन्महत्स्वल्पमेव वा ॥६१॥
तत्सर्वं तावकी पूजा भूयाद् भूत्यै नमः शिवे ।
अतः सर्वं जगद्धात्रि क्षन्तव्यमयमञ्जलिः ॥६२॥
एवं विज्ञाप्य सद्भक्त्या परिक्रम्य नमेत् पराम् ।
नमस्ते देवदेवेशि नमस्ते त्रिपुराम्बिके ॥६३॥
कुमारकामेश्वराङ्कसंस्थितायै नमो नमः ।
इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः ॥६४॥

---

कदाचन । सर्वान् संपूजयेन्मानपूर्वकं देवताधिया ॥' इति । अनन्तरकृत्यमाह – दत्त्वेत्यादि । मन्त्रस्य ऋष्यादिपूजान्तं कृत्वा देवतां ध्यायन्नित्यन्वयः ॥५८॥

देवतां ध्यायन् जप्त्वा । जपफलमुक्तं त्रिपुरार्णवे—"ततः कामकलां ध्यायन् जपं कुर्याद्विशेषतः । अत्रैकधा जपस्यापि फलानन्त्यं समीरितम् ॥ तस्मादालस्यरहितो यथाशक्त्या जपं चरेत् ।" इति । देव्या वामकरे शङ्खोदकेन एकविंशोल्लासे वक्ष्यमाण-समर्पणविधिना समर्प्य बहुधा वैदिकैस्तान्त्रिकैः स्तोत्रैः । ततः स्तोत्रानन्तरम् ॥५९॥

पुष्पाञ्जलिमन्त्रमाह—मन्त्रेत्यादि ॥६०॥

जाग्रत्स्वप्नसुषुप्तिषु इह पूजायां च । अज्ञानादित्युपलक्षणं ज्ञानाद्वा । यन्मया क्रियते यन्मयोक्तमित्यन्वयः ॥६१॥

भूत्यै ऐश्वर्याय । अतः यतो मया भूयादित्यन्तेन प्रार्थिता । अञ्जलिर्ग्राह्य इति शेषः ॥६२॥

एवमुक्तरीत्या विज्ञापनपूर्वकं पुष्पाञ्जलिनोपचर्य । परिक्रामनतिरूपोपचारद्वयं कुर्यात् । प्रदक्षिणोपचारे सर्वमङ्गलमाङ्गल्येति मन्त्रः पद्धतिषु साम्प्रदायिकः । प्रणामे मन्त्रमाह—नमस्त इति ॥६३॥

कुमारकामेश्वरः श्रीकामेश्वरांशभूतः त्रिपुरारहस्ये उक्तः । क्षमापनात्मक-प्रार्थनमन्त्रस्तु—भूमौ स्खलितपादानामित्यादि एकोनविंशोल्लासे वक्ष्यमाणः । ततः

जाग्रत्स्वप्नसुषुप्त्याद्यवस्थासु मनसा ततः ।
वाचा च कर्मणा हस्ताभ्यां पद्भ्यामुदरेण च ॥६५॥
शिश्ना यत्स्मृतं यदुक्तं यत्कृतं चाथ तद्वदेत् ।
सर्वं श्रीगुरुदेवतासमर्पितमथाऽस्तु तत् ॥६६॥
शिरःसमर्पणे मन्त्र एकसप्ततिवर्णकः ।
सामान्यार्घ्योदकेनैवमङ्घ्रयोर्देव्याः समर्पयेत् ॥६७॥
मां मदीयं च सकलं श्रीबालायै समर्पये ।
ॐ तत्सदिति सर्वं स्वमात्मानं चार्पयेच्छिवे ॥६८॥
यदक्षरपदभ्रष्टं मात्राहीनं च यद् भवेत् ।
क्षन्तुमर्हसि देवेशि कस्य न स्खलितं मनः ॥६९॥
क्षमस्व देवदेवेशि त्रिपुरे परमेश्वरि ।
तव पादाम्बुजे नित्यं निश्चला भक्तिरस्तु मे ॥७०॥
प्रार्थ्यैवं शङ्खमुद्धृत्य त्रिर्भ्राम्याद् देवतोपरि ।
साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ॥७१॥
तत्सर्वं कृपया देवि गृहाणाराधनं मम ।
इति देवीदक्षहस्ते तज्जलं किञ्चिदर्पयेत् ॥७२॥

---

क्षमापनादिनत्यन्तमुपचर्य पूजासमर्पणं कर्तव्यम् । तत्र मन्त्रमाह—इत इत्यादि ॥६४॥

आद्यै ततः । च । च ॥६५॥

चाथ वदेत् वै इति त्यक्त्वा इत इत्यादि अस्तु इत्यन्तं स्वरूपम् ॥६६॥

शिरः स्वाहा । एवं स्वाहान्तमन्त्रेण ॥६७॥

मामित्यादि तत्सदित्यन्ते समर्पणं ज्ञेयम् । यद्यप्यनेन समर्पणं पुनः कर्तव्यमिव भाति, तथापि बृहद्वामकेश्वरत्रिपुरार्णवादिषु विशिष्टमन्त्रेण सकृत्समर्पणस्योक्तत्वात्तदनुरोधेन पद्धतिकृतां सकृत्समर्पणलेखनम् । अयमर्थः प्रकृतेऽपि चार्पयेदिति चकारेण द्योतितो ज्ञेयः ॥६८-७०॥

एवं यदक्षरेत्यादि अस्तु मे इत्यन्तेन ॥७१॥

इति साधु वेत्यादिमन्त्रेण तज्जलं शङ्खजलम् ॥७२॥

किञ्चिज्जलेन देवीं च प्रोक्ष्य किञ्चिज्जलं ततः ।
वामहस्ते गृहीत्वाऽथो गन्धेनालोड्य जप्य च ॥७३॥
आत्मानं प्रोक्ष्य शङ्खस्थजलेनान्यांश्च प्रोक्षयेत् ।
रश्मिरूपा महादेव्योऽप्यत्र पूजितदेवताः ॥७४॥
बालासुन्दर्यङ्गलीनाः सन्तु सर्वाः शुभावहाः ।
इति पुष्पाञ्जलिं दत्त्वा सर्वावरणदेवताः ॥७५॥
मूलदेव्यङ्गलीनाश्च तां तेजोरूपिणीं स्मरेत् ।
गच्छ गच्छ परं स्थान स्वस्थानं परमेश्वरि ॥७६॥
यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ।
इति चक्रस्थकुसुमं तेजसा सहितं शिवे ॥७७॥
संहारमुद्रयादायाघ्राय तेजोबिलं नयेत् ।
निष्कलं तत्र तु ध्यात्वा हृदि सावयवां स्मरेत् ॥७८॥
मानसैः पूज्य तां तेजोमयीं मूलादिबिलान्तकम् ।
व्याप्तां कुण्डलिनीं मूलाधारे संस्थापयेच्छिवे ॥७९॥

---

ततः प्रोक्षणानन्तरं जप्य मूलं प्रजप्य ॥७३॥

गन्धालोडितजलेनात्मानं प्रोक्ष्य अन्यान् सामयिकान् । पूजितदेवताः आवरणदेवताः ॥७४॥

इति रश्मिरूपेत्यादि मन्त्रेण आवरणदेवता मूलदेव्यङ्गलीनाः स्मरेदित्यन्वयः ॥७५॥

तां मूलदेवीं परमुत्तमस्थानम् ॥७६॥

यत्र गतायास्तवेति शेषः । पदं स्थानमिति गच्छ गच्छेति मन्त्रेण । ध्यातदेवतासम्बन्धितेजसा सहितं कुसुममादायेत्यन्वयः ॥७७॥

तेजसा सहितं कुसुममाघ्राय तत्तेजः । बिलं ब्रह्मरन्ध्रम् । निष्कलं निरवयवं तेजोमात्रं देवतारूपम् । तत्र ब्रह्मरन्ध्रे ॥७८॥

मानसैः पञ्चोपचारैः, "तत्र पञ्चोपचारैस्तु पूजयेन्मनसा शिवाम्" इति त्रिपुरारहस्यात् । तां देवतां संस्थापयेत् संस्थापितां भावयेत् ॥७९॥

दक्षोर्ध्वक्रमयोगेन पाणिपृष्ठद्वयं मिथः ।
संयोज्य दक्षतर्जन्याद्यङ्गुलीनां च सन्धिषु ॥८०॥
क्षिप्त्वा तर्जन्यादिवामं परावृत्य करद्वयम् ।
मध्यादित्रितयं प्रोतं तलयोरुदरे गतम् ॥८१॥
ऋजुतर्जनिकायुग्मं योजिताङ्गुष्ठयुग्मकम् ।
संहारनाम्ना विख्याता मुद्रोद्वासनके शिवे ॥८२॥
अथेशाने मण्डलं तु कृत्वा पूज्य च पूर्ववत् ।
उच्छिष्टश्यामलां पूज्य तां ध्यायेच्छेषिकां शिवे ॥८३॥
मातङ्गीं कृष्णवसनां वीणोद्भासिकराम्बुजाम् ।
कुचोन्नतां शङ्खमयताटङ्कां श्यामलां स्मरेत् ॥८४॥
निर्माल्यैरुपचर्यादौ नैवेद्यान्नाद् बलिं न्यसेत् ।
वामाङ्गुलैः शेषिकायै विद्यया तर्पणाख्यया ॥८५॥
उच्छिष्टश्यामलामन्त्रादर्पयेत् पूर्ववच्छिवे ।
उच्छिष्ट चाण्डाली मातङ्गी सर्वाज्जनमतो वशम् ॥८६॥

---

संहारमुद्रामाह—दक्षेत्यादि । वामहस्तोपरि दक्षहस्त इति क्रमेण । दक्षतर्जन्य-ङ्गुष्ठादिसन्धिचतुष्टयेषु ॥८०॥

वामतर्जन्याद्यङ्गुलीः क्षिप्त्वा परावृत्य परस्परप्रोताङ्गुलं मुष्टिद्वयमध्ये यथा भवति तथा कृत्वा । तदेवाह—मध्यादीति ॥८१॥

ऋजुरूपतर्जनीयुग्ममङ्गुष्ठयुग्मं च योजितम् । उद्वासनके उद्वासनकर्मणि ॥८२॥

अथ देवतोद्वासनान्तरं पूर्ववत् बटुकादिबलिवत् मण्डलं तत्पूजां च कृत्वा । बलिदेवतानामाह—उच्छिष्टश्यामलमिति । तां शेषिकाख्यामुच्छिष्टश्यामलाम् ॥८३॥

ध्यानमाह—मातङ्गीमिति ॥८४॥

निर्माल्यैः देवतायाः पूजितगन्धाद्यैः पञ्चभिः शेषिकायै तर्पणाख्यया विद्यया शेषिकाश्रीपादुकामित्यादि चतुर्दशाक्षर्या ॥८५॥

उच्छिष्टश्यामलामन्त्रात् अन्ते पठितया तर्पणाख्यविद्ययेति सम्बन्धः । तन्मन्त्र-माह—उच्छिष्टेति । आत् तो ॥८६॥

करी शिरोमुखे देवि वाग्भवं हृदयं शिवे।
द्वाविंशत्यक्षरी विद्या उच्छिष्टश्यामलाभिधा ॥८७॥
लेह्यचोष्यान्नपानादि ताम्बूलं स्रग्विलेपनम्।
निर्माल्यभोजनं तुभ्यं ददामि श्रीशिवाज्ञया ॥८८॥
इति दत्त्वाञ्जलिं नत्वा विसृज्य बलिदेवताम्।
बटुकादिबलिद्रव्याण्यादायैकत्र पात्रके ॥८९॥
पूजागृहाद् वहिः शुद्धे पूर्ववन्मण्डलं यजेत्।
उच्छिष्टभैरवं पूज्य मण्डले निक्षिपेद् बलिम् ॥९०॥
ततः पात्रं हस्तपादौ प्रक्षाल्याचम्य शङ्करि।
जलेन पात्रमापूर्य उदयोऽस्त्विति वै पठन् ॥९१॥
अन्तःप्रविश्योपविश्य दद्याद् बिन्दुं विशेषतः।
शान्तिस्तवं पठेत् सिञ्चन्नात्मानं सर्वमण्डलम् ॥९२॥
त्रितारं तत उच्छिष्टभैरवो देहि युग्मकम्।
बलिं गृह्ण युगं वर्मास्त्रं शिरोमनुरीरितः ॥९३॥

---

इति त्यक्त्वा करीत्यन्तं स्वरूपम्। शिरः स्वाहा। मुखे आदौ वाग्भवं हृदयं ऐं नमः ॥८७॥

लेह्यचोष्यादयो भोज्यविशेषाः। स्रक् पुष्पमाला। विलेपनं चन्दनम् ॥८८॥

इति लेह्येत्यादिमन्त्रेण। अञ्जलिं पुष्पाञ्जलिम्, पूर्ववद्विसृज्य। बटुकादि-बलिद्रव्याणि पूर्वदत्तानि। तेन शेषिकाबलेर्न ग्रहणम्। "पूर्वदत्तबलिद्रव्याण्यादायोच्छिष्ट-भैरवे" इति त्रिपुरार्णववचने पूर्वपदस्वारस्यात् ॥८९॥

शुद्धे स्थले। पूर्ववत् बटुकादिवत्। मण्डले मण्डलोपरि ॥९०॥

ततः बलिप्रक्षेपानन्तरं पात्रं बलिद्रव्यापहरणपात्रं पठन् प्रविश्येत्यन्वयः। ९१॥

स्वासने उपविश्य उदकपूरिते पात्रे विशेषतः विशेषार्घ्यात् द्रव्यबिन्दुं दद्यात्। तदुदकेन सिञ्चन् मण्डलं मण्डलस्थसामयिकान् एकोनविंशे वक्ष्यमाणशान्तिस्तवं पठेत् ॥९२॥

बलिमन्त्रमाह—त्रितारमिति। त्रितारं ऐं ह्रीं श्रीं। भैरवात् भैरव इत्यस्यानन्तरमेहि इति द्विः। गृह्ण इति द्विः। वर्म हुं अस्त्रं फट् शिरः स्वाहा ॥९३॥

द्वाविंशत्यक्षरोच्छिष्टभैरवस्य बलेः शिवे ।
देवनाथ गुरो स्वामिन् देशिकस्वात्मनायक ॥९४॥
त्रायस्व मां कृपासिन्धो पूजां पूर्णतरां कुरु ।
इति नत्वा गुरुं पश्चाद्विशेषार्घ्यं समुद्धरेत् ॥९५॥
दक्षे निधाय वामेन तर्पयेत्तु गुरुत्रयम् ।
शिरोन्तविद्यया हुत्वा कुण्डलिन्यै महेश्वरि ॥९६॥
ताम्रपात्रेण सूर्याय चार्घ्यं दत्त्वाथ प्रार्थयेत् ।
यज्ञच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम ॥९७॥
तत्सर्वमच्छिद्रमस्तु भास्करस्य प्रसादतः ।
प्राणानायम्य निर्माल्यं पठन् द्वैतीयबीजकम् ॥९८॥
विन्यस्य मूर्ध्नि धृत्वाऽथ भुक्त्वा देवीं सदा स्मरेत् ।
इत्याख्यातं शेषकर्म किं भूयः श्रोतुमिच्छसि ॥९९॥

॥ इति श्रीपरमानन्दतन्त्रे दशमोल्लासः ॥

---

बलेर्मनुरिति संबन्धः । स्वात्मनो नायकः नियन्ता ॥९४॥

इति देवनाथेति मन्त्रेण ॥९५॥

दक्षे करतले वामेन करेण तर्पणमुद्राधृतद्वितीयलेशेन विशेषार्घ्यबिन्दुना गुरुत्रयं तर्पयेत् । अत्रोद्धृतस्य दक्षहस्तस्थवामहस्तेन तर्पणमर्थसिद्धमिति मत्वा पद्धतिकृता नोक्तम् । शिरोऽन्तविद्यया स्वाहान्तमूलेन । विशेषार्घ्यामृतं पात्रान्तरे गृहीतं कुण्डलिन्यै हुत्वा, तेनैव पात्रेण हवने पात्रस्योच्छिष्टत्वापत्तेः । तदुक्तं योगिनीतन्त्रे– 'पात्रान्तरे समादाय विशेषार्घ्यामृतं हुनेत् । अर्घ्यपात्रं तु नोच्छिष्टं कुर्याद् देवि कदाचन ॥" इति ॥९६॥

पूजारम्भोक्तरीत्या सूर्यायार्घ्यं दत्त्वा । प्रार्थनमन्त्रमाह—यज्ञेति ॥९७॥

प्रार्थनानन्तरं प्राणानायम्य द्वितीयबीजं मूलस्य पठन् निर्माल्यमादाय ॥९८॥

ऋष्यादिषडङ्गन्यासं कृत्वा मूर्ध्नि निर्माल्यं धृत्वेति सम्बन्धः । अत्र न्यासानन्तरं निर्माल्यस्य मूर्ध्नि धारणम्, "विन्यस्य कामबीजेन निर्माल्यं मूर्ध्नि धारयेत्" इति त्रिपुरार्णवोक्तेः । अथानन्तरं भुक्त्वा सदा पूजनादिकर्माव्यापृतकाले ॥९९॥

सौभाग्यानन्दसंदोहेऽब्धिधीपद्यार्थबोधकः ।
परमानन्दटिप्पण्यां दशमोल्लासकोऽभवत् ॥१००॥

# एकादशोल्लासः

श्रीदेवी उवाच

देवेश यत्पुरा प्रोक्तं त्रैविध्यं त्रिपुरामनोः ।
तत्र प्रोक्ता त्र्यक्षरी सा बाला त्रिपुरसुन्दरी ॥१॥
तस्याः पूजाविधानं च न्यासचक्रादिकं पुनः ।
अधुनाऽन्यद्द्वयं देव वदस्व करुणानिधे ॥२॥

श्रीभैरव उवाच

श्रृणु देवि प्रवक्ष्यामि श्रीमत्पञ्चदशाक्षरीम् ।
षोडशीं च महादेवि श्रीमतीं ललितां पराम् ॥३॥
शक्तिरूपं तथा माया मूलबीजत्रयं शिवे ।
त्रिधा संस्थापितं देवि त्रिविधं कूटमुच्यते ॥४॥

---

एवं दशभिरुल्लासैश्चतुर्थोल्लासोक्तत्रिविधत्रिपुराया आद्यां त्र्यक्षरीं बालां तदुपास्तिं च साङ्गामभिधायेदानीं द्वितीयां तृतीयां चाभिधातुं देवीप्रश्नमाह—देव्युवाचेति । पुरा चतुर्थोल्लासे । तत्र त्रिषु भेदेषु ॥१॥

तस्याः बालायाः । न्यासचक्रं न्याससमूहः । आदिना मन्त्रयन्त्रवासनासंग्रहः । यद्वा न्यासाः चक्रं पूजा यन्त्रं चेति । अन्यद् द्वयं पञ्चदशीं षोडशीम् ॥२॥

उत्तरम्—श्रीभैरव उवाचेति । श्रीमतीं षोडशीं परां द्वितीयां महतीं वा । महत्त्वं तु "श्रीषोडशाक्षरी देवी परा तत्र ह्यनुत्तमा" इत्यादिना चतुर्थोल्लास उक्तम् ॥३॥

तत्रादौ पञ्चदशी माहशक्तिरिति । शक्तिः क रूपं ल माया ह्रीं । इदं विद्याया मूलभूतं बीजत्रयम् । इदमेव बीजत्रयं त्रिधा संस्थापितं कूटत्रयमित्युच्यत इत्याह—त्रिधेति । "बिन्दुहीनो भवेद्वर्णो बीजं बिन्दुयुतं स्मृतम्" इति रहस्यार्णवादिवचनात् । बिन्दुरहितककारलकारयुक्तस्य बीजत्रयत्वं कथमिति चेत्, हृल्लेखाबीजघटितत्वेन छत्रिन्यायेन बीजत्रयत्वम् ॥४॥

इयं वहुविधा देवि मनुचन्द्रादिभेदतः ।
तेषु सारं द्वयं तच्च हादिकादीति शब्दितम् ॥५॥
लोपामुद्रोपासिता च अनङ्गोपासिता परा ।
शक्त्याद्यौ वह्निवायू च वाग्भवं समुदाहृतम् ॥६॥
शक्तेः परत्र वह्निश्च कामराजं प्रकीर्तितम् ।
आदौ वायुः शक्तिकूटं लोपामुद्राप्रसादिता ॥७॥
इयं सर्वोत्तमा ज्ञेया शिववक्त्रगता सदा ।
ज्योत्स्ना तुष्टी शक्तिपरे वाग्भवं पूर्ववत्परम् ॥८॥
कामराजोपासितेयं विशिष्टा पूर्वतो भवेत् ।
यस्य नो पश्चिमं जन्म तुष्टो येन च सद्गुरुः ॥९॥

---

इयं श्रीविद्या बहुविधा द्वादशधा भिन्ना "श्रीविद्यामन्त्रराजोऽयं सोऽपि द्वादशधा स्थितः" इति तृतीयोक्तेः। तेषां नामान्याह—मनुचन्द्रादीति । "मनुश्चन्द्रः कुवेरश्च लोपामुद्रा च मन्मथः । अगस्तिरग्निः सूर्यश्च इन्द्रः स्कन्दः शिवस्तथा ॥ क्रोधभट्टारको देव्या द्वादशामी उपासकाः" इति त्रिपुरारहस्योक्तो द्वादशभेदः । तेषु द्वादशसु सारं सारभूतमुत्तमम् । हादिकादीति शब्दितं लोपामुद्रामन्मथाभ्यामुपासितम् ॥५॥

तदेवाह—लोपामुद्रेत्यादि । परा द्वितीया कादिः । तत्र हादिमाह—शक्तीति । तत्र बीजत्रयं यत्त्रिधा स्थापितम्, तत्राद्ये कूटे शक्तिः ककारः । तस्यादौ वह्निवायू । हसौ इति पञ्चाक्षरं वाग्भवकूटम् ॥६॥

द्वितीयकूटस्य शक्तेः ककारस्य परतश्च वह्निः हकारः चकारादादौ वह्निवायू । इदं षडक्षरं कामराजकूटम् । तृतीयकूटस्यादौ वायुः सकार इति चतुरक्षरं शक्तिकूटम् । इयं लोपामुद्रया प्रसादिता ॥७॥

सदाशिववक्त्रगता शिवेन जप्यत इत्यर्थः । कादिमाह—ज्योत्स्नेति । ज्योत्स्ना ए, तुष्टिः ई, शक्तेः ककारस्य परे । इदं वाग्भवकूटम् । परं द्वितीयं तृतीयं कूटं पूर्ववत् हादिवत् ॥८॥

इयं ज्योत्स्नेत्यादिनोक्ता विशिष्टा उत्कृष्टा । पूर्वतः लोपामुद्राविद्यायाः । इमां विद्यां स्तौति—यस्येत्यादि । पश्चिममनन्तरं जन्म नो भविष्यतीति शेषः । तुष्टः तोषितः ॥९॥

तेनैव लभ्यते साक्षाच्छ्रीमत्पञ्चदशाक्षरी ।
अत्र सर्वे महामन्त्रा बीजान्तर्वृक्षगात्रवत् ॥१०॥
संस्थितास्तु महेशानि तस्माच्छ्रेष्ठतरा भवेत् ।
अनया विद्यया तुल्या त्रैलोक्ये देवि दुर्लभा ॥११॥
इयं सौभाग्यविद्येति विख्याता भुवि दुर्लभा ।
ययानङ्गः सुसौभाग्यं प्राप्तवान् लोकमोहनम् ॥१२॥
लक्ष्मीं मायां कामराजं वाग्भवं शक्तिबीजकम् ।
वेदाद्यं च द्वितीयाद्ये विद्या सौभाग्यसंज्ञिता ॥१३॥
विलोमपञ्चबीजानि विद्यैषा षोडशाक्षरी ।
इयं सुकृतिभिर्लभ्या श्रीनाथ कृपया शिवे ॥१४॥
राज्यं देयं शिरो देयं न देया षोडशाक्षरी ।
देयं सर्वस्वमपि वै नेयमन्यायतः क्वचित् ॥१५॥

---

तेनैव नान्येन । एवंविधमाहात्म्ये कारणमाह – अत्रेत्यादि । सर्वे संस्थिता इत्यन्वयः । संस्थिताश्चेत् कुतो नोपलभ्यन्तेऽत आह—बीजान्तरिति । यथा बीजे शाखापत्रपुष्पादिभेदभिन्नमपि कारणात्मनानभिव्यक्ततया वृक्षगात्रं स्थितं तथा ॥१०॥

एतेन निखिलमन्त्रात्मकमातृकात्मकत्वस्य वक्ष्यमाणत्वेनाखिलमन्त्रकारणत्वमप्युक्तं भवति । तस्मात् उक्तकारणात् । अनया काद्यया ॥११॥

इयं दुर्लभा सौभाग्यविद्येति भुवि ख्यातेत्यन्वयः । एवं ख्यातौ कारणमाह—ययेत्यादि । यया यद्विद्योपासनया सौभाग्यं सौन्दर्यम् । एतदुक्तं त्रिपुरारहस्ये—"तदेतस्तोत्रयुगलं विद्या सापि च मन्मथः । तव सौभाग्यजननात् सौभाग्यप्रदमस्तु वै ॥" इति ॥१२॥

षोडशीमुद्धरति—लक्ष्मीमित्यादि । लक्ष्मीः श्रीं माया ह्रीं कामराजं क्लीं वाग्भवं ऐं शक्तिबीजं सौः वेदाद्यं ॐ द्वितीयाद्ये मायालक्ष्म्यौ सौभाग्यसंज्ञिता विद्या कादिविद्या ॥१३॥

विलोमपञ्चबीजानि शक्तिवाग्भवकामराजमायालक्ष्मीति । इयं षोडशाक्षरी ॥१४॥

राज्यादिकं देयं षोडशी न देया । सर्वथा अदेयत्वे सम्प्रदायविच्छेदापत्तिरित्यत आह—अन्यायत इति । धनादिलोभेनायोग्ये दानमन्यायः । शास्त्रोक्तलक्षणाय शिष्याय

अत्रान्तर्गतकूटानां गणना चाक्षरत्वतः ।
तेनेयं षोडशी प्रोक्ता सदा जप्या सुसाधकैः ॥१६॥
श्रीषोडशीति विज्ञेया सर्वविद्योत्तमोत्तमा ।
सर्वत्र गोपिता देवि षोडशाक्षररूपिणी ॥१७॥
परा सा वागनुच्चार्या प्रत्यक्षं षोडशाक्षरी ।
ककुद्धृदययोर्देवि दक्षश्रोत्रकयोस्तथा ॥१८॥
अन्त्याद्ययोगचरमा ततः श्रीषोडशाक्षरी ।
एषा निर्वाच्यरूपा वै परा श्रीषोडशाक्षरी ॥१९॥

---

तु देयैव, ''सच्छिष्याय तु देयैव ह्यन्यथा शापमाप्नुयात्'' इति रहस्यार्णवात् ॥१५॥

अस्याः षोडशाक्षरीत्वं प्रतिपादयति—अत्रेति । अत्र षोडश्याम् । कादिविद्या-सम्बन्धिकूटानाम् । अक्षरत्वतः । एकैककूटस्यैकैकाक्षरत्वेन गणनं तेनैव गणनेन ॥१६॥

एवं षोडशीमभिधाय महाषोडशीं वक्तुमादौ शिष्याभिमुख्याय तां स्तौति—श्रीषोडशीत्यादि । या इत्यध्याहृत्य या श्रीषोडशीति विज्ञेया सा परेत्यग्रिमेणान्वयः । श्रीषोडशी श्रीमती महती षोडशी सर्वत्र तन्त्रेषु ॥१७॥

षोडशाक्षरीत्वस्य साम्ये कुत एतस्या महत्त्वं तदाह—परेति । परा उत्तमा । तत्र हेतुद्वयम्—वागित्यादि । वाचा अनुच्चार्या, किन्तु मनसा जप्येति चतुर्थेऽभिधानात् । आद्या तु कूटानामक्षरत्वगणनेन षोडशाक्षरी । इयं तु प्रत्यक्षं कूटाक्षराणां पृथग्गणनेन । तामुद्धरति—ककुदित्यादि । इयं भैरवेणापि स्पष्टमनुद्धृतत्वान्न सुस्पष्टं व्याख्येति प्राचां गुप्तव्याख्यारूपश्लोक एवात्रोदाह्रियते । यथा—''सव्याभ्यां करमूलाभ्यामपसव्येन रूपिणा । रसिना च युतः पिण्डः स्थापयेदात्मजान्त्यतः ॥'' इति । तथा श्रीगौडपादा-चार्यैः सुभगोदये—''स्मरो मारो मारः स्मरमदनमारस्मर इति स्मरोऽनङ्गश्चेति स्मर-मदनमारस्मर इति । त्रिखण्डं खण्डान्ते कलितभुवनेशीक इति यः'' इति गुप्त्यैवोक्तम् । श्रीभास्कररायैरपि आद्या विद्येत्याद्यस्फुटमेवोक्तम् ॥१८॥

यत एवंविधचरमा तत इयं श्रीषोडशाक्षरी । न निर्वाच्यं रूपं यस्याः सा ॥१९॥

सौभाग्यविद्या सर्वत्र साधनेषु नियोजिता ।
नास्या न्यासो न च ध्यानं न जपो न ऋषिस्तथा ॥२०॥
न छन्दो विनियोगो न नाक्षमाला कदाचन ।
मूलाधारादाहृदयं तस्मादाज्ञान्तमीश्वरि ॥२१॥
उन्मन्यन्तं ततो बिन्दौ पूर्णे भाव्या क्रमेण तु ।
श्रीविद्यैषा समादिष्टा विद्वद्भिर्गुरुवक्त्रगा ॥२२॥
एतां प्राप्य महायोगी न भूयोऽत्र प्रवर्तते ।
अनेकजन्मसु पुरा चोपास्याऽपररूपिणी ॥२३॥
श्रीषोडशी परेयं वै प्राप्यते भुवि दुर्लभा ।
या सा पञ्चदशी प्रोक्ता तस्यां सर्वं प्रतिष्ठितम् ॥२४॥

---

सर्वत्र पूजादिषु सौभाग्यविद्यायाः कादिविद्याया एव नियोगः । पूजादौ कादिविद्याया नियोगेऽपि न्यासादिकमपेक्षितमिति चेत्तदपि श्रीषोडश्या न इत्याह—नास्या इति । न जप इति वाचिकादिनिषेधः, न मानसस्य, मनसा जप्येति चतुर्थोक्तेः ॥२०॥

नाक्षमाला । न जपमालयापि जपः । वर्णमालापि न वाचिकैः, अपि तु जपगणनस्यावश्यकत्वेन योग्यतया मानसी । तस्याः कूटचतुष्टयस्य भावनास्थानमाह—मूलाधारादित्यादि ॥२१॥

मूलाधाराद्धृदयान्तं हृदयादाज्ञान्तमाज्ञाया उन्मन्यन्तम् । ततः उन्मन्याः पूर्णे बिन्दौ महाबिन्दुपर्यन्तम् । क्रमेण चतुर्षु स्थानेषु कूटचतुष्टयमिति । गुरुवक्त्रगा पुस्तके स्पष्टमनुद्धृता ॥२२॥

स तां श्रीविद्याख्यां महाषोडशीं प्राप्तिमात्रान्महायोगी सन् । अत्र जननमरणरूपे संसारे अपररूपिणीं केवलषोडशीम् ॥२३॥

इयं ककुद्धृदयेत्यादिनोक्ता । पूर्वमत्र सर्वे महामन्त्रा इति सौभाग्यविद्यायां सर्वमन्त्रावस्थितिः सामान्यतः कथिता । तत्र मन्त्रा इत्यन्येषामप्युपलक्षणेनोक्तम् । प्रसक्तकथनानन्तरं तदेव स्पष्टयितुमाह—या सेत्यादि । या सा इति सर्वतन्त्रेषु प्रसिद्धा या सेत्यर्थः ॥२४॥

मातृकातत्त्वचक्राणि मिथुनानि महेश्वरि ।
प्रोक्ता या मातृका देवि सा त्रिखण्डा समीरिता ॥२५॥
अकथादित्रिभागेन तत्त्रिकूटात्मकं भवेत् ।
स्वरस्पर्शान्तस्थभेदादूष्माणश्च चतुर्विधा ॥२६॥
शुद्धाश्च संधिजाश्चेति द्विविधास्तत्र वै स्वराः ।
शुद्धेषु तुष्टिः कथिता ज्योत्स्ना सन्धिगता तथा ॥२७॥
शक्तिः स्पर्शगता रूपमन्तस्थेषु प्रकाशितम् ।
ऊष्मासु वायुर्देवेशि मातृकारूपिणीं ततः ॥२८॥
अनुत्तरविमर्शाख्यावहकारौ समाश्रिता ।
सा प्रत्याहारयोगेन मातृकागर्भिणी यतः ॥२९॥

---

किं तत्सर्वं तदाह—मातृकेत्यादि । मातृकानामैकपञ्चाशत्संख्यातानां तत्त्वानां षट्त्रिंशत्संख्यानां चक्राणि अवान्तरसमुदायाः खण्डाः मिथुनानि चेति सर्वं प्रतिष्ठितमिति सम्बन्धः । तत्रादौ मातृकायास्तत्रावस्थितिं वक्तुमाह—प्रोक्तेत्यादि । चतुर्थोल्लासे या प्रोक्ता ॥२५॥

खण्डत्रयं स्पष्टयति—अकथेत्यादि । अकारादिककारादिथकारादीति भागत्रयेण प्रत्येकं षोडशवर्णात्मकेन त्रिखण्डा समीरितेति सम्बन्धः । अत्र हकारस्य विसर्गे ळकारक्षकारयोः स्वघटकवर्णद्वयेऽन्तर्भावश्चतुर्थोल्लासोक्तरीत्या ज्ञेयः । एवं च तन्मातृकायाः खण्डत्रयं कादिविद्यायाः कूटत्रयात्मकं भवेत् । पुनःप्रकारान्तरेण मातृकात्मत्वं कथयति—स्वरेत्यादि । स्वरादि अकारादिविसर्गान्ताः षोडश कादिमान्ताः पञ्चविंशतिः स्पर्शाः यरलववाश्चत्वार अन्तस्थाः शषसहाश्चत्वार उष्माणः । अन्तस्थभेदादूष्माणश्चेति चतुर्विधा मातृका ॥२६॥

तत्र तेषु चतुर्षु मातृकाभेदेषु सन्धिजा ए ऐ ओ औ इति चत्वारः । अन्ये शुद्धाः । शुद्धेषु स्वरेषु तुष्टिः ईकारः सन्धिगता सन्धिस्वरगता ज्योत्स्ना एकारः ॥२७॥

स्पर्शगता शक्तिः ककारः । अन्तःस्थेषु रूपं लकारः । ऊष्मासु इत्याकार आर्षः । ऊष्मसु वायुः सकारः । इति मातृकापञ्चखण्डगतपञ्चवर्णघटितत्वादियं कादिविद्यामातृकारूपिणी कादिविद्यायां ज्योत्स्ना कथिता रूपं प्रकाशितं यतः, ततो मातृकारूपिणीति सम्बन्धो ज्ञेयः ॥२८॥

अथ प्रकारान्तरेण मातृकामयत्वं वक्तुमाह—अनुत्तरेत्यादि । अनुत्तरः विमर्शः इत्याख्ययोः अहकारयोः समाश्रिता विद्या, ताभ्यां घटितेति यावत् । तयोरत्र समुल्लेखात्

तयोरत्र समुल्लेखान्मातृकारूपिणी भवेत् ।
इयं कामकलारूपा चात एव भवेच्छिवे ॥३०॥
शिवः प्रकाशरूपो हि तस्य विश्रान्तिरात्मनि ।
अहंभावः समाख्यातः स यस्मादनपेक्षकः ॥३१॥
स्वतन्त्रत्वेन कथितो भवेदीश्वरता हि सा ।
सा स्फुरत्ता क्रियाख्याता अहङ्कारात्मना स्थिता ॥३२॥

---

प्रत्याहारयोगेन सा मातृकागर्भिणी यतः, अतो मातृकारूपिणी भवेदित्यग्रिमेणान्वयः । सा विद्या प्रत्याहारस्य योगेन युक्त्या । यथा हि अण् अच् इति प्रत्याहारा आद्यन्तोभयवर्णरूपा अपि मध्यस्थानामिकारादीनामपि गमकाः, तथाविधयुक्त्या मातृकाद्यन्तभूतावहकारौ अखिलमातृकाबोधकौ । तद्वर्णद्वययोगात् सा विद्या मातृकागर्भिणी ॥२९॥

तयोः अहकारयोः । अत्र कादिविद्यायां समुल्लेखात् सम्यग् भूयः उल्लेखात् कथनात् । अत एव यतः अहकारात्मककामकलावर्णयुता ॥३०॥

प्रसङ्गात् कामकलास्वरूपं निर्वक्तुमाह—शिव इत्यादि । प्रकाशैकरूपो यः शिवः तस्य आत्मनि या विश्रान्तिः विषयानभिमुख्येन स्वरूपमात्रावस्थितिः, सा अहंभावः पूर्णाहन्ता इति तन्त्रेषु सम्यगाख्यातः । सोऽहंभावो यस्मादनपेक्षकः स्वसत्तायामन्यानपेक्षकः । तस्मात् स्वातन्त्र्यत्वेन कथित इत्यग्रिमेणान्वयः ॥ ३१ ॥

यतः स्वात्मन्यपेक्षारहितः, अतः स्वातन्त्र्यत्वेन कथितः । अत एव ईश्वरता सा । एवं सा स्फुरत्ता स्वरूपस्फूर्तिरूपा । अत एव क्रियेत्याख्याता । सा आत्मविश्रान्तिः विषयस्फूर्तिवैधुर्येण स्वरूपस्फूर्तिः । सा चाहमित्याकारिका इत्यहंकारात्मना स्थिता । अयं भावः—शिवो हि अविच्छिन्नशुद्धसंवित्प्रकाशमात्ररूपः । स च जडव्यावृत्तस्फुरद्रूपः । तस्य स्वात्मस्फूर्तिरेव स्वात्मविश्रान्तिः । स्फूर्तिर्द्वेधा लोके दृश्यते—अयमिति, अहमिति च । आद्या जडस्फूर्तिः, द्वितीया चेतनस्फूर्तिरिति । तत्र जडव्यावृत्तपरशिवस्य स्वरूपस्फूर्तिर्योग्यतया अहमित्येव वाच्या । सा च स्फूर्तिरहंभावाख्या न जीवाहंभाववद्देहादिपरिच्छिन्ना, किन्तु शुद्धानवच्छिन्नसंविन्मात्रविश्रान्तेति पूर्णाहन्ता पराहन्ता पूर्णख्यातिरित्यादिपदैर्व्यवह्रियते । "पूर्णाहन्ता कवलितं जगद्योगीश्वरस्तथा । पराहन्तामये वह्नौ जुहोमि शिवतातये ॥", "ख्यातिमपूर्णां पूर्णख्यातिसमावेशदाढर्यतः क्षपय" इत्यादौ एवंविधाहंस्फूर्तिः इन्द्रियान्तःकरणालोकाद्यनपेक्षमाणा स्वातन्त्र्यमीश्वरत्वमिति स्फूर्त्यात्मकत्वात्क्रियेति चोच्यते । अहमाकारत्वादहंकारात्मना स्थितेति च । एतदुक्तमजडप्रमातृसिद्धौ श्रीमदुत्पलाचार्यैः—"प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः ।

सामरस्यं तयोः ख्यातुं बिन्दुः सर्वोर्ध्वगः शिवे ।
अन्तःसंरम्भरूपेण निर्विकल्पतया स्थितम् ॥३३॥
तत्र प्रत्याहृतिन्यायाज्जगद्बीजमयं शिवे ।
विकल्पपदवीं प्राप्तं यदा तत्परमेश्वरि ॥३४॥
बिन्दुसर्गात्मना देवि त्रिबिन्दुत्वं समागमत् ।
सूर्याग्नीषोमरूपं तद्यदोच्छूनात्मकं भवेत् ॥३५॥

---

उक्ता च सैव विश्रान्तिः सर्वापेक्षानिरोधतः ॥ स्वातन्त्र्यमथ कर्तृत्वं मुख्यमीश्वरतापि च।" इति ॥ ३२ ॥

ननु तादृशविश्रान्तेरहंकारात्मना स्थितत्वमुक्तम् । हकारोर्ध्वगानुस्वारः किमिति परित्यक्त इति चेदाह—सामरस्यमिति । सामरस्यमैक्यं तयोरहकारयोः । ख्यातुं वक्तुं सर्वोर्ध्वगः सर्वस्याहकारसमुदायस्योपरि स्थितः । वर्णद्वयेनाप्यखण्डैकवस्तुस्फूर्तिमुपलक्षयितुं सर्वोपरि बिन्दुरिति भावः । ननु निर्विकल्पस्य शुद्धचित्प्रकाशस्य अहमिति स्फूर्तिरनुचिता, अहमिति स्फूर्तेः सविकल्पकत्वादित्याशङ्क्याह—अन्तरित्यादि । नहि परमात्मनः स्वरूपस्फूर्तिरहमिति स्थूलशब्दमयी, अपि तु अन्तःसंरम्भरूपा । यथा हि सद्योजनितशिशोः स्थूलरूपाहंभावाभावेऽपि अन्तःसंरम्भरूपो जडत्वविलक्षणोऽस्मीत्यभ्युपगमकल्पो भावोऽस्ति, तथा परचिद्रूपस्य शिवस्यापि निर्विकल्प एवाहंभावः । एष च प्रत्यवमर्श आन्तराभिलापात्मकशब्दनस्वभावः ॥ तच्च शब्दनं सङ्केतनिरपेक्षमेवाविच्छिन्नचमत्कारात्मकमन्तर्मुखशिरोनिर्देशप्रख्यमकारादिमायीयसाङ्केतिकशब्दजीवितभूतमिति । "अहंप्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः । नासौ विकल्पः स ह्युक्तो द्वयापेक्षी विनिश्चयः ॥", "प्रकाशस्याहमिति प्रत्यवमर्शोऽसौ विकल्पो न भवति, विषयरूपाच्छ्रोत्रग्राह्याच्छब्दादन्य एव आन्तरावभासमानः स चिद्रूपावेशी" इति च श्रीप्रत्यभिज्ञायां तद्व्याख्याने श्रीमदुत्पलाचार्यैरभिनवगुप्तपादाचार्यैश्च निरूपितम् । एवमहंस्फुरणं स्थितम् ॥ ३३ ॥

तद् अहंविमर्शनं प्रत्याहृतिन्यायाद् उक्तयुक्त्या जगद्बीजमयं जगद्रूपवृक्षस्य बीजात्मकम् । यथा बीजदलद्वयान्तर्वृक्षोऽस्ति, एवं जगत्तादात्म्यापन्नतत्तद्वाचकशब्दप्रकृतिभूताखिलवर्णानामहकारयोरन्तः स्थितिः । एवंविधमहंविमर्शनं यदा स्वस्वातन्त्र्यात् विकल्पपदवीं भेददशां सृष्टयौन्मुख्यमिति यावत् , प्राप्तं तदा तद् अहंविमर्शनं त्रिबिन्दुत्वं समागमदित्युत्तरेणान्वयः ॥ ३४ ॥

अकारः अनुस्वारात्मना एकबिन्दुरूपः, हकारः विसर्गात्मना बिन्दुद्वयरूप इति त्रिबिन्दुत्वं समागमत् सम्यक् प्राप्तं तदेव बिन्दुत्रयं सूर्याग्नीषोमरूपं यदोच्छूनं

तुर्यस्वरमयं चैतद् देवताविग्रहात्मकम् ।
बिन्दुर्मुखात्मकः सर्गः कुचयुग्मं भवेच्छिवे ॥३६॥

---

विकसितं भवेत्, तदा तुर्यस्वरमयं भवेदित्यग्रिमेणान्वयः। अयं भावः—तदहमिति स्वरूपस्फुरणं परिपक्वप्राण्यदृष्टसहकृतात् स्वातन्त्र्यात् सृष्ट्युन्मुखं यदा जातं तदेच्छाज्ञानक्रियारूपमभवत्। तद्वाचकत्वेनाहमित्यव्यव्यक्तवर्णद्वयं बिन्दुत्रयात्मना जातम्। प्राथमिकेच्छाज्ञानक्रियाणां सामान्यरूपत्वेन सर्वविषयकत्वात् परिच्छेदराहित्येन पूर्णत्वात् अविच्छिन्नबिन्दुत्रयरूपत्वम्। तत्रेच्छाज्ञानक्रियाणां प्राकृतेच्छादिवद् बाह्यविषयाभावात् शुद्धप्रकाशमयत्वेन सूर्यादितेजोरूपत्वम्। तत्राकारादुदितो मिश्रबिन्दुः, ज्ञानक्रियामिश्रणरूपेच्छावाचकत्वात्। हकारादुदितसर्गात्मकबिन्दुद्वयं तु ज्ञानक्रियात्मकाग्नीषोमरूपम्। तत्र ज्ञानं भोक्ता क्रिया भोग्यम्। इच्छादशायामेष्टव्यस्य स्वतादात्म्यावभासाद् भोक्तृभोग्योभयमिश्रणात्मिका इच्छेत्युच्यते। इच्छादशायां विषयतादात्म्यं श्रीस्पन्दशास्त्रे सम्यङ्निरूपितम्—'दिदृक्षयैव सर्वार्थान् यदा व्याप्यावतिष्ठते" इति। सूर्यबिन्दोरग्नीषोममिश्ररूपतोक्ता चिद्गगनचन्द्रिकायाम्—"भोक्तृभोग्यमयगोविसर्गगो देवि मां चिदुदधेर्ददां दशाम्। अर्पयन्ननलसोमनिश्रणस्त्वद्विमर्श इह भानुजृम्भणः॥" इति। अनयोरग्नीषोमात्मकयोर्बिन्द्वोः प्रकाशविमर्शरक्तशुक्लशिवशक्तिसंहारसृष्टिज्ञानक्रियेति नामानि तन्त्रेषूक्तानि। सूर्यस्योभयात्मकत्वात् सृष्टिसंहारोभयक्रमेण तत्कलासु कभादिवर्णयोग इति रहस्यम्। एवंविधबिन्दुत्रयस्योच्छूनभावे त्रिकोणात्मकत्वम्। सृष्टेरूर्ध्वादधःप्रसरक्रमादिच्छात्मकमिश्रबिन्दुरूर्ध्वे। तदधः सर्गात्मकबिन्दुद्वयं तिर्यक्। बिन्दुत्रयस्योच्छूनभावेन परिणतं त्रिकोणं सृष्ट्युन्मुखत्वेनाधोमुखम्। एवमवयवत्रयात्मकं जातम्। बिन्दुत्रयस्योच्छूनभावे त्रिकोणात्मतोक्ता त्रिपुरारहस्ये—"बिन्दुत्रयं परिणतं त्रिकोणाकारतां गतम्" इति। अन्यत्रापि—"उच्छूनं तच्च यदा त्रिकोणरूपेण परिणतं भवति" इति। एवं बिन्दुत्रयपरिणतं त्रिकोणं शेषभागेन शेषाङ्गमिति वक्ष्यमाणवाक्येऽपि सूचितम्॥ ३५॥

एतदेव बिन्दुबिन्दुद्वयत्रिकोणात्मकं स्थूलवाचकात्मना तुर्यस्वरमय-ईकारमयं सद् वाच्यरूपेण देवताविग्रहात्मकं स्थूलरूपात्मकं जातम्। तत्र वाचक ईकार उक्तावयवत्रयात्मकः। तत्रैकैकेन वाचकावयवेन कतमो वाच्यावयव उच्यते इति चेदाह—बिन्दुरित्यादि। सर्वं हि स्थूलशरीरं त्र्यवयवम्। अवयवाश्च मूर्धादिचिबुकान्तं कण्ठादिहृदयान्त उदरादि उपस्थान्त इति। तेषां शाखारूपाः केशबाहुपादा इति तेषां तत्रैवान्तर्भावः। तथा च देवताविग्रहे ऊर्ध्वो मिश्रबिन्दुर्मुखात्मकः। ऊर्ध्वबिन्दुवाच्यत्वेऽपि मुखस्य बाच्यवाचकयोरभेदात्तदात्मकत्वम्। तदधो विद्यमानः सर्गो: मध्यबिन्दुद्वयं कुचयुग्मम्॥ ३६॥

**शेषभागेन शेषाङ्गमेवं कामकलात्मकम् ।**
**तदेव सर्वजगतां हृदये परिनिष्ठितम् ॥३७॥**
**स्वभावसंकोचनेन पारिमित्यं समागतम् ।**
**एवंविधाभ्यां वर्णाभ्यां योगान्मातृस्वरूपिणम् ॥३८॥**

---

शेषभागेन बिन्दुत्रयपरिणामस्य बिन्दुत्रयाङ्गत्वेन शेषत्वात् शेषभागस्त्रिकोणम् । अथवोक्ते भागद्वये शेषत्वाच्छिष्टत्वाच्छेषभागस्त्रिकोणम् । तेनोपलक्षितं शेषाङ्गम् । अवशिष्टाङ्गं योनिं भावयेदिति शेषः । एवमुक्तप्रकारेण कामकलात्मकमहंस्फुरणम् । अत्र काम इति मिश्रबिन्दुः, कला इति विसर्गाख्यबिन्दुद्वयम्, त्रिकोणं तु एतत्परिणामत्वादेतस्मिन्नेवान्तर्भूतम् । एवंविधपराहन्तात्मककामकलावर्णात्मकत्वेन देवतामूर्तिभावनं प्रकृते प्रसङ्गादुक्तं वक्ष्यमाणपूजायां ध्यानोपयोगित्वेन । एतदुक्तं कामकलाविलासे— "सितशोणबिन्दुयुगलं विविक्तशिवशक्तिसंकुचत्प्रसरम् । वागर्थसृष्टिहेतुः परस्परानुप्रविष्टविस्पष्टम् ॥ बिन्दुरहङ्कारात्मा रविरेतन्मिथुनसमरसाकारः । कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दू ॥ इति कामकलाविद्या देवी चक्रक्रमात्मिका सेयम् । विदिता येन स मुक्तो भवति महात्रिपुरसुन्दरीरूपः ॥" इति । वरिवस्यारहस्येऽपि— "अहकारौ शिवशक्ती शून्याकारौ परस्पराश्लिष्टौ । स्फुरणप्रकाशरूपावुपनिषदुक्तं परं ब्रह्म ॥ विश्वसिसृक्षावशतः स्वार्धां शक्तिं विलोकयद् ब्रह्म । बिन्दुर्भवति तमिन्दुं प्रविशति शक्तिस्तु रक्तबिन्दुतया ॥ एतद्बिन्दुद्वितयं विसर्गसंज्ञं हकारचैतन्यम् । मिश्रस्तु तत्समष्टिः कामाख्यो रविरकारचैतन्यः ॥ एषाहंपदतुर्यस्वरकामकलादिशब्दनिर्देश्या । वागर्थसृष्टिबीजं तेनाहन्तामयं विश्वम् ॥" इति । सौन्दर्यलहर्यामपि—"मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम्" इति । हरस्यार्धं शक्तिः, त्रिकोणमित्यर्थः । चिद्विलासेऽपि—"काम ऊर्ध्वगतबिन्दुराननं भानुरेष तदधोगतौ स्तनौ । चित्रभानुशशिनाविमौ कला योनिरत्र सपरार्धकुण्डली ॥" इति । सस्य परः हकारः शिवः, तस्यार्धं शक्तिः, तद्रूपा कुण्डलिनी योनिरित्यर्थः । वामकेश्वरतन्त्रेऽपि— "बिन्दुं संकल्प्य वक्त्रं तुं तदधस्थं कुचद्वयम् । तदधः सपरार्धं तु चिन्तयेत्तदधोमुखम् ॥" इति । तदधःस्थं बिन्दोरधःस्थं बिन्दुद्वयम् । तदधः कुचद्वयाधः । तदधोमुखं तस्याः देव्याः अधोमुखं योनिं सपरार्धं चिन्तयेदिति तदर्थः । अधोमुखमित्यस्य योनिरिति तद्व्याख्यातृभिरुक्तोऽर्थः । तदेव पराहंस्फुरणं सर्वजगतां सर्वप्राणिनां हृदयेऽहमिति परिनिष्ठितम् ॥ ३७ ॥

ननु यदि तदेव सर्वप्राणिहृदयवर्ति, तर्हि पूर्णत्वं कुतो न भासत इति चेदाह— स्वभावेति । स्वभावः स्वरूपं तस्य स्वस्वातन्त्र्यकृतं यत्संकोचनं परिच्छेदः, तेन पारिमित्यं परिमितत्वम्, अपूर्णत्वमिति यावत् । समागतं प्राप्तम् । प्रकृतमाह—एवमिति ।

तत्त्वात्मतां शृणु शिवे तत्त्रैविध्येन संस्थितम् ।
आत्मविद्याशिवाख्यानं शुद्धाशुद्धं च मिश्रकम् ॥३९॥
जाड्यादशुद्धमात्माख्यं जाड्याजाड्याच्च मिश्रकम् ।
विद्यातत्त्वमजाड्येन शुद्धं स्याच्छिवतत्त्वकम् ॥४०॥
यथाग्निस्तु प्रकाशत्वादप्रकाश्यत्वतः शिवे ।
शुद्धं तथा शिवाख्यं वै प्रकाशैकघनं भवेत् ॥४१॥
तप्तलोहादिकं यद्वदन्यस्यापि प्रकाशकम् ।
वह्नावभिनिवेशेन विद्यातत्त्वं तथा स्मृतम् ॥४२॥

---

एवंविधाभ्यामुक्तकामकलात्मकाभ्यां वर्णाभ्यामहकाराभ्यां प्रत्याहारन्यायेनाखिलमातृकात्मकाभ्याम् ॥ ३८ ॥

एवं मातृकात्मत्वं विद्याया प्रतिपाद्य तत्त्वात्मतां वक्तुमुपक्रमते—तत्त्वात्मतामिति । तनोति स्वकार्यं व्याप्नोतीति तत्त्वम् । एतदुक्तं तन्त्रालोके—"तत्स्वातन्त्र्यवशात्पुनः शिवपदाद् भेदे विभाते परं यद्रूपं बहुधानुगामि तदिदं तत्त्वं विभोः शासने" इति । "स्वस्मिन् कार्येऽथ धर्मौघे यद्वापि स्वसदृग्गुणे । आस्ते सामान्यकल्पेन तननाद्व्याप्ततत्त्वतः । तत् तत्त्वम्" इति । तत्तत्त्वत्रैविध्यमेवाह—आत्मेति । आत्मविद्याशिव इत्याख्यानं यस्य । नाम्ना त्रैविध्यमुक्त्वा लक्षणतोऽप्याह—शुद्धेति । शुद्धमशुद्धं मिश्रमिति ॥ ३९ ॥

ननु किं यथासंख्येनात्मादितत्त्वं शुद्धादिरूपमिति चेन्न, अपि तु अन्यथेति वक्तुमुक्तक्रमं विहायान्यथा तेषां शुद्धत्वादिकं सहेतुकमाह—जाड्यादित्यादि । जाड्याज्जाड्याजाड्यादजाड्यादात्मतत्त्वादिकमशुद्धमिश्रशुद्धरूपं क्रमेणेत्यर्थः ॥ ४० ॥

एतदेव स्पष्टयितुं सदृष्टान्तमाह—यथेत्यादि । यथाग्निरन्यैः स्वसदृशैरप्रकाश्यः प्रकाशमात्ररूपः शुद्धं तेजः, एवं शिवतत्त्वं प्रकाशैकघनत्वाच्चिन्मात्ररूपमिति शुद्धमित्यर्थः ॥ ४१ ॥

तप्तलोहखण्डादिकं स्वतस्तेजोभिन्नमपि वह्नावभिनिवेशाद्वह्नितादात्म्यादन्यस्यापि घटादेरपि प्रकाशकम् । अपिना स्वस्यापि प्रकाशकं तेजस्तद्भिन्नोभयमिश्ररूपमेवं विद्यातत्त्वं चिदचिदुभयरूपत्वान्मिश्रम् ॥ ४२ ॥

घटादिकं यथान्येन प्रकाश्यं सर्वथा शिवे ।
तथात्मतत्त्वं चाशुद्धमेवं तत्त्वत्रयं शिवे ॥४३॥
कूटत्रये संस्थितं वै तेन तत्त्वमयी भवेत् ।
अथैषां शृणु देवेशि विस्तरं त्वं समाहिता ॥४४॥
सर्वतन्त्रेषु कथितं सारभूतमिहोच्यते ।
स्थितं चतुर्विंशतिधा चात्मतत्त्वं महेश्वरि ॥४५॥
विद्यातत्त्वं सप्तधा तु शिवतत्त्वं च पञ्चधा ।
प्रकृत्यहङ्कारबुद्धिमनःश्रोत्रं त्वगक्षि च ॥४६॥
जिह्वा घ्राणं वाक् च पाणिः पादपायू उपस्थकम् ।
शब्दस्पर्शौ रूपरसौ गन्धाकाशानिलानलाः ॥४७॥
जलं क्षितिरिति प्रोक्तं चतुर्विंशतिधा शिवे ।
माया कला च विद्या च रागकालौ च नियतिः ॥४८॥
पुरुषश्चेति वै सप्त शिवशक्तिसदाशिवाः ।
ईश्वरः शुद्धविद्या च पञ्चधा संप्रकीर्तितम् ॥४९॥

---

यथा घटादिकमन्येन सूर्यालोकादिना सर्वथा प्रकाश्यं प्रकाश्यमेवेति अतेजः, एवमात्मतत्त्वं प्रकाश्यैकरूपत्वेनाचिन्मयत्वादशुद्धम् । एवमचित्त्वादिरूपजाड्यादिधर्मयोगात् तत्त्वमात्मादिसंज्ञं त्रिविधमित्यर्थः ॥ ४३ ॥

एवं तत्त्वत्रयं निरूप्य तदात्मकत्वं मूलविद्याया आह—कूटेति । कूटत्रये आत्मादितत्त्वत्रयं वाचकत्वेन स्थितं तेन हेतुना विद्या तत्त्वमयी, वाच्यवाचकयोरभेदात् । अथ संक्षेपेण तत्त्वात्मत्वकथनानन्तरमेषां तत्त्वानाम् ॥ ४४ ॥

सर्वतन्त्रेषु मतङ्गादिषु विस्तरेण कथितम् । इह तत्सारभूतमुच्यत इत्यर्थः । उक्ततत्त्वत्रयस्यावान्तरभेदसंख्यामाह—स्थितमित्यादि ॥ ४५ ॥

आत्मतत्त्वावान्तरभेदनामान्याह—प्रकृतीत्यादि ॥ ४६-४७ ॥

इति प्रकृत्यादिक्षितिरित्यन्तं चतुर्विंशतिधा आत्मतत्त्वं प्रोक्तमित्यर्थः । विद्यातत्त्वभेदनामान्याह—मायेत्यादि ॥ ४८ ॥

इति मायादिपुरुषान्तं विद्यातत्त्वं सप्त प्रोक्तम् । शिवतत्त्वभेदनामान्याह—शिवेत्यादि । शिवतत्त्वं पञ्चधा संप्रकीर्तितम् ॥ ४९ ॥

षट्त्रिंशद्विधमेवं वै तत्त्वचक्रं समीरितम् ।
क्षित्यादिशिवतत्त्वान्तभासकः परमः शिवः ॥५०॥
तत्त्वातीतो महेशानि सर्वशक्तिसमाश्रयः ।
समस्तभुवनान्येतत्स्वरूपाणि स्वभावतः ॥५१॥
तानि तत्त्वानि तद्रूपवेद्यानीति परं ततः ।
वेदकैकस्वभावं वै तत् सप्तत्रिंशमुच्यते ॥५२॥
अण्डे पिण्डे च देवेशि संस्थितानीह तानि वै ।
तच्छृणुष्व महेशानि स्वभावं तु पृथक् पृथक् ॥५३॥
यत्काठिन्यं तद्धरा स्याद् द्रवं वै जलमुच्यते ।
उष्णं तेजः संचलनं वायुर्व्योमावकाशकम् ॥५४॥

---

एवमुक्तप्रकारेण तत्त्वचक्रं तत्त्वानां समूहः । एवं च प्रकृते षट्त्रिंशत्तमतत्त्वस्य शिव इति गणनात् शिवोऽपि तत्त्वसमुदायैकदेशत्वेन परिच्छिन्नः स्यादित्याशङ्कायां तत्त्वातीतः पूर्णः शिवोऽन्य इत्याह—क्षित्यादीति । क्षित्यादिशिवान्ततत्त्वसमुदायो यल्लग्नो भासते, स तत्त्वातीतः परमशिव इत्यर्थः । एतदुक्तं परमार्थसारे—"यत्पर तत्त्वं तस्मिन् विभाति षट्त्रिंशदात्म जगदेतत्" इति ॥ ५० ॥

ननु परमशिवस्य तत्त्वातीतत्वेऽपि पुनरखिलतत्त्वव्यावृत्तत्वेन परिच्छिन्नत्वं स्यादित्याशङ्क्याह—सर्वशक्तिसमाश्रय इति । एतदुक्तम्—"शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते । शक्तयोऽस्य जगत्सर्वं शक्तिमांश्च महेश्वरः ॥" इति । तनोति स्वकार्यं व्याप्नोतीति तत्त्वमिति प्रागुक्ततत्त्वपदार्थं स्फुटयन्नाह—समस्तेति । भुवनानि चतुर्विंशत्युत्तरद्विशतसंख्यानि स्वच्छन्दसंग्रहादावुक्तानि । एतत्स्वरूपाणि षट्त्रिंशत्तत्त्व-रूपाणि । अत्र हेतुः—स्वभावत इति । स्वस्य तत्तत्तत्त्वस्य क्षित्यादेः, भावः प्रकारः धर्मः काठिन्यादिः, तस्मात् सभुवनानां काठिन्यादितत्त्वधर्माद्धेतोः तत्त्वरूपत्वमिति भावः ॥ ५१ ॥

तानि क्षित्यादिशिवान्तानि तद्रूपवेद्यानि तत्तद्रूपेण पृथिवीत्वादिना वेद्यानि । ततः षट्त्रिंशत्तत्त्वात् परं तत् परमशिवाख्यं सप्तत्रिंशं वेदकैकस्वभावम् ॥ ५२ ॥

अथ षट्त्रिंशत्तत्त्वानां प्रत्येकं स्वरूपं वक्तुमाह—अण्डे इत्यादि । अण्डे ब्रह्माण्डे विराड्देहे, पिण्डे अस्मदादिदेहे, तानि क्षित्यादिशिवान्तानि तत्त्वानि । इह जगति । तेषां तत्त्वानां पृथक् पृथक् प्रत्येकं स्वभावं स्वरूपम् ॥ ५३ ॥

तत्राण्डे पिण्डे च यत्काठिन्यं कठिनता तद् धरा पृथ्वी । काठिन्यमेव धरेति गुण-गुणिनोरभेदाभिप्रायेण । एवमग्रेऽपि । द्रवं सांसिद्धिकद्रवत्वमुष्णमुष्णस्पर्शः । संचलनं

एतेषां सूक्ष्मरूपं तु अनुद्भिन्नविभागकम् ।
गन्धस्पर्शौ रूपरसौ शब्दस्तन्मात्रकाणि वै ॥५५॥
पञ्च ज्ञानेन्द्रियाण्येषां घ्राणं जिह्वा च लोचनम् ।
त्वक् श्रोत्रं चेति पञ्चानां ग्रहणव्यापृतानि वै ॥५६॥
वचनादानगमनविसर्गानन्दपञ्चकम् ।
कर्म स्वाधिष्ठानरूपमतस्तन्न पृथक् कृतम् ॥५७॥
वाक्पाणिपादपायूपस्थाख्यं तत्करणं भवेत् ।
सर्वदेहगतं चापि स्फुटव्यक्तेरुदाहृतम् ॥५८॥
मनः संकल्पकरणं बुद्धिर्निश्चयकारिणी ।
विकल्पप्रतिबिम्बानां भूमिर्दर्पणवच्छिवे ॥५९॥

---

सम्यगविच्छिन्नतया चलनं सदागतिः । अवकाशकं शून्यत्वम् । अत्रानलानिला इत्यादिप्रागुक्तानां तेजो वायुरिति नामान्तरकथनेनार्थप्रधानत्वात् स्वात्मीकारमन्त्रे श्रोत्रत्वक्चक्षुरित्यादिलेखनं पद्धतिकृतां संगच्छते ॥ ५४ ॥

एतेषां पृथिव्यादीनां पञ्चानाम् । सूक्ष्मं यद्रूपं तदेव क्रमेण गन्धादिशब्दान्ततन्मात्राणीत्यन्वयः । कथंभूतं सूक्ष्मरूपम् ? अनुद्भिन्नविभागकम् । अनुद्भिन्नः अव्यक्तः विभागः काठिन्यादिगुणानां यत्र । यथा हि वृक्षस्य सूक्ष्मरूपमङ्कुरः । तत्र हि पर्णवृन्तादीनामव्यक्तो विभागः ॥ ५५ ॥

एषां गन्धादीनां पञ्च घ्राणादिश्रोत्रान्तानि क्रमेण ज्ञानेन्द्रियाणि पञ्चानां गन्धादीनां ग्रहणे व्यापृतानि व्यापारवन्ति गन्धादिग्रहणानुकूलव्यापारवत्त्वाद् गन्धादिज्ञानकरणानीति भावः ॥ ५६ ॥

वचनं शब्दनं शब्दोत्पत्त्यनुकूलो व्यापारः । विसर्गः मलादित्यागः । आनन्दो मैथुनजन्यः । एतत्पञ्चकं वागाद्युपस्थान्तपञ्चेन्द्रियकार्यम् । ननु शब्दादीनामिव वचनादीनां पूर्वं कुतो न गणनमित्याशङ्क्याह—कर्मेति । वचनाद्यानन्दान्तपञ्चकं स्वाधिष्ठानरूपं वागाद्याश्रयरूपं तावन्मात्रवृत्तेः । अतः पृथग्गणनं न कृतम् ॥ ५७ ॥

तत्करणं वचनादिकरणम् । ननु गमनादिकं पाणिनापि संभवतीति चेदाह—सर्वेत्यादि । गमनादिकरणत्वं सर्वदेहगतमपि पादादावेव स्फुटमभिव्यक्तं गमनकरणत्वमिति तथोदाहृतम् ॥ ५८ ॥

एकस्यैवान्तःकरणस्य त्रिविधवृत्तिकरणत्वात् त्रैविध्यमाह—मन इति। संकल्पः इदमेवमस्त्विति चित्तवृत्तिः । निश्चयः इदमित्थमिति वृत्तिः । विकल्पानां परस्परं व्यावृ-

**एतावदभिमानात्मा चाहङ्कार उदाहृतः ।**
**दुःखनिर्वृत्तिमोहाख्यरजःसत्त्वतमोमयम् ॥६०॥**
**अन्तःकरणमित्युक्तं तत्तदाधिक्यसंभवम् ।**
**कारणानां गुणानां तु साम्यं प्रकृतिरुच्यते ॥६१॥**
**तद्भिन्नः पुरुषः प्रोक्तः पूर्णः संक्षिप्तशक्तिकः ।**
**चिदानन्दस्तथेच्छा च ज्ञानं तद्वत्क्रियापि च ॥६२॥**
**परिपूर्णाः शक्तयस्तु संकोचात्तु कलादिकाः ।**
**सर्वकर्तृत्वरूपा वै क्रियाशक्तिः कलाऽभवत् ॥६३॥**
**किञ्चित्कर्तृत्वरूपेण ज्ञानं सर्वज्ञता तथा ।**
**बुद्धितत्प्रतिबिम्बानां वस्तूनामेव बोधतः ॥६४॥**

---

त्तानां पृथिव्यादिभावानां यः प्रतिबिम्बः प्रतिबिम्बनं तस्य भूमिः स्थानं घटादिप्रतिबिम्बानां दर्पणवत् । बुद्धिरिति शेषः ॥ ५९ ॥

एतावति क्षित्यादिबुद्धयन्ते तत्त्वसमूहे अभिमानात्मा ममेदं मम नेदमिति चित्तवृत्तिः । निर्वृतिः सुखम्, मोहो मूढता । पुनः मनोबुद्धयहङ्कारात्मकमन्तःकरणं क्रमेण दुःखसुखमोहात्मकरजःसत्त्वतमोमयम् । सत्त्वादीनां सुखादिकारणत्वात् सुखाद्यात्मता ॥ ६० ॥

एतत्त्रितयमन्तःकरणमित्युक्तम् । एकस्याप्यन्तःकरणस्य त्रैविध्यं तत्तदाधिक्यसंभवं तत्तद्गुणानां सत्त्वादीनां प्राक्तनकर्मपरिपाकनिमित्तं यदाधिक्यं तज्जनितम्। तदुक्तं भगवता—"रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥" इति । त्रैविध्यकारणभूता ये सत्त्वादयो गुणास्तेषां साम्यमन्यूनानधिकता । अन्तःकरणमेव गुणसाम्यदशायां प्रकृतिः । गुणवैषम्यदशायां मनआदिकमिति भावः ॥ ६१ ॥

तद्भिन्नः पृथिव्यादिप्रकृत्यन्तदृश्यवर्गाद् भिन्नः द्रष्टृरूपः पुरुषः । पूरणात् पुरुष इति । वस्तुतः पूर्णः शिव एव सः, किन्तु संक्षिप्ताश्चास्य सर्वाः शक्तय इति पुरुषत्वम् । ताः शक्तीराह—चिदानन्देत्यादि ॥ ६२ ॥

इमाः शक्तयः शिवे परिपूर्णाः । पुनः संकोचात् कलाद्यभिधास्ताः पुरुषस्य भवन्ति। तत्र चिदानन्देच्छाज्ञानक्रियासु या क्रिया सा शिवस्य सर्वकर्तृत्वम् । सैव संकुचिता किञ्चित्कर्तृत्वरूपेण कलाऽभवदित्यन्वयः ॥ ६३ ॥

तथैव शिवस्य ज्ञानं सर्वज्ञता । बुद्धिः तत्प्रतिबिम्बा घटादयः । तेषामेव वस्तूनां बोधतः । बुद्धावप्रतिबिम्बितानामबोधात् । संकोचनादित्यन्वयः ॥ ६४ ॥

संकोचनात्तु विद्याख्या सैवाविद्येति गीयते ।
इच्छा तु नित्यतृप्त्याख्या सैव संकोचशालिनी ॥६५॥
रागः क्वचिदतृप्त्याख्या क्वचिदञ्जनरूपिणी ।
चिच्छक्तिर्नित्यसत्ताख्या कालः षड्भावयोगतः ॥६६॥
आनन्दशक्तिः स्वातन्त्र्यं सार्वत्रिकमुदीरितम् ।
अन्यापेक्षणहेतोस्तु संकोचान्नियतिः स्मृता ॥६७॥
अखण्डरसमेतावदेतद्भेदननैपुणा ।
स्वातन्त्र्यरूपा त्वं देवि माया भैरववल्लभा ॥६८॥
भेदनेन स्वरूपस्य गोपनात् तत्त्वरूपिणी ।
स्वरूपभेदनं हित्वा चैक्यावगमनोद्यता ॥६९॥

---

एवं संकुचिता सैव विद्याख्या पुरुषस्य। अविद्यापि सैव । एवं शिवस्येच्छा नित्यतृप्तिः । सैव सङ्कोचशालिनी ॥ ६५ ॥

क्वचिदतृप्त्याख्या क्वचिदप्यतृप्तिः दुष्पूराशेत्यर्थः । एवंविधाऽतृप्तिरेव रागः । रञ्जनं प्रीतिः । क्वचिद्विषयेषु प्रीतिरूपिणी सा अतृप्तिः रागः । एवं शिवस्य चिच्छक्तिर्नित्यसत्ता नित्यता, सैव अस्ति जायते वर्द्धते विपरिणमतेऽपक्षीयते विनश्यतीति षड्भावयोगात् संकुचिता सती कालः ॥ ६६ ॥

शिवस्यानन्दशक्तिः सार्वत्रिकं स्वातन्त्र्यम्, तदेव स्वातन्त्र्यं नियततत्तत्कारणवस्त्वपेक्षणात् सङ्कुचितं नियतिः ॥ ६७ ॥

क्षित्यादिनियत्यन्तमेतावद्वस्तुतोऽखण्डचिदेकरसम् । एतस्य भेदने भिन्नत्वेनावभासने नैपुण्यं यस्याः । ईदृशी भेदप्रथनरूपा माया शिवस्य स्वातन्त्र्यम् । सा भैरववल्लभात्वमेवेति स्वशक्तिं प्रति भैरव आह--भैरवस्य परशिवांशत्वेन तच्छक्तेः परशक्त्यंशत्वाद् युक्तं चैतत् ॥ ६८ ॥

स्वरूपस्येत्युभयत्रान्वेति । अखण्डचिन्मात्ररूपस्य स्वरूपस्य भेदनेन भेदावभासनेन । स्वरूपस्य गोपना गुप्तिः, तदेव तत्त्वं यथार्थत्वेन भासमानं रूपमस्या मायायाः । सैव स्वरूपभेदनं हित्वा स्वरूपे भेदमनवभासयन्ती स्वरूपैक्यस्य अवगमने ज्ञाने उद्यता उन्मुखी ॥ ६९ ॥

परमार्थप्रथारूपा शुद्धविद्येति शब्दिता ।
स्पष्टभेदप्रथान् भावान् स्वाभेदेनावभासयन् ॥७०॥
ईश्वरः कथितो देवि तानस्पष्टानहं त्विदम् ।
इति प्रबोधनात्मा तु सदाशिव इतीरितः ॥७१॥
स्वस्वरूपाभेदमयानहमित्येव पश्यति ।
प्रपञ्चवासनारूपा शक्तिरित्यभिधीयते ॥७२॥
निष्प्रपञ्चश्चिदेकात्मा शिवतत्त्वं समीरितम् ।
पृथ्वी गन्धस्तथा घ्राणं लकारेषु प्रतिष्ठितम् ॥७३॥
आपो रसश्च रसना ककारत्रितये स्थितम् ।
तेजो रूपं च नयनं रेफत्रितयसंस्थितम् ॥७४॥
वायुः स्पर्शः स्पार्शनं च बिन्दुत्रयगतं भवेत् ।
आकाशशब्दौ श्रोत्रं च नादत्रयगतं तथा ॥७५॥

---

तदा परमार्थप्रथारूपा यथार्थज्ञानरूपा शुद्धविद्या । स्पष्टभेदप्रथान् स्फुटभेदज्ञानविषयान् भावान् स्वात्माभेदेनेदमहमिति भासनावस्थ ईश्वर इत्यन्वयः ॥ ७० ॥

तानेव भावानस्पष्टान् सुषुप्तिप्राक्काल इवास्पष्टभेदज्ञानविषयानहमिदमिति प्रबोधनावस्थः सदाशिवः ॥ ७१ ॥

ईश्वरः स्पष्टभेदप्रथाविषयाखिलजगदभेदेन स्वात्मानमिदमहमिति जानाति । सदाशिवस्तु स्वस्वरूपाभेदमयान् भावान् अहमिदमित्येव पश्यति, न त्वीश्वरवत् । योगिनस्तुर्यदशेव प्रपञ्चस्य वासना संस्कारस्तन्मात्रयोगो यत्र प्रथायां सा शक्तिः ॥७२॥

वासनात्मकप्रपञ्चेनापि निर्गतश्चिन्मात्ररूपः शिवतत्त्वम् । एतत्तत्त्वस्वरूपनिरूपणविस्तरस्तु श्रीमृगेन्द्रे मतङ्गादौ च द्रष्टव्यः । एवं प्रसङ्गोपगतं तत्त्वस्वरूपं निरूप्य विद्यायास्तत्त्वात्मत्वं प्रकृतं निरूपयति––पृथ्वीत्यादि । षट्त्रिंशत्तत्त्वेषु पृथ्वी गन्धः घ्राणं चेति त्रयं विद्यागतेषु त्रिषु लकारेषु प्रतिष्ठितं वाचकत्वेन ॥ ७३ ॥

एवमापो रसः रसना जिह्वा इति त्रयं ककारत्रये । तेजः रूपं नयनं चक्षुः इति त्रयं हृल्लेखावयवे रेफत्रये ॥ ७४ ॥

वायुः स्पर्शः स्पार्शनं त्वग् इति त्रयं हृल्लेखावयवे बिन्दुत्रये । आकाशः शब्दः श्रोत्रं चेति त्रयं हृल्लेखावयवे नादत्रये । हृल्लेखायां बिन्दूपरि अर्धचन्द्ररोधिनीनादनादान्तशक्तिव्यापिकासमनोन्मनेत्यलौकिकः शास्त्रैकगम्यो वर्णाष्टकसमुदायो नादः ॥ ७५ ॥

हकारपञ्चके ज्ञेयं पञ्चवागादिकं शिवे ।
मायादिषट्कं देवेशि प्रकृत्यादिचतुष्टयम् ॥७६॥
अकारदशके ज्ञेयं दशकं प्रोक्तरूपकम् ।
सदाशिवादित्रितयं पुरुषश्च चतुष्टयम् ॥७७॥
ईकाराणां चतुष्के तु संस्थितं परमेश्वरि ।
सकारद्वितये देवि शिवः शक्तिश्च संस्थितौ ॥७८॥
एकारे तु महेशानि संस्थितः परमेश्वरः ।
एवं तत्त्वमयी विद्या प्रोक्ता पञ्चदशाक्षरी ॥७९॥
मिथुनात्मत्वमधुना वक्ष्ये शृणु समाहिता ।
ब्रह्मा सरस्वती विष्णुर्लक्ष्मीः शर्वः शिवा तथा ॥८०॥
परमेशः पराशक्तिर्मिथुनानां चतुष्टयम् ।
कादिबिन्द्वन्ताष्टसु वै संस्थितं परमेश्वरि ॥८१॥

---

हृल्लेखात्रये त्रयं द्वितीयकूटमध्ये द्वयमिति हकारपञ्चके वागादि उपस्थान्तपञ्चकम् । मायादिनियत्यन्तं षट्कम् । प्रकृत्यहङ्कारबुद्धिमन इति चतुष्टयमिति दशकमकारदशके ज्ञेयमित्यन्वयः ॥ ७६ ॥

प्रथमकूटे द्वयं द्वितीयकूटे पञ्चकं तृतीये त्रयमित्यकारदशकम् । प्रोक्तरूपकं मायादिरूपं दशकम् । सदाशिवादित्रितयं सदाशिवेश्वरशुद्धविद्याः । चतुष्टयं स्थितमित्यन्वयः ॥ ७७ ॥

प्रथमकूटमध्ये एकम्, हृल्लेखात्रये त्रयमितीकारचतुष्कम् । द्वितीयतृतीयकूटयोर्मध्ये एकैकः सकारः ॥ ७८ ॥

एकारे प्रथमकूटस्थे । परमेश्वरस्तत्त्वातीतः परशिवः । एवमुक्तप्रकारेण । तत्त्वात्मत्वं विद्यायाः । योगिनीहृदयादौ प्रकारान्तरेणोक्तम् । तत्र तत्तत्तन्त्रपरैस्तथा तथा विभावनीयम् ॥ ७९ ॥

एवं तत्त्वमयतां निरूप्य विद्याया मिथुनात्मत्वं वक्तुं मिथुनान्याह—ब्रह्मेत्यादि ॥ ८० ॥

प्रोक्ता ब्रह्मादिपरमेशान्तमिथुनचतुष्टये ब्रह्मादिपराशक्त्यन्ताष्टकं प्रथमकूटे ककारादिलकारान्तं चतुष्टयं हृल्लेखायां ह र ई अं इति बिन्द्वन्तचतुष्टयं मिलित्वाष्टकम् । तत्र संस्थितम् ॥ ८१ ॥

वामेच्छा च तथा ज्येष्ठा ज्ञाना रौद्री क्रिया ततः ।
अम्बिका च ततः शान्ता मिथुनानां चतुष्टयम् ॥८२॥

मध्यं हकारं संत्यज्य चाष्टवर्णेषु संस्थितम् ।
अग्निश्च वैखरी चैव चन्द्रमा मध्यमा तथा ॥८३॥

सूर्यस्तथैव पश्यन्ती परब्रह्म परा तथा ।
मिथुनानां चतुष्कं वै हकारेण सहैव तु ॥८४॥

तृतीयकूटवर्णेषु संस्थितं परमेश्वरि ।
एतत्ते सर्वमाख्यातं किमन्यच्छ्रोतुमिच्छसि ॥८५॥

इति श्रीपरमानन्दतन्त्रे मन्त्रवासनाप्रकाशनं
नामैकादशोल्लासः ॥११॥

---

वामाद्यम्बिकान्तमिथुनचतुष्टयम् ॥ ८२ ॥

मध्यं हकारं द्वितीयकूटे चतुर्थवर्णो हकारः, तं त्यक्त्वा शेषे प्रथमकूटवद्वर्णाष्टके चतुष्टयं संस्थितमिति सम्बन्धः ॥ ८३ ॥

एवमग्न्यादिपरान्ताष्टकं द्वितीयकूटे परित्यक्तहकारेण सह ॥ ८४ ॥

तृतीयकूटे सकारादित्रयं हृल्लेखायां चतुष्टयं मिलित्वा सप्तकं त्यक्तहकारेण सहाष्टकम् । तेषु क्रमेण संस्थितमिति । एवमुक्तरीत्या मातृकातत्त्वमिथुनात्मता विद्यायाः, वाच्यवाचकयोरभेदात् । ननु कथं विद्यावर्णानां तत्त्वादिबोधकत्वम्? शक्त्या लक्षणया वा? नाद्यः, तादृशतत्त्वादिरूपार्थे शक्तिग्राहकव्याकरणादेरप्रसिद्धेः । नापि द्वितीयः, शक्त्यसम्बन्धाभावात् । इति चेत्, उच्यते—एतत्तन्त्रवचनस्यैव शक्तिग्राहकत्वात् शक्त्यैवैतदर्थबोधकत्वमिति । वरिवस्यारहस्ये श्रीभास्कररायैरप्येवमेवाभिहितम् । उपसंहरति—एतदिति ॥ ८५ ॥

सौभाग्यानन्दसंदोहे मोदपद्यार्थबोधकः ।
परमानन्दटिप्पण्यामुल्लासो दशमात् परः ॥ ११ ॥

एकादश उल्लासः समाप्तः ॥



## द्वादशोल्लासः

श्रीदेवी उवाच

देवेश श्रोतुमिच्छामि दीक्षाया विधिमुत्तमम् ।
कथयस्व महादेव संविधानं सविस्तरम् ॥ १ ॥

श्रीभैरव उवाच

शृणु देवि प्रवक्ष्यामि दीक्षाविधिमनुत्तमम् ।
यस्य श्रवणमात्रेण दीक्षाफलमवाप्नुयात् ॥ २ ॥
विना दीक्षां न मुक्तिः स्यादित्याज्ञा पारमेश्वरी ।
दीक्षाविधिविहीनो यः कौलिको म्रियते यदि ॥ ३ ॥

---

एवमेकादशोल्लासे पञ्चदश्यादिविद्या निरूपिता । अधुना तस्याः साङ्गोपासनयोग्यतापादिकां दीक्षां पृच्छति—श्रीदेव्युवाचेति । सविधानम् अशेषेतिकर्तव्यतारूपविधानयुतम् ॥१॥

उत्तरमाह—श्रीभैरव उवाचेति । नास्त्युत्तमं यस्मात्तदनुत्तमम् । दीक्षां स्तौति—यस्येत्यादि ॥२॥

तस्यावश्यकतां मुक्त्यन्तरङ्गसाधनत्वेनाह—विनेति । त्रिपुरारहस्येऽप्युक्तम्—"विनोपनयनं यद्वद् द्विजानां सर्वकर्मसु । न योग्यता तथाऽत्रापि विना दीक्षां भृगूद्वह ॥ अप्राप्य सद्गुरोर्दीक्षामज्ञात्वा गुरुपद्धतिम् । स्वबुद्धया तु कृतं कर्म विधिना च समन्वितम् ॥ तथापि साधकं शीघ्रं नाशयत्येव सर्वथा । सेवितारं यथा हन्ति चापक्वं तु रसायनम् ॥" इति । ननु कथं दीक्षां विना न मुक्तिरिति मुक्तौ दीक्षाया एव कारणत्वमुक्तम् ? दीक्षादिकर्मानपेक्षमेव ज्ञानं मुक्तिकारणमिति सर्वसच्छास्त्रेषूक्तत्वादिति चेत्, उच्यते—मुक्तिसाधनं तत्तच्छास्त्रेषूक्तम् । तैरन्यशास्त्रोक्तैः साधनैः न परमा मुक्तिः, किन्तु तत्कल्पसमाप्त्यन्तमेव, कल्पान्तरे पुनस्तेषामुत्पत्तिसंभवात् । तदुक्तं तन्त्रान्तरे—"सांख्यवेदादिसंसिद्धान् श्रीकण्ठस्तदहर्मुखे । सृजत्येव पुनस्तेन न सदृङ्मुक्तिरीदृशी ॥" इति । पुरुषस्य हि द्विविधमज्ञानम्—पौरुषं बौद्धं चेति । तदप्युक्तं तन्त्रालोके—"द्विधा पौरुषबौद्धत्वादित्युक्तं शिवशासने" इति । तथा च द्विविधाज्ञाननाशादेव मुक्तिः ।

ब्रह्मरक्षो भवेत् सद्यो यावद् ब्रह्माण्डसंक्षयम् ।
मुक्तिसौधस्य सोपानं प्रथमं दीक्षणं भवेत् ।। ४ ।।

दीयते शिवसायुज्यं क्षीयते पाशबन्धनम् ।
अतो दीक्षेति कथिता लभ्यते पुण्यसंचयैः ।। ५ ।।

श्रीगुरुं सम्यगाराध्य भक्तिश्रद्धाधनादिभिः ।
संतोषयेदकापट्यादार्जवादिगुणैः स्वयम् ।। ६ ।।

गुरुः शान्तः शुचिर्दक्षः कर्ता शास्त्ररहस्यवित् ।
जितेन्द्रियमनाः साधुरनहङ्कारवान् कविः ।। ७ ।।

---

तत्र पौरुषमज्ञानं दीक्षयैव निवर्तते। बौद्धं तु शास्त्रेण। तत्र केवलदीक्षामात्रयुतस्य देहान्ते बौद्धस्यापि नाशान्मुक्तिः। दीक्षोत्तरं शास्त्रेण बौद्धस्याप्यज्ञानस्य नाशे जीवन्मुक्तिः। बौद्धाज्ञानमात्रस्य नाशो नैव संभवति, तस्य शास्त्रश्रवणानधिकारात्। तदुक्तं तत्रैव—"अदीक्षितानां पुरतो नोचरेच्छिवपद्धतिम्" इति। एतच्च तन्त्रालोकव्याख्यायां श्रीजयरथाचार्यैः सुस्पष्टं निरूपितम्। दीक्षाया नित्यत्वं वक्तुं व्यतिरेके दोषमाह—दीक्षेत्यादि। कौलिकः कुलाचारप्रविष्टः। ब्रह्मरक्षो भवेदित्यन्वयः ।।३।।

सद्यः देहान्ते। तच्च ब्रह्मरक्षस्त्वं आब्रह्मकल्पमित्याह—यावदिति। पौरुषाज्ञाननाशपूर्वकत्वाद् बौद्धाज्ञाननाशस्य दीक्षैव मुक्तेः प्रथमं सोपानम् ।।४।।

दीक्षापदनिरुक्तिमाह—दीयत इति। यत एवंविधमहाफला दीक्षाः, अतः पुण्यसंचयैर्लभ्यते ।।५।।

एवंविधदीक्षाप्राप्तावुपायमाह—श्रीगुरुमित्यादि। आराध्य संतोषयेत्। तथा च गुरुसंतोषो दीक्षाकारणमिति फलितम्। सम्यगाराध्येत्यत्राराधने सम्यक्त्वमेवाह—भक्तीत्यादि। भक्तिः प्रीतिः। श्रद्धा तद्वाक्यादौ विश्वासः। आदिना तदनुकूलक्रियादिग्रहणम्। इदं सर्वं कापट्येन स्वकार्यसाधनान्तं मयेदं कर्तव्यमिति प्रच्छन्ननिश्चयेनाऽपि संभवत्यत आह—अकापट्येति। आर्जवम् ऋजुता। आदिना क्षमादिः ।।६।।

गुरुं तोषयेदित्युक्तम्। तत्र गुरुलक्षणमाह—शान्त इत्यादि। शान्तः कामक्रोधादिजनितक्षोभरहितः। शुचिः स्नानादिकर्मणा सत्येन ध्यानेन च निरस्तकायवाङ्मनोमलः। दक्षः दीक्षादिकर्मकरणसमर्थः। कर्ता स्वतन्त्रोक्तकर्मानुष्ठाता। शास्त्ररहस्यवित् आगमशास्त्रतत्त्वज्ञः। जितेन्द्रियमनाः इन्द्रियमनश्चाञ्चल्यरहितः। साधुः दम्भादिरहितः। अनहङ्कारवान् त्यक्तदेहाद्यभिमानः। कविः पण्डितः ।।७।।

अलुब्धः करुणासिन्धुः पारम्पर्ययुतः शुभः ।
गुरुरेवंविधो देवि शिष्यं सम्यक् परीक्षयेत् ॥ ८ ॥

---

अलुब्धः अन्यायेन धनार्जनासक्तिरहितः । करुणासिन्धुः दयार्द्रहृदयः । पारम्पर्ययुतः सद्गुरुपरम्परया प्राप्तविद्यासंप्रदायः । न तु पुस्तकादेरधिगतमन्त्रः । तदुक्तं ताराकल्पे—"गुरोर्मुखान्महाविद्यां गृह्णीयात् पापनाशिनीम् । पुस्तके लिखितो मन्त्रो येन सुन्दरि जप्यते ॥ न जायते तस्य सिद्धिर्हानिरेव पदे पदे ।" इति । तथा योगिनीतन्त्रे—"विधिनासादितो मन्त्रो दीयते गुरुणा शिवे । पुस्तकादिषु संप्राप्तः शिष्यान्नाशयति द्रुतम् ॥" इति । एवंविधो गुरुः शुभ इति सम्बन्धः । एवंविधं गुरुं ज्ञात्वा आराधनेन संतोष्य तस्माद्दीक्षां समासादयेत् । गुरुरपि सेवनमात्रेण न शिष्यं दीक्षयेत् । किन्तु सम्यगादौ परीक्षयेद् इत्याह —गुरुरिति । "श्रीगुरुः परमेशानि शुद्धवेषो मनोहरः" इत्यादिकुलार्णवाद्युक्तलक्षणानि प्रायोऽत्रोक्तलक्षणान्तर्भूतान्येव । विशेषस्तु—"स्वनाम्ना न गुरुः कार्यो भार्यां वै मातृनामिकाम्" इति वाराहीतन्त्रे उक्तम् । वर्णाश्रमादिनियमस्तु त्रयोदशोल्लासे—"स्त्रीभ्यो दीक्षणमुत्कृष्टं मातुश्चाष्टगुणं स्मृतम् । शूद्रं परित्यज्य वर्णं गुरुः पूर्वः समोऽपि वा ॥ परो नैव गुरुर्देवि आश्रमे तु परोवरः । ब्रह्मचारी नैष्ठिकस्तु गृहिणो वै गुरुर्भवेत् ॥ परे पूर्वाश्रमी देवि न गुरुः स्यात् कदाचन । भिक्षोर्दीक्षानन्तफला स्त्री स्यादाचार्यपूर्विका ॥" इति वक्ष्यते ।

पुरुषेभ्यो दीक्षणापेक्षया स्त्रीभ्यो दीक्षणमुत्कृष्टम् । तास्वपि मातुः सकाशाद्यद्दीक्षणं तदष्टगुणफलम् । तत्रापि स्त्रिया अविधवाया एव गुरुत्वम्, 'योषित् सुवासिनी तद्वद् गुरुः स्याद्विधवा न तु" इति योगिनीतन्त्रोक्तेः । अत एव "स्त्री चापि तु सभर्तृका" इति पद्धतिकृतोक्तम् । केचित्तु आचार्यपूर्विकेत्यत्र त्रयोदशवचने आचार्यो भर्ता, तत्पूर्विका तद्वतीत्यर्थमाहुः । शूद्रं त्यक्त्वा पूर्वो वर्णः समानो वा गुरुः । तथा च ब्राह्मणश्चतुर्णाम्, क्षत्रियः क्षत्रियादित्रयाणाम्, वैश्यो वैश्यादिद्वयोर्गुरुः, शूद्रो न कस्यापि गुरुरित्यर्थः । एतदेव स्पष्टमाह—परो नैव गुरुरिति । यत्तु नारदपाञ्चरात्रे—"सजातीयेन शूद्रेण तादृशस्य महामते । अनुग्रहाभिषेकौ च कार्यौ शूद्रस्य सर्वदा ॥" इति । एतच्च सर्वथा ब्राह्मणाद्यलाभ इति तत्रैवाग्रिमग्रन्थे उक्तम् । यथा— 'वर्णोत्तमे गुरौ योग्ये सति वा विश्रुतेऽपि वा । स्वदेशे वा तथान्यत्र नेदं कार्यं शुभार्थिना ॥ विद्यमाने तु यः कुर्याद् गुरुं शूद्रं प्रमादतः । तस्येहामुत्रनाशः स्यात्तस्माच्छास्त्रोक्तमाचरेत् ॥" इति । अत एव हीनवर्णादिलक्षणाद् गुरोः प्रमादेन दीक्षादिग्रहणे मन्त्रगुर्वोस्त्याग उक्तो योगिनीतन्त्रे—"अलक्षणात्तु सम्प्राप्य दीक्षां मन्त्रमथापि वा । त्यक्त्वा मन्त्रं गुरुं चापि प्रायश्चित्तं समाचरेत् ॥ अभोजनस्त्र्यहं देवि गायत्र्या अयुतं जपेत् ।" इति । रहस्यार्णवेऽपि—"हीनवर्णात् पातकिनो

ब्रहुलक्षणहीनतः । स्वमन्त्रदीक्षारहिताद्दीक्षां प्राप्य तु मोहतः ॥ गुरुं मन्त्रं च संत्यज्य प्रायश्चित्तं समाचरेत् ॥" इति । मन्त्रत्यागविधिस्तु ताराभक्तिसुधार्णवादवगन्तव्यः । गुरोस्त्यागो नाम प्रातस्मरणाभिवन्दनाद्यभावः । एवमेकस्माद् गुरोर्न्यूनदीक्षां प्राप्तोऽनन्तरं ततोऽप्यधिकदीक्षेच्छावान् पूर्वगुर्वाज्ञया वा पूर्वगुरुं परित्यज्य वा गुर्वन्तराद्दीक्षान्तरं ग्राह्यम् । यथा—आदौ एकस्माद् गुरोर्बालादीक्षा गृहीता । ततः कालान्तरे पञ्चदश्यादिदीक्षाग्रहणेच्छायां यदि तस्य गुरोः पञ्चदश्यादिदीक्षाकरणेऽधिकारोऽस्ति, तदा तस्मादेव गुरोर्दीक्षान्तरं ग्राह्यं न गुरुं परित्यजेत्, "गुरौ तस्माद्धितं कुर्याद्वाङ्मनःकायकर्मभिः । अपमानमनाज्ञां च निन्दां नैव समाचरेत् । परम्परागुरुं नैव त्यजेद्योग्यं कथंचन ।" इति त्रयोदशे वक्ष्यमाणत्वात् । "परित्यक्तगुरुं तद्वन्न संगच्छेत्कदाचन" इति रहस्यार्णववचनाच्च । पूर्वगुरोर्दीक्षान्तरकरणयोग्यताऽभावे तदाज्ञया गुर्वन्तरमाश्रयेत् । तदानीं न पूर्वगुरुत्यागः, किन्तूभयत्र पूज्यभावः । प्रातःस्मरणादौ द्वितीयगुरोरेव नामकीर्तनादिकम् । यदि पूर्वगुरुर्दुराग्रहादाज्ञां न प्रयच्छति, तदा तं गुरुं परित्यज्य गुर्वन्तरमाश्रयेत् । अत एव—मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् । ज्ञानलुब्धस्तथा देही गुरोर्गुर्वन्तरं व्रजेत् ॥" इति तन्त्रोक्तिः । 'दीक्षान्तरं यदा वाञ्छेत् पूर्वगुर्वाज्ञया ततः । गुर्वन्तरात् समादद्याद्दीक्षां स्वेष्टां यथाविधि ॥ शिष्यप्रतारकं मूर्खं हीनलक्षणमेव च । दुराग्रहयुतं चापि संत्यजेदविचारयन् ॥ तथाविधं न त्यजेद्वै श्रद्धाजाड्येन कर्हिचित् । विषीदेत् कृत्रिमायां वै नावि स्थित्वेव स्रोतसि ।" इति बृहद्वामकेश्वरेऽपि । एतच्च श्रीभास्कररायैरुत्तरसेतुबन्धे सम्यङ्निरूपितम् । एवं ब्राह्मणादिवर्णव्यवस्थामुक्त्वा आश्रमेऽप्याह—आश्रमे त्विति । तु इति वर्णोक्तक्रमव्यत्ययद्योतकः । परः द्वितीयादिः । वरः श्रेष्ठः । गुरुरित्यर्थः । तथा च संन्यासी चतुर्ष्वप्याश्रमेषु, वनस्थः वनस्थादित्रिषु, गृहस्थो गृहस्थादिद्वये, ब्रह्मचारी ब्रह्मचारिण्येव गुरुरित्यर्थः । "न्यूनाश्रमेऽनन्तरे वा गुरुशक्तेस्तु संमतः" इति स्वतन्त्रोक्तेः । "पूर्वाश्रमी परो वर्णो गुरुरत्यन्तनिन्दितः । समानवर्णाश्रमी च श्रेष्ठवर्णाश्रमी तथा ॥ कुलेन वयसा चापि ज्येष्ठः स्याद्गुरुरुत्तमः ।" इति योगिनीतन्त्रोक्तेश्च । अत्र न्यूनाश्रमे श्रेष्ठाश्रमिणा दीक्षा कर्तव्या । अनन्तरे वयसा कनिष्ठे अधिकवयस्केन दीक्षा कर्तव्या । गुरुभूताया आचार्यलक्षणयुतायाः शक्तेस्तु न्यूनवयस्काया अपि गुरुभावः संमत इति स्वतन्त्रवचनार्थ उद्योते लिखितः । वयसा ज्येष्ठ एव पुरुषो गुरुः । शक्तिस्तु कनिष्ठाऽपि । अत एव त्रिपुरार्णवे—"वयसाऽपि कनीयस्यो नमस्कार्याः स्त्रियः सदा । योषिदल्पवयस्काऽपि गुरुत्वार्हा वरानने ॥" इत्युक्तम् । आश्रमिष्वन्यद्विशेषमाह—ब्रह्मचारीति । नैष्ठिकब्रह्मचारी तु गृहिणोऽपि गुरुः । अत्र गृहिपदं संन्यासीतरपरम्, "नैष्ठिकः ब्रह्मचारी तु वनस्थादित्रये गुरुः" इति योगिनीतन्त्रवचनात् । नैष्ठिकलक्षणमुक्तं बृहद्वामकेश्वरे—"ब्रह्मचर्यं धृतं येन यावज्जन्म दृढात्मना । स नैष्ठिकब्रह्मचारी निगृहीताखिलेन्द्रियः ॥" इति । आश्रमे तु परोवर इत्यत्र परस्योत्तमत्वमुक्तम् । तेन पूर्वस्य मध्यत्वं सिध्यतीत्याशङ्क्याह—परे इति । परे गृहस्थादौ । पूर्वाश्रमी ब्रह्मचार्यादिर्न गुरुः स्यात् । तत्राश्रमिषु भिक्षोः संन्यासिनो गुरोः

प्राप्ता दीक्षानन्तफला। स्त्री तु आचार्यपूर्विका। स्त्रिया होमादिकरणार्थमुपाचार्यवरण-पूर्वकमेव दीक्षा कार्या। इति प्रसङ्गात् त्रयोदशवचनानां व्याख्या कृता।

यत्तु—"यतेर्दीक्षां गृहीत्वा तु कदाचिदपि मोहितः। प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत्॥" इति, "भिक्षुभ्यश्च वनस्थेभ्यो वर्णिभ्यश्च महेश्वरि। गृहस्थो भोगसौख्यार्थी मन्त्रदीक्षां न चाचरेत्॥" इति योगिनीतन्त्रशैवागमादिषु संन्यासिनो गुरुत्वनिषेधो यः, स न सामान्यतः—'गृहस्थः प्रथमाच्छ्रेष्ठो वनस्थस्तत उत्तमः। यतिः सर्वोत्तमो ज्ञेयस्तस्माद्दीक्षा महाफला॥" इति, 'गृही श्रेष्ठस्ततः श्रेष्ठो वनी तस्माद्यती गुरुः" इति त्रिपुरारहस्यार्णवादिवचनात्। किन्तु त्यक्तविद्योपासनस्य यतेर्भोगार्थिनं गृहस्थं प्रति च निषेधः। तथाहि—गृहस्थो भोगसौख्यार्थीति शैवागम-वचनस्वरस्याद्भोगार्थिनं प्रति यतिसामान्यस्य गुरुत्वनिषेधः।

त्यक्तविद्योपासना द्विविधाः—शास्त्रार्थमपरिज्ञाय मोहाद् बाह्यसंन्यासमात्रेण त्यक्तोपासनाः केचन। तेषामुपासनात्यागः प्रामादिक एवेति न ते गुरुत्वार्हाः। ननु संन्यासिनः सर्वत्यागवदुपासनात्यागोऽपि वैध इति चेन्न, अधीते वेदे उप-निषद्भागस्येव उपासनात्यागायोगात्। अत एव त्रिपुरारहस्ये उक्तम्—"अज्ञानान्मोहतो वापि विद्योपास्तिं त्यजेत्तु यः। स विशेदन्धतामिस्रं न तस्यास्ति पुनर्गतिः॥ संन्यासि-नापि त्यक्तव्यं सर्वं बन्धात्मना स्थितम्। इदं मोक्षात्मकं राम श्रीविद्योपासनं तु यत्॥ न तु त्यक्तुं समुचितं ब्राह्मण्यमिव वै यतेः॥" इति। द्वितीयस्तु चतुर्विंशोल्लासे वक्ष्य-माणरीत्या त्यक्तबाह्योपासनो हृल्लेखामात्रपरिशेषः। तस्य गुरुत्वनिषेधोऽपि तत्रैवोक्तः—'हृल्लेखामात्रशेषस्तु न शिष्यो न गुरुर्भवेत्" इति। एवं च भोगार्थिनो यतिमात्राद्दीक्षा निषिद्धा। त्यक्तोपासनयतिभ्यस्तु सर्वथा दीक्षा निषिद्धेति सिद्धम्। यत्तु—"प्रायश्चित्तं भृगोः पातं संन्यासं व्रतधारणम्। तीर्थयात्राभिगमनं कौलः पञ्च विवर्जयेत्॥" इति कुलार्णवादौ संन्यासनिषेधः, स उपासनत्यागनिषेधपरः, न सामान्यसंन्यासनिषेधपरः। अत एव संन्यासिनो दीक्षाग्रहणप्राशस्त्यमुपपद्यते। "संन्यासिनो वनस्थाश्च शान्तरूपा उपासकाः। आदावेव तु पूज्याः स्युर्मण्डले शिवरूपिणः॥" इति त्रयोदशोल्लासवचनं च संगच्छते।

ननु प्राप्तदीक्षस्य कौलस्य संन्यास एवात्र निषिद्धः, न तु कृतसंन्यासस्य दीक्षा निषिद्धा। एवं च संन्यासानन्तरं गृहीतदीक्षस्यैवादौ पूजनं दीक्षाग्रहणप्राशस्त्यमत्रा-भिमतमिति चेन्न, "अज्ञानान्मोहतो वापि" इति प्रागुदाहृतत्रिपुरारहस्यवचने संन्यासो न उपासनाया इत्युक्त्या कौलस्य संन्यासोऽभिप्रेत एव। अत एव संन्यासिनः पूर्वाश्रमगुरौ वर्तितव्यप्रकारः समयाचारेषूक्तस्तन्त्रेषु। तच्च समयाचारव्याख्यानेऽभिधीयते। एवमेव प्रायश्चित्तमुपासनामार्गे संभूतस्य दोषस्य न बाह्यं प्रायश्चित्तम्। अत एव—"बाह्याचारप्रसक्तानां पापानां बाह्यशोधनम्। कर्तव्यमन्तश्चारसंभूतानां तथान्तरम्॥" इत्युक्तं त्रिपुरार्णवे। भृगो पात इति प्रयागमरणानशनादीनामप्युपलक्षणम्। दीक्षावतो हि काम्यकर्मनिषेधान्मोक्षस्य दीक्षयैव सेत्स्यमानत्वादनातुरस्यात्मत्यागानौचित्यात्।

**अलुब्धः करुणासिन्धुः पारम्पर्ययुतः शुभः ।**
**गुरुरेवंविधो देवि शिष्यं सम्यक् परीक्षयेत् ॥ ८ ॥**
**एवं परीक्ष्य वै शिष्यं बालादीक्षां विधाय च ।**
**बालोपास्त्या शुद्धचित्तं पञ्चदश्याथ दीक्षयेत् ॥ ९ ॥**

---

अत एवोक्तं त्रिपुरार्णवे—'दीक्षां प्राप्य तु यो मर्त्यः सुकल्पश्चाप्युपासने । त्यक्तुमिच्छेत मोहेन स्वं देहं पतितो हि सः ॥ उपासनविहत्यासौ न दीक्षाफलमश्नुते । समानां शतकं जीवेद्देवतोपासनाय वै ॥ इतीच्छेत सदा मर्त्यो न मृत्यु दीक्षितः क्वचित् । दीक्षितस्यात्मसंत्यागस्तस्मान्नैव विधीयते ॥ आत्मानं त्यक्तुमिच्छेत मोक्षार्थमपि यो नरः । प्रयागादिष्वपि शिवे दुर्लभा तस्य सद्गतिः ॥ इति ।" व्रतधारणनिषेधोऽपि व्रतदिने नैमित्तिकादियोगे व्रतभङ्गभीत्या निमित्तिकलोपे प्रसक्तं वारयितुं वैधस्य व्रतलोपकत्वाभावात् । तीर्थयात्रा च नित्यनैमित्तिकलोपापादिका निषिद्धा नान्या । अत एव व्रततीर्थप्रसक्तिर्नैमित्तिकपूजानिमित्तत्वेन कुलार्णवादिषु परिगणिता । इति तस्यान्नप्रायश्चित्तादिकं सामान्यतो निषिद्धम् । एवमेवास्यार्थ उद्योते लिखितः । यत्तु पितृपतिमातामहभ्रातादीनां देवीरहस्यादिषु गुरुत्वनिषेधः, फेत्कारिण्यादिषु गुरुत्वविधानम्, तद्यथोक्तगुरुलाभालाभपरत्वेन ज्ञेयम् । यत्तु ताराभक्तिसुधार्णवे पितुर्गुरुत्वनिषेधमूलमतिपरिचयादनादर इत्युक्तम् । तस्य मातर्यपि संभवान्मातुश्चाष्टगुणेति कथं संगच्छेतेति विचारणीयम् । एवमन्यान्यपि गुरुलक्षणानि उद्योतशिवार्चनचन्द्रिकादिषु द्रष्टव्यानि । एतदेव पद्धतिकृता शान्तो ह्यलुब्ध इत्यादिना संगृह्योक्तम् । तत्त्वज्ञानिनस्तु उक्तलक्षणाभावेऽपि गुरुत्वमुक्तम्—"वयसा वा गुणेनापि कनिष्ठो यदि तत्त्ववित् । स गुरुः सर्वतः श्रेष्ठो लक्षणं न विचारयेत् ॥" इति स्वतन्त्रे । "ज्ञात्वात्मानं परं यो वै पूर्णाहन्तां समास्थितः । सर्वलक्षणहीनोऽपि स गुरुः सर्वतोऽधिकः ॥" इति त्रिपुरार्णवे कुलार्णवे च । सर्वलक्षणहीनोऽपि तत्त्वज्ञानी गुरुः स्मृत इति । अत एवं 'तत्त्ववित्तत्र चोत्तमः" इति पद्धतिकृतोक्तम् ॥८॥

एतावता ग्रन्थेन गुरुलक्षणमभिधाय शिष्यलक्षणमुक्तप्रायमित्यभिप्रायेणाह—एवमिति । एवमुक्तप्रकारेण शिष्यं परीक्ष्य 'श्रीगुरुं सम्यगाराध्य भक्तिश्रद्धाधनादिभिः । संतोषयेदकापट्यादार्जवादिगुणैः स्वयम् ॥" इत्यत्र भक्तिश्रद्धाधनदानसेवनाकापट्यार्जवेति मुख्याः षड् गुणा उक्ताः । आदिना तन्त्रान्तरोक्ताश्च संगृहीताः । गुरुलक्षणोक्तमपि शान्त्यादिकं यथोचितमुक्तप्रायमवगन्तव्यम् । एतदभिप्रेत्यैव पद्धतिकृता—'गुरुभक्तियुतः शान्तः" इत्यादिशिष्यलक्षणमुक्तम् । विस्तरस्तु—"शमादिसाधनोपेतं गुणशीलसमन्वितम्" इत्यादिकुलार्णवाद्युक्तो द्रष्टव्यः । एवं शिष्यपरीक्षोत्तरं बालादीक्षां कृत्वा किञ्चित्कालं बालोपास्त्या शुद्धचित्तं परीक्ष्याऽथानन्तरं पञ्चदश्या दीक्षयेत् । चित्तशुद्धिस्त्वग्रे वक्ष्यते ॥९॥

ततस्तदाराधनेन संप्राप्ताखिलसाधनम् ।
दीक्षयेत् पूर्णया देवि दीक्षया परया हि तम् ॥ १० ॥
अत्रावान्तरदीक्षास्तु बहुधा सन्ति शङ्करि ।
संगृह्य त्रिविधा प्रोक्ता दीक्षा श्रीललिताविधौ ॥ ११ ॥

---

ततः पञ्चदशीदीक्षानन्तरं तदाराधनं सौभाग्यविद्याराधनम् । तेन संप्राप्तम् अखिलसाधनं पूर्णदीक्षोत्तरानुष्ठानापेक्षितमन्त्रतन्त्रसङ्केतरूपम् । येन तं पूर्णया दीक्षया दीक्षयेत् । कथं विद्यया परया चरमभूतया । ततः परं दीक्षान्तरं नास्तीति भावः, "पूर्णाभिषेकं संप्राप्य न गुर्वन्तरमाश्रयेत्" इति रहस्यार्णववचनात् ॥१०॥

अत्र बालादीक्षापूर्णदीक्षयोर्मध्येऽवान्तरदीक्षा मन्त्रिणीदण्डिन्योर्दीक्षे मन्त्रदीक्षा इत्यस्मिन् तन्त्रे उक्ताः । "समयाख्या विशेषाख्या साधका पुत्रकाह्वया" इत्यादिना कुलार्णवादिषूक्ताश्च । तत्र सर्वदीक्षासु सारभूताः संगृह्य श्रीविद्याविषये बालापञ्चदशीपूर्णाख्यदीक्षात्रयमुक्तम् ॥११॥

प्रकृते बालादिदीक्षां वक्तुमादौ मासतिथ्यादिकं तन्त्रान्तरेषु ज्यौतिषे च स्पष्टं प्रतिपादितमवश्यं विचारणीयमित्याशयेनाह -शुभमासादीत्यादिना । ऋक्षं नक्षत्रम् । एतद्विस्तरेणोक्तमुद्योततताराभक्तिसुधार्णवादिनिबन्धेषु । तदनुसारेण पद्धतिकृतापि संग्रहेणोक्तम् । यथा -"वैशाखे कार्तिके चान्त्ये माघे श्रावणके शुभा" । अन्त्ये फाल्गुने । शुभा उत्तमा । दीक्षेति शेषः । मार्गशीर्षे चाश्विने च चैत्रे मध्या प्रकीर्तिता । मध्या मध्यमा । आषाढज्येष्ठयोर्हीना पौषे भाद्रे मले नहि । हीना अधमा । नहि निषिद्धेत्यर्थः । मल इति अधिकक्षयमासौ । द्वितीया च तृतीया च पञ्चमी सप्तमी तथा । पक्षद्वये प्रशस्ताः स्युर्दशम्यादित्रयं सिते ॥ दशम्येकादशी द्वादशीति त्रयं सिते शुक्लपक्षे प्रशस्तमित्यर्थः । चतुर्दश्यष्टमी कृष्णे रविसोममहीसुते । सप्तम्यमाचतुर्दश्यः शुभाः पर्वशतैः समाः ॥ चतुर्दश्यष्टमी च कृष्णपक्षे शुभाः । रविसोममहीसुते आदित्यसोममङ्गलवारेषु त्रिषु सप्तमी-अमावास्याचतुर्दश्य इति क्रमेण तिस्रः शुभाः । पर्वशतसमाश्च भवन्तीत्यर्थः । त्रयोदशी पूर्णमासी चाष्टमी च चतुर्दशी । षष्ठी शुक्ले मध्यमाः स्युरन्या निन्द्या भवन्ति वै ॥ अन्याः शुक्ले प्रतिपच्चतुर्थीनवम्यः, कृष्णे प्रतिपच्चतुर्थीषष्ठीनवमीदशम्येकादशीद्वादशीत्रयोदश्यमावास्याः । बुधादित्रितयं श्रेष्ठं शुक्लसोमस्तथैव च । बुधबृहस्पतिशुक्रवाराः पक्षद्वये शुभाः ॥ तथैव शुक्लपक्षे सोमवारः । मध्यमो भानुवारः स्यादन्ये सर्वे च निन्दिताः । अन्ये शुक्ले मङ्गलशनी । कृष्णे सोममङ्गलशनयः । अश्विनी रोहिणी चार्द्रा पुष्यहस्तोत्तरात्रयम् । उत्तरात्रयम्, उत्तराफाल्गुनी उत्तराषाढा उत्तराभाद्रा च । स्वाती-श्रवणरेवत्यः श्रेष्ठा मृगपुनर्वसू । मघा चित्रा ह्यनूराधा मध्या ज्येष्ठा च मूलभम् । विशाखा

**शुभमासादिसंयुक्ते शुभे चन्द्रर्क्षसंयुते ।**
**संकल्प्य दीक्षाग्रहणं करिष्ये इति साधकः ।। १२ ।।**

---

च धनिष्ठा चाप्यभिजिच्छततारका । अधमान्या वर्जनीया दीक्षाकर्मविदा सदा ।। मूलभ मूलनक्षत्रम् । अन्यातारकाः भरणी कृतिका आश्लेषात्रिपूर्वाः । आयुष्मत्प्रीतिसौभाग्यसुकर्मशुभशोभनाः । वरीयान् हर्षणः सिद्धिधृतिवृद्धिध्रुवाः शिवः ।। ब्रह्म ऐन्द्रस्तथा सिद्धः योगास्त्येते शुभावहाः । विष्टि शकुन्यादिकं च त्यक्त्वा करणक शुभम् । विष्टिर्भद्रा । शकुन्यादिकं शकुनिचतुष्पदं नागं किंस्तुघ्नमिति । मेषकर्कतुलाकन्याकुम्भालिमकरेषु सत् । मेषादिमकरान्तराशिषु सूर्ये सतीत्यर्थः । केचित्तु मेषादिपद तत्तत्सङ्क्रान्तिपरत्वेन योजयन्ति । एवं तिथ्यादिकमुक्त्वा दिनान्तर्गतकालमाह—आमध्याह्नादुत्तमा स्यादासायाह्नात्तु मध्यमा । रजन्यां तु निषिद्धा स्याद् दुष्टयोगादिकं त्यजेत् ।। रजन्यां रात्रौ । दुष्टयोगादि यमघण्टकण्टकादि ज्योतिःशास्त्राज्ज्ञेयम् । लग्नमाह—त्रिषडेकादशे लग्नात्पापालग्ने चतुर्थके । सप्तपञ्चनवस्थाने दशमे च शुभग्रहाः ।। यस्मिल्लग्ने दीक्षा कर्तव्या तस्मात्तृतीयषष्ठैकादशान्यतमे पापग्रहोऽपेक्षितः । रविभौमशनिराहुकेतवः पापाः । दीक्षालग्ने तस्माच्चतुर्थसप्तमपञ्चमनवमदशमान्यतमे शुभग्रहोऽपेक्षितः । संशुद्धे चाष्टमे लग्ने चन्द्रताराबलान्विते । अभिमतलग्नादष्टमं शुद्धं शुभाशुभग्रहैर्वर्जितम् । चन्द्रताराबलमेवाह—त्रिषड्दशैकादशके लग्नचन्द्रः शुभावहः । स्वराशेस्तृतीयषष्ठदशमैकादशराशिषु चन्द्रः शुभः । नवपञ्चद्वितीयेषु सिते चन्द्रः प्रशस्यते । नवमपञ्चमद्वितीयेषु चन्द्रः शुक्लपक्षे शुभः, द्विचतुःषडष्टनवताराकाश्च शुभावहाः । स्वजन्मनक्षत्राद्दिननक्षत्रान्तं गणयित्वा नवभिर्भागे द्विचतुःषडष्टनवशेषे तारकाः शुभाः । अत्र नवशेष इति शून्यशेषो ज्ञेयः । वृद्धाख्यबालभावौ च गुरुशुक्रौ विनिन्दितौ । अस्तात्पूर्वम् उदयानन्तरं च दिनत्रयं बृद्धबालभावः क्रमेण गुरोः शुक्रस्य च । मेषवृश्चिकसिंहस्थे गुरौ दीक्षापि निन्दिता । मेषादिस्थेऽपि गुरावित्यन्वयः । क्षयवृद्धितिथौ वेदानध्यायोत्पातयुक्तिथौ । वेदानध्यायाः धर्मशास्त्रोक्ताः । उत्पातानाह—सन्ध्यागर्जितनिर्घोषभूकम्पोल्कोपरागके । ग्रहणात्पूर्वपरयोर्विघ्नाः शौचागमे नहि ।। क्षयतिथ्यादि आशौचागमान्तदीक्षा नहि निषिद्धेत्यर्थः । सन्ध्यागर्जनं च माघादिपञ्चमासेषु । निर्घोषो निरभ्रगगनाद्विद्युत्पातः । उपरागश्चन्द्रसूर्ययोर्ग्रहणम् । ननु "सूर्यग्रहणकाले तु नान्यदन्वेषणं भवेत् । सूर्यग्रहणकालेन समोऽन्यो नास्ति कश्चन ।।" इति, "चन्द्रग्रहसहस्रेण समः सूर्यग्रहो भवेत्" इत्यगस्त्यसंहिताशक्तियामलयोर्दीक्षायां प्रशस्तत्वं ग्रहणस्योक्तम्, तथा सौभाग्यरत्नाकरादिपद्धतिष्वपि दीक्षायां ग्रहणकालस्योपादानात्कथमत्र निषेधनमिति चेदुच्यते—"चन्द्रग्रहे तु या दीक्षा या दीक्षा वनचारिणाम् । जनकस्य तु या दीक्षा दारिद्र्यं सप्तजन्मसु ।।" इति योगिनीतन्त्रे चन्द्रग्रहणस्य सामान्यतो निषिद्धत्वात् । "राहुग्रस्ते विधौ दीक्षा त्रिपुराया नहीष्यते । यतः सा पूर्णचन्द्रस्था रुद्रो नैव प्रसीदति ।।" इति नित्यातन्त्रोक्तेः । 'न कुर्याच्छाक्तिकी दीक्षा-

गणेशं पूज्य पुण्याहं वाच्य नान्दीमुखान् यजेत् ।
अथालङ्कारवस्त्रादि　गृहीत्वाऽचार्यसंमुखः ॥ १३ ॥

---

मुपरक्ते विभावसौ' इति रुद्रयामलवचनाच्च सूर्यग्रहे शाक्तदीक्षाया निषेधात् । एवं च चन्द्रग्रहणस्य दीक्षामात्रे विशेषतः श्रीविद्यादीक्षायां च निषेधात्, सूर्यग्रहणस्य शाक्तदीक्षायां निषेधात् श्रीविद्यादीक्षायां ग्रहणकालनिषेध उक्तः । तन्त्रान्तरादिवचने ग्रहणकालविधानं शाक्तातिरिक्ते सूर्यग्रहणपरत्वेन योजनीयम् । ग्रहणात्पूर्वपरयोर्दिनयोः । विघ्नाशौचयोः देशोपप्लवादिना सपिण्डमरणादिना आगमे संभवे । एवं मासादिकमुक्त्वैतदपवादमाह—' पवित्रदमनारोपे युगादौ विषुवायने । पवित्रदमनारोपेति श्रावणचैत्रयोः पूर्णिमा । युगादयः वैशाखशुक्लतृतीया । कार्तिकशुक्लनवमी भाद्रकृष्णत्रयोदशी माघामावास्येति मेषतुलासंक्रमौ विषुवद्वयं कर्कमकरसंक्रमौ अयनद्वयं माघचैत्रसिते पञ्चनवतिथ्योश्च मार्गके । पौर्णिमाया वासुदेवाष्टम्यां च नवरात्रके । माघशुक्लपञ्चमी । चैत्रशुक्लनवमी । मार्गशिरपौर्णिमा । जन्माष्टमी । नवरात्रिराश्विनी । तिथ्यादि न विचार्यं स्याद् ग्रहणाधिकपर्वसु । पवित्रारोपणादिनवरात्र्यन्तेषु तिथ्यादिकं न विचार्यम् । अत्र तिथ्यादिरिति कालसामान्यग्रहणम् । उक्तदमनपर्वादिकालमुल्लिख्य—"नात्र कालकृतो दोषो मासाद्यं न विचारयेत्" इति "प्रोक्तपर्वणि सत्क्षेत्रे संतुष्टेऽपि—गुरौ तथा । न तिथिर्न च नक्षत्रं न मासास्तादिदूषणम् ॥" इति च बृहद्वामकेश्वरकालोत्तरादिवचनान्न तिथिमुहूर्ताऽनध्यायादिदोषः । प्रोक्तपर्वादिष्वपि मासादिदोषवर्जितस्य सम्भवे प्रशस्ततमत्वं ज्ञेयम् । एवं ग्रहणादधिकपर्वस्वपि वारुण्यर्धोदयादिषु । अक्षरत्रयसंपातादिषु चैवं प्रकीर्तितम् ॥ अक्षरत्रयसंपातो वर्षादिनोदयवर्णानामैक्यमिति केचित् । अन्ये तु अन्येषामप्यक्षराणामैक्यमक्षरत्रयसंपातमाहुः । आदिपदाच्चतुरक्षरादियोगाद्यान्तरपर्वणां ग्रहणम् । तच्च द्वाविंशोल्लासे वक्ष्यते । एवम्—"न वारतिथिनक्षत्रालोकनं स्यान्महेश्वरि । यदा तुष्टः श्रीगुरुर्वै तदा सर्वं शुभं स्मृतम् ॥" इति च । अत्रोक्ततिथ्यादिनिर्णयवचनविस्तर उद्योतताराभक्तिसुधार्णवादौ द्रष्टव्यः । एवं शुभदिनं विचार्य्य तस्मात् पूर्वदिने वक्ष्यमाणरीत्या दीक्षाग्रहण करिष्ये इति संकल्प्य ॥१२॥

ततो निर्विघ्नसमाप्त्यर्थं कलशे गोमयपिण्डे वा गणेशं संपूजयेत् । एतदुक्तं रहस्यार्णवे—'गणेशं पूजयेदादौ विशेषशुभकर्मसु । कलशे पूजयेच्छक्त्या गोशकृत्पिण्डकेऽथवा ।" इति । ततः पुण्याहं वाचयेत् । एतदुक्तं त्रिपुरार्णवे—''दीक्षादिनात्तु पूर्वेऽह्नि कृतनित्यक्रियः शुभः । कुलदेवं गुरून् ज्येष्ठान्नमस्कृत्य यथाविधि देशकालोल्लेखपूर्वं संकल्प्य तु यथाविधि । पूजयित्वा विघ्नहरं पुण्याहं वाचयेत्ततः ॥ श्राद्धमाभ्युदयं कुर्यात्तद्विधानं शृणु प्रिये । स्वशाखोक्तं तान्त्रिकं वा कुर्यात्तत्र वरानने ॥ प्रस्थतण्डुलकं न्यस्य पात्रे वै स्वस्तिकं लिखेत् । तत्रोक्तवत्तु कलशं विन्यसेत्प्रणवं जपन् ॥ हृन्मन्त्रेणापूर्य जलैः पञ्च-

**कर्तुं कारयितुं चैव दीक्षाकर्म महेश्वरि ।**
**आचार्यत्वेन त्वां वृणे इति पादसमीपतः ।। १४ ।।**
**निधाय प्रणमेद्देवि दण्डवच्चरणान्तिके ।**
**विधातारं सदस्यं च वृणुयात्तदनन्तरम् ।। १५ ।।**

---

रत्नानि निक्षिपेत् । पल्लवैर्मुखमाच्छाद्य पूर्णपात्रं निधाय च ।। तण्डुलेन समापूर्णं वरुणं तत्र पूजयेत् । आवाह्य विधिवत्पश्चादापोहिष्ठात्रयेण च ।। हिरण्यवर्णा इत्याद्यैश्चतुर्भिरनुवाकतः । पवमानेति वै जप्त्वा चामृतेश्यादिपञ्चकम् ।। अमृतं निर्विषं कृत्वा तत्तन्मुद्रां प्रदर्शयन् । आदाय किञ्चित्तत्तोयममृतेश्यै समर्पयेत् ।। नामतः प्रीयतां चोक्त्वा चतुरो ब्राह्मणान् यजेत् । पुण्याहमस्तु इति प्रार्थ्य नत्वा तोयेशमुत्सृजेत् ।। तत्तोयेनाखिलं प्रोक्ष्य गायत्रीमष्टधा जपेत् । ततस्तु विप्रत्रितयभोजनान्यूनसंमितम् ।। हिरण्यमुत्सृजेद् नान्दीमुखानां प्रीतये शिवे'' इति । स्वशाखोक्तं तान्त्रिकं वेति विकल्पितत्वादन्यतरप्रकारेण पुण्याहवाचनं नान्दीश्राद्धं च कर्तव्यम् । अङ्कुरार्पणं मातृकापूजनमत्रानुक्तमपि समर्थेनोद्योतताराभक्तिसुधार्णवाद्युक्तरीत्या कर्तव्यम् । एवमतिशक्तेन कुण्डमण्डपादिकमपि । न चाशक्तस्य तन्त्रान्तरोक्तां कुशार्पणाद्यकरणे प्रत्यवायः शङ्क्यः, अदोषात् । तदुक्तं त्रिपुरारहस्ये—' अनेकत्वात्तु तन्त्राणां कर्मानुष्ठानभेदनात् । तत्तत्कर्माननुष्ठानप्रत्यवायश्रुतेरपि ।। सर्वार्थस्योपसंक्षेपो भद्रबुद्धेः कथं भवेत् ।।'' इति श्रीभार्गव प्रश्नान्तरं दत्तात्रेय वचनम् । ''क्वचित्तन्त्रेषु विस्तारः ।।'' इत्यादिपञ्चमोल्लासान्ते उदाहृतम् । एवं ''स्वविरुद्धाधिकं कर्म कृतं श्रेयोवहं भवेत्'' इति च तत्रैवोक्तम् । स्वस्वतन्त्रानुक्तं यत्कर्म तस्याकरणे बहुषु तन्त्रेषु यदि दोष उक्तः क्वचित्तदपि वैकल्पिकत्वेनोक्तं तर्हि तत्कर्म तन्त्रान्तरोक्तमप्युपादेयमेव । अन्यच्च स्वतन्त्राविरुद्धं स्वतन्त्रोक्तादधिकं तु कर्म कृतं श्रेयोवहमित्यर्थः । अथाचार्यादिवरणमाह—अथालङ्कारेत्यादि । तत्राचार्यादिवरणं तान् संम्पूज्य कर्तव्यम् । तदुक्तं त्रिपुरार्णवे—''आचार्यादीनासनाद्यैः संपूज्य वृणुयात्ततः'' इति । संमुखः स्थित इति शेषः ।। १३ ।।

दीक्षाकर्म कर्तुं कारयितुम् । एतेन साङ्गस्य दीक्षाकर्मणो गुरुशिष्योभयकर्तृकत्वं सिद्धम् । अत्र वरणे गोत्राद्युच्चारोऽप्यावश्यकः । तदुक्तं योगिनीतन्त्रे—''प्रथमान्तं स्वीयनाम गोत्रप्रवरसंयुतम् । वेदशाखायुतं तद्वद् द्वितीयान्तं गुरुं वृणेत् ।।'' इति । अमुकप्रवरान्वितामुकगोत्रोत्पन्नममुकवेदान्तर्गतामुकशाखाध्यायी अमुकशर्म्माहम् अमुकप्रवरेत्यादिद्वितीयान्तं अमुकशर्माणं दीक्षाकर्मेत्यादि त्वां वृणे इति प्रयोगः । समीपतः निधायेत्यन्वयः ।। १४ ।।

अलङ्कारादिकं निधाय । गुरुचरणयोः । अन्तिके समीपे । प्रणमेत् । एवमेव विधातारं ब्रह्माणं सदस्यं च वृणुयात् । ब्राह्मणालाभे कूर्चे ब्रह्माणमावाहयेत्, ''अथवा

तत आचार्यवचनात् सामग्रीमानयेच्छिवे ।
अथाचार्यः पूर्ववत्तु द्वारपूजां समाचरेत् ॥ १६ ॥
अन्तःप्रविश्य वायव्यासुरद्वारेषु पूजयेत् ।
पुरुषं वास्तुसंज्ञं च क्षेत्रपालं तिरस्कृतिम् ॥ १७ ॥
आदिबीजाढ्य नामभ्यां मन्त्रेण च तिरस्कृतिम् ।
चतुर्हस्तमितां चापि चतुरस्रां सुवेदिकाम् ॥ १८ ॥
षोडशाङ्गुलमानोच्चां तदर्धां द्वादशोच्छ्रिताम् ।
त्रिमेखलामतिस्निग्धां यन्त्रं तदुपरि न्यसेत् ॥ १९ ॥
सिन्दूररजसा देवि दिक्षु दीपान् प्रकल्पयेत् ।
दीपनाथं प्रपूज्याथ मण्डलं वीक्षणादिभिः ॥ २० ॥

---

कूर्चके ध्यायेत्" इति त्रयोदेशे वक्ष्यमाणत्वात् । सदस्यवरणं तु कृताकृतम्, 'समर्थस्तु सदस्यं च वृणुयात् सर्वकर्मसु" इति नित्यातन्त्रोक्तेः । तदनन्तरम् आचार्यवरणानन्तरम् । अत्र दीक्षाकर्मणि ब्रह्मत्वेन सदस्यत्वेनेत्येवं कर्तुं कारयितुमिति नास्ति ॥ १५ ॥

ततः वरणानन्तरम् । आचार्योक्तां सामग्रीम् । सामग्री तु पद्धतौ स्पष्टमुक्ता । सा च दीक्षायामुपयुक्तवस्तूनि । अथ सामग्रीसंपादनानन्तरम् । पूर्ववत् षष्ठोल्लासोक्तवत् ॥१६॥

आसुर निर्ऋतिः । तथा च मण्डपान्तर्वायव्यनिर्ऋतिकोणयोर्द्वारे च क्रमेण वास्तुपुरुषं क्षेत्रपालं तिरस्करणी च पूजयेत् ॥ १७ ॥

पूजने मन्त्रानाह—आदीत्यादि । आदिबीजं वां क्षें इति । तद्युतनामभ्यां वां वास्तुपुरुषाय नम इत्यादि । तिरस्कृतिं तन्मन्त्रेण । अथ तत्र कर्तव्यां वेदिकामाह—चतुर्हस्तेति । चतुर्हस्तमितां चतुर्हस्तक्षेत्रफलयुताम् । तेन विस्तारदैर्घ्ययोर्हस्तद्वयमितत्वे चतुर्हस्तक्षेत्रफलसिद्धिः । चतुरस्रां चतुष्कोणाम् ॥ १८ ॥

चतुर्हस्तवेदीपक्षे षोडशाङ्गुलोच्चतामुक्त्वा पक्षान्तरमाह—तदर्धमिति । चतुर्हस्तार्धद्विहस्तक्षेत्रफलं पादोनयूकाचतुष्टयन्यूनचतुस्त्रिंशदङ्गुलदैर्घ्यायामे द्विहस्तक्षेत्रफलसिद्धिः । एतत्पक्षे द्वादशाङ्गुलोच्छ्रिताम् । विशेषानुक्तेः समत्रिमेखलाम् । अतिस्निग्धां वेदीं कृत्वा तदुपरि यन्त्रं मूलदेव्या बालायाः । न्यसेल्लिखेदिति भावः ॥ १९ ॥

तत्र यन्त्रं सिन्दूररजसा लिखेत् । रजसा इत्यनेन जलामिश्रितेन शुष्केण चूर्णरूपेणेत्यर्थः । वेद्या दिक्षु । उक्तदीपस्थाने दक्षभागे संस्थिते एकस्मिन् दीपे दीपनाथं पूज-

संस्कृत्य कदलीस्तम्भफलपुष्पवितानकैः ।
अलङ्कृत्य सुधूपैश्च धूपयेदखिलान्तरम् ॥ २१ ॥
अस्त्रेण सप्ताभिमन्त्र्य सिद्धार्थांश्च कुशानपि ।
विकीर्यास्त्रयुतैर्दर्भैरेकीकृत्येशकोणके ॥ २२ ॥
वेदिकापश्चिमदिशि परकूर्मं विभावयेत् ।
तत्रासनं प्रतिष्ठाप्य भूशुद्ध्यादिकमाचरेत् ॥ २३ ॥
तद्यन्त्रे पञ्चधान्यानि मण्डलं पूज्य निक्षिपेत् ।
मण्डलं पञ्चभिः पूज्य तत्र धान्यं क्रमान्न्यसेत् ॥ २४ ॥
व्रीहिर्यवोऽथ गोधूमो माषश्च तिल एव च ।
सप्तविंशतिदर्भैश्च कूर्चं तस्योपरि क्षिपेत् ॥ २५ ॥

---

येत् । तत्र पूजामन्त्रस्त्रयोदशे वक्ष्यमाणरीत्या दीं दीपनाथाय नम इति । वीक्षणादीत्यादिना प्रोक्षणादित्रयस्य नैवेद्योक्तस्य संग्रहः । तैः संस्कृत्येत्यन्वयः ॥ २० ॥

"वीक्षणं प्रोक्षणं देवि ताडनं प्रोक्षण पुनः । मूलास्त्रास्त्रैर्वर्मणा च वीक्षणादिचतुष्टयम् ॥" इत्यष्टमोल्लासोक्तैर्वीक्षणादिभिः संस्कृत्याखिलान्तर मण्डपान्तर्भाग धूपयेत् ॥२१॥

अस्त्रेण फट् इत्यनेन । सिद्धार्थाः श्वेतसर्षपाः । अस्त्रयुतैर्दर्भैः फट् इति मन्त्रितदर्भमुष्टिना विकीर्णसर्षपान् दर्भांश्च ईशकोणे एकीकृत्य ॥ २२ ॥

वेदिकायाः पश्चिमभागे देवताणत्रयोः स्थापनाय मध्ये षड्त्रिंशदङ्गुलभुवं त्यक्त्वेति पद्धतावुक्तम् । परकूर्मस्त्रयोदशे वक्ष्यते । तत्र परकूर्मं ॥ २३ ॥

"संकल्पयेदथाचार्यः कलशादीस्तु स्थापयेत्" इति वक्ष्यमाणत्वात् संकल्पपूर्वक कलशस्थापनादि कुर्यात् । तद्यन्त्रे वेद्यां निर्मिते । बालाचक्रमण्डलाय नम इति सपूज्य तदुपरि वक्ष्यमाणपञ्चधान्यं निक्षिपेत् । पूजाप्रकारमाह—मण्डलं पञ्चभिरिति । उपचारैरिति शेषः ॥ २४ ॥

धान्यान्याह—व्रीहिरित्यादि । धान्यप्रमाणमुक्त त्रिपुरार्णवे—"उक्तानि पञ्चधान्यानि पृथक्प्रस्थमितानि वै" इति । कूर्चलक्षणमुक्त तन्त्रराजे—"सप्तविंशतिदर्भाणां वेण्या ग्रन्थिविभूषिताम् । वेष्टयेत्सर्वयज्ञेषु तत् कूर्चं परिकीर्तितम् ॥" इति । तस्योपरि पञ्चधान्यपुञ्जोपरि क्षिपेत् । प्रागग्रं चतुस्तारैर्न्यसेत् ॥ २५ ॥

प्रागग्रं च चतुस्तारैस्तत्र पीठं यजेच्छिवे।
त्रितन्तुवेष्टितं चास्त्रक्षालितं धूपितं तथा॥ २६॥
अलङ्कृतं जपन्मूलं स्थाप्य दर्भैः परिस्तरेत्।
पञ्चरत्नं क्षिपेद् बीजैर्वर्णक्वाथेन पूरयेत्॥ २७॥
समस्तैर्मन्त्रजैर्वापि पञ्चत्वग्भिश्च शङ्करे।
वर्णौषधान् प्रवक्ष्यामि शृणु संयतमानसा॥ २८॥
चन्दने श्वेतरक्ते चागुरुरिन्दुरुशीरकम्।
रुगब्घुसृणकक्कोलजातीमांसीमुरा तथा॥ २९॥
कचोरं पिप्पलीमूलं रोचनापत्रकं तथा।
अश्वत्थविल्वौ च ततः पृश्निपर्णी च चित्रकम्॥ ३०॥

---

तत्र धान्यपुञ्जे मण्डूकाद्युक्तपीठं यजेत्। त्रितन्तुवेष्टितमस्त्रेण क्षालितम्, कलशमित्यध्याहार्यम्। कलशप्रमाणमुक्तं त्रिपुरार्णवे—"कलशो द्रोणजलयुक्तदर्धः पाद एवं वा" इति। अत्र द्रोणप्रमाणमुक्तं रहस्यार्णवे—'गुञ्जाभिरष्टभिर्माषः कर्षस्तु दशमाषकः। पलं कुडवकं प्रथमाढक द्रोण एव च॥ चतुर्गुणोत्तरा ज्ञेयाः पलाद् द्रोणावधि क्रमात्" इति। तथा कलशभेदो ज्ञानार्णवे—"चतुरस्रं च सलिख्य सुवर्णकलशान्नवान्। रौप्यताम्रादिरचितान् मृत्तिकारचितांस्तु वा॥" इति॥ २६॥

गन्धपुष्पैरलङ्कृतम्। कूर्चोपरि सस्थाप्य। दर्भैर्वेदिकां होमे वक्ष्यमाणरीत्या परिस्तरेत्। बीजैः पञ्चरत्नबीजैः। कलशे पञ्चरत्नानि क्षिपेत्। वर्णौषधिक्वाथेन कलशं पूरयेत्॥ २७॥

समस्तैः एकपञ्चाशद्वर्णौषधैः। मन्त्रजैः मन्त्रे बालायां यावन्तो वर्णास्तावदौषधैर्वा कृतेन क्वाथेन। पञ्चत्वग्भिः वक्ष्यमाणाभिः कृतक्वाथैश्च॥ २८॥

१ वर्णौषधान्याह—चन्दने इत्यादि। २ श्वेतचन्दनम्, रक्तचन्दनम् ३ अगुरुः ४ इन्दुः कर्पूरः, ५ उशीरं ६ रुक् कुष्टम्। ७ अप्। सुगन्धबालेतिभाषा ८ घुसृणं केसरम् ९ कक्कोल १० जाती ११ माँसी जटामांसी १२ मुरा (मुरहर) इतिभाषा॥ २९॥

१३ कचोरं। १४ पिप्पलीमूलम्। १५ रोचना गोरोचनम्। १६ पत्रकंतेजपात इति भाषा। १७ अश्वत्थ। १८ विल्व। १९ पृश्निपर्णी पिठवन् इति भाषा। २० चित्रकम्॥ ॥ ३०॥

लवङ्गं कट्फलं तोयकुम्भ्यौदुम्बरपर्णिका।
कम्भारी चास्थिजा चाब्जपुष्पी बर्हिशिखा तथा ॥ ३१ ॥
प्लक्षाग्निमन्थौ सिंही च कुशः काशस्तथैव च।
श्यामाब्जपुष्पी रोहिणः स्योनाको बृहती तथा ॥ ३२ ॥
पाटली चाखुकर्णी च तुलसी चापमार्गिका।
इन्द्रवारुणिका भृङ्गो विष्णुक्रान्ता मुसल्यपि ॥ ३३ ॥
लज्जालुदूर्वेऽथ सहदेवी लक्ष्मीकुमारिका।
मुस्ता चेत्येकपञ्चाशदौषधा वर्णसंभवाः ॥ ३४ ॥

---

लवङ्गम् २१। कट्फलम् कायफलम् इति भाषा २२। तोयकुम्भी जलकुम्भीति भाषा २३। औदुम्बरपर्णी द्रुणद्रियेति पर्यायः २४। कम्भारी (कम्भार इति भाषा) २५। अस्थिजा हरसिंहार इति भाषा २६। अब्जपुष्पी सफेद कौड़ेना इति २७। बर्हिशिखा मयूरशिखा २८।

प्लक्षः २९। अग्निमन्थः, अगेथू इति भाषा ३०। सिंही भटकटैया इति भाषा ३१। कुशः ३२। काशः ३३। श्यामाब्जपुष्पी काला कौडेना इति भाषा ३४। रोहिण इति भाषा ३५। स्योनाकः सोना पाढेति भाषा ३६। बृहती बनभण्टेति भाषा ३७।

पाटली पाडल इति भाषा ३८। आखुकर्णी मूसाकानी इति भाषा ३९। तुलसी ४०। अपामार्गिका चिचिड़ा इति भाषा ४१। इन्द्रवारुणिका इवारुन इति भाषा ४२। भृङ्गा भृङ्गराजः ४३। विष्णुक्रान्ता कौवा ठोठेति भाषा ४४। मुसलीति भाषैव ४५।

लज्जालुः ४६। दूर्वा ४७। सहदेवी ४८। लक्ष्मी शर्मा। ४९। कुमारी ५०। मुस्ता ५१। इति एकपञ्चाशद्वर्णानामेकपञ्चाशदौषधानि। एवमेकपञ्चाशदौषधैः क्वाथः कार्यः। अथवा मन्त्रजैर्वर्णैरिति मुख्यमन्त्रान्तर्गता यावन्तो वर्णाः तावतामेवौषधिभिः क्वाथः कार्य इति पक्षद्वयमुक्तम्। तत्र द्वितीयपक्षे विशेषमाह—विद्यास्थेति। विद्यायां यो वर्णो यावद्वारं स्थितस्तद्वर्णौषधं तावद्गुणितं देयमित्यर्थः। यथा बालाविद्याया ऐं अं क ल ई अं स औ अः इति नववर्णाः। मुरा १२। रोचना १५। अश्वत्थ १७। प्लक्ष २९। इन्दु ४। रोचना १५। सहदेवी ४८। पिप्पलीमूलम् १४। पत्रकम् १६। इति तेषामौषधानि। तत्रानुस्वारस्य द्विवारं विद्यायां स्थितत्वात्तदौषधं रोचनाख्यं द्विगुणं देयम् इति। अत्र विशेष उक्तो रहस्यार्णवे—"वर्णौषधेषु वृक्षाणां त्वचा क्षुद्रवनस्पतेः। यत्किञ्चिदङ्गं संग्राह्यं माषान्यूनप्रमाणतः॥ अभावे चन्दनं देयं क्वाथ एभिस्तु संस्मृतः"

विद्यास्थवर्णगुणितैरथवा क्वाथमाहरेत् ।
आम्रो वटोऽश्वत्थकश्च पनसो हेमदुग्धकः ॥ ३५ ॥
एतेषां पल्लवैः कुम्भमुखमाच्छादयेच्छिवे ।
त्वचश्च क्वाथे संयोज्यास्तीर्थतोयैश्च पूरयेत् ॥ ३६ ॥
जपन् विलोमवर्णांश्च मूलविद्यां ततः शिवे ।
पञ्चपल्लवदूर्वाभिर्मुखमाच्छादयेत् ततः ॥ ३७ ॥
समानजातिचषकं तण्डुलापूरितं शिवे ।
फलयुक्तं मुखे न्यस्य वस्त्रयुग्मेन वेष्टयेत् ॥ ३८ ॥
पीठैक्यं कलशे ध्यात्वा वेदिकोत्तरभागतः ।
न्यसेत् प्रागग्रदर्भेषु प्रत्येकं पञ्चगव्यकम् ॥ ३९ ॥
पञ्चामृज्ज्ञानपत्रं च भस्मरक्षा तथैव च ।
तत्तत्संस्कारजालेन संस्कृतं कलशोपरि ॥ ४० ॥

---

इति । प्रत्येकं भाषान्यूनं ग्राह्यम् । यस्यालाभस्तस्थाने चन्दनं देयमिति । मन्त्रजैर्वापीति पक्षे अयं क्रम इति सूचनायाथवेति । पञ्चपल्लवानाह—आम्रेत्यादि । हेमदुग्ध उदुम्बरः ॥३५॥

एतेषामाम्रादीनां क्वाथे त्वग्भिरित्युक्तम्, तास्त्वच आह—त्वचश्चेति । आम्रादीनां त्वच इत्यर्थः ॥ ३६ ॥

पूरणे मन्त्रमाह—विलोमेति । क्षाद्यकारान्तानित्यर्थः । सम्प्रदायात् सानुस्वारान् । ततः पूरणानन्तरम् । ततः मुखाच्छादनानन्तरम् ॥३७॥

कलशसमानजातिचषकम् । वस्त्रयुग्मेन कलशं वेष्टयेत् ॥३८॥

एवं स्थापितकलशे पूजितपीठैक्यं ध्यात्वा ॥३९॥

ज्ञानपत्रं संवित् । रक्षां त्रिगुणं रक्षासूत्रम् । त्रयोदशे वक्ष्यमाणतत्तत्संस्कारजालेन संस्कृतं पञ्चगव्यादिकं प्रत्येकं न्यसेदिति संबन्धः । कलशोपरि प्रतिमां विन्यस्येत्यन्वयः ॥४०॥

संस्कृतमिति लिङ्गविपरिणमितं प्रतिमायामन्वेति । अत एवाग्न्युत्तारणसंस्कारः पद्धतावुक्तः । कर्षो दशमाषः । अत्र प्रतिमायां विशेषो बृहद्वामकेश्वरे—"प्रतिमा मूलदेव्या

सौवर्णीं प्रतिमां बिन्दुत्रिकोणां कर्षसंमिताम् ।
अभिषिच्य तु क्षीरेण मूलमन्त्रेण मन्त्रिताम् ॥ ४१ ॥

विन्यस्य पश्चाद्भागे तु बालाचक्रं क्रमाद्यजेत् ।
कुम्भे देवीं समावाह्य पूजयेदुपचारकैः ॥ ४२ ॥

स्पृशन् कुम्भं जपेदङ्गमन्त्रान् सर्वानपि क्रमात् ।
कुम्भे चक्रे चैकरूपां देवीं ध्यात्वा महेश्वरि ॥ ४३ ॥

महोपचारैः संपूज्य तत आवृत्तिमर्चयेत् ।
विशेषार्घ्यात् त्रिधा देवीं तर्पयेत् परमेश्वरि ॥ ४४ ॥

अङ्गदेवीः सकृत्तर्प्य समष्टया तर्पयेत् पुनः ।
अष्टोत्तरशतावृत्त्या होमान्तं तत आचरेत् ॥ ४५ ॥

वेदिकायाश्च परितो बलिपूजां समाचरेत् ।
आरत्यन्तं च संपूज्य दीक्षाहोमं समाचरेत् ॥ ४६ ॥

---

वा त्रिकोणबिन्दुलाञ्छिता ॥ सौवर्णी सर्वशोभाढ्या पलमानेन निर्मिता । तदर्धेन च पादेन कर्षार्धेनापि पादतः ॥ रहितो वित्तशाठ्येन भाषान्यूनां प्रकल्पयेत् ॥" इति । प्रतिमामभिषिच्य ॥४१॥

वेद्याः पश्चाद्भागे पश्चिमभागे । संकल्पादिपात्रासादनक्रमादुपचारान्तं यजेत्, तत आवृत्तिमर्चयेदित्यावरणपूजाया अनन्तरं कथनात् । ततः कुम्भे देवीमावाह्य उपचारकैः षोडशोपचारैः, "उपचारैः षोडशभिः" इति वक्ष्यमाणत्वात् ॥४२॥

अङ्गमन्त्रान् गुरुत्रयादिपूजोपयुक्तान् ॥४३॥

ततः महोपचारानन्तरम् । कलशे देवीं विशेषार्घ्यात् त्रिधा संतर्प्येत्यन्वयः ॥४४॥

दर्वीगृहीततीर्थेनाङ्गदेवीः सकृत् । अत्र वक्ष्यमाणपूर्णदीक्षावत्कलशेऽङ्गात्मकदेवतान्तरपूजाया अनुक्तेरङ्गदेवीपदेन षडङ्गदेवता अङ्गावरणवत् संतर्प्याः । अङ्गादिसमष्टिरूपामेकरूपेण ध्यात्वा विशेषार्घ्यादष्टोत्तरशतं संतर्प्य ततो होमान्तपूजामाचरेत् ॥४५॥

वेदिकायाः परितः । चकाराद् देवनायाश्चेत्युभयोः परितः । ईशान्यादिषु ॥४६॥

अत्र "प्राग्वत् संकल्प्यहोमं तु कृत्वा" इति त्रिपुरार्णववचनानुरोधेन वक्ष्यमाणहोमं देव्यै समर्पयेदिति समर्पणानुरोधेन च दीक्षाङ्गहोमं करिष्य इति संकल्प्य तदादौ

अग्निं संसाध्य तत्राग्नौ पायसं तु चरुं पचेत् ।
कुशेषूत्तार्योत्तरतः प्राणानायम्य वै न्यसेत् ॥ ४७ ॥
तत्र चक्रे पीठशक्तीः पूज्य देवीं विभावयेत् ।
आवाह्य पूज्य संतर्प्य विशेषार्घ्यात् त्रिधा शिवे ॥ ४८ ॥
पञ्चविंशतिधा देव्यै स्रुवेण जुहुयाद् घृतम् ।
वह्निदेवतयोस्तेन वक्त्रैक्यं तु विभावयेत् ॥ ४९ ॥
पुनरेकादशावृत्त्या नाडीसंधानमीश्वरि ।
गुरुत्रयं षडङ्गानि संपूर्णामावृतिं तथा ॥ ५० ॥
आवृतित्रितयं वापि जुहुयात् पूर्ववच्छिवे ।
स्रुचा चतूरवत्तेन चरुणा जुहुयात्ततः ॥ ५१ ॥
मूलदेव्यै चाष्टकृत्वस्ततो दूर्वादिपञ्चकम् ।
दूर्वां न्यग्रोधपत्रं च गुडुच्यौदुम्बरं तथा ॥ ५२ ॥

---

अग्निसिद्धिं करिष्ये इति संकल्प्य त्रयोदशे वक्ष्यमाणरीत्याग्निं संसाधयेत् । चरुमुत्तार्य । ऋष्यादिकं न्यसेत् ॥ ४७ ॥

तत्र वह्नौ । बालाचक्रं ध्यात्वा तस्मिन् देवीं देवतामूर्तिं षोडशाद्युपचारैः संपूज्य दर्व्या हृतविशेषार्घ्यतीर्थैर्मूलदेवीं संतर्प्य ॥ ४८ ॥

तेन पञ्चविंशत्याहुत्या ॥ ४९ ॥

एकादशावृत्त्या हुत्वा । नाडीसंधानं भावयेत् । भक्षितान्नरसो नाडीषु प्रविश्य देहं पुष्णाति । तथा च वक्त्रैक्येऽपि नाडीभेदे तृप्तिर्न भवेदिति नाडीसन्धानम् ॥ ५० ॥

अशक्तादेरावृत्तित्रयम् । पूर्ववत् । आवरणोक्तनामभिः स्वाहान्तैः । चतूरवत्तेन उपस्तरणवद् द्विरवदानसकृदभिधारणेति प्रसिद्धक्रमेण। मूलदेव्यै जुहुयादित्यन्वयः ॥५१॥

अष्टकृत्वः अष्टवारम् ॥५२॥

गुडूच्युदुम्बरसोमलतानां समिधः । अत्र विशेषो बृहद्वामकेश्वरे—"दूर्वानामङ्कुरं साग्रं गुडूच्यादित्रयं तथा । प्रदेशमात्रान्यूनं वै सत्वचं वटपत्रकम् ॥ सवृन्तमच्छिद्र-युतमन्यूनाङ्गुलपञ्चकम् ॥" इति । मूलेन स्वाहान्तेन । तावत्संख्यम् अष्टोतरशत-

सोमवल्लीं च देवेशि शतमष्टोत्तरं हुनेत् ।
मूलेनाष्टाविंशति वा तावत्संख्यं घृतं हुनेत् ॥ ५३ ॥
ततः सुवासिनीं पूज्य तरुणोल्लाससंयुतः ।
शिष्यमाहूय मूलाष्टमन्त्रिता पञ्चमृत्तिका ॥ ५४ ॥
तया स्नाप्य तथामन्त्र्य भस्मोद्धूलनधारणम् ।
रक्तकौशेयखण्डेन नेत्रबन्धं विधाय च ॥ ५५ ॥
पूर्ववन्मन्त्रितं पञ्चगव्यं त्रिः प्राशयेच्छिवे ।
सद्योजातादिमन्त्रेण दृष्टिबन्धं विसर्जयेत् ॥ ५६ ॥
त्र्यम्बकेत्येकमन्त्रेण भस्मघर्षणपूर्वकम् ।
रक्षां त्रिधा तु संस्कृत्य रक्तपुष्पेण संयुताम् ॥ ५७ ॥
त्रिर्वेष्ट्य दक्षिणे पुंसां मणिबन्धे तु बन्धयेत् ।
मूलेन वाराह्या वापि दृष्टिं बध्वा च संविदम् ॥ ५८ ॥

---

संख्यमष्टाविंशतिसंख्यं वा। दूर्वादिकं प्रत्येकमष्टोत्तरशतं घृताक्तं हुनेत्। तदुक्तं त्रिपुरार्णवे—"दूर्वादिकं तु जुहुयाद् घृताक्तं मूलविद्यया" इति ॥५३॥

ततः होमानन्तरम्। तरुणोल्लासस्त्रयोदशे वक्ष्यते। मन्त्रिता कर्तव्येति शेषः ॥५४॥

तया मन्त्रितया मृत्तिकया। विलिप्ताङ्गं शिष्यं संस्नाप्य। तथा मूलाष्टकेनाभिमन्त्र्य भस्मोद्धूलनपूर्वकं त्रिपुण्ड्रधारणं कारयित्वा। शिष्यस्य नेत्रबन्धम्। कौशेयम् पट्टवस्त्रम् ॥५५॥

पूर्ववत् मूलाष्टकेन। सद्योजातादिपञ्चमन्त्रेण त्रिः प्राशयेत् ॥५६॥

रक्षासूत्रे भस्मघर्षणरूपसंस्कारं त्रिः कृत्वा। संयुतां रक्षां बन्धयेदित्यन्वयः ॥५७॥

पुंसां दक्षिणे इत्यनेन स्त्रीणां वामे इति सिद्धम्। यत्र दीक्षायां वाराहीमन्त्रोपदेशोऽस्ति, तत्र वाराहीमन्त्रेणान्यत्र मूलेनेत्युद्योत उक्तम्, संविदं प्राश्येत्यन्वयः ॥५८॥

प्राश्य मूलेन विसृज्य स्वयमग्नेस्तु पश्चिमे ।
उदङ्मुखं प्राङ्मुखं तु शिष्यं तन्नेत्रयोर्गुरुः ॥ ५९ ॥
अग्नेः संस्कारपर्यन्तसंपातं प्रोक्षणीगतम् ।
तदाज्यमञ्जयेन्मूलमुच्चरन् व्याहृतीर्हुनेत ॥ ६० ॥
स्रुचि चतुर्गृहीत्वा तु समर्पणमनुं पठेत् ।
जुहुयाच्चरुणा स्विष्टकृतं पूर्णाहुतिं त्रिधा ॥ ६१ ॥
फलपुष्पघृतापूर्णां समाच्छाद्य स्रुवेण वै ।
नाभिसंस्पृष्टस्रुङ्मूलो नेत्रान्तमनुना शिवे ॥ ६२ ॥
देवतां तु पुनः पूज्योद्वास्याग्निमपि वै शिवे ।
समापयेद् होमविधिं ततः सामयिकान् यजेत् ॥ ६३ ॥
ततो विशेषतीर्थेन स्वदक्षस्थस्य शङ्करि ।
उदङ्मुखस्य शिष्यस्य पाशच्छेदं समाचरेत् ॥ ६४ ॥

---

दृष्टिबन्धं विसृज्य । स्वयम् आचार्यः । उदङ्मुख उपविश्य प्राङ्मुखं शिष्यमुपवेश्य । तन्नेत्रयोः शिष्यनेत्रयोरञ्जयेदित्यन्वयः ॥५९॥

संपातं संपाताज्यम् । मूलमुच्चरन् तेनाज्येनाञ्जयेत् । व्याहृतीः भूः स्वाहेत्यादिचतुष्टयम् ॥६०॥

स्रुचि स्रुवेण चतुर्वारमाज्यं गृहीत्वा । समर्पणमनुः इतः पूर्वमित्यादि स्वाहान्त पठेत् । पठित्वा जुहुयात् । तदुक्तं योगिनीतन्त्रे—"स्वाहान्तमन्त्रभागेन समर्पणमनोर्हुनेत्" इति । मन्त्रलिङ्गाद् गुरुदेवतायै त्यजेत् । एवं चरुणा सकृदवदानद्विरभिघारणेति चतुरवत्तेन, "सकृदत्रावदानं स्यादभिघारो द्विधा स्मृतः" इति त्रिपुरार्णवोक्तरीत्या स्विष्टकृतं हुत्वा पूर्णाहुतिं त्रिधा च जुहुयात् ॥६१॥

पूर्णाहुतिविधिमाह—फलेत्यादि । आपूर्णां स्रुचम् । नेत्रान्तमनुः वौषडन्तमन्त्रः ॥६२॥

अग्नावावाहितदेवताम् । अग्निमपि पुनः संपूज्योद्वास्य । वक्ष्यमाणरीत्या समापयेत् । ततः होमानन्तरम् ॥६३॥

ततः सामयिकपूजानन्तरम् । विशेषार्घ्यतीर्थेन स्वदक्षभागे संस्थितस्य उपविष्टस्य ॥६४॥

आत्मपाशं छेदयामि स्वाहादौ बीजयोगतः।
विद्यापाशं कर्मपाशं प्राश्य तीर्थेन छेदयेत्॥ ६५॥
देवतोद्वासरहितां पूजां देवि समापयेत्।
भुक्त्वा सामयिकैः सार्द्धं हविःशेषेण भोजयेत्॥ ६६॥
शिष्यं कृताचमनं तु तस्य हस्ते समर्पयेत्।
क्षीरवृक्षोद्भवं दन्तकाष्ठं हृदभिमन्त्रितम्॥ ६७॥
ततस्तेन विशोध्यान्ते दन्तगण्डूषणं चरेत्।
प्रक्षाल्य तत्परित्यज्य कृताचमनसाधकः॥ ६८॥
शिखां तु शिखया बध्वा गुरुणा सह तत्र वै।
देवतोत्तरदिग्भागे कुशेषु शयनं चरेत्॥ ६९॥
ततः परेद्युरुत्थाय कृतनित्यक्रियौ तु तौ।
मण्डपान्तः प्रविश्याथ शिष्यः प्राङ्मुख आस्थितः॥७०॥
उदङ्मुखस्तथाचार्यस्तद्देहे न्यासमाचरेत्।
अष्टत्रिंशत्कलाख्यानं ततश्चक्रं समर्चयेत्॥ ७१॥

---

आत्मपाशमित्येवमादौ मूलबीजस्यैकैकस्य क्रमेण योगः। उभयत्र छेदयामि स्वाहेत्यन्ते योजनीयम्। एवं मन्त्रैर्तीर्थं प्राश्य प्राशितेन तीर्थेन पाशत्रयं छेदयेत्। भावनया अत्र पाशछेदादौ तर्पणाद्यभावः। तदुक्तं त्रिपुराणंवे—"तर्पणं पूजनं शेषग्रहणं न च विद्यते। न किञ्चिद् भक्षयेदत्र नश्येत्तस्याधिवासनम्॥" इति॥६५॥

ततः पूजां समापयेत्। भोजयेत् शिष्यमत्यन्वयः। हविःशेषश्चरुशेषः॥६६॥

तस्य शिष्यस्य। हृत् नमः॥६७॥

तेन दन्तकाष्ठेन। अन्ते अनन्तरम्। गण्डूषणम्। तद् दन्तकाष्ठं प्रक्षाल्य। कृताचमनो यः साधकः शिष्यः॥६८॥

शिखया वषट् इति, तत्र मण्डपे॥६९॥

तौ गुरुशिष्यौ॥७०॥

तथा आस्थितः। तद्देहे शिष्यदेहे। पञ्चदशोल्लासे वक्ष्यमाणमष्टत्रिंशत्कलान्यासं स्वयमाचरेत्। चक्रं समर्चयेदिति कलशस्थदेवतापूजनस्याप्युपलक्षणम्। तदुक्तं त्रिपुरार्णवे—"समर्च्य चक्रराजं तु कलशस्थां च देवताम्" इति। समर्चने चावाहनरहितमेव कुर्यात्॥७१॥

सुवासिनीं च संपूज्य देवतां विद्ययाऽर्चयेत् ।
उक्तक्रमेणाभिषिच्य मन्त्रानुपदिशेत् ततः ॥ ७२ ॥
महागणपतिं पश्चाद् गुरूणां त्रितयं तथा ।
दृष्टिबन्धं विधायाथ बालां तूपदिशेत् ततः ॥ ७३ ॥
गायत्रीं मातृकांशेऽपि अमृतेश्यौ च जीवनीम् ।
मुद्रां स्वयं चोपदिशेत्ततः शिष्यो गुरुं नमेत् ॥ ७४ ॥
ज्येष्ठांश्च नत्वा वित्ताद्यैः शक्त्याचार्यं प्रपूजयेत् ।
ततश्चोपासनाधर्मान् सम्यक् तस्मै निरूपयेत् ॥ ७५ ॥
देवतायां सदा भक्त्या वर्तितव्यं प्रयत्नतः ।
देवतावद् गुरौ शास्त्रे श्रद्धा योषित्सु नाप्रियम् ॥ ७६ ॥
आचारगोपनं तृष्णाहीनताऽनुष्ठितिर्विधेः ।
देवतार्थं च सर्वस्वमेतद्धर्माष्टकं भवेत् ॥ ७७ ॥
उपासकानां धर्मा ये बहुधा कथिता मया ।
नानाविधेषु तन्त्रेषु संगृहीता मयाऽनघे ॥ ७८ ॥
अष्टाभिर्धर्मसारैस्तु तस्मात् सर्वेऽत्र संस्थिताः ।
एतद्धर्माष्टकं देवि सेवमानस्तु साधकः ॥ ७९ ॥

---

विद्यया मूलमन्त्रेण । अर्चयेत् पुष्पाञ्जलिना । उक्तक्रमेणेति सन्निहितत्वात् पीठे प्राङ्मुखमावेश्येत्यादि वक्ष्यमाणक्रमेणेत्यर्थः ॥७२॥

मन्त्रानाह—महागणपतिमित्यादि ।७३॥

गायत्री मूलगायत्रीम् । शेषिका लघुश्यामला । जीवनीं संजीवनीं नोपदिशेत् । तत्तद्बीजपूर्वकं मुद्राषट्कविरचनञ्च समुद्दिश्य धर्मान्निरूपयेदिति ॥७४॥

तस्मै शिष्याय ॥७५॥

तानेवाह—देवतायामित्यादि । प्रयत्नतः अप्रमादात् । इदं च सर्वत्रान्वेति । गुरौ वर्तितव्यम् । श्रद्धा कर्तव्येत्यादि ॥७६॥

अनुष्ठितिरनुष्ठानम् । सर्वस्वमिति भावनम् ॥७७॥

तन्त्रेषु कथिता ये, तेऽष्टभिर्निरुक्तैर्धर्मसारैः संगृहीता इत्यन्वयः ॥७८॥

यत एते धर्मसाराः, अतः सर्वे धर्माः, अत्र सारधर्मेषु संस्थिताः ॥७९॥

अशेषधर्मसंसिद्धिं प्राप्नुयान्नात्र संशयः ।
ब्रह्मादीन् पूजयेत् सर्वान् सामयिकांस्तु शक्तितः ॥ ८० ॥

अवशिष्टं समाप्याथ देवतायै समर्पयेत् ।
एतत्ते कथितः सर्वो बालादीक्षाविधिः शिवे ॥ ८१ ॥

एवं दीक्षां समासाद्य पूर्वोक्तविधिना शिवे ।
बालोपासनयोगेन शुद्धचित्तं तु साधकम् ॥ ८२ ॥

दीक्षयेत्पञ्चदश्याथ यदि तेनैव पूर्णता ।
सैव तर्हि सदोपास्या भवेत्तेनापि वाञ्छितम् ॥ ८३ ॥

अथ तत्रापूर्णता च नैव शुद्धं मनो यदा ।
श्रद्धावानपि देवेशि तदा दीक्षान्तरं चरेत् ॥ ८४ ॥

मन्त्रिण्याश्चाथवा दण्डनाथाया वा महेश्वरि ।
पूर्वोक्तेन विधानेन सर्वत्रायं विधिर्भवेत् ॥ ८५ ॥

श्रीदेवी उवाच—

चित्तशुद्धिः कथं ज्ञेया काऽशुद्धिः शुद्धिरप्युत ।
एतत्कथय मे देव संशयो मे महानयम् ॥ ८६ ॥

---

यत एते धर्मसाराः सर्वधर्मसंग्रहरूपाश्च अत एतेषां सेवने अशेषधर्मसिद्धिर्युक्तैव। ततः पूजयेत् ॥८०॥

अवशिष्टं सामयिकपूजाशिष्यतत्त्वशोधनम् । पूजाशेषकर्म । दीक्षाकर्म समर्पयेत् । उपसंहरति—एतदिति ॥८१॥

पूर्वोक्तविधिना प्रातःस्मृत्यादिपूजान्तरूपेण शुद्धचित्तं परीक्ष्येति शेषः ॥८२॥

तेनैव बालोपासनेनैव । पूर्णता उपासनान्तरेच्छारहितता ॥८३॥

तत्र बालोपासने । नैव शुद्धं मनः, तदा पञ्चदश्यादिदीक्षायोग्यताभावाद्दीक्षान्तरं कुर्यात् । श्रद्धावानपीति पूर्वत्र बालोपासनेऽश्रद्धो दीक्षान्तरे नाधिकार्येवेति सूचितम् ॥८४॥

दण्डनाथा वाराही । पूर्वोक्तेन बालादीक्षोक्तेन । सर्वमन्त्रेष्वप्ययमेव दीक्षाविधिरित्याह—सर्वत्रेति ॥८५॥

चित्तशुद्धिं प्रष्टुं देव्युवाचेति । का अशुद्धिः ॥८६॥

श्रीभैरव उचाव—

शृणु देवि प्रवक्ष्यामि सर्वशास्त्रेषु गोपितम् ।
रहस्यातिरहस्यं वै गोपनीयं विशेषतः ॥ ८७ ॥

शिवश्चिदानन्दघनः परमाक्षरविग्रहः ।
स्वाच्छन्द्यशक्तिः स्वातन्त्र्यात् सृष्टिस्थितिलयानपि ॥ ८८ ॥

तिरोधानानुग्रहौ च भावयामास वै सदा ।
लीलाकैवल्ययोगेन त्वाभासवपुषाऽखिलम् ॥ ८९ ॥

आभासयदमेयात्मा महायोगीव स्वेच्छया ।
निरूपादानकं देवि निर्मितं तु निराश्रयम् ॥ ९० ॥

---

उत्तरमाह—भैरव उवाचेति ॥८७॥

शुध्यशुध्योरुभयोः पृष्टत्वेन तत्राशुद्धि वक्तुं तदापत्तिप्रकारमाह—शिवेत्यादि । परमः सर्वकारणम् । अक्षरो नाशरहितो विग्रहः शरीरं यस्य । स्वाच्छन्द्यमविशेषात्सर्वस्वातन्त्र्यम् । तत् शक्तिर्यस्य । ईदृशः शिवः स्वातन्त्र्यात्स्वशक्तेरेव सृष्ट्यादीननुग्रहान्तान् भावयामासेत्यन्वयः । सृष्ट्यादिभावने कारणान्तरानुक्त्या पूर्णमस्य स्वातन्त्र्यमुक्तम् ॥८८॥

तिरोधानं सृष्ट्यादिकर्तृरूपलयभावनम् । अनुग्रहः तिरोधानकर्तुरीश्वरस्योत्पादनम् । सदा सर्वकालं भावयामास । एवं सृष्ट्यादिभावने न किञ्चित्प्रयोजनमित्याह—लीलेत्यादि । लीलायाः कैवल्यं केवलता तद्योगेन, लीलामात्रप्रयोजनेनेति भावः । आभासवपुषा आभासयदित्यन्वयः ॥८९॥

आभासो वपुः शरीरं यस्य एवंरूपेणाखिलमाभासयत् । यथाहि दर्पणे नगरादिकं भासमानम् आभासमात्रशरीरम्, एवम् । ननु नगरभासनं दर्पणाश्रये बिम्बभूतनगर निमित्तकं दृष्टम्, जगद्भासनं किमाश्रयं किंनिमित्तमिति चेदाह—अमेयेत्यादि । अमेयः अपरिच्छिन्नः आत्मा यस्य । त्वात्मन्येव सर्वाविभासनादपरिच्छिन्नः, परिच्छेदकाभिमतदेशकालाद्याभासाश्रयत्वेन तैरपरिछिन्नत्वात् । यदुक्तं श्रीमदाचार्यपादैः—"विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्" इति । महायोगीव स्वेच्छया । यथा हि योगिनो निर्माणं स्वेच्छातिरिक्तनिमित्तानपेक्षकम्, एवम् । एतदुक्तं श्रीप्रत्यभिज्ञायाम्—"चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः । योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥" इति । श्रीमदाचार्यपादैरप्युक्तम्—"मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया" इति । अत एव निरुपादानं निराश्रयं च निर्मितम् । निरुपादानकमित्यनेन परमाण्वा-

आभासमात्रसारं च स्वयं देवो महेश्वरः ।
स्वच्छस्वातन्त्र्यसंयुक्तः स्वमायाविभवेन च ॥ ९१ ॥

तिरोदधत्तत् स्वातन्त्र्यं तत्स्वातन्त्र्यं तिरोहितम् ।
आवणं मलमित्युक्तं तद्धृतात्माऽभवत् स्वयम् ॥ ९२ ॥

अविद्याख्यं तदेवोक्तं यथाऽऽकाशे स्थितो रविः ।
स्वमयूखसमुत्पन्नैर्मेघैराच्छादितः स्वयम् ॥ ९३ ॥

आभासमानोऽपि जगन्मेघं चाभासयत्यथ ।
तद्वत्तिरोभूतशक्तिरसम्यग्भासनादणुः ॥ ९४ ॥

तिरोहितं स्वं स्वातन्त्र्यं भासयन्नपि चाखिलम् ।
आभासयदमेयात्मा शिव एव भवेदणुः ॥ ९५ ॥

---

द्युपादानवादिनो निरस्ताः। येषां मते ईश्वरस्य जगन्निर्माणे परमाण्वाद्युपादानापेक्षा, तन्मते ईश्वरस्य कर्तृत्वमन्यापेक्षमेवेति ईश्वरत्वं विहतमेवेत्यन्यत्र विस्तरः। यदुक्तं क्षेमराजाचार्यैः—"ये त्वीश्वरं व्यपदिशन्ति निमित्तहेतु दत्तस्तिलाञ्जलिरमीभिरिहेशितायै। अन्याङ्गतोपगमनेन वशीकृतस्य कामीश्वरस्थितिममी बत संगिरन्ते॥" इति ॥९०॥

आभासमात्रमेव यत्र सारं वस्तु, न तु घटादिषु पर्यवसानं परमाणु प्रधानं वान्योपगतम्। एवंविधं जगत्स्वयमन्यानपेक्षः, आभासयदिति संबन्धः। अत एव महेश्वरः। लोकप्रसिद्धेश्वरापेक्षया महत्त्वम्, अनन्यमुखप्रेक्षित्वात्। स्वच्छम् अप्रतिबद्धं यत्स्वातन्त्र्यं तेन युतः महेश्वरः। स्वस्य या माया दुर्घटसंपादनशक्तिः, तस्याभिभवः प्रसरः, तेन तिरोदधदित्यन्वयः ॥९१॥

तत् प्रागुक्तं पूर्णं स्वातन्त्र्यं तिरोदधत्। एवं तिरोहितं यत् स्वातन्त्र्यं तदेवाणवं मलम्। तेन हृतात्मा अपरिभासमानमाहैश्वर्यः। स्वयं महेश्वर एवाभवत् ॥९२॥

तदेव आणवमलमेवाविद्याख्यम्। ननु कथं स्वस्वातन्त्र्यशक्त्या स्वस्वरूपापहार इत्याशङ्क्य दृष्टान्तमाह—यथेत्यादि ॥९३॥

स्वशक्त्युदितमेघाच्छन्नः स्वयमभासमानोऽपि मेघं जगच्चाभासयति, तद्वत् स्वस्वातन्त्र्याभासितमायया तिरोभूतपूर्णत्वादिशक्तिः असम्यगपूर्णत्वेन भासनादणुर्जातः ॥९४॥

यथा आच्छन्नः सूर्यो मेघादिकं भासयन् मेघान्तः स्वयमस्तीति भाति, तथा प्रकृते तिरोहितं तत्स्वातन्त्र्यमाणवमलम् अखिलं जगच्च भासयन् स्वात्मानं परिच्छिन्न-

अणुः संक्षिप्तशक्तिः स मायारूपमनेकधा ।
अपश्यत्तन्मायिकाख्यं भेदप्रथनरूपकम् ॥ ९६ ॥

भेदप्रथनहेतोश्च तेऽणवो भिन्नतां गताः ।
सकला निष्कला मिश्रा इति ते त्रिविधाः स्थिताः ॥ ९७ ॥

अबोधरूपा देवेशि कर्मणाऽनादिना युताः ।
कार्मं मलं तदेवेह मल एवं त्रिधा स्थितः ॥ ९८ ॥

ते मलत्रयसंबद्धाः शक्तिसंकोचभागिनः ।
अतृप्ताः कामनाक्षुब्धाः कामदोषहताशयाः ॥ ९९ ॥

प्रकृत्या गुणमय्या तु नियताः संसरन्ति ते ।
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंश्रयाः ॥ १०० ॥

---

त्वेनाभासयत् । यथा दृष्टान्ते । आवृतानावृतद्विप्रकारः सूर्योऽप्येक एव, तथा प्रकृतेऽप्येवंविधोऽगुरमेयात्मा शिव एव ॥९५॥

एवमाणवमलमुक्त्वा मायिकं मलमाह—अणुरिति । उक्तप्रकारेण संक्षिप्ताः परिच्छिन्नाज्ञत्वकर्तृत्वादिशक्तयो यस्य सः अणुः । मायया परिच्छिन्नं स्वात्मरूपम् अनेकधा-नानात्वेनापश्यत् । तदेव नानात्वावगाहिभेदप्रथनं मायिकाख्यं मलम् ॥९६॥

एवं भेदप्रथनाद्धेतोर्भिन्ना अपि त्रिविधाः सकला नृतिर्यगादयः, निष्कलाः सदाशिवादयः स्वभावतोऽज्ञानरहिताः । मिश्राः नारदादयः कालभेदेन ज्ञानाज्ञानोभय-युक्ताः ॥९७॥

एवमाणवमलात्मकमज्ञान मायिकमलात्मकभेदग्रहरूपकार्योत्पादनेन प्ररूढं येषां ते अबोधरूपा अज्ञानमया अणवः अनादिकर्मणा कर्मजनितशुभाशुभसंस्कारेण युताः । तदेव कर्मैव । एवमुक्तप्रकारेण ॥९८॥

ते अणवः । मलत्रयेणाणवादिना सम्यग्बद्धाः । मलेन बन्धो नाम पूर्णत्वादि-सकलशक्तिसंकोच एव । नित्यतृप्तत्वशक्तेः संकोचे क्वचिदतृप्तिरुत्पन्ना । अतृप्तिरेव कामना, तया क्षुब्धाः क्षोभो विषयाप्राप्तिजनितसंतापः तेन युताः । कामः कामना । तज्जनितो दोषः । क्षोभ एव तेन हतो यथार्थग्रहणासमर्थ आशयोऽन्तःकरणं येषाम् ॥९९॥

प्रकृत्या मायावभासितजड़शक्त्या गुणसाम्यावस्थया । गुणमय्या त्रिगुणात्मिकया । नियता नियमिताः स्वात्मतां प्रापिताः अणवः संसरन्ति सुखदुःखाद्यमुभवन्ति ।

आणवाद्यावृतो जीवः स्वात्मन्येवानुमन्यते ।
परित्यज्य तु सार्वात्म्यं किञ्चिद्भागसमाश्रयः ॥१०१॥

तदप्यंशं परित्यज्य त्यक्तप्रकृतिसंगतः ।
तेनास्य संपूर्णरूपतिरोभावः स्थितः शिवे ॥ १०२ ॥

सार्वभौमो यथा देवि स्थापत्यं समुपागतः ।
स्थापत्यमपि चोत्सृज्य दासभावं प्रपद्यते ॥ १०३ ॥

एवं पूर्णात्मतां त्यक्त्वा परिच्छिन्नचिदात्मकः ।
त्यक्त्वा तदपि देवेशि प्रकृत्यात्मत्वमाप्तवान् ॥ १०४ ॥

देहादौ प्राकृते देवि स्थितोऽहङ्कारसंयुतः ।
स्वरूपहानिः सत्त्वस्य न्यग्भावाद्रज उच्छ्रितम् ॥१०५॥

---

तत्र प्रकृत्या नियतत्वं किमिति चेदाह—सत्त्वमिति । प्रकृतिः संश्रयो येषां ते प्रकृतिधर्माः ॥१००॥

तान्गुणान् । आणवादिमलावृतो जीवः स्वात्मन्येवानुमन्यते स्वात्मधर्मत्वेनैव जानाति । गुणानामात्मीयत्वेनाभिमननमेव प्रकृतिनियतत्वम् । एवं प्रकृतिनियतत्वेन किं जातम् ? तदाह—परित्यज्येति । सार्वात्म्यं विश्वात्मभावं परित्यज्य किञ्चिद्भागः परिछिन्नचिद्भागः तत्समाश्रयो जातः ॥१०१॥

ततः किं तदाह—तदपीति । तदप्यंशं परिच्छिन्नचिदंशमपि परित्यज्य तत्राप्यहन्तां त्यक्त्वा । त्यक्तप्रकृतिसंगतः । त्यक्ता जाड्यत्वावभासनेन स्वस्माद्विभिन्नत्वेन गृहीता या प्रकृतिः स्वपरिच्छेदरूपोपाध्यंशो देहादिः, तत्संगतः तत्राहङ्कारवान् जातः । एतदुक्तं विरूपाक्षपञ्चाक्षिकायाम्—"उत्क्रम्य विश्वतोऽङ्गात्तद्भागैकतनुनिष्ठिताहन्तः । कण्ठलुठत्प्राण इव व्यक्तं जीवन्मृतो लोकः ॥" इति । अखण्डचिद्रूपः शिवः स्वमायया । चिदशो जड़ांश इति द्वयमाभास्य तत्र जड़ांशं त्यक्त्वा चिदंशमात्रात्मकं सन्पुनः परिछिन्नचिदात्मन्यप्यभिमानं त्यक्त्वा त्यक्तजड़ांशान्तर्गतस्वोपाधिरूपो यो देहः, तत्रैवाभिमानी जात इति भावः । तेन एवं जड़देहाद्यहंभावेन ॥१०२॥

अत्र दृष्टान्तमाह—सार्वभौम इत्यादि । सार्वभौमश्चक्रवर्त्ती । स्थापत्यं मण्डलेश्वरत्वम् ॥१०३॥

दार्ष्टान्तिके योजयति—एवमित्यादि । प्रकृत्यात्मत्वं देहात्मभावम् ॥१०४॥

प्रकृत्यात्मत्वमेव स्पष्टयति—देहादावित्यादि । प्राकृते प्रकृतिकारणके । एवमाणवादिमलैः स्वरूपहानिस्ततः स्वबन्धकमलत्रयान्तर्गतकार्ममलस्य वैचित्र्यात्

रजसा संकल्पयुक्तं मनस्तस्मात् करोति सः ।
रजोवेगेन देवेशि जानन्नप्यवशो हि सः ॥ १०६ ॥
संसृतिं प्राप्य सततं भूयो भ्रमति शङ्करि ।
स्वस्वरूपस्य लाभाय करुणामूर्तिरीश्वरः ॥ १०७ ॥
वेदशास्त्रागमादीनि प्रोक्तवान् परमेश्वरि ।
कर्मभूमिं समारुह्य उपासाभूमिमाश्रिताः ॥ १०८ ॥
ततो विज्ञानपदवीं प्राप्ता यान्ति परां गतिम् ।
तत्र कर्मोपासनासु फलानि विविधानि तु ॥ १०९ ॥
उक्तानि रोचनार्थानि रजसा मोहितात्मनाम् ।
तमोगुणानां देवेशि तामसानि फलानि तु ॥ ११० ॥

---

प्रकृतेः प्रतिक्षणं तत्तत्कर्मपरिपाकेन सत्त्वाद्युच्छ्रायरूपविचित्रपरिणामः । तेन सत्त्वगुणस्य निर्मलत्व स्यदेहाद्यभिमानेन न्यग्भावादभिभवाद्रज उच्छ्रितमभवत् ॥१०५॥

एवं रजस आधिक्ये सति रजोगुणस्य प्रवृत्तिरूपत्वान्मनः संकल्पयुक्तं जातम् । तस्मात्संकल्पाद्विविधं कर्मकरोति । ननु शास्त्रेषु राजसानां काम्यकर्मणां निषेधं जगति काम्यकर्मपराणां पर्यवसाने फलविपर्यासं च दृष्ट्वा कुतोऽयं जनो न निवर्तते तदाह—रज इत्यादि । पाकविपर्यासं जानन्नपि स अगुः । नदीवेगपतितवदवशो भवति ॥१०६॥

एवं कर्मपरस्य का गतिरिति चेदाह—संसृतिमिति । यथा नदीवेगपतितः स्रोतः-प्रतिस्रोतोभ्यां भ्रमति, एवं जननमरणात्मकसंसृतिं प्राप्य भ्रमति । एवंविधभ्रमणस्य स्वस्वरूपलाभादृते नास्ति प्रशम इत्यणूनां स्वस्वरूपलाभार्थं प्रोक्तवान् इत्यन्वयः ॥१०७॥

शास्त्रकथनमात्रेण कथमणूनां स्वरूपलाभ इति चेत्तदुक्तकर्माद्याचरणेनेत्याह—कर्मभूमिमित्यादि । मूढकर्म्युपासकानामुत्तरोत्तरमुत्तमत्वेनोर्ध्वलोकरूपभूमिकाफलसत्त्वात् साधनानामपि कर्मादीनां भूमिरूपत्वेन कथनम् ॥१०८॥

परामुत्कृष्टां पुनरावृत्तिरहितां गतिं मो।म् । ननु कर्मादीनां फलस्य शास्त्रोक्तत्वात् फलेच्छावान् तत्राधिकारीति कथं कामनाया बन्धकत्वेन हेयत्वमुक्तमिति चेदाह—तत्रेति । फलान्युक्तानीत्यन्वयः ॥१०९॥

यानि कर्मादीनां फलान्युक्तानि तानि रजोगुणाधिक्येन मोहितान्तःकरणानामणूनां रोचनार्थानि रुच्युत्पादनार्थानि । "पिब निम्बं प्रदास्यामि वत्स ते खण्डलड्डुकम्"

तामसानि तु कर्माणि कृत्वाऽधो यान्ति तेऽम्बिके ।
प्रत्ययं तत्र वै प्राप्ता निवृत्तास्तस्य निन्दया ॥ १११ ॥

राजसादप्येवमेव निवृत्ताः परमेश्वरि ।
सात्त्विके कर्मणि रताः कामनाक्षोभनाशतः ॥ ११२ ॥

चित्तशुद्धिं तु संप्राप्ता विद्यायामधिकारिणः ।
कामनैव हि देवेशि चित्तस्याशुद्धिरुच्यते । ११३ ॥

तन्नाशश्चित्तशुद्धिः स्यात् केवलं कामनापरम् ।
वर्जयेदत्र देवेशि दीक्षाकर्मणि तं सदा ॥ ११४ ॥

---

इतिवत् । अयं भावः—यथा निम्बपाने प्रवर्तयितुं बालकाय लड्डुका दीयते । न तत्र निम्बपानस्य फलं लड्डुकाप्राप्तिः, किन्तु रोगहानिरेव । एवं जनान् बन्धनिवर्तककर्मादिषु प्रवर्त्तयितुं फलान्युक्तानीति । एवं तमोगुणानामणूनां यानि मारणादिकर्माण्युक्तानि, तेषां तामसानि शत्रुमृत्यादिरूपाणि ॥११०॥

ननु राजसकर्मकर्तृणां "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति रीत्या पुनः पुनः संसरणं फलमुक्तम्, तामसकर्मिणां किं फलमिति चेदाह—तामसानीति । अधोयान्ति अधमं स्थावरादिजन्म प्राप्नुवन्ति । ननु ईश्वरेण स्वांशभूतानामणूनामुद्धारार्थं कृपया वेदशास्त्रागमादीनि प्रोक्तानीत्युक्तम् । तत्कथं वेदाद्युक्तकर्मादीनामधुना पुनः पुनः संसरणम् अधः पतनं च फलमभिहितमिति चेदाह—प्रत्ययमित्यादि । प्रत्ययं फलविपर्ययस्यानुभवम् । तत्र राजसे तामसे च कर्मणि । वै निश्चयेन प्राप्ताः सन्तस्तामसात् कर्मणो निवृत्ताः । तस्य तामसकर्मणो निन्दया शास्त्रोक्तनिन्दाश्रुत्या ॥१११॥

राजसात् कर्मणोऽपि, एवमेव प्रत्ययप्राप्त्यादिना सात्त्विके परमेश्वरार्पितत्वेन फलेच्छां परित्यज्य क्रियमाणे कर्मणि । एवंविधकर्मरतत्वेनार्थात् कामनिवृत्त्या क्षोभनाशः सम्पन्नः । तस्मात् ॥११२॥

एवं क्षोभनाशाच्चित्तसंशुद्धिं संप्राप्ताः । ननु चित्तशुद्धिः कथं ज्ञेयेत्यस्य प्रश्नस्योत्तरं सात्त्विककर्मरत्या क्षोभराहित्यहेतुना चित्तशुद्धिर्ज्ञेयेत्युक्तम् । काऽशुद्धिः शुद्धिरप्युतेति शुध्यशुध्योः स्वरूपप्रश्ने उत्तरं नोक्तमिति चेदाह—कामनैवेति ॥ ११३॥

तन्नाश एव शुद्धिः । तस्मात् । केवलं कामनापरं काम्यकर्ममात्ररतम् । अत्र श्रीविद्याविषये । सदा सर्वथा । इदमत्र तात्पर्यम्—जनानां ह्यनेकजन्माभ्यस्तकामनारूपा विषयवासनाः चित्तस्याशुद्धिः । ताश्च वासना अनन्तास्ताभिः पूर्णचित्तम् । तत्र चित्ते । यथा व्रीहिपूरिते घटे घटान्तर्गतोऽप्याकाशो व्रीहिभिराच्छादितः, तथा वासनाभिरात्म-

शिवानुग्रह एवात्र कारणं परमेश्वरि ।
करुणाब्धिः शिवः साक्षाद् गुरुवेषधरः शिवे ॥ ११५ ॥

अनुगृह्य जनान् स्वांशान् तारयत्यनिशं प्रिये ।
एतत्ते देवि संप्रोक्तं शुद्धिरूपं महेश्वरि ॥ ११६ ॥

एवं संशुद्धचित्तस्य दीक्षायामधिकारिता ।
पूर्वोपास्त्या शुद्धचित्तं पञ्चदश्याऽथ दीक्षयेत् ॥ ११७ ॥

पूर्वोक्तविधिना देवि श्रीयन्त्रं तत्र कारयेत् ।
तत्र पञ्चदशीं पूज्य साङ्गोपाङ्गां निरूपयेत् ॥ ११८ ॥

---

स्वरूपमाच्छादितम् । यावत्स्वरूपमाच्छादितम्, तावत्स्वरूपानुपलब्धिः स्वरूपलाभाभावस्तेन पुनःपुनः संसरणम् । एवं विषयवासनाभिर्निविडचित्तं पुरुषं केवलनिवृत्तिशास्त्रसहस्रोपदेशेनापि विषयेभ्यो विमुखीकर्तुमीश्वरेणाप्यशक्यम् । अतस्तेषां रोचनाय कर्मादीनां फलान्युक्तानि । तानि फलानि दृष्ट्वा तत्तत्फलार्थिनस्तत्तत्कर्मणि प्रवृत्ताः, तत्तत्काम्यकर्मणाम् ईषदङ्गलोपेनापि प्रायः सम्भाविना अप्राप्तफलाः । प्राप्तफलस्यापि नश्वरतामवगताः । कर्मासमीचीनं मत्वा काम्योपासनपरास्तत्राप्येवमेव बुध्वा क्रमेण सात्त्विककर्मोपासनाभ्यां ज्ञानभूमिमारुह्य परां गतिं प्राप्नुवन्ति । तत्र प्राप्तबालादीक्षः किञ्चित्कालं बालाया यथोक्तोपासनया जन्मान्तरकृतषोडश्याद्युपासनासंस्कारसहितया नितरां शुद्धचित उपासनान्तरेच्छाराहित्यात् तत्रैव पूर्णतामभ्येति । यश्च शुद्धचित्त उपासनान्तरेच्छासहितः स पञ्चदश्यादिदीक्षायामधिक्रियते । यस्त्वपूर्णोऽशुद्धचित्तः श्रद्धावांश्च स मन्त्रिण्यादिदीक्षायामधिकृतः, न तु पञ्चदश्यादिदीक्षायाम् । यस्त्वपूर्णोऽशुद्धचित्तोऽश्रद्धावांश्च स परित्याज्य एव । अश्रद्धा नाम नित्यादिकर्म त्यक्त्वा केवलकाम्यकर्मपरा इति ॥११४॥

एवं चित्तशुद्धिसंपादकोपासनाभावे किं कारणमिति चेदाह—शिवानुग्रह एवेति । ननु शिवानुग्रह परमदुर्लभ इति नैवेदं सिध्यतीति चेदाह—करुणाब्धिरिति । संतारयतीत्यन्वयः ॥११५॥

करुणासिन्धुर्भगवान् गुरुमूर्तिः स्वांशान् जनानीषत्सेवनपरानपि तरणानुकूलोपदेशादिना तारयति । तस्मात् सद्गुरुं शास्त्रोक्तलक्षणयुतं परीक्ष्य तत्सेवनमेवात्रनिदानं शरणीकार्यम् । उपसंहरति—एतदिति ॥११६॥

एवम् उक्तप्रकारेण पूर्वोपास्त्या बालाद्युपास्त्या ॥११७॥

पञ्चदशीदीक्षाप्रकारमाह—पूर्वेति । पूर्वोक्तवदेव सर्वं कर्तव्यम् । विशेषस्तु तत्र वेदिकायां बालायन्त्रस्थाने श्रीयन्त्रं तत्र कलशे बालासाङ्गपूजनस्थाने साङ्गपञ्चदशी-

अथवा मन्त्रदीक्षां वै कुर्याद्योग्ये विशेषतः ।
कलशानां तु नवकं श्रीयन्त्रे स्थापयेच्छिवे ॥ ११९ ॥
मध्येष्टदिक्षु च शिवे वशिन्याद्यष्टकं यजेत् ।
मध्ये च षोडशीं तस्याग्रे तु सौभाग्यदायिनीम् ॥ १२० ॥
बालां च गणपं दक्षवामभागे प्रपूजयेत् ।
भागद्वये तु षोडश्या मन्त्रिणीं दण्डनायिकाम् ॥ १२१ ॥
तिरस्कृतिं पृष्ठतस्तु परितस्त्र्यस्ररूपतः ।
नित्यानां मण्डलं देवि वामावर्तविधानतः ॥ १२२ ॥
तत्तन्मन्त्रेण संपूज्य सर्वत्र कलशेषु वै ।
अष्टधा प्रजपेन्मुख्यविद्यया मध्यमे ततः ॥ १२३ ॥
नवचक्रेश्वरी विद्याश्चतुःसमयदेवताः ।
पञ्च पञ्चकविद्याश्च नवमुद्रा महेश्वरि ॥ १२४ ॥

---

पूजनं मन्त्रदीक्षावत् कर्तव्यम् । षोडशीं त्यक्त्वा जपपूजनादिकं समानम्, उपदेशश्च ॥११८॥

शुद्धितारतम्येन विशेषतो योग्ये मन्त्रदीक्षैव कुर्यादित्याह—अथवेति । अत्र विशेषमाह—कलश.नामिति ॥११९॥

कलशानां स्थापनप्रकारमाह—मध्ये इत्यादि । मध्येष्टदिक्षु च कलशान् संस्थापयेत् । कूर्चं तु मध्यकुम्भाध इति वक्ष्यमाणवचनादेकं कूर्चं मध्यकुम्भाधः स्थापयेत् । अत्र वक्ष्यमाणवशिन्याद्यावरणक्रमेण पश्चिमादिकलशस्थापनं पूजनं च योग्यत्वाज्ज्ञेयम् । एवं स्थापितेषु पश्चिमादिदिक्कलशेषु वशिन्यादिकं यजेत् । मध्यकलशस्य मध्ये षोडशीम् । तस्या अग्रे पुरतः सौभाग्यविद्याम् ॥१२०॥

पञ्चदशीदक्षवामभागे उक्तक्रमेण षोडशीभागद्वये ॥१२१॥

षोडशीपृष्ठतः परितश्च । त्र्यस्ररूपतः त्रिकोणाकारतः ॥१२२॥

तत्तन्मन्त्रेण वशिन्यादिमन्त्रेण । सर्वत्र पश्चिमादिकलशेषु संपूज्य मध्यकलशे तत्तन्मन्त्रेण षोडश्यादीरावाह्य सौभाग्यविद्यादिसपरिवारां षोडशीं सम्पूज्य, तथा सर्वत्र कलशेषु पूजितमुख्यविद्यया वशिन्याद्यष्टकषोडशीभिस्तत्र तत्राष्टधा प्रजप्य, ततः तदनन्तरं पुनर्मध्यकलशे ॥१२३॥

चतुःसमयदेवताः चतुराम्नायसमयाः ॥१२४॥

गुरुत्रयं कामधेनुं तुरीयां वज्रनायिकाम् ।
तुरीयसमयां सूर्यं शेषिकामधिजीवनीम् ॥ १२५ ॥

बटुकं मूर्तिविद्यां च कामराजौघमेव च ।
दीपिनीं च प्रजप्याथ होमं पूर्ववदाचरेत् ॥ १२६ ॥

वाग्देवतां षोडशीं च जपंस्तैरभिषेचयेत् ।
उपदिश्य प्रोक्तमन्त्रान् शेषं कर्म समापयेत् ॥ १२७ ॥

मन्त्रदीक्षाप्रकारस्तु प्रोक्त एवंविधः शिवे ।
अथ वक्ष्ये महेशानि पूर्णदीक्षाविधिं क्रमात् ॥ १२८ ॥

सातिश्रद्धावते कार्या योग्याय निपुणाय च ।
त्रिभिर्दिनैः सा निर्वर्त्या द्वाभ्यां वापि महेश्वरि ॥ १२९ ॥

---

कामधेनुं कुलकामधेनुं वज्रनायिकाम् । वज्रेश्वरीम् । तुरीयसमयाम् । कामेश्वर्यादिसमयविद्यासु चतुर्थीम्, अत्र चतुःसमयासु कामेश्वरीभगमालियोर्नित्यान्तर्भूतत्वेन न पुनर्जपे उल्लेख इति ज्ञेयम् । एतेन नित्यकृत्ये सामान्यमन्त्रानुस्मृतौ देवतैक्येन मन्त्रावृत्तिरिति सिद्धम् । एवमन्यत्रापि । शेषिकां लघुश्यामलाम्, जीवनीं संजीवनीम् ॥१२५॥

दीपिनीं चेति चकारेण सौभाग्यविद्यादिनित्यान्तानां संग्रहः । योग्यत्वात् सौभाग्यविद्यादिजपान्ते चक्रेश्वर्यादिजपो बालादीक्षानुरोधेन बालान्ते गायत्रीणां जपश्च । एताः सकृत् प्रजप्य ॥१२६॥

तैः वशिन्यादिकलशैः । क्रमेणाभिषेचयेत् । प्रोक्तमन्त्रान् वशिन्यादिदीपिन्यन्तान् । पूर्ववच्छेषं समापयेत् ॥१२७॥

उपसंहरति—मन्त्रदीक्षेति । क्रमात् प्राप्तमन्त्रदीक्षान्तस्य क्रमात् कर्तव्यत्वेन प्राप्तम् ॥१२८॥

सा पूर्णदीक्षा । पूर्वस्मादधिकयोग्याय कर्तव्येत्याह—अतिश्रद्धावत इति । योग्यः अतिशुद्धचित्तः । निपुणः अभ्यस्तनित्याद्यखिलकर्मकलापः । सा पूर्णदीक्षा निर्वर्त्या कर्तव्या । तल्लक्षणमुक्तं त्रिपुरार्णवे—"महाश्रीषोडशी यत्र श्रीमहापादुकापि च । ऊर्ध्वाम्नायोऽनुत्तरश्च प्राप्यते साधकेन वै ॥ ज्ञानं शाक्तं दिव्यमपि चोपास्तिर्देहसंश्रया । अन्तराराधनाख्याना पादुकाप्यात्मनस्तथा । सैव पूर्णाभिषेकाख्यो न तस्यान्यो गुरुर्भवेत् ॥" इत्यादि ॥१२९॥

पूर्वे प्रपूर्वे वा देवि दिवसे पूर्वभागके।
स्नातः सुगन्धितैलाद्यैराचम्य सपवित्रकः ॥ १३० ॥
गुरुं प्रणम्य साष्टाङ्गं चरणौ शिरसा धृतः।
भो स्वामिन् गुरुनाथार्य मामार्तं शरणागतम् ॥ १३१ ॥
संसारसागरात्तीर्णं कृपया कुरु मां गुरो।
एवं परशिवाकारं गुरुं संप्रार्थ्य वै शिवे ॥ १३२ ॥
ततः प्राङ्मुख आसीन आसनेऽलङ्कृतः शुभः।
कामेश्वरीप्रीतयेऽहं पूर्णोपासनयोग्यता ॥ १३३ ॥
सिध्यर्थं देवतायाश्च सन्मार्गस्य प्रवृत्तये।
श्रीविद्यायाः पूर्णदीक्षाग्रहणं तु विनिर्दिशेत् ॥ १३४ ॥

---

अत्र बालादिदीक्षाग्रहणासमर्थो मन्त्रग्रहणविधिना बालां पञ्चदशीमुपास्य क्रमेण पूर्णदीक्षामासादयेत्। तत्प्रकार उक्तस्त्रिपुरार्णवे—"दीक्षासमर्थ आदौतु बालां पञ्चदशीमपि। मन्त्रग्रहणरीत्या तु गृहीत्वोपास्य वै क्रमात्॥ पूर्णदीक्षा ततो ग्राह्या तद्विधानं शृणु प्रिये। प्रार्थितो गुरुराट् देवि कलशे यन्त्रकेऽथवा॥ संपूज्योपदिशेन्मन्त्रं बालां पञ्चदशीं तथा। गुरुत्रयं गणेशश्च बालाङ्गं प्रोच्यते शिवे॥ मन्त्रिणी दण्डिनी नित्यास्तिरस्कृतिरिति क्रमात्। अङ्गं सौभाग्यविद्याया उपास्यैवं तु दीक्षयेत्॥" इति। दिनद्वयपक्षे पूर्वे, दिनत्रयपक्षे प्रपूर्वे इति ज्ञेयम्। पूर्वभागके द्विधाकृतदिनाद्यभागे। स्नात इत्यादाशेष्त्रावशेषणं सर्वदीक्षायाम् ॥१३०॥

गुरोश्चरणौ ॥१३१॥

एवं भो स्वामिन्निति मन्त्रपाठेन। परशिवाकारं ध्यात्वेति शेषः ॥१३२॥

ततः गुरुप्रार्थनानन्तरम्। अलङ्कृतशरीरः शुभः शुभचित्तः। संकल्पमाह—कामेश्वरीत्यादि। पञ्चमोक्तवद्देशकालोल्लेखान्ते कामेश्वरीप्रीतये इत्यादि। प्रीतये इति तादर्थ्ये चतुर्थी ॥१३३॥

ग्रहणं करिष्ये इति। अत्र गोत्राद्युच्चारोऽप्युक्तो योगिनीतन्त्रे—'गोत्रं वेदं च शाखां च संकल्पादौ पठेत् सुधीः। विशेषकर्मसु शिवे पुरश्चर्यादिषु क्रमात्॥" इति। इदं गुरुप्रार्थनादिसंकल्पान्तं सर्वदीक्षासु समानम्। कामेश्वरीत्यत्र बालात्रिपुरसुन्दरीत्याद्यूहः संकल्पे। पूर्णोपासनेत्यत्र पूर्णपदाभावोऽपि ज्ञेयः ॥१३४॥

एवं संकल्प्य तत्पश्चाद् गणेशादीन् प्रपूज्य च ।
नान्दीश्राद्धान्तकं कृत्वा चाचार्यादीन् ततो वृणेत् ।। १३५ ॥
वेदिकायां तु देवेशि सर्वतोभद्रमण्डलम् ।
नवयोनियुतं कुर्यात् तत्प्रकारः प्रदर्श्यते ॥ १३६ ॥
उक्तां वेदिमथैकोनविंशत्या विभजेच्छिवे ।
अधरोर्ध्वं च तिर्यक् च ऋजुरेखाश्च तावतीः ।। १३७ ॥
कुर्यात् कोष्ठाष्टादशकं कोणतत्पार्श्वकोष्ठकम् ।
त्रयमेकीकृत्य सितैर्वर्णैरापूरयेच्छिवे ॥ १३८ ॥
तत्पार्श्वे कोष्ठमेकं तु त्यक्त्वाऽथो कोष्ठपञ्चकम् ।
तदूर्ध्वंत्रितयं देवि तस्योर्ध्वं चैककोष्ठकम् ॥ १३९ ॥
कोष्ठानां नवकं रक्तवर्णं चैवाष्टकं भवेत् ।
कोणकोष्ठोर्ध्वतः कोष्ठपञ्चकं कर्णसूत्रगम् ।। १४० ॥

---

एवम् उक्तरीत्या । गणेशादीनित्यादिना पुण्याहवाचनादिसंग्रहः । आचार्यादीनित्यादिना ब्रह्मादिग्रहणम् ।।१३५।।

वेदिकायां बालादियन्त्रस्थाने सर्वतोभद्रं कुर्यात् ।।१३६।।

उक्तां चतुर्हस्तेत्यादिना । अथ वेदिकाकरणानन्तरम् । एकोनविंशत्या एकोनविंशतिचिह्नकरणेन । अधरोर्ध्वम् अधःप्रभृत्यूर्ध्वान्त तिर्यक् दक्षाद्वामान्तं च । तावतीः एकोनविंशतिसंख्याकाः । रेखाः कुर्यादित्यन्वयः । अत्र तृतीयमेखलार्थं मेखलासमक्षेत्रं वेदिकायां परितः त्यक्त्वा विभजेत् ।।१३७।।

एवं च कोष्ठानामष्टादशकं भवतीति शेषः । तत्र कोणकोष्ठमेकं तत्पार्श्वकोष्ठद्वयमिति कोष्ठत्रयं मध्यरेखामार्जनेनैकीकृत्य सितवर्णैस्तण्डुलपिष्टैरासमन्तात् पूरयेत् ।।१४८।।

एवं कोणचतुष्टयेऽपि कृत्वा । तत्पार्श्वे श्वेतकोष्ठपार्श्वे । एकं कोष्ठं प्रथमपङ्क्तौ चतुर्थाद्यष्टमान्तम् । तदूर्ध्वं द्वितीयपङ्क्तौ त्रितयं पञ्चमादिसप्तमान्तम् । तस्योर्ध्वं तृतीयं त्यक्त्वा । अथो त्यक्तकोष्ठानन्तरं कोष्ठपञ्चकं प्रथमपङ्क्तौ तृतीयपङ्क्तौ एककोष्ठं षष्ठम् ।।१३९।।

उक्तं कोष्ठानां नवकं मध्यरेखामार्जनेनैकीकृत्य कुङ्कुमैरापूर्य रक्तवर्णं कुर्यात् । एवं कोणचतुष्टयस्य पार्श्वद्वये करणात्प्रतिदिशं द्वयमित्यष्टकं भवेत् । सितवर्णस्य

कृष्णवर्णं तु तत्पार्श्वे पञ्चषट्क्रमयोगतः ।
कोष्ठैकादशकं देवि हरिद्वर्णं प्रकल्पयेत् ॥ १४१ ॥
शोणकोष्ठान्तरालस्थकोष्ठयुग्मं तदूर्ध्वतः ।
चतुःषट् षट्चतुर्युग्मं चतुर्विंशतिसंख्यकम् ॥ १४२ ॥
श्वेतैरापूरयेद्देवि मध्ये षट्त्रिंशकं ततः ।
परितस्तस्य कोष्ठानामेकीकृत्य तु विंशतिम् ॥ १४३ ॥
पीतवर्णां कारयेद् वै वीथिकां परमेश्वरि ।
अन्तः षोडशकोष्ठं तु सिन्दूरेण प्रपूरयेत् ॥ १४४ ॥

---

कोणकोष्ठस्योर्ध्वतः । कर्णसूत्रगम् । कोणात्कोणान्तरपर्यन्तधृतसूत्रसंबद्धकोष्ठपञ्चकम् । द्वितीयतृतीयचतुर्थपञ्चमषष्ठपङ्क्तिषु द्वितीयतृतीयचतुर्थपञ्चमषष्ठकोष्ठानि ॥१४०॥

कोष्ठपञ्चकं कृष्णवर्णचूर्णैर्दग्धपूगीफलादिरजोभिरापूरणेन कृष्णवर्णं कुर्यादिति सम्बन्धः । तत्पार्श्वे कृष्णवर्णकोष्ठानां पार्श्वद्वये । पञ्चषट्क्रमयोगतः । क्रमेण कृष्णवर्ण-कोष्ठपार्श्वे पञ्च तत्पार्श्वे षट्कोष्ठानि, तेषां मध्यरेखामार्जनरूपयोगात् । कोष्ठानामेका-दशकमेकीकृत्य । प्रथमपङ्क्तौ तृतीयं द्वितीयपङ्क्तौ तृतीयं तृतीयपङ्क्तौ चतुर्थंपञ्चमं चतुर्थपङ्क्तौ पञ्चम षष्ठं पञ्चमपङ्क्तौ षष्ठं सप्तमं षष्ठंपङ्क्तौ सप्तममष्टमम्—इत्येकादशकोष्ठानि बिल्वपत्रादिचूर्णैर्हरिद्वर्णं प्रकल्पयेत् । एतदपि प्रतिदिशं द्वयमित्यष्टकं ज्ञेयम् ॥१४१॥

पार्श्वद्वयस्थशोणवर्णकोष्ठयोरन्तरालस्थं कोष्ठयुग्मम् । नवमं दशमं प्रथमपङ्क्तौ, द्वितीयपङ्क्तौ अष्टमाद्येकादशान्तं चतुष्टयम् । तृतीयपङ्क्तौ चतुर्थपङ्क्तौ च सप्तमादिद्वाद-शान्तषट्कम् । पञ्चमषष्ठपङ्क्त्योः द्वितीय-प्रथमपङ्क्तिवत् चतुष्टयं द्वयं ज्ञेयम् । इति मिलित्वा चतुर्विंशतिसंख्यकं कोष्ठम्, एकीकृत्येति शेषः । तदूर्ध्वत इति प्रतिसंख्य-मन्वेति ॥१४२॥

श्वेतैस्तण्डुलादिचूर्णैरापूरयेत् । एवं कृते तदनन्तरं मध्ये षट्कोष्ठात्मकषट्पङ्क्ति-रूपं षट्त्रिंशत्कोष्ठमुर्वरितं भवति । तत्र मध्ये चतुष्कोष्ठात्मकपङ्क्तिचतुष्टयं त्यक्त्वा तत्परितो विंशतिकोष्ठान्येकीकृत्य ॥१४३॥

विंशतिकोष्ठात्मिकां वीथिकां हरिद्रादिचूर्णैः पीतवर्णां कारयेत् । ततो मध्ये उर्वरितकोष्ठषोडशक रेखामार्जनेनैकीकृत्य सिन्दूरेण प्रपूरयेत् ॥१४४॥

मध्ये तृतीयभागेन वृत्तं कुर्यान्महेश्वरि ।
प्रागादिवृत्तं षोढा तु पार्श्वयोस्त्र्यंशहीनतः ।। १४५ ।।

तिर्यग्रेखाद्वयं तत्र षट्कोणं परिकल्पयेत् ।
प्रत्यग्रेखामध्यमुखं प्राग्रेखासंधिभेदकम् ।। १४६ ।।

कृत्वा त्रिकोणं बिन्दुं च मध्ययोनौ प्रकल्पयेत् ।
बहिरष्टदलं कुर्यान्मेखलात्रितयं शिवे ।। १४७ ।।

सितरक्तासितैर्बाह्यां पूरयेत् परमेश्वरि ।
तदग्रे चासने तिष्ठन्न्यासानावश्यकांश्चरेत् ॥ १४८ ॥

ततः सपर्यां निर्वर्त्य उद्वासरहितां शिवे ।
नियमादधिवास्यैवं परेद्युः कृतसत्क्रियः ॥ १४९ ॥

---

सिन्दूरपूरितचतुष्कोणात्मकक्षेत्रमध्ये तत्क्षेत्रतृतीयभागमितेन कर्काटकेन सूत्रेण वाममध्यचिह्ननिवेशितेन वृत्तं कुर्यात् । ततो वृत्तरेखां प्रागादिषोढाषट्चिह्नैः समानैर्विभज्य । पार्श्वयोः दक्षिणोत्तरस्थितचिह्नद्वयान्तरालयोः । त्र्यंशहीनतः तदन्तरालतृतीयांशत्यागात् । अत्र तृतीयांशत्यागः पार्श्वद्वये षष्ठांशत्याग इति मिलित्वा तृतीयांशत्यागः । एवं च मध्ये अंशद्वयमुर्वरितं भवति ।।१४५।।

तत्र मध्यत्यक्तद्व्यंशपूर्वपश्चिमयोस्तिर्यग्रेखाद्वयं कृत्वा । पूर्वरेखाप्रान्ताभ्यां रेखाद्वयं वृत्तगतपश्चिमचिह्ने संयोज्य पश्चिमरेखाप्रान्ताभ्यां रेखाद्वयं वृत्तगतपूर्वचिह्ने संयोज्य षट्कोणं परिकल्पयेत् । ततः प्रत्यग्रेखायाः पश्चिमरेखाया मध्यचिह्ने मुखमग्रं यस्येदृशं त्रिकोणं प्राग्रेखायां विद्यमानं रेखाद्वययोगरूपं यत्सन्धिद्वयं तस्य भेदकम्, तत्सन्धिद्वयसंबद्धपार्श्वद्वयरेखायुक्तमित्यर्थः ।।१४६।।

तत्त्रिकोणपार्श्वरेखाद्वयं वृत्तसंस्पर्शि कृत्वा तत्प्रान्तयोस्तिर्यग्रेखां दक्षिणोत्तरायतां विलिखेत् । एव त्रिकोणं कृत्वा । मध्ययोनौ नवत्रिकोणेषु मध्यत्रिकोणे बिन्दुं प्रकल्पयेत् । उक्तनवयोनेर्बहिस्त्यक्ततृतीयांशे प्रागाद्यष्टदिक्षु समानाष्टदलं कुर्यात् । ततो वेदिकायां मेखलात्रितयं पूरयेदित्यन्वयः ।।१४७।।

बात् बहिर्मेखलामारभ्य मेखलात्रयं सितरक्तासितैः श्वेतरक्तकृष्णचूर्णैरापूरयेत् । तदग्रे सर्वतोभद्रयुतवेदिकाग्रे तिष्ठन् उपविश्य आवश्यकान् पञ्चाम्बाद्यष्टकयुतान्मातृकादिन्यासान् ।।१४८।।

ततः न्यासकरणानन्तरम् । सपर्यां पूजां निर्वर्त्य कृत्वा । उद्वासरहितां देवतो-

संकल्पयेदथाचार्यः कलशादींस्तु स्थापयेत् ।
चतुःषष्टिकोटियोगिनीयुतान् पूजयेच्छिवे ॥१५०॥
सिद्धांश्चतुःषष्टिमितान् सर्वतोभद्रमण्डले ।
तत्र प्रागादिमध्यान्तपञ्चदिक्षु क्रमान्न्यसेत् ॥१५१॥
धान्यानां पञ्चकं देवि कुम्भानां पञ्चकं तथा ।
कूर्चं तु मध्यकुम्भाधः सर्वमेकं विभावयेत् ॥१५२॥
दूर्वां सोमलतां पञ्चपल्लवांश्च मुखे क्षिपेत् ।
श्रीचक्रं पश्चिमदिशि उपचारान्तमर्चयेत् ॥१५३॥
कलशेषु ततो देवि पूजयेत पूर्वतः क्रमात् ।
पूर्वकुम्भे शुद्धविद्यां बालां वै मन्त्रिणीं तथा ॥१५४॥

---

द्वासनरहितं सर्वं कर्तव्यम् । ततस्तत्र देवतासमीपे नियमेन गुरुः सशिष्योऽधिवासं कृत्वा ततः परदिने स्नानादिनित्यक्रियां कृत्वा ॥१४६॥

द्वारपूजादिन्यासकरणान्ते अमुकस्य दीक्षाकर्माङ्गं कलशस्थापनादिकं करिष्ये इति संकल्प्य चतुःषष्टिकोटियोगिनीयुतचतुःषष्टिसिद्धेभ्यो नम इति पुष्पाञ्जलिं दत्त्वोक्तवत् पञ्चोपचारैर्यजेदित्यन्वयः ॥१५०॥

दिनत्रयपक्षे इदमुक्तम् । दिनद्वयपक्षे तु सद्यो न्यासोत्तरमेव संकल्प्य सर्वतोभद्रमण्डलं पूजयेत् । तत्र सर्वतोभद्रे पञ्चकं न्यसेदित्यन्वयः ॥१५१॥

कूर्चस्थापनं मध्यकुम्भस्यैवाधो नान्यत्र । एवं कलशानामुक्तमान मध्यकलशस्यैवावश्यकम् । तदुक्त त्रिपुरार्णवे—'कलशो द्रोणजलयुक् तदर्धः पाद एव वा । समाः सर्वे मध्यमो वा प्रोक्तमानेन संयुतः ॥'' इति । सर्वं पञ्चधान्यराशिपञ्चकम् । एकम् एकरूपम् । देवतापीठात्मकं ध्यात्वा । ततः पीठपूजां कृत्वा कलशस्थापनादिजलापूरणान्तं कृत्वा ॥१५२॥

पञ्चपल्लवांश्चेति चकारेण दूर्वापल्लवयोः प्रागुक्तत्व द्योतितम् । मुखे कलशानां मुखे । कलशमुखेषु चणकस्थापनादि प्रतिमास्थापनान्तं कृत्वा । वेदिकायाः पश्चिमदिशि । उपचारपूजान्तम् ॥१५३॥

पूर्वतः पूर्वकलशमारभ्य । तत्र पूजनीया देवता आह—पूर्वेत्यादि । शुद्धविद्यामर्चयेदित्यन्वयः ॥१५४॥

पूर्वाम्नायस्य समयां दक्षे वामेऽग्रतोऽर्चयेत् ।
सौभाग्यविद्यां वाराहीं तिरस्करणिकां तथा ॥१५५॥

लोपामुद्रां च भुवनामन्नपूर्णां तथैव च ।
तुरीयां वै महार्घां च अश्वारूढां तथार्चयेत् ॥१५६॥

दक्षिणाद्युत्तरान्तेषु कलशेषु क्रमाद्यजेत् ।
तत्तत्समयविद्यां च तत्तदग्रे महेश्वरि ॥१५७॥

मध्यकुम्भे तु देवेशि पराप्रासादरूपिणीम् ।
परां पराशाम्भवीं च दक्षे वामे च पूजयेत् ॥१५८॥

षोडशीमग्रतः पूज्य तदग्रे समयां ततः ।
तदग्रेऽनुत्तराख्यां च समयां पूजयेत् क्रमात् ॥१५९॥

उपचारैः षोडशभिस्तत्तत्कुम्भान् स्पृशन् जपेत् ।
पूर्वादिक्रमतो देवि पूर्वाम्नायाद्यनुक्रमात् ॥१६०॥

---

मध्ये शुद्धविद्यां तस्याः दक्षे बालां वामे मन्त्रिणीं राजमातङ्गीम् अग्रतः समय-देवताम् इति क्रमः । सर्वत्र कलेषु देवताचतुष्टयस्यायमेव क्रमः । दक्षिणकलशदेवता आह—सौभाग्येति । तथा पूर्वक्रमेण ॥१५५॥

पश्चिमकलशदेवता आह—लोपामुद्रेति । भुवना भुवनेश्वरी । उत्तरकलशदेवता आह—तुरीयेति ॥१५६॥

दक्षिणकलशाद्युत्तरकलशान्तेषु सौभाग्यविद्यादिकं त्रयं त्रयं मध्यदक्षवाम-क्रमाद्यजेत् । दक्षिणाम्नायादितत्तत्समयविद्यां सौभाग्यविद्यादितत्तन्मध्यदेवताग्रे यजेत् ॥१५७॥

मध्यकलशे विशेषमाह—मध्यकुम्भेति । मध्ये पराप्रासादाम् । तद्दक्षे वामे परां पराशाम्भवीम् ॥१५८॥

पराप्रासाद्यग्रे षोडशीम् । तदग्रे षोडश्यग्रे । ऊर्ध्वाम्नायसमयाम् । तदग्रे उर्ध्वाम्नायसमयाग्रे कलशपञ्चकस्थाः सर्वा देवता मध्यकलशस्थमुख्यदेवताभिमुखाः । तदुक्तं त्रिपुरार्णवे—"कलशान्तरदेव्यश्च मुख्यदेव्यास्तु संमुखाः" इति ॥१५९॥

षोडशभिरुपचारैः क्रमात् पूजयेदिति सम्बन्धः । तत्पूजनं समष्ट्या व्यष्ट्या वा । तदुक्तं त्रिपुरार्णवे—"समष्ट्या वापि संपूज्य प्रत्येकं कलशेषु वै" इति । ततः पूर्वादि-क्रमात्तत्तत्कुम्भं स्पृशन् पूर्वाम्नायाद्यनुक्रमेण तत्तदाम्नायमन्त्रान् जपेत् ॥१६०॥

मध्यमे कलशे देवि ऊर्ध्वं चानुत्तराह्वयम् ।
नित्याः पञ्चकविद्याश्च समयाख्याश्च सुन्दरि ॥१६१॥

गायत्रीश्च प्रजप्याथ सर्वत्रैकां विभाव्य च ।
महोपचारैः संपूज्य चक्रेऽथावृतिमर्चयेत् ॥१६२॥

कुम्भेषु मुख्यदेवीस्तु श्रीतीर्थेन त्रिधा यजेत् ।
दर्व्युद्धृतविशेषार्घ्यतीर्थेन परमेश्वरि ॥१६३॥

अङ्गदेवीश्च तन्मन्त्रैस्तर्पयेत् कलशेषु वै ।
समष्टिरूपां तां देवीमष्टोत्तरशतं तथा ॥१६४॥

तिथिनित्यां समष्ट्या च विधयाऽग्नौ प्रपूज्य ताम् ।
नाडीसंधानहोमान्तं कृत्वा देवेशि वै क्रमात् ॥१६५॥

तिथिनित्यां षोडशीं च ततः सप्तदशीं तथा ।
गुरुत्रयादिकं हुत्वा पादुकामनुनापि च ॥१६६॥

---

उर्ध्वम् ऊर्ध्वाम्नायमन्त्राननुत्तरमनुत्तराम्नायमन्त्रान् । पञ्चकविद्याः पञ्चपञ्चिका विद्याः कामेश्वर्यादिचतुःसमयाः ॥१६१॥

तुर्यवाग्भवकामराजशक्त्याख्याश्चतस्रो गायत्रीः, त्रिभिश्चकारैश्चक्रेश्वरी-संजीवनीदीपिनीनां मन्त्रदीक्षोक्तानां समुच्चयः । सर्वत्र श्रीचक्रे कलशेषु च । एकाम् एकरूपां देवताम् । अथ महोपचारपूजानन्तरम् । श्रीचक्रे आवृतिमर्चयेत् ॥१६२॥

कुम्भेषु पूजिता मुख्यदेवीः शुद्धविद्याद्या मध्यदेवताः । मध्यकलशे पराप्रासाद-विद्या षोडशी चेति द्वयम् । श्रीपात्रतीर्थेन यजेत्तर्पयेत् । दर्व्युद्धृतेन । विशेषार्घ्येति पात्र-त्रयाभिप्रायम् । श्रीपात्रतीर्थेनेत्यर्थः । अङ्गदेवीर्यजेदित्यन्वयः ॥१६३॥

अङ्गदेवीः बालाद्याः प्रतिकलशं तिस्रः । मध्यकलशे चतस्रः परितः पूजिताः । तन्मन्त्रैस्तत्तन्मन्त्रैः । सकृत्तर्पयेत् । सर्वत्रैकरूपेण समष्ट्या स्थितां देवतां ध्यायन् श्रीतीर्थेनाष्टोत्तरशतवारं संतर्प्य ॥१६४॥

ततो नैवेद्यादि कृत्वा अग्निस्थापनाद्यग्नौ देवतापूजनान्तं कृत्वा । अग्नौ तिथि-नित्या मन्त्रिण्यः । तिथिनित्यां योगिनीसमष्टिविद्यया मूलदेवतां च पुष्पाक्षतैः संपूज्य । तत अग्नौ देवतातर्पणादिनाडीसन्धानहोमान्तं कृत्वा ॥१६५॥

षोडशीं सप्तदशीं च नित्याम् । गुरुत्रयादिकमित्यादिना षडङ्गाद्यावरणं गुरुत्रय-होमोऽत्र परमेष्ठ्यादीत्यग्रे वक्ष्यते । पादुकामनुना त्रिर्हुत्वेत्यन्वयः ॥१६६॥

त्रिर्हुत्वा चरुणा देवि ततो दूर्वादिकं हुनेत् ।
व्याहृत्या होमतः पूर्वं शिष्यस्य तु महेश्वरि ॥१६७॥
तन्मूर्ध्नि श्रीचक्रराजं ध्यात्वा मार्गेण नेत्रयोः ।
हृदि प्रविश्य चैतन्यमाकृष्य स्वात्मयोजितम् ॥१६८॥
कृत्वा षडध्वशुद्धिं वै कुर्याद् देवि समाहितः ।
पादादिकटिपर्यन्तं नाभ्यन्तं हृदयान्तकम् ॥१६९॥
ललाटमूर्धरन्ध्रान्तं शिष्यदेहे न्यसेत्ततः ।
षडध्वविद्यां प्रजपन् कूर्चेनैव तु संस्पृशेत् ॥१७०॥
कलां तत्त्वं च भुवनं वर्णं पदमपि क्रमात् ।
मन्त्रं च विन्यसेद् देवि तन्मन्त्रान् शृणु संयता ॥१७१॥
मायां रमां नभश्चादौ त्रिबीजं सर्वतो भवेत् ।
शक्तिबीजं रमाबीजं विद्या सौभाग्यसंज्ञिता ॥१७२॥
कामराजं वाग्भवं च माया चेति त्रिबीजकम् ।
नामाध्वश्रीपादुकां च पूजयामीति वै वदेत् ॥१७३॥

---

मूलदेव्यै चरुहोमानन्तरं चरुणा पादुकां त्रिर्हुत्वा ततो दूर्वादिकं यथोक्तसंख्यं हुनेत् । ततः शिष्यस्य नेत्राञ्जनान्तं कृत्वेति शेषः ॥१६७॥

तन्मूर्ध्नि शिष्यमूर्ध्नि । शिष्यस्य चैतन्यं ज्ञानशक्तिम् । स्वात्मनियोजितं कृत्वेत्यन्वयः । एतच्च भावनया कर्तव्यम् ॥१६८॥

षडध्वशुद्धिमेवाह—पादादीति ॥१६९॥

तत इदं प्रतिस्थानमन्वेति । तेन पादादिकटिपर्यन्तम् । ततः कटिस्थानात् नाभ्यन्तम् । ततो नाभेर्हृदयान्तमित्याद्यर्थः । मूर्धा मस्तकम् । रन्ध्रं ब्रह्मरन्ध्रम् । न्यासप्रकारमाह—षडध्वेत्यादि ॥१७०॥

अध्वनामान्याह—कलामित्यादि । तन्मन्त्रान् कलाद्यध्वमन्त्रान् ॥१७१॥

माया ह्रीं । रमा श्रीम् । नभः हं । एतत्त्रिबीजम् । सर्वतः सर्वेषां मन्त्राणामादौ । शक्तिबीजं सौः । रमोक्ता सौभाग्यविद्या ॥१७२॥

कामराजं क्लीं वाग्भवं ऐं । मायोक्ता इति षडध्वबीजानि । अथ न्यासमन्त्रानाह—त्रिबीजेत्यादि । त्रि उक्तबीजत्रयं ह्रीं श्रीं हं इति । बीजकं अध्यबीजं सौः । नामकला ।

कूर्चेन संस्पृशन् शिष्यं घृताक्तैश्च तिलैर्हुनेत् ।
मध्यमानामिकाङ्गुष्ठैस्तत्तन्मन्त्रं पठन् शिवे ॥१७४॥
अध्वानं शोधयामीति शिरोऽन्तेन हुनेच्छिवे ।
अष्टधा प्रतिमन्त्रं वै कुर्यादध्वविलापनम् ॥१७५॥
मन्त्रं पदे पदं वर्णे भुवनं तत्त्वके शिवे ।
तत्कलायां तां च वर्णे तं विसर्गेऽप्यनन्तरे ॥१७६॥
तं तमात्मनि देवेशि विलाप्योत्पादयेत् क्रमात् ।
अध्वशोधनकं कुर्यादेवं शिष्याङ्गभावनात् ॥१७७॥
ततः स्वात्मयुतं शिष्यचैतन्यं नेत्रमार्गतः ।
निर्गत्य तद्ब्रह्मरन्ध्राद्हृदि संस्थापितं स्मरेत् ॥१७८॥
एवमुद्वासनान्ते तु परिधींश्च परिस्तरान् ।
प्रास्याग्नौ मूलमन्त्रेण परिषिच्य प्रणीतिकाम् ॥१७९॥

---

अध्वेत्यादि पूजयामीत्यन्तं स्वरूपम् । एवं च ह्रीं श्रीं हं सौः कलाध्वश्रीपादुकां पूजयामि । ह्रीं श्रीं हं श्रीनित्वाध्वश्रीत्यादि ॥१७३॥

ततः हुनेत् । मध्यमानामिकाङ्गुष्ठैर्गृहीतैस्तिलैः । तत्तदध्वमन्त्रम् ॥१७४॥

मन्त्रे विशेषमाह – अध्वानमिति । शिरोन्तेन स्वाहान्तेन । अध्वश्रीत्यादिस्थाने । अध्वानं शोधयामि स्वाहेति प्रतिमन्त्रं प्रत्यध्वमन्त्रम् । अष्टधा हुनेत् । ततोऽध्वविलापनम् ॥१७५॥

तत्प्रकारमाह—मन्त्रमित्यादि । तत् तत्त्वम् । तां कलां तं वर्णम् । अपिना विसर्गमनन्तरे अनुत्तरे । मन्त्राः पदमयाः । पदानि वर्णमयानि । भुवनानि तत्त्वमयानि । तत्त्वानि कलामयानि । कला वर्णमयी । वर्णा विसर्गमयाः । विसर्गोऽनुत्तरमयः । इति कार्यस्य कारणमयत्वात्कारणमेव कार्यमिति चिन्तनं विलापनमिति भावः ॥१७६॥

एकं तमिति विसर्गविशेषणम् । तम् अनुत्तरमकारमात्मनि । उत्पादनं पृथक्त्वेन भावनम् । क्रमाद् आत्मनोऽनुत्तरोऽनुत्तराद्विसर्ग इति क्रमात् । शिष्याङ्गे एवं भावनेनाध्वशोधनं कुर्यात् ॥१७७॥

स्वनेत्रमार्गतः । तस्य शिष्यस्य ब्रह्मरन्ध्रमार्गात् ॥१७८॥

ततो व्याहृतिहोमाद्यग्न्युद्वासनान्तं समापयेद् होमविधिमिति । सूचितोत्तरतन्त्रमाह—एवमित्यादि । प्रास्य निक्षिप्य । प्रणीतिकां प्रजप्येत्यन्वयः ॥१७९॥

तोयं दत्वा चामृतेश्या सप्तधा जप्य निक्षिपेत् ।
दिक्षु तोयं पुरश्चापि प्रोक्ष्य तेन सशिष्यकम् ॥१८०॥
ब्रह्माणमुद्वास्य होमं देवतायै समर्पयेत् ।
एवं तद्दिनकृत्यं तु निर्वर्त्य परमेश्वरि ॥१८१॥
निवृत्तनित्यकृत्यस्तु परेद्युर्गुरुपुङ्गवः ।
तथाभूतं द्वारदेशे शिष्यमाहूय दैशिकः ॥१८२॥
आगच्छ पुत्र तेऽभीष्टं किमस्ति कथयस्व नः ।
रहस्यं कथयाम्यद्य न कस्यापि प्रकाशय ॥१८३॥
कृताञ्जलिरथो शिष्यो वदेद् भक्तिसमन्वितः ।
भो स्वामिन् सर्वधर्मज्ञ तथा मां न विचारय ॥१८४॥
चित्प्रकाशं तु यन्मार्गं तन्मे ब्रूहि गुरूत्तम ।
प्रणमेदिति विज्ञाप्य ततश्चान्तर्विशेत् सह ॥१८५॥
कलाभिर्न्यस्य तस्याङ्गे पूजां शक्त्यन्तिकां चरेत् ।
ततः शिष्यं दीक्षयेद्धि सा च सप्तविधा भवेत् ॥१८६॥

---

प्रणीतायां जलं किञ्चिद्दत्त्वा । प्रणीतातोयं प्रागादिदिक्षु निक्षिप्य पुनः पात्रपुरतो निक्षिप्य पुरो निक्षिप्ततोयेन सशिष्यं स्वात्मानं प्रोक्षयेत् ॥१८०॥

ततो होमे पूजितं ब्रह्माणं दक्षिणाद्यैः संतोष्योद्वास्य । एवं सामयिकपूजादि-स्वापान्तं तद्दिनावशेषकृत्यम् ॥१८१॥

तथाभूतं निवृत्तनित्यक्रियम् । दीक्षामण्डपद्वारदेशे ॥१८२॥

आह्वानमन्त्रमाह—आगच्छेत्यादि ॥१८३॥

भो स्वामिन्निति वक्ष्यमाणं वदेत् । तथा किमस्तीत्यादि ॥१८४॥

चित्प्रकाशमार्गं ज्ञानमार्गम् । शिष्येण सह । अन्तः मण्डपान्तः ॥१८५॥

अष्टत्रिंशत्कलाभिः । तस्य शिष्यस्य । शक्त्यन्तिकां सुवासिनीपूजापर्यन्ताम् । सा पूर्णदीक्षा ॥१८६॥

वर्णदीक्षा कलास्पर्शवाग्दृग्वेधाख्यकाः शिवे ।
मन्त्रदीक्षेति देवेशि तत्रादौ वर्ण उच्यते ॥१८७॥

शिष्यदेहे मातृकाया उत्पत्तिं भाव्य चान्तरे ।
तत्तत्स्थाने च वर्णान् वै विभाव्यान्ते तु मातृकाम् ॥१८८॥

शिष्यायोपदिशेद्देवि वर्णदीक्षा समीरिता ।
पादादिजानुनाभ्यन्तं कण्ठफालबिलान्तकम् ॥१८९॥

निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं महेश्वरि ।
शान्त्यतीतां हृदन्तां तु न्यसेदैक्यं स्मरन् गुरुः ॥१९०॥

विलापयेन्निवृत्त्यादिशान्त्यतीतां परात्मनि ।
तदुत्पत्तिं भावयन् वै कूर्चेनाङ्गं स्पृशेत् क्रमात् ॥१९१॥

कलादीक्षेयमाख्याता स्पर्शदीक्षामथो शृणु ।
दक्षपाणितले देवि गुरुं ध्यात्वा शिवात्मकम् ॥१९२॥

---

तासां नामान्याह—वर्णेत्यादि । कलादिवेधान्तपश्चाख्या यासाम् । तत्र सप्तविधा दीक्षा पूर्णसमुदायात्मकपूर्णदीक्षायाम् ॥१८७॥

मातृकान्यासस्यादावुक्तरीत्या मातृकोत्पत्तिम् । आन्तरे तत्तन्मातृकास्थाने । मातृकामुपदिशेदित्यन्वयः । अत्र मातृका प्रोक्तत्रिपश्चाशदक्षरविद्या ॥१८८॥

कलादीक्षामाह—पादादीत्यादि । अत्र पादादिजान्वन्तं जान्वादिनाभ्यन्तं नाभ्यादिकण्ठान्तमित्यर्थः । 'पादाज्जान्वन्तकं तस्मान्नाभ्यन्तं तत आगलम् । ततः फालान्तकं तस्माद् ब्रह्मरन्ध्रान्तकं न्यसेत् ॥'' इति त्रिपुरार्णवोक्तेः ॥१८९॥

हृदन्तां नमोन्तां निवृत्तिकलायै नम इत्यादि । तत्तत्कलास्थानयोरैक्यम् ॥१९०॥

निवृत्तिं प्रतिष्ठायां प्रतिष्ठां विद्यायामिति क्रमेण शान्त्यतीतां परमात्मनि विलापयेत्तादेकीभूतं चिन्तयेत् । ततः परमात्मनः शान्त्यतीतादिनिवृत्त्यन्तानां पृथग्भवनचिन्तनात्मकमुत्पत्तिम् । शिष्याङ्गं स्पृशेत् ॥१९१॥

गुरुः स्वदक्षपाणितले ॥१९२॥

जपन्मूलं षडङ्गं च मातृकां मस्तके क्षिपेत् ।
शिवे चित्तं समाधाय तदुद्भूतान् मनून् स्मरन् ॥१९३॥
स्वात्मानं तन्मयंध्यायन् मन्त्रानुपदिशामि वै ।
शिष्यं प्रति वदेदेवं वाग्दीक्षेयं समीरिता ॥१९४॥
नेत्रे निमील्य मन्त्रात्मरूपिणीं देवतां स्मरन् ।
निरालम्बः क्षणं पश्चात् प्रसन्नेन च चेतसा ॥१९५॥
दिव्यदृष्ट्याऽऽलोकयेत्तं दृग्दीक्षेयं समीरिता ।
गुरुः शिष्यस्य देवेशि नेत्रमार्गात् प्रविश्य तु ॥१९६॥
आधारस्थां कुण्डलिनीं तद्दलस्थितशक्तिभिः ।
लघुषोढान्यासजालप्रोक्ताभिः परमेश्वरि ॥१९७॥
गणेशेन तु संयोज्य सुषुम्णावर्त्मना पुनः ।
स्वाधिष्ठाने ब्रह्मणा तच्छक्तिभिः पुनरेव च ॥१९८॥
मणिपूरे विष्णुना तच्छक्तिभिश्चाप्यनाहते ।
रुद्रेण तच्छक्तिभिश्च विशुद्धौ शक्तिभिः सह ॥१९९॥

---

मूलंसौभाग्यविद्या। षडङ्गं नमः स्वाहेत्यादि। पाणितलं शिष्यस्य मस्तके क्षिपेत्। वाग्दीक्षामाह—शिवेत्यादि। तदुद्भूतान् शिवोद्भूतान् मन्त्रान् ॥१९३॥

तन्मयं शिवमयम्। उपदिशामीति वदेत् ॥१९४॥

दृग्दीक्षामाह—नेत्रे इत्यादि। मन्त्ररूपिणीं स्वात्मरूपिणीं देवतां मन्त्रस्वात्माभिन्नामित्यर्थः। क्षणं स्थित्वा ॥१९५॥

दिव्यदृष्टिः मन्त्राद्यभेदभावनसहितैव। वेधदीक्षामाह—गुरुरित्यादि ॥१९६॥

तद्दलम् आधारकमलदलम्। लघुषोढान्यासः प्रोक्तस्तन्त्रान्तरे। वरदाद्यावर्णशक्तयः ॥१९७॥

आधारस्थितगणेशेन तद्दलस्थशक्तिभिर्युक्तां कुण्डलिनीं संयोज्येत्यर्थः। सुषुम्णावर्त्मना स्वाधिष्ठानादौ क्रमेण गणेशादीन्नीत्वा तत्तत्कमलेऽन्तर्मातृकान्यासोक्ततत्तद्वर्णशक्तिभिर्युतान् गणेशादीन् ब्रह्मादिभिश्च संयोज्य ततः परमशिवे गुरौ संयोजयेदिति श्लोकचतुष्टयार्थः ॥१९८-१९९॥

जीवेन पुनराज्ञायां शक्तिभ्यां परमात्मना ।
संयोज्य परमात्मानं बिन्द्वादिषु क्रमान्नयेत् ॥२००॥

ब्रह्मरन्ध्रे चन्द्रबिम्बमध्यस्थे परमे शिवे ।
गुरौ संयोज्य तस्माद्वै गलत्पीयूषवर्षतः ॥२०१॥

आप्लाव्य शिष्यदेहं तु पुनः परशिवाच्छिवे ।
उत्पाद्य देवतावृन्दं क्रमात् स्थानेषु स्थापयेत् ॥२०२॥

इति वेधमयी दीक्षा मन्त्रदीक्षामथो शृणु ।
आद्यन्ताभ्यां पूज्य कुम्भे प्रागादिक्रमतः शिवे ॥२०३॥

तथाभिषिच्योपदिशेदाम्नायानां तु पञ्चकम् ।
पीठे प्राङ्मुखमावेश्य कशानां तु पञ्चकम् ॥२०४॥

सुवासिनीभिरानीतं गृहीत्वा क्रमतः शिवे ।
मुखस्थपल्लवान् मूर्ध्नि स्थाप्याद्यन्तमनुं पठन् ॥२०५॥

---

हक्षवर्णयोः शक्तिभ्याम् । बिन्द्वर्धचन्द्रादिमहाबिन्द्वन्तस्थानेषु । तत्र तत्स्थितानेक-शक्तिदेवतासहितं परमात्मानम् ॥२००॥

शिवाभिन्ने गुरौ वर्षत आप्लाव्येत्यन्वयः ॥२०१॥

देवतावृन्दं तत्तद्वर्णशक्तिकुण्डलिनीपरमात्मादिदेवतासमूहम् । क्रमात् पूर्वक्रम-वैपरीत्येन सुषुम्णामार्गेणावरोहक्रमात् । स्थानेषु आज्ञादिचक्रेषु ॥२०२॥

इति वेधदीक्षा भावनया कर्तव्या । तत्तदाम्नायाद्यन्तविद्याभ्याम् ॥२०३॥

तथा आद्यन्ताभ्याम् । पूर्वकलशे शुद्धविद्यापूर्वाम्नायसमयविद्याभ्यां पुष्पाञ्जलिं दत्वा तथा ताभ्यां तत्तत्कलशोदकेन तत्तत्पल्लवोद्धृतेनाभिषिच्य पूर्वाम्नायमुपदिशेत्। एवं दक्षिणादिमध्यान्तकलशादभिषिच्योर्ध्वाम्नायान्तमुपदिशेत् । पीठं च रङ्गवल्ल्यादि-शोभितं कर्तव्यम् । तदुक्तं रहस्यार्णवे—"मण्डपादीशकोणे वाऽप्यन्यस्मिन्नपि वा दिशि। रम्भास्तम्भैर्युतं पीठं रङ्गवल्ल्यादिशोभितम् ॥" इति । शिष्यमावेश्य । पञ्चकमानीत-मित्यन्वयः ॥२०४॥

गुरुः कलशान् पूर्वादिक्रमेण गृहीत्वा । शिष्यमूर्ध्नि । तत्तदाम्नायाद्यन्त-मनुम् ॥२०५॥

अभिषिच्यानुत्तराख्यसमयां षोडशीमपि ।
पठन् मध्यस्थकुम्भेन कुर्यात्तस्याभिषेचनम् ॥२०६॥
धृतवस्त्रं त्रिपुण्ड्रं तं शुद्धं देवीसमीपतः ।
पारम्पर्यं चोपदिश्य पञ्चमुद्रादिपूर्वकम् ॥२०७॥
संघट्टमुद्रान्यासेन पादुकामुपदेशयेत् ।
दृष्टिबन्धनपूर्वं तु ततस्तं विसृजेच्छिवे ॥२०८॥
दीक्षयित्वा महावाक्यान्यपि गायत्रिकास्तथा ।
उपयुक्तं मन्त्रगणं तथाशेषं महेश्वरि ॥२०९॥
तथा मुद्रामन्त्रगणं ततो दृष्टिं तु बन्धयेत् ।
महाश्रीषोडशीं पश्चादुपलक्ष्य विसर्जयेत् ॥२१०॥

---

अपिना पराप्रासादोर्ध्वाम्नायसमययोर्ग्रहणम् । तेन मध्यकलशाभिषेके पराप्रासादोर्ध्वाम्नायसमयाषोडश्यनुत्तराम्नायसमयानां पाठः । तस्य शिष्यस्य ॥२०६॥

तं शिष्यम् । शुद्धं कृताचमनं समाहितान्तःकरणं च समीपतः पूर्ववदुपवेश्य । पारम्पर्यं चेति चकारात् पूर्वतनानामनुत्तराम्नायमन्त्राणां समुच्चयः । तेन पारम्पर्यान्तमनुत्तराम्नायमुद्दिश्येति सिद्धम् । पारम्पर्यं नाम आदिनाथेत्याद्येकोनत्रिंशद्गुरुनामानि वक्ष्यमाणानि गुरुपञ्चमुद्राद्युपदेशपूर्वकम् । आदिना महापादुकान्याससंग्रहः॥ २०७॥

न्यासेन सह । उपदिशेत् । पूर्ववद् दृष्टिबन्धनपूर्वकमुपदेशः। तं दृष्टिबन्धम् ॥२०८॥

दीक्षयित्वा उपदिश्य महावाक्यान्यपीत्यपिना रहस्यविद्यादीनां संग्रहः । तथा कलशे प्रजप्तरीत्या नित्यादिमन्त्रान्ते गायत्रिकाः । एवं तथा कलशे प्रजप्तक्रमेण उपयुक्तं मन्त्रगणमुपदिश्येति शेषः । उपयुक्तं कलशे जपे नियोजितं मन्त्रगणं नित्यापञ्चपञ्चिकादिकम् । पाशुपतास्त्रवासुदेवादिमन्त्राणामुपदेशाभावोऽनुक्तेः । अन्यथोपयुक्ताखिलमन्त्रोपदेशविवक्षणे कालनित्याद्यखिलपारायणन्यासाद्युपयुक्तमन्त्राणामुपदेशः प्रसज्येतेति ज्ञेयम् । शेषं गुरूक्तमार्गादाधारादिष्टाराध्यपराम्बिकामिति षोडशे वक्ष्यमाणान्तःपूजाप्रकारम् ॥२०९॥

तथा मन्त्रगणम् । मुद्राः सर्वसंक्षोभिण्याद्यास्त्रयोदश चोपदिश्य । अत्र पद्धतौ शङ्खादिषोडशमुद्राश्चोक्तास्ता मूलतन्त्रानुक्ता अपि—"शङ्खं चक्रं गदां खड्गं पद्मं योनिं त्रिशूलकम् । तार्क्ष्यं धेनुं च डमरुं शार्ङ्गं नाराचकौस्तुभौ ।। श्रीवत्सं मुसलं चेति पञ्चदश्याः प्रदर्शयेत् । त्रिखण्डया युताश्चेमाः षोडश्यास्तु प्रदर्शयेत् ॥" इति त्रिपुरार्णवोक्ताः स्वसंप्रदायानुरोधेनोक्ताः । उच्चारमकुर्वन्नुपलक्ष्य सूचयित्वा ॥२१०॥

दृष्टिबन्धं गुरून् ज्येष्ठान् क्रमेण प्रणमेच्छिवे ।
ततः सामयिकान् पूज्य तर्पयेद्विधिना ततः ॥२११॥
स्पर्शयित्वा तदङ्गं वै तत्स्थानाद्यक्षरं यथा ।
द्व्यक्षरं त्र्यक्षरं वापि चतुरक्षरमेव वा ॥२१२॥
आनन्दनाथ चरममम्बान्तं योषितां तथा ।
नाम कृत्वा तेन मूले संतर्प्यात्मानमीश्वरि ॥२१३॥
समर्प्य शक्त्यै तां पूज्य भूषावस्त्रादिभिः शिवे ।
नत्वा शेषं समादाय हुनेत्तत्र विधानतः ॥२१४॥
प्रक्षाल्य स्वर्णरत्नादिभरितं गुरवेऽर्पयेत् ।
ततः समर्पयेत् सर्वं भक्त्या सर्वांश्च पूजयेत् ॥२१५॥
दीक्षाविधिरिति प्रोक्तो भूयः किं श्रोतुमिच्छसि ।
इति श्रीपरमानन्दतन्त्रे दीक्षाविधिर्द्वादशोल्लासः ॥१२॥

---

दृष्टिबन्धं विसर्जयेदिति सम्बन्धः । ततः शिष्यः गुरुज्येष्ठान् गुरुं ज्येष्ठांश्चेति क्रमेण प्रणमेत् । ततो गुर्वादिपूजान्ते । आचार्यः सामयिकपूजान्ते शिष्याय पात्रं दत्त्वा वक्ष्यमाणविधिना तर्पणं कारयेत् ॥ २११ ॥

हृदि देवतातर्पणान्ते तस्य शिष्यस्य यत् किञ्चिदङ्गं तेनैव स्पर्शयित्वा मातृकान्यासोक्ततत्स्थानाक्षराद्यं यथा भवति तथा द्व्यक्षरादिकं नाम कृत्वेत्यन्वयः ॥ २१२ ॥

पुंसामानन्दनामान्तं स्त्रीणामम्बान्तं नाम । यथा दक्षकर्णस्पर्शे तदक्षरमुक्त्वा तदाद्यमुमानन्दनाथः, उमाम्बा इति नाम । नाम कृत्वेति पदस्वारस्यादाचार्येण नाम्ना त्वमुमानन्दनाथोऽसीति वक्तव्यमिति भाति । तेन कृतनाम्ना । मूले मूलाधारे । आत्मानम् आत्मपादुकाम् ॥२१३॥

तत्पात्रं समर्प्य । तां शक्तिम् । शेषं शेषपात्रम् । वक्ष्यमाणविधानतः ॥ २१४॥

पात्रं प्रक्षाल्य ततः पूजासमाप्त्युत्तरम् । उपसंहरति—दीक्षाविधिरिति । षट्चरणश्लोकः । यद्यपि वर्णदीक्षादिसप्तकं सौभाग्यरत्नाकरादिषु नैकस्योक्तम्, किन्तु तत्तद्दीक्षादावधिकारिणः पृथङ्निर्दिष्टाः, तथापि पूर्णदीक्षायामत्र तन्त्रे सप्तविधानामुक्तेर्न दोषः ॥ २१५ ॥

सौभाग्यानन्दसंदोहे मकरीपद्यबोधकः ।
परमानन्दटिप्पण्यां द्वादशोल्लासकोऽभवत् ॥



## त्रयोदशोल्लासः

**श्रीदेवी उवाच—**

भैरव श्रोतुमिच्छामि परकूर्मविधिं तथा।
पञ्चगव्यविधिं पञ्चमृत्तिकां पञ्चरत्नकम्।
अग्निसिद्धिं च देवेश वद विस्तरतः स्फुटम् ॥१॥

**श्रीभैरव उवाच—**

शृणु देवेशि वक्ष्यामि यन्मां त्वं परिपृच्छसि।
मूत्रं शकृत्तथा क्षीरं दध्याज्यं पञ्चगव्यकम् ॥२॥
गायत्र्या गन्धद्वारर्चा आप्यायस्वेति चैकया।
दधिक्रेति तथा शुक्रमसीति च कुशोदकम् ॥३॥
देवस्य त्वेति मन्त्रेण मध्ये प्रागादिदिक्षु च।
ईशान्ये चापि संयोज्य तारेणालोच मध्य च ॥४॥
प्रणवेनोद्धृत्य पश्चात् कुशोपरि निधापयेत्।
गजाश्वस्थानवल्मीकराजद्वाःसङ्गमान् मृदः ॥५॥

---

दीक्षाविधावनुक्ता सूचिता प्रष्टुं देव्युवाचेति। चेति गुरुभक्तिलक्षणादिकम्। षट्चरणः श्लोकः ॥ १ ॥

उत्तरम्—भैरव उवाचेति। पञ्चगव्यमाह—मूत्रमित्यादि ॥ २ ॥

तद्योजनविधिमाह—गायत्र्येत्यादि। एकया ऋचा। गायत्र्यादिपञ्चमन्त्रैर्मूत्रादिपञ्चकम्। संयोज्येत्यन्वयः ॥ ३ ॥

देवस्य त्वेति मन्त्रेण कुशोदकमित्यन्वयः। मूत्रादिकुशोदकान्तानां षण्णां पात्रे निक्षेपस्थानविभागमाह—मध्ये इत्यादि। तारेण प्रणवेन कुशेनालोडनं मन्थनं च ॥ ४ ॥

पात्रमुद्धृत्य। पञ्चगव्यलक्षणं योगिनीतन्त्रे—"न ग्राह्यं च शकृन्मूत्रं दुर्गन्धयुतमीश्वरि। रुग्णाया अपि गोस्तद्वन्न पर्युंषितमेव च ॥ क्षीरादिकं विवत्सायास्तथा निःसृत-

रत्नानि माणिक्यमुक्ताविद्रुमस्वर्णरौप्यकाः ।
सद्योजातं मूलमपि पञ्चगव्ये च भस्मनि ॥६॥
पठेत् संविदि बालां च मातृकां त्र्यम्बकाष्टकम् ।
मूलाष्टकं क्रमाद् रक्षामृदोर्धेन्वादिकं तथा ॥७॥
पञ्चगव्ये संविदि च शोध्याश्चैवं मृदादिकाः ।
अथाग्निसाधनं वक्ष्ये शृणु देवेशि संयता ॥८॥
कुण्डादिकं वीक्षणाद्यैः संस्कृत्योल्लेखनं चरेत् ।
दक्षमध्योदक्षु पश्चात् प्रत्यङ्मध्येन्द्रदिक्षु च ॥९॥
दक्षिणाच्च हृदोल्लिख्य प्रोक्ष्य वाचा कुशोदकैः ।
विष्ण्वीशेन्द्रब्रह्मयमान् सोमं तत्र क्रमाद्यजेत् ॥१०॥

---

सारकम् । वैदिके विषमो भागस्तान्त्रिके सम उच्यते ॥ कर्षप्रमाणादन्यूनः पृथक् सर्वं प्रकल्पयेत् । कांस्यपात्रं तान्त्रिकाणामन्येषां ताम्रपात्रकम् ॥'' इति । पञ्चमृत्तिका आह—गजेत्यादि । राजद्वाः राजद्वारम् ॥ ५ ॥

रत्नानि पञ्चरत्नानि । पञ्चगव्यादेर्दीक्षोपयुक्तसंस्कारमाह—सद्योजातमित्यादि । पठेदित्यन्वयः ॥ ६ ॥

संवित् विजया । सा च सम्यग् लौकिकसंस्कारैः संस्कृता । तदुक्तं विजयाबृहत्कल्पे—''प्रक्षालनादिसंस्कारैर्हीना केवलसेविता । नाशयत्यचिरेणैव सेवमानं न संशयः ॥'' इति । संविदि बालां मातृकां च । त्र्यम्बकाष्टकं रक्षायां मूलाष्टकं मृदि । धेन्वादिचतुष्टयं पञ्च गव्ये संविदि चेत्यन्वयः ॥ ७ ॥

अग्निसाधनमग्निसिद्धिः ॥ ८ ॥

कुण्डादिकमित्यादिना स्थण्डिलम् । वीक्षणाद्यैः वीक्षणप्रोक्षणाद्यैर्नैवेद्योक्तैश्चतुर्भिः । उल्लेखनमेवाह—दक्षेत्यादि । दक्षिणमध्योत्तरेषु । पश्चात् पश्चिमतः । पूर्वान्तं प्रत्यगिति पश्चिममध्यपूर्वदिक्षु । दक्षिणादुत्तरान्तमित्यन्वयः ॥ ९ ॥

हृदा नम इति । वाचा ऐं इति । कुण्डादिकं प्रोक्ष्य । तत्र उल्लिखितरेखासु पुष्पाद्यैर्विष्ण्वादीन् क्रमाद् यजेत् ॥ १० ॥

मन्त्रानुक्तौ चाद्यबीजनाम्ना सर्वत्र वै यजेत् ।
स्वाग्रं त्रिकोणं द्वाराढ्यं चतुरस्रं लिखेच्छिवे ॥११॥
तत्र पीठं समभ्यर्च्य कामेशमिथुनं स्मरेत् ।
जपाकुसुमसच्छायमङ्कुशं पाशमेव च ॥१२॥
पुण्ड्रं चापं पुष्पशरान् बिभ्राणं पाणिपङ्कजैः ।
बालेन्दुशेखरं नेत्रत्रयशोभिमुखाम्बुजम् ॥१३॥
स्वसमाकारकामेशीसंश्लिष्टं हृदि भावयेत् ।
दत्त्वा पुष्पाञ्जलिं कामबीजं ताभ्यां नमोऽन्ततः ।१४॥
प्राणानायम्य तेनैव ऋष्यादिन्यासमाचरेत् ।
तत्र यन्त्रे समावाह्य प्राणस्थापनमाचरेत् ॥१५॥
ध्यायन् सकामां सपूज्य ताम्रे वा मृन्मयेऽथवा ।
अरण्याद्युद्भवं वापि श्रोत्रियागारतो हृतम् ॥१६॥

---

पूजामन्त्रानुक्तौ सामान्यमन्त्रमाह--मन्त्रेत्यादि । विं विष्णवे नम इत्यादि । कुण्डादिमध्ये स्वाभिमुखाग्रम् । त्रिकोणं बहिश्चतुरस्रम् । "कुशेन तत्र विलिखेत् त्रिकोणं भूपुरान्तरे" इति त्रिपुरार्णवोक्त्या कुशेन लेखनीयम् ॥ ११ ॥

तत्र यन्त्रे । मण्डूकादिपीठं समभ्यर्च्य । कामेशमिथुनं कामेश्वरं कामेश्वरीं च । ध्यानमाह--जपेत्य'दि ॥ १२ ॥

दक्षोर्ध्वाद्यधः पर्यन्तमायुधानि ॥ १३ ॥

कामबीजं क्लीम् । ताभ्यां कामेश्वरीकामेश्वराभ्यां नम इत्यन्ते इति पुष्पाञ्जलिम् । अत्र—"दद्यात्कामेश्वरीकामेश्वराभ्यां नम साञ्जलिम्" इति त्रिपुरार्णवानुरोधेनैकशेषाभावः ॥ १४ ॥

तेन कामबीजेन । मूलस्य ऋष्यादिपूजान्तम् । कामेश्वरमिथुनं यथोक्तविधिनाऽऽवाह्य । तयोः प्राणस्थापनम् ॥ १५ ॥

सकामां कामेश्वरीम् । पुष्पाक्षतैः संपूज्य । ताम्रादिपात्रे । अरण्यादित्यादिना सूर्यकान्तादिग्रहणम् । तदुक्तं योगिनीतन्त्रे—"सूर्यकान्ताच्च पाषाणादरणेर्वा विनिर्गतम्" इति । हृतमानीतम् ॥ १६ ॥

निर्धूममस्त्रेणादाय तस्मादङ्गारमेककम् ।
क्रव्यादांशं राक्षसे वै त्यजेदस्त्रेण शङ्करि ॥१७॥
वर्मणोऽथ समानेन पिधायाऽग्रे तु विद्यया ।
निधाय वीक्षणादीनि कृत्वा तारेण मन्त्र्य च ॥१८॥
अमृतीकरणादीनि कृत्वा जानुगतो भुवम् ।
तत्पात्रं त्रिर्भ्रामयित्वा स्थण्डिलोर्ध्वेऽथ ओमिति ॥१९॥
कामेश्वरीयोनिमध्ये स्मरन् कामेशबीजकम् ।
स्थापयेत् स्वाभिमुख्येन दद्यादाचमनं तयोः ॥२०॥
जठराग्निं नाभिदेशाच्छिवाग्नौ ब्रह्मरन्ध्रतः ।
संयोज्य बाह्ये चावाह्य मूलपाशाच्च सोहकम् ॥२१॥
वह्निचैतन्याय हृच्च चैतन्यं योजयेदिति ।
विक्षिपेदिन्धनादीनि प्रोक्षितानि स्मराह्वयात् ॥२२॥

---

अस्त्रेण फट् इति पात्रमादाय। राक्षसे निर्ऋतिकोणे। अस्त्रेण त्यजेत् ॥ १७ ॥ वर्मणा हुमिति। समानेन पात्रेण मूलविद्ययाग्रे निधाय। वीक्षणादीन्युक्तानि चत्वारि। तारेण ॐ इति। अभिमन्त्र्य ॥ १८ ॥

अमृतीकरणादीनि चत्वारि। जानुभ्यामवनिं स्पृशन्। तत्पात्रम् अग्निपात्रं परिहृताच्छादनं त्रिर्भ्रामयेत्। "विवृत्य भ्रामयेत् त्रिर्वै" इति त्रिपुरार्णवोक्तेः। ॐ इति स्थापयेदित्यन्वयः ॥ १९ ॥

बीजरूपमग्निं स्मरन्। पात्रस्य स्वाभिमुखमधोमुखीकरणेन कुण्डादावग्निं स्थापयेत्। तयोः कामेश्वरयोः ॥ २० ॥

ब्रह्मरन्ध्रे स्थितशिवाग्नौ। तं बाह्येऽग्नौ। मूलान्ते पाशः आं। तदन्ते सोऽहम् ॥ २१ ॥

वह्निचैतन्याय स्वरूपम्। हृत् नमः। इति वह्नावभिमन्त्रणेन। चैतन्यं योजयेत्। आदिना कुशांश्च। तन्निक्षेपे मन्त्रमाह—स्मरेति। स्मर इत्याह्वयो नाम यस्य क्लीं ॥ २२ ॥

वह्न्यन्ते मूर्तये हृच्च ज्वालां कुर्यात्तु मन्त्रतः ।
चित्पिङ्गलहनद्वन्द्वं दहद्वन्द्वं पचद्वयम् ॥२३॥
सर्वज्ञाज्ञापय शिरश्चतुस्तारमुखः शिवे ।
सान्तरेण च फूत्कृत्याथोत्थाय तु कृताञ्जलिः ॥२४॥
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥२५॥
इति प्रार्थ्योपविश्याथ प्राणायामोऽग्निविद्यया ।
वैश्वानर जातवेद इहावह च लोहिता ॥२६॥
क्ष सर्वकर्माणि साधय मूर्धाऽयं मनुर्भवेत् ।
षड्विंशत्यक्षरो देवि ऋषिर्वै भृगुरुच्यते ॥२७॥
गायत्री च्छन्द इत्युक्तं शमित्यादि न्यसेच्छिवे ।
अग्निं त्रिनेत्रमरुणं पद्मस्थं शुक्लवाससम् ॥२८॥
शक्तिपद्माभयवरहेमभूषायुतं स्मरेत् ।
अनेन प्राणानायम्य ऋष्यादीन् विन्यसेच्छिवे ॥२९॥

---

वह्निमूर्तये नम इति । ज्वालाकरणे मन्त्रमाह—चित्पिङ्गलेत्यादि । हन दह पच इति त्रयं द्विः ॥ २३ ॥

चित्पिङ्गलसर्वज्ञाज्ञापयेति स्वरूपम् । शिरः स्वाहा । अत्र चतुस्तारस्य मन्त्रावयवत्वान्न चतुस्तारान्तरयोगः । सान्तरेण वंशनलिकादिना फूत्कृत्य ज्वालयेत् । कृताञ्जलिः प्रार्थ्येत्यन्वयः ॥ २४ ॥

तत्र मन्त्रमाह—अग्निमित्यादि । विश्वतः सर्वतः ॥ २५ ॥

प्राणायामोऽग्निमन्त्रेण कर्तव्यः । तन्मन्त्रमाह—वैश्वानरेत्यादि ॥ २६ ॥

च इति त्यक्त्वा वैश्वानरेत्यादि साधयेत्यन्तं स्वरूपम् । मूर्धा स्वाहा । ऋष्यादिन्यासमाह—ऋषिरित्यादि ॥ २७ ॥

अग्निर्देवता होमे विनियोगश्च स्पष्टः । रां इत्यादि रं इत्यन्तैः षड्भिर्न्यासः । ध्यानमाह-अग्निमित्यादि ॥२८॥

दक्षोर्ध्वाद्यधःपर्यन्तमायुधानि । अनेन अग्निमन्त्रेण । अग्निमन्त्रस्य ऋष्यादीन् पूजान्तान् ॥२९॥

ततो वेद्युत्तरे भागे पात्राण्यासादयेच्छिवे ।
कुशेषु स्रुक्स्रुवौ चाज्यं चरुस्थाल्यौ प्रणीतिकाम् ॥३०॥
प्रोक्षणीं वै परिधिकां समित्पञ्चकमेव च ।
मेक्षणं घृतपात्रं च होमद्रव्याणि चेश्वरि ॥३१॥
अधोमुखानि पात्राणि कृत्वोत्तानानि प्रोक्षयेत् ।
प्रणीतापात्रमादाय क्षाल्याग्रे विन्यसेत् कुशे ॥३२॥
जलेनापूर्य गन्धाद्यैः पूज्य तत्रोदगग्रकम् ।
पवित्रं स्थाप्य चोत्पूय त्रिर्मध्येन तु पूर्वतः ॥३३॥
निक्षिप्योदकबिन्दुं वै तत्र दद्याद् घृतं शिवे ।
तत्पात्रं नासिकान्तं वै पाणिभ्यामुद्धरेत्ततः ॥३४॥
उदग्भागे कुशे स्थाप्य कुशैराच्छादयेच्छिवे ।
प्रोक्षण्यामेवमुत्पूय प्रणीताबिन्दुमर्पयेत् ॥३५॥
होमोपकरणान् प्रोक्ष्य त्रिभागोदकसंयुतम् ।
प्रणीतां पूर्वतः स्थाप्य कुशेषु परमेश्वरि ॥३६॥

---

ततः न्यासानन्तरम् । कुशेषु पात्राण्यासादयेत् । पात्राण्याह—स्रुग् इत्यादि । आज्यस्थालीं चरुस्थालीम् ॥३०॥

स्रुगादिप्रोक्षण्यन्तं षट् पात्राणि । परिधिकात्रयम् । परिध्यादिकमुक्तं योगिनीतन्त्रे—"पालाशं वापि वैल्वं वा परिधित्रयमुच्यते । हस्तमात्रं तु पालाशाः समिधो द्वादशाङ्गुलाः ॥" इति । मेक्षणं पष्ठी समित् । होमद्रव्याणि दूर्वादीनि ॥३१॥

अधोमुखेनासादितानि । अग्रे कुण्डात्मनोर्मध्ये ॥३२॥

तत्र प्रणीतायाम् । पवित्रं प्रादेशमात्रसाग्रकुशद्वयं मध्ये नागग्रन्थियुतम् । पवित्रमध्येन पात्रपूर्वत उदकबिन्दुं निक्षिप्येत्यन्वयः ॥३३॥

तत्र उदकबिन्दौ । तत्पात्रं प्रणीतापात्रम् । नासिकान्तं नासिकापर्यन्तम् ॥३४॥

कुण्डोदग्भागे । प्रोक्षणीपात्रे । एवं प्रणीतावद् आदानक्षालनादि । उत्पूय उत्पवनान्तं कृत्वा । प्रणीतोदकबिन्दुं प्रोक्षण्यामर्पयेत् । अत्र प्रणीताप्रोक्षण्याज्यस्थालीषु पवित्रं भिन्नग्राह्यम्, "पवित्रान्तरसंयुक्तप्रोक्षण्याः पूर्ववद्विधिः" इति त्रिपुरार्णवोक्तेः ॥३५॥

प्रोक्षणीजलेन होमोपकरणानि दूर्वादीनि प्रोक्ष्य । संयुतं तत्पात्रं कुशेषु संस्थाप्य ॥३६॥

मूलव्यष्टिसमष्टिभ्यां दक्षिणे पश्चिमे तथा ।
उत्तरे प्राक् समारभ्य परितः परिषेचयेत् ॥३७॥
कुशैश्चतुष्टयान्यूनैर्गर्भहीनैर्महेश्वरि ।
परिस्तरणकं कुर्यात् पूर्वपश्चिमयोः शिवे ॥३८॥
उदगग्रं दक्षिणोदग्दिशोः प्रागग्रमेव च ।
प्राक् पश्चिमाग्रे मूले च उदग्दक्षिणयोः स्थितिः ॥३९॥
पश्चिमे दक्षिणे सोमे परिधीनां त्रयं न्यसेत् ।
स्थूलं मध्यं तथा सूक्ष्मं परिस्तरणवच्छिवे ॥४०॥
विधिं विष्णुं रुद्रमपि पूज्य दक्षिणभागतः ।
ब्रह्माणं वृणुयाद्देवि ब्रह्मत्वेन च पूजयेत् ॥४१॥
अथवा कूर्चके ध्यायेत् पद्ममष्टदलं स्मरेत् ।
पीठशक्तीः प्राग्दलादिमध्यान्तं तत्र पूजयेत् ॥४२॥
पीता श्वेतारुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ।
रुचिश्च ज्वालिनी पश्चाद् बीजाद्यं च समष्टिकम् ॥४३॥

---

दक्षिणपश्चिमोत्तरेषु व्यष्टिमूलकूटत्रयेण । प्राचीमारभ्य परितः समष्ट्या संपूर्णेन मन्त्रिण्यादिदीक्षासु तन्न्यासबीजसमष्टिव्यष्टिभ्यां ज्ञेयम् ॥३७॥

प्रागादिक्रमेण चतुर्दिक्षु परिस्तरणं कुर्यात् । परिस्तरणस्थितिमाह—पूर्वेत्यादि ॥३८॥

पूर्वपश्चिमयोः परिस्तरणयोरुदगग्रम् । दक्षिणोत्तरयोः प्रागग्रम् । पूर्वपश्चिमयोरग्रोपरि उत्तरपरिस्तरणं तयोर्मूलोपरि दक्षिणपरिस्तरणम् इति परितरणस्य स्थितिः स्थापनम् ॥३९॥

सोमे उत्तरे परिस्तरणवत् प्रागुत्तरयोरग्रम् ॥४०॥

विधिं ब्रह्माणम् । दक्षिणपरिधिमारभ्य वचनबलादेव होमे द्वितीयब्रह्मवरणं ब्रह्माणं पूजयेत् ॥४१॥

अथवा ब्राह्मणाभावे । कूर्चके ब्रह्माणं ध्यायेत् । अग्नौ स्मरेत् । अग्नेः पीठशक्तिः । तत्र पद्मे ॥४२॥

ता आह—पीतेत्यादि । अरुणाबीजं रं । समष्टिकं षोडशोल्लासे वक्ष्यमाणम् । रं सर्वतत्त्वकमलासनाय ॥४३॥

ध्यात्वा तत्पीठके वह्निमावाह्याथो विधानतः ।
ताम्बूलान्तैः पूजयेद्वै जलपूजा बहिर्भवेत् ॥४४॥
अस्त्रक्षालितमाज्यस्य स्थालीं स्वपुरतो न्यसेत् ।
आज्यं निक्षिप्य युक्तायां पवित्रेणाथ शङ्करि ॥४५॥
वीक्षणाद्यैश्च संस्कृत्य त्रिः पठेन्मूलमन्त्रकम् ।
अमृतीकरणादीनि कृत्वा चोत्तरभागतः ॥४६॥
हृदाङ्गारेषु संस्थाप्य दर्भौ प्रज्वाल्य निक्षिपेत् ।
दग्धांशमाज्ये प्रज्वाल्य चान्यत्त्रिर्भ्राम्य वर्मतः ॥४७॥
पुनर्दर्भान् ज्वाल्य हृदा प्रदर्श्याग्नौ तु तान् क्षिपेत् ।
उदगुद्वास्य तेभ्यो वै कुण्डेऽङ्गारांस्तु निक्षिपेत् ॥४८॥
तोयं स्पृश्य स्वपुरतो निधायाज्यस्य पात्रकम् ।
उत्पूय कुशयुग्मेन मूलग्रन्थियुतेन च ॥४९॥
आज्यं त्रिधा विभाज्याथो स्रुक्स्रुवौ चाप्यधोमुखौ ।
अग्नौ कराभ्यां संताप्य कुशैः संमार्ज्य वै क्रमात् ॥५०॥

---

पूर्वोक्तवद् ध्यात्वा । विधानतः आवाहनादिमुद्राप्रदर्शनेन सह । तदुक्तं नित्यातन्त्रे—"वह्निं तत्र समावाह्य षण्मुद्राश्च प्रदर्शयेत्" इति । चतुःषष्टिभिः षोडशभिर्वोपचारैस्ताम्बूलान्तैः । तत्र पाद्यादिजलेन पूजा कुण्डाद् बहिः कर्तव्या ॥४४॥

क्षालितमिति पुंस्त्वमार्षम् । अस्त्रं फट् इति कुशेषु न्यसेत् । पवित्रेण युक्तायाम् ॥४५॥

वीक्षणाद्यैश्चतुर्भिः । अमृतीकरणादीनि चत्वारि ॥४६॥

कुण्डोत्तरतस्तस्मादङ्गारान्निरस्य तेषु हृदा नम इत्याज्यस्थालीं संस्थाप्य । दर्भदग्धांशं आज्ये निक्षिपेत् । अन्यदर्भयुगलं आज्योपरि वर्मतः हुं इति त्रिर्भ्राम्य ॥४७॥

हृदा नम इति आज्ये प्रदर्श्य । तान् त्रिवारं प्रज्वलितान् । आज्यस्थाली । तेभ्यः अङ्गारेभ्य उदक् ॥४८॥

पूर्ववत् पवित्रेणोत्पूय मूलेनाग्रग्रन्थियुतेन कुशद्वयेनाज्यं त्रिधा विभज्येत्यन्वयः ॥४९॥

कराभ्यां गृहीतस्रुक्स्रुवावधोमुखावग्नौ संताप्य । कुशमूलमध्याग्रैस्तयोर्मूलमध्याग्रं क्रमात् संमार्ज्य ॥५०॥

तौ कृत्वा वामहस्तस्थौ प्रोक्ष्य संताप्य वै पुनः ।
कुशान् स्पृष्टोदकाग्नौ प्रास्य वामकरस्थितौ ॥५१॥
बालां प्रजप्य तत्कण्ठे त्रिः सूत्रं वेष्टयेद् हृदा ।
मायां हौं च प्रविन्यस्य गन्धाद्यैरर्च्य दक्षिणे ॥५२॥
कुशेषु स्थापयेदाज्यं त्रिधा भक्तं तु भावयेत् ।
वामदक्षिणमध्येषु चेडां वै पिङ्गलामपि ॥५३॥
सुषुम्णां चाथ व्याहृत्या स्रुवेणादाय चाज्यकम् ।
दक्षाद् वामान्मध्यभागान्नेत्रेषु जुहुयादथ ॥५४॥
अग्नये चाथ सोमाय ताभ्यां पश्चात्त्यजेच्छिवे ।
अग्नये स्विष्टकृते च मुखे चैवं चतुष्टयम् ॥५५॥
नेत्रवक्त्रोद्‌घाटनार्थं ततो व्यष्टिसमष्टितः ।
व्याहृतीर्जुहुयादग्निवायुसूर्येभ्य एव च ॥५६॥

---

तौ स्रुक्स्रुवौ पुनः पूर्ववत् संताप्य । प्रास्य निक्षिप्य । वामकरस्थितौ स्रुक्स्रुवौ ॥५१॥

तयोर्बालां प्रजप्य तत्कण्ठे स्रुक्स्रुवयोः कण्ठे सूत्रं पूर्ववत्त्रिगुणं हृदा नम इति । माया ह्रीं । हौं स्वरूपम् । क्रमेण विन्यस्य गन्धाद्यैः पञ्चोपचारैः । दक्षिणे स्थापयेदित्यन्वयः ॥५२॥

कुशद्वयेन त्रिधा विभक्तमाज्यं वामदक्षिणमध्येषु इडापिङ्गलासुषुम्णात्मकं भावयेदित्यन्वयः ॥५३॥

व्याहृत्या भूर्भुवःसुवरिति । दक्षादिभागत्रयात् क्रमेणादाय अग्नेर्नेत्रत्रये आहुतित्रयं जुहुयात् ॥५४॥

होमे देवता आह—अग्नये इत्यादि । अग्नये स्वाहेत्यादिमन्त्रैः । ताभ्याम् अग्नीषोमाभ्याम् । पश्चात्तत्तद्धोमानन्तरम् । अग्नय इदं न ममेत्यादि त्यजेत् । एवं नेत्राहुत्यनन्तरम् । अग्नये स्विष्टकृते त्रिमुखे जुहुयात् ॥५५॥

नेत्रवक्त्रोद्‌घाटनार्थम् आहुतीनां चतुष्टयं हुत्वेति योजनीयम् । अत्रैतद्धोमोत्तरं वह्नेर्नेत्रवक्त्रोद्‌घाटनं विभावयेत् । तदुक्तं त्रिपुरार्णवे—"हुत्वैवं नेत्रवक्त्राणामुद्घाटं तु विभावयेत्" इति । व्यष्ट्या भूःस्वाहेत्यादि, समष्टितः भूर्भुवःस्वःस्वाहेति । चतसृष्वाहुतिषु त्यागार्थंदेवता आह—अग्नीत्यादि ॥५६॥

चतुर्थं प्रजापतये तन्मन्त्रेण त्रिधाऽग्नये।
अथ संस्कारमग्नेर्वै जुहुयादग्नये त्रिधा ॥५७॥
अग्नेर्गर्भाधानमुक्त्वा सम्पादयामि वै शिरः।
एवं पुंसवनं पश्चात् सीमन्तं जातकर्म च ॥५८॥
नालच्छेदं नामकृतिः कामाग्निरिति वै शिवे।
समित्पञ्चकमादाय घृताक्तं जुहुयात्ततः ॥५९॥
कामेश्वरीकामेशाभ्यां तौ विसर्ज्य ततः शिवे।
उपनिष्क्रमणं चान्नप्राशनं चौलमेव च ॥६०॥
अथोपनयनं देवि महाव्रतमतः परम्।
व्रतं तथोपनिषदं गोदानाख्यं समावृतिः ॥६१॥
विवाहमभिचारे तु मरणं चापि शङ्करि।
ततो जिह्वासप्तकं तु जुहुयादग्नये क्रमात् ॥६२॥
हिरण्या कनका रक्ता कृष्णा वै सुप्रभा ततः।
अतिरक्ता च पश्चाद्वै बहुरूपा महेश्वरि ॥६३॥

---

चतुर्थं हव्यं प्रजापतये त्यजेत्। तन्मन्त्रेण अग्निमन्त्रेण, अग्नये हुत्वेति शेषः। अथाग्नेः प्रतिसंस्कारं त्रिधा जुहुयात्। अग्नये त्यजेत् ॥५७॥

तत्र मन्त्रमाह--अग्नेरित्यादि। अग्नेर्गर्भाधानं संपादयामि इति स्वरूपम्। शिरः स्वाहा। एवं पुंसवनं संपादयामि स्वाहेत्यादि ॥५८॥

कामाग्निरिति। नामकृतिर्नामिकरणम्। ततः नामकरणानन्तरम्। समित्पञ्चकं कामेश्वरीकामेश्वराभ्यां जुहुयादित्यन्वयः ॥५९॥

ततः तौ कामेश्वरौ विसर्ज्य ॥६०॥

गोदानव्रतम्। समावृतिः समावर्तनम् ॥६१॥

दीक्षादौ विवाहान्तपञ्चदशसंस्कारहोम एव। अभिचारे उच्चाटनादौ मरणसंस्कारहोमोऽपि कर्तव्यः। जिह्वासप्तकमग्नये त्यजेत् ॥६२॥

तन्नामान्याह—हिरण्येत्यादि। वै इत्यव्ययम् ॥६३॥

सबिन्दुरतिसंस्थौ तु शब्दस्पर्शौ महेश्वरि ।
विलोमेन तु वाय्वादिशब्दान्ता द्यौ यथाक्रमात् ॥६४॥
नामादौ योजयेद्देवि चतुर्धा पूरयेत् स्रुचम् ।
स्रुवेणाच्छाद्य चोत्थाय नेत्रान्ताग्निमनुं पठन् ॥६५॥
हुत्वा स्रुवेण दशधा गणेशमनुना हुनेत् ।
एकद्वित्रिचतुःपञ्चषड्रुद्रनृपसंख्यकैः ॥६६॥
एकविंशतिवर्णैश्चाखिलेन जुहुयाच्छिवे ।
चतुर्धा च पुनस्तेन चैवमग्निं तु साधयेत् ॥६७॥
प्रोक्ष्यास्त्रेण चरुस्थालीं मूलाष्टकसुमन्त्रितम् ।
शालितण्डुलमस्त्रेण क्षाल्य तत्र विनिक्षिपेत् ॥६८॥

---

तद्बीजान्याह—सबिन्द्वित्यादि । बिन्दुसहिता रतिः ॐ तत्रस्थौ शब्दस्पर्शौ यरौ । तेन यूं इति । तौ विलोमेन वाय्वादिसकारादिशब्दान्तयकारान्ताद्यौ तेन स्रचूं प्रचूं श्रचूं इत्यादि ट्रचूं इत्यन्तं सप्तकम् ॥६४॥

क्रमादेकैकबीजमेकैकनामादौ योजयेदित्यन्वयः । तेन स्रचूं हिरण्यायै स्वाहेत्यादि । ततः स्रुवेण स्रुचमापूरयेत् । स्रुवेणाधोमुखेनाच्छाद्यम् । "अधोमुखं स्रुवं कृत्वा स्रुचमाच्छादयेत् ततः" इति नित्यातन्त्रोक्तेः । नेत्रान्ताग्निमनुं वौषडन्ताग्निमन्त्रं पठन् हुत्वेन्वयः ॥६५॥

दशधा विभक्तगणेशमनुना । तद्विभागक्रममाह—एकेत्यादि । गणेशाद्याहुतिस्तूपविश्यैव, "हुत्वैवमुविश्याथो दशधा गणनायकम्" इति त्रिपुरार्णवोक्तेः । नृपसंख्यकैर्वर्णैः । आरम्भादेवैकवर्णेन, आरम्भाद् द्विवर्णेनेत्येवं भागदशकमपि पुनः पुनरारम्भात्तावद्वर्णात्मकं ज्ञेयम् ॥६६॥

ॐ १ ॐश्रीं २ ॐ श्रीं ह्रीं ३ ॐ ह्रीं क्लीं ४ ॐ क्लीं ग्लौं ५ ॐ० ग्लौं गं ६ ॐ० तये ७ ॐ ० रद ८ ॐ ० नं मे ९ॐ ० स्वाहा १० इति विभागः । अखिलेन संपूर्णेन तेन गणेशमनुना हुत्वेति शेषः । अग्निसिद्धिमुपसंहरति—एवमिति ॥६७॥

चरुश्रपणप्रकारमाह—प्रोक्ष्येत्यादि । अस्त्रेण फट् इति । तण्डुलं प्रस्थमिति पद्धतावुक्तं शिष्यभोजनोपयुक्तोपलक्षकम् । तेन बहूनां सह दीक्षणे ततोऽप्यधिकं ज्ञेयम् । तत्र स्थाल्याम् ॥६८॥

गोक्षीरेण पचेत्तं तु वर्मणाच्छादयेच्छिवे ।
मेक्षणेन तु मूलेन मध्ये मध्येऽवघट्टयेत् ॥६९॥
अरूक्षमश्लथं तच्च स्रुवेणाघार्य चोत्तरे ।
कुशेषु स्थापयेद्वर्म पठन्नेवं समीरितम् ॥७०॥
परकूर्मं शृणु शिवे चतुरस्रं लिखेत् समम् ।
मायां कामं मुखे मध्ये कोणेषु जलबीजकम् ॥७१॥
वशिन्याद्यष्टवर्गं तु प्रागाद्यालिख्य पूजयेत् ।
परकूर्मं तत्र जप्त्वा दोषहानिः फलोदयः ॥७२॥
इयं दीक्षा द्विप्रकारा संस्काराचारभेदतः ।
पुनश्चेयं द्विधा प्रोक्ता संक्रमासंक्रमेति च ॥७३॥
मूढातुरव्यापृतेषु संस्काराख्या भवेत् प्रिये ।
तत्राखिलानां मन्त्राणामुपदेशो न विद्यते ॥७४॥

---

तं तण्डुलम् । वर्मणा हुं इति । पाककाले आच्छादयेत् । मेक्षणेन पालाशमयेनासादितेन । पाककालस्य मध्ये मध्ये अवघट्टयेत् चालयेत् ॥६९॥

अरूक्षम् अनतिकठिनम् । अश्लथम् अनतिशिथिलम् । तत् चरुम्, श्रपयित्वेति शेषः । आघार्य आज्यं निक्षिप्य कुण्डस्योत्तरतः । वर्म हुं । एवं चरुश्रपणं समीरितम् ॥७०॥

मुखे पूर्वरेखामध्ये माया ह्रीं कामं क्लीं । मायामुखे कामं मध्ये जलबीजं वं ॥७१॥

वशिन्याद्यष्टवर्गम् अकचतपयशेति । प्रागाद्यष्टदिक्षु प्रागादिरेखां चतुर्धा विभज्य प्राग्रेखामध्यभागद्वये अवर्गम्, चतुर्थभागे दक्षरेखाप्रथमभागयोः कवर्गम्, तन्मध्यभागद्वये चवर्गम्, तच्चतुर्थभागपश्चिमरेखाप्रथमभागयोः टवर्गमित्यादि क्रमेणालिख्य तत्र परकूर्मं पूजयेत् । तत्र परकूर्मे उपविश्य जपे फलमाह—दोषहानिरित्यादि । जप्त्वेति पूजादेरप्युपलक्षणं ज्ञेयम् ॥७२॥

एवं प्रकृतप्रश्नोत्तरमुक्त्वा पुनर्दीक्षाभेदं कथयति—इयमित्यादि । इयं बालाद्यखिलदीक्षासंस्कार आचारदीक्षेति भेदतः । एतयोरेव स्वच्छन्दसंग्रहादिषु निर्बीजा सबीजेति व्यवहारः । पुनः द्विधा—संक्रमदीक्षा, असंक्रमदीक्षेति । एतयोरप्याचार्यदीक्षा साधकदीक्षेति तत्र व्यवहारः ॥७३॥

तत्राधिकारिभेदमाह—मूढेत्यादि । मूढो ग्रहणधारणासमर्थः । आतुरो दुश्चिकित्स्यरोगी । व्यापृतो राज्यादिव्यवहारपरायणः । एतेषु संस्काराख्या कर्तव्येति शेषः । तल्लक्षणमाह—तत्रेति । संस्कारदीक्षायामित्यर्थः ॥७४॥

योग्यतातारतम्येन हृल्लेखां षोडशीं कलाम् ।
इयं चालस्योपहते न कर्तव्या कदाचन ॥७५॥
तेषां सर्वानुष्ठितिस्तु मूलेनैव भवेच्छिवे ।
आचारात्तु यथोक्ता स्याद्यथोक्ताचाररूपिणी ॥७६॥
संस्कारमात्ररूपाद्या संक्रमा शिष्यसंक्रमात् ।
आचार्यताविहीने च विरक्तेऽपि त्वसंक्रमा ॥७७॥

---

तर्हि सर्वथा मन्त्रोपदेशाभावो वेति चेन्नेत्याह—योग्यतेति । योग्यतातारतम्येण मुख्यमन्त्राणामुपदेशः कर्तव्यः । एतच्च त्रिपुरार्णवे स्पष्टमुक्तम्—"अतिश्रद्धावतां देवमूढानां नित्यरोगिणाम् । प्रोक्ता दीक्षातिगहना कथं स्याद्वद मे विभो ॥" इति देवीप्रश्नोत्तरं प्रश्नं बहुधा संश्लाघ्य—"तेषां तु योग्यतां ज्ञात्वा मुख्यमन्त्रानुदीरयेत् । अथवा श्रीगुरोर्नाम तथा श्रीषोडशाक्षरीम् ॥ हृल्लेखां षोडशीबीजं द्वयमेकमथापि वा । इति योषिन्मूढरोगयुतानां दीक्षणं भवेत् ॥ तेषां यावति शक्तिः स्यात्तावदेव निरूपयेत् ॥" इति । षोडशीं कलां महाषोडशीचरमबीजम् । इयं संस्काराख्या । आलस्येनापहतः कर्मानुष्ठानविमुखः ॥ ७५ ॥

निखिलमन्त्रोपदेशाभावे कथं सन्ध्याद्यनुष्ठानं कर्तव्यं तत्राह—तेषामिति । हृल्लेखामात्रोपदेशवतः हृल्लेखया । षोडशीपञ्चदश्युपदेशवतः षोडश्या पञ्चदश्या वा । सन्ध्या स्वात्मीकाराद्यनुष्ठितिः । संध्यादिपर्याप्तमन्त्रग्रहणयोग्यस्य तु यथोक्तमन्त्रैरेव । संस्कारदीक्षावतो यावदनुष्ठानयोग्यताऽस्ति, तावन्मन्त्रोपदेशः कर्तव्य एव योग्यतातारतम्येन । अखिलानां मन्त्राणामुपदेशो न विद्यत इति वचनस्वारस्यात् । त्रिपुरार्णवेऽस्यैवार्थस्य "मुख्यमन्त्रानुदीरयेत्" इति स्पष्टमभिधानाच्च । कर्मोपयोगिमन्त्राणां दीक्षाकाले वा अनन्तरं वा यथा योग्यता तथोपदेशः कर्तव्यः । एतदपि त्रिपुरार्णवे उक्तम्—"दीक्षाकालेऽनन्तरं वा शेषमन्त्रानुदीरयेत्" इति । आचारा आचारदीक्षा यथोक्ता अखिलसाङ्गमन्त्रोपदेशरूपा । तन्नाम्नोऽन्वर्थतामाह—यथोक्तेति । मुख्याचाररूपत्वादाचारदीक्षा ॥ ७६ ॥

यथोक्ताचाराभावेन संस्कारमात्ररूपत्वादाद्या संस्काराख्या । संक्रमासंक्रमयोरप्यन्वर्थतामाह—संक्रमेति । शिष्येषु संक्रमात् स्वेन प्राप्ताया दीक्षायाः स्वशिष्येषु संक्रामयितुं योग्यत्वात् । एतद्विपरीता आचार्यलक्षणहीने विरक्ते च क्रियमाणा त्वसंक्रमा । ननु पुनश्चेयं द्विधेति संस्काराचारदीक्षयोः संक्रमासंक्रमभेदेन द्वैविध्यं प्रागुपपादितम्, संस्कारदीक्षायामखिलमन्त्रोपदेशाभावाद्धृल्लेखादिमात्रोपदेशात्तादृशदीक्षावतोऽन्यत्र दीक्षाकरणेऽधिकाराभावात् संस्कारदीक्षाया असंक्रमत्वमेव सिद्ध-

**सन्मार्गस्य प्रवृत्तिं वै नात्र संकल्पयेदतः ।**
**रहस्यान्ता विशो शूद्रे पादुकां षोडशीं विना ॥७८॥**

**संस्कारैर्वाथ स्त्रीणां तु द्विधा स्याद्योग्यतावशात् ।**
**दम्पत्योः सह दीक्षा तु उभयोः स्यान्महाफला ॥७९॥**

---

मिति चेन्न; संस्कारदीक्षावतः पुरुषस्यान्यत्र दीक्षकरणेऽधिकाराभावेऽपि सुवासिन्या अधिकारसत्त्वात्। तदुक्तं त्रिपुरार्णवे—'मुख्यमन्त्रमात्रवती या सापि गुरुरुत्तमा। मुख्यमन्त्रानुपदिशेदन्यत् पुस्तकमर्पयेत् ॥ नैवं पुंसोऽधिकारः स्यात् स्त्रीयतः परदेवता ॥'' इति। एतेन पुरुषस्य संस्कारदीक्षावतः, सुवासिन्या हृल्लेखादिमात्रोपदेशवत्याश्च दीक्षाकर्तृत्वाभावेऽपि हृल्लेखादिभिन्नषोडशीपादुकादिमुख्यमन्त्रमात्रोपदेशवत्या दीक्षाकरणेऽधिकारात् संक्रमत्वं संस्कारदीक्षाया अपि सिद्धं ज्ञेयम् ॥ ७७ ॥

तत्राचारदीक्षा यथोक्ता। संस्कारात्तु मुख्यमन्त्रमात्रोपदेशवती। संक्रमा त्वन्यत्रोपदेशयोग्यतापादिका निरुक्तैव। असंक्रमा किंविधेति चेदाह—सन्मार्गस्येति। द्वादशोल्लासोक्तसंकल्पे सन्मार्गप्रवृत्तये इति त्यक्त्वाऽवशिष्टं समानम्। अत्र असंक्रमदीक्षायाम्। अतः। यत इयं आचार्यलक्षणाद्यभावादन्यत्र प्रवर्तयितुमयोग्या, अत इयमसंक्रमा। प्रसङ्गाद्वर्णभेदेनापि दीक्षाभेदमाह—रहस्येत्यादि। विशो वैश्यस्य रहस्यान्तदीक्षा। शूद्रस्य तु पादुकां षोडशीं विना। संस्कारैवेत्यन्वयः। अत्र क्षत्रियस्य ब्राह्मणवदेव, विशेषानभिधानात्। युक्तं चैतत्, ब्राह्मणक्षत्रिययोः साङ्कर्यस्य भारतादिषु भूयो निरूपणात्। रहस्यान्तदीक्षायां तु मध्यकलशे रहस्यान्तविद्याजप एव। उपदेशोऽपि रहस्यान्त एव। तेन वैश्यस्य पञ्चाम्बादिकतिपयन्यासेऽनधिकार एव ज्ञेयः। महाषोडश्यामधिकारोऽस्त्येव, षोडशीं विनेति शूद्रस्यैव निषेधात्, ''इयं न शूद्रे देया स्यादयोग्ये वा कदाचन'' इति। ''श्रद्धावते तु शूद्राय वाच्याऽष्टाविंशदक्षरी'' इति त्रिपुरार्णवाच्च। षोडशीं विनेति महाषोडश्या एव निषेधः, प्रागुक्तत्रिपुरार्णववचने शूद्रं प्रति तस्या एव निषेधात्। अत एव पद्धतिकृता महाषोडशीं विहायेति स्पष्टमभिहितम्। वैश्यादीनां विहिता दीक्षा पूर्णदीक्षैव, गुर्वन्तरानाश्रयत्वरूपतल्लक्षणात्, अत्र वर्णभेदेन पूर्णदीक्षाया एव भेदकथनाच्च, मन्त्रदीक्षादिवत् पृथक्परिगणनीयत्वाच्च, पूर्णदीक्षामुक्त्वा तत्रैव कतिपयाङ्गन्यूनतोक्तेश्च ॥ ७८ ॥

द्विधा आचारसंस्कारभेदेन। द्विविधापि स्त्रीणां योग्यतानुरूपेण स्यादित्यर्थः। उभयोः दम्पत्योः ॥ ७९ ॥

भक्तिप्रकर्षयोगेन विधवाया अपीश्वरि ।
असंक्रमैव तस्यास्तु तस्याः संक्रमणं नहि ॥८०॥
भर्त्रा सह तु दीक्षायां संकल्पस्तु पृथग् भवेत् ।
देहभेदनिमित्तं चाप्यन्यत् सर्वं सहैव तु ॥८१॥
बहूनां सह दीक्षायामपि चैवं महेश्वरि ।
तेषां पूजाद्यपि पृथक् समिद्धोमाध्वशोधने ॥८२॥
न्यासो दीक्षाविभेदश्च प्रत्येकं स्यान्महेश्वरि ।
स्त्रीभ्यो दीक्षणमुत्कृष्टं मातुश्चाष्टगुणं स्मृतम् ॥८३॥

---

भक्तिप्रकर्षेण युक्ताया एव विधवाया दीक्षा । सापि असंक्रमैव । योग्यताधिक्यसत्त्वेऽपि तस्याः संक्रमणं निषेधति--तस्या इति ॥ ८० ॥

दम्पत्योः सह दीक्षा महाफलेत्युक्तं प्राक् । तत्कथं सह कर्तव्यमिति चेदाह—भर्त्रेत्यादि । तत्र संकल्पः प्रत्येकमुभाभ्यां कर्तव्यः । देहभेदनिमित्तं देहसंस्काररूपं यत्कर्म तद्देहभेदनिमित्तं तत्पृथक् कर्तव्यम् । तच्चाभ्यङ्गस्नानादिमृत्तिकास्नानादिसंवित्प्राशनान्तम् । घृताञ्जनम् । प्रणीतोदकप्रोक्षणम् । पाशच्छेदः । हुतशेषभोजनम् । दन्तधावनादिशिखाबन्धान्तं नामकरणं चेति । यद्यप्यध्वशोधनकलान्यासदीक्षाभेदानामपि देहसंस्कारत्वात् पृथक्करणं प्राप्तम्, तथापि बहूनां सह दीक्षायामध्वशोधनादीनां परिगणनान्नात्र तेषां कर्तव्यत्वम्, देहभेदनिमित्तपदेनात्रासंगृहीतानामेव तत्रोपादानात् । अन्यथा मृत्तिकास्नानपाशच्छेदादीनां तत्रासंग्रहापत्तेः । अन्यत्सर्वं गुरुप्रार्थनगणेशपूजनादिकम् । सहैव पत्नीसहितेन भर्त्रा कर्तव्यम् । ननु भर्त्रा सह तु दीक्षायामित्यत्राप्रधानार्थकतृतीयान्तवाच्यभर्तुरप्राधान्यात् तेन सहितया पत्न्यैवान्यत् सर्वं कर्तव्यमिति चेन्न, पृथक्संकल्पकरणे एव स्वस्य प्राधान्याद् भर्तुरप्रधानता, भर्त्रा सहितायाः संकल्पादिमात्रस्य पृथक्परिसंख्यानात् । अत एवान्यत् सर्वं पत्नीसहितस्य भर्तुरेवेति पद्धतिकृतोक्तम् ॥ ८१ ॥

एवं दम्पत्योः सह दीक्षणे विशेषमभिधाय बहूनां दीक्षणे विशेषमाह—बहूनामिति । बहुपदं दम्पतीतरानेकार्थकम् । तेन द्वयोरप्ययमेव क्रमः सिध्यति । एवं संकल्पदेहभेदनिमित्तयोः पृथगनुष्ठानम् । पूर्वतो विशेषमाह—तेषामित्यादि । पूजादीति । पूजा गणेशगुरुसामयिकपूजा । आदिना गुरुप्रार्थनपुण्याहवाचननान्दीश्राद्धाचार्यादिवरणानां संग्रहः । समित् दूर्वादिपञ्चकम् ॥ ८२ ॥

न्यासः अष्टत्रिंशत्कलात्मकः । दीक्षाविभेदो वर्णादिमन्त्रान्तः सप्तविधः । अत्र भर्त्रा सह दीक्षायां पत्न्या दीक्षाभेदाकथनेऽपि मन्त्रदीक्षा तु कर्तव्यैव, मुख्यत्वात् ।

शूद्रं परित्यज्य वर्णे गुरुः पूर्वः समोऽपि वा ।
परो नैव गुरुर्देवि आश्रमे तु परोवरः ॥८४॥
ब्रह्मचारी नैष्ठिकस्तु गृहिणो वै गुरुर्भवेत् ।
परे पूर्वाश्रमी देवि न गुरुः स्यात् कदाचन ॥८५॥
भिक्षोर्दीक्षानन्तफला स्त्री स्यादाचार्यपूर्विका ।
प्रणवं वैदिकं चैव शूद्रे नोपदिशेच्छिवे ॥८६॥
तत्र ज्वालां समारोप्य मन्त्रपूर्तिं समाचरेत् ।
अथ वक्ष्ये साधकस्य धर्मान् देवि शृणु प्रिये ॥८७॥
नित्यं गुरुं नमस्कुर्याद् दूरे तद्दिङ्मुखो नमेत् ।
रिक्तहस्तो नैव चिरात् पश्येद्देवं गुरुं तथा ॥८८॥
मण्डलं चापि तस्माद्वै पुष्पद्याहार्य वै व्रजेत् ।
गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिताम् ॥८९॥

---

अन्यथा मन्त्रोपदेशाभावप्रसङ्गात् । एवं संस्काराचारसंक्रमासंक्रमादिविभिन्नदीक्षापेक्षिणामपि सह दीक्षा भवति, अविरोधात् । मन्त्रदीक्षापूर्णदीक्षाद्यपेक्षिणां तु अनुष्ठानस्य विभिन्नत्वेन विरोधान्न सहभावः । स्त्रीभ्यो दक्षिणमित्यादि आचार्यपूर्विकेत्यन्तं द्वादशोल्लासारम्भे गुरुलक्षणनिरूपणावसरे व्याख्यातम् । तत्र स्त्रीकर्तृकदीक्षायामुपदेशभिन्नं सर्वं गुरुभूतया स्त्रिया कर्तुमशक्यम्; उपाचार्येण कर्तव्यम् । होमे त्वध्वशोधनं गुर्वन्वारम्भेण । एवमेवाशक्तपुरुषकर्तृकदीक्षायामपि । तदुक्तं त्रिपुरार्णवे—"योषिद्वा शक्तिहीनो वा गुरुर्यदि महेश्वरि । उपदेशं विना सर्वमुपाचार्येण कारयेत् ॥ यथाशक्त्या गुरुः कुर्यादन्यत्तेन तु कारयेत् । अध्वशोधनकं देवि स्पृशन्नाचार्यमीरितम् ॥" इति ॥८३-८५॥

तत्र शूद्रदीक्षायां विशेषमाह—प्रणवमिति । वैदिकं वेदभवं मन्त्रमुपस्थानभस्मधारणशापमोचनाद्युपयुक्तम् ॥८६॥

तत्र प्रणवस्थाने । ज्वालां चतुर्दशस्वरम् । योग्यत्वात् बिन्दुयुतम् । मन्त्राणां पूर्तिं वर्णसंख्यापूर्तिम् । वैदिके तूक्तं योगिनीतन्त्रे—"शूद्राणां वेदमन्त्रेषु नाधिकारः कदाचन । स्थाने वैदिकमन्त्रस्य मूलमन्त्रं विनिर्दिशेत् ॥" इति ॥८७॥

साधकानाम् उपासकानां धर्मानाह—नित्यमित्यादि । समीपस्थं गुरुं नित्यं तत्समीपे गत्वा नमस्कुर्यात् । दूरे गुरौ स्थिते तद्दिङ्मुखः गुरुर्यत्र तिष्ठति तद्दिङ्मुखः । चिरात् बहुकालानन्तरम् ॥८८॥

चिरादिति न मण्डलेऽन्वेति । यतो रिक्तहस्तो—न पश्येत् तस्मात् । पुष्पादीत्यादिना

न कुर्याद्यन्त्रमूर्त्यादौ शिलाबुद्धिं कदाचन ।
गुरौ तस्माद्धितं कुर्याद्वाङ्मनः कायकर्मभिः ॥९०॥
अपमानमनाज्ञां च निन्दां नैव समाचरेत् ।
शिवरूपं गुरुं पश्येत्तद्धितं सर्वदा चरेत् ॥९१॥
शास्त्रदैवतमन्त्राणां न निन्दां शृणुयात् क्वचित् ।
समयाचारनिन्दां च तद्वत् साधकनिन्दनम् ॥९२॥
सर्वथा नैव शृणुयान्न तिष्ठेत्तत्र वै बुधः ।
नाभिमानं गुरोः कार्ये कुर्याद्देवि कदाचन ॥९३॥
लज्जां नाशं कदाचिद्वा गुरुकार्ये न कारयेत् ।
गुरुमित्रसुहृद्बन्धुदासमान्यानुयायिनाम् ॥९४॥
मोहात् प्रमादाद्वा देवि नापमानं समाचरेत् ।
वाहनं पादुकां चैव चामरं व्यजनं तथा ॥९५॥

---

दक्षिणावस्त्रादिकं गुर्वादिषु निवेदनयोग्यम् । बुद्धितां न कुर्यादित्यन्वयः ॥८९॥

मूर्त्यादावित्यादिना कुण्डल्यादिग्रहणम् । शिलाबुद्धिमिति सौवर्णादियन्त्रादौ सौवर्णादिबुद्धेरुपलक्षणम् । यस्माद् गुरौ मनुष्यबुद्धिर्न कर्तव्या, तस्माद् । वाङ्मनःकायजनितकर्मभिर्हितं कुर्यात् ॥९०॥

गुरोरपमानादिकं न समाचरेत् । अनाज्ञाम् आज्ञाभङ्गम् ॥९१॥

समयाचारः साधकधर्मः । अत्र विशेषो योगिनीतन्त्रे—"कदाचित्पशुसंघस्थो निन्दां श्रुत्वापि युक्तितः । अदुष्टभावो देवेशि मुखवैकृतिवर्जितः ॥ नयेद् वार्त्तान्तरे तान् वै पशुवच्च समाचरन् ॥" इति ॥९२॥

सर्वथेति । समर्थो निन्दकं जिह्वाच्छेदादिना दण्डयेत् । असमर्थ स्तत्र न तिष्ठेत् । एतदुक्तं योगिनीतन्त्रे—

शास्त्रदैवतमन्त्रादिनिन्दां न श्रृणुयात् क्वचित् ।
प्रसह्य निन्दकानां तु जिह्वां छिन्द्यात् प्रभुर्यदि ॥
असमर्थस्ततो दूरं गच्छेदेवाविचारयन् ।" इति ।

गुरोः कार्ये उदकाहरणादिरूपे ॥९३॥

नाशं गुरुकार्यस्य । गुरोर्मित्रादीनाम् अपमानं न समाचरेदित्यन्वयः । मित्रं सखा । सुहृत् समानसुखदुःखः । अनुयायी परिजनः ॥९४॥

वाहनादिकं गुर्वग्रतस्त्यजेदित्यन्वयः ॥९५॥

ताम्बूलभक्षणं सेव्यभावं गुर्वग्रतस्त्यजेत् ।
गुरोर्गुरौ समीपस्थे प्रगुरुं पूजयेच्छिवे ॥९६॥
गुरोः पूजादिकं सर्वं मनसैव प्रकल्पयेत् ।
मन्त्रं मुद्रामात्मनाम शिष्यादन्ये क्वचिच्छिवे ॥९७॥
न वदेत् सर्वथा देवि निर्वीर्यस्तेन जायते ।
पशुहस्तगतं नैव कुर्याच्च कुलपुस्तकम् ॥९८॥
द्रव्यकुम्भं मांसखण्डं स्त्रीणां चापि कदम्बकम् ।
कुलवृक्षान्महेशानि दृष्ट्वा कुर्यान्नमस्कृतिम् ॥९९॥
कुलवृक्षस्य मूले तु स्वापं नैव समाचरेत् ।
तत्पत्रे भोजनं नैव तच्छाखां नैव छेदयेत् ॥१००॥
देवतार्थं तु देवेशि छेदनं नैव दुष्यति ।
श्लेष्मातककरञ्जाम्रनिम्बाश्वत्थकदम्बकाः ॥१०१॥

---

सेव्यभावं पादसंवाहनादि । गुरोर्गुरुः परमगुरुः । एवञ्च परमेष्ठिगुर्वादीनामुपलक्षणम् । तेन परमगुर्वादिसंनिपाते सर्वाद्यं गुरुं पूजयेत् । तदुक्तं योगिनीतन्त्रे—"गुरूणां युगपद् योगे सर्वाद्यं तत्र पूजयेत्" इति ।९६॥

ननु गुरोः पूजनं दीक्षाङ्गत्वेन यत्र विहितं तत्र का गतिरिति चेदुच्यते—आदौ परमगुरुं संपूज्य तदाज्ञया गुरुं पूजयेत् । तदप्युक्तं योगिनीतन्त्रे—"आवश्यके तु संप्राप्ते महागुर्वाज्ञया शिवे । गुर्वादीन् पूजयेत्तेन न पापं तत्र चोभयोः ॥" इति । शिष्यादन्यस्मिन्न वदेदित्यन्वयः । नाम दीक्षासंबन्धि ॥९७॥

निर्वीर्यः मन्त्रादिः । कुलपुस्तकं कुलशास्त्रपुस्तकम् । हस्तगतमिति प्रदर्शनपरम् ॥९८॥

द्रव्यकुम्भं प्रथमघटम् । स्त्रीणां सुवासिनीनाम्, "सुवासिनीसमूहं च दृष्ट्वा भक्त्या नतिं चरेत्" इति त्रिपुरार्णवात् । कदम्बकं समूहम् ॥९९॥

तत्पत्रे कुलवृक्षाणां पत्रे । तच्छाखां कुलवृक्षशाखाम् ॥१००॥

व्यर्थछेदनं निषिध्य पूजाद्युपयुक्तछेदनमभ्यनुजानाति—देवतार्थमिति । कुलवृक्षानाह—श्लेष्मातकेत्यादि ॥१०१॥

विल्वो वटोदुम्बरश्च कुलवृक्षा नव स्मृताः ।
गुरुशास्त्रप्रमाणोक्तं कुर्याच्छक्त्यनुरोधतः ॥१०२॥
आलस्येन त्यजन् सद्यः पतत्येव न संशय ।
कुलशास्त्रं सर्वदैव चिन्तनीयं महेश्वरि ॥१०३॥
पठनीयं विभाव्यं च सर्वदा तत्परो भवेत् ।
पशुशास्त्राणि सर्वाणि दूरतः परिवर्जयेत् ॥१०४॥
पशोस्तु रक्षणं यद्वद्धर्मस्यास्य तथा चरेत् ।
गुप्त्यर्थं कर्मणां लोपे न पापं विन्दते क्वचित् ॥१०५॥
तस्माद्देवि निजान् धर्मान गोपयेत् सर्वदा बुधः ।
मातृदोषो यथा गोप्यस्तथा धर्मस्त्वयं सदा ॥१०६॥

---

कुलार्णवे तु तिन्तिण्या सहिता दश वृक्षा उक्ताः । गुरुणा शास्त्रेण च प्रमाणतः यथार्थतः । बलवदनिष्ठाननुबन्धित्वेनोक्तं यथाशक्त्या कुर्यात् । एतेन गुरुणा प्रमादोक्तानां शास्त्रोक्ताभिचारादीनां च कर्तव्यत्वमपास्तम् ॥१०२॥

आलस्येनेत्यनेन रोगादिनाऽसक्तस्य कर्मलोपे न प्रत्यवायः । सर्वदेति शास्त्रान्तरचिन्तनसमये । न तु नित्याद्यनुष्ठानकाले ॥१०३॥

तत्परः कुलशास्त्रपरः । ननु तर्हि श्रुतिस्मृत्याद्यभ्यासोऽपि निषिद्धः स्यादित्याशङ्क्याह—पशुशास्त्राणीति । पशुशास्त्रमुक्तं त्रिपुरार्णवे—' 'पशवस्तु परज्ञानभक्तिश्रद्धाविवर्जिताः । सच्छास्त्रनिन्दकास्तेषां शुष्कतर्कैकनिर्मितम् ॥ पशुशास्त्रमिति प्रोक्तं साधकस्तु न तत्स्पृशेत् ॥'' इति ॥१०४॥

पशोरिति । पशुभिर्यथा न लक्ष्यते तथा कर्माचरेदिति भावः । गोपनार्थं यत्किञ्चित्कर्मलोपेऽपि न दोष इत्याह—गुप्त्यर्थमिति । एतदुक्तं कुलार्णवे—''मत्कर्म कुर्वतां गुप्त्या कर्मलोपो भवेद्यदि । तत्कर्म ते प्रकुर्वन्ति सप्तकोटिमुनीश्वराः ॥'' इति । तथा—'यदा संदीपितोल्लासः कौलिकः पशुमीक्षते । गोपयेदन्यदा वापि साकारं नहि ज्ञापयेत् ॥ पठेद् वा पशुशास्त्राणि निन्द्याद्वा पशुवत् स्वयम् । कुर्यात् पशुप्रसङ्गं वा पशुकार्याणि चाचरेत् ॥''
इति ॥१०५॥

यतो गुप्त्यर्थं कर्मलोपेऽपि न प्रत्यवायस्तस्माद् गोपनमावश्यकमिति सदृष्टान्तमाह—तस्मादिति ॥१०६॥

काम्यकर्म न कर्तव्यं नित्यं नैमित्तिकं चरेत् ।
भक्त्या शक्त्या कृतं कर्म देवतायै समर्पयेत् ॥१०७॥
कुलशास्त्रं तथा मन्त्रः श्रोतव्यो गुरुवक्त्रतः ।
तदाज्ञया वा संपश्येद् गुरुं ध्यायन् स्मरन् नमन् ॥१०८॥
स्त्रियो हि देवतारूपा ता नमस्याः सदा शिवे ।
बिभीतकार्ककारञ्जस्नुहीच्छायां न संश्रयेत् ॥१०९॥
पुण्ड्रेक्षुभक्षणं तद्वच्छेदनं च परित्यजेत् ।
परम्परागुरुं नैव त्यजेद्योग्यं कथञ्चन ॥११०॥
तदाज्ञामन्तरा तस्य चाग्रे नोपदिशेन्मनुम् ।
अथ देवेशि वक्ष्यामि धर्मान् मण्डलसंभवान् ॥१११॥

---

कृतं नित्यं नैमित्तिकं कर्म समर्पयेदिति । नित्यनैमित्तिकयोरपि न फलाभिसन्धि कुर्यादिति भावः॥१०७॥

गुरोरसान्निध्ये तदाज्ञया वा स्वयं गुरुस्मरणादिपूर्वकं संपश्येत् ॥१०८॥

संश्रयणमुपवेशनादिः । तेनार्थाच्छायाक्रमणे न दोषः ॥१०९॥

पुण्ड्रेक्ष्विति । प्रत्यक्षभक्षणमेव निषिद्धं न तद्रसपानमिति केचिदाहुः । परम्परागुरुः पितृपितामहादीनां गुरुस्तत्पुत्रादिर्वा । तदुक्तं योगिनीतन्त्रे— 'गुरुपुत्रादिके स्वल्पसम्बन्धिन्यपि वा स्थिते । यस्य वंश्यः प्रयात्यन्यं गुरुं स पतितो भवेत् ॥'' इति । अयोग्यस्य त्यागे न दोष इति वक्तुं योग्यमिति ॥११०॥

तदाज्ञा गुर्वाज्ञा । एवमथ वक्ष्येत्यादिना साधकधर्मा उक्ताः । ते च कुलार्णवत्रिपुरार्णवयोगिनीतन्त्रत्रिपुरारहस्याद्युक्ताः पद्धतिकृता संगृह्य तत्रत्यश्लोकैः सह निरूपिताः । यथा--'एकग्रामे क्रोशदूरे चार्धयोजनके स्थितः । गुरोस्त्रिसन्ध्यैकसन्ध्यं पञ्चपर्वसु दर्शनम् ॥'' स्थितः शिष्यः । दर्शनमिति प्रणामस्याप्युपलक्षणम् । दर्शनं कुर्यादित्यर्थः । ''एकयोजनमारभ्य योजनद्वादशावधि । तत्तद्योजनसंख्यातैर्मासैः स्याद् गुरुदर्शनम् ॥'' द्वादशयोजनावधि दूरदेशे स्थितः शिष्यो दर्शनं कुर्यादित्यर्थः । ''अतिदूरे नमेच्छिष्यस्तद्दिशाभिमुखो गुरून् । रिक्तहस्तो नैव चिरात् पश्येद् देवं गुरुं तथा ॥ नैव गच्छेन्मण्डले च फलाद्यादाय वै व्रजेत् । गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिताम् ॥ न कुर्याद्यन्त्रमूर्त्यादौ शिलाबुध्यादिकं तथा । गुरुं पश्येत् सदा भक्त्या साक्षाच्छिवमयं बुधः ॥ शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । गुरौ तस्माद्धितं कुर्याद् वाङ्मनःकाय-

कर्मभिः ॥ सर्वत्रादौ गुरुः पूज्यश्चान्यः पूज्यस्तदाज्ञया । ऋणदानं तथादानं तथैव क्रय-विक्रयम् ॥" तथादानम् ऋणादानमित्यर्थः । "न कुर्याद् गुरुभिः सार्धं तदाज्ञां नैव लङ्घयेत् । गुरुदैवतमन्त्राणां समयाचारवत्मनः ॥ न निन्दां श्रृणुयात् क्वापि न तिष्ठेत्तत्र सर्वथा । शिरसा न वहेद् भारं पादुकाभावनापरः ॥' पादुकाभावनापरः पूर्णाभिषिक्त इत्यर्थः । "नाभिमानं गुरोः कार्ये लज्जां कुर्यात् कदाचन । गुरुमित्रसुहृद्दासीदासाद्यान्नावमानयेत् ॥ वाहनं पादुका चैव चामरं व्यजनं तथा । ताम्बूलभक्षणं सेव्यभावं गुर्वग्रतस्त्यजेत् ॥ पादप्रक्षालन दन्तधावनं मलमूत्रयोः । विसर्गं क्षौरमभ्यङ्गशयनं स्त्रीनिषेवणम् । दुर्वाक्यं रोदनं हास्यं प्रपदोद्घाटनं तथा । दूषणं कलहं वादमधोवायुं दुराग्रहम् ॥ अङ्गभङ्गं न कुर्याद् वै पूज्यसन्मुखतः क्वचित् ।" स्त्रीनिषेवणं स्त्रिया परिहासादि । प्रपदं पादाग्रम् । अधोवायुम् अपानवायुम् । "गुरोरासनवस्त्राङ्गच्छायां नोल्लङ्घयेत् क्वचित्अधस्थे तु गुरा-वूर्ध्वं न तिष्ठेन्नाग्रगो भवेत् ॥ न विशेदुत्थिते तस्मिन् स्वाङ्गच्छायां न पातयेत् । गुरुनाम न गृह्णीयात् जपाच्छ्राद्धादृते क्वचित् । गुरुपत्नीसुतज्येष्ठान् गुरुवत् पूजयेत्सदा । गुरोर्गुरौ समीपस्थे गुरोर्नत्यादिमानसम् ॥ **इति गुरुभक्ति** । "मन्त्रं मुद्रामात्मनाम शिष्यादन्यत्र नो वदेत् । मत्तेभं सहकारं चाप्यशोकं पुष्पितद्रुमम् ॥ स्मशानं द्रव्यसौगन्ध्यमेकवृक्षं च कोकिलम् । सुवासिनीकुमारीणां समूहं मदिराघटम् ॥ आममांसं कौलशास्त्रपुस्तकं दर्शने नमेत् ।" सहकारः सुगन्ध्याम्रविशेषः । दर्शने दर्शनमात्रे नमेत् । "पशुहस्तगतं नैव कुर्याच्च कुलपुस्तकम् ॥ श्रद्धाभक्तिकराभ्यां तु कौलिको भवसागरम् । तरत्येकेन हीनोऽपि गभीरे मज्जति ध्रुवम् ॥ गुरुशास्त्रप्रमाणोक्तं कुर्याच्छक्त्यनुरोधतः । आलस्येन त्यजन् सद्यः पतत्येव न संशयः ॥ कुलशास्त्रं सर्वदैव चिन्तनीयं विशेषतः । पशुशास्त्राणि सर्वाणि दूरतः परिवर्जयेत् ॥ पशोस्तु रक्षणं यद्वद् धर्मस्यास्य तथा चरेत् । गुप्त्यर्थं कर्मणां लोपे न पापं विन्दते क्वचित् ॥ मातृदोषो यथा गोप्यस्तथा धर्मस्त्वयं सदा । योषितामप्रियं नैव कुर्यात्कार्यं प्रियं सदा ॥ अपराधसहस्रेऽपि स्वस्त्रियं वा परस्त्रियम् । न क्लेशयेन्मण्डले तु सर्वेषां प्रियमाचरेत् ॥ काम्यकर्म न कर्तव्यं नित्यं नैमित्तिकं चरेत् । भक्त्या शक्त्या कृतं कर्म देवतायै समर्पयेत् ॥ अन्यमन्त्रार्चनश्रद्धां न कुर्यात्तु कदाचन । कुलशास्त्रं तथा मन्त्रः श्रोतव्यो गुरुवक्त्रतः ॥ तदाज्ञया वा संपश्येद् गुरुं ध्यायन् नमन् स्मरन् । न नग्नां स्त्रियमीक्षेत कुरूपीं प्रकटस्तनीम् ॥ दृष्ट्वा तु विकृतं वापि नोपहासं समाचरेत् ।" कुरूपि-यादीनोपहसेदित्यर्थः । प्रकटस्तनी विवृतस्तनी । "मण्डले तु स्त्रियाऽत्युक्तस्ताडितोऽपि तु तां नमेत् ॥ न स्वपेत् कुलवृक्षाधस्तत्पत्रे नैव भोजनम् । वृथा छेदनं न कुर्याच्च नम-स्कुर्याच्च दर्शने । श्लेष्मातककरञ्जाग्रनिम्बाश्वत्थकदम्बकाः । विल्वो वटोदुम्बरश्च कुलवृक्षाः नव स्मृताः ॥ कुलशास्त्रं सदाचारं कदापि न विकल्पयेत् । गुरुस्त्रीवारमाचारं शिष्याय कथयेत् स्फुटम् । तन्न गृह्णाति शिष्यश्चेत्तदा पापं गुरोर्नहि । विभीतकार्क-कारञ्जस्नुहीच्छायां न संश्रयेत् ॥ पुण्ड्रेक्षुभक्षणं तद्वच्छेदनं च परित्यजेत् । गुरुं न गोपयेन्मन्त्रं सर्वथा न प्रकाशयेत् ॥ शपथं नैव कुर्वीत कार्ये क्वापि कदाचन । परम्परा-

गुरुं नैव त्यजेद् योग्यं कथञ्चन ॥ तदाज्ञामन्तरा तस्य चाग्रे नोपदिशेन्मनुम् ।" इति समयाचारः ।

इत्येवं साधकधर्मानुक्त्वा मण्डलधर्मान् वक्तुमाह--अथेति । मण्डलसंभवान् मण्डले सम्यग्भवा सत्ता स्थितिर्येभ्यस्तान् । यदनाचरणेन मण्डलाद् बहिष्कारो भवतीति भावः । मण्डलं च द्विविधम्--ऐहिकमामुष्मिकं च । तत्रैहिकं कालदेशाभ्यां परिच्छिन्नम्, "पूजागृहाद् बहिर्देवि प्रणमेद्दण्डवच्छिवे । मण्डले दण्डवन्नैव साष्टाङ्गनमनं चरेत् ॥" इति वक्ष्यमाणवचनपर्यालोचनया निरुक्तपूजामन्दिरमेव मण्डलमेतत्तन्त्राभिमतम् । बृहद्वामकेश्वरे तु--"मण्डलं तद् विजानीयाद्यावद् दृश्या हि देवता" इति । योगिनीतन्त्रे तु--"पूज्यते यत्र सा देवी तच्चतुर्दिक्षु शङ्करि । धनुःशतप्रमाणेन मण्डलं परिकीर्तितम् ॥" इति । रहस्यार्णवे तु--"द्वारपूजा यत्र कृता तदन्तर्मण्डलं भवेत्" इति देशपरिच्छेदः । एवं तन्त्रभेदेन भिन्नमपि मण्डलं मिथुनाष्टकादिवक्ष्यमाणपूजातारतम्येनोपयुक्तं ग्राह्यम् । कालपरिच्छेदस्तु त्रिपुरार्णवे उक्तः--"इदं तन्मण्डलं देवि प्रारभ्यैतस्य पूजनम् । मार्तण्डभैरवार्घ्यान्तं मण्डलं प्रोच्यते शिवे ॥" इति । अत्रेदमिति द्वारपूजोच्यते, तस्या एव प्रक्रान्तत्वात् । मार्तण्डभैरवार्घ्यस्तु पूजान्ते क्रियमाणः । आमुष्मिकं तु रुद्रयामले प्रोक्तम्--"अन्त्येष्टिविधिना हीनो मण्डलस्थो न जायते" इति तथा--"अद्यप्रभृत्ययं वीरो मण्डलत्रयमध्यगः" इति । तथा--"श्रीविद्यादीक्षया युक्ता देहत्यागेन शङ्करि । संस्कृता बाह्यसंस्कारैर्महर्लोकं समाश्रिताः ॥ सिद्धेषु सन्निविष्टास्ते वीरा इति तु कीर्तिताः । असंस्कृता तु स्वर्गादिनराः प्रेतसमा अपि ॥ वीरदूता इति ख्याता न वीरास्ते भवन्ति हि । वीराणां तन्त्रसंस्कारैः संस्कृतानां महेश्वरि ॥ मण्डलान्तः प्रवेशः स्यात्ततः स्वातन्त्र्यशालिनः । मलप्रहीणाः सर्वत्र स्वच्छन्दगतयस्ततः ॥ गुरुमण्डलसंस्थानाश्चान्ते कैवल्यमुक्तिगाः" इति । बृहद्वामकेश्वरेऽपि--"देहान्ते दीक्षितास्त्वेते प्रोक्तोपासनतत्पराः । गुरूणां मण्डलं यान्ति स्वच्छन्दगमनाः सदा ॥" इति । तथा च यथोक्ताचारपराणां दीक्षितानामिह पूजास्थानादिरूपैहिकमण्डले देहान्ते गुरुमण्डलरूपामुष्मिके च मण्डले प्रवेशः, नान्येषामिति सिद्धम् । एतदभिप्रायेणैव "योगिनीनां पशुर्देवि मण्डलाच्च बहिष्कृतः" इति वक्ष्यति । ननु किमेते धर्मा ब्राह्मणाद्यखिलवर्णसाधारणाः, उत कतिपयवर्णविशेषसाधारणाः । विशेषानुल्लेखात् सर्वसाधारणा एवेति चेदत्राहुः--मण्डले पूजाङ्गप्रथमादिद्रव्यग्रहणस्योक्तत्वात् तस्य श्रुतिस्मृतितन्त्रनिषिद्धस्य सर्ववर्णपरत्वानुपपत्तेः । श्रुतिः स्मृतिश्च धर्मशास्त्रे प्रायश्चित्तप्रकरणेषुद्रष्टव्या । तन्त्रवचनानि तु कुलार्णवे--"तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् । सुरादर्शनमात्रेण कुर्यात् सूर्यावलोकनम् ॥ तत्समाघ्राणमात्रेण प्राणायामत्रयं चरेत् । आजानुभ्यां भवेत् स्नानमानाभ्युपवसेच्छिवे ॥ ऊर्ध्वं नाभेस्त्रिरात्रं स्यान्मद्यस्य स्पर्शने विधिः । सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत् । मुखे तथा विनिर्दग्धस्ततः शुद्धिमवाप्नुयात् ॥ मद्यपानजदोषस्य प्रायश्चित्तमितीरितम् ॥" इति । तथा त्रिपुरार्णवे--"कामान्मोहाद् यदि

सुरां पिवेत् सकृदपि द्विजः। विद्वानपि च स त्याज्यस्तन्त्रज्ञैरविचारिभिः ॥" इति । तथा ब्राह्मणस्य प्रतिनिधिद्रव्येण पूजनमुक्तं कुलचूडामणौ—"यत्रावश्यं विनिर्दिष्टं मदिरादानपूजनम् । ब्राह्मणस्तत्र ताम्रे तु मधु मद्यं प्रकल्पयेत् ॥" इति । तथा भैरवीतन्त्रे—"क्षीरेण ब्राह्मणैस्तर्प्या घृतेन नृपवशजैः । माक्षिकैर्वैश्यवर्णैस्तु आसवैः शूद्रजातिभिः ॥" इति । ज्ञानार्णवेऽपि—"वर्णानुक्रमभेदेन द्रव्यभेदा भवन्ति वै । द्रव्येण सात्त्विकेनैव ब्राह्मणः पूजयेच्छिवाम् ॥" इति । महाकालसंहितायां तु ब्राह्मणस्य प्रतिनिधिद्रव्यपूजनमपि निषिद्धम् । "एवं दद्यात् क्षत्रियोऽपि पैष्टिं न कदाचन । नारिकेलोदकं कांस्ये ताम्रे गव्यं तथा मधु ॥ राजन्यवैश्ययोरेवं न द्विजस्य कदाचन । एवं प्रदानमात्रेण हीनायुर्ब्राह्मणो भवेत् ॥" इति । तस्माद् विंशतितमोल्लासे वक्ष्यमाणक्षीरादिप्रतिनिधिद्रव्येण केवलजलादिभिर्वा द्विजैः पूजा कर्तव्या, न प्रत्यक्षद्रव्यैरिति ।

अन्ये तु प्रतिनिधिविधानं मुख्यालाभे। अत एव—'मुख्यालाभे चानुकल्पो नान्यथा तु कदाचन" इति विंशतितमोल्लासे वक्ष्यति । त्रिपुरार्णवेऽपि—'सर्वैर्वर्णैः सदा देवी संपूज्योक्तविधानतः । मुख्याभावे चानुकल्पैर्न पूजां लोपयेत् कचित् ॥ मुख्ये निषिद्धबुद्धया तु नानुकल्पैः प्रपूजयेत् । निषिध्यबुध्या मुख्ये तु योऽनुकल्पैः ॥ प्रपूजयेत् स याति नरकान् घोरान् कुम्भीपाकादिकान्नरः ॥" इति । अत एव व्रीहियवयोरिव वैकल्पिकद्रव्यान्तरविधानाभावाद् कुण्डोदकादीनां प्रतिनिधित्वेन मुख्यालाभे एव प्रतिनिधावधिकारात् । 'शक्तः प्रथमकल्पस्य नानुकल्पं समाचरेत्" इति निषेधबलेन प्रथमाधिकारिण इतरानुष्ठानायोगादिति सेतुबन्धे उक्तम् । शुक्रशापस्य ब्राह्मणविषयत्वेन तच्छापोद्धारविधानवैयर्थ्यापत्तेश्च सर्वेषामेवाविशेषेणात्राधिकारः । यत्तुशुक्रशापोद्धारस्य शूद्रादे द्रव्यसंस्कारे अदृष्टार्थत्वमिति, तच्चिन्त्यम् , दृष्टफलकत्वे संभवत्यदृष्टफलकल्पनानौचित्यात् । "एकमेवेति संप्रोक्ताऽऽथर्वणैः शुक्रशापतः। मोचयेत्तु त्रिभिर्मन्त्रैः संस्पृशन् हि समाहितः॥" इति त्रिपुरार्णववचनोक्ताथर्वणमन्त्रत्वेन तस्य वैदिकत्वात्तत्र शूद्राणामनधिकाराच्च अत एव-"प्रणवं वैदिकं चैव शूद्रे नोपदिशेच्छिवे" इत्युक्तं प्राक् । योगिनीतन्त्रेऽपि—"शूद्राणां वेदमन्त्रेषु नाधिकारः कदाचन। स्थाने वैदिकमन्त्रस्य मूलमन्त्रं विनिर्दिशेत् ॥" इत्युक्तम् । एवं नित्यातन्त्रेऽपि—"शूद्रेण कर्म कर्तव्यं साङ्गोपाङ्गं सविस्तरम् । त्यक्त्वा वैदिकमन्त्रांस्तु प्रणवं चापि शङ्करि ॥ तत्र मूलसमावृत्त्या मनुस्वरजपेन च ।" इति । तस्माद् ब्राह्मण इत्यादिकुलार्णववचनं "तु सुरापाने कामकृते" इत्युक्त्या रागप्राप्तनिषेधपरम् । अत एव—"तस्मानु विधिना मद्यमांससेवनमाचरेत् । विधिवत् सेवनेनैव तरसा त्वं प्रसीदसि ॥ नाशयस्यविधानज्ञान् सत्यमेव वरानने । तृणं वाप्यविधानेन छेदयेन्न कदाचन ॥ विधिना गां द्विजं वापि हत्वा पापैर्न लिप्यते ॥" इति ।

'कुलशास्त्राणि सर्वाणि मयैवोक्तानि पार्वति । प्रमाणानि न संदेहो न हन्तव्यानि हेतुभिः ॥ देवताभ्यः पितृभ्यश्च मधुवाता ऋतायते । स्वदिष्ठया मदिष्ठया क्षीरं सर्पिर्मधूदकम् ॥ हिरण्यपात्रं मधोश्च अवघ्नन् पुरुषं पशुम् । सद्यो दीक्षयन्तीत्यादि प्रमाणं

श्रुतयः प्रिये ॥" इति तदग्रिमग्रन्थः संगच्छते। तत्रैव पञ्चमोल्लासे—"विनाऽलिपिशिताभ्यां तु पूजनं निष्फलं भवेत्" इति, "यथा क्रतुषु विप्राणां सोमपानं न दूषितम्। मद्यपानं तथा कार्यं समये भोगमोक्षदम् ॥" इत्यादि। तथा त्रिपुरार्णववचने कामादिति पदाद्रागप्राप्तनिषेध एव ज्ञेयः। अत एव—"पुरुषार्थनिषेधास्तु रागप्राप्तैकविषयत्वात् क्रत्वर्थत्वेन विहितेषु न प्रवर्तन्ते, स्पष्टानां तन्त्रवचसां क्रत्वर्थतया सर्ववर्णोद्देशेन विधायकानां बहुलमुपलम्भात्, तेषां चेदृशानेकप्रत्यक्षश्रुतिमूलकत्वेन बलाबलचिन्तानवकाशात्" इति "इमां विज्ञाय सुधया मदन्ति परिस्रुता तर्पयन्तः स्वपीठम्" इति त्रिपुरामहोपनिषदि सप्तममन्त्रस्य भाष्ये निरूपितम्।

यत्रावश्यमिति कुलचूडामणिवचनं च मुख्यालाभे प्रतिनिधिविधायकं ज्ञेयम्। यत्तु ज्ञानार्णववचने सात्त्विकद्रव्येण ब्राह्मणैः पूजनमिति, तत्र सात्त्विकं द्रव्यं प्रत्यक्षद्रव्यमेव, न क्षीरादि। "दोषोऽन्यत्र वरारोहे यज्ञे दोषो न विद्यते। अश्वमेधादियज्ञेषु वाजिहत्या यथा भवेत् ॥" इति। "मादकं धर्मसंछेदात् वर्ज्यमासीत् सुलोचने। ज्ञानेन संस्कृतं तत्तु महापातकनाशनम् ॥ ब्रह्महत्यासुरापानस्वर्णस्तेयादिपातकान्। नाशयेत्पूजनाद्देवि निर्विकल्पस्य मन्त्रतः ॥" इत्यादि च तत्रैवैकोनविंशतिपटले प्रथमादिद्रव्यप्रशंसनात्। सात्त्विकादिभेदस्तु द्रव्यस्य त्रिपुरार्णवे उक्तः—"गौड़ी माध्वी च पैष्टी च त्रिविधं द्रव्यमीरितम्। ऐक्षवक्षौद्रजाताद्या गौड़ी स्यात्सात्त्विकी स्मृता ॥ मधूककुसुमद्राक्षातालवृक्षादिसंभवा। माध्वीति कीर्तिता तज्ज्ञैः राजसी सा भवेच्छिवे ॥ पिष्टतण्डुलजाताद्या तामसी पैष्टिकी स्मृता। सात्त्विकी ब्राह्मणे ख्याता राजसी नृपवैश्ययोः। तामसी चोत्तमा शूद्रे तन्त्रेष्वेवं विनिर्णयः ॥" इति। यच्च महाकालसंहितायां प्रतिनिधिपूजनमपि ब्राह्मणस्य निषिद्धम्, तत्तन्त्रदीक्षारहितपरम्, युगान्तरपरं वा। एतदुक्तं योगिनीतन्त्रे—"तन्त्रदीक्षाविहीनानां मुख्ये वाप्यनुकल्पके। नाधिकारोऽन्यथा देवि देवताशापमाप्नुयात् ॥" इति। सत्ये क्रमाच्चतुर्वर्णैः क्षीराज्यमधुपिष्टकैः। त्रेतायां पूजिता देवी घृतेन सर्वजातिभिः ॥ मधुभिः सर्ववर्णैस्तु पूजिता द्वापरे युगे। पूजनीया कलौ सर्वैः केवलैरासवैः प्रिये ॥" इत्युक्तं रुद्रयामले। रहस्यार्णवेऽपि—"कृते तु शूद्रैः संपूज्या प्रत्यक्षैरासवैः शिवा। त्रेतायां वैश्यशूद्राभ्यां नृपाद्यैर्द्वापरे युगे ॥ कलौ युगे महादेवी ब्राह्मणाद्यैः प्रपूजिता ॥" इत्युक्तम्। यच्च क्षीरेण ब्राह्मणैस्तर्प्येति भैरवीतन्त्रवचनम्, "विप्रा क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः" इति लघुस्तववचनम्, "पूजयेद् ब्राह्मणाद्यैस्तु क्षीराज्यमाक्षिकासवैः" इति बृहद्वामकेश्वरवचनं च, तत्तत्तदुत्तरग्रन्थैरेव व्याख्यातम्। यथा भैरवीतन्त्रे—"क्षीरं वृक्षसमुद्भूतमाज्यं वल्कलसंभवम्। मधु पुष्पोद्भवं ज्ञेयमासवं तण्डुलोद्भवम् ॥" इति। बृहद्वामकेश्वरेऽपि—"क्षीरमाज्यं मधु तथा आसवं च महेश्वरि। वृक्षत्वक्पुष्पपिष्टोत्थं क्रमाज्ज्ञेयं विचक्षणैः ॥ एवं वर्णक्रमान्मुख्यमुक्तमन्यन्महेश्वरि। न निषिद्धं यतः सर्वं ग्राह्यं सर्वैर्न संशयः ॥" इति। कुलार्णवेऽपि—"क्षीरं वृक्षोद्भवं ज्ञेयमाज्यं वल्कलजं प्रिये। मधुमाध्वीति संप्रोक्तमासवं तण्डुलोद्भवम् ॥" इति। ज्ञानार्णवेऽपि—

क्षताङ्गो ज्वरितश्चापि मलिनाम्बरमूर्धजः ।
अशौचाङ्गस्तथोष्णीषी कञ्चुको कृतभोजनः ॥११२॥

"क्षीराज्यमधुमैरेयं द्रव्यभेदा भवन्ति हि" इति । यत्तु वामाचारत्वादेते न ब्राह्मणविषया इत्याद्युक्तं केनचित्, तदनादेयम्, पूजायां प्रथमादिद्रव्यादानमात्रेण वामाचारत्वासंभवात्, वामाचारलक्षणस्य तेनाज्ञातत्वात् । तदुक्तं त्रिकूटारहस्ये—"वामाचारं प्रवक्ष्यामि श्रीविद्यासाधनं प्रिये । यं विधाय कलौ शीघ्रं मान्त्रिकः सिद्धिभाग्भवेत् ॥ माला नृदन्तसंभूता पात्रं मानुषमुण्डकम् । आसनं सिंहचर्मादि कङ्कणं स्त्रीकचोद्भवम् ॥" इत्यादिबहूक्तम् । इतोऽन्यप्रकारश्च कालिकापुराणे स्पष्टमुक्तः । स च सव्यापसव्यमार्गस्थेति नामभाष्यावसरे श्रीभास्कररायैरुदाहृतो निरूपितश्च तत एवावगन्तव्यः । अत एव वीरद्रव्यकरणकं पूजनमेव वामो मार्ग इति व्यवहरन्ति, तदपि तन्त्रानालोचनजनितभ्रमविलसितम्, दक्षिणमार्गाचारेऽपि कारणादेरेव करणत्वादिति सेतुबन्धे उक्तम् । एवं च कुलार्णवादिषु पेयं मद्यं पलं खाद्यमिति विधाय, "कुलमार्गरतो देवि न मया निन्दितः क्वचित्" इति मध्ये प्रतिज्ञायान्ते – "तस्मात्तु विधिना मद्यमांससेवनमाचरेत्" इत्याद्युपसंहारान्मध्यवृत्तिनिषेधकलापः सर्वोऽपि विधिशेषत्वेन स्मार्तरागप्राप्तनिषेधानुवादकः सन् स्तावक इति सिद्धम् । तस्माद् ब्राह्मणादेः पूजाङ्गत्वेन प्रथमाद्युपादानं तन्त्रमर्मज्ञैरनिवारितमेवेत्याहुः । अस्त्विदं यथोक्ततन्त्रदीक्षावतां साधकानामतिश्रद्धाभक्तिजुषामिन्द्रियजिगीषूणां नान्येषाम् । अत एव–"अयं तु परमो योगः कौलमार्गो महेश्वरि । असिधाराव्रतसमो मनोनिग्रहहेतुकः ॥ स्थिरचित्तस्य सुलभः सफलस्तूर्णसिद्धिदः । अन्यस्य विफलो दुःखहेतुः स्यात्परमेश्वरी ॥" इति वक्ष्यति । त्रिपुरार्णवेऽपि—"अयं सर्वोत्तमो धर्मः शिवोक्तः सुखसिद्धिदः । जितेन्द्रियस्य सुलभो नान्यस्यानन्तजन्मभिः ॥ यदूर्ध्वरेतसां सर्वत्यागिनामनिकेतिनाम् । क्षणेन स्मृतमात्रं तु मोहमुत्पादयत्यलम् ॥ तदेवात्र हि संसिद्धौ कारणं सर्वमीरितम् । इतो मद्यमितो मांसं भक्ष्यमुच्चावचं तथा ॥ तरुण्यश्चारुवेषाढ्या मदघूर्णितलोचनाः । तत्र संयतचित्तत्वं सर्वथा ह्यतिदुष्करम् ॥ भक्तिश्रद्धाविहीनस्य कथं स्यादेतदीश्वरी ॥" इति । कुलार्णवेऽपि—"अहो भुक्तं तु यन्मद्यं मोहयेत्त्रिदशानपि । तन्मैरेयं शिवं पीत्वा यो न विक्रियते नरः ॥ जपन् शिवपरो भूत्वा स मुक्तः स च कौलिकः ॥" इति । आधुनिकास्तु प्रायः शिश्नोदरपरायणाः सन्तो यथेच्छाचरणाय कौलाभासमार्गे प्रवृत्ताः "पीत्वा पीत्वा पुनः पीत्वा" इत्यादिवचनान्युदाहरन्तो यथेष्टमाचरन्ति । न ते तन्त्रगोष्ठीषु स्मर्तव्याः । ते च कौलदाम्भिकाः कौलादर्शादिषु सम्यग् वर्णिताः, उपहसिताश्च प्रहसनप्रबोधचन्द्रोदयादिषु । तस्माद् येषां कौलमार्गेऽभिरुचिस्तैर्यथोक्तदीक्षां सद्गुरोरासाद्य संयतबाह्यान्तःकरणैर्भक्तिश्रद्धातरङ्गितान्तरङ्गैर्यथोक्तानुष्ठानं यथाशक्त्या कर्तव्यम् । अन्यैस्तु गन्धोदकाद्यन्यतमद्रव्यैरेव पूजनादिकं कर्तव्यमिति तु तत्त्वम् । प्रकृते ग्रन्थो व्याख्यायते ॥ १११ ॥

तत्रादौ पूजामण्डले प्रवेशयोग्यं वक्तुं तदितरं निषेधति—क्षताङ्ग इत्यादि ।

पूजिताङ्गस्तथोच्छिष्टमुखो मरणसूतकी ।
अपस्मारी क्लेशयुक्तश्छर्दतोसाररोगवान् ॥११३॥
प्रायश्चित्ती तथाऽस्नातो न विशेन्मण्डलं क्वचित् ।
सकृन्मोहात् प्रविष्टोऽपि देवताशापमाप्नुयात् ॥११४॥
प्रविष्टो रोगयुक्तस्तु रोगाधिक्यं समाप्नुयात् ।
मलिनो बुद्धिनाशं च धननाशं तथेश्वरि ॥११५॥
अशौचाङ्गः कुष्ठरोगमुष्णीषी शस्त्रघातनम् ।
कञ्चुकी बन्धनं देवि भुक्तश्चोदरगुल्मकम् ॥११६॥
पूजिताङ्गश्चापकीर्तिमुच्छिष्टश्चापमानकम् ।
सूतकी मरणं देवि प्रायश्चिती तु पातकम् ॥११७॥
अस्नातश्चाङ्गदौर्गन्ध्यं प्राप्नुयान्नात्र संशयः ।
साधकाचार्ययोश्चापि सममेतन्महेश्वरि ॥११८॥

---

क्षताङ्ग इति प्रवहद्रुधिरादिक्षतवान् । तदुक्तं बृहद्वामकेश्वरे—'बृहद्रुधिरमज्जादिक्षतयुक्तस्तथैव च" इति । मलिनेति मलिनमम्बरं मूर्धजाश्च यस्य । अशौचाङ्गः उत्सृष्टमलमूत्रः सन्नकृतशौचः । उष्णीषपदं मकुटादिपरम् । तेन शिरःप्रावरणसामान्यं निषिद्धम् । यदुक्तं बृहद्वामकेश्वरे—"अप्रावृतशिराः" इत्यादि । कृतभोजन इति एकादश्यादिवत् कृतोपहाराशक्तेतरपरम् । अत एवोक्तं त्रिपुरार्णवे—"फलाद्यभ्यवहारस्तु न शक्तानां कदाचन । व्रतोक्तफलाहारादिरशक्तातुरयोर्भवेत् ॥" इति ॥११२॥

पूजिताङ्गो गन्धाद्यलङ्कृतः । मरणसूतकीत्यनेन जन्मसूतकिनोऽभ्यनुज्ञाताः । क्लेशः पुत्रादिशोकः ॥ ११३ ॥

प्रायश्चित्ती संभूतब्रह्महत्यादेरकृतनिष्कृतिः ॥ ११४ ॥

एतेषां प्रवेशेऽनिष्टफलमाह—प्रविष्ट इत्यादि ॥ ११५ ॥

प्राप्नुयादिति क्रियायाः सर्वत्र सम्बन्धः ॥ ११६ ॥

अपकीर्तिर्दुर्यशः । अपमानो मानहानिः ॥ ११७ ॥

साधकाचार्ययोरिति । मण्डलप्रवेशः पूजाकर्तृत्वमित्युभयं निषिद्धं ज्ञेयम् । अथवा प्रवेष्टुः साधकस्य प्रवेशानिषेद्धुराचार्यस्य पूजाकर्तुश्च रूमम् । एतद्रोगाधिक्यादि ॥११८॥

यदि तेषां तु भक्तिः स्यादुत्कटा दर्शनादिषु ।
पूजागृहद्वारदेशाद् बहिः पूजादिकं चरेत् ॥११९॥
पूजागृहाद् बहिर्देवि प्रणमेद् दण्डवच्छिवे ।
मण्डले दण्डवन्नैव साष्टाङ्गं नमनं चरेत् ॥१२०॥
जानुभ्यां च पदाभ्यां च मूर्ध्ना हस्तयुगेन च ।
चतुरङ्गप्रणामो वै मण्डले विहितः शिवे ॥१२१॥
स्नातः शुचिर्धौतवस्त्रो धृतपुण्ड्रः शुभाशयः ।
क्षालिताङ्घ्रिकरो देवीं ध्यायन् भक्त्या प्रणम्य च ॥१२२॥
आचार्याज्ञानुरूपेण मण्डलान्तर्विशेत् ततः ।
भावयन् देवतारूपं मण्डलं प्रणमेद् बुधः ॥१२३॥

---

तेषां क्षताङ्गादीनां दर्शनादिषु मण्डलदर्शनपूजनादिषु । नैतत्क्षताङ्गादीनां सर्वेषां बहिः स्थित्वा पूजादिकम्, किन्तु परिहर्तुमशक्येन रोगाद्युपद्रवेण युतानामेव । न तु मलिनाम्बरादीनाम्, तेषां दोषस्य परिहर्तुमशक्यत्वात् । यदि तेषामिति वचनस्य शक्तेऽनुग्रहरूपत्वात् पूजादिकमित्यादिना स्वात्मीकारः । पूजागृहद्वारदेशादिति द्वाराभावे द्वारपूजास्थलं ग्राह्यम् । अस्नातभुक्तयोस्तु न स्वात्मीकारः, तदुक्तं कुलार्णवे—अस्नात्वा चापि भुक्त्वा वा अभक्त्या वा कुलेश्वरि । यः सेवेत कुलद्रव्यं स दारिद्र्यमवाप्नुयात् ॥" इति । यत्तु "गुर्वादीनां यदा चाज्ञा स्नात्वा तत्त्वं तु शोधयेत्" इति स्वतन्त्रे कृतभोजनस्य स्नात्वा तत्त्वशोधनमुक्तम्, तद्दिवाभुक्तस्य रात्रौ ज्ञेयम् । अत एवोक्तं त्रिपुरार्णवे—"अतर्कितो दिवाभुक्तो यदा रात्रौ समागतः । तदा गुर्वाद्याज्ञया तु स्नात्वा सेवेत चान्यथा ॥ भुक्त्वा न मण्डले गच्छेत्सर्वथा परमेश्वरि । पूजागृहाद बहिः स्थित्वा देवता-दर्शनं चरेत् ॥ कुलद्रव्यं तथा भुक्त्वा मोहाद्वापि प्रमादतः । यः सेवेत स वै देवि देवता-शापमाप्नुयात् ॥" इति । एवं मरणसूतकिनोऽपि स्वात्मीकारो निषिद्धः । तदुक्तं योगिनीतन्त्रे—"मृतसूतकसंयुक्तो न गच्छेन्मण्डले क्वचित् । न सेवेत कुलद्रव्यमन्यथा पतनं भवेत् ॥" इति ॥ ११६-१२० ॥

तर्हि कथं मण्डले प्रणामः कर्तव्य इति चेदाह—जानुभ्यामित्यादि । चतुर्णामङ्गानां जानुपादमूर्धहस्तानां प्रकर्षेण नमनं भूमिसंयोजनं यत्र स चतुरङ्ग-प्रणामः ॥१२१॥

मण्डलप्रवेशने विधिमाह—स्नात इत्यादि । अत्र स्नात इत्यादिकं प्राङ्निषिद्धा-स्नात इत्यादि वाक्यसिद्धार्थकथनम्, न त्वपूर्वम् । धृतपुण्ड्र इति शून्यफालनिषेधार्थम् । शुभाशयः शोकाद्यनुपहतचित्तः ॥ १२२ ॥

ततः मण्डलप्रवेशानन्तरम् ॥ १२३ ॥

पुष्पाञ्जलिं ततः कुर्यात् तद्विधानं निगद्यते ।
सामान्यकुम्भतोयेन करौ प्रक्षाल्य भक्तितः ॥१२४॥

सुरभीकृत्य गन्धाद्यैः पुष्पाद्यादाय शङ्करि ।
उत्थाय च ततो देवि देवताभिमुखः स्थितः ॥१२५॥

श्रीनाथादिगुरुं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान् द्व्यष्टचतुष्कषष्टिनवकान् वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥१२६॥

संप्राप्तपञ्चदश्यादिः साधकस्तु महेश्वरि ।
समष्टियोगिनीविद्यामपि तत्र पठेच्छिवे ॥१२७॥

समस्तात् प्रकटाद् गुप्तात् तथा गुप्ततरादपि ।
सम्प्रदायकुलोत्तीर्णाद् निगर्भाच्च रहस्यतः ॥१२८॥
अतिपूर्वरहस्याच्च परापररहस्यतः ।
योगिनीश्रीचक्रपादुकाभ्यो नम उदीरयेत् ॥१२९॥
नन्दसागरवर्णेयं पुष्पाञ्जलिविधौ शिवे ।
देवतां ध्यानोक्तरूपां ध्यायन् संपूज्य शङ्करि ॥१३०॥

---

सामान्यकुम्भः सामान्यकलशः । भक्तितः पुष्पाञ्जलिं कुर्यादिति सम्बन्धः ॥ १२४ ॥

करौ सुरभीकृत्य गन्धादिलेपनैः सुगन्धीकृत्य स्थितः । ध्यात्वा आचार्यादीन् पूजयेदित्यन्वयः ॥ १२५ ॥

पूजने मन्त्रमाह—श्रीनाथादीति मण्डलमित्यन्तम् ॥ १२६ ॥

एवं सर्वसाधारण्येन पुष्पाञ्जलिमन्त्रमुक्त्वा प्राप्तपञ्चदश्याद्युपासनानां विशेषमाह—संप्राप्तेत्यादि । आदिना सर्वदीक्षावतां ग्रहणम् । तत्र उक्तश्रीनाथादीत्यस्यान्ते समष्टियोगिनीविद्यामपि पठेत् ॥ १२७ ॥

तामेवाह—समस्तेत्यादि । आत् । आत् । तथा । आदपि आच्च । तः ॥ १२८ ॥

पूर्व । आच्च । तः । इति त्यक्त्वा समस्तेत्यादि नम इत्यन्तं स्वरूपम् ॥ १२९ ॥

नन्द नव । सागर चत्वारः । तेन एकोनपञ्चाशद्वर्णा समष्टिविद्या पुष्पाञ्जलि-

आचार्यादीन् तथा ध्यात्वा पूजयेत् परमेश्वरि ।
प्रणमेदुक्तविधिना ज्ञात्वा सर्वं शिवात्मकम् ॥१३१॥
सद्द्वितीयं समादद्यात् पात्रमाचार्यसत्तमात् ।
पात्रं ग्राह्यं दक्षकरे दीक्षायुक्तेन शङ्करि ॥१३२॥
अन्येन तु समादेयं वामहस्तेन सुन्दरि ।
अथवा वामहस्तेन सर्वैर्ग्राह्यं महेश्वरि ॥१३३॥
हस्तान्तरेण त्वाच्छाद्य गृह्णीयाद्दापयेदपि ।
अनाच्छादितपात्रं तु भवेदसुरभागकम् ॥१३४॥

---

विधौ विनियुक्ता इत्यर्थः। मन्त्रार्थस्तु—श्रीनाथादि। गुर्वादि गुरुत्रयम्। वीरान्। द्व्यष्ट द्वियुताष्टेति दश। चतुष्कयुता षष्टिः सिद्धाः। नवकं मुद्रा इति पश्चाम्नायान्तर्गताः कतिपयदेवताः। प्रकटेत्यादि परापररहस्येत्यन्तं नवानां द्वन्द्वः। ततो योगिनीपदेन समस्तपदेन च कर्मधारयद्वयम्। एवंविधयोगिनीनां श्रीमत् यच्चक्रं समुदायः। अथवा योगिनीभिर्युक्तं यत् श्रीचक्रं श्रीचक्रसमष्टयभिमानिनीदेवता तस्याः। पादुकाः चतस्रः प्रकाशविमर्शमिश्रनिर्वाणाख्या अनुत्तराम्नायोद्धारावसरे व्याख्येयाः। ध्यानोक्तरूपामित्यत्र ध्यानं स्वस्वोपास्यदेवतायाः ॥१३०॥

तथा देवतारूपम्। आदिना सर्वान् सामयिकान् उक्तविधिना चतुरङ्गेन। सर्वं तत्र विद्यमानं सामयिकमण्डलम्। इद पूजनमुपविश्य वा एकहस्तेन वा न कर्तव्यम्; पुष्पाञ्जलिं तत इति उत्थाय च ततो देवीति प्रोक्तत्वात्। अत एव कुलार्णवे—"नार्चयेदेकहस्तेन न पिबेदेकपाणिना" इति। नित्यातन्त्रेऽपि—"न पूज्या चैकहस्तेन नोपविश्यापि पूजयेत्" इति। तथा स्वशिष्यादिकनिष्ठानपि पूजयेत्। एतदुक्तं योगिनीतन्त्रे—"मण्डले हीनवर्णांश्च शिष्यांश्च गुणतोऽरान्। सर्वान् शिवमयान् ज्ञात्वा पूजयेदविशेषतः ॥" इति। तत्क्रमोऽपि तत्रैवोक्तः—'देवतां क्रमतो ज्येष्ठान् समांश्चापि स्वतोऽवरान्। पूजयेत्तु क्रमेणैव नान्यथा शापमाप्नुयात् ॥" इति ॥ १३१ ॥

आदानप्रकारमाह—पात्रमित्यादि। दक्षकरे पात्रग्रहणस्योक्तत्वादर्थाद् वामकरे द्वितीयम् ॥ १३२ ॥

अन्येन दीक्षारहितेन केवलमन्त्रोपदेशवता तद्रहितेन च। दीक्षावतां पक्षान्तरमाह—अथवेति। एवं चादीक्षितानां वामहस्तेनैव पात्रादानं दीक्षितानां यथेच्छमन्यतरहस्तेनेति सिद्धम् ॥ १३३ ॥

पात्रादानप्रकारमाह—हस्तान्तरेणेति। गृहीतद्वितीयखण्डेनेतरहस्तेनाच्छाद्यैव गृह्णीयात् दापयेत्। आचार्येणाप्येवमाच्छाद्य दद्यात्। दापयेदित्यनेन बहूनां समवायेऽशक्त

तस्मादाच्छादनं कुर्यात् स्थापनादानयोरपि ।
तर्पणाद्युपयोगे तु छादनं तु परित्यजेत् ॥१३५॥
उपविश्य यथायोग्यं साधारे मण्डले न्यसेत् ।
उपवेशक्रमं देवि शृणु संयतमानसा ॥१३६॥
मण्डलाकारतो वाऽपि चतुरस्रतयाऽथवा ।
आचार्यं मध्यतः कृत्वा विशेज्ज्येष्ठक्रमेण तु ॥१३७॥

---

आचार्यः शिष्यादिना दापयेदित्यप्युक्तं भवति । अन्यथा सहस्रनामादिपूजनादौ सहस्रादिसंख्येभ्य एकेनाचार्येण कथं देयं स्यात् । आच्छादनस्यावश्यकत्वात्तदभावे दोषमाह—अनाच्छादितमित्यादि । असुरभागकं न देवतायोग्यमित्यर्थः ॥ १३४ ॥

एवमाच्छादनस्यावश्यकत्वात् सर्वदाच्छादनीयमित्याह—स्थापनेत्यादि । ननु तर्हि तर्पणादि कथं कर्तव्यमिति चेदाह—तर्पणादिति ॥ १३५ ॥

एवं पात्रमादायोपविश्य । उपवेशनं चासने, "भूमौ समाविश्य कर्म विधिनापि कृतं शिवे । तन्निरर्थकतामेति भिन्नकुम्भस्थतोयवत् ॥" इति त्रिपुरार्णवोक्तेः । यत्तु "श्रीचक्रे नासने तिष्ठेत्" इति कुलार्णवे, "पूजामण्डलमध्ये तु न तिष्ठेदासने क्वचित्" इति रहस्यार्णवे चोक्तम्, तत्कर्माकरणकालपरम् । अत एव—"अपवित्रासने तद्वदत्युच्चे वा महेश्वरि । भूमावपि स्थितः पात्रं न स्वीकुर्यात् कदाचन ॥" इति, "ज्येष्ठेभ्यो दूरतस्तिष्ठन्नासने तर्पयेद् गुरून्" इति बृहद्वामकेश्वरयोगिनीतन्त्रयोरुक्तम् । यथायोग्यमिति । पञ्चदश्याद्युपासनवतामेवाधारे न्यसनं नान्येषामित्यर्थः, "दक्षहस्तस्थितं पात्रं वामहस्तेन तर्पयेत्" इति वक्ष्यमाणत्वात् ॥ १३६ ॥

मण्डलाकारतया वृत्ताकारतया । मण्डलाद्याकारतयाऽपि न यथेच्छमुपवेश इत्याह—ज्येष्ठक्रमेणेति । वर्णतः वर्णेषूपदेशतश्च ज्येष्ठक्रमेण पात्रमादाय पृथग् विशेदित्यर्थः । तदुक्तं त्रिपुरार्णवे—"वर्णविद्याक्रमाज्ज्येष्ठान् पूजयेत् पृथगास्थितान्" इति । एवं पुरुषैः स्त्रीभिश्च स्थानभेदेन पृथक् स्थेयम् । तदपि तत्रैवोक्तम्—'स्त्रीभिश्च पुरुषैश्चापि न स्थेयं मिलितैः शिवे । स्पर्शादिहेतुना कामक्रोधाद्युद्भवहेतुतः ॥ पृथक्स्थानस्थितास्तस्मात्स्त्रियश्च पुरुषा अपि । न स्त्रीषु पुरुषस्तिष्ठेन्न स्त्री पुरुषमध्यगा ॥" इति । स्त्रीणां मध्ये तथैव चेत्यत्रापि वक्ष्यमाणत्वाच्च । कुलार्णवेऽपि—"स्त्रीणामन्यतमं स्थानं पुंसामन्यतमं पृथग्" इति । "अथवा मिथुनं कृत्वा क्रमात् समुपवेशयेत्" इति तदग्रिमवचनं तु दम्पतीपरम्, मिथुनपदस्य तत्रैव मुख्यार्थत्वात् । प्रागुक्तकामक्रोधादिदोषाद्यसंभवाच्च ॥ १३७ ॥

ज्येष्ठेषु सत्सु न विशेदाचार्यस्य समीपतः ।
न साम्येन गुरोः स्थेयं स्त्रीणां मध्ये तथैव च ॥१३८॥
नाग्रगस्तु गुरोर्देवि नाज्ञामुल्लङ्घ्य वै गुरोः ।
एवं ज्ञात्वा सम्प्रदायं निषीदेन्मण्डले शिवे ॥१३९॥
आचार्योऽपि तथा ज्येष्ठानुत्थाय प्रणिपत्य च ।
तेषामाज्ञां गृहीत्वैव स्वासनेऽथ समाविशेत् ॥१४०॥
आदौ सुवासिनीः पूज्य कुमारीर्बटुकांस्तथा ।
पात्रं प्रदद्यात्तत्पश्चाद् ब्राह्मणानर्च्य वै क्रमात् ॥१४१॥
तेभ्योऽपि पात्रं दद्याद्वै ज्येष्ठेभ्योत्थाय साधकः ।
ज्येष्ठात् कनिष्ठोऽपि देवि गृह्णीयादुत्थितो नमन् ॥१४२॥
श्रीपात्राद्दीक्षितायै स्यात् कुमार्यै च महेश्वरि ।
वटुकाय बलेः पात्रादन्येभ्यो हेतुपात्रतः ॥१४३॥

---

कनिष्ठो न विशेदित्यर्थः । साम्येन समपङ्क्तावव्यवधानेन ॥ १३८ ॥

अग्रगः गुरुं पृष्ठतः कृत्वा अग्रगतः । अथवा सम्मुखपङ्क्तौ गुरोः संमुखः । गुरोराज्ञया तु यत्र कुत्रापि स्थेयमित्याह—नाज्ञामिति । एवमुक्तप्रकारेण । उपवेशने संप्रदायं ज्ञात्वा । निषीदेत् उपविशेत् । उपवेशे आसनमुक्तं त्रिपुरार्णवे—"स्वस्तिकासनयोगेन गूढपादस्तु संविशेत्" इति । स्वतन्त्रेऽपि—"वीरासनं कुक्कुटं च नाचरेन्मण्डले शिवे" इति ॥ १३९ ॥

एवं सामयिककृत्यमुक्त्वा आचार्यकृत्यमाह—आचार्योऽपीति । तथा चतुरङ्गेण प्रणिपत्य । तेषां ज्येष्ठानां पूजाकाले । ज्येष्ठागमने तु कुलार्णवे—"पूजामध्ये गुरौ ज्येष्ठे पूज्ये वापि समागते। नत्वा ब्रूयात् स्थितं शेषमाचरेत्तदनुज्ञया ॥" इति। एवं ज्येष्ठसमवाये तदाज्ञयैव पूजा कर्तव्या। तदपि तत्रैवोक्तम्—"तत्कनिष्ठः क्रमशश्चेत् कुलपूजां समाचरन् । तत्समीपं ततो गत्वा नमस्कृत्य गुरोर्यथा । तस्मै निवेद्य तत्सर्वमाचरेत्तदनुज्ञया ॥" इति । एतच्च योग्यतया मण्डलादिपूजापरं ज्ञेयम् ॥ १४० ॥

सामयिकपूजाक्रममाह—आदावित्यादि । तत्पश्चात् सुवासिन्यादिपूजायाः पश्चात् ॥ १४१ ॥

तेभ्योऽपि पूजितेभ्यो ब्राह्मणभ्योऽपि । तत्र ज्येष्ठेभ्य उत्थाय पात्रं दद्यात् पात्रं गृह्णीयात् ॥ १४२ ॥

तत्र दीक्षितसुवासिनीकुमारीभ्यः श्रीपात्राद्देयम् । वटुकाय बलिपात्रात् । अन्ये दीक्षितसुवासिन्यः पुरुषाद्याश्च । श्रीपात्रात्पुरुषेभ्यो न कदापि देयम्। एतदुक्तं कुलार्णवे—

सर्वान् संपूज्य पात्राणि दातव्यानि महेश्वरि ।
पूर्णाभिषिक्तो देवेशि गुरुपङ्क्तिं शिरो भुवि ।
ध्यायेद्यथोक्तविधिना तद्ध्यानं शृणु साम्प्रतम् ॥१४४॥

कराभ्यां चिन्मुद्रासमधुनृकपालं च दधतीं
द्रुतस्वर्णप्रख्यामरुणकुसुमालेपवसनाम् ।
कृपापूर्णापाङ्गीमरुणनयनां बर्बरकचा-
मुपेतां तिस्रौघैर्यजतु गुरुपङ्क्तिं कृतमतिः ॥१४५॥

आदिनाथादिगुर्वन्तान् गुरून् संतर्प्य मूर्धनि ।
देवतां हृदि संतर्प्य मूले स्वात्मानमेव च ॥१४६॥

आत्मविद्याशिवाख्यानि तत्त्वानि जुहुयाच्छिवे ।
सर्वतत्त्वं ततः पश्चात् पूर्णपात्रमतः परम् ॥१४७॥

दिव्यौघेभ्यः पराख्येभ्यो गुरुभ्यो हृदयं शिवे ।
इति पुष्पाञ्जलिं न्यस्य मूर्ध्नि पश्चान्महेश्वरि ॥१४८॥

---

"श्रीपात्रस्थितहेतुं न दद्यात्पुरुषाय तु । यदि दद्यात्कुलेशानि देवताशापमाप्नुयात् ॥" इति। त्रिपुरार्णवेऽपि--"विशेषार्घ्यात्तु शक्तीनां वीराणां हेतुपात्रतः। अन्यथा पात्रदानात्तु देवताशापमाप्नुयात् ॥" इति । शेषदानं तु न दोषावहम् । तदपि तत्रैवोक्तम्-"विशेषार्घ्याच्छक्तिशेषं वीरशेषं च हेतुतः । स्वीकुर्वन्नैव दुष्येत वीरशक्तिरपीश्वरी ॥" इति ॥१४३॥

सर्वानिति । शिष्यभूतानपीत्यर्थः । एतदुक्तं त्रिपुरार्णवे—"असंपूज्य शिष्यमपि यो दद्यात्पात्रमम्बिके । तस्मै कुप्यति सा देवी यस्मात्सर्वं हि तन्मयम् ॥" इति । अधुना स्वात्मोकारविधिं वदन्नादावभ्यर्हितत्वात् पूर्णाभिषिक्तस्य तद्विधिमाह--पूर्णाभिषिक्त इति । षट्चरणोऽयं श्लोकः ॥१४४॥

चिन्मुद्रा तर्जन्यङ्गुष्ठयोगरूपा । द्रुतस्वर्णं गाढाग्नियोगेन द्रवीभूतं स्वर्णम् । आलेपश्चन्दनादिः । बर्बरकचां कुण्डलितकेशाम् । तिस्रौघैः त्रिसंख्यौघैः । आर्षः प्रयोगः । गुरुपङ्क्तिमिति । गुरुपङ्क्त्यभिमानिनी देवता । सव्यवामयोरायुधे । कृतमतिः समाहितचित्तः । यजतु यागं करोतु ॥१४५॥

तर्पणादिविधिमुद्देशत आह—आदिनाथादीत्यादि । मूले मूलाधारे । आत्मानम् आत्मपादुकाम् ॥ १४६–१४७॥

ओघतर्पणमाह—दिव्यौघ इत्यादि । दिव्यौघेत्यादि गुरुभ्य इत्यन्तं स्वरूपम् ।

आदिनाथं च तच्छक्तिं सदाशिवमतः परम् ।
ईश्वरं रुद्रविष्णू च ब्रह्माणं शक्तिसंयुतान् ॥१४९॥
तर्पयेत् पूजयेच्चापि क्रमादथ महेश्वरि ।
परापराख्यान् सिद्धौघान् यजेत् पुष्पाञ्जलिं शिवे ॥१५०॥
सनकं सनन्दनं च सनातनमपीश्वरि ।
सनत्कुमारं च सनत्सुजातं च ऋभुक्षतम् ॥१५१॥
दत्तात्रेयं रैवतकं वामदेवं महेश्वरि ।
व्यासं शुकं च संतर्प्य पूजयेत् परमेश्वरि ॥१५२॥
अपराख्यान् मानवौघान् पूजयेत् कुसुमाञ्जलिम् ।
नृसिंहं च महेशं च भास्करं च महेन्द्रकम् ॥१५३॥
वामनं विष्णुमपि च तर्पयेत् पूजयेच्छिवे ।
सूर्यरुद्रर्तुसंख्याता ओघस्था गुरवः शिवे ॥१५४॥
आनन्दनाथशब्दान्ता अम्बान्ताश्चापि शक्तयः ।
क्रमेण परमेष्ठ्यादीन् पादुकां नामयोगतः ॥१५५॥

---

हृदयं नमः । न्यस्य दत्वा ॥१४८॥

दिव्यौघनामान्याह—आदिनाथमित्यादि । तच्छक्तिम् आदिनाथशक्तिम् । रुद्रविष्णू रुद्रं विष्णुं च । शक्तिसंयुतान् । सदाशिवादीनामन्ते सदाशिवशक्त्यादि-तत्तच्छक्ति चेति भावः ॥१४९॥

क्रमात् तत्तन्नामोत्तरं तत्तच्छक्तिरिति । अथ दिव्यौघतर्पणानन्तरम् । सिद्धौघेभ्यः परापराख्येभ्य इत्यादि पुष्पाञ्जलिं दत्वेति शेषः । परापराख्यानिति पुष्पाञ्जलि-मन्त्रोऽप्युक्तो ज्ञेयः । एवमग्रेऽपि ॥१५०॥

सिद्धौघनामान्याह—सनकमित्यादि ॥१५१॥

पूर्ववत् संतर्प्य पूजयेत् ॥१५२॥

मानवौघेभ्यः पराख्येभ्य इत्यादि । महेन्द्रम् ॥१५३॥

सूर्य द्वादश । रुद्र एकादश । ऋतु षट् । प्रोक्तदिव्यसिद्धमानवौघे स्थितानां गुरूणां क्रमात् संख्या ज्ञेया ॥१५४॥

आनन्दनाथशब्दान्ताः आदिनाथादयः पुरुषाः । अम्बान्ताः शक्तयः स्त्रियः । आदिनाथानन्दनाथश्रीपादुकाम् । आदिनाथशक्त्यम्बाश्रीपादुकाम् इत्यादि । एवमोघ-

तत्तन्मन्त्रेण देवेशि गुरूणां सन्निधौ क्रमात् ।
तर्पयेद् देवचरणे तथा शेषमपीश्वरि ॥१५६॥
सपात्रं स्यात्तु देवेशि तर्पयेदथ शङ्करि ।
ज्ञाते शिवादिकान् तान् वै नव वापि महेश्वरि ॥१५७॥
हृदि बिन्दुं त्रिकोणं तु ध्यात्वा तत्र महेश्वरि ।
तर्पयेन्न्यासविधिना कामेश्वर्यादिकाः शिवे ॥१५८॥
मध्ये पुनस्तर्पयेद् वै नवशक्तीर्महेश्वरि ।
ईश्वरीं चापि राज्ञीं च शक्तिं गुप्तिं च ज्ञप्तिकाम् ॥१५९॥

---

त्रयतर्पणानन्तरं परमेष्ठ्यादीन् गुर्वन्तान् क्रमेण त्रिगुरून् महापादुकां च तत्तन्मन्त्रेण नामयुक्तेन तर्पयेदित्यन्वयः । पादुकायां तु गुरुनामयोगः, "श्रीपादुकां तर्पयेद्वै गुरुनामयुतां शिवे" इति सप्तदशे वक्ष्यमाणत्वात् । ओघपदार्थोऽपि तत्रैव स्पष्टीभविष्यति ॥१५५॥

गुरूणामसन्निधाने मूर्ध्नि तर्पणमुक्तम् । सन्निधाने विशेषमाह – सन्निधाविति । सन्निधौ स्थितानां गुरूणां चरण एव तर्पयेत् । पादुकायास्तु तर्पणं मूर्ध्न्येव, "एव गुरूंस्तु चरणे पादुकां मूर्ध्नि तपयेत्" इति त्रिपुरार्णवात् । प्रसङ्गाच्छेषग्रहणविधिमप्याह—तथा शेषमिति ॥१५६॥

सपात्रमिति । अग्रे वीरात्तु चर्वणमिति वक्ष्यमाणत्वात् । ज्येष्ठाद्वीरात् गुर्वादिभिन्नात् । चर्वणमेव शेषीकृतं ग्राह्यम् । परमेष्ठ्यादिगुरुभ्यस्तु सपात्रं चर्वणं तथा स्यादित्यर्थः । पात्रं प्रथमं चर्वणं द्वितीयादि । एवं प्रासङ्गिकमुक्त्वा प्रकृतमाह — तर्पयेदिति । अथ ओघतर्पणानन्तरम् । परमेष्ठ्यादिगुरुतर्पणस्थाने शिवादिस्वगुर्वन्तं गुरुमण्डले ज्ञाते सति तान् शिवादिकान् स्वगुर्वन्तान् तत्तन्नाम्ना तर्पयेत् । अथवा तावतामज्ञाने नवमगुरुमारभ्य स्वगुर्वन्तं तर्पयेत् । नवानामप्यज्ञाने प्रागुक्तक्रमेण परमेष्ठ्यादीन् । पक्षत्रयेऽपि परमेष्ठ्यादितर्पणं तत्तन्मन्त्रेण ज्ञेयम् ॥१५७॥

अथ हृदि तर्पणमाह—हृदीति । हृदि बिन्दुं तद्बहिः कण्ठस्तनद्वयस्थकोणं त्रिकोणं ध्यात्वा, कण्ठे च स्तनयोर्दक्षवामयोरिति श्रीचक्रन्यासे त्रिकोणस्य तथा वक्ष्यमाणत्वात् । न्यासविधिना वाग्भवं कामकूटं चेत्यादि वक्ष्माणकामेश्वर्यादिन्यासमन्त्रैरित्यर्थः ॥१५८॥

मध्ये बिन्दौ । ज्ञप्तिकां ज्ञप्तिम् ॥१५९॥

नन्दां स्पन्दामाशयां च तत्पश्चात्तु महेश्वरि ।
श्रीचक्रनगराद्यां च साम्राज्ञीं परमेश्वरि ॥१६०॥

महामहाशब्दपूर्वां बालां मूलं मुखे क्षिपेत् ।
तारो मायाऽजपा सोहं शिरश्चाष्टाक्षरी मता ॥१६१॥

---

श्रीचक्रनगरसाम्राज्ञीम् ॥१६०॥

महामहाशब्दपूर्वामीश्वर्यादिनवशक्ति सर्वादौ बालां मूलं योजयेत् । यथा—बालामूलं महामहेश्वरो, बालामूलं महामहाराज्ञी इत्यादि । बिन्दुत्रिकोणतर्पणमन्त्रार्थ-स्तूच्यते—ऐं क ४ अग्निचक्रे कामगिरिपीठे मित्रीशनाथात्मके जाग्रद्दशाधिष्ठायके इच्छाशक्त्यात्मकरुद्रात्मशक्तिश्रीमहाकामेश्वरीश्रीः—इति प्रथमो मन्त्रः। तत्राग्निचक्रेत्यादि-सप्तम्यन्तचतुष्टयं त्रिकोणाग्रस्थानविशेषणम् । इच्छाशक्तीत्यादि कामेश्वरीविशेषणम् । अग्निचक्रम् अग्निमण्डलम् । अग्निसूर्यसोमाः सन्ध्यादिनरात्र्यभिमानिदेवताः । कामगिरिजालन्धरपूर्णगिरीति पूर्वमध्यपश्चिमदेशाभिमानिन्यः पीठदेवताः, "पूर्वसागर-तीरे तु कामगिर्यात्मना स्थिता । मेरुसानौ स्थिता सैव जालन्धरस्थानरूपतः ॥ पूर्ण-गिर्यात्मना प्रत्यक् समुद्रप्रान्ततः स्थिता ।" इति त्रिपुरारहस्योक्तेः । मित्रीशषष्ठीशौड्डीशा वाग्भवाद्येकैककूटोपासका आद्या गुरवः, "मित्रीशषष्ठीशौड्डीशा आद्याचार्याः शिवाङ्गजाः । कूटोपासनसंप्राप्तमहेश्वरपदा इमे ॥" इति त्रिपुरारहस्योक्तेः । जाग्रत्स्वप्नसुषुप्तिरिति बाह्येन्द्रियज्ञानमनोविकल्पाविवेकाः पुरुषदशाः। तदुक्तं शिवसूत्रेषु—"जाग्रत् ज्ञानम्। स्वप्नो विकल्पः । अविवेको माया सौषुप्तम् ।" इति । जाग्रद्दशाभिमानी जाग्रद्दशाधिष्ठायकः । एवं स्वप्नसुषुप्त्योरपि इच्छाज्ञानक्रियेत्याद्याः परमशिवशक्तयः । एवं चाग्निचक्रात्मके इत्यादिचतुष्टयरूपे त्रिकोणाग्रस्थाने स्थिता इच्छाशक्त्यात्मिका रुद्ररूपशक्तिमयी कामेश्वरीत्यर्थः । एवमेव क्लीं ह ५ सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथात्मके स्वप्नदशाधि-ष्ठायके ज्ञानशक्त्यात्मकविष्ण्वात्मकशक्तिश्रीमहावज्रेश्वरीश्रीः । सौः स ३सोमचक्रे पूर्ण-गिरिपीठे ओड्डीशना०सुषुप्तिद० क्रियाश०ब्रह्मात्म० श०महाभगमालिनीश्रीः। ३क १४पर-ब्रह्मचक्रे महौड्याणपीठे चर्यानाo तुरीयद०शान्ताश०परब्रह्मात्मश०महात्रिपुरसुन्दरीश्रीः। इति मन्त्राणामप्यर्थो ज्ञेयः । बालाबीजं मूलकूटं च कामेश्वर्यादिवाचकं ज्ञेयम् । चतुर्थमन्त्रे परब्रह्मचक्रादिकमग्निचक्रादित्रयसमष्टिरूपं ज्ञेयम्। एवं हृदि तर्पणमुक्त्वा मूलाधारतर्पणाय योग्यात्मपादुकामाह—तार इत्यादि । तारः ॐ । माया ह्रीं । अजपा हंसः । सोऽहं स्वरूपम् । स्वाहा ॥१६१॥

आत्मनः पादुका चैषा चात्मनामयुतान्त्यतः।
मूलाधारे तर्पयेद् वै आत्माष्टाक्षरविद्यया ॥१६२॥
अथ शक्त्यै समर्प्यैतच्छेषं वीरात्तु चर्वणम्।
वामहस्ते समाच्छाद्य स्वरषोडशकं पठेत् ॥१६३॥
प्रकृत्यादिपृथिव्यन्तमात्मना च ततः परम्।
आत्मतत्त्वेनाणवं च मलं स्थूलाच्च देहकम् ॥१६४॥

---

अन्त्ये आत्मनामयुता अमुकानन्दनाथात्मेत्यादि। एवमेव अमुकानन्दनाथे गुरुश्रीत्यादिगुर्वादितर्पणे मूलाधारे आत्मानं ध्यात्वेति शेषः। तर्पणस्थानं तु नाभेरधः। तदुक्तं बृहद्वामकेश्वरे—"आत्मनः पादुकां ध्यात्वा मूलाधारे तु तर्पयेत्। नाभेरधः-प्रदेशे वै स्वात्मीकारस्ततो भवेत् ॥" इति ॥१६२॥

अथ तर्पणानन्तरम्। एतत्पात्रं शक्त्यै समर्प्य तद्दत्तं शेषं वीरात् आचार्यात् चर्वणम्, शुद्ध्यादिशेषं गृहीत्वेत्यर्थः। आचार्यश्च स्वज्येष्ठ एव, कनिष्ठोच्छिष्टस्य निषेधात्। इत्युभयशेषमादाय वामहस्ते स्थितं पात्रं दक्षेणाच्छाद्य स्वरषोडकादिमन्त्रं पठेत्। अत्र गुर्वादिसत्त्वे तेभ्य एव सपात्रचर्वणशेषो ग्राह्यः। गुर्वाद्यभावे स्वज्येष्ठाद्वीरा-भिधानात्पूजकादाचार्यात्। तस्य कनिष्ठत्वेऽन्यस्मात् स्वज्येष्ठाद्वा केवलं चर्वणशेषः, तेषां शेषमपीश्वरि सपात्रं स्यादिति प्राग्व्याख्यातमूलवचनात्, "वीराज्ज्येष्ठात्तथा-चार्याद् ग्राह्यं शेषं तु चर्वणम्। तदभावेऽपि चान्यस्माज्ज्येष्ठाद् ग्राह्यं हिमाद्रिजे ॥" इति त्रिपुरार्णवाच्च। अत्र पूजकादिति विद्यासम्बन्धरहितादपि ज्येष्ठाच्चर्वणशेषो ग्राह्यः, "विद्यासम्बन्धहीनोऽपि ज्येष्ठ आचार्यसत्तमः। शक्तिशेषानन्तरतस्तस्माद् ग्राह्यं तु चर्वणम् ॥" इति त्रिपुरार्णवोक्तेः। अथ कस्यापि ज्येष्ठस्याभावे उक्तं बृहद्वामकेश्वरे—"गुर्वाद्यभावे ज्येष्ठात्तु चर्वणं शेषमर्पयेत्। तदभावे गुरुं मूर्ध्नि ध्यात्वा तच्छेषकं हुनेत् ॥" इति। गुर्वादीनां स्त्रीत्वे तु गुरुर्यदि सुवासिनी तदा गुरुशेषेणैव सुवासिनीशेषसिद्धिः, अन्यथा सुवासिन्या गुरुकनिष्ठत्वे यदि पश्चाम्नायोपासकः साधकः, तदा गुरुशेषमेवादौ स्वीकुर्यात्। सुवासिनीशेषं तु पात्रपञ्चकान्ते। तदुक्तं स्वतन्त्रे—"आत्मतत्त्वं शक्तिशेषं सर्वेषां देवि सम्मतम्। पश्चाम्नायोर्ध्वगानां तु पश्चाद्वा पञ्चपात्रतः ॥" इति। अन्यः सुवासिनीशेषमेवादौ स्वीकुर्यात्। तदप्युक्तं त्रिपुरार्णवे—"कथञ्चिदादौ तु गुरोरगृहीते तु शेषके। सर्वान्ते वा गुरोः शेषो ग्राह्य एव नगात्मजे ॥" इति। स्त्रीणां नायं नियमः, 'पुरुषाणामिव स्त्रीणां नियमो नैव वर्तते। सुवासिनी-शेषविधौ गुरुपत्नीं गुरुं विना ॥" इति योगिनीतन्त्रोक्तेः। एतद्वीरोच्छिष्टस्याप्युपलक्षणम्। अत एव गुरुं विनेति संगच्छते। गुरुतत्पत्न्योः शेषं तु स्वीकर्तव्यमेवेति तत्तात्पर्यम् ॥१६३॥

षोडशस्वरान्ते प्रकृत्यादिपृथिवीत्यस्यान्ते आत्मना च आ च ॥१६४॥

संशोध्यान्ते वाग्भवं च कूटमाद्यं वदेच्छिवे ।
अखण्डेति श्लोकमेकम् ऐंकारात्म च काय वै ॥१६५॥
धर्मप्रदाद् दशकलात्मनेऽग्निमण्डलाच्च रू ।
पाय सत्त्वात्मकब्रह्मग्रन्थि वै विदलाच्च न ॥१६६॥
प्रवीणाय च विश्वाद् वै वैश्वानरविराट् तथा ।
स्थूलाच्छरीररूपाय वाणी वै वल्लभात् सहि ॥१६७॥
तात्मने विश्वपुरुषात्मने वै प्रथमादथ ।
खण्डान्निवासाय कुण्डलिनी वै मूलरुचया ॥१६८॥
य ब्रह्मणे शिरश्चेति मनुरात्माख्यतत्त्वके ।
होष्यामीति प्रार्थ्य गुरुं जुषस्वेति निरूपितः ॥१६९॥
आधारादिविलान्तं च तटित्कोटिनिभां शिवाम् ।
मातृविद्यात्रिमूर्त्याख्यां स्वात्मशक्तिं विभावयन् ॥१७०॥
हुनेदात्माख्यतत्त्वं वै ब्रह्मणे तदनु त्यजेत् ।
स्वात्ममूलत्रिकोणस्थे कोटिसूर्यसमप्रभे ॥१७१॥

---

अते च वदेच्छिवे । च वै । ॥१६५॥
आत् आच्च । वै । आच्च ॥१६६॥
च आद्वै । तथा । आत् । वै आत् ॥१६७॥
वै । आदथ । आत् वै च ॥१६८॥

इति त्यक्त्वा आत्मतत्त्वेन इत्यादि ब्रह्मणे इत्यन्तं स्वरूपम् । वाग्भवं ऐं । आद्यकूटं पञ्चदश्याः । अखण्डेत्यादिरूपिणीत्यष्टमोक्तमेकं श्लोकम् । शिरः स्वाहा । आत्माख्यतत्त्वके प्रथमपात्रे मनुः । एवं मन्त्रेण हवने विधिमाह—होष्यामीत्यादि । होष्यामीति गुरुं प्रार्थ्य । अत्र गुरुः पूजकाचार्य एव, "आचार्यमेवाद्रिकन्ये कनिष्ठमपि प्रार्थयेत्" इति त्रिपुरार्णवात् । आचार्येण जुषस्वेति निरूपित आज्ञप्तः । एतत्प्रकार उक्तस्त्रिपुरार्णवे—"प्रार्थनं चाभ्यनुज्ञानं ज्येष्ठेषूत्थाय वै भवेत् । अन्यथा चाप्यवज्ञाना-द्देवताशापमाप्नुयात् ।" इति ॥१६९॥

बिलं ब्रह्मरन्ध्रम् । मातृका मूलविद्या । ब्रह्मादित्रिमूर्तिरित्याख्या यस्याः । स्वात्मशक्तिं कुण्डलिनीम् ॥१७०॥

एवं विभाव्य प्रोक्तमन्त्रेण हुनेत् । आत्मतत्त्वशोधकत्वाद्द्रव्यमप्यात्मतत्त्वम् । तदनु

**कुण्डल्याकृतिचिद्वह्नौ हुनेद् द्रव्यं समन्त्रककम् ।**
**विभाव्यैवं ततो देवि पात्रमादाय वै पुनः ॥१७२॥**

---

होमानन्तरं ब्रह्मण इदं न ममेति त्यजेत् । एवं कुण्डलिनीस्थूलरूपे बाह्यद्रव्यमुक्त्वा तस्याः सूक्ष्मे रूपे चिद्वह्नौ दृश्यात्मकाखिलद्रव्यहवनप्रकारमाह—स्वात्मेति ॥१७१॥

एवमुक्तश्लोकार्थानुरोधेन । आचार्यात्पात्रमादाय । मन्त्रार्थस्तु—आदौ स्वरषोडशकमुक्तम् । ततः प्रकृत्यादिपृथिव्यन्तं चतुर्विंशतितत्त्वान्युक्तानि । तत्र पृथिव्यात्मनात्मतत्त्वेनेत्युक्तम् । प्रकृत्यादिपृथिव्यन्तात्मकमात्मतत्त्वम्, "स्थितं चतुर्विंशतिधा चात्मतत्त्वं महेश्वरि' इत्याद्येकादशे उक्तत्वात् । एवंविधमात्मतत्त्वम् अकारादिविसर्गान्तस्वरात्मकम्, कार्यकारणयोरभेदात्, स्वराणामात्मतत्त्वकारणत्त्वात् । एतदुक्तं त्रिपुरारहस्ये—"अकथाद्यैस्त्रिखण्डैस्तु जातं तत्त्वत्रयं क्रमात्" इति । स्वरजन्यं पृथिव्यन्तात्मकं यदात्मतत्त्वम्, तेनेति सहयोगे तृतीया ।

आत्मतत्त्वेन सहितम् आणवमलात्मकं स्थूलदेहं संशोध्येत्यन्वयः । आणवं मलं च स्वच्छस्वातन्त्र्यसंयुक्त इत्यादिना द्वादशे उक्तम्, स्थूलदेहश्च जाग्रत्यनुभूयमानः पुरुषान्तरसाधारणोऽन्नमयकोशाख्यः । तस्याणवमलात्मकत्वं तु अविद्यात्मकाणवमलचरमफलत्वात् । एवंविधं स्थूलदेहं संशोध्य स्वच्छन्दस्फुरणां निधेहीति श्लोकेनान्वयः । श्लोकार्थस्तु सुधादेवीप्रार्थनारूपः प्रागुक्तः । श्लोकादौ बालाबीजं कूटश्च सुधादेवीवाचको ज्ञेयः । एवं सुधादेवीं प्रार्थ्योद्देश्यदेवतां विशेषयति—ऐंकारेत्यादि । ऐंकारेत्यादिकं ब्रह्मणो विशेषणम् । तद्बीजजन्यत्वात्तदात्मकत्वं ब्रह्मणः । "यद् यल्लोके त्रिगुणितं सर्वं कारणभावतः । बीजरूपम्" इति ब्रह्मादीनां बीजस्वरूपत्वं सप्तमे उक्तम् । धर्मार्थकामाख्यपुरुषार्थपदम् अग्निसूर्यसोममण्डलम् । तेषां दशकलाद्यात्मकत्वं स्पष्टमेव । मूलाधारमणिपूराज्ञाचक्राणामुपरिभागेषु सुषुम्णामार्गरोधकं ग्रन्थित्रयमस्ति । तदुक्तं योगिनीतन्त्रे—"ग्रन्थित्रयं तत्र मुख्यं ब्रह्मविष्णुशिवात्मकम् । मूलाधारपूरकाज्ञाचक्रोर्ध्वं यत्प्रतिष्ठितम् ॥ ज्ञानक्रियारोधकं तत्सुषुम्णामार्गरोधनात् ॥" इति । तच्च ग्रन्थित्रयं सत्त्वादिगुणत्रयात्मकम् । तद्विदलनं निरुद्धप्राणवायोः सुषुम्णाप्रवेशे सति योगिनां भवति । तत्र प्रवीणः समर्थः । विश्वं जगत् । तदात्मकं वैश्वानरविराडाख्यं यत्स्थूलसमष्टिशरीरम् । तद्रूपस्तदात्मकः । वाणी भारती । वल्लभस्तत्प्रियो ब्रह्मा । ताभ्यां सहित आत्मा शरीरं यस्य । विराट्शरीराभिमानित्वाद्वाणीविशिष्टब्रह्मणस्तत्साहित्यं तत्रेति भावः । जाग्रत्स्वप्नसुषुप्तिरिति दशात्रयं तत्परिच्छिन्नो जीवः क्रमेण विश्वस्तैजसः प्राज्ञ इत्युच्यते । मातृकामूलबालानां यः प्रथमः खण्डः, तद्वाचकत्वात्तत्र निवासो यस्य । कुण्डलिन्या मूलं रूपं यस्य । एवंविधाय ब्रह्मणे इति । कुण्डलिनी स्वात्मशक्तिः, सैव प्रकृतहवनेऽग्निः । तस्या मूलमध्याग्रं ब्रह्मविष्णुरुद्रात्मकं ध्यायन् ऐंकाराद्यात्मकत्वेन च ध्यायन् जुहुयादिति भावः । एवमेवाग्रिममन्त्राणामप्यर्थो ज्ञेयः ।

कादिमान्तं च मायादिपुरुषान्तं समुल्लिखेत् ।
विद्यातत्त्वं कार्ममलं सूक्ष्मदेहं च पूर्ववत् ॥१७३॥
कामबीजं द्वितीयं चाकुलस्थश्लोकमेव च ।
क्लींकारार्थप्रदद्वादशेति सूर्याख्यमण्डलम् ॥१७४॥
राजसं विष्णुग्रन्थिं च चतुर्वैं च दशेन्द्रिय ।
साम्यसाक्षि सूक्ष्मशरीरेति लक्ष्मी ततः परम् ॥१७५॥
नारायणं तैजसं च द्वितीयं खण्डमेव च ।
कुण्डलिनीमध्यमपि मुकुन्देति च पूर्ववत् ॥१७६॥
पात्रं हुत्वा त्यजेदेतन्मुकुन्दाय महेश्वरि ।
इदन्तापात्रभरितमहन्तापरमामृतम् ॥१७७॥

---

विशेषस्तु तत्रोच्यते—एवं कुण्डलिनीवह्नौ प्रथमपात्रद्रव्यहवनानन्तरं चिदग्नौ जगद्धवनप्रकारमाह—स्वात्मेति । स्वात्मनः चित्प्रकाशवपुषो यन्मूलं प्रतिबिम्बनात्मकाभिव्यक्तिस्थानं विमर्शवृत्तिः, तस्य त्रिगुणमयत्वाच्छक्तिरूपत्वाच्च त्रिकोणत्वम् । तत्र स्थिते कोटिसूर्यसमप्रभे सूर्यादिप्रकाशानामपि प्रकाशके इति भावः । कुण्डलिनीशक्तिरेवाकारः शरीरं यस्य एवंविधे चिद्रूपे वह्नौ । द्रव्यं वस्तुत्वेन भासमानं सर्वं जगत् । समन्त्रकं मन्त्रोच्चारणसहितम् । प्रकृते मन्त्रस्त्वहमित्यहन्तारूपः । घटमहं जानामीत्यादिविमर्शान्तरङ्गो चिद्वह्नौ घटादिरूपं द्रव्यमहं जानामीति मन्त्रोच्चारसहितं हुने निक्षिपामीति भावः । एवं प्रथमपात्रं हुत्वा । पुनर्द्वितीयमादाय ॥१७२॥

ककारादिमकारान्तम् । मायादिपुरुषान्ततत्त्वसप्तकम् । पूर्ववत् पुरुषात्मना विद्यातत्त्वेन कार्ममलं सूक्ष्मदेहं संशोध्येति ॥१७३॥

कामबीजं क्लीं । द्वितीयं कूटं ह्५ । अकुलस्थेति द्वितीयश्लोकम् । क्लींकारेत्यादिप्रतीकं पूर्ववत् इत्यन्वयः । इति । आख्य ॥ १७४॥

च वै । इति । तत परम् ॥१७५॥

च । एवं च । अपि इति त्यक्त्वा क्लींकारेत्यादि मुकुन्देत्यन्तं स्वरूपम् । पूर्ववत् ऐंकारात्मकाय धर्मप्रददशकलात्मने इति पूर्ववत् प्रकृतेऽपि क्लींकारात्मकायार्थप्रदद्वादशकलात्मने इत्यादिकं ज्ञेयम् ॥१७६॥

मुकुन्दायेदं न ममेति त्यागः । एवं बाह्यहोममुक्त्वा आन्तरं चिदग्निहवनमाह—इदन्तेति ॥१७७॥

परान्तामये वह्नौ जुहोमि शिवताप्तये ।
विभाव्यैवं ततो देवि पात्रमादाय वै पुनः ॥१७८॥
यादिक्षान्तं शिवाद्विद्यां शिवतत्त्वं ततः परम् ।
मायीयं कारणं देहं शक्तिबीजं तृतीयकम् ॥१७९॥
तद्रूपेति श्लोकमपि सौःकारं कामषोडश ।
सोमाख्यमण्डलं तामसात्मरुद्राख्यग्रन्थिकम् ॥१८०॥

---

एवमिदन्तेत्यादि । उक्तप्रकारं विभाव्य । पुनराचार्यात् पात्रमादाय ॥१७८॥

मन्त्रार्थस्तु—मायादिपुरुषान्तसप्तकस्य विद्यातत्त्वता । "विद्यातत्त्वं सप्तधा तु शिवतत्त्वं च पञ्चधा" इत्येकादशे उक्तम् । कार्ममलं तु "अबोधरूपा देवेशि" इत्यादि द्वादशे उक्तम् । सूक्ष्मदेहश्च स्वप्नादावनुभूयमान इतरासाधारणः प्राणमयादिकोशत्रयरूपः । एवंविधदेहस्य कर्मसंस्काररूपकार्ममलाविनाभूतत्वात् तदात्मकत्वम् । एवंविधदेहं संशोध्यामृतत्वं निधेहीत्यन्वयः । एवं सुधादेवीप्रार्थनानन्तरं देवतां विशेषणैरुल्लिखति—क्लींकारेत्यादि । ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनोबुद्ध्यहङ्कारचिन्ताख्यान्तःकरणचतुष्टयमिति चतुर्दशेन्द्रियाणि । साम्यं प्रकृतिः । अन्तःकरणस्य लयदशा प्रकृतिः । सुषुप्त्यव्यवहितोत्तरदशा चित्तम्, "सुषुप्तौ प्रकृतिर्ज्ञेया तदन्ते चित्तमुच्यते" इति त्रिपुरारहस्यात् । एतेषां साक्षी । सूक्ष्मशरीरसमष्टयभिमानित्वात्तद्रूपश्च हिरण्यगर्भः । पूर्वं स्वात्ममूलेति श्लोके परिच्छिन्नचिदात्मकजीवरूपेऽग्नौ तत्तद्विषयात्मकघटादिद्रव्यहवनमुक्तम्, सम्प्रति परिच्छिन्नजीवस्य अपरिच्छिन्नचिदग्नौ होममाह—इदन्तेति । इदमो भाव इदन्ता । धर्मधर्मिणोरभेदादिदमिति भासमानं घटादिरूपं दृश्यम् । तदेव पात्रं स्रुगादिहोमपात्रम् । तस्मिन् भरितम् । अहन्तारूपं परमनुत्कृष्टं सर्वस्पृहणीयममृतं द्रव्यम् । लोके हि द्विधा प्रत्ययः—इदमहमिति । तत्रेदमिति दृश्यमनात्मवस्तु तत्तद्देशकालाभ्यां परिच्छिन्नं घटादिकं भासते । एवमहमिति तत्तद्देशकालपरिच्छिन्नं द्रष्टृसंघातात्मरूपं वस्तु । तत्रेदं भासमानस्य दृश्यस्याहंरूपद्रष्टृविनाभूतत्वादिदन्तापात्रे भरितमहन्तामृतम् । एवंविधदृश्यद्रष्टृ उभयं येन भासते, तस्मिन् परान्तामये वह्नौ जुहोमि शिवभावप्राप्तये इत्यपरिच्छिन्नज्ञानात्मनि सर्वसाक्षिणि वह्नौ परिच्छिन्नचिदात्मनो द्रष्टृरूपस्य हवनमुक्तम् । तृतीयहवनप्रकारमाह—यादीति । यकारादिक्षकारान्तम् । शिवाद् विद्यां शुद्धविद्यान्तपञ्चकम् । पूर्ववदित्यस्याध्याहारः । तेन शुद्धविद्यात्मना शिवतत्त्वेन मायीयमलं कारणदेहं संशोध्येति । शक्तिबीजं सौः । तृतीयं कूटं स ३ ॥१७९॥

तद्रूपेति तृतीयश्लोकः । आख्य आख्यकम् ॥ १८० ॥

वै आख्यकम् । इति एव च ॥ १८१ ॥

अव्याजसव्याकृत वै कारणाख्यशरीरकम् ।
विद्याशङ्करप्राज्ञेति तृतीयं खण्डमेव च ॥१८१॥
शिखान्तर्द्योतमानाद् वै भद्रमूर्तिं पशोः पतिम् ।
त्यजेत् तत्पशुपतये भावयेत् तदनन्तरम् ॥१८२॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचम् ।
धर्माधर्मकलास्नेहं पूर्णवह्नौ जुहोम्यहम् ॥१८३॥

---

आद्वै इति त्यक्त्वा सौःकारेत्यादि पशुपतिमित्यन्तं स्वरूपम् । सौःकारमित्यादि प्रतीकं सौःकारात्मकाय कामप्रदषोडशकलात्मने इत्यादि पूर्ववद् ज्ञेयम् । तृतीयखण्ड-निवासायेत्यस्याग्रे कुण्डलिनीशिखान्तद्योतमानभद्रमूर्तये इति कुण्डलिनीमूलरूपायेत्यस्य स्थाने ज्ञेयम् । पशोः पतिं पशुपतिम् । पशुपतये इदं न ममेति त्यागः । एवं बहि-र्होमानन्तरम् आन्तरं भावयेत् ॥ १८२ ॥

तदेवाह—प्रकाशेति । मन्त्रार्थस्तु—मायीयमलं "अणुः संक्षिप्तशक्तिः सा" इत्या-दिना द्वादशे उक्तम् । कारणदेहश्च न किञ्चिदवेदिषमिति सुषुप्तौ भासमान आनन्दमय-कोशाख्यः । भेदप्रथारूपमायीयमलकारणत्वेन कारणदेहस्य तदात्मकत्वम् । एवंरूपं देहं संशोध्य चित्स्फुरणं कुरु इत्यन्वयः । एवं प्रार्थ्य देवतां विशेषयति—सौःकारेत्यादि । अव्याजेनाकारणकेनाज्ञानेन स व्याकृतः स शब्दः शब्दवाच्य ईश्वरः कारणसमष्टिशरीरा-भिमानित्वात्तद्रूपः । शिखान्तर्द्योतमानः तृतीयखण्डनिवासीत्यर्थः । पूर्वं श्लोकद्वयेन दृश्यस्य द्रष्टरि द्रष्टुरन्तर्यामिणि होम उक्तः, सम्प्रति प्रलीनद्रष्टृदृश्यरूपसंसारस्य पुनः प्ररोहो मा भूदिति पुनःप्ररोहनिमित्तस्य धर्माधर्माख्यकर्मसामान्यस्य हवनमाह—प्रकाशेति । प्रकाशः प्रमाणम्, आकाशो विमर्शः फलम् । "सा शक्तिः परमेशस्य विमर्शाख्या महत्तरा । महाकाशात्मिका यस्यां जगदेतद्विराजते ॥" इति त्रिपुरारहस्ये विमर्शस्या-काशत्वेन प्रतिपादनं कृतम् । अयं घट इत्यादिना ज्ञानेषु यदादौ वस्तुदर्शनं सद्योजनित-शिशोर्घटादिज्ञानमिव अयं महान् घट इत्यादिशब्दसंभिन्नं निर्विकल्पात्मकं तत्प्रमाणं प्रकाश इत्युच्यते । तदनन्तरं चायं घट इत्यादिशब्दसंभिन्नं सविकल्पकं यज्ज्ञानं तत्फलं विमर्श इत्युच्यते । एतच्च—"इदमेतादृगित्येवं यद्वशादवतिष्ठते । वस्तुप्रमाणं तत्सोऽपि स्वा-भासोऽभिनवोदयः ॥ सोऽन्तस्तथा विमर्शात्मा देशकालाद्यभेदिनि । एकाभिधानविषये मितिर्वस्तुन्यबाधिता ॥" इति प्रत्यभिज्ञायां वितत्य वर्णितम् । एवं प्रकाशाकाशावेव हस्तौ ताभ्याम्, उन्मनीस्रुचं निश्चलदशारूपं हवनपात्रम्, अवलम्ब्य गृहीत्वा । एतत्तु "मनो वै निश्चलं यत्र तदुक्तं चोन्मनीदशा" इति त्रिपुरारहस्ये उक्तम् । धर्माधर्मौ पुण्यपापे, तयोः कला संस्कारः, सैव स्नेहो घृतादिरूपं हविः । पूर्णवह्नौ निरुक्तपराहन्तायां जुहोमीत्यर्थः ॥ १८३ ॥

विभाव्यैवं ततो देवि पात्रमादाय वै पुनः ।
समस्तमातृकातत्त्वं तत्त्वत्रितयमेव च ॥१८४॥
मलदेहत्रयं बीजकूटश्लोकत्रयं ततः ।
बीजधर्मादित्रयं च अष्टत्रिंशत्कलामपि ॥१८५॥
मण्डलानां गुणानां च ग्रन्थीनां त्रितयं तथा ।
विश्वादिकं शरीराणां त्रयं वाण्यादिकं तथा ॥१८६॥
विश्वादिखण्डत्रितयं मूलमध्यावसानकम् ।
सदाशिवाय हुत्वैतत् तस्मै चैव समर्पयेत् ॥१८७॥
अन्तर्निरन्तरमनिन्धनमेधमाने
मोहान्धकारपरिपन्थिनि संविदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकाशमाने
विश्वं जुहोमि वसुधादिशिवावसानम् ॥१८८॥

---

ततः पात्रं प्रक्षाल्यैवादानम्, "समष्टि पूर्णपात्रं च प्रक्षाल्यैव हुनेच्छिवे" इति वक्ष्यमाणत्वात् । समस्तमातृका आदिक्षान्ता । तत्त्वमपि समस्तं प्रकृत्यादिशुद्धविद्यान्तम् । तत्त्वत्रितयमित्युक्तेरत्र आत्मविद्याशिवेत्युल्लेखो न तु सर्वतत्त्वमिति ॥१८४॥

एवं मलदेहबीजकूटश्लोकबीजधर्मादीनां त्रयमेकीकृत्योल्लिखेत् । आणवकार्ममायीयमलं स्थूलसूक्ष्मकारणदेहं संशोध्येत्यादि । दशकलात्मने इति स्थानेऽष्टत्रिंशत्कलात्मने इति विशेषः ॥ १८५ ॥

एवं मण्डलादिवाणीवल्लभाद्यन्तानां त्रयम् ॥ १८६ ॥

मूलमध्यावसानरूपायेति तस्मै समर्पयेत् सदाशिवायेदं न मम इति त्यजेत् ॥ १८७ ॥

भावनात्मकहोममाह—अन्तरिति । अन्तः अविशेषात् सर्वान्तः, जगतीति भावः । निरन्तरं कालाद्यपरिच्छिन्नं यथा तथा अनिन्धने इन्धनाभाववति, इन्धनमनपेक्ष्येत्यर्थः । निरुपाधिके इति तात्पर्यम् । एधमाने वर्धमाने । मोहोऽज्ञानं तद्रूपान्धकारस्य परिपन्थिनि शत्रौ नाशके । संविद्रूपेऽग्नौ । कस्मिंश्चिद् अलौकिकरूपे । अद्भुताः प्रतिक्षणं भिन्ना या मरीचयो विषयवृत्तयः, ताभिर्विकासमाने । वसुधादिशिवावसानं पृथिव्यादिशिवान्तात्मकं विश्वं जुहोमि ॥ १८८ ॥

धर्माधर्महविर्दीप्तावात्माग्नौ मनसा स्रुचा ।
सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥१८९॥
ततः पात्रं समादाय चार्द्रं ज्वलतिमन्त्रतः ।
हिरण्यपात्रमन्त्रेण जुहुयात् परमेश्वरि ॥१९०॥
अलिपिशितपुरन्ध्रीभोगपूजापरोऽहं
बहुविधकुलमार्गारम्भसंभावितोऽहम् ।
पशुजनविमुखोऽहं भैरवीमाश्रितोऽहं
गुरुचरणरतोऽहं भैरवोऽहं शिवोऽहम् ॥१९१॥

---

धर्माधर्मरूपहविषा दीप्तिर्यस्य तस्मिन् । आत्मरूपेऽग्नौ । मनोरूपस्रुचा । सुषुम्णैव वर्त्म मार्गः स्रुङ्मुखस्थितघृतादिनिर्गममार्गः । नित्यम् अहर्निशम् । अक्षवृत्तीः इन्द्रियनिर्गतनीलसुखाद्यन्तःकरणवृत्तीः ॥ १८९ ॥

ततः समष्टिपात्रानन्तरम् । अत्रापि प्रक्षाल्यैव पात्रादानम् । अत्र पद्धतौ सम्पूर्णतीर्थादानमित्युक्तम् । तदात्मपूजाप्रकरणत्वादात्मपात्रद्रव्यस्याग्रेऽनुपयोगादिति ज्ञेयम् । आर्द्रं ज्वलतीति स्वाहान्तो मन्त्रः । तदर्थः – यदेतदार्द्रं जलमयं द्रव्यं तद्बहिर्वह्निसम्पर्केण ज्वलति । ब्रह्मादिभ्यो हुतम् उदरान्तर्गतम् आत्मज्योतीरूपेण ज्वलति । तत्रान्तर्ज्वलितं ज्योतिर्दृश्यभिन्नम् अहमस्मि । यज्ज्योतिरन्तरात्मरूपेण ज्वलति प्रकाशते । तद् ब्रह्म तदप्यहमस्मि, न तद् ब्रह्म मत्तः पृथक् । नेदृशं मम ब्रह्मरूपं द्रव्यहवने । नोत्पन्नमागन्तुकमपि तु यः पूर्वमहमस्मि स एव ब्रह्माहंरूपेणास्मि । यः पुरा जीवोऽहमस्मि स तथाविध एवाधुना ब्रह्माऽहमस्मि, न त्वपूर्वं किञ्चिदुत्पन्नमिति भावः, जीवत्वस्यैतदज्ञाननिमित्तकत्वात् । एतदर्थदाढर्चाय पुनरपि अहमस्मीत्यादि । ईदृशोऽहमेवाहम् । अहमिति पूर्णत्वेन भासमानश्चिन्मात्रोऽहम् । मां मत्संबद्धत्वेन भासमानं जगत् । मद्रूपप्रकाशकं द्रव्यं वा जुहोमि । हविःप्रदानवाची स्वाहेति । हिरण्यपात्रमिति मन्त्रोऽष्टमे व्याख्यातः ॥ १९० ॥

आन्तरभावनमाह—अलिपिशितेति । अलि प्रथमं पिशितं द्वितीयम् । एतत्तृतीयचतुर्थयोरुपलक्षणम् । पुरन्ध्री दूती । तस्या भोगः । इदमन्त्यं द्रव्यम् । एतत्साधनयुता या पूजा निरुक्तप्रकारेण पञ्चब्रह्ममयी तत्परोऽहं भवामीति शेषः । तथा बहुविधो यः कुलमार्गतन्त्रभेदाद् भिन्नः, तस्यारम्भः आचरणम् । तेन संभावितः प्राप्तपरमार्थात्मसत्ताकः । पशुजनेषु विमुखः तत्संसर्गरहितः । भैरवीमात्मशक्तिमाश्रितः । गुरोर्यच्चरणं रक्तशुक्लात्मकं तत्र रतः पादुकाभावनादिना तदेकपरः । एवंविधसाधनेन परशिवात्मकभैरवरूपोऽहमिति ॥ १९१ ॥

एवं पूर्णात्मकं ध्यायेत् स्वात्मानं शुद्धमानसः ।
एवं पूर्णाभिषिक्तस्य स्वात्मीकारविधिर्मतः ॥१९२॥
सौभाग्यान्तोपासकस्य चतुस्तत्त्वं भवेच्छिवे ।
गुर्वादित्रितयं मूर्ध्नि पादुकाद्वयवर्जनम् ॥१९३॥
न चौघत्रितयं तस्य चान्यत् सर्वं समं भवेत् ।
बालाद्युपासकानां तु तत्पूजोक्तविधानतः ॥१९४॥
दक्षहस्तस्थितं पात्रं वामहस्तेन तर्पयेत् ।
तेषां तु तत्त्वत्रितयमन्यत् सर्वं समं भवेत् ॥१९५॥

---

एवं परशिवाभिन्नत्वेन । शुद्धमानसो रजस्तमोंऽशान्यग्भावेन मूढत्वचाञ्चल्यादि-रहितः । उपसंहरति—एवमिति । पूर्णाभिषिक्तस्येति मन्त्रदीक्षावतोऽप्युपलक्षणम् । मन्त्रदीक्षावतः पृथग्विधेरकथनात् ॥ १९२ ॥

सौभाग्येति नामैकदेशग्रहणम्, सौभाग्यविद्येत्यर्थः । तदन्तोपासक इति दीक्षा-विधिना उपदेशविधिना प्राप्तपञ्चदश्युपासनः । चतुस्तत्त्वसमष्टिपात्रान्तमेव, न पूर्णपात्रम् । गुर्वादिपरमेष्ठचन्तं गुरुत्रयम् । मूर्ध्नि मूर्ध्न्येव तर्पणम् । न तेषां गुर्वादिसन्निधाने तच्चरणे । पादुकाद्वयं गुरुपादुका आत्मपादुका च । इदं चोपदेशाभावात् सिद्धस्यानुवाद-मात्रम् ॥ १९३ ॥

ओघत्रितयं पादुकायाः । आदिनाथादिविष्ण्वन्तोनत्रिंशत्संख्यम् । एतदपि पूर्ववदनुवादमात्रम् । इदं च मन्त्रदीक्षातोऽपि ज्ञेयम्, पादुकाद्वयादीनामनुपदेशात् । गुरु-त्रयतर्पणं तु परमेष्ठ्यादिक्रमेणैव । यद्यप्यात्मपादुकामन्त्रोपदेशो मन्त्रदीक्षापञ्चदशीदीक्षयो-रस्ति पञ्चपञ्चिकान्तर्गतत्वेन, तथापि नामकरणाद्यनुक्तेरात्मपादुकात्वेनोपदेशाभावा-त्तत्तर्पणं नास्तीति ज्ञेयम् । मन्त्रदीक्षावतस्तु प्रागुक्तसौभान्यान्तपदेनाग्रहणाद् गुर्वादित्रित-येति वचनाविषयत्वात् पूर्णाभिषेकवतोऽविशेषात्तत्तन्नामयुतानां परमेष्ठ्यादीनामेव तत्तच्चरणे मूर्ध्नि वा तर्पणं ज्ञेयम् । एवं च बालादिसौभाग्यान्तवतां गुर्वादिगुरुत्रयं मूर्ध्न्येव । तत्र सौभाग्यविद्यावतोऽपि गुर्वादिमन्त्रेषु तत्तन्नामयोगभावः, बालादीक्षावतो नामयोगाकथनात्, पञ्चदशीदीक्षायाः पूर्वोक्तविधिना देवीति सर्वसाम्यविधानात् । प्रकृते स्वात्मीकारप्रकरणेऽपि सौभाग्यान्तोपासकस्येति बालोपासकसामान्यधर्मकथनाच्च मन्त्रदीक्षावतो विशेषाकथनेन परिशेषात् पूर्णाभिषिक्तसाम्यप्रतीतेर्नामयोगोऽस्त्येव । अन्यत्सर्वं हृदयतर्पणादिकं पूर्णाभिषिक्तसमम्, "तत्पूजान्तर्गतात्मपूजोक्तविधानतः । सन्तर्प्य पूजयेत्" इत्यद्यष्टमोक्तवत् ॥ १९४ ॥

विशेषमाह—दक्षेति । नात्र आत्मपूजावत् पुरतो मण्डले पात्रस्थापनम् । तत्त्वत्रितयमित्यनुवादः । अन्यच्छेषग्रहणादि ॥ १९५ ॥

**समष्टिं पूर्णपात्रं च प्रक्षाल्यैव हुनेच्छिवे ।**
**अन्यथोच्छिष्टमार्गेण विघ्नास्तस्य पदे पदे ॥१९६॥**
**हुत्वा शिवाग्नौ क्रमतस्त्रिचतुःपञ्चपात्रकम् ।**
**प्रक्षाल्य पात्रं पुष्पादियुतमाच्छाद्य हस्ततः ॥१९७॥**
**आचार्याय तथा दत्त्वा नमस्कुर्याच्च भक्तितः ।**
**स्वीकृत्य तत्प्रसादं वै जप्त्वा स्तोत्रादिकं पठेत् ॥१९८॥**

---

पात्रत्रयहोमान्ते समष्टिपात्रम् । तदन्ते पूर्णपात्रं च प्रक्षाल्यैव ग्राह्यमित्याह—समष्टिमिति । अन्यथा प्रक्षालनाभावे । उच्छिष्टदूषितोपासनमार्गेण हेतुना विघ्नाः अभिमतनाशाः । अत्र पात्रत्रयमध्ये प्रक्षालने प्रत्यवाय उक्तस्त्रिपुरार्णवे—"तत्त्वत्रयान्तरे यस्तु पात्रं पाणिद्वयं तथा । क्षालयेदनिमित्तेन तस्य कर्म निरर्थकम् ॥" इति । अनिमित्तेनेति उच्छिष्टान्तरसम्पर्के क्षालयेदेवेत्युक्तम् ॥ १९६ ॥

एवं विशेषमुक्त्वा सर्वसामान्यविधिमाह—हुत्वेत्यादि । बालापञ्चदशीमन्त्रादिदीक्षावतां क्रमेण त्रिचतुःपञ्चपात्रकम् । पुष्पादित्यादिना "प्रक्षाल्य स्वर्णरत्नादिभरितम्" इति द्वादशोल्लासे उक्तस्य संग्रहः । एतदुक्तं त्रिपुरार्णवे—"शक्त्या स्वर्णादिसंयुक्तमर्पयेत् पात्रमम्बिके । यत्किञ्चिद् वापि पात्रस्थं दत्त्वानन्तफलं भवेत् ॥" इति ।

सुवासिनीनां विशेषो योगिनीतन्त्रे—

"एवं संतर्प्य हुत्वा तु सुवासिन्यः सशेषकम् ।
दद्युस्तृतीयं तुर्यं वा पात्रं पीठाधिकारिणे ॥" इति ।

त्रिपुरार्णवेऽपि—"सुवासिन्या कुमार्या च त्रितत्त्वान्ते महेश्वरि । आचार्याय प्रदातव्यं सावशेषं हि पात्रकम् ॥" इति ॥ १९७ ॥

आच्छादनादौ हस्तनियमस्तु पात्रादानोक्त एव ग्राह्य इत्याह—तथेति । तत्प्रसादं देवताया निवेदितं द्वितीयादिकम् । स्तोत्रादीत्यादिना कवचमालामन्त्रादिसंग्रहः । एतदुक्तं त्रिपुरार्णवे—"एवं यथोक्तबोधान्ते जपध्यानादिकं चरेत् । अभ्यासस्यानुरोधेन नात्यन्तं स्याद् बहिर्मुखः ॥" इत्यादि । बालातिरिक्तयत्किञ्चिन्मन्त्रोपदेशमात्रवतामपि बालोपासकदेव, बालाद्युपासकानामित्यादिपदात् । परन्तु येषां गुरुत्रयोपदेशो नास्ति, तैः गुरुश्रीपादुकामित्यादितर्पणं कर्तव्यम् । एतदुक्तं बृहद्वामकेश्वरे—"दीक्षाविरहितानां तु केवलं मन्त्रजापिनाम् । तर्पणं वामहस्तेन दक्षहस्तस्थपात्रतः ॥ गुर्वाद्यन्ते पादुकां च तर्पयामीति वै पठन् । हृदि स्वदेवतां तद्वदेव प्रोक्तो विधिः शिवे ॥" इति । तत्त्वत्रयमन्त्रादौ बालाबीजाभावश्च योग्यत्वात् संप्रदायाच्च । एवमदीक्षितानां

अर्घ्यस्थापनमारभ्य यावत्पात्रविसर्जनम् ।
सर्वं शिवमयं पश्येदन्यथा पतनं भवेत् ॥१९९॥

---

हवनं गुरुसम्मुखे उत्थायैव । तदुक्तं बृहद्वामकेश्वरे—'अदीक्षितैर्गुरोरग्रे होतव्यमुत्थितैः सदा । दीक्षितैरुपविश्यैव त्वन्यथा दोषमाप्नुयात् ॥" इति । यत्तु कुलार्णवे—"श्रीगुरुज्येष्ठ-पूज्यानां पुरतः कुलनायिके । नोपविश्य पिबेच्छिष्य इति शास्त्रस्य निर्णय ॥:" इति । अत्र शिष्यपदमदीक्षितपरम्, पूर्ववचनानुरोधात् । पूर्ववचने गुरुपदं च गुरुज्येष्ठपूज्ययो-रुपलक्षणम्, एतद्वचनानुरोधात् । अनुपासितमन्त्रस्य तु तूष्णीं पूजनं तर्पणा-भावः । आत्मतत्त्वाय स्वाहेत्यादितत्त्वत्रयमन्त्रेण स्वात्मीकारः । एतदप्युक्तं बृहद्वामकेश्वरे—"अमन्त्राणां भक्तिमताममन्त्रेण प्रपूजनम् । न तर्पणं गुरूणां वा देवतायास्तथैव च ॥ आत्मादितत्त्वनामान्ते स्वाहान्तेन त्रिधा हुनेत् ।" इति । रहस्या-र्णवेऽपि—"मन्त्रोपासनहीनैस्तु पूजयित्वा ह्यमन्त्रकम् । मन्त्रेणाचमनोक्तेन ग्राह्यं तत्त्व-त्रयं शिवे ॥" इति । एवं सामयिकत्वेनाहूतानां मण्डलगमनादिकमावश्यकम् । तदुक्तं त्रिपुरार्णवे—"एवं सामयिको भक्त्या मानस्तम्भविवर्जितः । अनाहूतोऽपि वाहूतो व्रजेद् मण्डलमुत्तमम् ॥" इति । तथा—"पूजादिकमकृत्वा वा स्वीयं साम-यिकार्चने । व्रती वापि हुनेदेव न दोषस्तत्र विद्यते ॥ व्रतादिशङ्कया यस्तु न व्रजेदाहूतोऽपि सन् । व्रतं तस्य प्रतिहतमनर्थं च समाप्नुयात् ॥ तस्मात् कनि-ष्ठाहूतोऽपि प्रविशेदेव मण्डले ।" इति । अमन्त्रकपाने निषेध उक्तः कुलार्णवे—"निर्मन्त्रं न पिबेद् द्रव्यं प्रायश्चित्तं विधीयते । तस्मान्मन्त्रविधानेन कर्तव्यं कुलनायिके ॥" इति । अत एव यथोक्ताधिकपात्रहवनेऽपि पश्चान्मूलं पादुकां वेति मन्त्रं वक्ष्यति । तत्र हवनं शब्दमकुर्वन् सकृत्कर्तव्यम् । तदपि कुलार्णवे उक्तम्—"भक्त्या तु विधिना शिष्यो निःशब्दस्तु पिबेत् सकृत्" इति । बृहद्वामकेश्वरेऽपि—"पिबेदशब्दं पात्रं तु सकृन्निरवशेषकम्" इति । सावशेषे प्रत्यवायोऽपि तत्रैवोक्तः—'सावशेषं तु यत्पात्रं सुरापानसमं तु तत्" इति । एतेन सकृत्पानकथनेन सामयिकानां पात्रप्रमाणमप्युक्तं भवति । तथा ओष्ठासंस्पर्शेन हवनेऽपि दोषस्तत्रैव—"दूरादोष्ठास्पर्शनेन पानं तु पशुपानवत्" इति । एवं पात्रमादायाहुत्वा पात्रहस्तो न तिष्ठेत् । एतदप्युक्तं कुलार्णवे—"करेण पात्रं धृत्वाऽथ न तिष्ठेत चिरं प्रिये । नालपेत् पात्रहस्तः सन् तिष्ठेत क्वचिदम्बिके ॥ पादेन न स्पृशेत्पात्रं न बिन्दुं पातयेदधः ।" इति । तथा—"नान्योन्यं ताडयेत्पात्रं न पात्रं पातयेदधः । साधारं नोद्धरेत्पात्रं निराधारं न निक्षिपेत् ॥ रिक्तं पात्रं न कुर्वीत न पात्रं भ्रामयेत्प्रिये । न पात्रं लङ्घयेद् विद्वान् पात्रं नोत्पातयेत्प्रिये ॥ प्रक्षाल्य गोपयेत्पात्र-मित्याज्ञा पारमेश्वरी ।" इति ॥१९८॥

एवं स्वात्मीकारविधिं निरूप्य पुनर्मण्डलधर्मानाह—अर्घ्येत्यादि । अर्घ्यस्थापनं द्वारपूजाङ्गपात्रस्थापनम्, "द्वारपूजां समारभ्य यावत्पूजाविसर्जनम् । सर्वं शिवात्मकं

सर्वे वर्णा द्विजास्तत्र न भेदं चिन्तयेत् क्वचित् ।
उद्वासानन्तरं नैक्यं कुर्याद्विद्वान् कदाचन ॥२००॥
स्वात्मीकारस्त्रिधा देवि दिव्यवीरपशुक्रमात् ।
उद्वासावधि दिव्यः स्यात् तत्पश्चाद्वीर उच्यते ॥२०१॥

---

ज्ञेयमन्यथा पापमाप्नुयात् ॥" इति बृहद्वामकेश्वरात् । पात्रविसर्जनं विशेषार्घ्यविसर्जनम् । सर्वं पूजोपकरणसामयिकादिकम् । अन्यथा अपवित्रत्वादिबुद्धौ ॥१९९॥

सर्वे वर्णा ब्राह्मणादयः । वर्णा इति जातिपरम् । तेन अनुलोमप्रतिलोमजानां सर्वेषां संग्रहः । अत एव—'परीक्षयेन्नैव जातिं वर्णं वा वर्णसंकरे । भक्तिश्रद्धामात्रयोगान्मण्डलेऽधिकृतो भवेत् ॥" इति बृहद्वामकेश्वरे उक्तम् । न भेदं भेदबुद्ध्या अस्पृश्यत्वादिकम् । एतदपि कुलार्णवे उक्तम्—"स्त्रियश्च पुरुषः षण्ढश्चाण्डालो वा द्विजोत्तमः । चक्रे भेदो न देवेशि सर्वे देवसमाः स्मृताः ॥" इति । उद्वासः विशेषार्घ्यस्य, पूर्ववचनानुरोधात् ॥२००॥

एव मण्डलधर्मान् उक्त्वा स्वात्मीकारभेदमाह—स्वात्मीकारेति । तेषां क्रमेण लक्षणमाह—उद्वासेत्यादि । उद्वासो विशेषार्घ्यस्य । यद्यपि कुलार्णवे—"दिव्यं देव्यग्रतः पानं वीरमुद्वासने कृते" इत्यत्र देव्यग्रत इत्युक्तत्वात्तदनुरोधेन, तथा—"देवतोद्वासनात् पूर्वः कृतो दिव्यः स्मृतः शिवे" इति स्वतन्त्रवचनानुरोधेन च प्रकृते उद्वासशब्दो देवतोद्वासवाचक एव युक्तः प्रतीयते, तथापि—"विशेषार्घ्योद्वासनान्तं दिव्यपानं प्रकीर्तितम् । ततः पश्चाद्वीरपानमन्यत् यत्पशुपानकम् ॥" इति, "दिव्यपानं तु तत्प्रोक्तं यावदर्घ्यविसर्जनम्" इति च त्रिपुरार्णवयोगिनीतन्त्रवचनानुरोधेन कुलार्णवस्वतन्त्रवचने देवीदेवतापदयोर्मूलदेव्यर्चनोपयुक्तविशेषार्घ्यपरत्वमेव । अन्यथा—"ततः सावरणां देवीमुद्वसेत् स्वहृदम्बुजे" इति देवतोद्वासनमुक्त्वा, तदनन्तरमेव—"ततः श्रीगुरुरूपाय" इत्यादिना गुरुपूजां विधाय "सुसंप्रदायसंयुक्तान् गुरुणा सह पूजयेत्" इति ज्येष्ठानां पूजनोत्तरम्—'गुरुः शिष्यान् समाहूय दद्यात्तत्त्वत्रयं प्रिये' इति सामयिकपूजायाश्च विधानात् कुलार्णवमते दिव्यपानस्यासंभवत्वापत्तेः । तस्मात् कुलार्णवे देवीपदं देव्यर्घ्यपात्रपरमेव । प्रकृतेऽप्युद्वासो विशेषार्घ्यस्यैव । तदन्तं दिव्यः स्वात्मीकारः, तत्पश्चाद् विशेषार्घ्योद्वासानन्तरं प्रहरपर्यन्तं वीरः स्वात्मीकारः । प्रहरानन्तरं तु पर्युषितत्वात्पानानर्हमेव—"पूजासमाप्त्युत्तरं तु यामात् पर्युषितं भवेत्" इति, "एतत्पर्युषितं सर्वमनर्हं पूजनादिषु" इति च त्रिपुरार्णवोक्तेः । एवमुक्ततन्त्रवचनानुरोधेन—"ततो मण्डलपात्राणामुद्वासान्तस्तु राजसः" इति स्वतन्त्रवचनम् उद्वासस्यान्तः अन्ते क्रियमाणः, राजसः वीरः स्वात्मीकार इति व्याख्येयम् ॥२०१॥

असंस्कृतः पशुः प्रोक्तो विप्राणामाद्य एव तु ।
वीरेणासिद्धिमाप्नोति देवता च पराङ्मुखी ॥२०२॥

तस्माद्दिव्यं महच्छ्रेष्ठं वीरमश्रेष्ठमेव तु ।
अपशुः क्षत्रियविशां शूद्राणां त्रितयं भवेत् ॥२०३॥

तत्तन्मन्त्रेण पात्राणां संख्यातानां हुतिः स्मृता ।
पश्चान्मूलं पादुकां वा स्वाहान्तं च पठन् हुनेत् ॥२०४॥

---

असंस्कृतः अर्घ्यस्थापनशापमोचनदेव्यर्चनादिविशिष्टसपर्यारूपसंस्काररहितः, न केवलं शापमोचनमात्रसंस्काररहितः। एतेन केवलशापमोचनमात्रेण स्वात्मनोऽर्थं यत्पानं तदपि पशुपानमेव। अत एव "स्वेच्छया चैव यत्पानं पशुपानमुदाहृतम्" इति कुलार्णवे उक्तम्। "पूजाहीनं तु यत्स्वार्थं पशुपानमुदाहृतम्" इति योगिनीतन्त्रेऽप्युक्तम्। तथा—"सपर्यामन्तरा देवि पशुः कामनया कृतः" इति पशुस्वात्मीकारलक्षणान्ते "सोऽपि द्विधा स्थितो देवि शुद्धाशुद्धविभेदतः" इति केवलशापमोचनमात्रसंस्कृतः शुद्धस्तदन्यस्त्वशुद्ध इति स्वतन्त्रे द्विविधपशुस्वात्मीकारकथनसंगतिः। एवं स्वात्मीकारभेदमुक्त्वा वर्णभेदेन तद्व्यवस्थामाह—विप्राणामित्यादि। आद्यो दिव्यः। असिद्धिः पूजाफलाभावः। अत एव फलप्रददेवताया असंमुखत्वमाह—पराङ्मुखेति ॥२०२॥

तस्मात्, यस्माद्वीरपानेन देवतायाः पराङ्मुखत्वं तस्मात्। दिव्यं पानम्। अत एव वीरपानस्याश्रेष्ठत्वद्योतनाय दिव्यपानस्य भुक्तिमुक्त्युभयप्रदत्वं वीरपानस्य भुक्तिमात्रप्रदत्वमुक्तं कुलार्णवे—"भुक्तिमुक्तिप्रदं दिव्यं वीरं भुक्तिप्रदं भवेत्" इति। भुक्तिर्भोगः। अपशुः पशुभिन्नः। दिव्यो वीरश्च स्वात्मीकारः। त्रितयं दिव्यो वीरः पशुश्च स्वात्मीकारः। मुक्तीत्यादि कुलार्णववचनं तु ब्राह्मणमात्रपरं वेदितव्यम्। एतत्सर्वं सुस्पष्टमुक्तं रहस्यार्णवे—'संपूज्योक्तविधानेन विप्रश्चोद्वासनावधि। द्रव्यं पिबेत्तदन्ते च क्षत्रियो वैश्य एव च॥ शूद्रस्त्विच्छानुरोधेन विधिना चान्यथापि वा। निवेद्य देवतायै तत्सन्तर्प्य प्रपिबेदनु॥" इति। बृहद्वामकेश्वरेऽपि—"तावत्पानं ब्राह्मणानां यावदुद्वासनं नहि" इति। अत एव—"निवेदयन् देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति" इति त्रिपुरामहोपनिषदि निवेदयन् स्वात्मीकृत्येति निवेदनस्वात्मीकारयोरेककालिकत्वं संगच्छते॥२०३॥

एवंविधे स्वात्मीकारे नियमं वक्तुमनुक्ते हवने मन्त्रे प्रोक्तपात्रविध्यनुवादपुरःसरमाह—तत्तदिति। तत्तन्मन्त्रेण प्रागुक्तेन। संख्यातानां पञ्चचतुस्त्रिसंख्यया विहितानाम्। पश्चात् यथोक्तसंख्यानन्तरम्। पादुकावतः पादुका। अन्यस्य मूलम् ॥२०४॥

तावदेव हुनेद् विद्वान् यावदानन्दसंप्लुतः ।
मनो निश्चलतां याति चित्तं चापि प्रसादताम् ॥२०५॥
यावत्सुषुप्तता न स्यादविकारित्वमेव च ।
तावदेव हुनेद्देवि निष्फलं त्वन्यथा भवेत् ॥२०६॥
विकारे तु समुत्पन्ने ध्यानयोगविहीनतः ।
योगिनीनां पशुर्देवि मण्डलाच्च बहिष्कृतः ॥२०७॥
अन्यासामपि भक्त्या वै शक्तीनां तु यथेच्छतः ।
द्रव्यादिशेषं तद्दत्तं प्राप्य वापि हुनेच्छिवे ॥२०८॥

---

बोधजनितानन्देन संप्लुतः । मनः विकल्पप्रधानमन्तःकरणम् । चित्तं निश्चलीभूतमन्तःकरणम् "सुषुप्तौ प्रकृतिर्ज्ञेया तदन्ते चित्तमुच्यते" इति त्रिपुरारहस्यात् । तस्य प्रह्लादता सत्त्वपरिणामः । अभ्यासदशायां निरुद्धमन्तःकरणं तमःपरिणामे सुषुप्तं भवति । सत्त्वपरिणामेऽसुषुप्तं सन्निश्चलं भवति । सैव प्रसादता । एवं निश्चलपरिणाम एव आनन्दः सुषुप्तिः ॥२०५॥

अधिकहवनात् सुषुप्तिः स्यादिति तन्निषेधति—यावदिति । अविकारित्वं चित्तभ्रमणवमनादिविकाराभावः । अविकारित्वं स्यादिति नात्र नञ्संबन्धः । अन्यथा ततोऽधिकहवने निष्फलं हवनं भवेत् ॥२०६॥

ननु किमत्र हवने दृष्टं वा अदृष्टं वा फलम्, यदभावोऽधिकहवने ? इत्याशङ्क्य दृष्टमेव फलमभ्युपेत्याधिकहवने तदभावमाह—विकारे त्विति । ध्यानं मूर्त्याद्यालम्बनम् । योगो वृत्तिनिरोधः । तदुभयाभावतः । एतेन ध्यानं योगश्च हवनफलमित्युक्तं भवति । अधिकहवने सुषुप्तिभ्रमवमनादिविकारैर्ध्यानाद्यभावादयं साधको योगिनीनां पशुर्भवति । योगिन्यो ब्राह्म्याद्या मातृकाः । तासां पशुर्भोग्यः । यथोक्तरीत्या हवनेन ध्यानाद्यभ्यासयोग्यमन्तःकरणं भवति । ततो ध्यानाद्यभ्यासेनात्मविद्योदयात् परशिवभावं प्राप्नोति । अधिकहवने ध्यानाद्यसंभवाद् असंप्राप्तात्मविद्यो विकल्पनिदानीभूतवर्णशक्तिभिर्ब्राह्म्यादिभिर्योगिनीभिर्योग्यजडदेहात्मतामापादितः पशुर्भवतीत्यर्थः । एतदुक्तं स्पन्दशास्त्रे—"शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम् । कलाविलुप्तविभवो गतः सन् स पशुः स्मृतः ॥" इति । अत एव मण्डलाद् गुरुमण्डलाद् बहिष्कृतः "गुरुमण्डलसंस्थानाश्रान्ते कैवल्यमुक्तिगाः" इति रुद्रयामलोक्तफलं न प्राप्नोति । एवं च स्वात्मीकारस्य दृष्टमेव फलं सिद्धम् । अत एव कुलार्णवे—"आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम् । तस्याभिव्यञ्जकं द्रव्यम्" इत्याद्युक्तम् ॥ २०७ ॥

एवं प्राक् संख्यातादधिकहवनविधिमुक्त्वा भूयः शेषग्रहणविधिमप्याह—

ज्येष्ठानामपि वीराणां प्रसादं चर्वणं तथा ।
द्रव्यं वाप्यन्यदपि वा तत्कृपाप्राप्तमेव च ॥२०९॥
हुनेत् कुण्डलिनीवह्नौ भक्तिभावेन चेतसा ।
कनिष्ठानां तु वीराणां विधवानामपीश्वरि ॥२१०॥
नोच्छिष्टं भक्षयेद् विद्वाननिष्टं तेन वै भवेत् ।
दातुर्ग्रहीतुरपि वै हानिः स्यादुभयोः शिवे ॥२११॥

---

अन्यासामित्यादि । पूर्वं यस्याः शेषो गृहीतः । ततोऽन्यासाम्, अपिना तस्यापि । स्वतो दत्तं प्रार्थ्य वा प्राप्तम् । यथेच्छतः सकृदसकृद्वा ॥ २०८ ॥

ज्येष्ठानां स्वस्माद् विद्यया योन्या वा ज्येष्ठानाम् । तदुक्तं त्रिपुरार्णवे--''विद्या॰ संबन्धतो वापि योनिसम्बन्धतस्तथा। ज्येष्ठानामपि चोच्छिष्टं दीक्षितानां तु भक्षयेत् ॥'', तथा—''पूर्वं दीक्षायुतो ज्येष्ठो महादीक्षायुतश्च वै'' इति । बालादिदीक्षातः पञ्चदश्यादि-दीक्षा महती । अत्र दीक्षितानामित्यनेन दीक्षारहितानां योनिसम्बन्धवतां नोच्छिष्टं भक्षयेत् । अत एव--''दीक्षाहीनस्य चोच्छिष्टं जनकस्यापि दीक्षितः । न भक्षयेत् सकृद् वापि भुक्त्वा पातित्यमाप्नुयात् ॥'' इति तत्रैवोक्तम् । अत्र दीक्षित इत्यनेन स्वयमदीक्षितश्चेददीक्षितपित्रादेरुच्छिष्टं ग्राह्यमेवेत्युक्तं भवति । अत्र केवलयोनिज्येष्ठस्य न्यूनवयसः शेषो न ग्राह्यः । तदपि तत्रैवोक्तम्--''वयोहीनं योनिमात्रज्येष्ठं च परिवर्ज-येत्'' इति । वीराः उपासकाः । प्रसादं शेषभूतं च वर्णं तथा द्रव्यं वा । प्रकृते च वर्णं-चतुर्थम् । अन्यद् द्वितीयादिकम् । स्वयं प्रार्थ्य गृहीतं तेषां कृपया लब्धमप्रार्थितं वा हुनेदित्यन्वयः ॥ २०९ ॥

एवं ज्येष्ठानां शेषग्रहणं विधाय कनिष्ठानां निषेधति--कनिष्ठानामिति । विध-वानामपि नोच्छिष्टं भक्षयेदित्यन्वयः । अत्र योगिनीतन्त्रे विशेषः—''मण्डले विधवा देवि न प्रवेश्या कदाचन । ज्येष्ठां भक्तिमतीं तद्वद्देवतोपासने रताम् ॥ मातरं गुरुपत्नीं च स्वतः प्राप्तां न संत्यजेत् ।'' इति । ज्येष्ठादिगुरुपत्न्यन्तपञ्चानामादरान्मण्डले आह्वानम् । एतद्भिन्नानामाह्वानमन्तरा स्वतःप्राप्तानां त्यागो नास्तीति भावः । अत एव बृहद्वाम-केश्वरे—''स्त्रियो हि देवतारूपाः सधवा विधवा अपि। नापमान्याः कदाचिद् वा वृद्धा वा तरुणी तथा ॥ विधवा सर्वतो देवि निषिद्धा सधवा तथा । सह सामयिकैः पूज्या शक्ति-पूजासु नार्चयेत् ॥'' इति ॥ २१० ॥

तेन भक्षणेन न केवलं कनिष्ठोच्छिष्टभक्षकस्यैव दोषः, किन्तूच्छिष्टदातुः कनिष्ठ-स्यापीत्याह—दातुरित्यादि ॥ २११ ॥

सुवासिनीभ्योऽपि तथा दत्त्वोच्छिष्टं पतत्यधः ।
दद्याद् गुरुः सदा ताभ्यः शिष्याभ्योऽपि परस्परम् ॥२१२॥
मातुश्च गुरुपत्न्याश्च विधवाया अपि स्वयम् ।
प्रार्थ्य प्रसादं तु हुनेदन्यासां न कदाचन ॥२१३॥

---

तथा यथा ज्येष्ठायोच्छिष्टदानेन कनिष्ठो हीयते, एवं सुवासिनीभ्योऽपि कनिष्ठाभ्यः स्वयं दत्वा। गुरुस्तु शिष्याभ्यः स्वयमपि दद्यादित्याह—ताभ्य इति। ताभ्यः सुवासिनीभ्यः । कथंभूताभ्यः शिष्याभ्यः । अपिना शिष्यसदृशीनां संग्रहः । तास्तूक्तास्त्रिपुरार्णवे—' गुरोर्गुरुमुखा तद्वद् गुरुज्येष्ठा अपीश्वरि । सर्वे ते गुरवः प्रोक्तास्तेषां शिष्योऽपि स स्मृतः ॥ सुवासिनीभ्यः शिष्याभ्यो देयं नान्यत्र शेषकम् ।" इति । एवं सुवासिनीभ्यो गुरुः शेषं दद्यादित्युक्त्वा सुवासिन्यपि गुरवे शेषं दद्यादित्याह—परस्परमिति । एवं स्त्रीणां ज्येष्ठोच्छिष्टग्रहणं पुरुषाणामिव न नियतम्, किन्त्वैच्छिकम् । सुवासिनीभ्योऽपीति तु स्वेच्छया दानप्रतिषेधपरम्, दत्वेत्यादिपदस्वारस्यात् । अत एव दद्यादिति पूर्वं प्रतिषिद्धस्य स्वेच्छयापि दानस्याभ्यनुज्ञामात्रम् । अत एवोक्तं योगिनीतन्त्रे—"ज्येष्ठोच्छिष्टं प्रयत्नेन ग्राह्यं नान्यस्य कस्यचित् । शक्तीनां तु कनिष्ठानामप्युच्छिष्टं प्रशस्यते ॥ पुरुषाणामिव स्त्रीणां नियमो नैव विद्यते ।" इति ज्येष्ठशेषग्रहणे नियमः स्त्रीणां नास्तीति संगच्छते । तथा च गुरुसमेभ्यः सुवासिनीभिः शेषोऽवश्यं ग्राह्य एव, तैः स्वेच्छयापि देयः। केवलं ज्येष्ठैस्तु सुवासिनीभ्यः स्वेच्छया न देय एव । सुवासिनीभिस्तु स्वेच्छया ग्राह्यः । तेन सामान्यज्येष्ठानां शेषः पुरुषाणामिव ग्राह्य एवेति न नियम इति सिद्धम् । स्त्रीभिः स्वकृतपूजाङ्गसुवासिनीशेषग्रहणं तु कनिष्ठसुवासिनीनामपि कर्तव्यमेव, तस्या आचार्यधर्मातिदेशात् । एतच्च—"स्त्रियोऽपि पीठसंस्थाने चाचार्यत्वं भवेच्छिवे । आचार्यवत्कर्म सर्वं कर्तव्यं तत्र सुन्दरि ॥" इति योगिनीतन्त्रे उक्तम् । एवं वर्णाश्रमभेदेन नियमो बृहद्वामकेश्वरे उक्तः—"श्रेष्ठवर्णाश्रमिभ्यां तु हीनवर्णादितः शिवे । ज्येष्ठादपि न चोच्छिष्टं ग्राह्यं स्यादन्यथा पतेत् ॥" इति । तथा सुवासिनीषु वर्णादिविचारो नैव विद्यते। "ताः सदा देवतारूपास्तेन दोषो न विद्यते" इति। रहस्यार्णवेऽपि—"श्रेष्ठवर्णाश्रमवतः शेषो ग्राह्यो न चान्यतः । हीनशेषसमादानात् प्रायश्चित्ती भवेच्छिवे ॥ समस्तवर्णजातीनां शक्तीनां परमेश्वरि। प्राप्तः शेषो न संत्याज्यो भक्तानां वारयोषिताम् ॥ प्राप्तं तद्देवताशेषं मत्वा स्वात्मनि योजयेत् ॥" इति ॥ २१२ ॥

विधवाशेषनिषेधे संकोचमाह—मातुरिति । विधवाया इति मातृगुरुपत्न्योर्विशेषणम् । अत्र मातुरिति ज्येष्ठपत्नीनामप्युपलक्षणम्, 'मातरं गुरुपत्नीं च ज्येष्ठपत्नीमृते शिवे" इति स्वतन्त्रोक्तेः । अन्यासां विधवानाम् ॥ २१३ ॥

स्वज्येष्ठा विधवा जातु प्रसादं यदि चार्पयेत् ।
प्रेमभावेन तदपि हुनेन्न तु निषेधयेत् ॥२१४॥
पात्राद् बिन्दुं नैव भुवि प्रमादेनापि पातयेत् ।
प्रमादाद्यदि भूमौ स्याद् बिन्दुपातो महेश्वरि ॥२१५॥
दत्त्वा तोयं तत्र नमेद् दण्डनाथां तु कीर्तयेत् ।
अथोल्लासांस्तु देवेशि शृणु वक्ष्याम्यशेषतः ॥२१६॥
गोपितः सर्वतन्त्रेषु यज्ज्ञानान्न पराभवः ।
आरम्भस्तरुणश्चैव यौवनः प्रौढ एव च ॥२१७॥
प्रौढान्तश्चोन्मनस्तद्वदात्यन्तिक इति स्मृतः ।
उल्लासः सप्तधा देवि तत्रारम्भं शृणु प्रिये ॥२१८॥
यस्य यावत्पात्रमुक्तमारम्भस्तस्य तावता ।
तत्पश्चात्तरुणो देवि ईषद्बोधोदयेन तु ॥२१९॥

---

स्वज्येष्ठा विद्यासंबन्धतो योनिसम्बन्धतो वा॰। जातु कदाचित्। प्रेमभावेन भक्त्या हुनेत् ॥ २१४ ॥

प्रमादादपीत्यनेन ज्ञात्वा पातने पापाधिक्यात् प्रायश्चित्ताधिक्यमुक्तं भवति। अत एवाग्रे प्रमादादिति प्रमादे एव प्रायश्चितमभिधीयते ॥२१५॥

तत्र पतिते बिन्दौ। कीर्तयन् नमेदित्यनेन दण्डनाथायै नम इत्येवम्। एतदेव—'भूमौ बिन्दौ प्रपतिते दत्त्वा तोयं स्मरेद् बुधः। हृदन्तं दण्डिनीनाम चान्यथा दोषमाप्नुयात् ॥" इति बृहद्वामकेश्वरे स्पष्टमुक्तम्। एवं मण्डलधर्मानुक्त्वोल्लासभेदान् वक्तुमाह—अथेति ॥२१६॥

यज्ज्ञानात्। अनुष्ठानस्य ज्ञानपूर्वकत्वात् सम्यगनुष्ठातुम् एतज्ज्ञात्वा समर्थो भवतीत्यधर्मोद्भवकारणाभावाद् अधर्मेण पराभवो नेत्यर्थः। उल्लासनामान्येवाह—आरम्भ इत्यादि ॥२१७॥

तत्र सप्तधा भिन्नेषु मध्ये ॥२१८॥

यस्य साधकस्य बालादिपूर्णदीक्षावतः। यावत्पात्रं त्रिचतुःपञ्चसंख्यकमुक्तम्। तावता तावत्पात्रहवनेन जातो बोधः आरम्भोल्लास इत्युच्यते। तत्पश्चात् कतिपयपात्रहवनेनेषद्बोधस्योदयेनाधिक्येन तरुणोल्लासः ॥२१९॥

तत्पश्चात् कतिपयपात्राहुत्या पूर्वस्मात्किञ्चिदधिकः आरम्भतरुणयोर्मन्दबोधः,

तत्पश्चान्मध्यबोधस्य चोदयाद्यौवनो मतः ।
यत्नान्मनोलयो देवि यदा स्याद्यावता शिवे ॥२२०॥

अयत्नात्तु चलो यत्र प्रौढ इत्युच्यते शिवे ।
ईषच्चलो लयश्चापि प्रौढान्ते समुदाहृतः ॥२२१॥

यदा यत्नात् संचलनं तदा स्यादुन्मनः शिवे ।
निश्चलत्वं सर्वथा चेत् तदात्यन्तिक ईरितः ॥२२२॥

अशक्ताबुधबालानामारम्भः परिकीर्तितः ।
तरुणो नूतनानां स्याद् भक्तिमात्रस्तु यौवनः ॥२२३॥

प्रौढः स्यादारुरुक्षोर्वै मध्यारूढस्य तत्परः ।
पूर्णारूढस्योन्मनश्च तद्वदात्यन्तिकोऽपि वै ॥२२४॥

---

मनोलयानिमित्तत्वात् । यौवनादित्रये मध्यबोधः, मनोलये स्वयत्नापेक्षणात् । अन्त्ययोस्तीव्रबोधः, मनोलये इतरानपेक्षणात् । एवंविधमध्यबोधोदयाद्यौवनोल्लासः ।

ननु मध्यबोधात्मकयौवनाद्युल्लासत्रये कथमवान्तरभेद इति चेदाह—यत्नादिति । यावत्पात्रहवनेन यदा यत्नादीषन्मनोलयो भवति, तदा तावत्पात्रजनितो बोधो यौवनोल्लासो ज्ञेयः ॥२२०॥

अयत्नादेव चलश्चञ्चलो यत्र यावत्पात्रेण यदा । तुरिति पूर्वोक्तयत्नादित्यस्य व्यावृत्तिः । तेनायत्नाच्चलने यत्नाल्लये समे प्रौढः । अयत्नादीषच्चलः अयत्नाद् बहुलयश्चेत् स प्रौढान्तः ॥२२१॥

यदा यत्नेन संचलनं तदोन्मनः । सर्वथा चलनाभावे आत्यन्तिकः ॥२२२॥

एवमुल्लासभेदा निरूपिताः । इदानीमधिकारिभेदेनोल्लासं विदधाति—अशक्तेत्यादि । अशक्ता दुर्बलाः । अबुधाः शास्त्रार्थानभिज्ञाः । बालाः कुमार्यो बटुकाश्च । एतेषामारम्भोल्लासः । नूतनानां पूर्वोक्ताशक्तादिभिन्नानां नूतनोपासकानां तरुणोल्लासः । गुर्वादिषु भक्तिमात्रवतोऽभ्यासेच्छारहितस्य यौवनोल्लासः ॥२२३॥

आरुरुक्षोः ध्यानाद्यभ्यासमीहमानस्य प्रौढः । मध्यारूढस्य किञ्चिदभ्यस्तध्यानादेः । तत्परः प्रौढान्तः । पूर्णारूढस्य अभ्यस्तनिर्विकल्पध्यानादेः । उन्मनः आत्यन्तिकश्च स्वेच्छानुरोधेनैव । त्रिपुरार्णवे तु —"यौवनान्तेषु सर्वेषामधिकारो वरानने । आचार्यस्य चतुर्थान्तमन्ये त्वभ्यासशीलिनाम् ।।" इति । आचार्यः पूजकः । तस्याभ्यासशीलिनोऽपि प्रौढोल्लासपर्यन्त एव । अन्यथोत्तरपूजालोपापत्तिरिति भावः ॥२२४॥

शक्तीनां तु यथेच्छं स्यादन्येषां देशिकाज्ञया।
उल्लासभेदमज्ञात्वा प्राप्य मूढत्वमम्बिके ॥२२५॥
स योगिनीनां सततं पशुः स्यादन्यथा पिबन्।
जिह्वालोलुपभावेन चेन्द्रियप्रीणनाय च ॥२२६॥
यः पिबेत्तं तु तामिस्रे मातृकाः पातयन्ति वै।
भावयेद् देवतारूपां तत्र शक्तिं विशेषतः ॥२२७॥

---

एवंविधनियमो न शक्तीनामित्याह—शक्तीनामिति। अन्येषामशक्तादीनां स्वेच्छया आरम्भाद्युल्लासान्तमेव। गुर्वाज्ञया अधिकमपि। एवमुल्लासानां स्वरूपभेदमधिकारिभेदं चाज्ञात्वा अनियतपात्रहवनेन मूढत्वं प्राप्य पशुः स्यादित्यन्वयः ॥२२५॥

स मूढत्वं प्राप्तः। अन्यथा शास्त्रानुक्तमार्गेण। जिह्वाया रसनेन्द्रियेण लोलुपः चपलो भावोऽन्तःकरणं तेन हेतुना। इन्द्रियस्य मनसः प्रीणनाय प्रीतये पिबेदित्यन्वयः ॥२२६॥

मातृकाः दण्डनाथाज्ञाकर्त्र्यः सङ्कर्षिण्याद्याः। तदुक्तं त्रिपुरारहस्ये—"सङ्कर्षिणी च कालसंकर्षिणी तथा" इत्यादि बहुधा नामान्युक्त्वा—"उपास्तिमार्गसंरूढानपराधपरान् जनान्। योजयन्त्युत दुःखेषु स्थानेषु परमातृकाः॥" इति। ननु पीत्वा पीत्वेत्यादि, आगलान्तं पिबेद् द्रव्यमित्यादि पानाधिक्यस्यैव कुलार्णवादिषु प्रशंसनात् कथमत्रैवं निर्बन्ध इति चेच्छृणु—कुलार्णवेऽपि न सर्वेषामनियतपानमुक्तम्, किन्तु पूर्णारूढानामेव। तथाहि—"यावन्न चलते दृष्टिर्यावन्न चलते मनः। तावत्पानं प्रकुर्वीत पशुपानमतः परम्॥ यावन्नेन्द्रियवैकल्यं यावन्न मुखवैकृतिः। तावदेव पिबेद् द्रव्यमन्यथा पतनं भवेत्॥" इति सामान्येनोक्त्वा—"पूर्णाभिषेकयुक्तानां पानं देवि निगद्यते। कराभ्यां पात्रमुद्धृत्य स्मरेन्मूलं च पादुकाम्॥ आगलान्तं पिबेद् द्रव्यं स मुक्तो नात्र संशयः॥" इत्यादि। पूर्णाभिषिक्तस्वरूपमपि तत्रैवोक्तम्—"यो निन्दास्तुतिशीतोष्णसुखदुःखादिसंभवे। समः सर्वत्र योगीशो हर्षामर्षविवर्जितः॥" इत्यादि बहुशो लक्षणमुक्त्वा—"तत्त्वत्रयश्रीचरणमूलमन्त्रार्थतत्त्ववित्। देवतागुरुभक्तश्च शाम्भवीमुद्रयाऽन्वितः॥ सैव पूर्णाभिषिक्तः स्यात्कौलिको न तु दीक्षया॥" इति। तस्मादत्रापि पूर्णारूढस्यैव षष्ठसप्तमोल्लासकथनात् पूर्णारूढस्यैव कुलार्णवे पूर्णाभिषिक्त इति कथनान्न कुलार्णवविरोधः। एवमेव सर्वतन्त्रेष्वधिकारितारतम्येन पानतारतम्यं "हालां पिबेद्दीक्षितमन्दिरेषु" इत्याद्याचारभेदश्च निरूपितः। अन्यथा यथेच्छाचरणमात्रेण पुरुषार्थप्राप्तौ मूढा म्लेच्छादयश्च पुरुषार्थभाजो भवेयुरित्यलमप्रस्तुतविचारेण। एवमन्यथाचरणप्रत्यवायमभिधाय मण्डले मुख्यत्वेन कर्तव्यं धर्ममाह—भावयेदिति। तत्र मण्डले। विशेषतः सर्वप्रयत्नेनापि ॥२२७॥

अन्यथा भावयन् सद्यः क्रुध्येत् तस्य तु देवता ।
भोगेच्छां तु स्वशक्तौ तु कुर्यादन्यत्र नैव हि ॥२२८॥
तच्चापि नाचरेदग्रे पूज्यानां तु कदाचन ।
शक्तेरिच्छानुरोधेन कुर्यात्तेन न दोषभाक् ॥२२९॥
गुरोराज्ञानुरोधेन देवताप्रीणनाय च ।
यत्करोति तु तत्सर्वं मोक्षायैव प्रकल्पते ॥२३०॥
अन्यथा क्रियमाणं तु सर्वं दुःखाय वै भवेत् ।
संन्यासिनो वनस्थाश्च शान्तरूपा उपासकाः ॥२३१॥

---

कुत एवं तदाह—अन्यथेति । अन्यथा दोषबुद्धया । अत एव—"मण्डले तु स्त्रियात्युक्तस्ताडितोऽपि तु तां नमेत्" इत्याद्युक्त प्राक् । चरमोल्लासे च रहस्यधर्मेषु स्त्रियोऽवलोकनं च वक्ष्यति । भोगेच्छायां नियममाह—स्वशक्ताविति । भोगेच्छेति तद्भावपूर्वकप्रीतिसल्लापाद्युपलक्षणम् ॥२२८॥

तच्चापि उपलक्षितप्रीतिसंल्लापादिकमपि, इच्छायामाचारविषयत्वाभावात् । इच्छेति इच्छापूर्वको व्यवहारः । पूज्यानां गुर्वादिज्येष्ठानाम् । यदि अन्या शक्तिः स्वस्मिन् भोगेच्छामादधाति, तर्हि तदिच्छानुरोधेनाचरणं कर्तव्यमेव । न तु तां निषेधयेत् । अत एव चरमोल्लासे अधर्मगणनावसरे कामवत्याः स्त्रियस्तथा प्रतिषेध इति परिगणितम् ॥ २२९ ॥

नन्वेवं परस्त्रीगमनं दोषावहं कुतो न भवेदित्याशङ्क्याह—गुरोरित्यादि । अत्र रहस्यसंप्रदायप्रवर्तकः परशिवो गुरुः । तदाज्ञा शास्त्रं तदनुराधेन । देवताप्रणीनायेति काम्यकर्म निराकृतम्, तत्र देवताप्रीणनाभावाद् । यत् इतरशास्त्रदृष्टया शुभमशुभं वा । प्रकल्पते भवति ॥ २३० ॥

अन्यथा इन्द्रियप्रीणनाय शास्त्रानुरोधेन परिशेषभूतं कञ्चिन्मण्डलधर्ममाह—संन्यासिन इति । शान्तरूपाः कामादिक्षोभरहिता उपासकाः । न तु त्यक्तोपासनाः प्रागुक्ताः, तेषां निषिद्धत्वात् ॥ २३१ ॥

सामयिकेषु आदावेव पूज्याः । यतस्ते शिवभावनादिना प्राप्ततद्रूपाः । यद्यपि विशेषज्येष्ठक्रमेण त्विति वचनेनैव संन्यासिवानप्रस्थयोर्ज्येष्ठयोरादौ पूजा प्राप्तैव, तथापि संन्यासिवानप्रस्थयोर्विद्यायोनिसंबन्धाभ्यां कथञ्चित्कनिष्ठयोरपि सर्वादौ पूज्यत्वायेदं वचनम् । अत एव—"अदीक्षितोऽपि संन्यासी वनी पूज्योऽग्रतः शिवे" इति त्रिपुरार्णवे

**आदावेव तु पूज्याः स्युर्मण्डले शिवरूपिणः।**
**शास्त्रगुर्वाज्ञया सर्वं सफलत्वाय कल्पयेत् ॥२३२॥**

---

उक्तम्। संन्यासिन आचारोऽपि त्रिपुरार्णवे उक्तः—"कौलिको यदि संन्यासी तस्योपास्तिविधिं शृणु। सन्ध्याजपादिकं सर्वं कर्तव्यं प्रोक्तवर्त्मना ॥ पूजां तु कुर्याद् बाह्यां वा मानसीं वाऽनुकूलतः। आश्रमत्रितयस्थं तु गुरुं न प्रणमेद् बहिः॥ तथाश्रमकनिष्ठं च मनसैव नमेत् सदा। उच्छिष्टमपि नो ग्राह्यं पादयोर्न च तर्पयेत् ॥ कुमारीशक्तिशेषं तु स्वीकुर्याद्यत्नतो यतिः। गुरुपत्न्याश्च मातुश्च नान्यासां तु कदाचन ॥ असंन्यासी गुरुरपि शिष्यं तं प्रणमेत् सदा। नारायणात्मकं मत्वा तेन दोषो न चोभयोः॥ चतुर्थाश्रमसंस्थस्तु गुरुर्ज्येष्ठो यदि स्वतः। कर्तव्यस्तु प्रणामो वै तर्पणं चापि चर्वणम् ॥" इति। आश्रमत्रितयस्थं असंन्यासिनम्। आश्रमकनिष्ठं संन्यासे कनिष्ठम्। गुरुपत्नी माता च विधवापि, अविधवायाः शक्तिपदेनैव संग्रहात्। नान्यासां विधवानाम्। शिष्यं तं संन्यासिनम्। स्वतः स्वस्मात्। चर्वणम् उच्छिष्टम् इति तदर्थः। एवं यदि पुत्रादिर्विद्यासम्बन्धेन ज्येष्ठस्तदा कनिष्ठमपि विद्यासम्बन्धेन पित्रादिमेवादौ पूजयेत्। एतदप्युक्तं तत्रैव—"अदीक्षितं कनिष्ठं वा पित्रादि पूजयेत्पुरः। विद्यासम्बन्धतो योनिसम्बन्धः प्रबलो यतः ॥" इति। आदौ पूजितोऽपि पित्रादिः स्वात्मीकारे स्वज्येष्ठान् प्रतीक्षेत। तदपि तत्रैवोक्तम्—"प्रसङ्गात्पूजितश्चादौ स्वात्मीकाराय सर्वथा। प्रतीक्षेत् स्वात्मनो ज्येष्ठानन्यथा पतितो भवेत् ॥" इति। योनिसम्बन्धस्य प्राबल्येऽपि कनिष्ठस्य पित्रादेरुच्छिष्टं तु न भक्षयेत्, पूजनविषये एव योनिसम्बन्धप्राबल्यकथनात्। अत एव—"दीक्षाहीनस्य चोच्छिष्टं जनकस्यापि दीक्षितः। न भक्षयेत्" इति प्रागुक्तम् ॥ ननु केवलयोनिसम्बन्धात् ज्येष्ठोच्छिष्टस्याभक्षणीयत्वे—"विद्यासम्बन्धतो वापि योनिसम्बन्धतस्तथा" इति वचने केवलयोनिसम्बन्धतो ज्येष्ठस्योच्छिष्टविधानं व्यर्थं स्यादिति चेदुच्यते—विद्यासम्बन्धो नामैकगुरुकत्वम्। पितुर्भिन्नगुरुकत्वेन विद्यासम्बन्धाभावेऽप्यन्यस्माद् गुरोः स्वस्मात् पूर्वमेव दीक्षायाः प्राप्तत्वेन केवलज्येष्ठत्वसम्भवात् तादृशकेवलयोनिसम्बन्धवतस्तत्र ग्रहणम्।

ननु यस्य पिता विद्यासम्बन्धेन कनिष्ठः पुत्रश्च ज्येष्ठः, तत्र का गतिरिति चेत्, तत्र शेषग्रहणं नोभयोरुचितम्। कनिष्ठमात्रोच्छिष्टभक्षणे दातुर्ग्रहीतुरपि वै हानिः स्यादिति दोषश्रवणात्, ज्येष्ठोच्छिष्टाग्रहणे दोषाश्रुतेश्च। एवमेव यत्र बालादिदीक्षावान् ज्येष्ठः पञ्चदश्यादिदीक्षावान् कनिष्ठस्तत्रापि। अत एव—"सुवासिनीं विनाऽन्यस्य कनिष्ठस्य कथञ्चन। पित्रादेरपि चोच्छिष्टं सर्वथा न तु भक्षयेत् ॥" इति बृहद्वामकेश्वरे उक्तम्। एवं बहूनां ज्येष्ठानां पृथक्शेषग्रहणासमर्थस्य सकृदेव गुरुत्रयक्रमवत् सर्वज्येष्ठमारभ्य स्वपूर्वोक्तानां शेषस्य ग्रहणम्। शास्त्रानुगता या गुर्वाज्ञा तदनुरोधेन कृतं सर्वं शास्त्रान्तरदृष्ट्या शुभत्वेनाशुभत्वेन वा प्रतीयमानं कल्पते भवति ॥ २३२ ॥

अन्यथा विफलं सर्वं भस्मन्येव यथा हुतम् ।
अयं हि परमो योगः कौलमार्गो महेश्वरि ॥२३३॥
असिधाराव्रतसमो मनोनिग्रहहेतुकः ।
स्थिरचित्तस्य सुलभः सफलस्तूर्णसिद्धिदः ॥२३४॥
अन्यस्य विफलो दुःखहेतुः स्यात् परमेश्वरि ।
तस्मात् सदा शास्त्रगुरुवाक्यनिष्ठः सदा बुधः ॥२३५॥

---

अन्यथा शास्त्राननुरोधेन कृतं भस्मन्येव हुतमिव व्यर्थमित्यर्थः । अत्र अतिसावधानचित्तत्वेन स्थेयम्, अन्यथा पतितो भवेदित्यभिप्रेत्याह—अयमिति कौलः कुले जगति भवः संसारव्यवहारः, स एव मार्ग इव मार्गः, परमपुरुषार्थमोक्षसाधनमिति यावत् । अन्यत्र हि मोक्षमार्गो निवृत्तिमयो जगद्व्यवहारविरुद्धः । अयं तु जगद्व्यवहारैकसाधनः । अत एव त्रिपुरार्णवे उक्तम्—"यदूर्ध्वरेतसां सर्वत्यागिनामनिकेतिनाम् । क्षणेन स्मृतमात्रं तु मोहमुत्पादयत्यलम् ॥ तदेवात्र हि संसिद्धौ कारणं सर्वमीरितम् । इतो मद्यमितो मांसं भक्ष्यमुच्चावचं तथा ॥ तरुण्यश्चारुवेषाढ्या मदघूर्णितलोचनाः ॥" इति । कुलार्णवे—"यैरेव पतनं द्रव्यैस्तैरेवोत्पतनं पुनः" इति, तथा—"अहो भुक्तं तु यन्मद्यं मोहयेत् त्रिदशानपि । तन्मैरेयं शिवं पीत्वा यो न विक्रियते नरः ॥" इति । योगिनीतन्त्रेऽपि—"विषमोऽयं समुद्दिष्टो मार्गः कौलो हि शम्भुना । महाशिलां गले बद्ध्वा समुद्रप्लवनं यथा ॥ विहाय सर्वमटवीकोणकन्दरसंस्थितम् । स्मृतं क्षणान्नाशयति तदेवात्र तु साधनम् ॥" इति । अत एव परमः उत्कृष्टतमः, योगः चित्तनिरोधः । अत्र साधितचित्तस्य नान्यत्रोच्चलनशङ्कापीत्यर्थः ॥ २३३ ॥

अत एवासिधाराव्रतसमः खड्गधारायां व्रजनव्रततुल्यः । ईषदवनधानेऽत्यन्तनाशक इति भावः । मनसो निग्रहो विषयवैमुख्येन स्वरूपस्थितिः, तत्र हेतुः मार्ग इति सम्बन्धः । नन्वयमतिदुर्लभतर इत्याशङ्क्य तत्सौलभ्यकारणमाह—स्थिरेति । स्थिरं स्वायत्तीकृतं चित्तं येन । ननु किमेतेन मार्गेण पतनस्थानसहस्रसंकुलेनेत्याशङ्क्याह—सफल इति । स्थिरचित्तत्वमात्रेण फलवैधुर्यशङ्कालेशोऽपि नास्ति । अन्यच्च तूर्णसिद्धिदः शीघ्रफलपर्यवसायी । न तु "अनेकजन्मसंसिद्धः" इत्यादिरीतिः ॥ २३४ ॥

अन्यस्य अस्वाधीनचित्तस्य । विफलः उक्तफलाजनकः । न फलाभाव एव, किन्तु अनर्थसंपादकोऽपीत्याह—दुःखहेतुरिति । ननु स्थिरचित्ततैव दुर्लभा इत्ययमाचारो न सेत्स्यतीत्याशङ्क्य तत्साधनप्रकारमाह—तस्मादिति । यस्मादीषदन्यथाभावेऽप्यनर्थदस्तस्मात् । बुधः सावधानः सन् शास्त्रानुरुद्धगुरुवाक्येषु नितरां स्थितस्तदुक्तधर्माचरणपरः ॥२३५॥

भक्तियोगेन युक्तः सन् कौलमार्गैकतत्परः ।
श्रद्धया परया युक्तः साधकः सिद्धिमाप्नुयात् ॥
इत्येतत् कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥२३६॥

इति श्रीपरमानन्दतन्त्रे त्रयोदशोल्लासः ॥१३॥

---

भक्तिर्गुरुदेवतानुरक्तिस्तस्या योगो विश्लेषः, अव्यभिचरितभक्तिरिति यावत् । तेन युक्तः परया अचलया श्रद्धया विश्वासेन युक्तः कौलमार्गतत्परः सिद्धिं यथोक्तफलं प्राप्नुयात् । तत्परता भक्तिश्रद्धाभियुक्तस्य यथोक्ताचरणशीलस्य चित्तस्थिरद्वारोक्तफलं सुलभमेवेति तात्पर्यम् । अत एवोक्तं त्रिपुरार्णवे—"महाविघ्नसहस्रौघमकरग्राहसंकुलम् । सन्मुक्तिद्वीपनगरीसिन्धुमार्गं भयानकम् ॥ दृढश्रद्धाकर्णयुतां भक्तिनौकां विना जनः । सदाचारानुकूलोद्यद्वायुमात्रेण शङ्करि ॥ न सन्तरेदुपायानां सहस्रैः प्रगुणैरपि ।" इति कुलार्णवेऽपि—"श्रद्धाभक्तिकराभ्यां तु कौलिको भवसागरम् । तरत्येकेन हीनोऽपि गभीरे मज्जति ध्रुवम् ॥" इत्यादि । योगिनीतन्त्रेऽपि—"यद्यप्ययं दुष्करो वै मार्गो विघ्नशतैः युतः । अपराधसहस्राणां संभवोऽत्र प्रतिक्षणम् ॥ तथापि नात्र भीः कार्या श्रद्धावायुसमेधितः । दृढभक्त्यनलो देवि तूलराशिमिवाचिरम् ॥ अपराधमहाशैलं भस्मीकुर्यात् प्रतिक्षणम् । न संदेहस्त्वया कार्यः शृणु वच्मि रहस्यकम् ॥ शास्त्रेण चान्यथा वापि यद्यद्भक्त्या क्रियेत तत् । शास्त्रोक्तमेव जानीहि तस्माद्भक्तिर्गरीयसी ॥" इत्यादि । उपहसंरति—इत्येतदिति ॥२३६॥

सौभाग्यानन्दसंदोहे तौगुरूपद्यबोधकः ।
परमानन्दटिप्पण्यामुल्लासोऽभूत् त्रयोदशः ॥१३॥



## चतुर्दशोल्लासः

श्रीदेवी उवाच—

देवेश श्रोतुमिच्छामि त्रिपुरासाधने विधिम् ।
विस्तरेण महेशान वद सर्वमशेषतः ॥ १ ॥

श्रीभैरव उवाच—

शृणु देवि प्रवक्ष्यामि सुन्दरीसाधने विधिम् ।
उषस्युत्थाय वीरेन्द्रः संस्मरन् स्वात्मदेवताम् ॥ २ ॥
चन्द्रबिम्बप्रतीकाशं गुरुं ध्यायेत् समाहितः ।
समाहितेन कर्तव्यं साधकेन महेश्वरि ॥ ३ ॥
मनोऽन्यत्र वचोऽन्यत्र क्रिया चान्यगता भवेत् ।
तत्कर्म न भवेदस्य यथा भिन्नघटे जलम् ॥ ४ ॥

---

एवं द्वादशत्रयोशाभ्यामुल्लासाभ्यां बालादिदीक्षाभेदो विस्तरेण निरूपितः। प्रसङ्गात् सामयिकधर्माश्च कथिताः। प्रकृते सौभाग्यविद्या सर्वत्र साधनेषु नियोजिते-त्येकादशवचनात् सौभाग्यविद्यासाधनमेव षोडशीसाधनं न प्रायो बहुभेद इति मत्वा पञ्चदशीषोडश्योस्त्रिपुरात्वेनानुगमं कृत्वा तत्साधनं पृच्छति—देव्युवाचेति। सर्वं सन्ध्यादिबह्ववान्तरसाधनभेदयुतम् ॥१॥

उत्तरं भैरव उवाचेति। सुन्दरीत्यपि पञ्चदशीषोडश्योरनुगमः। तत्रादौ प्रातःकृत्यमाह—उषसीत्यादि। उषःकाल उक्तस्त्रिपुरारहस्ये—"द्विमुहूर्तविशेषे तु सूर्यस्योदयनं प्रति। उषःकालः समाख्यातः साधकानां शुभावहः॥ तत्काले योऽयमर्थं वै त्रिन्तयेन्निश्चलान्तरः। तत्तस्य जायते राम कालवेला स्वभावतः॥" इति। तस्मिन् सुप्तादेर्निन्दापि तत्रैव—"यस्तु कल्पद्रुमप्रख्ये कालेऽस्मिन्नावबुद्ध्यति। बुद्ध्वा वा स्वेहितं नैव चिन्तयत्यतिमूढधीः॥ सर्वैः स्वार्थैः परिभ्रष्टः पङ्के गौरिव सीदति।" इति। एवंविधे काले स्वोपास्यदेवतां चिन्तयन्नेवोत्तिष्ठेत् ॥२॥

समाहितः सावधानचित्तः ॥३॥

असमाहितस्य कर्मकरणं व्यर्थमित्याह--मनोऽन्यत्रेति। क्रिया कर्मेन्द्रियं पाण्यादि। अस्य साधकस्य तत्कर्म फलावहं न भवेत्। अत्र दृष्टान्तो भिन्नघट इति ॥४॥

तस्मात् संयम्य चित्तं च कुर्यात् कर्माणि सर्वदा ।
ब्रह्मरन्ध्रस्थिते पद्मे सहस्रदलसंयुते ॥ ५ ॥
विशदे कर्णिकायां च ध्यात्वाधारेऽथ लोहिते ।
कर्णिकाकुलकुण्डान्तः सार्धत्रिवलयाकृतिम् ॥ ६ ॥
प्रसुप्तसर्पसदृशीं बिसतन्तुतनीयसीम् ।
ध्यात्वा च कुण्डलीं शक्तिं कुम्भकश्वासयोगतः ॥ ७ ॥
प्रबुद्धां ब्रह्ममार्गेण प्रविष्टां विधुमण्डले ।
तेन प्राप्तैकरस्यां च भावयन् परमेश्वरि ॥ ८ ॥
तन्निर्गलत्सुधाधारासंप्लुतं स्वं विभावयेत् ।
संघट्टमुद्राभ्यासेन पादुकामनुचिन्तयेत् ॥ ६ ॥

---

यत एवं तस्मात् चित्तं संयम्य क्रियमाणकर्मादिषु सन्निरुध्य, चकाराद् वाचं क्रियां च । मनोवाक्कायान्यतमेन यत्किञ्चिद् ध्यानजपपूजाद्यन्यतमकरणे त्रयाणां तत्कर्मेतरपरत्वाभावोऽवश्यं संपादनीय इति भावः । गुरुं ध्यायेदित्युक्तम् । तत्र ध्येयस्य स्थानमाह—ब्रह्मरन्ध्रेति । चतुर्थोल्लासोक्ते अकुलाख्ये ॥५॥

विशदे श्वेतवर्णे । कर्णिकायामिति । ब्रह्मरन्ध्रस्थाधोमुखश्वेतसहस्रदलकमलान्त- रूर्ध्वमुखश्वेताष्टदलद्वादशान्तकमलकर्णिकायां प्रोक्तरीत्या मातृकात्रिकोणयुताया- मित्यर्थः, "अकुलपद्मान्तर्द्वादशान्तसरीरुहे" इत्यादि पञ्चमे उक्तत्वात् । द्वादशान्त- लक्षणमपि तत्रैव व्याख्यातम् । अकुलपद्मलक्षणं तु त्रिपुरार्णवे—"सुषुम्णोर्ध्वसुधारश्मि कोटिकान्तिसमप्रभम् । अधोमुखं गुरुस्थानं सहस्रदलशोभितम् ॥" इति । तत्र कर्णिकायां विधुमण्डलेत्यादि वक्ष्यमाणत्वात् चन्द्रमण्डलरूपं गुरुं ध्यात्वा । अथा- नन्तरम् । आधारे कुण्डलिनीं ध्यायेत् । तत्प्रकारमाह–आधारेत्यादि । आधारे आधारकम- लोपलक्षिते सुषुम्णाधःकुलकमले । तल्लक्षणमपि त्रिपुरार्णवे-–"सुषुम्णाधो रक्तवर्णं सहस्रदलपङ्कजम् । कुलाख्यं कर्णिकासंस्थकुलकुण्डस्थितं हि सा ॥" इति । तत्कर्णिका- मध्यस्थे कुलकुण्डाख्ये छिद्रे स्थितम् । कुण्डलिनीं विशिनष्टि-—सार्धेत्यादि ॥६॥

बिसं कमलनालं तस्य तन्तुवत् सूक्ष्मम् । कुम्भकं कृत्वा तच्छ्वासयोगेन प्रबुद्धां भावयन्नित्यन्वयः ॥ ७ ॥

ब्रह्ममार्गः सुषुम्णामार्गः । विधुमण्डलरूपे गुरौ । तेन गुरुणा । ऐकरस्यम् एकता ॥ ८ ॥

तन्निर्गलत् चन्द्रमण्डलान्निर्गलत् । स्वमात्मानम् । पादुकां पादुकामन्त्रम् ॥ ९ ॥

चतुस्तारं बीजषट्कं श्रीपरापावकेति च।
सर्वाराध्यसर्वमूर्धपुरनाथ च सर्वण ॥ १० ॥
गुरु स्वयंगुरुश्री पश्चाद् गुरुनाथ सषष्ठकम्।
पञ्चमादिद्वितीयान्तं विलोमेन चतुष्टयम् ॥ ११ ॥
श्रीशम्भुगुर्वाद्यबीजं स्याद् द्विपञ्चाशदक्षरः।
अन्ते नाम लिखित्वा श्रीपादुका पूजयामि हृत् ॥ १२ ॥
अग्निवायुस्पर्शत्यरावाद्यबीजं सबिन्दुकम्।
अग्निवायुधरोपस्थरूपतत्परशब्दशः ॥ १३ ॥
भगमाला महाविद्या भेरुण्डास्थाः सबिन्दुकाः।
पुनश्चाद्यं तृतीयं चेत्येवं षड्बीजकं शिवे ॥ १४ ॥
परब्रह्म ऋषिश्छन्दो गायत्री जातिभेदतः।
हंसेन विन्यसेद् देवि ध्यानं शृणु मयेरितम् ॥ १५ ॥

---

तमेवाह--चतुस्तारमिति। बीजषट्कं वक्ष्यमाणम्। इति च च ॥ १० ॥

पश्चात् इति त्यक्त्वा श्रीपरेत्यादिगुरुनाथेत्यन्तं स्वरूपम्। सषष्ठकम् सकारयुतम्। वक्ष्यमाणेषु बीजेषु षष्ठं बीजम्। सूक्ष्मरूपं पञ्चमबीजादिद्वितीयबीजान्तम्। विलोमेनेति स्पष्टार्थम्, पञ्चमादिद्वितीयान्तमित्युक्त्यैव सिद्धेः। चतुष्टयं बीजम् ॥ ११ ॥

श्रीशम्भुगुरु स्वरूपम्। आद्यबीजं प्रथमबीजम्। एवं द्विपञ्चाशदक्षरः पादुकामन्त्रः। अन्ते सर्वान्ते। नाम श्रीगुरोः। हृत् नमः। तच्च दीक्षानामैव। तदुक्तं त्रिपुरार्णवे--"जपपूजातर्पणादौ दीक्षानाम प्रयोजयेत्। व्यावहारिकमन्यत्र प्रयोगादौ महेश्वरि ॥" इति। एवं च संघट्टमुद्रया पादुकामन्त्रजपान्ते अमुकानन्दनाथश्रीपादुकां पूजयामि नम इति वदेत् ॥ १२ ॥

बीजान्याह--अग्नीति। अग्नि ह्। वायु स। स्पर्श र। रति ऊँ ह्यं। अग्निवायू प्रोक्तौ। धरा क्ष। उपस्थ म। रूप ल। तत्पर व। शब्द य। र स्वरूपम् ॥ १३ ॥

इति व्यञ्जनाष्टकम्। भगमाला आ। महाविद्या ऊ। भेरुण्डा ई। एतेषु क्रमेण स्थिताः। हस्क्ष्म्त्रां २। हस्क्ष्म्ल्यूं। ३। हस्क्ष्म्ल्व्यीं। ४। पुनः। आद्यं हस्लूं। ५। तृतीयं हस्क्ष्म्ल्व्यूं। ६। एवं षड्बीजानि ॥ १४ ॥

एवं पादुकमन्त्रमुक्त्वा प्रसङ्गात्तन्न्यासविधिमाह--परब्रह्मेत्यादि। जातिभेदतो हंसेन। षड्जातिभिन्नेन हंसेन। हंसां। हंसीं। हंसः ॥ इति ॥ १५ ॥

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥ १६ ॥
पादुकामनुरेषः स्याद्विना दीक्षां न लभ्यते ।
सकृत् स्मरणमात्रेण महापापादिनाशनः ॥ १७ ॥
सदैतद् भावयन् मूर्ध्नि साक्षात्तु शिव एव सः ।
संघट्टमुद्रां ते वक्ष्ये शृणु देवेशि संयता ॥ १८ ॥
अधोमुखाङ्गुलाग्राणि हस्तद्वयगतानि वै ।
एकीकृतान्यूर्ध्वमुखे कनिष्ठाग्रे तु योजिते ॥ १९ ॥
ब्रह्मरन्ध्रे तु विन्यस्ता मुद्रा संघट्टसंज्ञिता ।
पञ्चपूजां विधायाथ पञ्च मुद्राः प्रदर्शयेत् ॥ २० ॥
अङ्गुष्ठपार्श्वद्वितयं संयोज्योर्ध्वाङ्गुलाग्रकम् ।
ऋजुरूपाण्यङ्गुलानि मुद्रैषा स्तम्भनाभिधा ॥ २१ ॥

---

प्रकृते महापादुकामन्त्रस्य गुरुचरणद्वयं देवता । तस्य च शिवशक्त्युभयरूपत्वमिति संकेतः । वाङ्मनसयोरगोचरमविषयः । शक्तेः रक्तप्रभा, शिवस्य शुक्लप्रभा । तदुभयरूपत्वात्प्रभाद्वयमिश्रं रूपम् । अतर्क्यम् एवंविधमिति तर्कितुमशक्यम् । त्रिपुरात्मकतेजोमयम् । प्रकाशविमर्शात्मकशिवशक्त्युभयरूपत्वादवाङ्मनसगोचरत्वादिकं युक्तमेवेति ज्ञेयम् । अत एव कुलार्णवे उक्तम्—"पालनाद् दुरितच्छेदात् कामितार्थप्रवर्धनात् । पादुकेति समाख्याता आवयोस्तत्त्वमम्बिके ॥" इति ॥ १६ ॥

दीक्षां पूर्णदीक्षाम् । अन्यदीक्षासु महापादुकोपदेशानुक्तेः । महापापादेर्नाशनं यस्मात् ॥ १७ ॥

एतत् पादुकां सदा भावयन् शिव एव भवतीत्यर्थः ॥ १८ ॥

अधोमुखानि हस्तद्वयाङ्गुलाग्राणि तेषु हस्तद्वयतर्जनीमध्यमाऽनामाग्राणां पृष्ठयोजनेनैकीकृतानि । ऊर्ध्वमुखकनिष्ठाग्रोदरद्वयं योजितम् ॥ १९ ॥

संघट्टमुद्रान्यासेनेति प्रागुक्तम् । तत्र न्यासमाह—ब्रह्मरन्ध्रे त्विति । अधोमुखाङ्गुलाग्राणां ब्रह्मरन्ध्रे न्यासः ॥ एवं पादुकाजपोत्तरं पञ्चपूजां कृत्वा पञ्चमुद्राः प्रदर्शयेत् । अत्र ऋष्यादिन्यासस्तु प्रसङ्गात् कथितः । प्रकृते तु नोपयोगः, केवलजपस्यैवोक्तत्वात् । सोऽपि जपो मानस एव, चिन्तयेदित्युक्तेः । 'केवलं पादुकामन्त्रं मनसैव सकृत् स्मरेत्" इति त्रिपुरार्णवोक्तेश्च ॥ २० ॥

मुद्रा एवाह—अङ्गुष्ठेत्यादि । हस्तद्वयस्य ऋजुरूपाण्यङ्गुलानि ऊर्ध्वाभिमुखाग्राणि तत्राङ्गुष्ठयोः पार्श्वद्वयं संयुक्तम् । इयं स्तम्भनमुद्रा ॥ २१ ॥

प्रागङ्गुलाग्रेयमेव चतुरस्रेति शब्दिता ।
मत्स्यमुद्रा पुरा प्रोक्ता कनिष्ठातर्जनीद्वयम् ॥ २२ ॥
अधोमुखीकृतं देवि कूर्ममुद्रा भवेदियम् ।
योनिमुद्रापि संप्रोक्ता चैवं मुद्रा तु पञ्चधा ॥ २३ ॥
ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीकनककाण्डशोभितं द्वादशान्तसरसीरुहं भजे ॥ २४ ॥
तस्य कन्दलितकर्णिकापुटे क्लृप्तपत्रमकथादिरेखया ।
कोणलक्षितहलक्षमण्डलं भावलक्ष्यमनलालयं भजे ॥ २५ ॥
तत्पुटे पटुतडित्कडारिमस्पर्धमानपरिपाटलप्रभम् ।
चिन्तयामि हृदि चिन्मयं सदा बिन्दुनादमणिपीठमण्डलम् ।२६।

---

इयमेव स्तम्भनमुद्रैव । यदि प्रागङ्गुलाग्रा तदा चतुरस्राभिधा । प्रागङ्गुलेति । साधकस्य पूर्वमुखत्वेन प्रातःस्मरणेऽवस्थितिरुक्ता । मत्स्यमुद्रा षष्ठे प्रोक्ता । मत्स्यमुद्राया एव कनिष्ठातर्जनीद्वयम् ॥ २२ ॥

अधोमुखत्वेन कृतं कूर्ममुद्रा । योनिमुद्रा त्वष्टमे प्रोक्ता ॥ २३ ॥

एवं पञ्चमुद्राप्रदर्शनानन्तरं पादुकास्तवनाय पादुकास्तुतिमाह–ब्रह्मरन्ध्रेत्यादि । ब्रह्मरन्ध्रे स्थितं यत्सरसीरुहम् अधोमुखश्वेतसहस्रदलमकुलाख्यम् । तस्योदरेऽन्तः नित्यलग्नं नित्यसंबद्धम् । अवदातं श्वेतम् । अद्भुतमलौकिकम् । कुण्डल्येव कनकमयं काण्डं नालम्, तेन शोभितं द्वादशान्ताख्यं सरसीरुहं भजे ॥ २४ ॥

तस्य द्वादशान्तस्य । कन्दलितं विकसितं यत्कर्णिकायाः पुटं स्थानम्, तस्मिन् क्लृप्तानि परितो निहितानि पत्राणि यस्य तद् अनलालयम् । अकथादिरेखया त्रिसंख्यया युतम् । मातृकात्रिरेखया युतमिति भावः । कोणेषु लक्षितानि हलक्षाणां वर्णानां मण्डलानि तेजोमयत्वेन सूर्यादिमण्डलतुल्यत्वान्मण्डलानि यस्मिन् तत् । भावेन सत्त्ववृत्त्या लक्षितुं योग्यम् । ईदृशम् अनलालयं त्रिकोणं भजे ॥ २५ ॥

तस्य त्रिकोणस्य पुटे मध्ये । पट्वी अतिप्रौढा या तडित्, तस्याः कडारिमा कपिलवर्णः, तेन स्पर्धमाना परितः पाटला प्रभा यस्य तत् । हृदि मनसि चिन्तयामि । चिन्मयं चिदेकरूपम् । बिन्दुनादयोर्वक्ष्यमाणहंसयोर्मणिमयं पीठमण्डलम् ॥ २६ ॥

ऊर्ध्वमस्य हुतभुक्शिखारुणं चिद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मरमहश्छटोत्कटं व्यामृशामि युगमादिहंसयोः ॥२७॥
तत्र नाथचरणाविन्दयोः संविदामृतझरीमरन्दयोः ।
द्वन्द्वमिन्दुकरकन्दशीतलं मानसं स्मरतु मङ्गलास्पदम् ॥२८॥
पादुकापञ्चकेनैवं स्तुत्वा पश्चान्महेश्वरि ।
गुरुपादाम्बुजद्वन्द्वस्तुतिं कुर्यान्नु भक्तितः ॥ २९ ॥
निषक्तमणिपादुकं नियमिताघकोलाहलं
स्फुरत्किसलयारुणं नखसमुन्मिषच्चन्द्रिकम् ।
परामृतसरोवरोदितसरोजरोचिष्णु त्वद्
भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम् ॥ ३० ॥
अथ स्तुत्वा गुरुं ध्यायेत् संयतेन्द्रियमानसः ।
तत्प्रकारं शृणु शिवे वक्ष्यामि परमेश्वरि ॥ ३१ ॥

---

अस्य पीठस्योर्ध्वमुपरि । हुतभुजो वह्नेः शिखा ज्वाला, तद्वदरुणं चितः चिद्रूपस्य शिवस्य विलासः स्फुरणं तस्य यत्परितः बृंहणं वृद्धिः, जगदात्मत्वेन भासमानम्, तस्यास्पदं स्थानम् शिवशक्तिमिथुनस्यैव जगदाभासनस्थानत्वादिति भावः। विश्वस्य जगतो घस्मरं भक्षकं विश्वव्यापकमिति यावत् । ईदृशं यन्महः तेजः तस्य च्छटया समूहेनोत्कटं प्रौढम् । एवंरूपम् आदिहंसयोः शिवशक्त्योर्बिन्दुनादवाच्ययोर्युगं व्यामृशामि चिन्तयामि ॥ २७ ॥

तत्र एवंविधशिवशक्तिरूपहंसमिथुनस्थाने । नाथस्य श्रीगुरोः चरणरूपारविन्दयोः । संविद्रूपा या आसमन्ताद् व्याप्ता अमृतझरी, तदात्मकः मरन्दः मकरन्दो ययोः । एवं करारविन्दयोर्द्वन्द्वम् । इन्दोः कराणां मयूखानां कन्दो मूलपिण्डः, तद्वच्छीतलं मानसं स्मरतु । मङ्गलास्पदं श्रेयः स्थानम् । शिवशक्तिमिथुनरूपं गुरुपदद्वन्दमिति भावः ॥ २८ ॥

एवं गुरुपदयुगस्य शिवशक्त्यात्मकं परं रूपं स्तुत्वा तस्यैव स्थूलरूपस्तुतिं कुर्यादित्यर्थः ॥ २९ ॥

निषक्ते नियुक्ते मणिमये पादुके यस्मिन् तत् । नियमितः अघानां पापानां कोलाहलो येन । स्फुरत्प्रकाशमानो यः किसलयः, तद्वदरुणो वर्णो यस्य । नखेभ्यः समुन्मिषन्त्यः प्रादुर्भवन्त्यः चन्द्रिकाः चन्द्रिकातुल्यकान्तयो यस्य । परामृतानां सरोवरे उदितसरोजवद् रोचिष्णु दीप्तिमत् तत्पूर्वोक्तं गुरुपदारविन्दद्वयं भजामि ॥ ३० ॥

एवं गुरुपदद्वन्द्वं स्थूलरूपेण स्तुत्वा अथानन्तरम् ॥ ३१ ॥

अनुत्तरमहासंवित्स्रोतःस्वच्छन्दचारिणे ।
अमुकानन्दनाथाय शिवाय गुरवे नमः ॥ ३२ ॥

व्योमाम्बुजे कर्णिकमध्यसंस्थ-
सिंहासने संस्थितदिव्यमूर्तिम् ।
ध्यायेद् गुरुं चन्द्रशिलाप्रकाशं
चित्पुस्तकाभीतिवरान् दधानम् ॥ ३३ ॥

श्वेताम्बरं श्वेतविभूषणाढ्यं मुक्ताविभूषं मुदितं त्रिनेत्रम् ।
वामाङ्कपीठस्थितरक्तशक्तिं मन्दस्मितं पूर्णकृपानिधानम् ॥ ३४ ॥

इति स्तुत्वा चन्द्रबिम्बान्निर्गतां परमेश्वरीम् ।
ध्यात्वा निरुक्तां हार्दाब्जे मानसैः पूजयेत्ततः ॥ ३५ ॥

मनसा प्रजपन् विद्यां मूले ध्यात्वा च पूर्ववत् ।
पञ्चधा पूज्य संस्तुत्वा स्नात्वा तीर्थे यथोचितम् ॥ ३६ ॥

---

अनुत्तरा नास्त्युत्तरं यस्याः सर्वनिषेधसाक्षित्वेन स्वनिषेधकाभावस्त्वस्या उत्तराभावः । ईदृशी या महती देशकालाद्यैः अपरिच्छिन्ना संवित्, तद्रूपे स्रोतसि नद्यादौ स्वच्छन्दचारिणे अप्रतिहतसंचारशीलाय अमुकेति स्वगुरुनामोपलक्षकम् । तेनामृतानन्दनाथायेत्यादि पाठो योजनीयः । एतच्चोक्तं त्रिपुरार्णवे—"मन्त्रे स्तोत्रे तथान्यत्र नाम सामान्यतः स्थितम् । तत्र तत्तन्नामयोगपूर्वकं तु प्रयोजयेत् ॥" इति । तदपि दीक्षानामैवेत्यनुपदमेव प्रपञ्चितम् । शिवाय मङ्गलात्मने ॥ ३२ ॥

व्योमाम्बुजं द्वादशान्तकमलम् । तत्सम्बन्धि कर्णिकमध्यसंस्थसिंहासने । दक्षोर्ध्वाद्यधःपर्यन्तमायुधानि ॥ ३३ ॥

मुदितं प्रसन्नं वामाङ्करूपे पीठे स्थिता रक्ता शक्तिर्यस्य । पूर्णकृपायाः निधानं पात्रम् ॥ ३४ ॥

गुरुरूपाच्चन्द्रबिम्बान्निर्गतां परमेश्वरीं कुण्डलीम् । निरुक्तां वक्ष्यमाणध्यानोक्तरूपाम् । हार्दाब्जे अनाहतकमले ॥ ३५ ॥

विद्यां पञ्चदशीम् । मूले मूलाधारे । पूर्ववत् कुण्डलिनीरूपाम् । कुण्डलिनीं पञ्चधा संपूज्य । देवतां स्तोत्राद्यैः स्तुत्वा यथोचितं वैदिकस्नानपूर्वकं बालाप्रकरणोक्तरीत्या स्नात्वा । अत्रेदं प्रातःकृत्यं पूर्णदीक्षावतः । मन्त्रदीक्षावतस्तु पादुकोपदेशाभावात्तत्स्थाने संघट्टमुद्रां विना तूष्णीं गुरुत्रयमन्त्रजपः । तदुक्तं त्रिपुरार्णवे—"आपादुकानां तत्स्थाने

सूर्यतर्पणपर्यन्तं कृत्वाधारे स्मरेच्छिवे ।
वाग्बीजं तु तटित्कोटिनिभं तद् ब्रह्ममार्गतः ॥ ३७ ॥
ब्रह्मरन्ध्रान्नासिकातो गगनस्थाग्निमण्डले ।
आवाह्य तत्र चोद्भूतां ध्यायेद्वागीश्वरीं शिवे ॥ ३८ ॥
पीतां पीताम्बरालेपस्रग्विभूषानुभूषिताम् ।
तटित्कोटिसमाभासां बालामक्षस्रगुज्ज्वलाम् ॥ ३९ ॥
पुस्तकाढ्यकराम्भोजां वह्निपीठे निषेदुषीम् ।
वाग्भवीं वाग्भवोद्भूतां त्रिक्षणां सुस्मितां स्मरेत् ॥ ४० ॥
पञ्चधा पूज्य वागीशीं गायत्र्याऽर्घ्यं त्रिधा चरेत् ।
तद्बीजेन त्रिधा तर्प्य मूलबीजस्थले शिवे ॥ ४१ ॥
कूटयोगः प्रकर्तव्यः सर्वकर्मस्वयं विधिः ।
अथवा बीजमात्रस्य योगेनापि भवेद् विधिः ॥ ४२ ॥

---

गुरुत्रयजपो भवेत्" इति । अत एव पादुकास्तुतिरपि नास्ति । किन्तु अनुत्तरमहासंविदित्यादि गुरुस्तोत्रमात्रम् । पञ्चदशीदीक्षावतोऽप्येवम्, तयोर्मन्त्रोपदेशसाम्यात् । अन्येषां बालाप्रकरणोक्तवत् । स्नानविधौ तु स्वस्वदेवतावाहनं विशेषः ॥ ३६ ॥

सूर्यतर्पणपर्यन्तं बालावत् सन्ध्योपासनं कृत्वा । तदनन्तरम् । आधारे मूलाधारे । वाग्बीजं स्मरेदित्यन्वयः । तत् वाग्बीजम् । ब्रह्ममार्गतः सुषुम्णामार्गेणावाह्येत्यन्वयः ॥३७॥

ब्रह्मरन्ध्रान्नासिकात इत्यावाहनक्रमो द्योतितः । आकाशेऽग्निमण्डलं ध्यात्वा तत्रोक्तदिशा वाग्बीजमेव तेजोमयमावाह्येत्यर्थः । तत्र अग्निमण्डले तत्तेजसा उद्भूताम् आविर्भूताम् ॥ ३८ ॥

ध्यानमेवाह - पीतामिति । पीतां पीतवर्णाम् । आलेपश्चन्दनादिः । स्रक् पुष्पमाला । अक्षस्रक् जपमाला ॥ ३९ ॥

दक्षवामयोरायुधे वह्निमण्डलरूपे । पीठे निषेदुषीमुपविष्टाम् । वाग्भवबीजादुद्भूताम् । त्रीणीक्षणानि नेत्राणि यस्याः ॥ ४० ॥

एवं ध्यानोत्तरं कृत्यमाह—पञ्चधेति । वागीशीं संपूज्य । गायत्री वक्ष्यमाणा । तद्बीजेन वाग्बीजेन वागीश्वरीं त्रिधा संतर्प्य । बालाविधेः प्रकृते विशेषमाह—मूलबीजेति । बालामूलबीजयोगस्थले आचमनमन्त्रादौ कूटयोगः प्रकर्तव्य इत्यन्वयः ॥ ४१ ॥

प्रथमबीजस्थले प्रथमकूटयोगः, द्वितीये द्वितीय इत्यादि । सर्वकर्मसु आचमनाद्यखिलकर्मसु यत्र यत्र बालाप्रकरणे बीजयोगोऽस्ति, तत्र तत्र कूटयोगः कर्तव्य इत्यर्थः ।

बीजकूटाभेदभावान्मूलगायत्रिं वां ततः ।
मूलं वाग्भवगायत्रीं तद्बीजं च जपेच्छिवे ॥ ४३ ॥
वाग्भवं त्रिपुरादेवी विद्महे विलिखेच्छिवे ।
वागीश्वरी धीमहि च तन्नो क्लिन्ने प्रचोदयात् ॥ ४४ ॥
चतुर्विंशत्यक्षरेयं गायत्री वाग्भवाभिधा ।
अथैतदङ्गभूतं वै पारायणमुदीरयेत् ॥ ४५ ॥
पारायणं नाथसंज्ञं घटिकाख्यं च सुन्दरि ।
प्रातस्तदङ्गभूतं च कुर्याद् देवि चतुर्विधम् ॥ ४६ ॥

---

पक्षान्तरमाह—अथवेति । बीजमात्रस्य बीजस्यैव बीजस्थले कूटयोगो न कर्तव्य इति भावः ॥ ४२ ॥

तत्र हेतुमाह—बीजेति । बीजकूटयोरभेदभावादैक्यात् । ऐक्यं च समानार्थकत्वादिना । अत्र बीजकूटयोर्योगविकल्पो बालाप्रकरणोक्तबीजयोगस्थले एव नान्यत्र । तेन वाग्भवबीजेन तर्पणादौ न प्रथमकूटयोग इति ध्येयम् । ततः वागीश्वरीतर्पणानन्तरम्, मूलगायत्रीं जपेदित्यन्वयः । तद्बीजं वाग्भवबीजम् । मूलगायत्री पञ्चमोक्ता । मूलं पञ्चदशी । वाग्भवगायत्री वक्ष्यमाणा । वाग्बीजं प्रोक्तम् । इति चतुष्टयं क्रमेण जपेत् । जपसंख्या पञ्चमोक्ता दशधेति ॥ ४३ ॥

वाग्भवगायत्रीमाह—वागिति । वाग्भवं ऐं । विलिखेच्छिवे । च । इति त्यक्त्वा त्रिपुरेत्यादि दयादित्यन्तं स्वरूपम् ॥ ४४ ॥

एतदङ्गं प्रातःसन्ध्याङ्गम् ॥ ४५ ॥

अत्र जपान्ते उपस्थानं त्रिपुरार्णवे उक्तम्—"उपतिष्ठेत्ततो देवीं स्तोत्रमन्त्रैर्जपान्ततः" इति । त्रिपुरारहस्येऽपि—"सन्ध्यायामनुपस्थानाद्देवता कुप्यति द्रुतम् । आगमे गमने श्रेष्ठे प्रत्युत्थानं समर्हणम् ॥ लोकसिद्धन्याय एषस्तस्मादावश्यकं त्विदम् । वैदिकैस्तान्त्रिकैर्वापि ह्युपस्थानं भवेच्छिवे ॥" इति । अत एव पद्धतौ गौरीर्मिमीयेति वैदिकमन्त्रेणोपस्थानमुक्तम् । तदर्थस्तु—परमे व्योमन् व्योम्नि परब्रह्मणि प्रतिष्ठिता गौरी गौरवर्णा वाग्देवी सृष्ट्युपरमे सलिलसदृशानि वर्णपदवाक्यानि तक्षती सृजन्ती मिमाय शब्दमकरोत् । कथं प्रथमं प्रणवात्मना एकपदी ब्रह्मणो मुखान्निर्गता । अनन्तरं व्याहृती सावित्रीरूपेण द्विपदी । ततो वेदचतुष्टयरूपेण चतुष्पदी । ततो वेदाङ्गैः षड्भिः पुराणधर्मशास्त्राभ्यामष्टापदी । ततो मीमांसान्यायसांख्ययोगपाञ्चरात्रपाशुपतायुर्वेदधनुर्वेदगान्धर्ववेदैर्नवपदी । ततोऽनन्तैर्वाक्यसन्दर्भैः सहस्राक्षरा अनन्तविधा प्रभूवुषी संपन्नेति ।

मूलऋष्यादिपूजान्तं तद्गायत्रीं प्रजप्य च ।
पुष्पबाणेक्षुकोदण्डपाशाङ्कुशलसत्कराम् ॥ ४७ ॥
स्वेच्छागृहीतवपुषं युगनित्याक्षरात्मिकाम् ।
घटिकावरणोपेतां परितः प्राञ्जलीन् स्थितान् ॥ ४८ ॥

---

अत्र अजपाजपप्रकारस्त्रिपुरार्णवे उक्तः । यथा—"एवं सन्ध्यामुपासित्वा त्वजपाजपमाचरेत् । प्रातःस्मृत्युत्तरं वापि शुचिभूतो महेश्वरि ॥ प्राणानायम्य मन्त्रेण पूर्वजप्तं निवेदयेत् । संकल्पयेत्तत्र चादौ कालेनैतावता कृतम् ॥ एतावत्संख्यकं देवि उच्छासाद्यात्मकं जपम् । गणेशादिदेवताभ्यस्त्वर्पयामीति शङ्करि ॥ संकल्प्यैवं देवताभ्यो यथाभागं निवेदयेत् । वादिवर्णचतुष्केण युक्ते पीतचतुर्दले ॥ आधारे तु गणेशाय षट्शतं जपमर्पये । बादिवर्णाढ्यषट्पत्रे विद्रुमाभे स्वयम्भुवे । स्वाधिष्ठाने षट्सहस्रसंख्याकं जपमर्पये । डादिवर्णयुते विद्युन्निभे दशदलोज्ज्वले ॥ विष्णवे मणिपूरे षट्सहस्रं जपमर्पये । काद्यक्षरयुते नीलप्रभे द्वादशपत्रके ॥ अनाहते षट्सहस्रजपं रुद्राय चार्पये । स्वरयुक्ते धूम्रवर्णे षोडशच्छदशोभिते ॥ जीवात्मने विशुद्धाख्ये सहस्रं जपमर्पये । हक्षयुक्ते तप्तहेमनिभे द्विदलसंयुते ॥ सहस्रं जपमाज्ञायामर्पये परमात्मने । अशेषमातृकायुक्ते चन्द्राभे शतपत्रके ॥ अकुलाख्ये श्रीगुरवे सहस्रं जपमर्पये । अजपाजपमेवं वै समर्प्य परमेश्वरि ॥ श्वासोच्छ्वासैः षष्टिसंख्यैरेकः प्राणोऽभिधीयते । षट्प्राणैर्घटिका प्रोक्ता षष्टिघट्यो दिनं भवेत् ॥ एकविंशतिसाहस्रं षट्शतं कीर्तितं दिने । हंसमन्त्रः प्राणरूपी दिनरात्रं प्रवर्तते ॥ प्रोक्तसंख्याजपस्तेन प्राणिनामजपं भवेत् । अज्ञानान्मोहितः प्राणी न विजानात्यमुं जपम् ॥ ज्ञात्वा फलं समाप्नोति संकल्पाच्च समर्पणात् । अद्येतत्कालमारभ्य भाविकालावधीश्वरि ॥ श्वासोच्छ्वासात्मकं प्रोक्तसंख्यं संकल्पयेत्ततः । न्यसेदृष्यादिकं तस्य तत्प्रकारं शृणु प्रिये ॥ ऋषिर्हंसो व्यक्तगायत्रीछन्दः प्रकीर्तितम् । देवता परमो हंसो हंसमित्यादि वै न्यसेत् ॥ एकैकं बीजकं शक्तिः कीलकं चोभयं भवेत् । विनियोगस्तु मोक्षार्थं ध्यायेत्तदनु शङ्करि ॥ चिद्विमर्शमयं दिव्यं शिवशक्तियुगात्मकम् । भोक्तृभोग्यस्वरूपं च स्वस्वभावमहं भजे ॥ दक्षाङ्गे स्फटिकाभासं शूलमालालसत्करम् । भस्माक्षचर्मसर्पाद्यैः शोभितं जटिलं शिवम् ॥ वामाङ्गे तप्तहेमाभ पाशचापलसत्करम् । नवरत्नविभूषादिवस्त्रकोटीरशोभितम् ॥ अर्धनारीश्वरं देवमहङ्कारतनुं स्मरेत् । मानसैस्तु ततोऽभ्यर्च्य चैवं प्रतिदिने भवेत् ॥" इति । अत्र दक्षिणामूर्तिसहितायां ध्यानं पक्षिरूपेणोक्तम् । विशेषन्यासा अप्युक्ताः । एतदनुष्ठानप्रयोगस्तु पद्धतौ षष्ठस्कन्धस्यादौ द्रष्टव्यः । ग्रन्थविस्तरभयान्न लिख्यते । पारायणं गणपतिपारायणमिति । नाथसंज्ञं घटिकाख्यं चेति द्वयं प्रातः कर्तव्यमिति शेषः । तदङ्गभूतं पारायणाङ्गभूतं पारायणं चतुर्विधम् ॥ ४६ ॥

तदेवाह—मूलेत्यादि । अत्र सर्वत्र मूलमिति पञ्चदशी । प्रातःसन्ध्योत्तरं मूलर्ष्यादिपूजान्तं कृत्वा । तद्गायत्रीं प्रातःसंध्याङ्गभूतवाग्भवगायत्रीम् । यथाशक्ति प्रजप्य

ज्ञानमुद्रावरकरान् वाग्भवोपास्तितत्परान् ।
नवनाथान् स्मरेन्मूलपङ्कजे वह्निमण्डले ॥ ४९ ॥
पञ्चधा पूज्य देवेशि पारायणमथाचरेत् ।
चतुस्तारं मूलविद्यां विद्यामष्टाङ्गसंज्ञिताम् ॥ ५० ॥
भगमालां तुष्टिमपि अजपां चेति वै शिवे ।
एकत्रिंशद्वर्णमणिः सर्वपारायणे भवेत् ॥ ५१ ॥
भगमालातुष्टिमध्ये तत्तन्मन्त्रान्निवेशयेत् ।
एकैकशो मातृकाणां सबिन्दूनां च योगतः ॥ ५२ ॥
प्रथमाङ्गं ततस्त्वन्ते दीपिनीं मातृकां पठन् ।
सर्वोद्दीपनानन्दनाथ वाग्भव च शक्तिदी ॥ ५३ ॥

---

ध्यायेदिति शेषः । ध्यानमेवाह—पुष्पेति ॥ ४७ ॥

वामाधःकरादूर्ध्वान्तमायुधानि । स्वेच्छया गृहीतं स्थूलं वपुर्यया। वक्ष्यमाणाष्टाङ्ग-वर्णेषु युगं सर्वव्यापकं नित्या सर्वव्याप्या । तेन युगवर्णादिनित्याक्षरान्ताष्टाक्षर-विद्यारूपा । अथवा युगेति कालवाचकत्वात्कालनित्यैव युगनित्या । कालनित्या च नाम-पारायणे वक्ष्यति । घटिकाः पञ्चदशदेवताघटिकाभिमानिन्यः । तद्रूपावरणोपेताम् । परितः स्थितान् प्राञ्जलीन् नवनाथानित्यन्वयः ॥ ४८ ॥

ज्ञानमुद्रा वरं च दक्षवामयोः । वाग्भवस्याद्यबीजस्य कूटस्य वा उपासकान् । मूल-पङ्कजे मूलाधारे । वह्निमण्डलमध्ये स्मरेत् ॥ ४९ ॥

एवं ध्यातां देवतां पञ्चधा संपूज्य । पारायणसामान्यमन्त्रमाह—चतुस्तारमिति । चतुस्तारं ॐ ऐं ह्रीं श्रीं । मूलविद्या पञ्चदशी । अष्टाङ्गविद्या वक्ष्यमाणा ॥ ५० ॥

भगमाला आ । तुष्टिः ई । अजपा हंसः । अजपामित्यादि द्वितीयान्तानुरोधादुच्च-रेदिति क्रिया सम्बन्धनीया । सर्वपारायणे सामान्यविद्या भवेत् ॥ ५१ ॥

सर्वपारायणेषु विशेषविद्यायोगस्थलमाह—भगमालेति । भगमालातुष्टिमध्ये अष्टाविंशत्येकोनत्रिंशद्वर्णयोर्मध्ये । तत्तद्विशेषमन्त्रान् । तदेवाह—एकेति । भगमालातुष्ट्योः आ ई अनयोर्मध्ये मातृकासम्बन्धि एकैकवर्णानां सबिन्दूनां योगतः ॥ ५२ ॥

एवमेकपञ्चाशन्मातृकायुतमन्त्रावर्तनेन प्रथममङ्गपारायणम् । प्रथमाङ्गान्ते आ ई अनयोर्मध्ये । दीपिनीं वक्ष्यमाणाम् । मातृकां त्रिपञ्चाशद्वर्णमयीं विद्याम् ॥ ५३ ॥

पिनी विद्या कला देवि पठेदेवं महेश्वरि ।
पादुकां मातृकां तद्वदमुकानन्दनाथ च ॥ ५४ ॥
रूपिणी पादुका विद्या कला देवीति वै पठेत् ।
अन्ते सर्वत्र देवेशि द्वयमेतद्वरानने ॥ ५५ ॥
द्विशश्चान्ते क्षकारश्च द्वितीयाङ्गमुदाहृतम् ।
त्रयं त्रयं तृतीयाङ्गमष्टवर्गैश्चतुर्थकम् ॥ ५६ ॥
दीपिनीपादुकाभ्यां च प्रत्येकं वै समापनम् ।
आद्यं वाप्यसमर्थेन कुर्यादन्त्यमथापि वा ॥ ५७ ॥
दीपिनीमधुना वक्ष्ये वाग्भवं वदयुग्मकम् ।
वाग्वादिन्यथ वाक्कामौ क्लिन्ने क्लेदिनि क्लेदय ॥ ५८ ॥

---

च इति त्यक्त्वा सर्वोद्दीपेत्यादिकलादेवीत्यन्तं स्वरूपम् । पुनर्द्वितीयवारं पादुकां प्रोक्ताम् । अमुकेति गुरुनाम ॥ ५४ ॥

च इति त्यक्त्वा अमुकानन्देत्यादि देवीत्यन्तं स्वरूपम् । सर्वत्र सर्वपारायणेषु एतद्द्वयं दीपिनीयोगेन पादुकायोगेन विद्याद्वयम् ॥ यथा ४ । मू अष्टाङ्ग । ८ । आ अं ई हंसः । ४ मू. ८ आ आं ई हं सः २ । एवं आ ई अनयोर्मध्ये अं आं इत्यादि क्षं इत्यन्तैकपञ्चाशद्वर्णयोगेनैकपञ्चाशद्विद्यात्मकप्रथमाङ्गपारायणान्ते ४ मू॰ ८ आ दीपिनीविद्या ह्सौः अं क्षं ह्सौः सर्वोद्दीपनानन्दनाथवाग्भवशक्तिदीपिनी विद्याकलादेवी ई हं सः ४—मू॰ ८ आ पादुकाविद्या ह्सौः अं॰ क्षं ह्सौः अमुकानन्दनाथरूपिणी पादुकाविद्याकलादेवी ई हंसः इति त्रिपञ्चाशद्विद्यात्मकं प्रथमाङ्ग ॥ ५५ ॥

द्वितीयाङ्गमाह—द्विश इति । अं आं इत्याद्येकैकवर्णस्थाने आ. अं. आं. ई. हंसः । इत्यादि वर्णद्वययोगः । षड्विंशतितमविद्यायां परिशिष्टस्यैकस्य क्षकारस्यैव योगः । इति द्वितीयाङ्गम् । एवं त्रित्रिवर्णयोगेन सप्तदशविद्यात्मकं तृतीयाङ्गम् । एवमकचटतपयशेत्यष्टभिर्वर्गैश्चतुर्थाङ्गम् ॥ ५६ ॥

पूर्ववत् । दीपिनीपादुकायुक्तविद्याभ्यां प्रत्यङ्गसमाप्तिः । समर्थेनाङ्गचतुष्टयं कार्यम् । असमर्थेनाद्यमन्त्यं वाङ्गं कर्तव्यमित्याह—आद्यमिति ॥ ५७ ॥

इदं च पारायणमविशेषात् तदङ्गभूतमित्यत्र तच्छब्देन नाथपारायणादिसन्ध्यात्रयाङ्गपरायणानां परामर्शात् सर्वपारायणानामप्यङ्गम् । प्रातःसंध्याङ्गपारायणस्य द्वैविध्येऽपि तयोः संकल्पैक्येन तन्त्रेणानुष्ठानात् सकृदेवाङ्गपरायणं कर्तव्यम् । अत एव

महाक्षोभं कुरुद्वन्द्वं कामशक्ति ततः परम् ।
मोक्षं कुरुद्वयं देवि प्रासादश्च पराद्यकः ॥ ५९ ॥

सप्तत्रिंशद्वर्णमयो दीपिनीमनुरीरितः ।
प्रासादे सहभावेन पराप्रासाद ईरितः ॥ ६० ॥

नाथपारायणं वक्ष्ये शृणु देवि समाहिता ।
प्रातराधारमध्यस्थां नवनाथावृतां पराम् ॥ ६१ ॥

कालनित्याक्षरोपेतां स्मरेत्त्रिपुरभैरवीम् ।
ध्यात्वैवं मानसैः पूज्य पारायणमथाचरेत् ॥ ६२ ॥

अष्टावष्टौ सप्त पञ्च नववर्गाः क्रमाच्छिवे ।
नवचक्रेश्वरीमन्त्रा नवचक्राणि च क्रमात् ॥ ६३ ॥

नवनाथाश्च देवेशि नवयोगिन्य एव च ।
नवचक्रेश्वरीदेव्यः क्रमाच्छृणु वदामि ते ॥ ६४ ॥

---

नामपारायणादौ पर्यायद्वयादिपक्षेषु सकृदेवाङ्गपारायणमुक्तं रुद्रयामले—"अङ्गं सकृदनुष्ठेयं सर्वपक्षेषु शङ्करि" इति । केचित्तु प्रातस्तदङ्गमिति योजयित्वा प्रातःपाराणयाङ्गमेवेति प्राहुः । दीपिनीं वक्तुमाह—दीपिनीमिति । वाग्भवं ऐं । वदेति द्विः । वाग्वादिनि स्वरूपम् । वाक्कामौ ऐं क्लीं क्लिन्नेत्यादि क्षोभमित्यन्तं स्वरूपम् ॥ ५८ ॥

कुरु इति द्विः कामशक्ती । क्लीं सौः मोक्षं स्वरूपम् । प्रासादः । प्रासादपरा ह्सौः । पराद्यकः पराप्रासादः स्हौः ॥ ५९ ॥

पराद्यक इत्युक्तं विवृणोति—प्रासादे इति । प्रासादे षष्ठोल्लासोक्ते प्रासादपराबीजे सहभावेन हसयोर्व्यत्यासेन ॥ ६० ॥

नाथपारायणं कथयन्नादौ तद्ध्यानमाह—प्रातरिति ॥ ६१ ॥

कालनित्याक्षरं नामपारायणे वक्ष्यमाणम् ॥ ६२ ॥

तत्र पारायणोपयुक्तं वर्गभेदमाह—अष्टाविति । वर्गद्वयम् अष्टाक्षररूपम् । ततो वर्गसप्तकं पञ्चाक्षरात्मकम् । अलृकचटतपयशेति वर्गाद्याः । चक्रेश्वर्यादीनि वक्ष्यमाणानि ॥ ६३ ॥

चक्रेश्वरीमन्त्रादिकं क्रमाच्छृणु ॥ ६४ ॥

सौभाग्यविद्या तत्राद्या वह्निवायूष्मपूर्वकम् ।
वाग्भवं सान्तनिहितकलं वै कामबीजकम् ॥ ६५ ॥
वह्निस्पर्शान्तरगतसकारं शक्तिबीजकम् ।
द्वितीयेयमथो मायारमाशक्तिस्तृतीयका ॥६६॥
मायाकामौ ककुद्रूपज्योत्स्ना बिन्दुश्चतुर्थिका ।
हसाद्यवाक्कामबीजे च हाद्या शक्तिस्तु पञ्चमी ॥६७॥
हाथवागादिका षष्ठी मायाकामौ च शक्तिकम् ।
सप्तमी त्वष्टमी बाला अंआंशक्तिस्तु तत्परा ॥६८॥
इति चक्रेश्वरीमन्त्राः शृणु चक्राण्यथो शिवे ।
सर्वानन्दमयं त्वाद्यं सर्वसिद्धिप्रदं ततः ॥६९॥
सर्वरोगहरं सर्वरक्षाकरमथेश्वरि ।
सर्वार्थसाधकं देवि सर्वसौभाग्यदायकम् ॥७०॥
सर्वसंक्षोभणं देवि सर्वाशापरिपूरकम् ।
त्रैलोक्यमोहनं देवि नवचक्रं समीरितम् ॥७१॥

---

चक्रेश्वरीमन्त्रानाह--सौभाग्येत्यादि । सौभाग्यविद्या पञ्चदशी । वह्नि ह । वायु स । ऊष्म र । एतत्पूर्वकं वाग्भवं ह्स्त्रैं । पुनरेतत्त्रयमध्ये सकारान्ते निहितककारलकारात्मकं कामबीजम् । ह्स्क्लीं ॥ ६५ ॥

वह्नि ह । स्पर्श र । एतयोर्मध्यगतसकारं शक्तिबीजम् । ह्स्त्रौः । इयं द्वितीया चक्रेश्वरी । माया ह्रीं । रमा श्रीं । शक्तिः सौः ॥ ६६ ॥

माया ह्रीं । कामः क्लीं । ककुत् व । रूप ल । ज्योत्स्ना ए । ब्लें । हसाद्यवाक्कामबीजे ह्सैं ह्स्क्लीं । हाद्या शक्तिः ह्सौः ॥ ६७ ॥

हकाराद्यवागादिकं वाक्कामशक्तयः । हैं ह्स्क्लीं । ह्सौः । माया ह्रीं । कामः क्लीं । शक्तिः सौः । अष्टमी बाला व । अं आं स्वरूपम् । शक्तिः सौः । तत्परा नवमी ॥ ६८ ॥

चक्राण्येवाह--सर्वेत्यादि ॥ ६९-७० ॥

सर्वानन्दमयादि त्रैलोक्यमोहनान्तं नवचक्रम् ॥ ७१ ॥

प्रकाशोऽथ विमर्शश्चाप्यानन्दो ज्ञान एव च ।
सत्यः पूर्णः स्वभावश्च प्रतिभः सुभगस्तथा ।।७२।।
एते वै नव नाथाः स्युर्योगिनीः कथयामि ते ।
परापररहस्या वै तथैवातिरहस्यका ।।७३।।
रहस्या च निगर्भा च कुलोत्तीर्णा ततः परम् ।
सम्प्रदाया गुप्ततरा गुप्ता च प्रकटा तथा ।।७४।।
एतास्तु नवयोगिन्यः कथिताः परमेश्वरि ।
शृणु चक्रेश्वरीर्देवि महात्रिपुरसुन्दरी ।।७५।।
त्रिपुराम्बा च त्रिपुरासिद्धा त्रिपुरमालिनी ।
त्रिपुराश्रीश्च त्रिपुरवासिनी त्रिपुरोत्तरा ।।७६।।
सुन्दरी त्रिपुरापूर्वा चेशी च त्रिपुरा तथा ।
एवं नवविधास्तत्र तत्क्रमं शृणु साम्प्रतम् ।।७७।।
भगमालातुष्टिमध्ये प्रजपेच्च यथाक्रमात् ।
अकारादिक्षकारान्तं विद्या सौभाग्यसंज्ञिता ।।७८।।
सर्वानन्दमयेत्युक्त्वा प्रकाशात्मक इत्यपि ।
परापररहस्योक्त्वा योगिन्यानन्दनाथ च ॥ ७९ ॥
पराशक्तिश्रीमहोक्त्वा त्रिपुरेति च सुन्दरी ।
विद्या कला च देवीति सर्वत्रैवं समुल्लिखेत् ॥ ८० ॥

---

नाथानाह—प्रकाशेत्यादि ॥ ७२ ॥

योगिनीराह—परेत्यादि । अतिरहस्यकाऽतिरहस्या ॥ ७३–७४ ॥

चक्रेश्वरीराह—महात्रिपुरेति ॥ ७५ ॥

त्रिपुरोत्तरा सुन्दरी त्रिपुरसुन्दरी ॥ ७६ ॥

त्रिपुरा पूर्वा चेशी त्रिपुरेशी । तत्क्रमम् । एतेषां पारायणे योगक्रमम् ॥ ७७ ॥

भगमालातुष्ट्योः आई अनयोर्मध्ये । यथाक्रमात् वर्गचक्रेश्वरीमन्त्रादिक्रमात् ॥ ७८ ॥

इत्युक्त्वा इत्यपि उक्त्वा च ॥ ७९ ॥

उक्त्वा इति च च । इति त्वक्त्वा सर्वानन्देत्यादि कलादेवीत्यन्तं स्वरूपम् । सर्वत्र अन्यमन्त्रेष्वपि । एवं वर्गचक्रेश्वरीमन्त्रचक्रनाथयोगिनीचक्रेश्वरीनामक्रमेण ।

दीपिनीपादुकाभ्यां च पूर्ववत्तु समापयेत् ।
घटिकाख्यमथो वक्ष्ये शृणु देवि समाहिता ॥ ८१ ॥

अकारादिक्षकारान्तमनन्तारहितं प्रिये ।
पुनश्चाकारमारभ्य दशकं परमेश्वरि ॥ ८२ ॥

घटिकाः षष्टिसंख्याका एवं प्रोक्ता वरानने ।
अकारं तु समुच्चार्य प्रथमाद् घटिकेति च ॥८३॥

आनन्दनाथ रश्मीति शक्ति श्री च महा वदेत् ।
त्रिपुरासुन्दरी विद्या कलादेवीति कीर्तयेत् ॥८४॥

द्वितीयाद् घटिकाद्येवं षष्ठ्यन्तं प्रजपेच्छिवे ।
दीपिनीपादुकाभ्यां च पूर्ववत्तु समापयेत् ॥८५॥

अथवा नाथघटिकाविद्ययोर्जपमाचरेत् ।
अन्ते तु नवधा षष्टिवारं मूलं जपेच्छिवे ॥८६॥

---

यथा ४ । मू । ८ । आ अं ॠं मू० सर्वानन्दमयप्रकाशात्मकपरापररहस्ययोगिन्यानन्दनाथपराशक्तिश्रीमहात्रिपुरसुन्दरी विद्याकलादेवी ई हंसः । एवमन्यदष्टकं क्रमेण ज्ञेयम् ॥ ८० ॥

पूर्ववदेव दीपिनीपादुकायोगेन समाप्तिः । घटिकापारायणं वक्तुमाह—घटिकेति ॥ ८१ ॥

अनन्ता अः। तद्राहित्ये अकारादिक्षकारान्तं पञ्चाशत् । पुनरकारादिलृकारान्तदशकम् ॥ ८२ ॥

एवं षष्टिघटिकाः । आत् । इति च ॥ ८३ ॥

इति च वदेत् । आत् इति त्यक्त्वा प्रथमेत्यादिकलादेवीत्यन्तं स्वरूपम् ॥ ८४ ॥

एवम् उक्तप्रकारेण अं प्रथमघटिकापदस्थाने आं द्वितीयघटिकेत्याद्युक्त्वा षष्टिघटिकान्तं प्रजपेत् । यथा ४ । मू ८ । आं अं प्रथमघटिकानन्दनाथरश्मिशक्तिश्रीमहात्रिपुरसुन्दरीविद्याकलादेवी ई हंसः इत्यादि । दीपिनीपादुकाभ्यां पूर्ववत् समाप्तिः ॥ ८५ ॥

एवं पारायणकरणाशक्तस्य पक्षान्तरमाह—अथवेति । विद्याजपान्ते नाथविद्योत्तरं नवधा । घटिकाविद्योत्तरं षष्टिधा ॥ ८६ ॥

चतुस्तारं मूलविद्यां नाथवर्गं तथाक्षरम् ।
नाथात्मकाकाशनामानन्दनाथेति चालिखेत् ॥८७॥
श्रीपादुकां पूजयामि हृदयं चेति वै क्रमः ।
अग्निवायुधरोपस्थरूपतत्परस्पर्शकाः ॥८८॥
शब्दो रतिश्चाक्षराणि बिन्दुयुक्तानि वै शिवे ।
उन्मनी समना चैव व्यापकः शक्तिरेव च ॥८९॥
ध्वनिश्च ध्वनिमात्रश्चानाहतेन्दु च शङ्करि ।
बिन्दुश्चाकाशशब्दान्ता नवाकाशाः प्रकीर्तिताः ॥९०॥
हंप्रकाशात्मकोन्मन्याकाशानन्दादि कीर्तयेत् ।
नाथविद्यां त्रिधा जप्त्वा घटिकाख्यां तथा जपेत् ॥९१॥
चतुस्तारं मूलविद्यां घटिकाषष्टिवर्णकान् ।
अकारादिलृकारान्ता घटिकाशक्तिरुक्तवत् ॥९२॥

---

तामेव विद्यामाह—चतुस्तारमिति । नाथवर्गम् अलृकेत्याद्युक्तम् । अक्षरं वक्ष्यमाणम् । नाथात्मकेत्यादि मूले एव स्पष्टीभविष्यति ॥ ८७ ॥

अक्षराण्याह—अग्नीत्यादि । अग्नि ह । वायु स । धरा क्षा । उपस्थ मा । रूप ल । तत्पर व । स्पर्श र ॥ ८८ ॥

शब्दः य । रतिः ऊ । आकाशानाह—उन्मनीति ॥ ८९ ॥

अनाहतः । इन्दुः । आकाशशब्दान्ताः । उन्मन्याकाशेत्यादि ॥ ९० ॥

विद्यास्वरूपमाह—हमित्यादि । चतुस्तारं मूलविद्यां नाथवर्गं इत्यन्तं प्राक् स्पष्टमुक्तम् । तदग्रे नाथाक्षरादिकं हमित्यादि नन्देत्यन्तम् । यथा । ४ । मू० अं० ऋं हं प्रकाशात्मकोन्मन्याकाशानन्दनाथश्रीपादुकां पूजयामि नमः । एवमन्यत्र द्वितीयवर्गद्वितीयाक्षरादियोगः । अत्र संध्याङ्गजपेऽपि ऋष्यादिन्यासादितद्गायत्रीजपान्तः कर्तव्यः । पुष्पबाणेक्ष्वित्यादि ध्यानं तु नास्ति, युगनित्याक्षरोपेतामित्यादिना तस्याष्टाङ्गविद्यापरत्वात् । प्रकृते सन्ध्याङ्गजपे त्वष्टाङ्गविद्याभावात् तद्ध्यानं नास्तीति वदन्ति । एवं नाथविद्यां त्रिधा जप्त्वा मूलं नवधा प्रजप्य घटिकाविद्यां जपेत् ॥ ९१ ॥

तामेवाह—चतुस्तारमित्यादि । घटिकाषष्टिवर्णा विसर्गरहिता आदिक्षान्ताः पुनरादिलृकारान्ताः । अकारेत्यादि शक्तिरित्यन्तं स्वरूपमुक्तवत् श्रीपादुकामिति ॥ ९२ ॥

पूजयामि नमश्चैवं जपेत् पञ्चदिनेषु वै ।
नाथविद्यां जपेद्देवि दिनेषु नवसु क्रमात् ॥९३॥
अथ मध्याह्नसन्ध्यायां सूर्यतर्पणतः परम् ।
अनाहते स्मरेत् कामबीजं रक्तनिभं ततः ॥९४॥
आवाहयेत् पूर्ववत्तु गगने सूर्यमण्डले ।
ध्यायेत्तत्र समुद्भूतां भक्त्या कामेश्वरीं शिवे ॥९५॥
रक्तांसुरक्ताम्बरभूषणाढ्यां
पाशाङ्कुशाभीतिवरान् दधानाम् ।
शुचिस्मितामुद्भटयौवनाढ्यां
कामेश्वरीं संस्मरत त्रिनेत्राम् ॥९६॥
पञ्चधा पूज्य कामेशगायत्र्याघ्यं त्रिधा चरेत् ।
तद्बीजेन त्रिधा तर्प्य जपेत् पूर्ववदत्र तु ॥९७॥
द्वितीयबीजं त्रिपुरादेवी विद्महे एव च ।
कामेश्वरी धीमहि च तन्नः क्लिन्ना प्रचोदयात् ॥९८॥

---

एवमुक्तरीत्या । यथा । ४ । मू० अं क्षं अं० लृं अकारादिलृकारान्तां घटिकाशक्तिश्रीपादुकां पूजयामि नमः । एवं घटिकाविद्यात्रिधाजपोत्तरं मूलं षष्टिवारं जपेत् । घटिकाविद्यायाः पञ्चभिर्दिनैः समाप्तिः, नवभिर्नाथविद्यासमाप्तिः । एतच्चाष्टाङ्गनिरूपणे स्पष्टीभविष्यति ॥ ९३ ॥

क्रमप्राप्तां मध्याह्नसन्ध्यां वक्तुमाह—अथेति । प्रातःसन्ध्यादिकरणानन्तरमित्यर्थः । तत्र सूर्यतर्पणान्तं प्रातःसन्ध्यावत् । ततः परम् अनाहते हृदयस्थिते । कामबीजं क्लीं । ततः ध्यानानन्तरम् । आवाहयेदित्यन्वयः ॥ ९४ ॥

पूर्ववद् ब्रह्ममार्गत इत्यादिरीत्या । पूर्ववद्ध्याते सूर्यमण्डले । समुद्भूताम् आविर्भूताम् ॥ ९५ ॥

ध्यानमाह—रक्तामित्यादि । रक्तां रक्तवर्णाम् । अम्बरं वस्त्रम् । वामोर्ध्वाद्यधःपर्यन्तमायुधानि । शुचि विशदं स्मितं यस्याः । उद्भटयौवनाढ्या पूर्णयौवनयुता ॥ ९६ ॥

गायत्री वक्ष्यमाणा । तद्बीजेन कामबीजेन । पूर्ववत् मूलगायत्र्यादि । तत्र वाग्गायत्रीवाग्बीजयोः स्थाने योग्यत्वात् कामगायत्रीकामबीजयोर्जपः ॥ ९७ ॥

गायत्रीमाह—द्वितीयेति । द्वितीयबीजं क्लीं । एव च च इति त्यक्त्वा । त्रिपुरेत्यादि चोदयादित्यन्तं स्वरूपम् ॥ ९८ ॥

कामराजस्य गायत्री चतुर्विंशतिवर्णका।
अथैतदङ्गभूतं वै तत्त्वपारायणं चरेत् ॥९९॥
मूलऋष्यादिपूजान्ते तद्गायत्रीं प्रजप्य च।
ध्यात्वा च पञ्चधा पूज्य पारायणमथाचरेत् ॥१००॥
कामराजात्मिकां देवीमालक्तकरसारुणाम्।
प्रसूनबाणपुण्ड्रेक्षुचापपाशाङ्कुशान्विताम् ॥१०१॥
परितश्चात्ममुख्याभिः षट्त्रिंशत्तत्त्वशक्तिभिः।
रक्तमाल्याम्बरालेपभूषाभिः परिवारिताम् ॥१०२॥
युगनित्याक्षरमयीं घटिकावरणां स्मरेत्।
पुष्पबाणेक्षुकोदण्डधराः शोणवपुर्धराः ॥१०३॥
हृत्पङ्कजे च ताः कामराजोपास्तिपरायणाः।
भगमालातुष्टिमध्ये प्रजपेच्च यथाक्रमात् ॥१०४॥
तत्त्ववर्णं तथाम्नायविद्यातत्त्वाभिधानकम्।
तत्त्वशक्त्यभिधानं चाम्नायविद्याभिधानकम् ॥१०५॥
संयोज्य प्रजपेद् देवि तत्त्वनामनिरूपितम्।
तत्त्वाक्षराम्नायविद्याशिवतत्त्वेश्वरेति च ॥१०६॥

---

एतदङ्गभूतं मध्याह्नसन्ध्याङ्गभूतम् ॥ ९९ ॥

तद्गायत्रीं कामगायत्रीम् ॥ १०० ॥

ध्यानमाह—कामेति। कामराजकूटात्मिकाम्। आलक्तकरसो लाक्षारसः, तद्वदरुणाम्। दक्षाधःकरादूर्ध्वान्तमायुधानि ॥ १०१ ॥

आत्मा अकारात्मा मुख्या यासाम्। एवंरूपतत्त्वशक्तिभिः परितः सर्वतः परिवारिताम् ॥ १०२ ॥

दक्षवामयोरायुधे। शोणवपुर्धराः रक्तशरीराः ॥ १०३ ॥

तास्तत्त्वशक्तयः। पारायणमाह—भगमालेति ॥ १०४ ॥

तत्त्ववर्णम् अकारादि। आम्नायविद्या कामेश्वर्यादि। तत्त्वाभिधानम्। शिवेत्यादि तत्त्वनाम। तत्त्वशक्त्यभिधानं ब्राह्म्यात्यादि। आम्नायाभिधानं कामेश्वरीत्यादि ॥१०५॥

तत्त्वनामैकादशे निरूपितम्। इति च ॥ १०६ ॥

आनन्दनाथ ब्राह्मी च शक्तिः कामेश्वरी ततः ।
विद्या कला च देवीति सर्वत्रैवं समीरयेत् ॥१०७॥
आम्नायविद्या देवेशि वक्ष्ये शृणु यथाक्रमम् ।
बाला तारश्च हृदयं कामेश्वरि ततः परम् ॥१०८॥
इच्छा कामफलप्रदे सर्वसत्त्ववशंकरि ।
सर्वजगत्क्षोभण वै करि वर्मत्रयं शराः ॥१०९॥
विलोमबाला तर्काब्धिवर्णः कामेश्वरीमनुः ।
वाङ्माया सर्वकार्यार्थं ततः साधिनि वै ततः ॥११०॥
वज्रेश्वरि वज्रपदे वज्रपञ्जरमध्यगे ।
मायाक्लिन्ने वाग्भवं चाङ्कुशो नित्यमदद्रवे ॥१११॥
वर्मशङ्कुस्तथा माया वज्रनित्या च वै नमः ।
अश्वाब्धिवर्णो देवेशि वज्रेश्वर्या मनुः स्मृतः ॥११२॥
पाणिस्पर्शौ तथा ज्योत्स्ना शङ्कुबीजं सबिन्दुकम् ।
वाग्भवं भगशब्दान्ते भुगे भगिनि वै भगात् ॥११३॥

---

च । ततः । च । इति त्यक्त्वा । शिवतत्त्वेत्यादि देवीत्यन्तं स्वरूपम् । एवं तत्त्वेश्वरानन्दनाथशक्तीत्यादि सर्वत्र शिवादिब्राह्म्यादितत्त्वशक्त्योर्नाम्नामन्ते ॥ १०७ ॥

तत्रादावाम्नायविद्यां वक्तुमाह--आम्नायेत्यादि । बाला ऐं क्लीं सौः । तारः ॐ । हृदयं नमः । ततः परम् ॥ १०८ ॥

वै इति त्यक्त्वा कामेश्वरीत्यादि करि इत्यन्तं स्वरूपम् । वर्म हुं । इति त्रयं त्रिधा शिरः द्रां द्रीं क्लीं ब्लूं सः ॥ १०९ ॥

विलोमबाला सौः क्लीं ऐं कामेश्वरि इच्छेत्यसन्धिः । तर्कं षट् । अब्धि चत्वारि । तेन षट्चत्वारिंशद्वर्णः कामेश्वरीमन्त्रः । वाक् ऐं । माया ह्रीं । ततः । वै ततः ॥११०॥

इति त्यक्त्वा सर्वेत्यादि मध्यगे इत्यन्तं स्वरूपम् । माया ह्रीं । क्लिन्ने स्वरूपम् । वाग्भवं ऐं । अंकुशः क्रों । नित्यमदद्रवे स्वरूपम् ॥ १११ ॥

वर्म हुं । शंकुः फ्रें । माया ह्रीं । वज्रनित्यायै नमः स्वरूपम् । अश्वाब्धि सप्तचत्वारिंशत् । इति वज्रेश्वरीमनुः ॥ ११२ ॥

शङ्कुबीजमाह--पाणीति । पाणि फ । स्पर्श र । ज्योत्स्ना ए । भगमालिनीमाह—वागिति । वाग्भवं ऐं । भगाभुगे भगिनि इति स्वरूपम् । भगात् भगशब्दात् उदरि

उदयाङ्गे च माले चावहे गुह्ये च योनि च ।
निपातिनि क्रमाद्देवि सर्वाद्यात् तु वशङ्करि ॥११४॥
रूपे नित्या तु क्लिन्ने वै स्वरूपे च ततः परम् ।
सर्वपश्चाद् भगानीति मे ह्यानय वरात्तुदे ॥११५॥
रेते सुरेते च भगक्लिन्ने क्लिन्नद्रवे ततः ।
क्लेदय द्रावयात्सर्वसत्त्वानथ भगेश्वरि ॥११६॥
अमोघे भगविच्चे च क्षुभ क्षोभय सर्व वै ।
सत्त्वान् भगेश्वरि प्रोच्य वाग्भवं तुर्यबाणतः ॥११७॥
रागपायूपस्थवह्निवह्नयस्तु पताकगाः ।
सेन्दवः शिवयुग्राङ्गः क्लिन्ने सर्वाणि वै ततः ॥११८॥
भगानि मे वशं देवि आनयात् कामपञ्चमः ।
वह्निस्पर्शभयाद्रूपज्योत्स्ना बिन्दुस्तथेश्वरि ॥११९॥
माया च भगमालाया मन्त्रो बाणाब्धिभूमितः ।
सबिन्दुविजयातुष्ट्यौ ज्वालासर्गयुगात्ततः ॥१२०॥

---

अङ्गे माले आवहे गुह्ये योनिनिपातिनि । इति सप्तानां योगः । तेन भगोदरि भगाङ्गे इत्यादि ॥ ११३ ॥

सर्वाद्यात् भगाद्वशङ्करि सर्वभगवशङ्करि ॥ ११४ ॥

पुनः भगशब्दाद् रूपे नित्यक्लिन्ने स्वरूपे इति द्वयं तेन भगरूपे नित्यक्लिन्ने भगस्वरूपे इति । पश्चात् । इति । आत्तु ॥ ११५ ॥

च । ततः आत् अथ ॥ ११६ ॥

च वै इति त्यक्त्वा सर्वेत्यादि भगेश्वरीत्यन्तं स्वरूपम् । तुर्यबाणः ब्लूं । एतस्मात् परत्र जमित्यादि पञ्चबीजानि ॥ ११७ ॥

राग ज । पायु भ । उपस्थ म । वह्नि ह । वाय्वादिचत्वारः पताके एकारे गताः । सेन्दवः भें में हें हें इति । नो जकारः शिवयुग् अकारयुतः । तेन जं वै ततः ॥ ११८ ॥

आद् देवि इति त्यक्त्वा सर्वेत्यादि मानयेत्यन्तं स्वरूपम् । काम पञ्चमः स्त्रीं । वह्नि ह । स्पर्श र । भय ब । रूप ल । ज्योत्स्ना ए । ह्र्ब्लें ॥ ११९ ॥

माया ह्रीं । बाण । अब्धि । भू । १४५ । पञ्चचत्वारिंशदुत्तरशताक्षरः । बिन्दुयुता विजया ऐं । तुष्टि ईं । ज्वाला सर्गयुता औः ॥ १२० ॥

त्र्यक्षरी शुद्धविद्येयं बाला प्रोक्ता पुरा शिवे ।
वह्निवायुसृष्टिरूपस्पर्शाहङ्कारकाः शिवे ॥१२१॥
शुद्धविद्या त्रिबीजस्था द्वादशार्धा भवेदियम् ।
चतुस्तारं ततो बाला तारो हृदयमेव च ॥१२२॥
भगाद्वतीति सप्तार्णा राजमातं च गीश्वरि ।
सर्वाऽष्टकान्ते जनमनोहरीति च मुखाच्चरम् ॥१२३॥
जिनिकामात्तथा माया लक्ष्मीस्तद्वत्तु राजतः ।
तथा स्त्रीपुरुषादेवं दुष्टपूर्वंमृगादथ ॥१२४॥
सत्त्वाल्लोकाद् वशंकरि जनं मे वशमानय ।
शिरो विलोमबाला च त्रितारी च लिखेच्छिवे ॥१२५॥
मनुस्तु राजमातङ्ग्या रूपाम्बरधरार्णकः ।
ङे सप्तार्णो महापश्चाच्छुकाय त्रिश्रुतो वना ॥१२६॥

---

बाला चतुर्थे प्रोक्ता । वह्नि ह । वायु स । सृष्टि क । रूप ल । स्पर्श र । अहंकारः उ ; ॥ १२१ ॥

एतद्वर्णषट्कं ऐं ईं औः इति शुद्धविद्यावर्णेषु त्रिधा स्थितम् ह्स्क्लैं इत्यादि । इयमपि त्र्यक्षरी । चतुस्तारो बाला च स्पष्टाः । तारः ॐ । हृदयं नमः ॥१२२ ॥

भगशब्दाद्वति भगवति । इति सप्तार्णा ॐ नमो भगवतीति । एतस्याग्रे बहुश उपयोगात् सप्तार्णेति संज्ञा कृता । राजमातङ्गीश्वरि स्वरूपम् । सर्वेत्यष्टधा संस्थाप्य तेषामन्ते । जनमनोहरि मुखरञ्जिनि ॥ १२३ ॥

काममायालक्ष्मीबीजानि तद्वत् सर्वान्ते । राजतः स्त्रीपुरुषदुष्टमृगा इति त्रयाणामन्ते वशङ्करि ॥ १२४ ॥

एवं सत्त्वलोक इत्यनयोरन्तेऽपि वशङ्करि पुनः जनं मे वशमानय शिरः स्वाहा वलोमबाला त्रितारी सौः क्लीं ऐं श्रीं ह्रीं ऐं ॥ १२५ ॥

रूपाम्बरधरा । १०१ । एकोत्तरशतम् । ङे चतुर्थ्यन्तः सप्तार्णः ॐ नमो भगवते इति पश्चात् । तः ॥ १२६ ॥

लङ्काराय राजमदमर्दनाय ततो वदेत् ।
शीघ्रं राजा च नं मे वशमानय शिरस्तथा ॥१२७॥
मनुः शुकश्यामलायाश्चन्द्रवेदाक्षरः स्मृतः ।
सप्तार्णांशांशारिके च सकलान्ते कला तथा ॥१२८॥
कोविदे मम देवीं च बोधयेति द्विधा शिरः ।
शारिकाश्यामलामन्त्रश्चन्द्ररामाक्षरः स्मृतः ॥१२९॥
सप्तार्णा वां च वीणायै मम संगीत शब्द तः ।
विद्यां प्रयच्छ तत्पश्चाच्छिरः स्यात् परमेश्वरि ॥१३०॥
संगीतश्यामलामन्त्रो रामपक्षार्णकः स्मृतः ।
सप्तार्णां वें वेणवे च साहित्यात् पूर्ववत्परम् ॥१३१॥
साहित्यश्यामलामन्त्रः पूर्ववत् परमेश्वरि ।
हसन्ति हसितालापे मातङ्गि परिचारिके ॥१३२॥
भयविघ्नापदां नाशं कुरुयुग्मं त्रिलाङ्गली ।
वर्मास्त्रं च शिरश्चान्ते तारो मायामुखे भवेत् ॥१३३॥

---

ततो वदेत् इति त्यक्त्वा महेत्यादि मानयेत्यन्तं स्वरूपम् । शिरः स्वाहा ॥ १२७॥

चन्द्रवेद ४१ एकचत्वारिंशत् । सप्तार्णा ॐ नमो भगवति च अन्ते । तथा ॥ १२८ ॥

इति त्यक्त्वा शां इत्यादि देवीम् इत्यन्तं स्वरूपम् । बोधयेति द्विवारम् । शिरः स्वाहा । चन्द्रराम ३१ एकत्रिंशत् ॥ १२६ ॥

सप्तार्णा उक्ता । च शब्दतः इति त्यक्त्वा वी इत्यादि प्रयच्छेत्यन्तं स्वरूपम् । शिरः स्वाहा ॥ १३० ॥

रामपक्ष २३ त्रयोविंशतिः । सप्तार्णोक्ता वें वेणवे स्वरूपम् । संगीतेति स्थाने साहित्येति । परं शेषं पूर्ववत् । मम विद्यां प्रयच्छ स्वाहा इति योजयेत् ॥ १३१ ॥

पूर्ववत् रामपक्षार्णकः ॥ १३२ ॥

हसन्ति इत्यादिना शं इत्यन्तं स्वरूपम् । कुरु इति द्विः । त्रिधा लाङ्गली ढः । वर्म हूं । अस्त्रं फट् । शिरः स्वाहा । तारो मायेति बीजद्वयमादौ ॥ १३३ ॥

हसन्तीश्यामलामन्त्रो मुनिरामाक्षरो मतः ।
मन्त्रो लघुश्यामलायाः पूर्वमेव निरूपितः ॥१३४॥
सौभाग्यविद्या तत्पश्चात् पुरा प्रोक्तैव सानघे ।
तारोऽग्निरूपस्पर्शास्तु तुष्टिबिन्दुयुताः शिवे ॥१३५॥
बगलामुखि सर्वात्तु दुष्टात्तु प्रदु वै ततः ।
ष्टानां वाचं मुखं देवि पदं स्तम्भय वै ततः ॥१३६॥
जिह्वां कीलय बुद्धिं च विनाशय द्वितीयकम् ।
तारः शिरोऽयं बगलामन्त्रो नन्दाग्निवर्णकः ॥१३७॥
तारवाक्चन्द्रशक्तिश्च कामः सप्ताक्षरी ततः ।
वार्तालि युग्मं वाराहि द्विर्वाराहमुखि द्वयम् ॥१३८॥
वाक्चन्द्रो वाङ्मनः पञ्च तदादौ तु क्रमाल्लिखेत् ।
अन्धे अन्धिन्यै च रुन्धे रुन्धिन्यै तद्वदेव हि ॥१३९॥
जम्भे जम्भिन्यै च स्तम्भे स्तम्भिन्यै पुनरेव तु ।
मोहे मोहिन्यै द्वितीयात्रयं सर्वात्तु दुष्टतः ॥१४०॥
प्रदुष्टानां च सर्वेषां वाक्चित्ताच्चक्षुरेव च ।
मुखाद् गतिमतिक्रोधजिह्वास्तम्भं कुरुद्वयम् ॥१४१॥

---

मुनिराम ३७ सप्तत्रिंशत् । पूर्वं दशमोल्लासे ॥ १३४ ॥

तत्पश्चात् लघुश्यामलानन्तरम् । पुरा एकादशे । अग्नि ह । रूप ल । स्पर्श र । तुष्टि ई । ल्ह्रीं ॥ १३५ ॥

आत्तु । आत्तु । वै ततः । देवि । वै ततः ॥ १३६ ॥

च इति त्यक्त्वा बगलेत्यादि नाशयेत्यन्तं स्वरूपम् । द्वितीयकं ह्लीं । तार शिर इति स्पष्टम् । नन्दाग्नि ३९ ऊनचत्वारिंशत् ॥ १३७ ॥

वार्तालि । वाराहि । वाराहमुखि । इति त्रयं द्विधा ॥ १३८ ॥

नम इति पञ्चधा लिखित्वा तदादौ वक्ष्यमाणपञ्चकं क्रमाल्लिखेत् । तदेवाह— अन्धे अन्धिन्यै इत्यादि मोहे मोहिन्यै इत्यन्तम् ॥ १३९ ॥

द्वितीयादिबीजत्रयम् । आत्तु । तः ॥ १४० ॥

च आत् । एव च । आत् । इति त्यक्त्वा सर्वेत्यादि स्तम्भमित्यन्तं स्वरूपम् । कुरु इति द्विः ॥ १४१ ॥

शीघ्रं वश्यं कुरुद्वन्द्वं वाक् चन्द्रो वाग्भवस्तथा ।
चतुर्था लाङ्गली पश्चात् कवचास्त्रे शिरस्तथा ॥१४२॥

वाराद्या मनुरेषः स्यादृतुपक्षेन्दुवर्णकः ।
तारो माया बटुकाय आपदुद्धरणाय च ॥१४३॥

कुरुद्वयं ततः पश्चात् बटुकाय द्वितीयकम् ।
बटुकाद्भैरवाख्यस्य मन्त्रो द्वाविंशदक्षर ॥१४४॥

त्रितारी बाला सप्तार्णा तिरस्करणिके ततः ।
त्रैलोक्यमोहिनि महामाये पशुजनान्मनः ॥१४५॥

चक्षुःश्रोत्रतिरस्काराच्चरणं कुरुयुगं शिरः ।
विलोमषट्कं मन्त्रोऽयं तर्कभूताक्षरो मतः ॥१४६॥

मन्त्रः प्रोक्तस्तु देवेशि लोपामुद्राभिधानकः ।
लक्ष्मी माया पुनर्लक्ष्मी भुवनेशी तु त्र्यक्षरी ॥१४७॥

तारो लक्ष्मीस्तथा माया कामः सप्ताक्षरी ततः ।
माहेश्वरि अन्नपूर्णे ममाभिलषितात् ततः ॥१४८॥

---

शीघ्रं वश्यं स्वरूपम् । कुरु इति द्विः । चतुर्वारं लाङ्गली ढः । कवचास्त्रे शिरः हुं फट् स्वाहा तारः ॐ वाक् ऐं । चन्द्रः ग्लौं । शक्तिः सौः । कामः क्लीं । सप्ताक्षरी ॐ नमो भगवति । वाक् वाग्भव इति पर्यायः । अन्यत् स्पष्टम् ॥ १४२ ॥

ऋतु पक्ष इन्दु १२६ षड्विंशत्युत्तरशतम् । च इति त्यक्त्वा बटुकायेत्यादि स्वरूपम् ॥ १४३ ॥

कुरु द्विः । बटुकायेति स्वरूपम् । द्वितीयकम् । माया बटुकाय आपदुद्धरणायेत्य-सन्धिः । बटुकभैरवस्य मन्त्रः ॥ १४४ ॥

ततः । आत् ॥ १४५ ॥

आच्च इति त्यक्त्वा तिरस्करिणीत्यादि स्करणमित्यन्तं स्वरूपम् । कुरु द्विः । अन्यत् स्पष्टम् । त्रितारी बाला विलोमेन । अयं तिरस्करिणीमन्त्रः । तर्कभूत ५६ षट्पञ्चाशत् ॥ १४६ ॥

एकादशे प्रोक्तः । लोपामुद्रा हादिविद्या । लक्ष्मीत्यादि स्पष्टम् ॥ १४७ ॥

आत्ततः ॥ १४८ ॥

मन्त्रं देहि शिरश्चायं भूगुणार्णः समीरितः ।
सबिन्दुतुष्टिर्माया च कामराजस्ततः परम् ॥१४९॥
कूटद्वयं तु सौभाग्यविद्यायास्तदनन्तरम् ।
मन्त्रः कामकलायास्तु वेदरूपाक्षरो मतः ॥१५०॥
लोपामुद्राख्यविद्यायां मायाद्वयविहीनतः ।
तुरीयाया भवेन्मन्त्रो गुणभूमिमितार्णकः ॥१५१॥
वाक्तुष्टिबिन्दुशक्तिश्च सौभाग्ये कूटयुग्मकम् ।
संसृष्टि नित्ये स्वाहेति सबिन्द्वग्निः स्थितीति च ॥१५२॥
पूर्णे हृत्तुष्टिबिन्दुश्च महासंहारिणीति च ।
कृशे चण्डात्तु काली फट् एहि स्फें च महानघे ॥१५३॥
अनन्तभास्करि चण्डकाल्यस्त्रं तुष्टिबिन्दुकम् ।
महासंहारिणीत्यादि फडन्तं पूर्ववत् पुनः ॥१५४॥
हमित्यादिहृदन्तं च समित्यादि शिरोऽन्तकम् ।
तृतीयकूटं तस्यास्तु विलोमाद्यत्रिबीजकम् ॥१५५॥

---

इति त्यक्त्वा माहेश्वरीत्यादि देहीत्यन्तं स्वरूपम् । अन्यत् स्पष्टम् । भूगुण ३१ एकत्रिंशत् । माहेश्वरि अन्नपूर्णे इत्यसन्धिः । अन्नपूर्णामन्त्रः ॥ तुष्टिः ई ॥ १४९ ॥

सौभाग्यविद्या प्रथमद्वितीयकूटम् । वेदरूप १४ । चतुर्दश ॥ १५० ॥

हादिविद्यायां प्रथमद्वितीयकूटान्ते मायाबीजं परित्यज्य शिष्टम् । तुरीया विद्या गुणभूमि १३ त्रयोदश ॥ १५१ ॥

तुष्टि बिन्दुः ईं । सौभाग्यविद्या प्रथमद्वितीयकूटम् । इति संविद्वग्निः हं । इति च ॥ १५२ ॥

हृत् नमः । तुष्टि बिन्दुः ईं च इति च । आत्तु । च । इति त्यक्त्वा संसृष्टीत्यादि भास्करि चण्डकालि इत्यन्तं स्वरूपम् ॥ १५३ ॥

अस्त्रं फट् । तुष्टिबिन्दुकं ईं महेत्यादि फट् इत्यन्तं त्रयोदशार्णं प्रागुक्तम् ॥ १५४ ॥

हमित्यादि हृदन्तम् । हं स्थितिपूर्णे नमः इति समित्यादीति संसृष्टिनित्ये स्वाहा इति । सौभाग्यविद्या तृतीयकूटम् । विलोमेति सौः ईं एं इति ॥ १५५ ॥

महार्घायास्तु मन्त्रोऽयं भूतनन्दाक्षरो मतः ।
पाशमायाङ्कुशा एहि परमे वैश्वरी शिरः ॥१५६॥

अश्वारूढेयमाख्याता द्वादशाक्षररूपिणी ।
वाग्भवं चाथ मिश्राम्बायै ततो हृदयं वदेत् ॥१५७॥

मिश्राम्बाया मनुः प्रोक्तः सप्तवर्णसमन्वितः ।
वाङ्मायाशक्तिवदयुग् वाग्वादिनी शिरस्तथा ॥१५८॥

वाग्वादिनीमनुः प्रोक्तो रामरूपार्णकः शिवे ।
प्रासादविद्या चैकार्णा पराद्या सहरूपिणी ॥१५९॥

परा च शक्तिरूपा वै चेति विद्यात्रयं स्मृतम् ।
चतुस्तारं खेचरी च शक्तिरन्त्या त्रितारिका ॥१६०॥

पराशाम्भवमन्त्रोऽयं नवार्णस्तु समीरितः ।
उपस्थमृद्धिपायू च स्पर्शो ज्योत्स्ना महा ततः ॥१६१॥

चाणाहङ्कारशब्दौ च प्रीतिस्मृतिपताकिका ।
गन्धो वरु लिखेदेष मुनिचन्द्राक्षरः स्मृतः ॥१६२॥

---

भूतनन्द ९५ । पञ्चनवतिः । पाश आं । अङ्कुश क्रों । एहि परमेश्वरी स्वरूपम् । शिरः स्वाहा ॥ १५६ ॥

मिश्राम्बायै स्वरूपम् ॥ १५७ ॥

वदेति युक् द्विः । वाग्वादिनी स्वरूपम् ॥ १५८ ॥

रामरूप १३ त्रयोदश । प्रासादविद्या षष्ठोल्लासोक्ता प्रासादपरा । पराप्रासादा तु सहरूपिणीति अनुवादः, प्रासादे सहभावेनेति पूर्वमुद्धृतत्वात् ॥ १५९ ॥

शक्तिरूपा शक्तिबीजात्मिका । विद्यात्रयमेकाक्षरम् । खेचरी ह्स्फ्रें । विलोमत्रितारी ॥ १६० ॥

उपस्थं म । ऋद्धि रखं । पायू भ । स्पर्श र । ज्योत्स्ना ए । महा स्वरूपम् ॥ १६१ ॥

चाण स्वरूपम् । अहाङ्कर ड । शब्द य । प्रीति य । स्मृति ग । पताकिका ए । गन्ध श । वरु स्वरूपम् । उपस्थादि सर्वे हल्वर्णा अकारसहिताः । अत एव मुनिचन्द्रे १७ ति सप्तदशाक्षरत्वं सिध्यति, केवलव्यञ्जनानामक्षरवर्णादिपदवाच्यत्वाभावात् ।

चतुस्तारं तारशङ्कू महाचण्डयोगीश्वरी ।
चतुर्दशार्णा संप्रोक्ता विद्यैषा वीरवन्दिते ॥१६३॥
चतुस्तारं र प्रसादपरा त्रिः खेचरी च सौ ।
भगशब्दाच्च वत्यम्बे द्वन्द्वमानन्दभैरवम् ॥१६४॥
अघोरेद्वितयं चाघोरमुखीति ततः परम् ।
छ्रां छ्रीं किणिद्वयं विच्चे षण्ड पञ्चमखेचरी ॥१६४॥
आनन्दभैरवद्वन्द्वं लक्ष्मी पञ्चमषण्डकः ।
प्रासादस्तु पराख्यश्च तादृशः परमेश्वरि ॥१६६॥
मन्त्रोऽयं परमेशानि पक्षवेदाक्षरो मतः ।
चतुस्तारं तारवाक् च क्लिन्ने क्लिन्ने मदद्रवे ॥१६७॥
कुले शक्तिस्तु मन्त्रोऽयं मुनिचन्द्राक्षरः स्मृतः ।
वह्निवायुस्पर्शयुता शुद्धविद्येति त्र्यक्षरी ॥१६८॥
आदौ चतुस्तारयुता सप्ताणयं समीरिता ।
पञ्चसंख्या इमे मन्त्रा नामैषां शृणु सुन्दरि ॥१६९॥

---

एतच्च वरिवस्यारहस्ये पञ्चदशीवर्णगणनावसरे श्रीभास्कररायैर्वितत्य निर्णीतम् । अत एव बालादीनां त्र्यक्षरीत्वसिद्धिः । ए ओ इत्यत्रासन्धिः ॥ १६२ ॥

शङ्कू फ्रें । महाचण्डयोगीश्वरी स्वरूपम् ॥ १६३ ॥

र प्रसादपरा हस्रौः । इदं त्रिः । खेचरी ह्स्रेव्ह्रं । सौः भगवत्यम्बे स्वरूपम् । आनन्दभैरवबीजद्वयम् हत्क्ष्ल्व्त्रघ्यूं स् हक्ष्म्ल्व्रचीं ॥ १६४ ॥

अघोरे द्विः । अघोरमुखि छ्रां छ्रीं स्वरूपम् । किणि द्विः । विच्चे स्वरूपम् । पञ्चमः ह्सौः सं स्त्रंडः ? विसर्गस्थाने बिन्दुयुतः ह्स्त्रौं: इति ॥ १६५ ॥

अयमेव पञ्चमषण्डकः । प्रासादः पराख्यपराप्रासादस्तादृशः रयुतः । षण्डश्च स्ह्लौः । अघोरे अघोरमुखि इत्युभयत्रासन्धिः ॥ १६६ ॥

पक्षवेद १४२ द्विचत्वारिंशत् । क्लिन्ने क्लिन्नमदद्रवे कुले इत्यन्तं स्वरूपम् ॥ १६७ ॥

मुनिचन्द्र १७ सप्तदश । वह्नि ह । वायु स । स्पर्शं र । एत्तंर्युता शुद्धविद्या त्र्यक्षरी । ह्स्त्रैं ह्स्त्रीं ह्स्त्रौ ॥ १६८ ॥

पराशाम्भवानन्तरमुक्ताः पञ्च मन्त्राः ॥ १६९ ॥

ऊर्ध्वोत्तरादिपूर्वान्ताम्नायानां समया इमे ।
सुन्दरी कालिका पश्चात् कुब्जिका भोगिनी तथा ॥१७०॥
मोदिनी चेति नामानि क्रमात्तेषां महेश्वरि ।
तत्त्वाभिधानं देवेशि शिवाद्युक्तं धरान्तकम् ॥१७१॥
ब्राह्मी च वैष्णवी रौद्री तुर्या ब्रह्ममयी तथा ।
त्रिपुराद् भैरवी पश्चान्महात्रिपुरभैरवी ॥१७२॥
बाला च शारदा सिद्धा तथा त्रिपुरसिद्धका ।
परमेश्वरी च ललिता मालिनी सुन्दरी ततः ॥१७३॥
सुखदा भुवना तद्वन्निर्वाणा च हरिप्रिया ।
क्षत्रवल्लभा च तिर्मही पश्चात्तु शाम्भवी ॥१७४॥
प्राणदा जीवना पश्चान्महती परमात्मिका ।
पृथ्वी तथैव हृल्लेखा भार्गवी क्रोधिनी तथा ॥१७५॥
पूतना भुवनेश्वरी वाग्भवी कामराज्ञिका ।
परा चेति महेशानि तत्त्वशक्त्यभिधानकम् ॥१७६॥
तत्त्ववर्णं समुच्चार्य कामेश्वर्यास्तु मन्त्रकम् ।
शिवतत्त्वेश्वरानन्दनाथब्राह्मोति वै वदेत् ॥१७७॥

---

ऊर्ध्वोत्तरपश्चिमदक्षिणपूर्वाम्नायसमयाः । नामान्याह —सुन्दरीत्यादि ॥ १७० ॥

तत्त्वनामनिरूपितमिति प्राक्संक्षिप्योक्तं स्मारयन् तत्त्वत्रयव्यावृत्तये विशदतयाह—तत्त्वेति ॥ १७१ ॥

शक्तिनामान्याह—ब्राह्मीत्यादि । त्रिपुरभैरवी ॥ १७२ ॥

त्रिपुरसिद्धा ॥ १७३—१७४ ॥

परमात्मा ॥ १७५ ॥

कामराज्ञी ॥ १७६ ॥

तत्त्ववर्णम् अकारादि । इति वै वदेत् इति त्यक्त्वा शिवेत्यादि देवीत्यन्तं स्वरूपम् ॥ १७७ ॥

शक्ति कामेश्वरी विद्या कलादेवीति योजयेत् ।
दीपिनीपादुकाभ्यां च पूर्ववत्तु समापयेत् ॥१७८॥
अथवाम्नायमन्त्रांश्च त्यक्त्वा शक्तीश्च सर्वतः ।
त्रिपुरासुन्दरी विद्या कलादेवीति कीर्तयेत् ॥१७९॥
अथवा तत्त्वविद्यां वै जपेद्देवि त्रिधा पुनः ।
जपेत् षट्त्रिंशदावृत्तिमूलविद्यामनन्तरम् ॥१८०॥
चतुस्तारं मूलविद्यां तत्त्ववर्णां क्रमात् पठेत् ।
शिवतत्त्वानन्दनाथरूपिणीति प्रकीर्तयेत् ॥१८१॥
कामेश्वरीपादुकां पूजयामि नमो वदेत् ।
समर्थस्तु पठेन्मन्त्रान्नामादौ परमेश्वरि ॥१८२॥
सूर्यतर्पणपर्यन्तां सायंसन्ध्यां विधाय तु ।
आज्ञाचक्रे शक्तिबीजं शुक्लवर्णं विभाव्य च ॥१८३॥
आकाशे चन्द्रबिम्बे तदावाह्योक्तविधानतः ।
तत्र ध्यायेच्छक्तिमयीं गायत्रीं परमेश्वरीम् ॥१८४॥

---

दीपिनीपादुकाभ्यां समाप्तिः। यथा ४। मू. ८। आ अं कामेश्वरीमन्त्रः शिवतत्त्वेश्वरानन्दनाथब्राह्मी शक्तिः कामेश्वरी विद्या कला देवी ई हंसः इत्यादि ॥ १७८ ॥

अशक्तस्य आम्नायोपदेशरहितस्य च पक्षान्तरमाह—अथवेति । यथा ४—मू० ८ आ अं शिवतत्त्वेश्वरानन्दनाथत्रिपुरसुन्दरीविद्याकला देवी इत्यादि ॥ १७९ ॥

पुनः पक्षान्तरमशक्तं प्रत्याह—अथवेति। तत्त्वविद्यां त्रिधा जप्त्वा मूलं षट्त्रिंशद्वारमावर्तयेत् ॥ १८० ॥

विद्यामाह—चतुरिति ॥ १८१ ॥

यथा ४—मू. अं शिवतत्त्वानन्दनाथरूपिणीकामेश्वरी श्रीपादुकां पूजयामि नमः इत्यादि। कामेश्वरीत्यादि नामादौ तत्तन्मन्त्रान् ॥ १८२ ॥

सायंसन्ध्यामाह—सूर्येत्यादि ॥ १८३ ॥

उक्तविधानतः सुषुम्णामार्गेणेत्यादि । शक्तिगायत्रीम् अमृतेश्वरीम् ॥ १८४ ॥

शुक्लां शुक्लाम्बरालेपस्रग्विभूषानुभूषिताम् ।
जटाजूटधरां नेत्रत्रयोद्भासिमुखाम्बुजाम् ॥१८५॥
ईषत्स्फुटितदंष्ट्रां च भैरवीरूपमास्थिताम् ।
जरापलितसंकीर्णां लम्बपीनपयोधराम् ॥१८६॥
पाशाङ्कुशौ पुस्तकं च स्फटिकाक्षस्रजं करैः ।
दधानां शक्तिबीजोत्थां पूर्णेन्दोर्मण्डले स्थिताम् ॥१८७॥
ध्यायेदाद्यां परां शक्तिं शक्तिमद्भिर्निषेविताम् ।
भोगमोक्षप्रदां शान्तामनन्ताममृतेश्वरीम् ॥१८८॥
पञ्चधा पूज्य शक्त्याख्यगायत्र्यार्घ्यं त्रिधा चरेत् ।
तद्बीजेन त्रिधा तर्प्य जपेत् पूर्ववदत्र तु ॥१८९॥
तृतीयबीजं त्रिपुरादेवी विद्महे एव च ।
शक्तीश्वरी धीमहि च तन्नोमृता प्रचोदयात् ॥१९०॥
चतुर्विंशत्यक्षरेयं शक्तिगायत्रिका मता ।
अथैतदङ्गभूतं वै नित्यापारायणं चरेत् ॥१९१॥
मूलऋष्यादिपूजान्ते तद्गायत्रीं प्रजप्य च ।
ध्यात्वाथ पञ्चधा पूज्य पारायणमथाचरेत् ॥१९२॥

---

ध्यानमाह—शुक्लमिति ॥ १८५ ॥

ईषत् स्फुटिते बहिर्निर्गते दंष्ट्रे पार्श्वदन्तौ यस्याः। अत एव भैरवीरूपं प्राप्ताम् ॥ १८६ ॥

ऊर्ध्वाधरयोर्वामदक्षक्रमादायुधानि ॥ १८७ ॥

शक्तिमद्भिर्ब्रह्मादिभिः ॥ १८८ ॥

तद्बीजेन शक्तिबीजेन । पूर्ववत् । शक्तिगायत्रीशक्तिबीजसहितमूलगायत्र्यादिकम् ॥ १८९ ॥

गायत्रीमाह—तृतीयेति । तृतीयबीजं सौः । एव च । च इति त्यक्त्वा त्रिपुरेत्यादि दयादित्यन्तं स्वरूपम् ॥ १९०–१९१ ॥

तद्गायत्रीं शक्तिगायत्रीम् ॥ १९२ ॥

ध्यानमाह—सायमिति । अधरोर्ध्वयोर्वामदक्षक्रमेणायुधानि ॥ १९३—१९४ ॥

प्रायमाज्ञासरोजस्थचन्द्रे चन्द्रसमद्युतिम् ।
शक्तिबीजात्मिकां चेक्षुबाणपाशाङ्कुशान्विताम् ॥१९३॥
युगनित्यात्मिकां देवीं घटिकावरणां पराम् ।
चिन्तयित्वा भगवतीं नित्याभिः परिवारिताम् ॥१९४॥
पुस्तकं चाक्षसूत्रं च दधानाः स्मेरवक्त्रकाः ।
नित्याषोडश चाज्ञायां सायंकाले च संस्मरेत् ॥१९५॥
भगमालातुष्टिमध्ये प्रजपेच्च यथाक्रमात् ।
नित्याक्षरं ततो नित्यामन्त्रं कामेश्वरीति च ॥१९६॥
नित्याकलान्ते देवी च सर्वत्रैवं नियोजयेत् ।
आद्या कामेश्वरी नित्या द्वितीया भगमालिनी ॥१९७॥
एते प्रोक्तेऽथ देवेशि तृतीयादिक्रमाच्छृणु ।
नित्यक्लिन्ने मदद्रवे शिरो माया पुरःस्थिता ॥१९८॥
एकादशाक्षरी चेयं नित्यक्लिन्नाऽभिधा भवेत् ।
ताराङ्कुशौ ततः पायुः स्पर्शः प्रीतिः सबिन्दुका ॥१९९॥
अङ्कुशश्चाङ्गदा बिन्द्वारूढः स्पर्शश्चतुर्विधः ।
आदौ क्रमात्कला विद्या रागकालास्तु योजयेत् ॥२००॥
अन्ते शिरो दशार्णेयं भेरुण्डाख्या प्रकीर्तिता ।
वह्निवासिन्यै हृदयं मायाद्याष्टाक्षरी मता ॥२०१॥

---

वामदक्षयोरायुधे । स्मेरवक्त्रकाः स्मितमुखाः ॥ १९५ ॥

नित्याक्षरम् अकारादिविसर्गान्तम् ॥ १९६ ॥

यथा ४–मू ८ आ अं कामेश्वरीमन्त्रः कामेश्वरी नित्याकला देवी ई हंसः इत्यादि ॥ १९७ ॥

एते कामेश्वरीभगमालिन्यौ नित्यक्लिन्ने मदद्रवे स्वरूपम् । शिरः स्वाहा आदौ माया ॥ १९८ ॥

अंकुश क्रों । पायु म । स्पर्श र । प्रीति भो । भ्रों । ॥ १९९ ॥

अङ्गदा औ ॥ स्पर्श र रौं । इदं चतुर्धा । तेषामादौ कला च । विद्या छ । राग ज । काल झ । तेन चौं छौं इत्यादि ॥ २०० ॥

वह्निवासिन्यै स्वरूपम् । आदौ माया । वह्निवासिनी मता ॥ २०१ ॥

तारमायाशङ्खवः सः नित्यक्लिन्ने मदद्रवे ।
शिरश्चतुर्दशार्णेयं महाविद्येश्वरी स्मृता ॥२०२॥
शिवदूत्यै हन्मुखे तु माया सप्ताक्षरी त्वियम् ।
तारो माया वर्म खे च छे क्षः कामस्य पञ्चमः ॥२०३॥
दीर्घवर्म क्षें च माया लिखेदस्त्रं ततः परम् ।
पक्षचन्द्राक्षरी चैषा त्वरितेति प्रकीर्तिता ॥२०४॥
बालायास्त्र्यक्षरैर्देवि कथिता कुलसुन्दरी ।
बाला च द्वादशार्धा च बाणा बालाविलोमतः ॥२०५॥
चतुर्दशाक्षरी चेयं नित्या ख्याता महेश्वरि ।
तारमायाशङ्खवश्च वायुस्पर्शरतीन्दुकाः ॥२०६॥
पाशमायाङ्कुशा नित्य मदद्रा द्वे च वर्मतः ।
अङ्कुशस्थितिवर्णेयं ख्याता नीलपताकिका ॥२०७॥
पायूपस्थस्पर्शशब्दाङ्गदा बिन्दुसमन्विता ।
इयमेकाक्षरी विद्या विजयाख्या समीरिता ॥२०८॥
वायूद्गारि युतस्तारः सर्वाद्यै मङ्गला च यै ।
हृदयं नववर्णैषा सर्वमङ्गलशब्दिता ॥२०९॥

---

शङ्खः फ्रें । सः नित्यक्लिन्ने मदद्रवे स्वरूपम् ॥ २०२ ॥

शिवदूत्यै स्वरूपम् । मुखे आदौ माया । इयं शिवदूती । वर्म हुं । खे च छेक्षः स्वरूपम् । काम पञ्चमः स्त्रीं ॥ २०३ ॥

दीर्घवर्म हूँ । क्षें स्वरूपम् । पक्षचन्द्र १२ द्वादश ॥ २०४ ॥

बालैव कुलसुन्दरी । द्वादशार्धा ह्स्क्लैं इत्यादि बीजत्रयम् । बाणाः द्रां इत्यादि पञ्चकम् । विलोमेन बाला ॥ २०५ ॥

नित्याभिधा नित्या शङ्ख फ्रें वायु स । स्पर्श र । रति ऊ । स्रूं ॥ २०६ ॥

पाश आं । अङ्कुश क्रों । नित्यमदद्रवे स्वरूपम् । तिथि पञ्चदश १५ ॥२०७ ॥

पायु भ । उपस्थ म । स्पर्श र । शब्द य । अङ्गदा औ । भ्म्र्यौ ॥ २०८ ॥

वायु स । उद्गारि व । स्वों । सर्वमङ्गलायै स्वरूपम् ॥ २०९ ॥

सप्ताक्षरी ततो ज्वालामालिनी द्विस्तु देवि च ।
सर्वभूताच्च संहारकारिके जातवेदसि ॥२१०॥
ज्वलन्ति ज्वलयुग्मं च प्रज्वलद्वितयं तथा ।
वर्मद्वयं त्रिधाभूतं तृतीयं कवचं पुनः ॥२११॥
अस्त्रं शिरोरामभूतवर्णा ज्वालाद्यमालिनी ।
कलाशक्त्यङ्गदा बिन्दुश्चित्रायै हृदयं शिवे ॥२१२॥
षडक्षरोयमाख्याता चित्रेति परमेश्वरि ।
चित्रादिकामेश्वर्यन्तं पुनरेवं निरूपयेत् ॥२१३॥
विसर्गमूलत्रिपुरसुन्दरीभिर्विधाय च ।
पुनर्विसर्गतुर्याभ्यां पठेत् सप्तदशीमपि ॥२१४॥
दीपिनीपादुकाभ्यां च पूर्ववत्तु समापयेत् ।
अथवा परमेशानि तत्तन्नित्यां त्रिधा जपेत् ॥२१५॥
अन्ते तु षोडशीं देवि तद्वत् सप्तदशीमपि ।
मूलस्य चान्ते देवेशि त्रिंशदावर्तनं चरेत् ॥२१६॥

---

इति द्विः तु च । आ च्च ॥ २१० ॥

ज्वल द्विः । च प्रज्वल द्विः । तथा इति त्यक्त्वा ज्वालामालिनीत्यादि प्रज्व लेत्यन्तं स्वरूपम् । वर्म हुं इति द्विः । भूततृतीयं तेजोबीजं रं त्रिधा ॥ २११ ॥

रामभूत ५३ त्रिपञ्चाशत् । ज्वालामालिनी । कला च । शक्ति क । अङ्गदा औं । कौं । चित्तायै स्वरूपम् ॥ २१२ ॥

एवं नित्यामन्त्रानभिधाय पारायणे विशेषमाह—चित्रादीति । कामेश्वर्यादिचित्रान्तपञ्चदशनित्यामन्त्रयोगेन। पारायणं कृत्वा पुनश्चित्रादिकामेश्वर्यन्तविद्यायोगेनोक्तरीत्या पारायणं कुर्यात् ॥ २१३ ॥

एवं पारायणान्ते विसर्गमूलान्ते त्रिपु सुन्दरीनित्याकलेत्यादि । पुनः विसर्गः तुरीयविद्यासप्तदशीनित्याकलेत्यादि ॥ २१४ ॥

अन्ते दीपिनीपादुकाभ्यां समाप्तिः । अशक्तस्य पक्षान्तरमाह—अथवेति । अत्रापि विद्याजपः पूर्ववदेव । यथा ४-मू० अं कामेश्वरीमन्त्रः । कामेश्वरीनित्याश्रीपादुकां पूजयामि नम इत्यादि ॥ २१५ ॥

एवं त्रिधा जपान्ते प्रागुक्तवत् । मूलयोगेन तुरीयायोगेन । त्रिपुरसुन्दरीसप्तदश्योर्नित्ययोः प्रत्येकं त्रिधा जपः । अन्ते मूलं त्रिंशद्वारमावर्तयेत् ॥ २१६ ॥

तत्तद्दिनस्य नाथादि ज्ञात्वा पारायणं चरेत् ।
तत्प्रकारं च देवेशि शृणु वक्ष्याम्यशेषतः ॥२१७॥
ब्रह्मणो दिवसे देवि चतुर्युगसहस्रकम् ।
तावन्मिता तथा रात्रिस्तत्प्रमाणमथो शृणु ॥२१८॥
खखाभ्राम्बरपक्षाग्निवेदसंख्याब्दका युगे ।
कल्यब्दस्तु दशांशः स्याद्द्वित्रिवेदगुणाः क्रमात् ॥२१९॥
द्वापरादिषु देवेशि दिनपूगं शृणु प्रिये ।
नागपक्षेभाद्रिचन्द्रनन्दागागशरेन्दुकाः ॥२२०॥
कल्पादिषु दशांशादिक्रमाद् भवति शङ्करि ।
तत्रैकाब्दे दिनगणं शृणु देवि समाहिता ॥२२१॥

---

एतच्च नाथादिपारायणं तत्तद्दिननाथादीन् ज्ञात्वा कर्तव्यम् । तज्ज्ञानप्रकारं वक्तुमाह—तत्प्रकारमिति ॥ २१७ ॥

तत्रादौ ब्रह्मणो दिनप्रमाणमाह—ब्रह्मण इति । चतुर्युगानां कृतत्रेताद्वापरकल्याख्यानां सहस्रं ब्रह्मण एकस्मिन्दिवसे अह्नि । रात्रिरपि तावन्मिता चतुर्युगसहस्रमिता । तत्प्रमाणं चतुर्युगप्रमाणम् ॥ २१८ ॥

ख ख अभ्र अम्बर इति शून्यचतुष्टयम् । पक्ष द्वौ । अग्नि त्रयः । वेद चत्वारः । ४३२०००० विंशतिसहस्रोत्तरत्रिचत्वारिंशल्लक्षवर्षा एकस्मिश्चतुर्युगे । एतद्दशमांशः कलियुगवर्षगणः ४३२००० द्वात्रिंशत्सहस्रोत्तरचतुर्लक्षमितः । एतद्द्वित्रिवेदगुणा द्वापरादिषु अब्दगणा इत्यन्वयः ॥ २१९ ॥

कल्यब्दस्य द्विगुणो द्वापरे त्रिगुणस्त्रेतायां चतुर्गुणः कृते । यथा द्वापरवर्षगणः ८६४०००, त्रेतावर्षगणः १२९६०००, कृतवर्षगणः १७२८००० । एवं कृतादियुगानां वर्षगणमुक्त्वा दिनगणं वक्तुमाह—दिनपूगमिति दिनानां पूगो गणः । नाग ८ पक्ष २ इभ ८ अद्रि ७ चन्द्र १ नन्द ९ अग ७ आग ७ सर ५-इन्दु १५७७९१७८२८, इति चतुर्युगदिनगणः ॥ २२० ॥

कल्यादियुगानां वर्षगणवच्चतुर्युगदिनगणदशांशतद्द्वित्रिचतुर्गुणितक्रमेण पूर्वक्रमाद्भवति । यथा कलिदिनगणः १५७७९१७८२ । घटि ४८ । द्वापरदिनगणः ३१५५८३५६५ । घटिपू ३६ । त्रेतादिनगणः ४७३३७५३४८ । घटि २४ । कृतदिनगणः ६३११६७१३१ । घटि १२ । तत्रैकवर्षस्य दिनगणं वक्तुम्—तत्रेति ॥ २२१ ॥

वेदपक्षाविन्दुरामौ भूरामौ शररूपकौ ।
बाणर्तुरामा देवेशि क्रमाद् गणय सुन्दरि ।।२२२।।
विकलाश्च कला देवि विनाड्यो नाड्य एव च ।
दिनानि युगभेदेषु संस्थितानि महेश्वरि ।।२२३।।
गताब्ददिवसानेकीकृत्यातीतगणैः सह ।
रसेष्विभाग्निसप्तेभरसपक्षैर्महेश्वरि ।।२२४।।

---

वेद चत्वारः पक्ष द्वौ २४। इन्दु एकः, राम त्रयः ३१। भू एकः राम त्रयः ३१। शर पञ्च, रूप एकः १५। बाण पञ्च, ऋतु षट्, राम त्रयः ३६५। क्रमाद् वक्ष्यमाणविकलादिनाम्ना खण्डपञ्चकं गणय ।। २२२ ।।

चतुर्विंशतिर्विकलाः, एकत्रिंशत्कलाः, एकत्रिंशद्विनाड्यः, पञ्चदश नाड्यः। अत्र विनाडी विघटिः नाडी घटिः। पञ्चषष्ट्युत्तरत्रिशतं दिनानि इति वेदपक्षेत्यादिप्रागुक्तखण्डपञ्चकस्य नामान्युक्तानि। कृतादियुगभेदेषु चतुर्ष्वपि एतान्येव स्थितानि। सर्वयुगेष्वपि सौरैकवर्षप्रमाणं पञ्चषष्ट्युत्तरत्रिशतं दिनानि, पञ्चदश घटिकाः, एकत्रिंशद्विघटिकाः, एकत्रिंशत्कलाः, चतुर्विंशतिर्विकला इति भावः ।। २२३ ।।

एवं वर्षप्रमाणमुक्त्वा नाथादिज्ञानोपयुक्तकलिगताहर्गणकरणप्रकारमाह—गतेत्यादि। यस्मिन् युगे यदा यावन्तो गताब्दास्तत्संख्या गुणितप्रागुक्तखण्डपञ्चके विकलादीनां षष्टिलब्धं कलादिषु संयोज्य तद्दिनगणे वर्तमानाब्दातीतदिनगणमपि संयोज्य प्रकृतयुगगताहर्गणं साधयेत्। यथा—कलौ अतीताब्दाः ४९२८ अष्टाविंशत्युत्तरनवशताधिकचतुःसहस्रमिताः। अनया संख्यया वेदपक्षेत्यादि सौराब्दध्रुवकखण्डपञ्चकगुणने कृते विकलाः ११८२७२ रथरदपापमिताः। कलाः १५२७६८ दातासारमेकमिताः। विघटिकाश्चैतन्मिता एव। घटिकाः ७३९२० नारीधीगाथामिताः। दिनानि १७९८७२०। नारीछदधीसायमितानि। विकलादीनां षष्टिलब्धस्य कलादिषु योजने १७९९९९५ दिनानि, ९ घटिकाः, ६ विघटिकाः, ५९ कलाः, १२ विकलाः। इति मध्यमेषार्कान्ताहर्गणः। राकाद्यीशस्तेन धीर्धाधाछायामितः। अत्रैव पञ्चविंशति २५ घटिकोत्तर द्वि २ दिनहाने स्पष्टमेषार्कान्ताहर्गणः। यथा—१७९९९९२ दिनानि, ४४ घटिकाः, ६ विघटिकाः ५९ कलाः १२ विकलाः। राकाधीशस्तेन भानोराधाघीर्धाधाछायामितः। इति वर्तमानवर्षेऽतीतदिनगणस्तु ज्येष्ठशुक्लसप्तम्यां शनिवासरे ५२ द्विपञ्चाशत्। तद्योगेऽतीतकलिदिनगणः १८०००४४ भावोनतुनदेयमितः। एवं गताहर्गणज्ञानोपायमुक्त्वा तस्मात्प्रकृतनाथाद्यानयनप्रकारमाह—रसेत्यादि। रस षट्। इषु पञ्च। इभाष्टौ। अग्नि त्रयः। सप्त। इभाष्टौ। रस षट्। पक्ष द्वौ २६८७३८५६। इत्यादि शरेण चेत्यन्तैरष्टभिरङ्कैरहर्गणं विभज्य युगमित्यादि ज्ञात्वेत्यन्वयः। अत्र विभज्येत्यनन्तरं यथासंभवं

ऋतुनन्दाब्धिषड्वेदमुनिभिस्तद्वदेव हि ।
रसाग्निनगशून्याक्षिसंख्यै रसमुनीषुभिः ॥२२५॥
रसाग्निभ्यां नभोऽग्निभ्यां नन्देन च शरेण च ।
विभज्य दिवसान् ज्ञात्वा युगं परिवृतिं तथा ॥२२६॥

---

लब्धैः शेषैश्चेति शेषः । निरुक्तैरष्टभिरङ्कैः साधितकलिगताहर्गणं विभज्य युगादिकं दिनसमुदायात्मकलब्धैर्दिनादिकं शेषैर्ज्ञेयमिति भावः ॥ २२४ ॥

ऋतु षट् । नन्द नव । अब्धि चत्वारः । षट् । वेद चत्वारः । मुनि सप्त ७४६४ ९६ । रस षट् । अग्नि त्रयः । नग सप्त । शून्य । अक्षि द्वौ । २०७३६ रस षट् मुनि सप्त इषु पञ्च ५७६ ॥ २२५ ॥

रस षट् । अग्नि त्रयः ३६ । नभः शून्यम् । अग्नि त्रयः३० । नन्द नव । ९ । शर पञ्च ५ । दिवसान् गतकल्पाहर्गणम् । एतैरष्टभिरङ्कखण्डैर्विभज्य युगादिकं ज्ञेयम् । अत्र षट्त्रिंशद्युगात्मक एको महायुगः, षट्त्रिंशत्परिवृत्तिभिरेको युगः, षट्त्रिंशद्वर्षैरेका परिवृत्तिः, षोडशमासैरेको वर्षः । षट्त्रिंशद्दिनैरेको मासः । युगपदेन प्रकृते द्विविधयुगस्यापि ग्रहणम् । तेन रसेष्विभाग्नीत्यादि प्रथमखण्डेनाह । गणे विभक्ते लब्धेनातीतमहायुगो ज्ञेयः । शेषे ऋतुनन्देत्यादिना विभक्ते लब्धेन गतयुगो ज्ञेयः । पुनः शेषे रसाग्नीत्यादि-तृतीयखण्डेन विभक्ते लब्धेन परिवृत्तिर्ज्ञेया । पुनः शेषे रसमुनीत्यादिचतुर्थखण्डेन विभक्ते लब्धेन वर्षो ज्ञेयः । पुनः शेषे रसाग्निभ्यामिति पञ्चमखण्डेन विभक्ते लब्धेन मासो ज्ञेयः । शेषेण च दिनं ज्ञेयम् । पुनरहर्गणे नभोऽग्निभ्यामिति, नन्देनेति, शरेणेति च क्रमेण पुनः खण्डत्रयेण विभक्ते त्रिभिः शेषैर्नित्यावारो घटिका च ज्ञेये इति । अत्र यद्यपि अष्टाङ्गादौ महायुगस्योपयोगो नास्ति, तथापि महायुगकरणपूर्वकमेव युगकरणमितोऽप्यधिकाहर्गणसंभवे सुलभमिति महायुगकथनम् । यथा—प्रकृतज्येष्ठ-शुक्लसप्तम्यां शनिवासरे सिद्धोऽहर्गणः १८०००४४ अत्र । रसेष्विभेत्यादिप्रथमखण्डेन भागाभावाल्लब्धं शून्यम् । ऋतुनन्देत्यादि द्वितीयखण्डेन विभक्ते लब्धं २ द्वयम् । शेषः ३०७०५२ रामनाद्योऽनङ्ग इति । तस्मिन् रसाग्नीत्यादितृतीयखण्डेन विभक्ते लब्धं १४ चतुर्दश, शेषः १६७४८ देवार्थस्तप इति । तस्मिन् रसमुनीत्यादिचतुर्थखण्डेन विभक्ते लब्धं २९ ऊनत्रिंशत् । शेषः ४४ चतुश्चत्वारिंशत् । तस्मिन् रसाग्निभ्यामिति पञ्चमखण्डेन विभक्ते लब्धमेकं १२ शेष ८ अष्टौ । पुनः अहर्गणे नभोऽग्निभ्यां नन्देन शरणेति खण्डत्रयेण विभक्ते क्रमाच्छेषः १४ चतुर्दश ८ अष्टौ ४ चत्वार इति । एवं च प्रकृतज्येष्ठशुक्लसप्तम्यां शनिवासरे प्रथमलब्धस्य शून्यत्वेन महायुगं नातीतं वर्तमानं प्रथममेव महायुगम् । द्वितीयलब्धं द्वयं तेन द्वे युगे अतीते, वर्तमानं तृतीयं युगं तृतीयलब्धं

वर्षमासौ दिनं नित्यां वारं च घटिकां तथा ।
तत्तद्दिनं समारभ्य तत्पूर्वान्तं समापयेत् ॥२२७॥
युगादित्रितयं तत्त्ववर्णात्मकमुदीरितम् ।
नित्या वर्णात्मका मासा दिनं वर्षवदेव हि ॥२२८॥

---

चतुर्दश तेन चतुर्दशपरिवृत्तयोऽतीताः । वर्तमाना पञ्चदशी परिवृत्तिः । चतुर्थलब्धमूनत्रिंशत् । तेन ऊनत्रिंशद्वर्षा अतीताः । वर्तमानस्त्रिंशत्तमो वर्षः । पञ्चमलब्धमेकं तेनैको मासोऽतीतः । वर्तमानो द्वितीयो मासः । शेषः अष्टौ । तेनाष्टौ दिनान्यतीतानि वर्तमानं नवमदिनम् । अनन्तरं प्रथमशेषश्चतुर्दश । तेन चतुर्दश नित्या अतीताः । वर्तमाना पञ्चदशी नित्या। द्वितीयशेषः अष्टौ । तेनाष्टौ वारा अतीताः । वर्तमानो नवमो वारः । तृतीयशेषः चत्वारः । तेन चतस्रो घटिका अतीताः । वर्तमाना पञ्चमी घटिका इति ॥ २२६ ॥

एवं च प्रकृतसप्तम्यां नवमो नाथः । तद्दिननाथं नवममारभ्य तत्पूर्वदिनमध्मनाथान्तं नाथपारायणं कुर्यादित्याह—तत्तद्दिनेति । यथा । ४ । मू. ८ आर्षं० क्ष त्रैलोक्यमोहनसुभगात्मकप्रकटयोगिन्यानन्दनाथपराशक्तिश्रीत्रिपुराविद्याकलादेवी ईं हंसः इत्यारभ्य ४ मू८ आयं शं इत्यादि विद्यान्तं समापयेदिति ॥ २२७ ॥

पद्धतौ तु सुलभतयावबोधनायास्मद्गुरुचरणकृताष्टाङ्गनिर्णयमूलवाक्यान्येव लिखितानि तान्यपि प्रसङ्गाद् व्याख्यायन्ते । यथा – तत्रादौ गतकल्यब्दज्ञानोपायं शकज्ञानोपायं चाह–"हरो ज्ञाति हतो हाला गताब्दाभ्यां युतः शकः । धूसीकालयुतोऽब्दस्तु" इति । अत्र कादि नव । टादि नव । पादि पञ्च । याद्यष्टौ इत्यङ्कसंकेतः । कटपय इत्येकस्य संज्ञा, खठफर इति द्वयोः संज्ञेत्यादि । नञ इति शून्यस्य संज्ञा। तथा च ह इत्यष्टौ र इति द्वौ । अङ्कानां वामतो गतिरिति हर इत्यष्टाविंशतिः २८। सः ज्ञातिरिति षष्टिः ६०। तेन हतो गुणितः १६८० । हालेत्यष्टत्रिंशत् ३८ प्रभवादिगताब्दः प्रभवादिहेमलब्ध्यन्त एकत्रिंशत् ३१ । एताभ्यां युतः १७४९ इति वर्तमानशकाब्दः । एवं षष्टिवर्षात्मकैतत्परिवृत्तिसमाप्त्यन्तं हरो ज्ञाति हत इति । तदनन्तरं हर इति स्थाने धर इति । तदनन्तरं नग इत्याद्यूहनीयम् । एवं नर्मदोत्तरभागे हालागताब्दाभ्यामिति । नर्मदादक्षभागे तु धावागताब्दाभ्यामिति ज्ञेयम् । घूसीकाल ३१८९ एतद्युक्तः शकः अब्दः गतकल्यब्दगणः ४९२० इति । एवं कल्यब्दज्ञानोपायमुक्त्वा तस्मादब्दादिष्टाहर्गणोपयुक्तवाक्यज्ञानोपायं ध्रुवसंस्कारं च वक्तुमाह—साधुदेवोनिताब्दकः ॥ १ ॥ ज्ञातिभक्तो लब्धकेन हत्वान्त्यं योजयेद् ध्रुवे । शेष एकादिदशकपर्यन्तस्य च विंशतेः ॥ २ ॥ त्रिंशच्चत्वारिंशतोश्च पञ्चाशच्छून्ययोरपि । क्रमाद्रङ्गादियागान्तवाक्यमिति । साधुदेव ४८९७ इत्यनेनोनितः कलब्दः एकत्रिंशत् ३१ । सः ज्ञातिषष्टिः ६० अनेन भक्तो विभक्तः प्रकृते एकत्रिंशतः

षष्टिभागानर्हत्वाद्भागो नास्तीति लब्धं शून्यम्। तेन लब्धेन हत्वा अन्त्यं च वक्ष्यमाण-वाक्यं ध्रुववाक्ये योजयेदित्यस्याभावाद्यथास्थितमेव ध्रुववाक्यम्। वाक्यानि तु रङ्गशायी शान्तगीः॥ १ ॥ ३६५।१५।३२। गानेयागज्ञगाथा ॥ २ ॥ ७३०। ३१।३ ॥ शालातेभामांधानेयम्॥३॥ १०९५। ४६।३५। तेन राज्ञः पतिर्वायुः॥४॥ १४६१।०२। ०६ ॥ हलार्थः। कतरो जयः ॥ ५ ॥ १८२६। १७। ३८ ॥ धेनुबालकोऽन्धं पुरः ॥ ६ ॥ २१९१। ३३। ०९ ॥ कावादेवताभे मखे ॥ ७ ॥ २५५६। ४८। ४१ ॥ प्रायो भानुः खराधात्री ॥ ८ ॥ २९२२। ०४। १२ ॥ भावो धार्यः सदा रोगः ॥ ६ ॥ ३२८७। । १६। ४४। माया शालात्र शीतला ॥ १० ॥ ३६५२। ३५। १५ ॥ नागाज्ञया मनोल्लासः ॥ २० ॥ ७३०५ ॥ १०। ३० ॥ ते मामेव समाधौ नेया ॥ ३० ॥ १०९५७। ४५। ४६ ॥ यज्ञाय राज्ञः कान्ता भार्या ॥ ४० ॥ १४६१०। २१। ०१ ॥ ते यान्ति मखे चोरहयाः ॥ ५० ॥ १८२६२। ५६। १६ ॥ यागकाले शापान्धकारः ॥ ० ॥ ॥ २१९१५। ३१। ३१ ॥ धावरेवाधनाय तीरे ॥ ध्रुवम् २६१०९। ४२। ४९ ॥ इति षोडश। अत्र वाक्येषु आद्याक्षरद्वयं विघटिकाङ्कबोधकम्। अनन्तराक्षरद्वयं घटिका-ङ्कबोधकम्। अनन्तराक्षराणि दिनाङ्कबोधकानि। एवंविधध्रुवसंस्कारस्य प्रकृते उपयोगाभावेऽपि यदा कलिगताब्दा ४९५८ दाशधीवमिताः, तदा साधुदेवोनिते कृते ६१ एकषष्टिः। तदा ज्ञातिभक्ते लब्धमेकम्। तेन गुणितं यागकालेत्यन्तवाक्यम्। एकेन गुणितं तदेवेति यागकाले शापान्धकार २१६१५। ३१। ३१ ॥ इति वाक्यस्य धावरे वाधनाय तीरे २६१०९। ४२। ४९। इति ध्रुववाक्येन योगे ८८०२५। १४। २० ॥ इति ध्रुवसंस्कारफलं सिद्ध्यति। एवं साधुदेवोनिताब्दे ज्ञातिभक्ते सति शेषः। एकादि ऊनषष्ट्यन्तं शून्यं च भवति। तत्रैकादिदशान्तानां विंशतित्रिंशच्चत्वारिंशत्पञ्चाशच्छू-न्यानां च क्रमेण रङ्गशायीत्यादिवाक्यमारभ्य यागकाले इति वाक्यान्तं ज्ञेयम्। यथा एकशेषे रङ्गशायीति वाक्यम्। द्विशेषे गानेयागज्ञेति वाक्यम्। त्रिशेषे शालातेऽति वाक्यम्। विंशतिशेषे नागायज्ञेति वाक्यमित्यादि ज्ञेयम्। एवं वाक्यं ज्ञात्वा यत्कर्तव्यं तदाह—इति दशशेषे मायाशालेति वाक्यम्। तद्ध्रुवयोगतः ॥ ३ ॥ वर्तमानाब्दमेषार्कयोगान्तद्युगणो भवेदिति। एकशेषे रङ्गशायीति प्रथमं वाक्यम्। तद्वाक्यधावरेवेति ध्रुववाक्ययोर्योगेन वर्तमानाब्दस्य यो मेषार्कयोगः स्पष्टमेष-संक्रान्तिः। तदन्तो यो द्युगणः इष्टाहर्गणः स भवेत्। यथा—रङ्गशायी शान्तगीः। ३६५। १५। ३२ ॥ धावरे वाधनाय तीरे। २६१०९। ४२। ४९। इत्यनयोर्योगे २६४७४। ५८। २१ ॥ तत्र दिनगणे सप्तभिर्भक्ते शून्यस्य शेषत्वादतीतवाराभावात् प्रथमे रविवारे अष्टपञ्चाशद् घटिका एकविंशतिविघटिकानन्तरं स्पष्टमेषसंक्रान्तिरिति। प्रकृते यथोक्तकल्यब्दे साधु देवोनिते ज्ञातिभक्तत्वाभावादेकत्रिंशदेव शेषः ३१। एवंस्थितस्थले कतमद् वाक्यं ध्रुवेण संयोज्यमित्याशङ्क्याह—एकादशादिशेषे तु दश माघादियुग्ध्रुवात् ॥ ४ ॥ एकविंशत्यादिशेषे चोह्यस्त्वीदृशरीतितः। इति। एकादशादि-त्यादिना द्वादशाद्यूनविंशत्यन्तानां ग्रहणम्। एकादशशेषे दशमाद्यवाक्ययोर्ध्रुववाक्य-योगादहर्गणो भवतीत्यर्थः। एवं द्वादशशेषे दशमद्वितीयवाक्ययोस्त्रयोदशशेषे दशम-

तृतीयवाक्ययोर्ध्रुवयोगादित्यादि। एकविंशत्यादिशेषे ईदृशरीत्यैव वाक्ययोग ऊह्यः। यथा -एकविंशतिशेषे विंशतिप्रथमवाक्ययोः, द्वाविंशतिशेषे विंशतिद्वितीयवाक्ययोर्ध्रुवयोगः। एवमेवैकत्रिंशदेकचत्वारिंशदादौ ज्ञेयम्। एवं च प्रकृते ३१ एकत्रिंशच्छेषः। तेन त्रिंशदाद्यवाक्ययोर्ध्रुवयोगेऽहर्गणः सिध्यति। यथा ते भाभैव समाधौ नेया। इति त्रिंशत्तमं वाक्यम्। रङ्गशायी शान्तगीः। इत्याद्यं वाक्यम्। धावरे वाधनाय तीरे इति ध्रुववाक्यम्। त्रयाणां योगे ३७४३२। ४४। ७७॥ सेनाभावो खगे वत्सल इति। अत्र सप्तभक्तदिनशेषः त्रयः, तेन वारत्रयमतीतम्। चतुर्थे बुधवारे चतुश्चत्वारिंशद्घटिका-सप्तविघटिकोत्तरं स्पष्टं मेषसंक्रान्तिः। एवं मेषसंक्रान्त्यन्ताहर्गणमुक्त्वा वर्तमानाब्दातीत-दिवसकरणप्रकारमाह—कालेन ०३१ रीतिनां ०६२ मोधेर्ज्ञा ०३४ निरूप १२६ समाक १५७ था देया १८७। सायं री २१७ ति भारं २४६। तत्सारं २७६ मानगा ३०५ मलागू ३३५॥ मेषाद्यतीतसंक्रान्तिपर्यन्तानां त्रय त्रयम्॥ ६॥ अतीताहर्युतोऽर्कादि ज्ञेयो वारेण शोधितः। शून्यशेषेऽथ पूर्वेण ध्रुवेणैव तु योजयेत्॥ ७॥ इति। मेषाद्यतीतसंक्रान्तीनां कालेनेत्यादित्रयं त्रयं ज्ञेयम्। यथा मेषसंक्रान्तेः कालेन वृषसंक्रान्ते। रीतिनेत्यादि एकत्रिंशद् द्विषष्टिरित्यादि। एवं च प्रकृतज्येष्ठशुक्ल-सप्तम्यां शनिवासरे मेषसंक्रान्तेरतीतत्वात्कालेनेत्येकत्रिंशत्। प्रकृतवृषसंक्रातौ अतीताहः। तिथिपत्रावलोकनेन गणिते एकविंशतिः। अनयोर्योगे ३७४८४। वादे वत्सल इति। वारेण शोधितः सप्तभिर्भक्तः अर्कादिवारो ज्ञेयः। प्रकृते सप्तभक्ते ६ षट्शेषः। तेन षड्वारा अतीताः। सप्तमः शनिवारो वर्तमानः। अत्र कालेनेत्यादिसंक्रान्तिवाक्ये क्वचिदेकन्यूनाधिकभाववारणं संशोध्य कुर्यादित्याह -अर्कादित्यादि। अर्कादि-मेषसंक्रान्तिवारेण शोधितो ज्ञेय इत्यर्थः। यथा--प्रकृते कालेनेत्येकत्रिंशत्। वृषे गत-दिनान्येकविंशतिः। तयोर्मेलने ५२ द्विपञ्चाशद्वारेण सप्तभिर्भागे त्रिशेषः। मेषसंक्रम-वारो बुधः। तस्मात्त्रयो बुधगुरुशुक्रवारा अतीताः। वर्तमानः शनिवार इति प्रकृते साम्यान्न न्यूनाधिककरणम्। शून्यशेषे ध्रुवसंस्कारो नास्तीत्याह—शून्येति। पूर्वेण असंस्कृतेन ध्रुवेणैव योजयेत्, न ध्रुवसंस्कारं कुर्यात्। एवमहर्गणं साधयित्वा नाथाद्यान-यनप्रकारमाह—धनभक्तो भवेच्छेषो वारो लब्धो धनैर्हृतः। शेषं धनेन गुणितं वारयुक्तं दिनं भवेत्॥ ८॥ लब्धे चापेन भक्ते तु शेषो मासस्तदाप्तके। तालभक्ते वत्सरः स्याच्छेषो लब्धे मुदायुते॥ ९॥ परिवृत्तिस्तालभक्ते शेषो लब्धं युगं विदुः। नागहृच्छेषतो नित्यां मानहृच्छेषतो घटिम्॥ १०॥ इति। निरुक्ता ३७४८४ हर्गणे धनेन। ९ नवभिर्भक्ते शेषः ८ अष्टौ। तेनाष्टौ वारा व्यतीताः। लब्धे ४१६४ कः धनैः ४ चतुर्भिर्हृतो भक्तः। शेषं शून्यम्। तद्धनेन नवभिर्गुणितं शून्यमेव। तत्र वारः अष्टौ तद्योगे अष्टावेव तेनाष्टौ दिनान्यतीतानि। लब्धे १०४१ चापेन १६ षोडशभिर्भक्ते शेषः १ एकः। तेनैको मासोऽतीतः। तदाप्तके तल्लब्धे ६५ ताल ३६ षट्त्रिंशद्भिर्भक्ते शेषः २९ ऊनत्रिंशद् गतवत्सरः। लब्धमेकं १ तत्र मुदा ८५ पञ्चाशीतियुते ८६ षडशीतिः। तस्मिन् ताल ३६ षट्त्रिंशदभक्ते शेषः १४ चतुर्दशानीतपरिवृत्तिः। लब्धम् २। द्वयं गतं

तत्त्वात्मकत्वमपि वै नित्यास्त्रिंशत् समीरिताः ।
क्रमव्युत्क्रमयोगेन स्वराणां च महेश्वरि ॥२२९॥
नववर्गात्मका नाथा वारात्मानः प्रकीर्तिताः ।
सूर्योदयाख्यघटिकाः कीर्तिताः पञ्चसंख्यकाः ॥२३०॥
मिथुनानां चतुष्केण विद्या चाष्टाङ्गसंज्ञिता ।
वारघट्यौ दिनान्नित्यावर्षमासौ युगावृतिः ॥२३१॥
मिथुने मिथुने देवि बिन्दुयोगः प्रकीर्तितः ।
एषां युगादावारम्भो द्विधा शेषसमापनम् ॥२३२॥

---

युगम् । पुनरहर्गणे नाग ३० त्रिंशत् तद्धृतशेषः १४ चतुर्दशगतनित्याः । पुनः मान ५ पञ्च तद्धृतशेषः ४ चत्वारो गतघटिका इति । एते नाथादयः सर्वेऽतीताः । वर्तमानस्तु ९ नवमो वारः ९ नवमं दिनम् २ द्वितीयो मासः ३० त्रिंशत्तमो वर्षः १५ पञ्चदशी परिवृत्तिः । ३ तृतीयं युग १५ पञ्चदशी नित्या ५ पञ्चमी घटिकेति । युगादीनां स्वरूपमाह--तन्त्रे युगमित्यादि । युगपरिवृत्तिवर्षाः तत्त्ववर्णात्मकाः । एतेन संख्याप्युक्ता भवति । तथा च युगपरिवृत्तिवर्षाः अकखेत्यादिक्षान्ताः षट्त्रिंशत् । नित्यावर्णाः अकारादिविसर्गान्ताः मासाः षोडश । दिनं वर्षवदेव आदिक्षान्तात्मकं षट्त्रिंशत्संख्यम् ॥ २२८ ॥

दिने युगाद्यपेक्षया विशेषमाह--तत्त्वेति । षट्त्रिंशत्संख्यानां दिनानां शिवादिपृथिव्यन्तषट्त्रिंशत्तत्त्वात्मकत्वमपि । नित्यास्तु त्रिंशत्संख्याः । क्रमव्युत्क्रमयोगेन अकाराद्यनुस्वारान्ताऽनुस्वाराद्यकारान्तयोगेन यः स्वराणां त्रिंशत्, तद्रूपाः । चकारात् कामेश्वर्यादिचित्रान्त-चित्रादिकामेश्वर्यन्तरूपाश्च ॥ २२९ ॥

पारायणोत्तरक्रमेण अलृकचटतपयशेति नववर्गात्मकाः प्रकाशविमर्शेत्यादिनवनाथात्मकाश्च नववाराः घटिकाः सूर्योदयनाम्न्यः पञ्च यथा षष्टिघटिकात्मको दिवसः । तत्रैकैकघटिका अकाराद्येकैकवर्णात्मिका । घटिकावर्णाश्च विसर्गरहिता अकारादिक्षकारान्ताः पञ्चाशत् । तेन प्रथमदिने उदयघटिकावर्ण अकारः । पञ्चाशत्तमः क्षकारः एक पञ्चाशत्तमः । पुनरकारः षष्टितमः लृकारः । द्वितीयदिने उदयघटिका एकारः । एवंक्रमेण तृतीयदिने चकारः, चतुर्थे तकारः, पञ्चमे पकारः, षष्ठे पुनरकार इति । उदयघटिकाः अएचतप इति पञ्च ॥ २३० ॥

पारायणोपयुक्तामष्टाङ्गविद्यामाह--मिथुनेति । मिथुनान्येवाह—वारघट्याविति । वृत्तिः परिवृत्तिः ॥ २३१ ॥

एवं च वाराक्षरघटिकाक्षरे इत्येकं मिथुनम, एवं दिनाक्षरनित्याक्षरे, वर्षाक्षरमासाक्षरे, युगाक्षरपरिवृत्त्यक्षरे इति मिथुनचतुष्टयरूपाऽष्टाक्षरी अष्टाङ्गविद्या । तत्र

इत्यष्टाङ्गविधिः प्रोक्तो ज्ञात्वैवाशेषमाचरेत् ।
अथान्यच्छृणु देवेशि पारायणमभीष्टदम् ॥२३३॥

मातृकास्तु महादेव्या वाचकाः परिकीर्तिताः ।
द्वित्रिक्रमेणापि देवि परानामैव ताः स्मृताः ॥२३४॥

तत्त्वार्णास्तु स्वरैर्युक्ताः पूर्णमण्डलसंज्ञिताः ।
रसाश्वेषुमितास्ते वै तेषामेकैकशः क्रमात् ॥२३५॥

---

प्रतिमिथुनं बिन्दुयोगः कर्तव्यः । एवं च प्रकृतज्येष्ठशुद्धसप्तम्यां शनिवारे नवमः षवारः । पञ्चमी य घटी नवमं जदिनं पञ्चदशी अंनित्या । त्रिंशत्तमो ववर्षः । द्वितीय आमासः । तृतीयः खयुगः । पञ्चदशी ढपरिवृत्तिः । प्रतिमिथुनं बिन्दुयोगे षयं जअं वआं खढ इत्यष्टाङ्गविद्या । अत्र वारस्य वर्गात्मकत्वेऽपि आद्याक्षरमात्रात्मता संप्रदायात् । एकत्रिंशद्वर्णमयीति पारायणसामान्यमन्त्रवर्णगणनानुरोधाच्चेति ज्ञेयम् । एषां युगादीनामष्टाङ्गघटकानां युगादौ कृतादियुगादौ आरम्भः । युगान्ते कतिपयदिवसशेषे युगादीनामक्षरद्वयरूपं कृत्वा समापनम् । एवं च प्रतियुगादावारम्भः । प्रतियुगान्ते सर्वेषां समाप्तिः । कृतादियुगान्तेषु कतिदिवसशेषे द्वयं कृत्वा समापयेदित्येतदस्मच्छ्रीगुरुचरणैरष्टाङ्गनिर्णयामृतव्याख्याने चषके स्पष्टतरं प्रतिपादितं तत एव ज्ञेयम् ॥ २३२ ॥

उपसंहरति--इतीति । अशेषं पारायणसंकल्पादिकम् । नामपारायणमाह--अथवेति । अभीष्टदमिति काम्यत्वमुक्तम् । अत एव पुरश्चरणप्रतिनिधित्वं वक्ष्यति ॥ २३३ ॥

मातृका इति बहुवचनाद् आदिक्षान्ता वर्णाः, न तु त्रिपञ्चाशदक्षरी विद्या । महादेव्यास्त्रिपुरसुन्दर्याः । प्रत्येकमपि वर्णा देवता वाचकाः, द्वित्रिक्रमेणापि संयुक्ता इति शेषः । द्व्यक्षरात्मकास्त्र्यक्षरात्मकाः शब्दा इति यावत् । ताः मातृकाः । परायाः मूलदेव्या नामैव । एतेनास्य पारायणस्य केवलद्वित्रिवर्णयोगदेवतानामात्मकत्वेन नामपारायणत्वमुक्तं भवति ॥ २३४ ॥

तत्त्वार्णाः अकखेत्यादि क्षान्ताः षट्त्रिंशत् । स्वरैः आदिविसर्गान्तैः षोडशभिः युक्ताः । अआ इई उऊ औ अं अः १६ कका किकी कौ कं कः १६ खखा खिखी खौ-खं खः १६ इत्यादि । क्षक्षा क्षिक्षी क्षौ क्षं क्षः १६ इत्यन्ताः एकैकतत्त्ववर्णे षोडशनित्यावर्णयोगेन जाताः पूर्णमण्डलसंज्ञिताः । अत्र तत्त्वाक्षरेषु प्रथमस्य अकारस्य व्यञ्जनत्वं तु संप्राप्ता इति चतुर्थवचनेन व्यञ्जनत्वात् स्वरात्मकाऽकारादियोगेन सवर्णदीर्घादिः । तस्यैव त्रिबिन्दुत्वं समागमदित्येकादशवचनेन । शून्याकारादिसर्गान्तादिति योगिनीहृदयोक्त्या, तत्त्वाद्यः शून्यरूपो वै इति त्रिपुरार्णवोक्त्या च शून्यत्वे । शून्ये एकद्वाद्यङ्क-

**तत्त्वाक्षरगणे योगादादन्ते तुष्ट्या च मेलनात् ।**
**त्रिवर्णरूपिणी साक्षात्त्रिपुरारूपिणी भवेत् ॥२३६॥**
**एतास्तु रसरामाश्वखपक्षैस्तु सुसंमिताः ।**
**युगादिदिनमारभ्य प्रवृत्तास्त्वेकशः क्रमात् ॥२३७॥**
**कालनित्याभिधानाः स्युरुपास्त्याऽभीष्टदायकाः ।**
**तद्दिनोद्भूतया देवि प्राणानायम्य विद्यया ॥२३८॥**

---

योगे तदङ्कमात्रतेव तत्तत्स्वरयोगे तत्तत्स्वरमात्रता ज्ञेया। तत्संख्यामाह—रसेति। रस ६ षट्, अश्व ७ सप्त इषु ५ पञ्च ५७६ षट्सप्तत्युत्तरपञ्चशतसंख्याः। क्रमात्तेषामेकैकशस्तत्त्वाक्षरगणे योगादित्यन्वयः॥ २३५॥

तत्त्वाक्षरगणे अन्ते अकारान्ते आकाखा इत्यादि क्षा इत्यन्तषट्त्रिंशत्संख्ये वर्णगणे आदौ पूर्णमण्डलवर्णानामेकैकशो योगात्तदन्ते तुष्ट्या ईकारेण च मेलनात् त्रिवर्णरूपिणी त्रिपुरावाचकत्वेन त्रिपुरारूपिणी भवेत्॥ २३६॥

एताः विद्याः रस ६, राम ३, अश्व ७, ख० पक्ष २ संमिताः २०७३६ षट्त्रिंशदुत्तरसप्तशताधिकविंशतिसहस्रसंख्याः। यथा त्र्यक्षर्यात्मिकाः सर्वा विद्याः। तत्र षट्सप्तत्युत्तरपञ्चशतसंख्याकपूर्णमण्डलवर्णेषु एकैको वर्ण आद्यः अ आ इत्यादि क्षं क्षः इत्यन्तम्। तत्रैकैव वर्णान्ते द्वितीय आकारान्ततत्त्ववर्णः। आ का खा गा इत्यादि क्षा इत्यन्तः तृतीयो वर्णः। सर्वत्र ईकारः। अआ ई अखाई अगाई इत्यादि अक्षाई इत्यन्तं षट्त्रिंशत्। ततः प्रथमे अकारस्थाने आकारं निवेश्य आ आ ई आकाई आखाई इत्यादि आक्षाई इत्यन्तं षट्त्रिंशत्। एवं पुनस्तत्स्थाने ईकारं निवेश्य इ आ ई इ का उ इ खा ई इत्यादि इक्षाई इत्यन्तं षट्त्रिंशत्। एवमेव अकारस्थाने ईकारादिविसर्गान्तत्रयोदशानां योगः। ततः अ आ इ ई इत्यादि षोडशस्थाने क का कि की कंकः, ख खा खि खी खं खः, इत्यादि क्ष क्षा क्षि क्षी-क्षं क्षः इत्यन्तपञ्चत्रिंशत्तत्त्ववर्णानां स्वरषोडशकसंयोगेन षोडशसंख्यानां योगः। एवं त्र्यक्षर्यो विद्या रससमाश्वखपक्षसंख्याः सर्वयुगेषु प्रथमदिनमारभ्य एकैकदिने एकैका विद्याः। निरुक्तसंख्यासमाप्तौ पुनरारम्भादेकैका विद्येति ज्ञेया॥ २३७॥

कालनित्येत्यभिधानं यासां विद्यानां तद्दिनकालनित्यां ज्ञात्वा जपादिरूपोपासने कृते अभीष्टदा भवन्ति अभीष्टदाः स्युरिति योजना। एवं कालनित्यां तद्दिनोद्भूतां तद्दिनसम्बन्धिनीः ज्ञात्वा तया प्राणायामं कृत्वा न्यासं समाचरेदित्यन्वयः। तज्ज्ञानोपायस्तु निरुक्ताहर्गणं षट्त्रिंशद्भिर्विभज्य लब्धं षोडशभिर्विभज्य लब्धं पुनः षट्त्रिंशद्भिर्विभज्य शेषत्रयेण तृतीयद्वितीयप्रथमाक्षरं ज्ञेयम्। यथा कालनित्यामन्त्रेषु आद्यः पूर्णमण्डलवर्णो वर्णद्वयात्मकः। तत्त्वार्णास्तु स्वरैर्युक्ता इत्युक्तत्वाद् द्वितीयोऽपि तत्त्वार्णः,

पूर्णमण्डलवर्णैस्तु न्यासं कृत्वा स्वदेहके ।
मातृकाभिर्व्यापकं वा कृत्वा न्यासं समाचरेत् ॥२३९॥
ऋषिः स्याद्दक्षिणामूर्तिर्गायत्री छन्द उच्यते ।
त्रिपुरासुन्दरी देवि देवता परिकीर्तिता ॥२४०॥
तद्विद्यायास्त्रिवर्णैस्तु न्यासं कुर्यान्महेश्वरि ।
रक्तां रक्ताम्बरां रक्तस्रग्विभूषानुलेपनाम् ॥२४१॥
पाशाङ्कुशेक्षुकोदण्डप्रसूनविशिखां स्मरेत् ।
मानसैः पूजयित्वादावङ्गपारायणं चरेत् ॥२४२॥

---

आन्ते इत्याकारान्तत्वोक्तेर्वर्णद्वयरूपः । तृतीय ईकारः । तत्रावयवभेदे पञ्चवर्णमयी कालनित्या । तथा च निरुक्तज्येष्ठशुद्धसप्तमीमन्दवासरे । सिद्धोऽहर्गणः १८०००४ षट्त्रिंशद्भिर्भक्ते अष्टशेषः । तेन तृतीयस्तत्त्ववर्णः। तस्मिन्नष्टौ अतीताः । वर्तमानो नवमो जकारः । लब्धं ५०००१ एकोत्तरपञ्चाशत्सहस्रम् । तस्मिन् षोडशभक्ते एकशेषः । तेन द्वितीये स्वरवर्णे एकोऽतीतो द्वितीयो वर्तमान आकारः । लब्धं ३१२५ पञ्चविंशत्यधिकैकशतोत्तरत्रिसहस्रम् । तस्मिन् षट्त्रिंशद्भिर्भक्ते शेष ऊनत्रिंशत् । तेन प्रथमस्तत्त्ववर्णः तेषूनविंशदतीताः । वर्तमानस्त्रिंशत्तमो वकारः । चतुर्थः पञ्चमश्च वर्णः आ ई इति सर्वत्र समान एव । एवं च निरुक्तदिने वा जा ई इति कालनित्याविद्या सिद्धा । पद्धतौ तु विदिताष्टाङ्गस्य ज्ञानोपाय उक्तः । तत्तद्दिने वर्षाक्षरमाद्यं मासाक्षरं द्वितीयं तृतीयं दिनाक्षरमिति । तेन निरुक्तदिने व वर्षः, आ मासः, ज दिनं इति वा ज । ई इति । एताः कालनित्या एकपरिवृत्तौ यावन्ति दिनानि तावत्संख्याताः । तेन प्रतिपरिवृत्त्यादिदिने आरम्भः, अन्तदिने समाप्तिः । युगान्ते कतिपयदिवसशेषे विद्याद्वयं द्वयम् । एकैकस्मिन्दिने कृत्वा विद्यासमाप्तिः । तदुक्तं श्रीतन्त्रराजे—"शेषास्त्वन्ते द्विशः स्मृताः" इति । युगान्ते कतिदिनशेषे विद्याद्वयं भवतीत्येतदपि श्रीगुरुचरणैः चषके निरूपितम् ॥ २३८ ॥

पूर्णमण्डलवर्णैर्निरुक्तैः । न्यासप्रकारस्त्वग्रिमोल्लासे वक्ष्यते । अशक्तस्य पक्षान्तरमाह—मातृकेति । न्यासं नामपारायणऋष्यादिन्यासम् ॥ २३९ ॥

तदेवाह—ऋषिरित्यादि ॥ २४० ॥

तद्विद्या तद्दिनकालनित्या । न्यासं कराङ्गन्यासम् । ध्यानमाह—रक्तामिति ॥२४१॥

ऊर्ध्वाधो वामदक्षत आयुधानि । विशिखा बाणाः । मुख्यपारायणादौ ॥ २४२ ॥

दिननित्यामुखे देवि योजयेदेकशः क्रमात् ।
भगमालातुष्टिमध्ये प्रजपेच्च यथाक्रमात् ॥२४३॥
दीपिनीपादुकाभ्यां च पूर्ववत्तु समापयेत् ।
अङ्गपारायणं देवि कृत्वैवं मुख्यमाचरेत् ॥२४४॥
भगमालातुष्टिमध्ये कृत्वा पूर्वनिरूपिताः ।
कालनित्याः क्रमाद्देवि पारायणमिदं भवेत् ॥२४५॥
रसाङ्गभूतविद्याभिरेकः पर्याय ईरितः ।
दीपिनीपादुकाभ्यां च पर्यायान्ते समापयेत् ॥२४६॥
एवं रसाग्निपर्यायैरेकं पारायणं भवेत् ।
सकृत् पारायणेनैव मन्त्रसिद्धिः प्रजायते ॥२४७॥

---

अङ्गपारायणमेवाह—दिनेत्यादि । दिननित्या तद्दिनकालनित्या । तस्या मुखे आदौ एकैकशः । मातृकावर्णानिति शेषः । पूर्वमङ्गपारायणे मातृकाया एव योगात् ॥ २४३ ॥

दीपिनीपादुकाभ्यां पूर्ववत् समाप्तिः । मुख्यं पारायणमङ्गपारायणं यथा । पूर्वोक्तसप्तम्यां दिननित्या वा जा ई इति । अनयैव प्राणायामो न्यासश्च । ४ मू० ८ आ अं वा जा ई ई हंसः । ४ मू० ८ आ आं वा जा ई इत्यादि ॥ २४४ ॥

पारायणमाह—भगमालेत्यादि ॥ २४५ ॥

रस ६ षट् । अग सप्त । भूत ५ पञ्च । ५७६ षट्सप्तत्युत्तरपञ्चशतविद्याभिरेकः पर्यायः । यथा ४ मू० ८ आ अ आ ई ई हंसः १।४ मू० ८ आ अकाई ई हंसः २ । इत्यादि ४ मू० ८ आ अ क्षाई ई हंसः ३६ इत्यन्तं षट्त्रिंशत् ४ मू० ८ आ आ आ ई० ३७।४ मू० ८ आ आ का ई० ३८ इत्यादि ४ मू० ८ आ आ क्षा ई० ७२ इत्यन्तं द्विसप्ततिः । एवमेव प्रथमेऽकारस्थाने इकारादिविसर्गान्तचतुर्दशनिवेशनेनैकैकस्य षट्त्रिंशद्भेदे षट्सप्तत्युत्तरपञ्चशतविद्यात्मकः प्रथमः अकारपर्यायः । पर्यायान्ते दीपिनीपादुकाभ्यां समाप्तिः ॥ २४६ ॥

रस ६ षट्, अग्नि ३ त्रयः, ३६ षट्त्रिंशत् । अ आ ई ई इत्यादि स्थाने ककाकिकी खखाखिखी इत्यादि क्षक्षाक्षिक्षीत्यन्तानां निवेशने षट्त्रिंशत् कपर्यायः, खपर्याय इत्यादि सिध्यति । अधिकारिप्रवृत्तये पारायणं स्तौति—सकृदिति ॥ २४७ ॥

पुरस्क्रिया पूजनं च नित्यकर्माद्यनुष्ठितिः ।
नामपारायणस्येह कलां नार्हन्ति षोडशीम् ॥२४८॥
षट्त्रिंशद्भिश्च त्रिंशद्भिरष्टादशभिरेव च ।
पक्षेण वाथ नवभिः सप्तभिर्वा दिनेन वा ॥२४९॥
एकैकशः पञ्चमे च द्वाभ्यां च द्वितयेन च ।
त्रिंशद्वैगुण्ययोगेन चतुर्भिश्च महेश्वरि ॥२५०॥
षट्पञ्चकेन षड्भिश्च क्रमात् पारायणं चरेत् ।
मासोदयादिष्वारभ्य मासान्ताद्यवधिक्रमात् ॥२५१॥
ऋतुचन्द्रागपक्षाश्विसंख्यातस्तु जपो भवेत् ।
शुद्धो दिनोत्थो मासोत्थो युगोत्थो मिश्र एव च ॥२५२॥

---

कला अंशः । तत्साम्यमिति भावः ॥ २४८ ॥

पारायणं कियद्दिवसैः समापनीयम् । तदाह—षट्त्रिंशदित्यादि । पक्षेन पञ्चदशभिः समाप्तिः, कार्येति शेषः ॥ २४९ ॥

तेषु दिनेषु समापनप्रकारमाह—एकेति । षट्त्रिंशद्भिर्दिनैः समापने प्रत्यहमेकैकपर्यायः । त्रिंशद्दिनपक्षे पञ्चमे पञ्चमे दिने द्विद्विपर्यायः । यथा – पञ्चमदशमपञ्चदशविंशतितमत्रिंशत्तमेषु दिनेषु द्वयम् । अन्यदिनेष्वेकमित्यष्टादशदिनपक्षे प्रत्यहं पर्यायद्वितयेन, पञ्चदशदिनपक्षे त्रिंशद्दिनपक्षद्वैगुण्येन । यथा—एकपर्यायदिनेषु द्वयम् द्विपर्यायदिनेषु चतुष्टयमिति । नवदिनपक्षे प्रत्यहं चतुर्भिः ॥ २५० ॥

सप्तदिनपक्षे षट्सु दिनेषु पञ्चकेन सप्तमे षड्भिरिति । एवंविधपक्षेष्वारम्भे कालनियममाह—मासोदयादीति । षट्त्रिंशद्दिनपक्षे मासोदयदिने आरम्भः । आदिपदात् त्रिंशद्दिनपक्षे चान्द्रमासादौ । अष्टादशपक्षे तान्त्रिकमासाद्ये ऊनविंशतितमे वा दिने । पञ्चदशपक्षे प्रतिपदि पक्षादौ । नवपक्षे प्रकाशवासरे । सप्तपक्षे भानुवासरे । एकदिनपक्षे निरुक्तान्यतमदिने । आदिना त्रिंशद्दिनाष्टादशदिनान्तादीनां संग्रहः । मासान्तेति समाप्तावपि नियमः प्रदर्शितः । नन्वत्र त्रिंशत्पक्षे कामेश्वरीनित्यायामारम्भो युक्त इति चेन्न, "दिनतो वारतः पक्षाद् मासात्षट्त्रिंशता दिनैः" इति श्रीतन्त्रराजे त्रिंशत्पक्षस्य मासपदेनोपादानात् ॥ २५१ ॥

विशिष्टपारायणे विद्याजपसंख्यामाह—ऋत्विति । ऋतु ६ षट्, चन्द्र १ एकः, अग ७ सप्त, पक्ष २ द्वौ, अश्वि २ द्वौ । २२७१६ षोडशोत्तरसप्तशताधिकद्वाविंशतिसहस्रमितः । अङ्गपारायणे ५३ त्रिपञ्चाशत्, मुख्ये ५७८ अष्टसप्तत्युत्तरपञ्चशतम् । मिलित्वा

**तत्तद्वर्णारम्भयोगादष्टधा चैकधा क्वचित् ।**
**अथान्यच्छृणु देवेशि मन्त्रपारायणाभिधम् ॥२५३॥**

---

६३१ एकत्रिंशदुत्तरषट्शतम्—इत्येकदिनसंख्या । एवं षट्त्रिंशद्दिवससंख्यामेलने निरुक्तसंख्यासिद्धिः । इयं च षट्त्रिंशद्दिनपक्षाभिप्रायेणोक्ता । अष्टादशदिवसादिपक्षेषु अङ्गपारायणस्य प्रतिपर्यायमावृत्त्यभावान्न प्रोक्तसंख्यासिद्धिः । "अङ्गं सकृदनुष्ठेयं सर्वपक्षेषु शङ्करि" इति रुद्रयामलवचनादङ्गस्यावृत्तिर्नास्ति । इति संख्यामुक्त्वा पारायणभेदमाह—शुद्ध इत्यादि ॥ २५२ ॥

तेषां लक्षणमाह—तत्तदिति । शुद्धस्तु यथोक्त एव । दिनोत्थस्तु तत्तद्दिनाक्षरमारभ्य तत्पूर्वाक्षरान्ते समापनम् । यथा—षट्त्रिंशत्पक्षे प्रथमदिने दिनाक्षरस्य अकारत्वात् अ आ ई अकाई इत्यादि अः आ ई इत्यन्तम् । द्वितीयदिने दिनाक्षरस्य ककारत्वात् ककाई खखाई इत्यादि क खा ई इत्यादिक आ ई इत्यन्तं षट्त्रिंशत् । ततः का का ई इत्यादि का आ ई इत्यन्तम् । एवं कः का ई इत्यादि कः आई इत्यन्तम् । तृतीयदिने ख खा ई इत्यादि खःकाई इत्यन्तम् । चरमदिने क्ष क्षा ई इत्यादि क्षःकाई इत्यन्तम् । अष्टादशादिपक्षेऽपि तत्तद्दिनाक्षरादारभ्य पूर्वाक्षरान्तं पर्यायद्वयादिकं समापनीयम् । मासोत्थस्तु प्रकृतमासाक्षरमारभ्य तत्पूर्वमासाक्षरान्तं प्रकृतमासस्य आकारत्वात् आ आ ई ई इत्यादि वर्षाक्षरस्य अकारस्य आ सा परात्मक आकारादि तत्पूर्वं आकारान्तषोडशयोगेन अ क्षा ई इत्यन्तं प्रथमदिने । द्वितीयादिदिनेषु का आ ई खा आ ई इत्यादि क क्षा ई ख क्षा ई इत्याद्यन्तं समापयेत् । युगोत्थस्तु युग इति परिशेषाद् वर्षाक्षरम् । तदारभ्य तत्तत्पूर्वान्तं समापयेत् । यथा प्रकृतवर्षाक्षरस्य वकारत्वात् प्रथमदिने व आ ई इत्यादि वः आई इत्यन्तम् । द्वितीयदिने श आई इत्यादि शः क्षाई इत्यन्तम् । चरमदिने ल आई इत्यादि लः क्षा ई इत्यन्तम् । अथ मिश्रभेदः । स च चतुर्विधः—दिनमासोत्थो मासयुगोत्थो युगदिनोत्थो दिनमासयुगोत्थश्चेति । दिनमासोत्थो यथा—प्रथमदिने आ आ ई इत्यादि अ क्षा ई इत्यन्तम् । द्वितीयदिने का का ई इत्यादि कक्षाई इत्यन्तम् । तृतीयदिने खा खा ई इत्यादि कः का ई इत्यन्तम् । चरमदिने क्षा क्षा ई इत्यादि क्षः का ई इत्यन्तम् । अष्टादशादिपक्षेऽपि तत्तद्दिननामाक्षरादेव पर्यायद्वयादेरारम्भः । मासयुगोत्थो यथा वा आ ई इत्यादि व क्षा ई इत्यन्त प्रथमदिने । द्वितीयदिने शा आ ई इत्यादि श क्षा ई इत्यन्तम् । चरमदिने ला आ ई इत्यादि ल क्षा ई इत्यन्तम् । युगदिनोत्थो यथा—व आ ई इत्यादिवः क्षाई इत्यन्तं प्रथमदिने । द्वितीयदिने श का ई इत्यादि शः आ ई इत्यन्तम् । चरमदिने ल क्षा ई इत्यादि लः का ई इत्यन्तम् । दिनमासयुगोत्थो यथा—प्रथमदिने वा आ ई इत्यादि व क्षा ई इत्यन्तम् । द्वितीयदिने शा का ई इत्यादि श ।

शृणु तस्य विधानं वै सम्यक् संयतमानसा ।
तत्र श्रीमातृकादेवि शुद्धा बिन्दुयुता तथा ॥२५४॥
विसर्गयुक्ता ताभ्यां च चतुर्धा संप्रकीर्तिता ।
माया च वाग्भवं कामराजं बीजत्रयं स्मृतम् ॥२५५॥
काली कला मालिनी च मातङ्गी विजया जया ।
तथा भगवती देवी शिवा चैव तु शाम्भवी ॥२५६॥
एतानि दश नामानि शृणु मन्त्रानथेश्वरि ।
आद्यं तु शक्तिबीजं स्यात्तुष्टिस्था वह्निवायुराः ॥२५७॥

---

आ ई इत्यन्तम् । चरमदिने ला क्षा ई इत्यादि लः का ई इत्यन्तम् इति । अत्र षट्त्रिंशदष्टादशनवदिनपक्षेषु मासान्तरप्राप्तिसंभावनाभावान्न कापि शङ्का । त्रिंशत्पञ्चदशसप्तदिनपक्षेषु मासोत्थपारायणपक्षे मध्ये मासान्तरप्राप्तौ कथं कर्तव्यमिति चेदुच्यते—यथा प्रकृताषाढशुक्लप्रतिपदि अमाशेषदिने त्रिंशद्दिनपक्षेण मासोत्थपारायणे कर्तव्ये प्रथमदिने आ आ ई इत्यादि अः क्षा ई इत्यन्तम् । द्वितीयदिने का आ ई इत्यादि कः क्षा ई इत्यन्तम् । एवं पञ्चमदिने घा आ ई इत्यादि घः क्षा ई इत्यन्तम् । ङा आ ई इत्यादि ङः क्षा ई इत्यन्तं च पर्यायद्वयं समाप्य षष्ठदिने ६ मासस्य प्राप्तत्वात् चि आ ई इत्यादि चाक्षाई इत्यन्तम् । सप्तमदिने छिआई इत्यादि चरमदिने क्षि आ इत्यादि क्षा आई इत्यन्तं समापयेत् । एवं मध्ये वर्षान्तरप्राप्तौ तु युगोत्थेन किञ्चिद्वैषम्यं तद्वर्षाक्षरस्य प्रथमदिने एवारम्भे उपयोगादिकं सुधीभिरूहनीयम् । अत्र पक्षेनेति पक्षपदं पञ्चदशदिनोपलक्षकम्, त्रिंशद्वैगुण्ययोगेनेति वचनानुरोधात् । एतेन पक्षे मासे वाऽन्यूनाधिकदिने एव पारायणं कर्तव्यमित्यपि ज्ञेयम् । मध्ये विघ्नसंभवे कालान्तरे पुनरारम्भादेव कर्तव्यम्, मासान्ताद्यवधीति समाप्तिकालस्यापि नियतत्वादिति ।

एवमष्टविधस्यापि नामपारायणस्य क्वचित् अवर्षप्रथमदिने एकता ऐक्यम्, तद्दिने वर्षमासदिनाक्षराणामैक्येनाष्टविधपारायणस्याप्येकरूपत्वादिति भावः । एवमेव द्वित्रिभेदैक्यं दिनान्तरेष्वप्यूहनीयम् । मन्त्रपारायणं वक्तुमाह--अथेति ॥ २५३ ॥

तस्यातिगहनत्वेन सम्यक् शृण्वित्याह---शृण्वित्यादि । मातृकेत्यपि एकपञ्चाशद्वर्णसमुदायस्यैव ग्रहणम्, न त्रिपञ्चाशद्वर्णमय्याः, वक्ष्यमाणसंख्याविरोधात् ॥ २५४ ॥

शुद्धा बिन्दुयुता विसर्गयुता बिन्दुविसर्गयुतेति चतुर्विधा । मायादिबीजत्रयम् ॥ २५५ ॥

कालीत्यादि शाम्भवीत्यन्तं दश नामानि ॥ २५६ ॥

शक्तिबीजं प्रथमो मन्त्रः । तुष्टि ई । वह्नि ह । वायु स र । स्वरूपम् ॥ २५७ ॥

बिन्दुयुक्ताऽथ तुष्टिस्थो वायुवह्नियुतश्च रः।
बिन्दुयुक्तो हैमवतीमन्त्रः स्यात्तु द्वितीयकः ॥२५८॥
नेत्रमन्त्रस्तृतीयः स्यात्तुर्यो वाग्वादिनी भवेत्।
द्वितीया या तु चक्रेशी भैरवी सा तु पञ्चमी ॥२५९॥
मायाषष्ठस्तु हृल्लेखा सौभाग्याख्या तु सप्तमी।
त्रिपुरेत्यत्र सा प्रोक्ता प्रासादयुगमन्ततः ॥२६०॥
पराप्रासादरूपा साप्यष्टमः कथितः शिवे।
द्वादशार्धा तु नवमो बाला तु दशमो भवेत्।
प्राणानायम्य लिपिभिर्मूलऋष्यादि विन्यसेत् ॥२६१॥
मायावाग्भवकामराजनयनां शुद्धादिवर्णोल्लसद्-
बाहूनां च चतुष्टयेन रुचिरां काल्याद्यनेकाभिधाम्।
नानारूपतनुं च शक्तिवदनानेकान्तविद्यां शिवां
स्मृत्वैवं जननीं सकृज्जनुषि नो भूयः स्मृतिं प्राप्नुयात् ॥२६२॥

---

हकारसकारयोर्व्यत्यासेनाह—वायुवह्नीति। ह्रीं स्ह्रीं। इति। अयमेव हैमवती-मन्त्रो द्वितीयः ॥ २५८ ॥

नेत्रमन्त्रो वौषट्। वाग्वादिनी ऐं ह्रीं सौः वद वद वाग्वादिनी स्वाहा इति तुर्यश्चतुर्थः। द्वितीया चक्रेशी ह्रौं क्लीं ह्रौं इति। सैव भैरवी ॥ २५९ ॥

मायैव प्रकृते हृल्लेखाख्या सौभाग्या कादिविद्या। सैव त्रिपुरेत्युक्ता। प्रासादयुगं प्रासादपरा पराप्रासादः ह्सौः स्हौः इति। अन्ततः त्रिपुरानन्तरम् ॥ २६० ॥

पूर्वोक्तबीजद्वयात्मिका पराप्रासादा द्वादशार्धा। ह्क्तडै हक्लडीं ह्क्तडाः। एवं पारायणोपयुक्तमन्त्रादीनुक्त्वा पारायणक्रममाह—प्राणेत्यादि। लिपिभिः मातृका-वर्णैः। मातृकान्यासोक्तरीत्या। षट्चरणः श्लोकः ॥ २६१ ॥

ध्यानमाह—मायेति। प्रोक्तमायादिबीजत्रयमेव नेत्रत्रयम्। शुद्धादिचतुर्विध-मातृकैव बाहुचतुष्टयम्। अनेके दश। कालीत्यादि दश अभिधा नामानि। नाना इति शून्यद्वयं रू द्वौ प एकं त षट् नु शून्यम्। तेन ६१२०० द्विशतोत्तरैकषष्टिसहस्रमुख्य-पारायणविद्यावतीत्यर्थः। शक्तिमुखाः या अनेकाः दशसंख्याता अन्ते विद्या यस्याः। जनुषि जन्ममध्ये सकृदेकवारमपीत्यर्थः। एवमुक्तरूपेण मन्त्रपारायणमयीं स्मृत्वा भूयः सृतिं संसरणं नो प्राप्नुयात् ॥ २६२ ॥

ध्यात्वैवं पञ्चधा पूज्य चाङ्गपारायणं चरेत् ।
भगमालातुष्टिमध्ये प्रजपेत्तु यथाक्रमात् ॥२६३॥
मायां कालीं शक्तिमथ कलां हैमवतीं तथा ।
मालिनीं नेत्रमपि च मातङ्गी वै वाग्वादिनी ॥२६४॥
विजयां भैरवीं तद्वज्जयां हृल्लेखिकामपि ।
त्रिपुरान्त्यां भगवतीं देवीं प्रासादिकामपि ॥२६५॥
शिवां च द्वादशार्धां च बालां तां शाम्भवीं तथा ।
दशधैवं प्रजप्यैवं मायास्थाने तथेश्वरि ॥२६६॥
वाग्भवं कामराजं च त्रिंशद्विद्या भवेच्छिवे ।
दीपनीपादुकाभ्यां च पूर्ववत्तु समापयेत् ॥२६७॥
अथ पारायणं कुर्यात्तद्विधानं शृणु प्रिये ।
मायां कालीं शक्तिमपि योजयित्वा जपेच्छिवे ॥२६८॥
मायाकालीमध्यभागे मातृकैकैकशो भवेत् ।
शुद्धा बिन्दुयुता तद्वद् विसर्गाढ्योभयाढ्यका ॥२६९॥

---

अङ्गपारायणमेवाह—भगमालेत्यादि ॥ २६३ ॥

तत्प्रकारमाह—मायामित्यादि । प्रोक्तनामदशके मन्त्रदशके प्रथमनामप्रथम-मन्त्रयोगेन, द्वितीयनामद्वितीयमन्त्रयोगेनेत्यादि दशमनामदशममन्त्रयोगेनेत्यन्तं दशकं मायावाग्भवकामराजबीजेषु प्रत्येकं योगेन त्रिंशन्मन्त्रावृत्तिरूपमङ्गपारायणम् । यथा । ४ ॥ मू॰ ८ आह्लींकाली सौः ई हंसःकाली सोः इति स्थाने कला ह्लीस्ह्लीं । २ । मालिनी वौषट् । ३ । मातङ्गीं ऐं ह्लीं स्वाहा । विजया स्तै २ । ४ जपा ह्ली ६ । भगवती मू॰ ७ देवी ह्सौः स्हौः = शिवा, हृत्क्लडें । ९ । शाम्भवी ऐं २ । १० । इत्यादि निवेश्य प्रजपेत् । एवं दशधा प्रजप्य मायास्थाने वाग्भवं कामराजं च निवेश्य जपे कृते त्रिंशद्विद्याजपो भवेदित्यन्वयः । दीपिनीपादुकाभ्यामन्ते समाप्तिः ॥ २६४ ॥

त्रिपुरा सौभाग्यविद्या अन्ते यस्याः । भगवतीं त्रिपुरामिति यावत् । एवमेव बालां तां शाम्भवीमित्यपि ॥ २६५--२६७ ॥

पारायणं वक्तुमाह—अथेति । मायेति ह्लीं । काली सौः इति । एतदाई मध्ये योजयित्वा ॥ २६८ ॥

मायाकाल्योः ह्लीं काली इत्यनयोर्मध्ये । शुद्धेत्यादि चतुर्विधमातृकाणामेकैकशो योजनं भवेत् । उभयाढ्या बिन्दुविसर्गयुता ॥ २६९ ॥

ततो वाग्भवकामौ च मायास्थाने निवेश्य तु ।
चतुर्विधां मातृकां वै योजयेत् परमेश्वरि ॥२७०॥
दीपिनीपादुकाभ्यां च पूर्ववत्तु समापयेत् ।
तेन विद्या भवेद्देवि वेदचन्द्रर्तुसंमिता ॥२७१॥
एवमेकैकशो देवि कालीस्थाने कलादिकम् ।
शक्तिस्थाने ततो देवि हैमवत्यादिकं भवेत् ॥२७२॥
एवं च खाभ्रादिचन्द्ररससंख्या भवन्ति वै ।
दिवसानां शतेनाथो तथा पञ्चाशतापि वा ॥२७३॥
विंशत्या दशभिश्चैव भवेत् पारायणं शिवे ।
नाम्नामेकं द्वयं पञ्च दशकं चेति वै क्रमात् ॥२७४॥

---

एवं चतुर्विधमातृकैकैकाक्षरयोगेन प्रजप्य ह्रीं इत्यस्य स्थाने ऐं इति क्लीं इति च क्रमेण संयोज्य चतुर्विधां मातृकां पूर्ववद् योजयेत् । यथा । ४ । मू० ८ आ० ह्रीं अं काली सौः ईं हंसः । ह्रीं आं काली सौः । ह्रीं ईं काली सौः इत्यादि ह्रीं क्षं काली सौः इत्यन्तं शुद्धमातृकां जपेत् । अत्र शुद्धेऽपि बिन्दुयोगो बीजत्वसिद्धये साम्प्रदायिक इत्याद्यखिलपद्धतिकृतां मतम् । ततः पुनः ह्रीं अं काली सौः इत्यादि ह्रीं क्षं काली सौः इत्यन्तं बिन्दुमातृकायोगेन प्रजप्य पुनः ह्रीं अः काली सौः इत्यादि ह्रीं क्षः काली सौः इत्यन्तं विसर्गयुतमातृकायोगेन प्रजप्य पुनः ह्रीं अं काली सौः इत्यादि ह्रीं क्षं काली सौः इत्यन्तं बिन्दुविसर्गमातृकायोगेन प्रजपेत् । ततः ऐं अं काली सौः इत्यादि ऐं क्षंः काली सौः इत्यन्तं वाग्भवयोगेन प्रजप्य पुनः क्लीं अ काली सौः इत्यादि क्लीं क्षंः काली सौः इत्यन्तं प्रजपेत् ॥ २७० ॥

दीपिनीपादुकाभ्यां समाप्तिः । विद्यासंख्यामाह—वेदेत्यादि । वेद ४ । चन्द्र १ । ऋतु ६ । तेन ६१४ चतुर्दशोत्तरषट्शतं दीपिनीपादुकाभ्यां सह संख्या ॥ २७१ ॥

एवं कालीपदस्थाने ह्रीं अं कला सौः इत्यादि कलामालिनीत्यादि नामयोगः । एवं नामदशकसमाप्त्यनन्तरं शक्तिबीजस्थाने हैमवत्यादिमन्त्रयोगः ॥ २७२ ॥

नामदशकस्य प्रतिपर्यायमेकैकयोगेन दश पर्यायाः । एवं प्रतिपर्यायदशके मन्त्रदशकस्यैकैकमन्त्रयोगेन शतं पर्यायाः । तत्संख्यामाह—खाभ्रेत्यादि । ख ० अभ्र ० अब्धि ४ चन्द्र १ रस ६ तेन ६१४०० चतुःशतोत्तरैकषष्टिसहस्रसंख्या जाता । इयं संख्या मुख्यपारायणस्य । कियद्भिर्दिवसैरिदं पारायणं कर्तव्यं तदाह—दिवसानामिति ॥ २७३ ॥

तत्प्रकारमाह—नाम्नामित्यादि । कालीत्याद्येकैकनामयुक्तैकैकपर्यायस्य प्रत्यहं

मन्त्रपारायणं देवि प्रोक्तमेतच्छुभावहम् ।
मन्त्रसिद्धिकरं देवि सुन्दरीप्रीतिकारकम् ॥२७५॥

अथान्यच्छृणु देवेशि चक्रपारायणं शुभम् ।
चतुस्तारशक्तिपुटमूलेन तु महेश्वरि ।
प्राणानायम्य मूलस्य ऋष्यादीन् विन्यसेत्ततः ॥२७६॥

मायावाग्भवशक्तितारकरमासंभिन्नमात्राननां
श्रीचक्रात्मकमध्यभागरुचिरां श्रीनाथनित्याङ्घ्रिकाम् ।
ज्ञानाज्ञाननयाङ्गभेदसुभगां स्वात्मैकशक्तिं जनः
स्मृत्वा तां शिवसुन्दरीं त्रिभुवने कर्ता भवेदञ्जसा ॥२७७॥

पञ्चधा पूजनं कृत्वा त्वङ्गपारायणं चरेत् ।
भगमालातुष्टिमध्ये प्रजपेच्च यथाक्रमात् ॥२७८॥

मायां च वाग्भवं शक्तिं तारं लक्ष्मीं तथैव च ।
चक्रेश्वरीमनुं नाम त्रिपुरादिक्रमाच्छिवे ॥२७९॥

---

करणं शतदिनपक्षे । पञ्चाशद्दिनपक्षे नामद्वयम्, विंशतिपक्षे नामपञ्चकम्, दशदिनपक्षे नामदशकम् ॥ २७४ ॥

साधकप्रवृत्तये स्तौति—मन्त्रेति ॥ २ ५ ॥

श्रीचक्रपारायणं वक्तुमाह—अथेत्यादि । तत्रादौ प्राणायाममाह—चतुरिति । चतुस्तारशक्तीति पञ्चभिर्बीजैः पुटितेन मूलेन ४ । सौ० मू० सौः ॐ ऐं ह्रीं श्रीं इति । संपुटलक्षणं दशमे उदाहृतम् । मूल ऋष्यादीन् विन्यसेत् । षट्चरणः श्लोकः ॥ २७६ ॥

ध्यानमाह—मायेति । तारकः प्रणवः । रमा लक्ष्मीः । इति मायादिपञ्चबीजैः संभिन्ना संयुक्ता या माता मातृकासंबन्धिराकारः, सैवानने मुखे आदौ यस्याः । आकारोत्तरवृत्तिहृल्लेखादियुतेति भावः । श्रीचक्रपदेन श्रीचक्रस्थावरणदेवताः । तदात्मकमध्यभागशोभिताम् । श्रीनाथा नित्याश्चाङ्घ्रौ चरमे यस्याः । ज्ञानाज्ञानन इति पञ्चशून्यम् । य इत्येकं तेन १००००० लक्षविद्यात्मको योऽङ्गभेदः अवान्तरस्वशरीरभेदः, तेन सुभगाम् । ईदृशीं पारायणात्मिकां स्वात्माभिन्नां शक्तिम् । त्रिभुवने कर्ता शिवः ॥ २७७-२७८ ॥

अङ्गपारायणमेवाह—मायामित्यादि । मायादिबीजपञ्चकं चक्रेश्वरीमन्त्रम् । त्रिपुरादिक्रमेण नाम च ॥ २७९ ॥

चक्रेश्वरीति देवेशि प्रत्येकं नवधा जपेत् ।
दीपिनीपादुकाभ्यां तु पूर्ववत्तु समापयेत् ॥२८०॥

अथ पारायणं कुर्यात् क्रमात्तच्छृणु शङ्करि ।
माया च वाग्भवं शक्तिस्तारो लक्ष्मीर्महेश्वरि ॥२८१॥

बीजानां पञ्चकं देवि तद्वन्नामान्यपि शृणु ।
षडङ्गदेवता नित्याः षोडशाथो महेश्वरि ॥२८२॥

श्रीगुरुश्चाणिमाद्याश्च कामाकर्षिणिकादिकाः ।
अनङ्गकुसुमाद्याश्च सर्वसंक्षोभिण्यादिकाः ॥२८३॥

सर्वसिद्धिप्रदाद्याश्च सर्वज्ञाद्या महेश्वरि ।
वशिन्याद्यास्त्रदेव्यश्च कामेश्वर्यादिकास्तथा ॥२८४॥

सर्वान्ते तु महादेवि महात्रिपुरसुन्दरी ।
शरपक्षेन्दुसंख्यानि नामान्येतानि शङ्करि ॥२८५॥

प्रकाशाद्यास्तु गुर्वन्ता दश नाथाः समीरिताः ।
त्रिपुरसुन्दरिप्रान्ता नित्याश्चापि तु षोडश ॥२८६॥

---

चक्रेश्वरी इति स्वरूपम् । यथा ४ । मू८ । ह्रीं ऐं सौः ॐ अं आं सौः-त्रिपुरा चक्रेश्वरी ई हंसः इत्यादि नवधा । दीपिनीपादुकाभ्यां समाप्तिः ॥ २८० ॥

पारायणं वक्तुमाह—अथेत्यादि ॥ २८१ ॥

मायादिबीजपञ्चकम् । नामान्येवाह—षडङ्गेत्यादि ! हृदयदेव्यादि षडङ्गदेवताः । कामेश्वर्यादि षोडशनित्याः ॥ २८२ ॥

स्वनाम्ना गुरुरेकः । अणिमाद्या अष्टाविंशतिः । कामाकर्षिण्याद्याः षोडश । अनङ्गकुसुमाद्या अष्टौ । सर्वसक्षोभिण्याद्याश्चतुर्दश ॥ २८३ ॥

सर्वसिद्धिप्रदाद्या दश । सर्वज्ञाद्या दश । वशिन्याद्या अष्टौ । अस्त्रदेव्यो बाणिन्याद्याश्चतस्रः । कामेश्वर्याद्यास्तिस्रः ॥ २८४ ॥

महात्रिपुरसुन्दर्येका इति शर ५ पक्ष २ इन्दु १ संख्यानि १२५ सपादशतनामानि ॥ २८५ ॥

प्रकाशादिनवानामन्ते गुरुरेकः । स्वनाम्ना इति दश नाथाः । त्रिपुरसुन्दर्यन्ताः नित्याः षोडश ॥ २८६ ॥

भगमालातुष्टिमध्ये प्रजपेत्तु यथाक्रमात् ।
मायां हृदयदेव्यात्मक प्रकाशाच्च नन्द वै ॥२८७॥
नाथशक्ति ततः कामेश्वरी नित्येति कीर्तयेत् ।
एवं हृदयदेव्यादि महात्रिपुरसुन्दरी ॥२८८॥
पर्यन्तं तु प्रजप्याथो हृल्लेखायां महेश्वरि ।
वाग्भवादिकमुच्चार्य लक्ष्मीबीजान्तकं शिवे ॥२८९॥
शरपक्षर्तुसंख्याता तेन विद्या महेश्वरि ।
दीपिनीपादुकाभ्यां च पूर्ववत्तु समापयेत् ॥२९०॥
एवमेकैकशो नाथान् प्रजप्य दशसंख्यकान् ।
नित्यास्तत्रैकशो योज्याः पर्यायास्तेन षोडश ॥२९१॥
खखाभ्राकाशगगनचन्द्रसंख्या समीरिता ।
षष्ट्युत्तरशतेनाथो अशीत्या च महेश्वरि ॥२९२॥

---

एवं पारायणावयवबीजादिक मुक्त्वा पारायणमन्त्रमाह –मायेत्यादि । आच्च । वै ॥ २८७ ॥

तत इति त्यक्त्वा हृदयेत्यादि नित्येत्यन्तं स्वरूपम् । यथा ४ । मू ८ आ ह्लीं हृदयदेव्यात्मकप्रकाशानन्दनाथशक्ति कामेश्वरीनित्या ई हसः । एवं उक्तरीत्या । हृदयदेवीत्यादि महात्रिपुरसुन्दरीपर्यन्तं प्रजप्येत्यन्वयः । सुन्दरीपर्यन्तमिति पदमध्ये श्लोकसमाप्तिरार्षा ॥ २८८ ॥

एवं हृल्लेखायोगेन सप्तादशतनामानि हृदयदेव्यादिमहात्रिपुरसुन्दर्यन्तानि प्रजप्य । हृल्लेखास्थाने वाग्भवशक्तितारलक्ष्मीबीजानां प्रत्येकं योगेन प्रजपेत् ॥ २८९ ॥

तत्संख्यामाह—शरेत्यादि । शर ५, पक्ष २, ऋतु ६, तेन ६२५ सपादषट्शतम् । अन्ते दीपिनीपादुकाभ्यां समाप्तिः ॥ २९० ॥

द्वितीयादिदशमान्तदिनेषु क्रमेण प्रकाशपदस्थाने विमर्शादिस्वगुरुनामान्तयोगेन कामेश्वरीपर्यायं जप्त्वा ततः कामेश्वरीपदस्थाने भगमालिन्यादित्रिपुरसुन्दर्यन्तनाम-योगेन भगमालिन्यादिपर्यायान् पूर्ववत् प्रजपेत् ॥ २९१ ॥

विशिष्टसंख्यामाह—खेत्यादि । ख ० ख ० अभ्र ० आकाश ० गगन ० चन्द्र १ १००००० लक्षसंख्योक्ता । इयं च संख्या दीपिनीपादुकयोरङ्गपारायणस्य च संख्यां विहाय । क्रियद्भिर्दिनैः समापनीयं तदाह—षष्टीत्यादि ॥ २९२ ॥

द्वात्रिंशद्भिः षोडशभिर्दिनैः पारायणं भवेत् ।
एकद्विपञ्चदशभिर्नाथैः संपूर्णता भवेत् ॥२९३॥
चक्रपारायणं चैतत् सर्वत्रैव सुगोपितम् ।
सर्वथा गोपनं कार्यमेतस्य तु महेश्वरि ॥२९४॥
सकृत्पारायणं कृत्वा महायागफलं लभेत् ।
अशक्तस्तु पुरश्चर्याकरणे देवि साधकः ॥२९५॥
पारायणत्रयेणैव मन्त्रसिद्धिः प्रजायते ।
एकैकेनापि देवेशि पुरश्चर्याफलं लभेत् ॥२९६॥
नामपारायणाच्छ्रेष्ठं मन्त्रपारायणं शिवे ।
तस्मादपि महाश्रेष्ठं चक्रपारायणं पुनः ॥२९७॥
विनैतेन तु देवेशि निर्जीवमखिलं भवेत् ।
तस्मादेतत् साधकेन कर्तव्यं यत्नतः शिवे ॥२९८॥
एकैकेनापि देवेशि सर्वपापैः प्रमुच्यते ।
तस्मादेतत् साधकेन कर्तव्यं यत्नतः शिवे ॥२९९॥
यस्यैतत्त्रितयं देवि स देवैरपि पूज्यते ।
एतस्य सदृशं नैव विद्यते देवताप्रियम् ॥३००॥

---

कथमियद्दिनैः कर्तव्यं तदाह—एकेत्यादि । एकैकनाथैः षष्ट्युत्तरशतदिनैः, द्वाभ्यामशीतिदिनैः, पञ्चभिर्द्वात्रिंशद्दिनैः, दशभिः षोडशदिनैरिति । एवमुक्तदिनैः पारायणस्य सम्पूर्णता ॥ २९३ ॥

साधकप्ररोचनाय स्तौति—चक्रपारायणमिति । सर्वत्र तन्त्रेषु । यतो गोपितमतो गोपनं कार्यम् । अयोग्ये न वक्तव्यमिति भावः ॥ २९४ ॥

महायागः स्वतन्त्रमूलकः पद्धतावष्टमस्कन्धे प्रोक्तः ॥ २९५ ॥

त्रयेण नाममन्त्रचक्रसंज्ञकेन । मन्त्रसिद्धिः चतुर्गुणपुरश्चरणफलम् ॥ २९६ ॥

तस्मात् मन्त्रपारायणात् ॥ २९७ ॥

एतेन पारायणत्रयेण । निर्जीवं फलदानासमर्थमित्यर्थवादः ॥ २९८ ॥

एकैकेन पारायणेन ॥ २९९ ॥

यस्य क्रियाविषयम् एतत्त्रितयं पारायणम् ॥ ३०० ॥

**तस्मादेतत्तु देवेशि सर्वदैव समाचरेत् ।**
**एवं देवेशि संप्रोक्तः श्रीविद्यासाधने विधिः ।**
**अशेषतस्तु देवेशि किं भूयः श्रोतुमिच्छसि ॥३०१॥**

**इति श्रीपरमानन्दतन्त्रे प्रातःकृत्यसन्ध्यापारायणकथनं नाम चतुर्दशोल्लासः ॥ १४ ॥**

---

अत्र पद्धतिकृता श्रीचक्रपारायणोत्तरं कालचक्रपारायणं लिखितम् । तच्चोद्योतकृदादिशिष्टाहृतत्वात्समुन्नीततन्त्रमूलकमेव । श्रीतन्त्रराजे तु षड्विंशतितमपटले पूजायन्त्ररूपेण षट्सप्तत्युत्तरपञ्चशतभेदमेतदेव निरूपितम् । ग्रन्थविस्तरभयान्नेह किञ्चिद् विलिख्यते । सर्वपारायणेषु प्रोक्तरीत्या अष्टाङ्गविद्यायोग एतत्तन्त्राभिमतः । अन्यपद्धतिषु द्व्यङ्गचतुरङ्गद्वादशाङ्गषोडशाङ्गादियोग उत्तरज्ञानार्णवचिदम्बरनटकालोत्तरवासनाद्यनुरोधेनोक्तः । अत्र क्रमव्युत्क्रमेण नित्यास्त्रिंशदुक्ताः । उत्तरज्ञानार्णवे तु षोडशैव नित्याः प्रोक्ताः । तदनुरुद्धमपि बहुषु पद्धतिषु लेखनमनुपलभ्यते । अत एव पद्धतिकृता षोडशनित्यासम्प्रदाये तु इत्यादि प्रथमस्कन्धे लिखितम् । उपसंहरति—एवमिति । षट्चरणः श्लोकः ॥ ३०१ ॥

**सौभाग्यानन्दसंदोहे येनगापद्यबोधकः ।**
**परमानन्दटिप्पण्यामुल्लासोऽभूच्चतुर्दशः ॥१४॥**



# पञ्चदशोल्लासः

श्रीदेव्युवाच—

अनन्तरविधिं देव श्रोतुमिच्छामि तत्त्वतः ।
कथयस्व महेशान साधकानां हिताय च ॥१॥

श्रीभैरव उवाच—

शृणु देवेशि वक्ष्यामि साधकस्य विधिं ततः ।
सावधानेन मनसा शृणु तत् परमेश्वरि ॥२॥
एवं सन्ध्यादिकं कृत्वा भूशुद्ध्यादिकमाचरेत् ।
मातृकान्यासपर्यन्तं कृत्वा देवेशि पूर्ववत् ॥३॥
चक्रन्यासं द्विधा देवि कुर्यात् तद्विधिरुच्यते ।
कुलपद्मे सहस्रारे विषुवे च ततः परम् ॥४॥
आधारादिविशुद्ध्यन्तं लम्बिकायां भ्रुवोऽन्तरे ।
एवं नवविधे स्थाने तदूर्ध्वे तु महेश्वरि ॥५॥

---

एवं सन्ध्यादिकं श्रुत्वा तदनन्तरकर्तव्यं प्रष्टुं श्रीदेव्युवाचेति । तत्त्वतः यथोक्तरीत्या ॥ १ ॥

उत्तरं वक्तुं श्रीभैरव उवाचेति । ततः सन्ध्योत्तरम् ॥ २ ॥

एवमुक्तरीत्या । भूशुद्ध्यादिमातृकान्यासपर्यन्तं पूर्ववत् षष्ठोल्लासोक्तवत् ॥ ३ ॥

मातृकान्यासोत्तरं लघुश्रीचक्रन्यासं कुर्यात् । तत्स्थानान्याह—कुलेति । कुलपद्मे सुषुम्णाधःस्थे तद्विशेषणं सहस्रारे इति । विषुवं कुलमूलाधारयोर्मध्यस्थम् । तल्लक्षणमुक्तं त्रिपुरार्णवे—"चतुर्दलाधारपद्मादधस्ताद्विषुवाख्यकम् । षट्दलं रक्तवर्णं स्यात्" इति ॥ ४ ॥

आधारादिविशुद्ध्यन्तं पञ्चकम् । लम्बिका विशुद्ध्याज्ञयोर्मध्यस्था । भ्रुवोरन्तरम् आज्ञा, तदूर्ध्वे आज्ञोर्ध्वे ॥ ५ ॥

बिन्दौ तथार्धचन्द्रे च रोधिन्यां नाद एव च।
नादान्ते च तथा शक्तौ व्यापिकायां ततः परम् ॥६॥
समनायां तथोन्मन्यां महाबिन्दावथेश्वरि।
त्रिधा तु विन्यसेद् देवि स्थूलसूक्ष्मपरत्वतः ॥७॥
चक्रेश्वरीमनुं प्रोक्त्वा चतुरस्रत्रयात्मकौ।
त्रैलोक्यमोहनेत्युक्त्वा चक्राधिष्ठाथ त्र्यै वदेत् ॥८॥
अणिमाद्यष्टविंशतिशक्त्यथो सहितेति च।
प्रकटाद्यो गनीरूपायै पश्चात् त्रिपुरा तथा ॥९॥
देव्यै च हृदयं चैवमन्यत्रापि क्रमाद् वदेत्।
प्रोक्ताश्चक्रेश्वरीमन्त्राश्चतुरस्रं ततः परम् ॥१०॥
षोडशाष्टदले पद्मे चतुर्दशदशारकौ।
दशाष्टारौ त्रिकोणाख्यं बिन्दुश्चेति क्रमान्नव ॥११॥
त्रैलोक्यमोहनादीनि नामान्युक्तानि शङ्करि।
अणिमाद्यास्तथा कामाकर्षिण्याद्यास्ततः परम् ॥१२॥

---

एकैकाङ्गुले एकैकं चक्रम् ॥ ६ ॥

बिन्द्वादिमहाबिन्द्वन्त चक्रदशकम्। एवमूनविंशतिस्थानेषु स्थूलसूक्ष्मपरभेदात्त्रिधा चक्रन्यासं कुर्यात् ॥ ७ ॥

तन्मन्त्रानाह--चक्रेश्वरीति। इत्युक्त्वा। अथ वदेत् ॥ ८ ॥

अथो। इति च। आत्। पश्चात्। तथा ॥ ९ ॥

इति त्यक्त्वा चतुरस्रेत्यादि देव्यै इत्यन्तं स्वरूपम्। अन्यत्र वक्ष्यमाणान्यमन्त्रेषु चक्रेश्वरीमन्त्राश्चतुर्दशे उक्ताः। ततः परं क्रमान्नवेत्यन्वयः। अत्र चतुस्तारादिकान् देवि हृदन्तान् विन्यसेत् क्रमादिति षष्ठोक्तन्याससामान्यवचनात् सर्वत्र न्यासमन्त्रेष्वादौ चतुस्तारमते नम इति ज्ञेयम्। प्रकृते हृदयमिति प्रोक्तस्यैवानुवादः। एवमग्रेऽपि सर्वत्र ज्ञेयम्। अत एवाग्रे मूलविद्यान्यासादौ हृदयाद्यनुल्लेखः॥ १० ॥

षोडशदलम्, अष्टदलम्, चतुर्दशारः, दशारः, अष्टारः, त्रिकोणम्, बिन्दुरिति चतुरस्रत्रयादिनवचक्राकारनाम ॥ ११ ॥

अनङ्गकुसुमाद्याश्च सर्वसंक्षोभिण्यादिकाः ।
सर्वसिद्धिप्रदाद्याश्च सर्वज्ञाद्यास्तथेश्वरि ॥१३॥
वशिन्याद्यास्ततः पश्चात् कामेश्वर्यादिका अपि ।
षडङ्गायुधदशकं दलसंख्यासमाः शिवे ॥१४॥
प्रकटाद्या योगिन्यश्च त्रिपुराद्याः समीरिताः ।
बिन्द्वादौ तु ततः पश्चाच्चक्रेश्वर्या मनून् शिवे ॥१५॥
हृदन्ताश्च महाबिन्दौ मूलं लक्ष्म्यवसानकम् ।
अन्तश्चक्रन्यास एवं प्रोक्तो बाह्यमथो शृणु ॥१६॥
पादजानूरुमूले च नाभिहृत्कण्ठके तथा ।
मुखे नेत्रयुगे मूर्ध्नि स्थूलन्यासं समाचरेत् ॥१७॥

---

त्रैलोक्यमोहनं सर्वाशापरिपूरकमित्यादि सर्वानन्दमयमित्यन्तं चतुर्दशे चक्रनामानि चोक्तानि ॥ १२—१३ ॥

अणिमाद्या इत्यादि षडङ्गायुधदशेत्यन्तं नवकम् । अणिमाद्यष्टाविंशतीति शक्तिसंख्या प्रोक्ता । कामाकर्षिण्याद्यास्तु षोडशदलाष्टदलेति स्वस्वदलादिसंख्यासमाः । यथा—कामाकर्षिण्यादि षोडश । अनङ्गकुसुमाद्यष्ट । वशिन्याद्यष्ट । कामेश्वर्यादित्रीत्यन्तम् ॥ १४ ॥

प्रकटादिनवयोगिन्यस्त्रिपुराद्या नवचक्रेश्वर्यश्च चतुर्दशे एव प्रोक्ताः । एवमाज्ञान्तनवके स्थूलन्यासमुक्त्वा बिन्द्वादि उन्मनान्तनवके सूक्ष्मन्यासमाह—बिन्द्वादाविति ॥ १५ ॥

बिन्द्वादिनवसु चक्रेश्वरीमन्त्रान् नमोन्तान् न्यसेदिति सूक्ष्मन्यासः । महाबिन्दौ मूलं श्रीबीजाद्यवसानं नमोन्तं न्यसेदिति परन्यासः । अत्र मन्त्रास्तु । ४ । अं आं सौः चतुरस्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशतिशक्तिसहितप्रकटयोगिनीरूपायै त्रिपुरादेव्यै नम इत्यादि प्रथमे चक्रेश्वरीमन्त्रे चक्रस्वरूपे चक्रनामानि । शक्तिसंख्यायां योगिन्यां चक्रेश्वर्यां च द्वितीयचक्रेश्वर्यादि मन्त्रादियोगेन क्रमादन्ये मन्त्रा ज्ञेयाः ॥ १६ ॥

बाह्यन्यासस्थानान्याह—पादेति । पादद्वयं जानुद्वयम् । ऊरुमूलद्वयम्—इति नवसु स्थानेषु स्थूलन्यासमाचरेत् ॥ १७ ॥

बाह्यचक्रन्यास एषः प्रोक्त एवंविधः शिवे ।
वाग्देवतान्यासमथो वक्ष्ये देवि क्रमाच्छृणु ॥१८॥
स्वरादिवर्गाष्टकं च बीजं नाम हृदन्तकम् ।
शिरोललाटभ्रूमध्ये कण्ठहृन्नाभिदेशके ॥१९॥
आधारे पादमारभ्य व्यापकत्वेन चेश्वरि ।
स्पर्शपादयुतं रूपं सबिन्दुरतिसंस्थितम् ॥२०॥
सृष्टिरूपयुता माया द्वितीयं परिकीर्तितम् ।
घ्राणयुक्तं ककुद्रूपं बिन्दुतुष्टिगतं परम् ॥२१॥
शब्दरूपयुता बिन्दुरतिस्तुर्यं भवेच्छिवे ।
रागोपस्थस्पर्शयुता बिन्दुतुष्टिस्तु पञ्चमम् ॥२२॥
अग्निवायुक्रियोद्गारि शब्दयुग्रतिबिन्दुकाः ।
कालोपस्थस्पर्शशब्दयुक्तबिन्दुरतिः परम् ॥२३॥
पृथिव्युपस्थस्पर्शाढ्यबिन्दुतुष्टिस्तथाष्टमम् ।
वशिनी कामेश्वरी च मोदिनी विमला तथा ॥२४॥

---

वशिन्यादिन्यासं वक्तुमाह—वाग्देवतेति ॥ १८ ॥

स्वराद्यष्टौ वर्गाः अकचटत यशेति । "स्वरान् कचटतान् पश्च यशौ वर्गान्मनूंस्तथा" इति त्रिपुरार्णवोक्तेः । यशेति द्वौ वर्गौ । बीजाष्टकं नामाष्टकम् । स्थानमाह—शिर इत्यादि ॥ १९ ॥

अष्टमस्य पादान्मूर्धान्तं व्यापकत्वेन । बीजान्याह—स्पर्शेत्यादि । स्पर्श र । पाद ब । रूप ल । सबिन्दुरतिः ऊँ ॥ २० ॥

सृष्टि क । रूप ल । घ्राण न । ककुत् व । रूप ल । बिन्दुतुष्टिः ईं । परं तृतीयम् ॥ २१ ॥

शब्द य । रूप ल । बिन्दुरतिः ऊं । तुर्यं चतुर्थम् । राग ज । उपस्थ म । स्पर्श र । बिन्दुतुष्टिः ईं ॥ २२ ॥

अग्नि ह । वायु स । क्रिया ल । उद्गारी व । शब्द य । रतिबिन्दुः ऊं । काल ज्ञ । उपस्थ म । स्पर्श र । शब्द य । बिन्दुरतिः ऊं ॥ २३ ॥

पृथिवी क्ष । उपस्थ म । स्पर्श र । बिन्दुतुष्टिः ईं । नामान्याह—वशिनीत्यादि ॥ २४ ॥

अरुणा जयिनी सर्वेश्वरी चैव तु कौलिनी ।
प्रोक्तान्येवं तु नामानि न्यसेदेवं महेश्वरि ॥२५॥
मस्तके च ललाटे च नेत्रयुग्मे मुखे तथा ।
कण्ठहृत्पार्श्वयुगले नाभौ लिङ्गे च मूलके ॥२६॥
ऊरुद्वये पदे वर्णान् पञ्चदश्याः क्रमान्न्यसेत् ।
पादादिमस्तकान्तं च पुनरेवं क्रमान्न्यसेत् ॥२७॥
न्यासस्तु मूलविद्याख्य एष प्रोक्तो महेश्वरि ।
पादपार्श्वकपोलानां युगले च क्रमान्न्यसेत् ॥२८॥
आत्मतत्त्वं क्रियाशक्तिर्विद्यातत्त्वं ततः परम् ।
ज्ञानशक्तिः शिवाख्यं च तथेच्छाशक्तिरेव च ॥२९॥
सर्वतत्त्वतुर्यशक्तिमूर्ध्नि देवि प्रविन्यसेत् ।
तत्त्वन्यासस्तु संप्रोक्तः कामेश्वर्यादिकं शृणु ॥३०॥
वाग्भवं चाद्यकूटं चाग्निचक्रे कामशब्दतः ।
गिरिपीठे च मित्रीश ततो नाथात्मके ततः ॥३१॥
जाग्रद्दशाधिष्ठायके इच्छाशक्त्यात्मकेति च ।
रुद्रात्मशक्तिश्रीमहाकामेश्वर्यै नमो वदेत् ॥३२॥

---

वशिन्यादि कौलिन्यन्तान्यष्टौ नामानि । न्यासमन्त्रस्तु ४ अं अः ब्लूँ वशिनी-वाग्देवतायै नम इत्यादि ॥ २५ ॥

मूलविद्यान्यासमाह—मस्तकेत्यादि ॥ २६ ॥

नेत्रपार्श्वोरूणां द्वये दक्षवामक्रमेण । पदेति चरणद्वयेऽप्येको न्यासः । पञ्चदश्याः कादिविद्यायाः ॥ ४ । कं नमः ४ ऐं नमः इत्यादि । पुनः पादादिमस्तकान्तमुक्तस्थानेषु एवं क्रमादुक्तक्रमात् कं नम इत्यादि न्यसेत् ॥ २७ ॥

तत्त्वन्यासमाह—पादेत्यादि । पादादीनां दक्षवामक्रमः ॥ २८-२९ ॥

पादादिषट्स्थानेषु आत्मतत्त्वादि इच्छाशक्त्यन्तषट्कं विन्यस्य सर्वतत्त्वं तुर्यशक्ति च मूर्ध्नि विन्यसेत् । ४ । आत्मतत्त्वाय नमः । ४ । क्रियाशक्त्यै नम इत्यादि मन्त्रः ॥ ३० ॥

कामेश्वर्यादिन्यासमेवाह—वाग्भवमित्यादि । शब्दतः । च । ततो । ततः ॥३१॥ इति च इति त्यक्त्वा । अग्निचक्रे इत्यादि नम इत्यन्तं स्वरूपम् ॥ ३२ ॥

कामराजं द्वितीयं च सूर्यचक्रे ततः परम् ।
जालन्धरात्तु पीठे च षष्ठीशादिकमुच्चरेत् ॥३३॥

स्वप्नादिकं ज्ञानशक्त्यात्मकविष्ण्वात्मशक्तितः ।
वज्रेश्वर्यै पूर्ववच्च शक्तिबीजं तृतीयकम् ॥३४॥

सोमचक्रे पूर्णगिरि ओड्डीशाच्च सुषुप्तितः ।
क्रिया ब्रह्मा पूर्ववच्च भगमालिनि हृत्ततः ॥३५॥

बालामूलं परब्रह्म महोड्याणं ततः परम् ।
चर्यानाथस्तुरीयाय शान्ताशक्तिस्ततः परम् ॥३६॥

परब्रह्मात्मकशक्तिश्च महात्रिपुरसुन्दरी ।
आधारानाहताज्ञासु ब्रह्मरन्ध्रे च विन्यसेत् ॥३७॥

त्रिपुराचक्रेश्वरी तु द्विधाङ्गुष्ठादिषु न्यसेत् ।
करशुद्धिन्यास एष षडङ्गं च ततः शिवे ॥३८॥

अथ ऋष्यादिमूलस्य कराङ्गन्यास उच्यते ।
आनन्द भैरवऋषिः पङ्क्तिश्छन्दो महेश्वरि ॥३९॥
श्रीसौभाग्याख्यविद्या तु देवता परिकीर्तिता ।
द्विधा कूटत्रयेणैव न्यसेत् करषडङ्गकम् ॥४०॥

---

एवं प्रथममन्त्रमुद्धृत्य द्वितीयादिमन्त्राणां प्रथममन्त्रतुल्यत्वेन तद्विशेषं प्रतीकमात्रेणाह—षष्ठीशादिकमित्यादि द्वितीयं कूटम् ॥ ३३ ॥

षष्ठीशनाथात्मके स्वप्नदशाधिष्ठायके इत्यादि ज्ञेयम् । तृतीयमन्त्रमाह--शक्तीति। तृतीयं कूटम् ॥ ३४-३५ ॥

तुरीयमाह—बालेत्यादि ॥ ३६ ॥

स्थानमाह - आधारेत्यादि ॥ ३७ ॥

करशुद्धिन्यासमाह--त्रिपुरेत्यादि । त्रिपुराचक्रेश्वरी अं आं सौः इति । अङ्गुष्ठादिषु द्विरावृत्त्या करन्यासक्रमेण ४ अं नमः इत्यादिमन्त्रः । षडङ्गं न्यसेदिति सम्बन्धः । हृदयाय नम इत्यादि अस्त्रान्तम् ॥ ३८ ॥

प्रसङ्गात्प्रागनुक्तं पञ्चदशीषोडश्योर्ऋष्यादिन्यासं वक्तुमाह--अथेत्यादि ॥३९॥

कूटत्रयद्विरावृत्त्या करषडङ्गन्यासः ॥ ४० ॥

तरुणारुणसच्छायां दधानां पाणिपङ्कजैः ।
सृणिं पाशं पुण्ड्रधनुः पुष्पबाणां त्रिलोचनाम् ॥४१॥
बालेन्दुशेखरां देवीं पीनोत्तुङ्गपयोधराम् ।
कामेशवामाङ्कगतां शोणवस्त्रविलेपनाम् ॥४२॥
इति ध्यायेन्महादेवीं शिवां कामेशवल्लभाम् ।
षोडश्या अपि ऋष्यादि समानं तु महेश्वरि ।
पञ्चत्रिबीजकूटैश्च पञ्चबीजैश्च विन्यसेत् ॥४३॥
सिद्ध सिद्ध वृतरत्नभूमिकाकल्पवृक्षवनवाटिसंकुले ।
नीपवाटिमणिमण्डपेऽरुणे तरुणचण्डशतकोटिभासुरे ॥४४॥
आदिपञ्चशवमञ्चके परे शङ्कराङ्ककृतपीठिकामणौ ।
कादिहादिमनुरूपिणीमहं भावयामि परदेवतां शिवाम् ॥४५॥

---

ध्यानमाह—तरुणेति । आयुधनिर्णयस्तृतीये कृतः ॥ ४१ ॥

विलेपनं चन्दनादि ॥ ४२ ॥

पञ्चदश्याः समानं बीजादिन्यासोऽप्युभयोः कूटत्रयेणैव, "कूटत्रयेण क्रमतो बीजं शक्तिश्च कीलकम्" इति त्रिपुरार्णववचनात् । श्री इत्यादि पञ्चबीजम् । ॐ इत्यादि त्रिबीजम् । कूटत्रयं सौः इत्यादि पञ्चबीजम् । इति खण्डषट्केन न्यासः । षट्चरणः श्लोकः ॥ ४३ ॥

ध्यानमाह—सिद्धेति । सिद्धानामपि सिद्धाः दिव्यौघादिगुरवः । तदुक्तं त्रिपुरारहस्ये—"सिद्धानां सिद्धिदा यस्मात्सिद्धसिद्धास्ततस्त्विमे" इति । तैर्वृता या रत्नभूमिका तत्सम्बन्धिनो ये कल्पवृक्षाः, तेषां वनैरारामैर्वाटिभिर्गृहोपवनैः संकुले । नीपाः कदम्बाः, तेषां वाटी मध्यगतो मणिमण्डपः, तस्मिन् । अरुणे तरुणस्य चण्डांशोः शतकोटिवद् भासुरे ॥ ४४ ॥

आदिभूताः पञ्चशवा ब्रह्मादयः । तेषां प्रेतत्वं च—"ब्रह्मणः परमेशानि कर्तृत्वं सृष्टिरूपकम् । वामाशक्तेश्च विज्ञेयं ब्रह्मा प्रेतो न संशयः ॥" इत्यादिज्ञानार्णवे चतुर्थपटले सम्यङ्निरूपितम् । तन्मये मञ्चके । परे सर्वोत्तमे । शङ्करस्याङ्केन कृतः, तदात्मक इति यावत् । पीठिकामणौ पीठश्रेष्ठे । स्थितामिति शेषः । द्वादशविधविद्यासु "तेषु सारं द्वयम्" इति एकादशवचनाद् द्वयोरेव मुख्यत्वात् कादिहादीत्युक्तम् । कादिहादिमनुः कामराजलोपामुद्राविद्ये, तद्रूपिणीम् ॥ ४५ ॥

श्रीमत्त्रिपुरसुन्दर्या ध्यानमेतत् प्रकीर्तितम् ।
एतत्तु सर्वमन्त्राणां समानं शृणु शङ्करि ॥४६॥
ऋष्यादिन्यास आदौ स्यात् कराङ्गस्तदनन्तरः ।
दिग्बन्धनं विधायाथो ध्यात्वा संपूज्य मानसैः ॥४७॥
जपं समाचरेदन्ते करादौ न्यस्य पूजयेत् ।
एवमेव महेशानि सर्वमन्त्रेषु कीर्तितम् ॥४८॥
इत्येवं दशधा न्यास आत्यन्तिक उदाहृतः ।
द्विविधो मातृकान्यासश्चक्रन्यासश्च तादृशः ॥४९॥
वशिन्यादिर्मूलमयस्तत्त्व कामेश्वरीमयः ।
करशुद्धिः षडङ्गाख्यो दशधैवं प्रकीर्तितः ॥५०॥
चक्रशक्तितत्त्वमयान् त्यक्त्वा वश्ये षडाचरेत् ।
मातृकामूलभूताङ्गपङ्कं कृच्छ्रगतश्चरेत् ॥५१॥

---

प्रकृतं न्यासं ध्यानं चोक्त्वा प्रसङ्गात् सर्वमन्त्रसाधारणत्वम् ऋष्यादिन्यासादीनां वक्तुमाह—एतत्त्विति । एतद् ऋष्यादिन्यासादिकं समानं सर्वमन्त्राङ्गत्वेन कर्तव्य-मित्यर्थः ॥ ४६ ॥

जपविधिमाह—ऋष्यादीति । कराङ्गन्यासो दिग्बन्धमानसपूजनादिकं चतुर्थे उक्तम् । जपस्यान्ते पुनः करन्यासादिध्यानान्तं कृत्वा मानसैः पूजयेत् ॥ ४७ ॥

एतत्सर्वमन्त्रेऽतिदिशति—एवमेवेति । एवमेव ऋष्यादिन्यासादि पुनः पूजा-न्तम् ॥ ४८ ॥

आवश्यकन्यासानुक्त्वोपसंहरति—इतीति । आत्यन्तिकः आवश्यकः । दशानां नामोद्देशेन गणयति—द्विविध इत्यादि । तादृशो मातृकावद् बाह्यान्तरभेदेन द्विविधः ॥ ४९ ॥

तत्त्वमयः । कामेश्वरीमयः ॥ ५० ॥

अशक्तं प्रत्यावश्यकानाह—चक्रेत्यादि । द्विविधचक्रन्यासतत्त्वन्यासकामेश्वर्यादि-शक्तिन्यासान् त्यक्त्वाऽवशिष्टान् षडाचरेत् । अवश्ये अवश्यात्मनि रोगाद्युपद्रुते इत्यर्थः । आपत्कल्पमाह—मातृकेत्यादि । द्विविधमातृकामूलविद्याषडङ्गाख्यं न्यासचतुष्टयम् । कृच्छ्रगतः आपदं प्राप्तः ॥ ५१ ॥

समर्थेन तु पञ्चाम्बाद्यष्टकं चापि विन्यसेत् ।
तच्च पूर्णाभिषिक्तेन कर्तव्यं नान्यथेश्वरि ॥५२॥
ब्रह्मरन्ध्रे लिपिमयं त्रिकोणं चिन्तयेच्छिवे ।
कोणेषु वामतोऽग्राद्वै पार्श्वयोर्दक्षवामतः ॥५३॥
आदिनाथ तथा व्योमातीताम्बाद्या प्रकीर्तिता ।
अनादिनाथाद् व्योमेश्वर्याम्बा स्यात्तु द्वितीयका ॥५४॥
अनामय तथा नाथ व्योमगाम्बा तृतीयका ।
अनन्तनाथव्योमात्तु चारिण्यम्बा तुरीयका ॥५५॥
चिदाभासानन्दनाथ व्योमस्थाम्बा तु पञ्चमी ।
अन्ते श्रीपादुकायै च हृदादौ च द्वितारिका ॥५६॥
नन्ददिक्पङ्क्तिरुद्रार्कवर्णा एते क्रमात् स्मृताः ।
पञ्चाम्बान्यास एष स्यात् नवनाथाख्यकं शृणु ॥५७॥
त्रिकोणरेखात्रितये वामा तु स्यात् त्रयं त्रयम् ।
उन्मनी समना तद्वद्व्यापिका शक्तिरेव च ॥५८॥

---

तत् पञ्चाम्बाद्यष्टकम् । अन्यथा अपूर्णाभिषिक्तेन न कर्तव्यमित्यर्थः ॥ ५२ ॥

तत्प्रकारमाह—ब्रह्मरन्ध्रेत्यादि । लिपिमयं मातृकामयम् । प्रातः स्मरणोक्तवत् । तत्रादौ पञ्चाम्बान्यासस्य स्थानमाह—कोणेष्विति । तत्र अग्रकोणाद्वामतः अप्रादक्षिण्येन कोणेषु । दक्षवामयोः पार्श्वयोर्न्यसेदिति शेषः ॥ ५३ ॥

एवं स्थानमुक्त्वा मन्त्रानाह—आदीत्यादि । आदिनाथ व्योमातीताम्बा । अनादिनाथ व्योमेश्वर्यम्बा ॥ ५४ ॥

अनामयनाथ व्योमचारिण्यम्बा तुरीयका चतुर्थी ॥ ५५ ॥

निरुक्तपञ्चमन्त्राणामन्ते श्रीपादुकायै नमः । आदौ द्वितारिका ह्रीं श्रीं इति । यथा ह्रीं श्रीं आदिनाथव्योमातीताम्बाश्रीपादुकायै नम इत्यादि ॥ ५६ ॥

नन्द नव, दिक् दश, रुद्र एकादश, अर्क द्वादश । एते निरुक्ताः पञ्च मन्त्राः क्रमेण नन्दादिवर्णाः ॥ ५७ ॥

स्थानमाह—त्रिकोणेत्यादि । वर्णत्रिकोणरेखात्रये । वामरेखामारभ्य प्रतिरेखायां त्रयं त्रयम् । नामानि चतुर्दशे प्रोक्तान्यनुवदति—उन्मनीत्यादि ॥ ५८ ॥

ध्वनिश्च ध्वनिमात्रश्चानाहतेन्दुस्ततः परम् ।
बिन्दुश्चेति नव प्रोक्ता आकाशान्ता महेश्वरि ॥५९॥
आनन्दभैरवस्थास्तु वर्णा एकैकशः क्रमात् ।
योज्याः सबिन्दवश्चादौ द्वितार्यादि च पूर्ववत् ॥६०॥
नवनाथात्मको ह्येष मूलविद्यात्मकं शृणु ।
तास्तु षोडशसंख्यातास्त्रिपञ्चैकं तु मध्यमे ॥६१॥
स्वच्छप्रकाशाच्च परिपूर्णाच्चापि परापर ।
सिद्धविद्याकुलाद्योगिनीमायाग्न्यश्विवर्णिका ॥६२॥
इयं ख्याता कुलाद्योगिन्यम्बेति परमेश्वरि ।
स्वात्मानं बोधयद्वन्द्वं मुखे प्रासादयुक् परा ॥६३॥
पराप्रासादचरमा कथिता परमेश्वरि ।
रुद्राक्षरी त्वियं प्रासादात् पराम्बा प्रकीर्तिता ॥६४॥
वाग्भवं कामबीजं च तुर्यबाणस्ततः परम् ।
क्लिन्ने क्लेदिनि वै पश्चान्महामद तथा द्रवे ॥६५॥

---

आकाशान्ताः उन्मन्याकाशेत्यादयः ॥ ५९ ॥

बीजान्यपि प्रकारान्तरेणानुवदति--आनन्देति । आनन्दभैरवः ह्स्क्ष्म्ल्व्य्रूँ इति तत्स्था एकैकशो वर्णाः सबिन्दवः हं सं क्षं इत्यादि । उन्मनीत्यादिनामादौ योज्याः । द्वितार्यादि पूर्ववत् । पश्चाम्बावद् आदौ द्वितारो अन्ते श्रीपादुकायै इत्यादि । चतुर्दशे प्रोक्तवदानन्दनाथेति च । यथा – ह्रीं श्रीं हं उन्मन्याकाशानन्दनाथश्री० ॥ ६० ॥

एष न्यासः । मूलविद्यात्मकं न्यासम् । ताः मूलविद्याः । स्थानमाह-- त्रिपञ्चेति । पूर्वोक्तत्रिकोणप्रतिरेखायां पञ्चकं पञ्चकं मध्ये चैककम् ॥ ६१ ॥

मन्त्रानाह--स्वच्छेत्यादि । आच्च आच्चापि । आत् इति त्यक्त्वा स्वच्छेत्यादि योगिनीत्यन्तं स्वरूपम् । मायाबीजम् । अग्न्यश्वि त्रयोविंशतिः ॥ ६२ ॥

कुलयोगिन्यम्बा इति ख्याता । स्वात्मानं स्वरूपम् । बोधयेति द्विः । मुखे आदौ प्रासादपरा ह्सौः ॥ ६३ ॥

चरमे अन्ते पराप्रसादा स्हौः । रुद्र एकादश । प्रासादपराम्बा ॥ ६४ ॥

तुर्यबाण ब्लूँ । वै पश्चात् । तथा इति त्यक्त्वा क्लिन्नेत्यादि द्रवे इत्यन्तं स्वरूपम् ॥ ६५ ॥

कामः क्लेदययुग्मं च क्लां कामो मोदयद्वयम् ।
माया लक्ष्मीः काम हृच शिरः षड्रामसंमिता ॥६६॥
ख्याता चातिरहस्याद्वै योगिन्यम्बा महेश्वरि ।
स्वच्छानन्दाच्च परमहंसाच्च परमात्मने ॥६७॥
शिरः सहक्ष्त्रौं हंसाद्या भूपक्षार्णा समीरि ।
शाम्भव्यम्बेयमाख्याता चिल्लेखाम्बामथो शृणु ॥६८॥
मायानित्यस्फुरच्चैतन्यानन्द च मये महा ।
बिन्दुव्यापक वै मातृकास्वरूपिणि वाग्भवम् ॥६९॥
तुर्या माया रमा तुर्या चन्द्राग्न्यर्णा प्रकीर्तिता ।
वाङ्माया च रमा स्वच्छ वै प्रकाशात्मिके ततः ॥७०॥
मायाकुलमहामालिनि बाक्कुल च गर्भ वै ।
मातृके चाथ माया वा समयाद्विमले रमा ॥७१॥
समयाम्बेयमाख्याता भूतरामाक्षरी शिवे ।
नित्यप्रकाशात्मिके च कुलकुण्डादथो लिनि ॥७२॥

---

कामः क्लीं । क्लेदय द्विः । क्लां स्वरूपम् । मोदय द्विः । मायादिबीजत्रयम् । हृत् नमः । शिरः स्वाहा । षड राम षड्विंशत् ॥ ६६ ॥

अतिरहस्ययोगिन्यम्बा । आच्च । आच्च । इति त्यक्त्वा । स्वच्छेत्यादि त्मने इत्यन्तं स्वरूपम् ॥ ६७ ॥

शिरः स्वाहा । सह क्षौं स्वरूपम् । आदौ हंसः । भूपक्ष एकविंशतिः ॥ ६८ ॥

च । वै । इति त्यक्त्वा नित्येत्यादि रूपिणीत्यन्तं स्वरूपम् ॥ ६९ ॥

तुर्या ईं । माया रमा द्वितारी । चन्द्राग्नि एकत्रिंशत् । स्वच्छ-प्रकाशात्मिके ॥ ७० ॥

कुलमहामालिनी कुलगर्भमातृके समयविमले इति स्वरूपम् । वागाद्यष्ट-बीजानि ॥ ७१ ॥

भूतराम पञ्चत्रिंशत् । च आदथो ॥ ७२ ॥

आज्ञासिद्धिमहाभैरवि आत्मानं द्वि बोधय ।
अम्बे भग ततो वात्ति मायावर्मसुखे जपा ॥७३॥
भूवेदार्णा परापरबोधिन्यम्बा समीरिता ।
तारो मोक्षं कुरु इति कुलपञ्चाक्षरी मता ॥७४॥
लोपामुद्रान्त्यके शक्तिः षोडशार्णा महेश्वरि ।
अनुत्तरा पञ्चदशाक्षर्यम्बाख्या समीरिता ॥७५॥
शुद्धसूक्ष्मनिराकारं निर्विकल्पपरादथ ।
ब्राह्मस्वरूपिणी ततः कामबीजं परा तथा ॥७६॥
नन्दशक्तिः शक्तिबीजं शाम्भवानन्दनाथ च ।
श्री चादौ वाग्भवं चेयं मुनिरामाक्षरी भवेत् ॥७७॥
अनुत्तरात्कौलविद्याऽम्बेत्याख्याता महेश्वरि ।
सोऽहं स्वच्छानन्द परमहंस परमात्मने ॥७८॥
शिरश्चादौ हंस इति नखार्णेयं महेश्वरि ।
गुरूत्तरविमर्शिन्यम्बाख्येति कथिता शिवे ॥७९॥
अनामाख्याथ व्योमातीतनाथ च परापर ।
व्योमातीत तथा व्योमेश्वर्यम्बा च द्वितारिका ॥८०॥

---

बोधय द्विः । ततो आत् । इति त्यक्त्वा नित्येत्यादि वति इत्यन्तं स्वरूपम् । लिनि आज्ञा रवि आत्मा बोधय अम्बे इत्यसन्धिः । वर्म हुं । आदौ अजपा हंसः ॥ ७३ ॥

भूवेद एकचत्वारिंशत् । तारः ॐ । मोक्षं कुरु स्वरूपम् ॥ ७४ ॥

लोपामुद्रा हादिविद्या, तस्या अन्ते शक्तिः सौः ॥ ७५ ॥

आदथ । ततः कामबीजं क्लीं । तथा ॥ ७६ ॥

शक्तिबीजं सौः । च इति त्यक्त्वा शुद्धेत्यादि श्रीत्यन्तं स्वरूपम् । सर्वादौ वाग्भवम् । मुनिराम सप्तत्रिंशत् ॥ ७७ ॥

अनुत्तरकौलविद्याम्बा सोऽहम् इत्यादि त्मने इत्यन्तं स्वरूपम् ॥ ७८ ॥

सर्वादौ हंसः । नख विंशतिः ॥ ७९ ॥

अथ च तथा इति त्यक्त्वा अनामेत्यादि अम्बा इत्यन्तं स्वरूपम् । द्वितारिका ह्रीं श्रीं ॥ ८० ॥

भूताक्षिवर्णा चानामाख्याम्बेति परिकीर्तिता ।
वाग्भवं तुष्टिबीजं च रतिबीजं महेश्वरि ॥८१॥
त्र्यक्षरी सङ्केतविद्याम्बा चेति परिकीर्तिता ।
माया पश्चाद्भगवति विच्चे वाग्वा तथा दिनि ॥८२॥
कामो महा च हृदय महा चैव मतङ्गिनि ।
वा क्लिन्ने तुर्यबाणश्च मायाष्टाविंशदक्षरी ॥८३॥
प्रोक्ताऽनुत्तरवाग्वादिन्यम्बाख्येयं महेश्वरि ।
त्रिपुराम्बैवानुत्तरशाङ्कर्यम्बा समीरिता ॥८४॥
सर्वानन्दमयाद् बैन्दवचक्रे च तथा पर ।
ब्रह्मस्वरूपिणी परामृतशक्तिश्च सर्वतः ॥८५॥
मन्त्रपीठयोगिवीरवाग्विद्येति षडीरयेत् ।
अन्ते सर्वत्रेश्वरीति सकलाज्जगदेव च ॥८६॥
उत्पत्तिमातृका पश्चात् सचक्रा च सदेवता ।
सासना च समुद्रा च ससिद्धिः सायुधा तथा ॥८७॥
सवाहना सालङ्काराथ सचक्रेशिका ततः ।
परया चाथापरया परा च परया तथा ॥८८॥

---

भूताक्षि पञ्चविंशतिः । तुष्टिबीजं ईं । रतिबीजं ॐ ॥ ८१ ॥

संकेतविद्याम्बा । तथा ॥ ८२ ॥

कामः क्लीं । च चैव वाक् ऐं । इति त्यक्त्वा भगवतीत्यादि क्लिन्ने इत्यन्तं स्वरूपम् । तुर्यबाणः ब्लूं । अष्टाविंशत्यक्षरी ॥ ८३ ॥

त्रिपुराम्बा चतुर्दशे प्रोक्ता । द्वितीया चक्रेश्वरी ॥ ८४ ॥

आत् च तथा इति त्यक्त्वा सर्वेत्यादि शक्तीत्यन्तं स्वरूपम् ॥ ८५ ॥

सर्वतः सर्वशब्दान्ते मन्त्रेत्यादि षडीरयेदिति संबन्धः । सर्वत्रान्ते मन्त्रादिषण्णामन्ते ईश्वरीति । तेन सर्वमन्त्रेश्वरी सर्वपीठेश्वरीत्यादि सर्वविद्येश्वरीत्यन्तम् । आत् । एव च ॥ ८६ ॥

पश्चात् च । च च । तथा ॥ ८७ ॥

च । ततः चाथ । च । तथा ॥ ८८ ॥

सपर्यया च सर्वोपचारैः सम्पूजिता ततः ।
संतर्पिताऽस्तु सर्वादौ स्यात् तुरीया महेश्वरि ॥८९॥
ऋषिसागरचन्द्रार्णा संप्रोक्तेयं महेश्वरि ।
श्रीमहात्रिपुरात् सुन्दरीपूर्तिविद्याम्बा शिवे ॥९०॥
पूर्ववत् तु महेशानि द्वितार्यादीनि योजयेत् ।
मूलविद्याषोडशकन्यासः प्रोक्तो महेश्वरि ॥९१॥
वामतोऽग्न्यादिकोणेषु पार्श्वेषु च महेश्वरि ।
षडाधारान् न्यसेद् देवि शृणु तत्सावधानतः ॥९२॥
स्वात्मानन्दविभूत्यै च मूर्धादौ हंस एव च ।
परमहंसाद्विभूत्यै मूर्धादौ सोऽहमेव च ॥९३॥
सोऽहं स्वच्छानन्दपरमहंसपरमात्मने ।
मूर्धादौ चापि देवेशि अजपा परिकीर्तिता ॥९४॥
स्वात्मानं बोधयद्वन्द्वमन्ते स्वात्मा ततः परम् ।
नन्दनाथ तथादौ तु अजपा परिकीर्तिता ॥९५॥

---

च । ततः इति त्यक्त्वा सकलेत्यादि तास्तु इत्यन्तं स्वरूपम् । परया अपरयेत्य-सन्धिः । तुरीया चतुर्दशे आम्नायविद्यासूक्ता त्रयोदशाक्षरी ॥ ८९ ॥

ऋषि सागर चन्द्र सप्तचत्वारिंशदुत्तरैकशतम् । श्रीमहात्रिपुरसुन्दरीपूर्ति-विद्याम्बा ॥ ९० ॥

पूर्ववत् पश्चाम्बादिवत् । आदौ द्वितारी अन्ते नाम । श्रीपादुकायै नम इति ॥ ९१ ॥

षडाधारन्यासं वक्तुमादौ तत्स्थानमाह—वामेत्यादि । अग्न्यादिकोणत्रये वामतः पार्श्वत्रये च वामतः । अर्थात् वामपार्श्वाद्वामतः ॥ ९२ ॥

स्वात्मानन्दविभूत्यै स्वरूपम् । आदौ हंसः । परमहंसविभूत्यै स्वरूपम् । आदौ सोहम् ॥ ९३ ॥

आत्मने इत्यन्तं स्वरूपम् । आदौ अजपा हंसः ॥ ९४ ॥

स्वात्मानं स्वरूपम् । बोधयः द्विः । स्वात्मानन्दनाथ स्वरूपम् । आदौ अजपा ॥ ९५ ॥

स्वस्थाने परमेत्युक्त्वा सोऽहमाद्यस्तथा परः ।
सोऽहं स्वच्छानन्दनाथचित्प्रकाशामृतेति च ॥९६॥
हेतवे च शिरस्त्वादौ हंसयुक्तो महेश्वरि ।
रुद्रादित्यनखर्षीन्दुचन्द्राश्वीन्द्वश्विवर्णकाः ॥९७॥
आधाराद्यास्तथाज्ञान्ता द्वितार्यादि तु पूर्ववत् ।
अथ पूर्ववदेवेह षडध्वन्यासमाचरेत् ॥९८॥
कामवाग्भवमायाख्या शक्तिः श्रीर्मूलमेव च ।
नभो बीजमुखं देवि क्रमान्नामानि संशृणु ॥९९॥
वर्णः पदं तथा मन्त्रः कला तत्त्वं च शङ्करि ।
भुवनं चेति संप्रोक्ता अध्वान्तास्तु महेश्वरि ॥१००॥
षड्दर्शनन्यासमपि पूर्ववत् तु समाचरेत् ।
तारे च तुत्तारे मूर्धा सप्तार्णेयं समीरिता ॥१०१॥

---

अस्मिन्नेव मन्त्रे स्वपदस्थाने परम इति । आदौ अजपा स्थाने सोऽहं । तेन सोऽहं परमात्मानं बोधयेत्यादि । इति च ॥ ९६ ॥

इति त्यक्त्वा सोऽहमित्यादि हेतवे इत्यन्तं स्वरूपम् । आदौ हंसः । रुद्र एकादश । आदित्य द्वादश । नख विंशतिः । ऋषि इन्दुः सप्तदश । चन्द्र अश्वि इन्दु अश्वि एकविंशतिः । इति क्रमेण वर्णसंख्या ॥ ९७ ॥

आधाराद्याज्ञान्तं नामानि । आधारविद्या, स्वाधिष्ठानविद्येत्यादि । ह्रीं श्रीं इत्यादौ श्रीपादुकायै नम इत्यन्ते च । पूर्ववत् । अथेति द्वितार्यनुवृत्तिविच्छेदद्योतकः । पूर्ववदिति स्थानम् । अन्ते श्रीपादुकायै नम इति च । अत एव षड्दर्शनादिष्वादौ द्वितार्यभावस्तन्त्रान्तरानुरुद्धः पद्धतिषु संगच्छते । एतेन तन्त्रे षडध्वादिषु द्वितार्यादि च पूर्ववत् इत्याद्यनुल्लेखसामञ्जस्यं च ज्ञेयम् ॥ ९८ ॥

कामादि श्रीत्यन्तं बीजपञ्चकम् । मूलं पञ्चदशी । इति षड् मन्त्राः । एतेषां मुखे आदौ नभोबीजं हं ॥ ९९ ॥

संप्रोक्ताः द्वादशोल्लासे । भिन्नक्रमनिरूपणायात्र पुनः कथनम् । अध्वान्ताः वर्णाध्वेत्यादि । मायां रमां नभश्चादाविति द्वादशवचनादेवात्रादौ द्वितारीयोगः ॥ १०० ॥

पूर्ववत् स्थानम् । श्रीपादुकायै नम इति च । मन्त्रानाह – तारेत्यादि । तारे तुत्तारे स्वरूपम् ॥ १०१ ॥

गायत्री तु चतुष्पादा तारोऽग्निस्त्वङ्गदागतः ।
सबिन्दुरथ सूर्यस्य मनुः प्रोक्तो महेश्वरि ॥१०२॥

तारो नमोऽथ नारायणायेत्यष्टाक्षरो मनुः ।
माया स्याद् भुवनेशानी चैवं षट्दर्शनं भवेत् ॥१०३॥

तारा ब्रह्मा च रुद्रश्च सूर्यो विष्णुस्तथैव च ।
भुवनेशी देवतात्र अधिष्ठात्री क्रमाद्भवेत् ॥१०४॥

बौद्धवैदिकशैवानि सौरवैष्णवशाक्तकाः ।
दर्शनानि तु देवेशि क्रमादेवं प्रविन्यसेत् ॥१०५॥

अथ षड्योगिनीन्यासं वक्ष्ये शृणु समाहिता ।
अहङ्कारस्पर्शरूपशक्तिवाय्वग्निवर्णकाः ॥१०६॥

षड्जातिभेदिता देवि नामादौ परिकीर्तयेत् ।
डाकिनी राकिनी तद्वल्लाकिनी काकिनी तथा ॥१०७॥

साकिनी हाकिनीत्येव क्रमाद्देवि प्रविन्यसेत् ।
शृणु वक्ष्येऽथ चरणन्यासं सर्वोत्तमोत्तमम् ॥१०८॥

---

द्वितीयः—चतुष्पादा तत्सवि० दयात् परोरजसे सावदों इति । तृतीयः—तारः ॐ अग्नि ह । अंगदा औ । तेन हौं इति । चतुर्थः—सूर्यमनुः पञ्चमे प्रोक्तः ॥ १०२ ॥

नमो नारायणाय स्वरूपम् । इति पञ्चमः । मायाबीजात्मिका भुवनेशानी षष्ठः ॥ १०३ ॥

एतन्मन्त्राणामधिष्ठातृदेवतानामान्याह—तारेत्यादि । अत्र षड्दर्शनेषु ॥ १०४ ॥

दर्शननामान्याह—बौद्धेत्यादि । एवम् उक्तप्रकारेण । यथा ॥ ४ तारे० तारादेव्यधिष्ठितबौद्धदर्शनश्रीपा० इत्यादि ॥ १०५ ॥

योगिनीमन्त्रानाह—अहङ्कारेत्यादि । अहङ्कार उ । स्पर्श र । रूप ल । शक्ति क । वायु स । अग्नि ह ॥ १०६ ॥

एते षड्जातिभेदिताः । डां डीं डूं डैं डौं डं डः इत्यादि । नामान्येवाह—डाकिनीत्यादि ॥ १०७ ॥

एवमुक्तक्रमात् पूर्वक्रमेण । यथा ४ । डां डं डः डाकिनीश्रीपा०इत्यादि ॥ १०८ ॥

संघट्टमुद्रया मूर्ध्नि कोणे मध्ये क्रमान्न्यसेत् ।
रक्तं शुक्लं मिश्रमपि निर्वाणं कूटयोजितम् ॥१०९॥

व्यष्ट्या समष्ट्या हंसश्च सोऽहं चोभयमेव च ।
हंसः शिवश्चोभयं च विपरीतं महेश्वरि ॥११०॥

हृदन्तं चेति पूजाया मनुना विन्यसेत् क्रमात् ।
मुनिनागेभरामाश्विवर्णाः स्युः क्रमतः शिवे ॥१११॥

दीक्षापुरस्क्रियाद्येषु न्यासास्त्वेते शुभावहाः ।
अथ न्यासः शाम्भवाख्यविद्यायाः संशृणु प्रिये ॥११२॥

पार्श्वयोस्तु त्रिकोणस्य चाग्राद्वामेन कोणके ।
वामपृष्ठदक्षपार्श्वे मध्ये पूर्वक्रमान्न्यसेत् ॥११३॥

---

संघट्टमुद्रा चतुर्दशे प्रोक्ता । प्रागुक्तत्रिकोणाग्रकोणादौ । तन्मन्त्रानाह—रक्तमित्यादि । व्यष्ट्या समष्ट्या । कूटयोजितमित्यन्वयः ।। १०९ ॥

तत्र रक्तादिचतुर्णामादौ हंसेत्यादिचतुष्टयं क्रमेण । उभयं हंसः सोऽहमिति । हंसः शिवः इत्यस्यान्ते विपरीतमुभयं सोऽहं हंस इति ॥ ११० ॥

सर्वान्ते हृत् नमः । यथा ४ । क० ४ हंसः रक्तचरणाभ्यां नमः । ४ । ह । ५ । सोहं शुक्लच० भ्यां न० । ४ । स ३ हंसः सोऽहं मिश्र च० । ४ मू हंसः शिवः सोऽहं हंसः निर्वाणच० इति । एवं मन्त्रक्रमस्तु—'हंसो रक्तात्तु चरणाभ्यां नमस्त्वाद्यकूटतः" इत्यादित्रिपुरार्णववचनात् । पूजाया मनुना रक्तचरणश्रीपादुकां पूजयामि नम इति । अत्र न्याससामान्यमन्त्रोक्त नम इत्यस्य स्थाने पूजामनुर्ज्ञेयः । तेन न पुनर्नम इत्यस्य योगः । वर्णसंख्यामाह—मुनीत्यादि । मुनि सप्त, नाग इभ अष्टौ । रामाश्वि त्रयोविंशतिः । इयं संख्या न संपूर्णमन्त्रवर्णानाम्, किन्तु तदेकदेशस्यैव । मन्त्रस्तु नम इत्यन्तः । अत एव—"अन्ते च नमसा युक्ता मन्त्राश्चरणसंज्ञकाः" इति त्रिपुरार्णवे उक्तम् । एवमेव पञ्चाम्बादिमन्त्रेष्वपि मन्त्रावयवद्धितारीभिन्नानामेव वर्णानां संख्योक्ता ज्ञेया ।। १११ ॥

आद्येष्विति नैमित्तिकादिसंग्रहः । एते पञ्चाम्बाद्या न्यासाः । शुभावहा इति फलविधानान्नित्यताव्यावृत्तिः ॥ ११२ ॥

स्थानान्याह—पार्श्वेत्यादि ॥ ११३ ॥

चित्प्रकाशानन्दनाथ सहजाच्च पराम्बिका ।
आदौ खेचरिबीजं च प्रासादपरमेव च ॥११४॥
प्रासादपरखेचर्यौ लक्ष्मीमाया च वाग्भवम् ।
लक्ष्मी कामाख्यकूटं च शान्तानन्दाच्च नाथ वै ॥११५॥
सहजाच्च पराम्ब स्यादथ मन्त्रत्रयं शृणु ।
त्रिपुराम्बाऽन्त्यबीजं द्विशुक्लविद्या महा ततः ॥११६॥
पीठशुक्लात् पुष्प ततः शुक्लमण्डल वै महा ।
पीठशुक्लाद् रूपशुक्लमन्त्रादथ महा ततः ॥११७॥
पीठशुक्लद्वीपशुक्ल मुद्रा पश्चान्महा ततः ।
पीठशुक्ल नति महा प्रकाशानन्दनाथ च ॥११८॥
आद्यद्वयं हादिविद्यावाक्कूटमिति शङ्करि ।
साद्यमाद्ययुगं देवि शुक्ले रक्तपदं क्षिपेत् ॥११९॥
प्रकाशिनि पराम्बेति प्रकाशानन्दनाथके ।
आद्यद्वयं कामकूटं रक्तविद्येयमीरिता ॥१२०॥

---

मन्त्रानाह—चिदिति । आच्च अम्बका अम्बा । पूर्वक्रमात् श्रीपादुकायै नम इति । इति त्यक्त्वा चिदित्यादि अम्बा इत्यन्तं स्वरूपम् । खेचरीबीजं ह्स्ख्फ्रें । प्रासादपरं ह्सौः ॥ ११४ ॥

द्वितीयमन्त्रमाह—प्रासादेत्यादि । पूर्वयोरेव व्यत्यासेन कथनं प्रासादपरखेचर्याविति । लक्ष्म्यादिबीजचतुष्टयम् । कामाख्यकूटं द्वितीयम् । आच्च । वै ॥ ११५ ॥

आच्च इति त्यक्त्वा शान्तेत्याद्यम्बेत्यन्तं स्वरूपम् । त्रिपुराम्बान्त्यं ह्स्त्रैः द्विः । ततः ॥ ११६ ॥

आत् । आत् । ततः । वै आत् । आदथ । ततः ॥ ११७ ॥

पश्चात् तत इति त्यक्त्वा शुक्लविद्येत्यादि नाथेत्यन्तं स्वरूपम् ॥ ११८ ॥

आद्यं ह्स्रौ द्विः । हादिविद्यावाक्कूटं हसकलह्रीं । द्वितीयामाह—साद्यमिति । साद्यं स्ह्रौः । रक्तविद्यामहापीठेत्यादि ॥ ११९ ॥

प्रकाशानन्दनाथेत्यत्र प्रकाशिनी पराम्ब इति स्ह्रौः द्विः । कामकूटं द्वितीयम् ॥ १२० ॥

हाद्यं साद्यं चेति युग्मं शुक्ले मिश्रपदं क्षिपेत् ।
आद्ययुग्मं तथैवान्त्ये शक्तिकूटं ततः परम् ॥१२१॥
मिश्रविद्येयमाख्याता चाद्या शुक्लाख्यका भवेत् ।
वागानन्दभैरव श्रीनवात्मानन्दनाथ च ॥१२२॥
वाग्भवं छ्रां छ्रीं च किणिद्वयं विच्चे च खेचरी ।
निष्कलात् समयादेषा पराम्बेति प्रकीर्तिता ॥१२३॥
श्रीपरापावकसर्वाराध्यात् सर्व च मूर्धतः ।
श्रीपुरान्नाथसर्वाद्वै ततो गुरु स्वयं गुरु ॥१२४॥
तथा शम्भुगुरुप्रान्ते मुखे चानन्दभैरवः ।
श्रीपरापावको ह्येषः कामधेनुं कुलाच्छृणु ॥१२५॥
लक्ष्मीकामदुघे शक्तिकूटमादौ समीरयेत् ।
अमोघे वरदे विच्चे स्फुरयुक् कमलात्रयम् ॥१२६॥
स्वाहा माया तथा तारो वाक्कूटं हादिसंस्थितम् ।
अहमस्मि च निर्वाणानन्दनाथ ततः परम् ॥१२७॥

---

तृतीयामाह—हाद्यमिति । ह्लौः स्ह्लौः इति युग्मं मिश्रविद्यामहापीठेत्यादि । आद्ययुग्मं ह्लौः स्ह्लौः इति शक्तिकूटं तृतीयम् ॥ १२१ ॥

आद्या शुक्लविद्या भवेत् । वाक् ऐं आनन्दभैरवं हस्क्ष्म्ल्व्यूँ । श्रीनवात्मानन्दनाथ स्वरूपम् ॥ १२२ ॥

छ्रां छ्रीं विच्चे । स्वरूपम् । किणि द्विः । खेचरी हस्खफ्रें । निष्कलसमय-पराम्बा ॥ १२३ ॥

आत् । च । तः । आत् । आद्वै ततो ॥ १२४ ॥

तथा । इति त्यक्त्वा श्रीपरेत्यादि शम्भुगुरु इत्यन्तं स्वरूपम् । आदौ अन्ते च । आनन्दभैरवः । हस्क्ष्म्ल्व्यूँ कुलकामधेनुम् ॥ १२५ ॥

आदो शक्तिकूटं तृतीयम् । ततो लक्ष्मीबीजम् । कामदुघे अमोघे वरदे विच्चे स्वरूपम् । स्फुर द्विः । श्रीं त्रिः ॥ १२६ ॥

हादिविद्यावाक्कूटम् । विद्यान्तरमाह—अहमित्यादि । च इति त्यक्त्वा नाथेत्यन्तं स्वरूपम् ॥ १२७ ॥

हादिविद्या तथानन्ता हंसः सोऽहं ध्रुवस्तथा ।
बिन्दुप्रतिष्ठासंस्थाग्निर्ज्वालाबिन्दुगतास्तथा ॥१२८॥
कामकूटं मुखे स्वात्मप्रकाशानन्दनाथकः ।
पक्षोऽर्कऋषितर्कौ वसुतर्कौ च षड्रसौ ॥१२९॥
नखोदेवाः सुराभ्राब्धीक्रमात् संख्या समीरिता ।
एता विद्या नव प्रोक्ता इत ऊर्ध्वं महेश्वरि ॥१३०॥
न्यासं तु शाम्भवाख्यस्य चरणस्य शृणु प्रिये ।
पूर्ववत् कोणमध्येषु ब्रह्मरन्ध्रे प्रविन्यसेत् ॥१३१॥
कादिहाद्योर्व्यष्टिभेदात् समष्ट्या च महेश्वरि ।
अन्ते सबिन्दुतुष्टिश्च हंसः सोऽहं तथा द्वयम् ॥१३२॥
हंसः शिवः सोऽहमपि स्वरान्त्यौ वापि योजयेत् ।
प्रकाशं च विमर्शं च द्वयं निर्वाण एव च ॥१३३॥
अथ मध्ये च सकलात् सच्चिदानन्दनाथकम् ।
निष्कलानन्दनाथं च सर्वानन्दाच्च नाथकम् ॥१३४॥

---

अनन्ता अः । ध्रुवः ॐ । बिन्दुप्रतिष्ठा अन्तः स्थितोऽग्निः हः । ज्वालाबिन्दु औं । तद्गतोऽपि ह ॥ १२८ ॥

आदौ द्वितीयकूटम् । प्रोक्तविद्यावर्णसंख्यामाह—पक्षेति । पक्ष द्वौ । अर्क द्वादश । ऋषितर्कौ सप्तषष्टिः । वसुतर्कौ अष्टषष्टिः । षट्रसौ षट्षष्टिः ॥ १२९ ॥

नख विंशतिः । देवाः सुराः त्रयस्त्रिंशत् । अभ्राब्धि चत्वारिंशत् । एता नव विद्याः नवसु स्थानेषु न्यसेत् ॥ १३० ॥

पूर्ववत् चरणपदसाम्याच्चरणन्यासवत् । संघट्टमुद्रया पूजामनुना । अग्रादि-वामतः । कोणेषु मध्ये च ब्रह्मरन्ध्रस्थवर्णत्रिकोणे ॥ १३१ ॥

मन्त्रानाह—कादीति । कादिहादिविद्ययोर्व्यष्ट्या त्रिभिः, समष्ट्या चैकेनेति प्रत्येकं चतुर्भिः । कूटान्ते सबिन्दुतुष्टि ईं । हंसः सोऽहं । द्वयं हंसः सोऽहम् ॥ १३२ ॥

स्वरान्त्यौ अं अः । द्वयं प्रकाशविमर्शं । यथा । ४ ॥ क । ४ । ईं हंसः प्रकाश-चरणाभ्यां नमः । प्रकाशचरण श्री० । एवं व्यष्ट्या ४ मू हंसः शिवः सोऽहं अं अः निर्वाणच० इत्यादि ॥ १३३ ॥

अथेति कामकलाविद्यारम्भद्योतकः । सकलसच्चिदा० । सर्वानन्दनाथ ॥ १३४ ॥

सबिन्दुतुष्टयाद्ययुक्तं विन्यस्याथ महेश्वरि ।
मुखहृद्गुह्यदेशेषु विन्यसेत् त्रितयं शिवे ॥१३५॥
सच्चिदानन्दपरमसंविदि तुष्टियुग्मकम् ।
बिन्द्वाढ्यं सपरार्धात् तु कलानाथाच्च वक्त्रतः ॥१३६॥
श्रीपादुकायै हृदयमेवमन्यद् द्वयं भवेत् ।
वक्त्रस्थाने पठेद् देवि बिन्दुस्तनयु वै गलम् ॥१३७॥
व्यञ्जकादपि रेखातो योनिमेवं क्रमान्न्यसेत् ।
दीर्घस्वरैः षण्ढहीनैः षडङ्गन्यासमाचरेत् ।
अथ कामकलां देवीं ध्यायेत् संयतमानसः ॥१३८॥
प्रकाशमध्यस्थितचित्स्वरूपां
वराभये संदधतीं त्रिनेत्राम् ।
सिन्दूरवर्णामतिकोमलाङ्गीं
मायामयीं तत्त्वमयीं नमामि ॥१३९॥
ध्यात्वैवं ब्रह्मरन्ध्रे तु त्रिखण्डाख्यकया न्यसेत् ।
सबिन्दुतुष्टिगाश्चाग्निवायुशक्तिक्रियास्ततः ॥१४०॥

---

सबिन्दुतुष्टि इँ इत्यादौ वक्ष्यमाणं त्रितयम् ॥ १३५ ॥

सच्चिदानन्दपरमसंविदि स्वरूपम् । बिन्द्वाढ्यतुष्टि इँ द्विः । आत्तु । आच्च । तः ॥ १३६ ॥

इति त्यक्त्वा सपरेत्यादि कायै इत्यन्तं स्वरूपम् । मन्त्रद्वयम् । विशेषमाह— वक्त्रेति । वक्त्रपदस्थले बिन्दुस्तनयुगलेति द्वितीयमन्त्रे ॥ १३७ ॥

व्यञ्जकरेखा योनि इति तृतीये । दीर्घस्वरैः आई इत्यादिभिः । षण्ढहीनैः ऋॠऌॡरहितैः संप्रदायाद् बिन्दुयुतैः । षट्चरणः श्लोकः ॥ १३८ ॥

ध्यानमेवाह—प्रकाशेति । प्रकाशस्य शुद्धसंविद्रूपपरशिवस्य मध्येऽन्तस्तादात्म्येन स्थिता या चित् चैतन्यं जडव्यावर्तको धर्मः, विमर्शाख्या शक्तिः, तद्रूपां मायामयीं दुर्घटघटनाकरीम् । तत्त्वमयीं सत्यरूपिणीम् ॥ १३९ ॥

त्रिखण्डमुद्रया । सबिन्दु तुष्टिः इँ । अग्नि ह् । वायु स । शक्ति क । क्रिया ल । तेन ह्स्क्लीं ॥ १४० ॥

मायाहीनं तथा लोपामुद्रावाक्कूटकं शिवे ।
अन्ते सबिन्दुशान्त्याढ्यं पुनः सादिचतुष्टयम् ॥१४१॥
कादित्रयं लादियुग्ममेकमन्त्यं समीरयेत् ।
इयं कामकलाविद्या षोडशार्णा समीरिता ॥१४२॥
विन्यस्यैवं कामकलां पुनस्तत्रैव विन्यसेत् ।
प्रकाशानन्दनाथं च विमर्शाम्बा क्रमाच्छिवे ॥१४३॥
बिन्द्वाढ्यशिववह्न्यन्ते बालातार्तीयमुच्चरेत् ।
क्रमादेतन्मुखे क्षिप्त्वा तार्तीयं तु द्वयान्ततः ॥१४४॥
प्रकाशविमर्शात्मकं परमाच्छिवमेव च ।
श्रीगुरुं तन्नामयुतमथ हंसः शिवस्ततः ॥१४५॥
सोऽहं निर्वाणतः पादुकां पूज्य च ततः परम् ।
यामि हृन्मन्त्रमिति वै न्यासः कामकलाख्यकः ॥१४६॥
अथाष्टत्रिंशतां न्यासं कलानां शृणु सुन्दरि ।
सोमसूर्याग्नयस्तत्र ऋषयोऽनुष्टुबेव च ॥१४७॥

---

मायाहीनं ह्रीं इति रहितं हसकल इति । सबिन्दुशान्ति ईं । सादिचतुष्टयम् । सकलईं ॥ १४१ ॥

कादित्रयं कलईं । लादियुग्मं लईं । एकं ईं ॥ १४२ ॥

पुनरिति त्रिखण्डमुद्रानिवृत्त्यर्थः । एवं च पुनश्चरणन्यासवद् न्यासो ज्ञेयः ॥ १४३ ॥

बिन्द्वाढ्यशिववह्न्योः अं हं इत्यनयोरन्ते बालातार्तीयं सौः । एतद् द्वयं क्रमात् प्रागुक्तयोर्मुखे आदौ क्षिप्त्वा । यथा—अं सौः प्रकाशानन्दनाथ । हं सौः विमर्शाम्बा । इति । पुनः तार्तीयं सौः । द्वयं अं हं ॥ १४४ ॥

तेन अं हं सौः प्रकाशविमर्शात्मक इति परमशिव अमुकानन्दनाथ श्रीगुरु । ततः ॥ १४५ ॥

तः । च ततः परम् । इति त्यक्त्वा हंस इत्यादि यामि इत्यन्तं स्वरूपम् । इमावपि न्यासौ पूर्णाभिषिक्तेन शुभेच्छुना कर्तव्यौ, "कुर्यादेतं शुभावहम्", "षष्ठाम्नाय-गतान् शुभान्" इत्यष्टादशे वक्ष्यमाणत्वात् ॥ १४६ ॥

अष्टत्रिंशत्कलानाम् । तत्र अष्टत्रिंशत्कलान्यासे सोमसूर्याग्नयो ऋषयः ॥१४७॥

त्रिष्टुप् पङ्क्तिः कलारूपा देवता मातृका शिवे ।
वामपादाङ्गुलाग्रान्तं मूर्ध्नि सर्वाङ्गके न्यसेत् ॥१४८॥

मातृकावत् सोमसूर्याग्नीनां चोक्ताः कला न्यसेत् ।
चन्द्रसूर्याग्निसंकाशवक्त्रदेहपदद्वयाम् ॥१४९॥

सुधाकुम्भं पद्मकोशमभयं वरमेव च ।
दधानां चिन्तयेद्देवीं पद्मस्थां परमेश्वरीम् ॥१५०॥

त्रिनेत्रां रक्तवसनां दिव्यभूषां स्मरेद्धृदि ।
न्यास एष समुद्दिष्टश्चाष्टत्रिंशत्कलाख्यकः ॥१५१॥

अथ न्यासं प्रवक्ष्यामि पूर्णमण्डलसंज्ञितम् ।
सदाशिवस्तत्र ऋषिर्गायत्री छन्द उच्यते ॥१५२॥

देवता मातृका प्रोक्ता हृदि ध्यायेत् पराम्बिकाम् ।
नित्यासंयुक्ततत्त्वार्णपूर्णमण्डलरूपिणीम् ॥१५३॥

श्वेतां श्वेताम्बराभूषां ध्यायेऽम्बुजचतुर्भुजाम् ।
पश्चधा पूज्य पश्चाद्वै न्यसेत् संप्रोक्तयोगतः ॥१५४॥

---

अनुष्टुप्त्रिष्टुप्पङ्क्तयश्छन्दांसि। कलारूपा मातृका देवता । मूर्धादिवामपादाङ्गुलाग्रान्तेषु बहिर्मातृकान्यासोक्तषट्त्रिंशत्स्थानेषु मूर्ध्नि सर्वाङ्गे व्यापकत्वेनेत्यष्टत्रिंशत्स्थाने न्यसेत् ॥ १४८ ॥

मातृकावत् । बहिर्मातृकान्यासक्रमवत् । सोमादिकलाः । अं अमृताकलायै नम इत्याद्यष्टमे उक्ताः । कलान्यासध्यानमाह—चन्द्रेत्यादि । चन्द्रादीनां वस्त्रादीनां च यथासंख्यं योजना ॥ १४९ ॥

कोशः कलिका । दक्षोर्ध्वाद्यधःपर्यन्तमायुधानि ॥ १५०-१५१ ॥

तदृष्यादिन्यासमाह—सदाशिव इत्यादि । तत्र पूर्णमण्डलन्यासे ॥१५२॥

ध्यानमेवाह—नित्येत्यादि । नित्यवर्णसंयुक्ततत्त्ववर्णरूपा ये पूर्णमण्डलवर्णाश्चतुर्दशे नामपारायणे प्रोक्ताः, तद्रूपिणीम् ॥ १५३ ॥

अम्बुजयुतचतुर्भुजाम् । चतुर्दशे संप्रोक्तवर्णक्रमयोगतः ॥ १५४ ॥

**मातृकावत् स्वरान् पश्चाद् रक्तषोडशपत्रकम् ।**
**कादिक्षान्तस्य स्थाने तु प्रत्येकं चिन्तयेच्छिवे ॥१५५॥**
**उत्तानं तद्दलाग्रेषु विन्यसेत् पूर्वभागतः ।**
**कादीन् षोडशधाभिन्नान्नित्यायोगेन शङ्करि ॥१५६॥**

---

तत्रादौ बहिर्मातृकान्यासवत् षोडशस्वरान् मस्तकादिषु विन्यस्य तत्पश्चाद् मातृकान्यासोक्तकादिक्षान्तपञ्चत्रिंशत्स्थाने प्रत्येकमुत्तानम् ऊर्ध्वमुखं रक्तषोडशपत्र-पद्मं ध्यात्वा ॥ १५५ ॥

तद्दलाग्रेषु पूर्वदलमारभ्य प्रादक्षिण्येन कादिक्षान्तान् प्रत्येकं षोडशस्वर-भिन्नान्न्यसेत् । नित्यायोगेन स्वरयोगेन ॥ १५६ ॥

पद्धतौ पूर्णमण्डलन्यासोत्तरं षोढान्यासद्वयमुक्तम् । तत्र लघुषोढान्यासस्तु योगिनोहृदयज्ञानार्णवत्रिपुरार्णवमूलक ईषद्भिन्नप्रकारः पद्धतिकृता त्रिपुरार्णवानु-रोधेनोक्त इति तद्वचनानि प्रसङ्गाल्लिख्यन्ते । यथा —"लघुषोढान्यासमथो शृणु संयतमानसा । ऋषिस्तु दक्षिणामूर्तिः पङ्क्तिः छन्दः प्रकीर्तितम् ॥ न्यसेद् बालां द्विरावृत्त्या मुखे षड्वर्गयोगतः । मातृकान्याससम्प्रोक्तरीत्या षड्वर्गयोजनम् ॥ कचट-तपेति वर्णपञ्चकरूपाः पञ्चवर्गा यादिक्षान्तैर्दशभिरेको वर्गः । अ आ इत्यादिह्रस्वदीर्घ-मध्यगतवर्ग्रैरिति तदर्थः । एवं कराङ्गे विन्यस्य ध्यायेच्छ्रीत्रिपुरां पराम् ॥ उद्यत्सूर्यसहस्राभां रक्तमाल्याम्बरोज्ज्वलाम् । पाशाङ्कशेषुचापाढ्यां त्रिनेत्रां चन्द्रशेखराम् ॥ गणेशग्रहनक्षत्र-योगिनीराशिरूपिणीम् । देवीं पीठमयीं ध्यायेन्मातृकां सुन्दरीं पराम् ॥ संपूज्य मानसैरादौ गणेशन्यासमाचरेत् । तत्र ध्यानं गणेशानां सशक्तानां निशामय । तरुणादित्यसंकाशान् गजवक्त्रान्त्रिलोचनान् । पाशाङ्कशवराभीतिकरान् शक्तिसमन्वितान् ॥ तास्तु सिन्दूर-वर्णाभाः सर्वालङ्कारभूषिताः । एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः ॥ ध्यात्वैवं मानसैरिष्ट्वा मातृकावत्प्रविन्यसेत् । विघ्नेश्वराय श्रियै च नम आदौ सबिन्दुकान् ॥ एकैकशो मातृकार्णान् तेषां नाम क्रमाच्छृणु । विघ्नेश्वरो विघ्नराजो विनायकशिवोत्तमौ ॥ विघ्नकृत् विघ्नहर्ता च विघ्नराट् गणनायकः । एकदन्तो द्विदन्तश्च गजवक्त्रो निरञ्जनः ॥ कपर्दी दीर्घवक्त्रश्च सङ्कर्षणवृषध्वजौ । गणनाथो गजेन्द्रश्च शूर्पकर्णस्त्रिनेत्रकः ॥ लम्बोदरो महानादश्चतुर्मूर्तिः सदाशिवः । आमोदो दुर्मुखश्चैव सुमुखश्च प्रमोदकः ॥ एकपादो द्विजिह्वश्च शूरो वीरश्च षण्मुखः । वरदो वामदेवश्च वक्रतुण्डो द्विरण्डकः ॥ सेनानीर्ग्रामणीर्मत्तो विमत्तो मत्तवाहनः । जटी मुण्डी तथा खड्गी वरेण्यो वृषकेतुकः ॥ भक्तप्रियो मेघनादो गणपश्च गणेशकः । त्रिनेत्रकः प्रमोदकः, द्विरण्डकः, गणेशकः—इत्यत्र पादपूर्त्यर्थमेव स्वार्थे कः । तेन त्रिनेत्र इत्याद्येव नाम । श्रीर्ह्रीस्तुष्टिश्च शान्तिश्च

पुष्टिश्चाग्नि सरस्वती ॥ रतिर्मेधा च कान्तिश्च कामिनी मोहिनी तथा। जटा तीव्रा ज्वालिनी च नन्दा च सुरसा तथा ॥ कामरूपिणी सुभ्रूश्च जयिनी तु ततः परम्। सत्या तथैव विघ्नेशी सुरूपिणी च कामदा॥ मदविह्वला विकटा धूम्रा भूतिस्तथैव च। भूमिः सती रमा पश्चान्मानुषी मकरध्वजा॥ विकर्णा भ्रुकुटिर्लज्जा दीर्घघोणा धनुर्धरा। यामिनी च तथा रात्रिश्चन्द्रिका च शशिक्रमा॥ लोला च चपलाक्षिणी ततो ऋद्धिश्च दुर्भगा। सुभगाथ शिवा दुर्गा कालिका च ततः परम् ॥ कालजिह्वा च तत्पश्चाद्भुवेद्वै विघ्नहारिणी।

एवं गणेशान् शक्त्यन्तान्न्यस्य ध्यायेद् ग्रहानथ ॥ रक्तं श्वेतं तथा रक्तं श्यामं पीतं च पाण्डुरम्। धूम्रं कृष्णं तथा धूम्रं ग्रहानेवं विचिन्तयेत्। रविमुख्यान् कामरूपान् सर्वाभरणभूषितान्। वामोरुन्यस्तहस्तांश्च दक्षिणेन वरप्रदान्॥ ध्यात्वैवं मानसैरिष्ट्वा ग्रहान्नवक्रमान्न्यसेत्। हृदये च भ्रुवोर्मध्ये त्रिनेत्रे हृदयादधः ॥ तदूर्ध्वेऽथ गले नाभौ वक्त्रे चाथ गुदे शिवे। स्वरैर्यकवटैर्वर्गैस्तपशाद्यैः कवर्णतः॥ सूर्यश्चन्द्रो मङ्गलश्च बुधश्चैव बृहस्पतिः। शुक्रः शनैश्चरो राहुः केतुरेवं नव ग्रहाः॥ रेणुका चामृता धात्री ज्ञानरूपा यशस्विनी। शाङ्करी शक्तिकृष्णे च धूम्राम्बा तास्तु शक्तयः॥ नक्षत्राणामथ न्यासस्तद्ध्यानं गिरिजे शृणु। ज्वलत्कालाग्निसंकाशाः सर्वाभरणभूषिताः॥ नतिपाण्योऽश्विनीमुख्या वरदाभयपाणयः। नतिपाण्यः नमस्कारमुद्रायुतोर्ध्वबाहुद्वयाः, वरदाभयाङ्किताधःपाणिद्वयाः। ध्यात्वैवं मानसैरिष्ट्वा क्रमेण न्यासमाचरेत्। ललाटे नेत्रयोः कर्णनासिकायुगले गले। स्कन्धकूर्परयुग्मे च मणिबन्धयुगे तथा॥ तलयोश्च तथा नाभौ कट्यूरुजानुयुग्मके। जङ्घयोः पादयुग्मे च क्रमेणैव तु विन्यसेत्॥ कट्यूरुजानूनां युग्मके इति कटिभागद्वयमिति षट्स्थानानि। अश्वीन्द्वाग्न्यब्धिचन्द्रेन्दुपक्षेन्द्वश्वश्विभ्रूद्वयम्। नेत्राश्विचन्द्रपक्षाग्निभूरामेन्दुशशिक्षितिः॥ नेत्रभूक्षरामाब्धिसंख्या वर्णा सबिन्दुकाः। स्वरान्त्यौ क्षान्तिनिहितौ नामादौ क्रमतो न्यसेत्॥ स्वरान्त्यौ अं अः। इदं द्वयं क्षकारान्ते स्थापयेत्। अश्विनी भरणी चैव कृत्तिका रोहिणी तथा॥ मृगशीर्षमथार्द्रा वै ततः स्यात्तु पुनर्वसुः। पुष्यस्तथैवाश्लेषा च मघा पूर्वादिफल्गुनी॥ उत्तराफल्गुनी हस्तश्चित्रा स्वाती ततः परम्। विशाखा चानुराधा च ज्येष्ठा मूलं ततः परम्। द्विरषाढा च श्रवणो धनिष्ठा च शताद्भिषक्। तथा भाद्रपदायुग्मं रेवती सप्तविंशतिः॥

ततस्तु योगिनीन्यासं कुर्यात्तद्विधिरुच्यते। सितासितारुणारक्ताश्चित्रां पीतां च चिन्तयेत्॥ चतुर्भुजाः समैर्वक्त्रैर्युता भूषणभूषिताः। समैर्वक्त्रैराद्याया एकं मुखम्, द्वितीयाया द्वयमित्यादि। पुस्तकं च कपालं च वराभीतिधराः शुभाः॥ ध्यात्वैवं मानसैरिष्ट्वा क्रमेण न्यासमाचरेत्। मातृकां योगिनीविद्यामनुविद्यां ततः परम्। रक्ष रक्ष धातुनामात्मने नाम नमोन्तकम्। स्वरैः कडबवाद्यैश्च हक्षाभ्यामादिक्षान्तकैः॥ ठान्तं यान्तद्वयं खाद्यं षान्तं युग्मं पषष्ठकम्। षट्दीर्घबिन्दुसहितं सप्तविद्यास्त्विमाः क्रमात्॥ तत्तद्वर्णोत्तरं मलवरयूं प्रोच्चरेत्क्रमात्। सप्तेमास्त्वनुविद्याः स्युर्धातुनामान्यपि

शृणु ॥ त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लानि सर्वथा । डाकिनी राकिनी पश्चाल्लाकिनी काकिनी ततः ॥ साकिनी हाकिनी याकिनीत्येव योगिनीगणः । अकारादिविसर्गान्तं डां डीमित्यादि षट्ककम् ॥ डमलवरयूं रक्ष रक्ष पश्चात्त्वगात्मने । डाकिन्यै नम इत्येवं योगिनीन्यासमाचरेत् । विशुद्धयनाहते पूरे स्वाधिष्ठाने च मूलके । आज्ञायां ब्रह्मरन्ध्रे च नृपार्कदशषट्दलम् ॥ वेदपक्षदलं ध्यायन् सहस्रारमपि क्रमात् । राशिन्यासं ततः कुर्यात्तद्विधानं निगद्यते ॥ रक्तं श्वेतं हरिद्वर्णं पाण्डु चित्रं सितं स्मरेत् । पिशङ्गापिङ्गलौ कम्बुकर्बुरासितधूम्रभाः ॥ मेषादिनामसदृशाकारान् ध्यात्वा प्रविन्यसेत् । मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके ॥ तुला च वृश्चिको धनुर्मकरः कुम्भमीनकौ । वेदपक्षाब्ध्यश्विपक्षरसभूतशरास्तथा ॥ शरेषुशरभूतात्मसंख्यवर्णान् समीरयेत् । स्वरान्ते शादिहान्तं तु क्षकारं वान्ततो न्यसेत् ॥ स्वरान्ते शादिचतुष्टयं वकारान्ते क्षकारं च विन्यसेदित्यर्थः । गुल्फे जानुनि वृषणे कुक्षिस्कन्धशिरःसु च ॥ दक्षगुल्फादिके वाममूर्धादौ च क्रमान्न्यसेत् ॥ पीठानि विन्यसेत् पश्चाद्राशीनां न्यासतः परम् । तद्विधानं प्रवक्ष्यामि शृणु संयतमानसा ॥ सितासितारुणश्यामहरित्पीतान्यनुक्रमात् । पुनः पुनः क्रमादेवं पञ्चाशत्स्थानसंचये ॥ पीठानि संस्मरेद्विद्वान् सर्वकार्यार्थसिद्धये । अभ्यर्च्य मानसैः पश्चान्मातृकावत् प्रविन्यसेत् ॥ कामरूपं वाराणसी नेपालं पौण्ड्रवर्धनम् । काश्मीरं कान्यकुब्जं च पूर्णशैलं तथार्बुदम् ॥ आम्रातकेश्वरैकाम्रे त्रिःस्रोतः कामकोटकम् । कैलासो भृगुकेदारौ ततश्चन्द्रपुरी भवेत् ॥ श्रीरोङ्कारस्तथा जालन्धरो मालव एव च । कुलान्तं देवकोटं च गोकर्णो मारुतेश्वरः ॥ अट्टाहासोऽथ विरजो राजगृहं महागिरिः । कोलगिरिश्चैलापुरं कालेश्वरो जयन्तिका ॥ उज्जयिन्यथ चरित्रं क्षिरिका हस्तिनापुरम् । ओड्डीशोऽथ प्रयागश्च षष्ठीशश्च मायापुरी ॥ जलेश्वरश्च मलयः श्रीशैलो मेरुरेव च । गिरिर्महेन्द्रो वामनो हिरण्यपुरमेव च ॥ महालक्ष्मीस्तथोड्याणं छायाछत्रमिति क्रमात् । मातृकार्णमुखाश्चैते पीठान्ताः क्रमतो न्यसेत् ॥ मातृकावर्णमुखा मातृकावर्णाद्याः पीठशब्दान्ताः अं कामरूपपीठाय नम इत्यादि । एवं तु लघुषोढाख्यो न्यासः प्रोक्तो हिमाद्रिजे । एवं विन्यस्तदेहस्तु देवताभावमाप्नुयात् ॥" इति ।

महाषोढान्यासश्चोक्तः कुलार्णवे । यथा—"प्रपञ्चो भुवनं मूर्तिर्मन्त्रदैवतमातरः । महाषोढान्यास एष सर्वन्यासोत्तमोत्तमः ॥ तत्रादौ परमेशानि प्रपञ्चन्यासमुच्यते । प्रपञ्चद्वीपजलधिगिरिपत्तनपीठकाः ॥ क्षेत्रं वनाश्रमगुहानदीचत्वरमुद्भिज्जम् । स्वेदजाण्डजे जरायुजमित्युक्तानि षोडश ॥ श्रीर्माया कमला विष्णुवल्लभा पद्मधारिणी । समुद्रतनया लोकमाता कमलवासिनी ॥ इन्दिरा मा रमा पद्मा तथा नारायणप्रिया । सिद्धलक्ष्मी राज्यलक्ष्मीर्महालक्ष्मीरुदीरिता ॥ शक्तयः स्युः प्रपञ्चादिस्वराणामधि-

देवताः। लवस्त्रुटिः कला काष्ठा निमेषः क्षण एव च॥ घटिका च मुहूर्तश्च प्रहरो दिवसस्तथा। सन्ध्या रात्रिस्तिथिश्चैव वारो नक्षत्रमेव च॥ योगश्च करणं पक्षो मासो राशिस्तथा ऋतुः। अयनं वत्सरयुगं प्रलयः पञ्चविंशतिः॥ आर्योमा चण्डिका दुर्गा शिवा पर्णाम्बिका सती। ईश्वरी शाम्भवीशानि पार्वती सर्वमङ्गला॥ दाक्षायणी हैमवती महामाया महेश्वरी। मृडानी चैव रुद्राणी शर्वाणी परमेश्वरी॥ काली कात्यायनी गौरी भवानीति समीरिताः। शक्तयः स्थुलवादीनां स्पर्शानामधिदेवताः॥ पञ्चभूतास्तु तन्मात्रा कर्मज्ञानेन्द्रियाणि च। प्राणा गुणत्रयं चान्तःकरणानां चतुष्टयम्॥ तथावस्थात्रयं सप्त धातुर्दोषत्रयं दश। ब्राह्मी वागीश्वरी वाणी सावित्री च सरस्वती॥ गायत्री वाक्प्रदा पश्चाच्छारदा भारती तथा। विद्यात्मिका पञ्चभूतप्रभृतीनां तु शक्तयः॥ त्रितारमूलविद्यान्ते मातृकाक्षरतः प्रिये। वदेत् प्रपञ्चरूपायै श्रियै नम इति क्रमात्॥ प्रपञ्चादींश्च तच्छक्तीरेवं संयोज्य योजयेत्। मातृकान्यासः संप्रोक्तः स्थानेषु क्रमतो न्यसेत्॥ त्रितारमूलवर्णाः सकलप्रपञ्चरूपतः। आयै श्री च पराम्बादेव्यै नमो व्यापकं न्यसेत्॥ प्रपञ्चन्यास उक्तोऽयं भुवनन्यास उच्यते। अत्र त्रितारीति संप्रदायभेदेषु चतुस्तार्यादेरुपलक्षणम्। मूलविद्येति ऊर्ध्वाम्नायाद्यविद्यापराप्रासादाख्या द्व्यक्षरी, तामेवाधिकृत्यैतन्न्यासप्रक्रमात्। एतेन नात्र केवलमन्त्रदीक्षादिमतामधिकार इति ध्येयम्। त्रितारमूलविद्यान्ते अं आं इं अतलं वदेत्॥ लोकं च निलयं चैव शतकोटि-पदं तथा। गुह्याद्या योगिनीमूलदेवता च युतं तथा॥ वदेदाधारशक्त्यम्बादेव्यै हृत्पादयोर्न्यसेत्। ईं उं ऊं वितलं गुह्यतरानन्तादियोगिनी॥ शेषं च पूर्ववत्प्रोक्त्वा गुल्फयोर्विन्यसेत् प्रिये। ऋं ॠं लृं सुतलं पश्चाद् गुह्याचिन्त्येतिसंज्ञितम्॥ शेषं च पूर्ववच्चैवं जङ्घयोर्विन्यसेत्प्रिये। ॡं एं ऐं महातलं च महागुह्यस्वतन्त्रकम्॥ शेषं पूर्ववदुक्त्वैवं जान्वोर्देवि प्रविन्यसेत्। ओं औं तलातलपरमगुह्ये छेतिसंज्ञकम्॥ शेषं च पूर्ववत्प्रोक्त्वा ऊर्वोरेवं प्रविन्यसेत्। अं अः रसातलं चैव रहस्यज्ञानसंज्ञकम्॥ शेषं च पूर्ववत्प्रोक्तं गुह्यदेशे प्रविन्यसेत्। कवर्गमपि पातालं रहस्यतर वै क्रिया॥ शेषं च पूर्ववत्प्रोक्तं मूलाधारे प्रविन्यसेत्। चवर्गं भूरतिरहस्य वै पश्चात्तु डाकिनी॥ शेषं पूर्ववदत्रापि लिङ्गोर्ध्वे तु प्रविन्यसेत्। टवर्गं च भुवर्महारहस्यं डाकिनीमपि॥ शेषं पूर्ववदत्रापि नाभिदेशे प्रविन्यसेत्। तवर्गं च स्वः परमरहस्यं लाकिनीमपि। शेषं तु पूर्ववत्पश्चाद् हृदये तु प्रविन्यसेत्। पवर्गं च महः पश्चाद् गुप्तं वै काकिनीमपि॥ शेषं पूर्ववदुक्त्वा च कण्ठदेशे प्रविन्यसेत्। यवर्गं च जनो गुप्ततरं वै शाकिनीमपि॥ शेषं च पूर्ववत्प्रोक्त्वा नासाग्रे तु प्रविन्यसेत्। शवर्गं च तपः पश्चादतिगुह्यं च हाकिनीम्॥ शेषमुक्तक्रमेणैव ललाटे विन्यसेत्प्रिये। कं क्षं सत्यं महागुप्तं याकिनीमपि च प्रिये॥ शेषं च पूर्ववत् कृत्वा ब्रह्मरन्ध्रे प्रविन्यसेत्। त्रितारं मूलवर्णांश्च सकलाद् भुवनं वदेत्॥ अधिष्ठात्रै श्रीपराम्बादेव्यै च व्यापकं न्यसेत्। कृत्वैवं भुवनं न्यासं मूर्तिन्यासं समाचरेत्॥ केशवो नारायणो

माधवगोविन्दविष्णवः । मधुसूदनसंज्ञश्च त्रिविक्रमसवामनौ ।। श्रीधरश्च हृषीकेशः पद्मनाभो दामोदरः । वासुदेवः सङ्कर्षणः प्रद्युम्नचानिरुद्धकः ।। अक्षराद्येष्टदेशाना चाग्रोर्ध्वनयना तथा । ऋद्धि ऋरूपिणी लुप्ता लूनदोषैकनायिका ।। ऐकारिणी चौघवती चौर्बका वाञ्जनप्रभा । अस्थिमालाधरा चेति संप्रोक्ता स्वरदेवताः ।। भवः शर्वो रुद्रश्च पशुपतिश्चोग्रस्तथा । महादेवस्तथा भीम ईशानस्तत्पुरुषाख्यकः ।। अघोरसद्योजातौ च वामदेव इतीरितः । करभःा खगबला गरिमादिफलप्रदा ।। घण्टा पद्मधराङ्गार्णा तथा चन्द्रार्धधारिणी । छन्दोमयी जगत्स्थाना झलत्तारा ततः परम् ।। ज्ञानदा टङ्का ढक्काढ्या तथा टङ्कारडामरी । कभादीनां ठडान्तानां वर्णानां देवतास्त्विमाः ।। ब्रह्मा प्रजापतिर्वेधाः परमेष्ठी पितामहः । विधाता च विरिञ्चश्च स्रष्टा च चतुराननः ।। हिरण्यगर्भ इत्युक्ताः क्रमाद् ब्रह्मादयो दश । पक्षिणी रञ्जिनी लक्ष्मीर्वज्रिणी शशिधारिणी ।। षडाधारा लया सर्वनायिका हसितानना । ललिता च क्षमा चेति यादिक्षान्ताधिदेवताः ।। त्रितारं मूलमार्णान्ते केशवादीन् सशक्तिकान् । चतुर्थ्यन्तान्नमोयुक्तान् मस्तके चानने न्यसेत् ।। स्कन्धपार्श्वकटिऊरुजानुजङ्घापदद्वये । दशवामक्रमेणैव विन्यसेत् परमेश्वरि ।। कभाद्यर्णयुतान् देवि भवादीन् शक्तिसंयुतान् । पादपार्श्वबाहुकण्ठपञ्चवक्त्रेषु विन्यसेत् ।। दशाधारेषु ब्रह्मादीन्यादिशक्तियुतान् न्यसेत् । अत्र पञ्चवक्त्रेति वदनं दक्षवामकर्णौ मस्तकपृष्ठं शिरश्चेति । दशाधारेति मूलाधारादि आज्ञान्तम्, अर्धचन्द्रादि नादान्तमिति सम्प्रदायोऽवसेयः । त्रितारमूलविद्यार्णाः सकलमूर्तिरूप वै ।। आयै श्री पराम्बादेव्यै नमो वै व्यापकं न्यसेत् । मूर्तिन्यासं विधायेत्थं मन्त्रन्यासमथाचरेत् ।। त्रितारमूलं अं आं इं एकलक्षं च कोटि च । भेदश्च प्रणावद्यैकाक्षरात्माखिलमन्त्रतः ।। ततोऽधिदेवतायै स्यात्सकलं च फलप्रद । आयै तथैक कूटेश्वर्यम्बादेव्यै नमो वदेत् ।। ईं उं ऊं द्व्यादि हंसादि द्विकूटं पूर्ववत्परम् । ऋं ॠं लृं त्र्यादिवह्न्यादित्रिकूटं पूर्ववत्परम् । लॄं एं ऐं च चतुश्चन्द्रचतुःकूटं च पूर्ववत् । ओं औं अं अः पञ्चलक्षं सूर्यादि पूर्ववत्परम् ।। कं खं गं चैव षड्लक्षं स्कन्दादि पूर्ववत्परम् । घं ङं चं सप्तलक्षं गणेशादिपूर्ववत्परम् ।। छं जं झं अष्टलक्षं वटुकादिपूर्ववत्परम् । ञं टं ठं नवलक्षं च ब्रह्मादि पूर्ववत्पम् ।। डं ढं णं दशलक्षं च विष्णवादिपूर्ववत्परम् । तं थं दं रुद्रलक्षं च रुद्रादि पूर्ववत्परम् ।। धं नं पं द्वादशलक्षं वाण्यादिपूर्ववत्परम् । फं बं भं त्रयोदशकं लक्ष्म्यादि पूर्ववत् परम् ।। मं यं रं चतुर्दशकं गौर्यादिपूर्ववत्परम् । लं वं शं पञ्चदशकं दुर्गादिपूर्ववत्परम् ।। षाद्यं षोडशलक्षं त्रैपुरादिपूर्ववत्परम् । मूलाधाराद्विशुध्यन्तपञ्चके लम्बिकाज्ञयोः ।। बिन्द्वादित्रितये नादनादान्तेति चतुष्टये । शक्त्यादौ च महाबिन्दौ पञ्चके च क्रमान्न्यसेत् ।। त्रितारमूलविद्यार्णाः सकलमन्त्ररूप वै । आयै श्रीपराम्बादेव्यै नमो वै व्यापकं न्यसेत् ।। मन्त्रन्यासं विधायेत्थं दैवतन्यासमाचरेत् । त्रितारीमूलमन्त्रान्ते अं आं सहस्रकोटि च । ऋषिकुलेति शब्दान्ते सेवितायै पदं वदेत् । निवृत्यम्बा ततो देव्यै नम इत्युच्चरेत्प्रिये ।। इं ईं योगिप्रतिष्ठाम्बा शेषं

पूर्ववदुच्चरेत् । उं ऊं तपस्त्रिविद्याम्बा शेषं पूर्ववदुच्चरेत् ॥ ऋं ॠं शान्तश्च शान्त्यम्बा शेषं पूर्ववदुच्चरेत् । लृं ॡं मुनिशान्त्यतीताम्बा शेषं पूर्ववदाचरेत् ॥ एं ऐं देवश्च हृल्लेखां शेषं पूर्ववदाचरेत् । ओं औं राक्षसगणनां शेषं॰ त् ॥ अं झं विद्याधरो रक्तां॰ शेषं॰त् । कं खं सिद्धो महोच्छुमां॰ शेषं॰ त् ॥ गं घं साध्यः करालिकां॰ शेषं॰ त् । ङं चं अप्सरसो जयां॰शेषं त् ॥ छं जं गन्धर्वविजया॰ शेषं॰ त् । झं ञं गुह्यकअजितां शे॰ त् ॥ टं ठं यक्षो ह्यपराजितां॰ शे॰ त्॰ । डं ढं किन्नरवामां॰ च शे॰ त् ॥ णं तं पन्नगज्येष्ठां॰ च शे॰ त् । थं दं पितृ तथा रौद्री॰ शे॰ त् ॥ धनं गणेशो मायां च शे॰ त् । पं फं भैरवकुण्डलिनी शे॰ त् ॥ बं भं वटुककालीं च शे॰त् । मं यं क्षेत्रेशकालरात्रि शेषं॰ त् ॥ रं लं प्रमथभगवतीं शे॰ त् । वं शं ब्रह्म च सर्वेशीं शे॰त् ॥ षं सं विष्णुश्च सर्वज्ञां शे॰त् । हं कं रुद्रः सर्वकर्त्रीं शेषं॰ त् ॥ क्षं चराचर-शक्ति च शे॰ त् । अङ्गुष्ठगुल्फजङ्घासु जानूरुकटिपार्श्वके ॥ स्तनकक्षकरांसेषु कर्णमूर्धसु च क्रमात् । दक्षवामक्रमेणैव विन्यसेत् कुलनायिके । त्रितारमूलविद्यार्ण-सकलदेवता च रू । पायै पराम्बादेव्यै हृद् व्यापकत्वेन विन्यसेत् ॥ देवन्यासं विधायेत्थं मातृकान्यासमाचरेत् । त्रितारमूलमन्त्रान्ते कवर्गानन्तकोटि च ॥ भूचरी कुलसहितायै आं क्षां मङ्गलापदम् ॥ अम्बादेव्यै ततो ब्रूयादां क्षां ब्रह्माणि तत्परम् ॥ अम्बादेव्यै अनन्तकोटिचक्रे भूतकुलेति च । सहिताय अं क्षं मङ्गलनाथाय च अं वदेत् ॥ क्षं चासिताङ्गभैरवनाथाय नम उच्चरेत् । चवर्गं खेचरीमीलां चर्चिकाम्बां महेश्वरीम् ॥ वेतालमिं लं रुरु च शेषं पूर्ववदुच्चरेत् । टवर्गंपातालचरी मूं हां योगीश्वरीपदम् ॥ कौमारीं पिशाच मुंहुं चण्ड शेषं च पूर्ववत् । तवर्गं दिक्चरीमृं सां हरसिद्धां च वैष्णवीम् । अपस्मारं तथा ॠं सं क्रोधशेषं च पूर्ववत् । पवर्गं सहचरीं लृं षां भद्रां वाराहीं ततः। ब्रह्मराक्षस वै ॡं षमुन्मत्तं पूर्ववत्परम् । यवर्गं गिरिचरीमैंशां किलकिलामिन्द्राणीम् । चेटकमेषां कपाली शेषं पूर्ववदीरयेत् । शवर्गं वनचरीमौम्बां कालरात्रिं ततः परम् ॥ चामुण्डां प्रेतमोम्बां च भीषणं पूर्ववत्परम् । कं क्षं जलचरी अंः लां भीषणां च ततः परम् ॥ महालक्ष्मीं च कूष्माण्डं अं लं संहारपूर्ववत् । आधारे स्वाधिष्ठानपूरानाहतविशुद्धिषु ॥ आज्ञायां नादान्तके च महाबिन्दौ च विन्यसेत् । त्रितारमूलविद्यार्णाः समस्तमातृभैरव ॥ अधिदेवतायै श्रीपराम्बेति व्यापकं न्यसेत् । विन्यसेन्मातृकामेवमादौ ऋष्यादिकं न्यसन् । ब्रह्मा ऋषिस्तु संप्रोक्तो जगती छन्द उच्यते । अर्धनारीश्वरो ह्यत्र देवता परिकीर्तिता ॥ मोक्षार्थं विनियोगः स्यान्मूलं षड्जातिभिर्न्यसेत् । अमृतार्णवमध्ये तु रत्नद्वीपमनोहरे ॥ कल्पवृक्षवनान्तस्थे नवमाणिक्यमण्डपे । नवरत्नमये श्रीमत्सिंहासनगताम्बुजे ॥ अर्धनारी-श्वरं शुद्धं स्फटिकाभं त्रिलोचनम् । त्रिशूलाक्षकरं देवं भस्मसर्पादिभूषणम् ॥ पुरुषाभं दक्षिणाङ्गे वामे स्त्रीरूपधारिणम् । महाषोढोदिताशेषदेवतागणसेवितम् ॥ एवं चित्ताम्बुजे ध्यायेत् सच्चिदानन्दलक्षणम् । एवं ध्यात्वा मानसैस्तु संपूज्य न्यासमाचरेत् । एवं न्यासे कृते देवि साक्षात् परशिवो भवेत् ॥" इति ।

अथ न्यासं शृणु शिवे श्रीचक्राख्यं महत्तरम् ।
सकृद्धिन्यासमात्रेण चक्रराजमयो भवेत् ॥१५७॥
प्राणानायम्य मूलेन ऋष्यादिन्यासमाचरेत् ।
ध्यात्वा संपूज्य देहं स्वं ध्यायेच्छ्रीचक्ररूपकम् ॥१५८॥
पृथ्वीपुरत्रितयभूमिपपत्रनाग-
पत्रेन्द्रकोणदशकोणयुगेभकोणम् ।
अन्तस्त्रिकोणमथ बिन्दुपदं समीड्यं
श्रीचक्रराजमतुलं विमृशेत् स्वदेहम् ॥१५९॥
इति ध्यात्वा पीठशक्तिन्यासमादौ समाचरेत् ।
पादाङ्गुष्ठे दक्षजानुकूर्पराङ्गुलमूर्धसु ॥१६०॥
शिखावामेऽङ्गुलाग्रे च कूर्परे वामजानुनि ।
हृदि सर्वाङ्गके देवि मोहिन्यादि दश न्यसेत् ॥१६१॥

---

अत्र पुस्तकान्तरेषु पाठा भिन्नप्रकारा दृश्यन्ते । क्वचिद् ध्याने भेदः, क्वचित् स्थाने भेदः, क्वचिद्देवताभेदः । क्वचिद् ध्यानान्तरं गुरुध्यानमपि, क्वचिद् योन्यादिदश-मुद्राश्चेति । पद्धतिकृता उद्योतानुसारेण न्यासो लिखित इति तत्रोदाहृतप्रकारेणैव मया मूलवचनानि लिखितानि । ध्यानस्यार्थप्राधान्यात् पद्धत्युक्तध्यानस्यार्थाविरुद्धत्वाद् भेदेऽप्यदोषः । फलस्तुतिः संपूर्णग्रन्थविस्तरभयान्न लिखिता । दिदृक्षुभिश्चतुर्थोल्लासे कुलार्णवे द्रष्टव्या । इति प्रसङ्गात् पद्धत्युक्तषोढान्यासद्वयं तत्तन्मूलवचनैः संवादितम् ।

प्रकृते पूर्णमण्डलन्यासकथनानन्तरं श्रीचक्रन्यासं वक्तुमारभते—अथेत्यादि । महत्तरं प्रागुक्तस्य लघुत्वात् । साधकप्रवृत्तये स्तौति—सकृदिति ॥ १५७ ॥

तद्विधिमेवाह--प्राणानित्यादि । मूलस्य ऋष्यादिदेवतां ध्यात्वेत्यादि । स्वं देहं श्रीचक्ररूपं ध्यायेत् ॥ १५८ ॥

ध्यानमाह—पृथ्वीति । भूमिप षोडश । नाग अष्टौ । इन्द्र चतुर्दश । दशकोणयुगं दशकोणद्वयम् । इभ अष्टौ । बिन्दुपदं बिन्दुस्थानम् । समीड्यं स्तुत्यम् ॥ १५९ ॥

श्रीचक्रन्यासस्यादौ तत्स्थानमाह--पादेत्यादि । पादाङ्गुष्ठे । पादाङ्गुष्ठद्वये । अत्र उपस्थाधः संयुक्तपादतलद्वयं स्कन्धपार्श्वयोः प्रसृतकरतलद्वयमिति स्वदेहस्थितिर्न्यास-विधिपर्यालोचनयाऽवगन्तव्या । दक्षेति जानुकूर्पराङ्गुलमूर्धसु प्रत्येकं सम्बन्धनीयम् । अङ्गुलमूर्धा अङ्गुलाग्रम् ॥ १६० ॥

एवं वामपदमप्यङ्गुलाग्रकूर्परयोः । मोहिन्यादिदशकं पूजाप्रकरणे वक्ष्य-माणम् ॥ १६१ ॥

ध्यात्वा पीठमयं देहं हृदि मूलेन देवताम् ।
विन्यस्य तु नमोऽन्तेन त्रिधा तत्रैव सुन्दरि ॥१६२॥
तिथिनित्यां दिनोत्थां च तन्मन्त्रेण तु विन्यसेत् ।
अथ नित्यामण्डलस्य न्यासं कुर्यात् क्रमेण तु ॥१६३॥
कण्ठमध्याधःप्रदेशाद् दक्षवामस्तनादितः ।
पुनस्तत्स्थानपर्यन्तं मध्यत्र्यस्रं विभावयेत् ॥१६४॥
तत्र पूजाविधानेन कामेश्वर्यादिकान् न्यसेत् ।
हृदि नित्यां षोडशीं च तथा सप्तदशीमपि ॥१६५॥
उच्चार्य तत्तन्मन्त्रं तु समर्थश्चेन्महेश्वरि ।
हृदि पश्चान्मूलदेवीं मूलेन तु त्रिधा न्यसेत् ॥१६६॥
अथ हृन्नाभिमध्ये तु भाव्यं रेखात्रयं शिवे ।
हृत्समीपादिरेखासु न्यसेदोघत्रयं गुरोः ॥१६७॥
समष्ट्या व्यष्टिरूपेण पूजोक्तविधिना पुनः ।
गुरुत्रयं तृतीयस्यां समष्ट्या त्रिषु पादुकाम् ॥१६८॥

---

त्रिधा विन्यस्य । तत्रैवेति नित्यामित्यन्वयः ॥ १६२ ॥

शुक्लप्रतिपदादिपूर्णिमान्तं कृष्णप्रतिपदाद्यमान्तम् एकैकस्मिन् दिने कामेश्वर्यादिचित्रान्तचित्रादिकामेश्वर्यन्तनित्यास्वेकैकक्रमेण तिथिनित्या उदयव्यापितिथिनियता। तिथिवृद्धौ दिनद्वये एका नित्या, तिथिक्षये नित्याद्वयमेकतिथाविति अष्टाङ्गक्रमागता दिननित्येति च सप्तदशे वक्ष्यति । एवं च प्रकृतेऽपि तिथिक्षये तिथिनित्याद्वयं न्यसेत् । तन्मन्त्रेण तत्तन्नित्यामन्त्रेण ॥ १६३ ॥

तत्स्थानमाह--कण्ठेति । तत्स्थानं कण्ठमध्याधःस्थानम् । मध्यत्र्यस्रं सर्वान्तरं त्रिकोणम् । इदं च त्रिकोणभावनं सर्वत्र न्यासेषु तत्तत्स्थानभावनोपलक्षकम् ॥ १६४ ॥

पूजाविधानेन प्रतिरेखायां पञ्चकं पञ्चकम् । शुक्ले कामेश्वर्याद्या वामावर्तेन । कृष्णे चित्राद्या दक्षावर्तेनाग्रादि इत्यादि । षोडशीं सप्तदशीं नित्याम् । १६५ ॥

अं कामेश्वरीनित्यायै नम इत्यादि मन्त्रः । समर्थश्चेत् तत्तन्मन्त्रमप्युच्चार्य न्यसेत् ॥ १६६ ॥

तिर्यग्रेखात्रयम् । हृत्समीपरेखादिषु ॥ १६७ ॥

समष्ट्या दिव्यौघेभ्यः पराख्येभ्य इत्यादि । व्यष्टिरूपेण परप्रकाशानन्दनाथेत्यादि ।

दक्षवामक्रमेणैव स्तनयोर्ग्रीवयोरधः ।
कण्ठमध्याधःप्रदेशे व्यापकत्वेन सर्वतः ॥१६९॥
न्यसेत् षडङ्गदेवीस्तु पुनस्त्रिर्हृदि देवताम् ।
मूलान्ते योगिनीविद्यां पठन् देहं तु व्यापयेत् ॥१७०॥
त्रिपुरा त्रैलोक्यमोहनाय हृद् व्यापयेत् पठन् ।
शिखादिपादाङ्गुष्ठाग्रपर्यन्तं व्यापयेत् पुनः ॥१७१॥
आद्यरेखायै हृदयं पठन् पश्चान्महेश्वरि ।
शिखायां कूर्पराग्रे च पादाङ्गुष्ठाग्रके तथा ॥१७२॥
दक्षाग्रकूर्परे वामकराङ्गुल्यग्रके तथा ।
वामे दक्षे च जान्वग्रे कराङ्गुल्यग्रके तथा ॥१७३॥
दक्षकर्णाग्रके जङ्घागुल्फमध्याग्रके तथा ।
अणिमाद्याः प्रविन्यस्य शिखामूलादितः शिवे ॥१७४॥

---

पूजोक्तविधिना दक्षाद्युत्तरान्ते नामादौ । वाग्बीजयोग इत्यादि तृतीयस्यां रेखायाम् । त्रिषु तिसृषु रेखासु ॥ १६८ ॥

ग्रीवयोः ग्रीवापार्श्वयोः । अधः गलगर्तपार्श्वयोरिति यावत् । कण्ठमध्याधः गलगर्तोर्ध्वे । सर्वतः सर्वत्र स्थानपञ्चके ॥ १६९ ॥

पूजोक्तविधिनेति सर्वत्रानुवर्तते । तेन पूजोक्ततत्तन्मन्त्रेण तथा तथा ध्यात्वा न्यसेदित्यादि सिध्यति । अत एवात्र मन्त्रादीनामकथनमिति ध्येयम् । योगिनीसमष्टिविद्याम् ॥ १७० ॥

त्रिपुरां त्रिपुराचक्रेश्वरीविद्यां सामान्यातिदेशादेव त्रैलोक्यमोहनचक्राय नम इति । एवमग्रेऽपि ॥ १७१ ॥

पठन् पुनर्व्यापयेदिति पूर्वेणान्वयः । न्यासनामान्याह—शिखेत्यादि । अत्र स्थानेष्वग्रं मूलमिति प्रागुक्तदेहसंस्थानस्य बहिर्भागान्तर्भागौ ज्ञेयौ । वामे कूर्पराग्रे पादाङ्गुष्ठयोरग्रे ॥ १७२ ॥

दक्षकूर्पराग्रे वामकराङ्गुल्यग्रे ॥ १७३ ॥

जङ्घागुल्फयोर्यन्मध्यं तस्याग्रे । इति दशसु स्थानेष्वणिमाद्या दश प्रविन्यसेत् । शिखामूलादितः पादाङ्गुष्ठस्य मध्यान्तं विन्यसेदित्यन्वयः ॥ १७४ ॥

पादाङ्गुष्ठस्य मध्यान्तं व्यापकत्वेन विन्यसेत् ।
द्वितीयरेखायै हृदयं शिखामूले महेश्वरि ॥१७५॥
मध्यकूर्परके वामे मध्याङ्गुष्ठे च पादयोः ।
मध्यकूर्परके दक्षे वामदक्षक्रमेण तु ॥१७६॥
मध्येऽङ्गुलानां जानोश्च ब्राह्मयादीन् विन्यसेत् क्रमात् ।
ब्रह्मरन्ध्रादिमूलान्तं पादाङ्गुष्ठस्य शङ्करि ॥१७७॥
तृतीयरेखायै हृदयं व्यापकत्वेन विन्यसेत् ।
बिले मूले कूर्परस्य पादाङ्गुष्ठस्य कूर्परे ॥१७८॥
कराङ्गुलद्वये जान्वोर्वामदक्षक्रमेण तु ।
दक्षकर्णबिलोर्ध्वे च जङ्घगुल्फान्तमध्यके ॥१७९॥
संक्षोभिणीमुखा मुद्राः क्रमाद् देवि प्रविन्यसेत् ।
व्यापयेदखिलस्थाने चक्रेश्या त्रिपुराख्यया ॥१८०॥
प्रकटाख्यां योगिनीं च व्यापकत्वेन विन्यसेत् ।
फालाग्रादिपादपृष्ठपर्यन्तं त्रिपुरेश्वरीम् ॥१८१॥

---

तन्मन्त्रमाह—द्वितीयेति ॥ १७५ ॥

वामे कूर्परमध्ये पादाङ्गुष्ठमध्ये ॥ १७६ ॥

वामदक्षक्रमेण कराङ्गुलानां जानोश्च मध्ये इति सम्बन्धः । योग्यत्वाद् वामकराङ्गुलवामजानुदक्षजानुदक्षकराङ्गुलानां मध्ये इति । इति शिखामूलादिस्थानाष्टके ब्राह्म्याद्यष्टकं न्यसेत् ॥ १७७ ॥

ब्रह्मरन्ध्रादिपादाङ्गुष्ठमूलान्तं व्यापकत्वेव विन्यसेदिति संबन्धः । अत्र पूजाप्रकरणानुरोधात् तृतीयरेखायै इति अन्तश्चतुरस्ररेखायै इति ज्ञेयम् । बिले ब्रह्मरन्ध्रे । मूले इति कूर्परादिस्थानसप्तकेऽन्वेति ॥ १७८ ॥

कूर्परे कराङ्गुलद्वये इति सप्तमी षष्ठ्यर्थे । कूर्परकराङ्गुलजानूनां वामदक्षक्रमः । एवं च बिलवामकूर्परपादाङ्गुष्ठदक्षकूर्परवामाङ्गुलवामजानुदक्षजानुदक्षाङ्गुलानां मूले इति क्रमः । जङ्घगुल्फयोर्योऽन्तो मध्यभागस्तन्मध्ये ॥ १७९ ॥

इति दशसु स्थानेषु मुद्रादशकं न्यसेत् । त्रिपुरामन्त्रान्ते त्रिपुराचक्रेश्वर्यै इति व्यापयेत् । योगिनीं च व्यापयेदिति सम्बन्धः ॥ १८० ॥

त्रिपुरेश्वरीं विद्याम् ॥ १८१ ॥

सर्वाशापरिपूरात्तु कचक्राय नमो वदेत् ।
फालाग्रे दक्षिणे कर्णरन्ध्रे च करभे तथा ॥१८२॥
मणिबन्धाग्रके तद्वत् कराग्रे चोरुजङ्घयोः ।
गुल्फाग्रे पादपृष्ठे च वामे गुल्फाग्रकादिके ॥१८३॥
कामाकर्षिणिकाद्यास्तु विन्यसेत् परमेश्वरि ।
व्यापकं त्रिपुरेश्या च योगिन्या गुप्तसंज्ञया ॥१८४॥
पार्ष्ण्यूर्ध्वात् फालमध्यान्तं व्यापकत्वेन विन्यसेत् ।
त्रिपुरां सुन्दरीं सर्वसंक्षोभणचक्राय हृत् ॥१८५॥
पार्ष्ण्यूर्ध्वे करमध्ये च दक्षे फालस्य मध्यके ।
करमध्ये दक्षिणे तु गुल्फान्तस्तलपाणिके ॥१८६॥
पुनः पाणितले गुल्फेऽनङ्गादिकुसुमान् न्यसेत् ।
त्रिपुरां सुन्दरीं गुप्ततरामपि तु व्यापयेत् ॥१८७॥
भ्रूमध्यात् पार्ष्णिमूलान्तं त्रिपुरां वासिनीं ततः ।
सर्वसौभाग्यदायात्तु चक्राय हृदयं न्यसेत् ॥१८८॥

---

वदन् व्यापकत्वेन विन्यसेदिति सम्बन्धः । करभं कनिष्ठामणिबन्धयोर्मध्यम् ॥ १८२ ॥

करः मणिबन्धकूर्परमध्यम् । ऊर्वग्रे जङ्घाग्रे पादपृष्ठद्वये । आदिपदेन वामकर्णरन्ध्रादिजङ्घान्तं व्युत्क्रमेण ॥ १८३ ॥

इति षोडशस्थानेषु कामाकर्षिण्याद्या न्यसेत् । त्रिपुरेशी मन्त्रनाम । नमोन्तैर्गुप्तयोगिन्या च व्यापकम् ॥ १८४ ॥

पार्ष्ण्यूर्ध्वं पाण्यग्रे । त्रिपुरसुन्दरीविद्याम् इति व्यापकत्वेन विन्यसेत् ॥ १८५ ॥
दशकरमध्ये करमध्ये । अदक्षिणे वामे इत्यर्थः । गुल्फस्यान्तर्मध्ये । तलपाणिके पाणितले ॥ १८६ ॥

गुल्फे गुल्फमध्ये । अत्र योग्यत्वाद् गुल्फपाणितलयोर्दक्षवामक्रमः । अनङ्गकुसुमाद्याः प्रोक्ताष्टसु स्थानेषु न्यसेत् । प्रोक्तवत् त्रिपुरसुन्दरीचक्रेश्वरीं गुप्तचरयोगिनीं च व्यापयेत् ॥ १८७ ॥

त्रिपुरवासिनीं व्यापकत्वेन न्यसेत् ॥ १८८ ॥

भ्रूमध्ये कर्णमूले च कराङ्गुष्ठस्य मूलके ।
भुजमध्ये चोरुजङ्घामूलयोर्गुल्फमूलके ॥१८९॥
पार्ष्णिमूले वामभागे गुल्फादिषु पुनः शिवे ।
त्रिपुरां वासिनीं सम्प्रदायाख्यां योगिनीमपि ॥१९०॥
उक्तस्थानेषु देवेशि व्यापकत्वेन विन्यसेत् ।
नासामूलाद्युपस्थान्तं विन्यसेत् त्रिपुराश्रियम् ॥१९१॥
सर्वार्थसाधकाद् देवि चक्राय हृदयं पठन् ।
नासामूले नेत्रहनुकटिस्फिक्षु च दक्षतः ॥१९२॥
उपस्थे च स्फिगाद्येषु सर्वसिद्धिप्रदायकाः ।
त्रिपुराद्यां श्रियं पश्चात् कुलोत्तीर्णाख्ययोगिनीम् ॥१९३॥
स्थानेषूक्तेषु देवेशि व्यापकत्वेन विन्यसेत् ।
नासाग्राद् बस्तिपर्यन्तं त्रिपुरामालिनीं पठन् ॥१९४॥
सर्वरक्षाकराच्चक्राय हृत्प्रोक्त्वा तु व्यापयेत् ।
नासाग्रे दक्षभागात्तु कपोले स्कन्धपार्श्वयोः ॥१९५॥

---

कर्णमूलादिषट्कं दक्षिणम् । भुजः स्कन्धकूर्परमध्यम् । ऊरुमूले जङ्घामूले ॥ १८९ ॥

पार्ष्णिद्वयमूले वामभागे वामगुल्फादिषु प्रोक्तविपरीतक्रमेण षट्सु वक्ष्यमाणसंक्षोभिण्याद्या न्यसेदिति शेषः । पुनर्न्यसेत् ॥ १९० ॥

भ्रूमध्याद्युक्तस्थानेषु चक्रेश्वरीं योगिनीं च व्यापकत्वेन विन्यसेत् ॥ १९१ ॥

हृदयं पठन् विन्यसेदिति सम्बन्धः । हनुर्गण्डगलयोर्मध्यम् । स्फिक् कट्यूर्वोर्मध्यम् ॥ १९२ ॥

स्फिगाद्येष्वित्यादिना कटिहनुनेत्राणां संग्रहः। सर्वसिद्धिप्रदायका, न्यसेदित्यन्वयः। त्रिपुराश्रियं नासामूलाद्युक्तस्थानेषु चक्रेश्वरीं योगिनीं च व्यापकत्वेन न्यसेदित्यन्वयः ॥ १९३ ॥

पठन् व्यापयेदित्यन्वयः ॥ १९४ ॥

दक्षभागात् कपोलादिषु स्कन्धे पार्श्वे च ॥१९५ ॥

कटिसन्धौ च बस्तौ च कटिसाध्यादिषु क्रमात् ।
त्रिपुरामालिनीं तद्वन्निगर्भाख्यां च योगिनीम् ॥१९६॥
उक्तस्थानेषु देवेशि व्यापकत्वेन विन्यसेत् ।
चिबुकान्नाभिपर्यन्तं सिद्धान्तां त्रिपुरां पठन् ॥१९७॥
सर्वरोगहराच्चक्राय हृदेवं तु व्यापयेत् ।
चिबुके दक्षतो ग्रीवाकक्षकुक्षिसु नाभिके ॥१९८॥
कुक्ष्यादिषु वशिन्याद्यास्त्रिपुराद्यां च सिद्धिकाम् ।
रहस्यां योगिनीं तद्वदुक्तस्थानेषु व्यापयेत् ॥१९९॥
कण्ठादिहृदधोऽन्तं तु त्रिपुराम्बामनुं स्मरन् ।
सर्वसिद्धिपदाच्चक्राय हृदेवं तु व्यापयेत् ॥२००॥
वामदक्षस्कन्धमूले दक्षवामस्तनादधः ।
आयुधान् विन्यसेद् देवि पूजोक्तविधिना क्रमात् ॥२०१॥
कण्ठे च स्तनयोर्दक्षवामयोः क्रमतो न्यसेत् ।
कामेश्वर्यादिकाश्चोक्तक्रमेणैव महेश्वरि ॥२०२॥
त्रिपुराम्बां तथा चातिरहस्याख्यां च योगिनीम् ।
व्यापकत्वेन विन्यस्य हृदि मूलं महेश्वरि ॥२०३॥

---

कटिसन्धिरित्यूरुबस्तिमध्यम् । बस्तिर्नाभिलिङ्गमध्यम् । आदिना पार्श्वस्कन्धकपोलानां संग्रहः । एतेषु वक्ष्यमाणसर्वज्ञाद्या न्यसेदिति शेषः । निगर्भयोगिनीं चोक्तस्थानेषु न्यसेदित्यन्वयः ॥ १९६ ॥

त्रिपुरासिद्धां पठन् व्यापयेदित्यन्वयः ॥ १९७ ॥

दक्षभागात् । कुक्षिः पार्श्वोदरमध्यम् । नाभिके नाभौ ॥ १९८ ॥

आदिना कक्षग्रीवयोः संग्रहः । वामकुक्ष्यादिषु वशिन्याद्या विन्यसेदिति सम्बन्धः । त्रिपुरासिद्धां चिबुकाद्युक्तस्थानेषु चक्रेश्वरीं योगिनीं च व्यापयेत् ॥ १९९ ॥

कण्ठादिहृदयाधःपर्यन्तं व्यापयेत् ॥ २०० ॥

वामस्कन्धमूले दक्षस्कन्धमूले केवलनमोन्तनामापेक्षया मन्त्रविशेषद्योतनाय पुनः पूजोक्तेति ॥ २०१ ॥

दक्षस्तनवामस्तनयोः । कामेश्वर्यादिन्यासोक्तक्रमेण ॥ २०२ ॥

उक्तस्थानेषु योगिनीं च व्यापकत्वेन विन्यस्य । हृदि व्यापयेदित्यन्वयः ॥२०३॥

सर्वानन्दमयाच्चक्राय हृदेवं तु व्यापयेत् ।
तुर्यां विन्यस्य तत्रैव महात्रिपुरसुन्दरीम् ॥२०४॥
परापररहस्याख्यां समस्ताङ्गे ततः परम् ।
अखण्डाख्यांमहाविद्यां व्यापकत्वेन विन्यसेत् ॥२०५॥
इत्युक्तः श्रीचक्रसंज्ञो न्यासः सर्वोत्तमोत्तमः ।
सकृद्विन्यासमात्रेण देवताप्रीतिमाप्नुयात् ॥२०६॥
तद्देहे ललिता देवी सदा सन्निहिता भवेत् ।
श्रीचक्रन्याससंयुक्तं सकृत् पूज्य जनो भुवि ॥२०७॥
चक्रराजार्चनफलं प्राप्नुयान्नात्र संशयः ।
अयं न्यासस्त्रिधा देवि संहारः सृष्टिरेव च ॥२०८॥
स्थितिश्च तत्र संहारः प्रोक्त एव महेश्वरि ।
विपरीतक्रमः सृष्टिर्बाह्यश्रीन्यासभागके ॥२०९॥
नवचक्रेश्वरीमन्त्रन्यासात् प्रोक्तः स्थितिः शिवे ।
इत्येवं तु महेशानि श्रीचक्रन्यास ईरितः ॥२१०॥

---

तुर्यां कामेश्वर्यादिन्यासे चतुर्थीं विद्याम् ॥ २०४ ॥

महात्रिपुरसुन्दरीं चक्रेश्वरी परापररहस्याख्यां योगिनीं तत्रैव विन्यस्येति सम्बन्धः । समस्ताङ्गे अखण्डाख्यां विन्यसेदित्यन्वयः ॥ २०५ ॥

उपसंहरति—इत्युक्त इति । सप्तदशोल्लासे आवरणपूजायां मन्त्राः स्पष्टा भविष्यन्तीति नेह विशेषतो व्याख्या कृता ॥ २०६ ॥

तस्य न्यासकर्तुर्देहे विशेषतो न्यासमहिमानमाह—श्रीचक्रेत्यादि ॥ २०७ ॥

अयं श्रीचक्राख्यो न्यासः संहारसृष्टिस्थितिभेदेन त्रिधा ॥ २०८ ॥

तत्र त्रिषु मध्ये यः प्रोक्तः, स एव संहाराख्यः । एतद्विपरीतक्रमो बिन्द्वादिभूपुरान्तन्यासरूपः सृष्टिन्यासः । लघुबाह्यश्रीचक्रन्यासस्य भागके स्थाने पादादौ नवचक्रेश्वरीमन्त्रन्यासात् स्थितिन्यासः प्रोक्त इत्यन्वयः ॥ २०९ ॥

प्रकृतमुपसंहरति—इतीति । योगिनीहृदयोक्तः श्रीचक्रन्यासस्तु इतोऽत्यन्तभिन्नप्रकार एव । सृष्ट्यादिभेदस्त्वेवमेवोक्तः । समर्थेन संहारादित्रयमपि कर्तव्यम् । असमर्थेन तुसंहाराख्य एव कर्तव्यः, प्रोक्तसंहारपूजाया उत्तमत्वनिरूपणादित्याद्यवधेयम् ॥२१०॥

अथान्यच्छृणु देवेशि महागुह्यं महत्तरम् ।
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते ॥२११॥
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।
तं महाशक्तीनामानं न्यासं वक्ष्यामि सुन्दरि ॥२१२॥
सुदुर्लभमिदं भद्रे सर्वतन्त्रेषु गोपितम् ।
सत्यं वक्ष्यामि नैतेन समो न्यासोऽस्ति कुत्रचित् ॥२१३॥
जगच्छून्यं विभाव्याथ निरालम्बतया स्थितः ।
आसनाधः पूजयेच्च तद्विधानं शृणु प्रिये ॥२१४॥
महाविद्यास्थितो वह्निः सेन्दुः पृथि च व्यै नमः ।
ततः स्पृशन् सप्तधा तु मायां जप्त्वाथ पूजयेत् ॥२१५॥
सप्तशक्तिस्तत्र देवि जयां च विजयां तथा ।
जयतीमजितां पश्चात्तथा देव्यपराजिताम् ॥२१६॥
सङ्गमामपि रम्भां त्रिः प्राणानायम्य मूलया ।
न्यसेदृष्यादिकान् पश्चादृषिः स्यात् परमः शिवः ॥२१७॥

---

न्यासान्तरमाह अथेत्यादि । महागुह्यम् अतिगोप्यम् । महत्तरम् अत्युत्तमम् । यस्य न्यासविधेः ॥ २११ ॥

तन्नामाह—महाशक्तीति ॥ २१२ ॥

इदं न्यासविधानम् । नायमसदर्थवाद इत्याह—सत्यमिति । एतेन महाशक्तिन्यासेन ॥ २१३ ॥

तद्विधिमाह—जगदिति । नामरूपात्मकं जगन्नास्तीति भावनं शून्यभावनम् । निरालम्बत्वे एतद्भावनमपि नास्तीति भेदः । तद्विधानं पूजाविधानम् ॥ २१४ ॥

महाविद्या ऊ । वह्निः ह । तेन हूँ पृथिव्यै नमः । आसनं स्पृशन् । मायां ह्रीं । तत्र आसने । सप्तशक्तीः पूजयेदित्यन्वयः ॥ २१५ ॥

शक्तीराह—जयामित्यादि ॥ २१६ ॥

मूलया विद्यया त्रिः प्राणानायम्य । न्यासस्य ऋष्यादिकान् । परमशिव ऋषिः ॥ २१७ ॥

छन्दश्चातिजगत्याख्यं महाशक्तिर्हि देवता ।
त्रितार्या विन्यसेद् देवि महाशक्तिस्वरूपिणीम् ॥२१८॥

मूलदेवीं हृदि ध्यात्वा तद्वपुः स्वतनौ न्यसेत् ।
योनौ नाभौ चाग्रयोस्तु करयोर्हृदि फालके ॥२१९॥

कर्णयोर्लिङ्गमूले च चिबुकाग्रे महेश्वरि ।
त्रितारीं तु महेशानि तत्र चाद्ये प्रविन्यसेत् ॥२२०॥

प्रतिष्ठातुष्टिरतिषु वह्निस्पर्शौ तथा शिवे ।
शक्तिरूपे वह्निरूपे वायुरग्न्यूष्मकौ तथा ॥२२१॥

चक्षुस्पर्शौ क्रमात् षट्कं युक्तं बिन्दुविभूषितम् ।
अन्ते रमा शक्तिपुटा चैवमष्टसु विन्यसेत् ॥२२२॥

समस्तमातृकामूलं सर्वानुस्यूतरूपजम् ।
अनुत्तरं शिवं ध्यायन्नकारं ब्रह्मरन्ध्रके ॥२२३॥

बालां कलाभ्यां रहितां तदन्ते मातृकां क्रमात् ।
अकारादिक्षकारान्तपञ्चाशत्संख्यका न्यसेत् ॥२२४॥

---

त्रितार्या ऐं ह्रीं श्री इति । महाशक्तिस्वरूपिणीं मूलदेवीं ध्यात्वेत्यन्वयः ॥२१८॥

मूलदेवीरूपस्वतनौ शरीरे । स्थानान्याह--योनावित्यादि । कराग्रयोः ॥२१९॥

करयोः कर्णयोरित्येकं स्थानम् । तत्र प्रोक्ताष्टस्थानमध्ये । आद्ये योनौ त्रितारीं विन्यसेत् ॥ २२० ॥

प्रतिष्ठा आ । तुष्टिः ई । रतिः ॐ । एतेषु वह्निस्पर्शौ ह्र । शक्तिरूपे क्ल । वह्निरूपे ह्र । वायुः स । अग्न्यूष्मकौ ह्ला ॥ २२१ ॥

चक्षुस्पर्शौ व्र इति षट्कं प्रतिष्ठातुष्टिरतिषु युक्तं बिन्दुयुतं ह्लां ह्लीं ह्लूं क्लां क्लीं क्लूं इत्यादि इति त्रितार्यादिसप्तमन्त्राणामन्ते । रमा श्रीं । इदं शक्तिपुटं सौः श्रीं सौः इति । एवं त्रितार्याद्यष्टमन्त्रान् योन्याद्यष्टसु स्थानेषु क्रमेण ऐं ह्रीं श्रीं नमः इत्यादि विन्यसेत् ॥ २२२ ॥

समस्तमातृकाया मूलमुपादानकारणम् । अत एव सर्ववर्णानुस्यूतम् अनुत्तरं सर्वकारणं शिवात्मकमकारं ब्रह्मरन्ध्रे ध्यायन् न्यसेदित्यन्वयः ॥ २२३ ॥

कलाभ्यां रहितां बालां ऐं ईं सौः इति ॥ २२४ ॥

बिले त्वकारं विन्यस्य तन्मयानखिलान् स्मरन् ।
तालुमूले च नासाग्रे चोपस्थे गुदपृष्ठयोः ॥२२५॥
कटिमध्येऽथ वृषणे पृष्ठोर्ध्वे लम्बिकास्थले ।
सर्वाङ्गे गुह्यके लिङ्गमध्ये नादे तदन्तके ॥२२६॥
कण्ठे विसर्गं विन्यस्य हृदि मूर्ध्न्यथ जङ्घयोः ।
स्तनयोर्नासिकायां च भ्रूमध्ये वामदक्षयोः ॥२२७॥
कुक्ष्योश्च मूलयोरूर्वोर्दन्ते जिह्वाग्रके मुखे ।
कक्षयोश्चास्थिषु तथा चित्तेना भौ ललाटके ॥२२८॥
कर्णयो रन्ध्रके चाथ कपोलद्वितये तथा ।
नेत्रयोरूर्ध्वसाहस्रदले चानाहते ततः ॥२२९॥
स्कन्धयोश्च भ्रुवोस्तद्वद्धनुमूलद्वये तथा ।
तालुमूलयुगे मेढ्रगुदमध्ये रसेन्द्रिये ॥२३०॥
सर्वाङ्गे वाममूर्धादिदक्षमूर्धावसानकम् ।
शकारं व्यापयेत्तालुमूलयोः सर्वगात्रके ॥२३१॥
बिले सर्वाङ्गुलिषु च कुण्डलिन्यां ध्रुवं न्यसेत् ।
ऐकारं शिवशक्त्योस्तु सामरस्यमयं न्यसेत् ॥२३२॥

---

बिले ब्रह्मरन्ध्रे । एवं ध्यायन् । ऐं ईं सौः अं नमः इति विन्यस्य अकारमयानाकारादीन् ध्यायन् न्यसेत् । स्थानान्याह--तालिवत्यादि । तालु मुखान्तरूर्ध्वदन्तान्तर्भागो जिह्वोर्ध्वदेशः, तन्मूलं जिह्वामूलोपरिभागः । गुदे पृष्ठे च ॥ २२५ ॥

तदन्तके नादान्ते ॥ २२६ ॥

कण्ठे कण्ठपर्यन्तस्थाने विसर्गं विसर्गान्तं विन्यस्य हृदयादिषु कादीन् विन्यसेदिति शेषः । वामदक्षयोः कुक्ष्योरित्यन्वयः ॥ २२७ ।

कुक्ष्योरिति स्थानद्वयम्, वामदक्षयोरिति विशेषणात् । ऊरुमूलयोः ॥ २२८ ॥

कर्णरन्ध्रयोः अकुलसहस्रदलकमले ॥ २२९ ॥

तालुमूलयुगे प्रोक्तस्थानस्य पार्श्वद्वये । मेढ्रं लिङ्गम् । रसेन्द्रियं जिह्वाग्रस्थम् ॥ २३० ॥

सर्वाङ्ग इति भिन्नम् । वाममूर्धादौ शकारं व्यापयेत् ॥ २३१ ॥

बिलं ब्रह्मरन्ध्रम् । हस्तपादसर्वाङ्गुलिषु । एवं सर्वाङ्गुल्यन्तं लकाररहितान्

ध्यात्वा कुण्डलिनीमार्गभेदाच्चन्द्रेण संयुताम् ।
चतुस्तारोक्तबालां वै चादिक्षान्तां च मातृकाम् ॥२३३॥
पुनः सप्ताक्षरीं पूर्वप्रोक्तां च परमेश्वरि ।
रक्ष रक्ष शूलिनि मां त्रैलोक्यानन्ददायिनि ॥२३४॥
रक्ष मां त्रिपुरे देवि रक्ष मां त्रिपुरेश्वरि ।
रक्ष रक्ष महादेवि अस्मदीयमिदं वपुः ॥२३५॥
त्रितार्यन्ते खेचरी च प्रासादपरयुग्मकम् ।
खेचर्यादिविलोमेन श्री चाथ सम वै यिनि ॥२३६॥
मदिरानन्द वै सुन्दरि समस्तसुरासुर ।
वन्दितेऽथ भुजङ्गाद् भूपालमौलि च मा च ला ॥२३७॥
लङ्कृता चरणप्रान्ते कमले विकटाच्च दम् ।
तद्घटाटोप वै पश्चान्निवारिणि मदी च यम् ॥२३८॥
शरीरं रक्षयुगलं परमेश्वरि वै ततः ।
वर्मास्त्रमूर्धातारा‌द्यव्याहृतिः शिरसा सह ॥२३९॥

---

कादिक्षान्तान् विन्यस्य कुण्डलिन्यां ध्रुवं प्रणवम् । ऐकारन्यासे ध्यानविशेषमाह—ऐंकारमिति । मयं ध्यायन् ॥ २३२ ॥

सुषुम्णामार्गभेदात् । चन्द्रोऽकुलस्थः । उक्तबाला ऐं ईं सौः ॥ २३३ ॥

सप्ताक्षरीं पूर्वप्रोक्तां ऐं ईं सौः इति ॥ २३४ ॥

रक्ष रक्षेत्यादि वपुः इत्यन्तं स्वरूपम् ॥ २३५ ॥

खेचरी ह्स्ख्फ्रें प्रासादपरः ह्स्रौः इति द्विः । प्रागुक्तत्रितारी खेचरी च विलोमेन । चाथ । वै ॥ २ ६ ॥

वै । थ । आत् च । च ॥ २३७ ॥

आत् प्रान्ते । आच्च वै पश्चात् । च ॥ २३८ ॥

इति त्यक्त्वा श्रीसमयिनि इत्यादि शरीरम् इत्यन्तं स्वरूपम् । रक्षेति द्विः । परमेश्वरि स्वरूपम् । वर्मास्त्रमूर्धा हूँ फट् स्वाहा । व्यस्ता समस्ता ताराद्या व्याहृतिः शिरसा सहेत्यन्वयः ॥ २३९ ॥

व्यस्ता समस्ता देवेशि वेदाभ्रेन्द्वक्षरी भवेत् ।
नराङ्गमालाभरणभूषितेऽथ महा च कौ ॥२४०॥
लिनि पश्चान्महाब्रह्मवन्दि वै नि महाधनो ।
न्मादनात्कारिणि महाभोग पश्चात्प्रदे तथा ॥२४१॥
अस्मदीयं शरीरं वज्रमयं कुरुयुग्मकम् ।
दुर्जनान् हनयुग्मं च दुष्टादथ मही ततः ॥२४२॥
पालान् भक्षययुग्मं च परचक्रं द्विभञ्जय ।
जयंकरि गगनगामिनि त्रैलोक्यस्वामिनि ॥२४३॥
उपस्थरूपगन्धाद्ययुक्तस्पर्शतदाद्यकौ ।
ताभ्यां युक्ता बिन्दुरतिः पञ्चधा विलिखेच्छिवे ॥२४४॥
शब्दादिपञ्चकेष्वादौ क्रमादेकैकमर्पयेत् ।
श्रीभैरविप्रासादाद्य मूर्धाब्धीन्द्विन्दुसंमिता ॥२४५॥
कुलाङ्गनाकुलं सर्वं मदीयं त्रिपुरेश्वरि ।
देवी रक्षतु दिव्याङ्गी दिव्यात्मा भोगदायिनी ॥२४६॥
रक्ष रक्ष महादेवि शरीरं परमेश्वरि ।
मदीयं मदिरानन्दे आपादतलमस्तकम् ॥२४७॥

---

ॐ भूः स्वाहा इत्यादि व्यस्ता । ॐ भूर्भुवः स्वः स्वाहेति समस्ता वेदाभ्रेन्दु-चतुरधिकशतम् । थ । च ॥ २४० ॥

पश्चात् । वै । आत् । पश्चात् तथा ॥ २४१ ॥

इति त्यक्त्वा । नराङ्गेत्यादि वज्रमयमित्यन्तं स्वरूपम् । कुरु हन इति द्विः । दुर्जनान् दुष्टमहीपालान् इति स्वरूपम् । प्रदे अस्मदीयमित्यसन्धिः ॥ २४२ ॥

भक्षय भञ्जय इति द्विः । परचक्रमिति । जयमित्यादि स्वामिनि इत्यन्तं च स्वरूपम् ॥ २४३ ॥

उपस्थ म । रूप ल । गन्धाद्य व । एतैर्युक्तौ स्पर्शतदाद्यौ स्पर्श र तदाद्यः य ताभ्यां स्पर्शतदाद्याभ्यां बिन्दु रतिः ॐ म्ल्व्य्रूँ इति पञ्चधा संस्थाप्य ॥ २४४ ॥

शब्द य तदादिपञ्चकं य र ल व श एतेषु एकैकं पञ्चधा स्थापितबीजादौ क्रमेणार्पयेत् । तेन यस्ल्व्य्रूँ र्म्ल्व्य्रूँ इत्यादि । श्रीभैरवि प्रसादय स्वरूपम् । अब्धीन्द्विन्दु चतुर्दशोत्तरशतम् ॥ २४५ ॥

कुलाङ्गनेत्यादि मस्तकमित्यन्तं स्वरूपम् ॥ २४६–२४७ ॥

व्याप्यैवमात्मनो रक्षां कृत्वा पश्चान्महेश्वरि ।
त्रिपुराख्या महादेवी भुक्तिमुक्तिफलप्रदा ॥२४८॥
न गुरोः सदृशं वस्तु न देवः शङ्करोपमः ।
न च कौलात्परो योगो न विद्या त्रैपुरीसमा ॥२४९॥
न च शान्तेः परं ज्ञानं न च क्षान्तेः परं सुखम् ।
न वै शक्तिसमो न्यासो विद्यते भुवनेष्विह ॥२५०॥
दर्शनेषु समस्तेषु षडङ्गेषु विशेषतः ।
दिव्यरूपा महादेवी सर्वत्र परमेश्वरी ॥२५१॥
एवंविधा न्यासयोस्तु स्मृत्वा माहात्म्यमुत्तमम् ।
चतुस्तारं च पीठोपपीठ पश्चाच्छिरस्थ वै ॥२५२॥
गगनाद् गिरिभुवनगोकुलात्तु निवासिनी ।
जयन्ती कुलशक्तिश्च महीतल ततः परम् ॥२५३॥
पातालनिवासिनी च कुलकौलविभेदिनी ।
सकलाज्जन पश्चात्तु मनआनन्दकारिणी ॥२५४॥

---

एवं चतुस्तारमित्यादि मस्तकमित्यन्तमन्त्रेण व्यापकन्यासेनात्मरक्षां कृत्वा नमेदिति दूरतरेणान्वयः ॥ २४८ ॥

अलभ्येषु वस्तुषु गुरोः सदृशं नेतरदित्यर्थः । यथा गुरुसदृशवस्त्वादि क्षान्तेः परं सुखमित्यन्तं तथा शक्तिसमो न्यासेनेति योजयेत् । प्रकृते विद्यान्यासयोरेव स्तुतिरूपयुक्तत्वादिति ध्येयम् ॥ २४९ ॥

शान्तिरन्तःकरणोपशमः । इह ब्रह्माण्डे ॥ २५० ॥

दर्शनेषु वैदिकादिषु । षडङ्गेषु षड् अङ्गान्यवयवाः स्वावान्तरभेदा बौद्धवैदिकशैवसौरवैष्णवशाक्तरूपा येषाम् । यद्वा शिक्षादिवेदषडङ्गेषु सर्वत्र पुराणादौ च विशेषतो मुख्यत्वेन साक्षात् पारम्पर्येण वा दिव्यरूपा क्रीडामयी परमेश्वरशक्तिरेव फलत्वेन प्रतिपादितेति शेषः । अथवा दर्शनेषु ज्ञानकरणेषु षडङ्गेषु अन्तःकरणेन सह षड्विधेषु दिव्यरूपा अलौकिकी परमेश्वरस्य शक्तिर्महादेवी अपरिच्छिन्नप्रकाशमयी सर्वत्र अधिष्ठानत्वेन भातीति शेषः ॥ २५१ ॥

एवं त्रिपुराख्येत्यादि परमेश्वरीत्यन्तम् । पश्चात् । वै ॥ २५२ ॥

आत् । आत्तु । च । ततः परम् ॥ २५३ ॥

च । आत् । पश्चात्तु ॥ २५४ ॥

करोतु मम वै चिन्तितं कार्यं भैरवी शत ।
मेकं पुनातु परमेश्वरी मदनमण्डला ॥२५५॥
लम्बिनी वै सप्तकोटिसहस्राणां ततः परम् ।
मन्त्राणां च ततः पश्चादुल्लिखेत् परमेश्वरी ॥२५६॥
तारवाग्हृद्भगवति त्रिकोणे च त्रिधा ततः ।
वर्ते महा च लिङ्गालङ्कृते त्रैलो ततः परम् ॥२५७॥
क्योत्पत्तिस्थिति पश्चात् प्रलयकारिणि वै सह ।
ल माया चाथ कन्दर्पानन्ददायिनि वै सह ॥२५८॥
माया ब्रह्म तथा दण्डरेखे सह ततः परम् ।
वह्निज्वाला बिन्दुयुक्ता चित्स्वरूपे ततः परम् ॥२५९॥
पाशाङ्कुशालङ्कृते च वदद्विर्वाक् च वादिनि ।
रमा भ्रष्टमहीपाल राज्य पश्चात् प्रदे च वाक् ॥२६०॥
वरदाश्रितहस्ते च समस्त च जना ततः ।
नन्दकारिणि द्विः कामं कामराज ततः परम् ॥२६१॥
बीजाश्रये पञ्च बाणः क्षोभयेति परेति च ।
क्षोभिणि प्रासादपरा त्रिर्मथद्वयमेव च ॥२६२॥

---

वै ॥ २५५ ॥

वै ततः । परं च ततः पश्चादुल्लिखेत् इति त्यक्त्वा पीठोपपीठेत्यादि परमेश्वरी इत्यन्तं स्वरूपम् ॥ २५६ ॥

तारवाक् ॐ ऐं । हृत् नमः । च । ततः । च । ततः परम् ॥ २५७ ॥

पश्चात् वै माया ह्रीं । चाथ वै ॥ २५८ ॥

माया ह्रीं । तथा । तथा । ततः परम् । वह्निज्वाला बिन्दुयुक्ता हौं । ततः परम् ॥ २५९ ॥

च । वद इति द्विः । च । रमा श्रीं । पश्चात् । च । वाक् ऐं ॥ २६० ॥

च । च ततः । कामं क्लीं इति द्विः । ततः परम् ॥ २६१ ॥

पञ्चबाणः द्रां द्रीं क्लीं ब्लूं सः इति । इति च । प्रासादपरा ह्सौः । इति त्रिः । मथ इति द्वयं द्विः । एव च ॥ २६२ ॥

अभयप्रदायिनि चतुर्भुजे च त्रिने तथा ।
त्रे प्रेतास च नोच्चारिणि महा च कपाल वै ॥२६३॥
माया च लङ्कृते चन्द्रकृतशे च खरे त्रिपु ।
रे भुक्तिमुक्तिफल वै प्रदे वाक् तारसंपुटा ॥२६४॥
हृत्सिद्धं मातृकाक्षान्ता तारान्तं च विलोमतः ।
सर्वबीज च मातः श्रीपश्चात् समयिनीति च ॥२६५॥
मम चैव मनो पश्चाद् रथं देहि शिरस्तथा ।
ऋतुभूचन्द्रवर्णा च रामपक्षाग्निसंमिताम् ॥२६६॥
विद्याद्वयं पठित्वैवं नमेद् विद्यागणं ततः ।
बालां तु कलहीनां वै मन्त्रराजाय हृत्तथा ॥२६७॥
इति नत्वा त्रैपुरं तु जपेद् विद्यागणं सकृत् ।
वाग्भवं च पराद्यस्तु प्रासादः सह लेति च ॥२६८॥
मायासहाग्न्यङ्गदं दुर्वाक् तहाद् भुवनेश्वरी ।
पुनः सह ततो दीर्घवर्मषोडशसंमिता ॥२६९॥

---

च । तथा च । च । वै ॥ २६३ ॥

च वै । वाक् । तारसंपुटा ॐ ऐं ॐ ॥ २६४ ॥

हृत् नमः । आदिक्षान्ता मातृका पुनर्विलोमतस्तारान्तं वाक्तारसंपुटेत्यन्तं क्षकारादि ऐं ॐ इत्यन्तं च । पश्चात् । इति च ॥ २६५ ॥

वै च पश्चात् । इति । त्यक्त्वा भगवतीत्यादि देहीत्यन्तं स्वरूपम् । शिरः स्वाहा । परमेश्वरीत्यन्तः पूर्वो मन्त्र ऋतुभूचन्द्रवर्णः षोडशोत्तरशतार्णः । स्वाहान्तो द्वितीयो मन्त्रो रामपक्षाग्निसंमितः त्रयोविंशद्युत्तरत्रिशतार्णः ॥ २६६ ॥

एवं चतुस्तारेत्यादि विद्याद्वयं पठित्वा वक्ष्यमाणं विद्यागणं नमेत् । तत्रादौ विद्यागणस्य समष्ट्या नमनप्रकारमाह—बालामित्यादि । कलहीनां बालां ऐं ईं सौः । मन्त्रराजाय स्वरूपम् । हृत् नमः ॥२६७॥

इति मन्त्रेण नत्वा विद्यागणं नमेदित्युक्तम् । तत्र विद्यागणान्तर्गततत्तद्विद्यानमनादौ तत्तद्विद्यां सकृत् जपेदित्याह—त्रैपुरमित्यादि । विद्यागणमेवाह—वाग्भवमिति । वाग्भवं ऐं । पराद्यः प्रासादः स्हौः । सहल स्वरूपम् ॥ २६८ ॥

माया ह्रीं । सह स्वरूपम् । अग्न्यङ्गदेन्दुः ह्रौं । वाक् ऐं । सह स्वरूपम् । भुवनेश्वरी ह्री । सह स्वरूपम् । दीर्घवर्म हूं । षोडशार्णा ॥ २६९ ॥

वाङ्माया कामराजश्च प्रासादपर एव च ।
पुनः सबिन्दुः सर्गेण हीनः पञ्चाक्षरी त्वियम् ॥२७०॥
वाङ्माया चान्त्यबाणश्च त्र्यक्षरी तु ततः परा ।
वाङ्माया चरमा प्रासादपरा द्व्यक्षरी ततः ॥२७१॥
रमाहीना त्र्यक्षरी च वाक्कामौ द्व्यक्षरी ततः ।
वाक्कामौ तुर्यबाणश्च कामान्त्यं चतुरक्षरी ॥२७२॥
वाङ्माया च रमा शङ्कुः प्रासादपर एव च ।
पञ्चाक्षरी च वाग्जातियुगहङ्कार एव च ॥२७३॥
सप्ताक्षरी तु वाग्युग्मं शक्तिस्त्र्यक्षररूपिणी ।
इयं चतुर्धा देवेशि सर्वत्रादौ समुल्लिखेत् ॥२७४॥
चतुस्तारमथो देवि नामैषां क्रमतः शृणु ।
त्रिपुरा कामपूर्वाद्या ततस्त्रिपुरभैरवी ॥२७५॥
वाक्पूर्वा तु तृतीया वै लक्ष्मीपूर्वा ततः परा ।
पञ्चमी वह्नित्रिपुरा मोहिनीत्रिपुरा ततः ॥२७६॥
भ्रामरीत्रिपुरा पश्चात् सप्तमी परिकीर्तिता ।
त्रैलोक्यस्वामिनी पूर्वा त्रिपुरा स्यात्ततोऽष्टमी ॥२७७॥

---

कामराजः क्लीं । प्रासादपरः ह्सौः । स एव विसर्गहीनः सबिन्दुः ह्सौं ॥ २७० ॥

अन्त्यबाणः सः । रमा श्री ॥ २७१ ॥

प्रागुक्तैव रमया श्रीबीजेन हीना । ततः वाक्कामात्मिका । तुर्यबाणः ल्लूं । कामान्त्यं स्त्री ॥ २७२ ॥

शङ्कुः फ्रें । जातियुगहंकारः । डां डीं० डः इति ॥ २७३ ॥

वाग्जातिरित्युक्तविद्या सप्ताक्षरी । वाग्युग्मं ऐं द्विः । शक्तिः सौः इयं वाग्युग्मशक्तिः । चतुर्धा संस्थाप्य विद्याचतुष्टयं कर्तव्यम् । सर्वत्र प्रोक्तत्रयोदशविद्यासु चतुस्तारं समुल्लिखेदित्यन्वयः । इदं चतुस्तारं मन्त्राङ्गमिति ज्ञेयम् ॥ २७४ ॥

कामत्रिपुरा आद्या ॥ २७५ ॥

वाक्त्रिपुरा तृतीया । लक्ष्मीत्रिपुरा चतुर्थी ॥ २७६ ॥

त्रैलोक्यस्वामिनी त्रिपुरा अष्टमी ॥ २७७ ॥

हंसाद्या नवमी कौलिकाद्या स्यात् त्रिपुरा ततः ।
चण्डिकाद्या ततस्तालुमध्याद्या द्वादशी भवेत् ॥२७८॥
कपालाङ्कुरवासिनी त्रिपुरा तु त्रयोदशी ।
तत्तन्मन्त्रं पठित्वा तु तत्तन्नाम्ना नतिं चरेत् ॥२७९॥
लाङ्गलित्रितयं पश्चाद्यथाशक्ति जपेच्छिवे ।
कलहीनां तु बालां वै जपन्मूर्ध्नि प्रपूजयेत् ॥२८०॥
आत्मानं रक्तपुष्पैस्तु ततः पश्चभिरर्चयेत् ।
स्वदेहं तादृशीं बालां जपन् कामकलात्मकम् ॥२८१॥
ध्यायन्न्यासानुसन्धानं कुर्वन् श्लोकशतं पठेत् ।
रुद्रशक्तिमयं देहं मदीयं त्रिपुरे कुरु ॥२८२॥
देहि मे देवदेवेशि नित्यं नित्यमभीप्सितम् ।
मस्तकं मङ्गला देवी ललाटं कुलसुन्दरी ॥२८३॥
नेत्रयुग्मं महाकाली करौ रक्षतु कुण्डली ।
कपाली कर्णरन्ध्रं तु कपोलौ कमलावती ॥२८४॥
दन्तान् रक्षतु चामुण्डा चिबुकं मेरुवासिनी ।
भ्रूमध्यं कण्ठदेशं च रक्षेन्मे भुवनेश्वरी ॥२८५॥

---

हंसा त्रिपुरा नवमी । कौलिका त्रिपुरा दशमी । चण्डिका त्रिपुरा एकादशी । तालुमध्या त्रिपुरा द्वादशी ॥ २७८ ॥

तत्तन्मन्त्रान्ते नमोन्ततत्तन्नाम्ना प्रणमेत् ॥ २७९ ॥

लाङ्गली ह्रः । इति त्रिः । इदं यथाशक्ति प्रजपेत् । रक्तपुष्पैः । स्वमूर्ध्नि आत्मने नमः इति पूजयेत् ॥ २८० ॥

पञ्चभिरुपचारैः । स्वदेहं कामकलात्मकं ध्यायन् इत्यन्वयः । तादृशीं कलहीनां बालाम् ॥ २८१ ॥

न्यासानुसन्धानम् । रुद्रशक्तिमयं देहम् । मस्तकं मङ्गलादेवीत्यादौ तत्तदङ्गस्य तत्तद्देवतात्वेन ध्यानम् । रुद्रशक्तिः क्रियाशक्तिः ॥ २८२ ॥

नित्यं नित्यं प्रत्यहम् ॥ २८३ ॥

कुण्डली कुण्डलिनी । कपाली कपालिनी ॥ २८४-२८५ ॥

जिह्वां सरस्वती रक्षेत् तालुकं तालुवासिनी ।
स्थातु मे कपिला स्कन्धे स्कन्धान्ते कुलमालिनी ॥२८६॥
कुक्षौ विनायकी स्थातु जयानन्दा स्तनद्वये ।
कण्ठकूपे महालक्ष्मीर्हृदये चण्डभैरवी ॥२८७॥
ब्रह्माणी नाभिदेशे तु स्थातु ज्वालावली गुदे ।
लिङ्गे लिङ्गप्रभा चैव मुण्डिनी भेदमण्डले ॥२८८॥
नाडीचक्रे महावेगा उद्भटा दक्षिणे करे ।
वामहस्ते महामाया विद्या हस्ताङ्गुलीषु च ॥२८९॥
वैष्णवी वामपादे च स्थातु चक्रायुधाऽन्विता ।
तथा दक्षिणपादे तु एकपादा सुरेश्वरी ॥२९०॥
पादाङ्गुलीषु कौमारी रोमकूपे महोद्भवा ।
मण्डला नखमूले तु वाराही नखमूर्धसु ॥२९१॥
जालन्धरो जलस्थाने कामाक्षी काममध्यगा ।
उद्भटा नाभिलिङ्गान्तर्भासाग्रे पूर्णपीठगा ॥२९२॥
पृष्ठवंशे जया देवी अस्थिसन्धिषु चर्चिका ।
त्वचि स्थातु चर्मधरा रसे नित्यमहायशा ॥२९३॥
रक्तमध्ये मांसके च स्थातु मे हंसिनी शुभा ।
माहेश्वरी च कौमारी द्वे च ते स्थातु चाङ्गयोः ॥२९४॥

---

स्कन्धान्ते स्कन्धमूले ॥ २८६ ॥
कण्ठकूपे कण्ठाधःस्थगर्ते ॥ २८७ ॥
भेदमण्डले संधिस्थाने ॥ २८८ ॥
नाडीनां चक्रे मण्डले ॥ २८९—२९०॥
महे उत्सवे उद्भवः प्रादुर्भावो यस्याः ॥ २९१ ॥
जलस्थानं मणिपूरम् । काम इच्छा । नाभिलिङ्गयोरन्तः बस्तिस्थाने ॥ २९२ ॥
रसे रसधातौ ॥ २९३ ॥
रक्तमध्ये हंसिनीमांसे शुभा । वामदक्षिणयोरङ्गयोः क्रमान्माहेश्वरी कौमारी ॥ २९४ ॥

वामदक्षिणयोश्चैव धीराली कटिसन्धिषु ।
देवी रक्षतु मे गात्रं मस्तकं कुलमालिनी ॥२९५॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पञ्चभूतेषु भूतेशी सदा रक्षतु मे कुलम् ॥२९६॥
राज्यं ददातु मे चैन्द्री प्रजां चैव प्रजावती ।
माया ददातु मे नित्यं धनं धान्यं यशस्तथा ॥२९७॥
रणे राजकुले चैव शत्रुमध्ये महावने ।
रक्तनेत्रा महादेवी करोतु मम चिन्तितम् ॥२९८॥
समया समयं रक्षेद् विद्यां विद्याकुलागमः ।
साधकानां जगन्नाथा भुक्तिमुक्तिफलप्रदा ॥२९९॥
प्राणान् करोतु मे सिद्धिं त्रैलोक्यविजया सुखम् ।
घण्टाली या महाविद्या सा मे यच्छतु मङ्गलम् ॥३००॥
सप्तकोटिसहस्राणां मन्त्राणां नायिका तु या ।
सा मे सुरेश्वरी देवी सदा सिद्धिं प्रयच्छतु ॥३०१॥
उल्कामुखी मुखे स्थातु मार्जारी देहसन्धिषु ।
भद्रकाली तु या विद्या सा मे स्थातु शिखाभुवि ॥३०२॥
त्रिकोणं च त्रिधावर्तं त्रैपुरं चक्रमुत्तमम् ।
मस्तके स्थातु मे नित्यं तस्यान्तर्बहुरूपिणी ॥३०३॥

---

कट्यां तत्सन्ध्योरिति बहुवचनम् ॥ २९५ ॥

आकाशमिति पञ्चभूतेषु कार्यतया स्थितं कुलं शरीरम् ॥ २९६--२९८ ॥

समयं संकेतं कालं वा । विद्यां वेदादिविद्याम् । कुलागमं कुलविद्याम् । जगन्नाथा साधकानां भुक्तिमुक्तिफलप्रदा रक्षेत् ॥ २९९ ॥

प्राणान् बलम् । बहुवचनं विद्याबलधनबलाद्यभिप्रायेण । सिद्धिम् अणिमाद्याम् । करोतु । घण्टालीति शक्तिनाम ॥ ३००--३०१ ॥

शिखाभुवि शिखास्थाने ॥ ३०२ ॥

त्रिकोणमिति जात्येकवचनम् । तेन त्रयश्चत्वारिंशत्त्रिकोणानि त्रिधावर्तं वृत्तत्रयम् इति तदन्तर्गताष्टदलं षोडशदलं च । त्रिपुरमेव त्रैपुरं भूपुरत्रयम् । ईदृशं यदुत्तमं चक्रम्, तस्यान्तर्या आवरणत्वेन बहुरूपिणी स्थिता सा मस्तके स्थातु ॥ ३०३ ॥

पूर्वोक्ता त्रैपुरी शक्तिः स्थातु मे मन्मथोत्थिता ।
क्षोभयन्ती जगत्सर्वं मदिरानन्दविह्वला ॥३०४॥

निवासं कुरु मे देहे साम्प्रतं दिव्ययोगिनी ।
एह्येहि त्वं महादेवि सिद्धयोगिनि मे कुले ॥३०५॥

शत्रूणां घातनार्थाय जन्तूनां भोगदायिनि ।
महायोगिनि देहेऽस्मिन् सर्वदा निलयं कुरु ॥३०६॥

माहेन्द्री च शिखा स्थातु योनिमध्ये गणेश्वरी ।
प्रेताशी नाम विख्याता करोतु कुशलं मम ॥३०७॥

डाकिनी पूर्वभागे च मम सौख्यं प्रयच्छतु ।
साकिनी पश्चिमाङ्गे तु दक्षिणे चापि राक्षसी ॥३०८॥

वामभागे महामाया करोतु कुशलं मम ।
अस्मदीये शिरःस्थाने सदा तिष्ठतु भैरवी ॥३०९॥

या विशाला विशालाक्षी निर्मला मलवर्जिता ।
सा योगिनी महायोगा स्थातु श्रीर्मस्तके मम ॥३१०॥

या कालकल्पिका काली कालरात्रिस्तु कथ्यते ।
सा योगिनी महायोगा स्थातु श्रीर्मस्तके मम ॥३११॥

---

सर्वेषां पूर्वस्मिन् आदौ स्थितेति या उक्ता । अत एव त्रिपुरैव त्रैपुरी शक्तिः । मन्मथः उत्थितः संजीवितो यस्याः । मन्मथद्वारा क्षोभयन्ती ॥ ३०४ ॥

साम्प्रतं सद्यः । कुले देहे ॥ ३०५ ॥

निलयं स्थानम् ॥ ३०६ ॥

शिखा शिखायाम् ॥ ३०७ ॥

पश्चिमाङ्गे पृष्ठभागे ॥ ३०८ ॥

अस्मदीयशिरःसंस्थाने ॥ ३०९ ॥

महान् सर्वप्रतियोगिको योगः सम्बन्धो यस्याः । **एवंविधा श्रीः** श्रीविद्या ॥ ३१० ॥

कालस्य कल्पिका ॥ ३११ ॥

या निशाचरराजन्यपूजिता च निशाचरी।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३१२॥
या चोर्ध्वकेशिका नाम मुक्तकेशी महाभया।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३१३॥
या वीरेति समाख्याता वीराणां जयदायिनी।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३१४॥
या मालिनी समाख्याता नासाग्रे बिन्दुमालिनी।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३१५॥
या कङ्कालकरालाङ्गी चण्डकङ्कालकुण्डला।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३१६॥
या प्रचण्डा विरूपाक्षी विरूपा विश्वरूपिणी।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३१७॥
खट्वाङ्गी कथ्यते या च रौद्री रुद्रेण पूजिता।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३१८॥
कलायोगेन प्रसिद्धा या लोके श्रूयते कलौ।
सा योगिनी महायोगा स्थातु श्रीर्मस्तके मम ॥३१९॥
प्रेताक्षी कथ्यते या च फेत्कारोत्कटगर्जिता।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२०॥

---

निशाचरराजन्यः कुबेरः ॥ ३१२ ॥

ऊर्ध्वाः ऊर्ध्वाग्राः केशा यस्याः ॥ ३१३–३१४ ॥

नासाग्रे स्थिता ॥ ३१५ ॥

कङ्कालः शरीरास्थि, तेन अस्थिमात्रावशेषितशुष्कशरीरेण करालं भीमं अङ्गं यस्याः। चण्ड उग्ररूपः कङ्काल एव कुण्डलं यस्याः ॥ ३१६–३१७ ॥

खट्वाङ्गायुधा खट्वाङ्गी ॥ ३१८ ॥

कला मूर्तिः, तद्योगेन। कलौ कलियुगादौ। विन्ध्यवासिनीरूपेण या प्रसिद्धा श्रूयते ॥ ३१९ ॥

फेत्कार इति शब्दानुकरणम् ॥ ३२० ॥

धूम्राक्षी या समाख्याता शास्त्रेऽस्मिन् योगिनी मता ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२१॥
घोररूपा महादेवी कथ्यते या कुलागमे ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२२॥
विश्वरूपा विशेषेण करोति च जगत्त्रयम् ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२३॥
भयङ्करी समादिष्टा या चोक्ता वै कुलागमे ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२४॥
कपालमालिका प्रोक्ता या देवी मुण्डधारिणी ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२५॥
भीषणी भैरवी नाम या देवी भीमविक्रमा ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२६॥
न्यग्रोधवासिनी या च कथ्यते च सुरार्चिता ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२७॥
भैरवी भीषणी या च भैरवाष्टकवन्दिता ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२८॥
प्रोच्यते दीर्घलम्बोष्ठी महामाया महाबला ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३२९॥
खट्वाङ्गी या महाशक्तिः संसारार्णवतारिणी ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३०॥

---

अस्मिन् कुलशास्त्रे ॥ ३२१-३२२ ॥

विशेषेण नामरूपयोगेन ॥ ३२३-३२९ ॥

प्रागुक्ता खट्वाङ्गी । रौद्री रुद्रशक्तिः । इयं संसारार्णवतारिणी पराशक्तिः ॥ ३३० ॥

या समस्तेषु तन्त्रेषु प्रोच्यते तन्त्रवादिनी ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३१॥
कालघ्नी कथ्यते या च युगान्ते परमेश्वरी ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३२॥
ग्राहिणीति समाख्याता सुरासुरमहोरगैः ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३३॥
चक्रिणी गद्यते या च एकपादा त्रिलोचना ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३४॥
या विश्वबाहुका देवी विश्वनाथप्रिया सदा ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३५॥
दर्शनेषु समस्तेषु विदिता भुवनेश्वरी ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३६॥
कण्टकोच्छेदनार्थाय शास्त्रे या कण्टकी स्मृता ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३७॥
कीलकी कथ्यते या च सप्तहस्ता महाबला ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३८॥
संग्रामे या महादेवी महामारीति कथ्यते ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३३९॥

---

तन्त्रवदनशीला तन्त्रप्रणेत्रीत्यर्थः ॥ ३३१-३३२ ॥
महोरगैः सहितानां लोकानां प्रोष्यत्वेन ग्राहिणी ॥ ३३३-३३४ ॥
विश्वबाहुकेति नाम ॥ ३३५ ॥
दर्शनेषु तत्तद्दर्शनाभिज्ञैर्विदिता ॥ ३३६ ॥
कण्टकं दुःखम् ॥ ३३७ ॥
कीलकीति नाम ॥ ३३८-३४४ ॥

यमदूतीति विख्याता या सुरासुरपूजिता ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३४०॥
करालिनीति या देवी महामाया महाबला ।
सा योगिनी महामाया स्थातु श्रीर्मस्तके मम ॥३४१॥
ललिताम्बा महाराज्ञी सर्वचक्रैकनायिका ।
सा योगिनी महायोगा स्थातु श्रीर्मस्तके मम ॥३४२॥
नासाग्रे कौलिनी स्थातु मदिराक्षी तथा मुखे ।
व्योमजङ्घा कपोले च तालुके चापधारिणी ॥३४३॥
द्राविणी क्षोभिणी चैव स्तम्भिनी मोहिनी तथा ।
रौद्रकर्मा महाघण्टा डामरी त्वरिता मतिः ॥३४४॥
ऐं ह्रीं श्रीं कुलमाता च काकवक्त्राऽप्यधोमुखी ।
कपालकुण्डला दीर्घा कपाली कुलमालिनी ॥३४५॥
देवी रक्षतु मे गात्रं मस्तकं कुलमालिनी ॥
भूमिरापस्तथा तेजो वायुराकाशमेव च ॥३४६॥
पञ्चभूतेषु भूतेशी सदा रक्षतु मे कुलम् ।
राज्यं ददातु मे चैन्द्री प्रजां चैव प्रजावती ॥३४७॥
माया ददातु मे नित्यं धनं धान्यं यशस्तथा ।
रणे राजकुले चैव शत्रुमध्ये महावने ॥३४८॥
रक्तनेत्रा महादेवी करोतु मम चिन्तितम् ।
समया समयं रक्षेद् विद्यां विद्याकुलागमम् ॥३४९॥
साधकानां जगन्नाथा भुक्तिमुक्तिफलप्रदा ।
द्विजटा त्रिजटा प्रोक्ता कन्दला दलिताखिला ॥३५०॥

---

त्रितार्या इच्छादिशक्तित्रयम् । तत्समष्टिरूपा कुलमाता महात्रिपुरसुन्दरी ॥३४५॥

द्राविणीत्यादि देव्यन्ता देवता मे गात्रं रक्षन्तु ॥ ३४६ ॥

भूमिरित्यादि फलप्रदेत्यन्तं पूर्वोक्ता एव श्लोकाः ॥ ३४७–३४९ ॥

द्विजटा इत्यादीनां स्थातु इति दूरेणान्वयः ॥ ३५०–३५१ ॥

गायत्री चाम्बिका तारा पार्वती कमला प्रभा ।
मोदिनी मदना भावा मन्दरा मदनातुरा ॥३५१॥
भीषणाऽभीषणा वम्रा प्रेतसिद्धा विभीषणा ।
सुधा वृषा तथा निद्रा कान्तिर्वृद्धिस्तथा द्युतिः ॥३५२॥
सन्ध्या धृती रतिः क्षान्तिरनिशं परिपठ्यते ।
सुरनाथेति विख्याता नगरे नरदेवता ॥३५३॥
ग्रामदेवी ह्यधिष्ठात्री पीठपीठेश्वरीं विदुः ।
कावेरी नर्मदा चैव गङ्गा च यमुनोच्यते ॥३५४॥
गोदावरी महापुण्या प्रोच्यते चाप्यरुन्धती ।
त्रैलोक्येऽपि महादेवी स्त्रीनाम्नी चाप्रकाशिता ॥३५५॥
सा देवी रूपलक्ष्या तु स्थातु श्रीर्हृदये मम ।
सुवर्णरेखिणी प्रोक्ता विद्या सा प्रोच्यते किल ॥३५६॥
निर्मूलिनी भुजङ्गानां सा करोतु सुखं मम ।
कुरुकुल्लेति विख्याता पक्षिराजमुखोद्भवा ॥३५७॥
या विद्या सा महारूपा जिह्वाग्रे स्थातु मे सदा ।
ओङ्कारिणीति विख्याता देहे स्थातु सदा मम ॥३५८॥
विद्यापहारिणी नाम कलिरूपविदारिणी ।
भेरुण्डा स्थातु मे कण्ठे तोतला स्थातु मस्तके ॥३५९॥

---

भीषणा अभीषणा इति छेदः ॥ ३५२ ॥

क्षान्तिरिति या परिपठ्यते या सुरनाथेति नगरे नरदेवतेति या ख्याता ॥३५३॥

यां पीठपीठेश्वरीं विदुः ॥ ३५४ ॥

त्रैलोक्येऽपि या स्त्रीनाम्नी स्त्रीरूपा । अप्रकाशिता दृश्यभिन्ना या ॥ ३५५ ॥

सा देवी रूपलक्ष्या लक्ष्यरूपा, दृश्यभिन्नत्वात् । या सुवर्णरेखिणीति प्रोक्ता सैव विद्येति प्रोच्यते ॥ ३५६ ॥

या भुजङ्गानां निर्मूलिनी सेत्यन्वयः ॥ ३५७ ॥

मुखोद्भवा या विद्येति सम्बन्धः । देहस्था भवत्विति शेषः ॥ ३५८ ॥

विद्येति मायातस्तृतीयं परिच्छिन्नज्ञानरूपमविद्या । कलेः रूपमधर्मादि ॥३५९॥

तथा सुबलरेखापि मूले स्थातु सदा मम।
जाङ्गली विषनाशाय वाचां सिद्धिं करोतु मे ॥३६०॥
सर्वसिद्धिकरी विद्या भुक्तिमुक्तिफलप्रदा।
अहं ब्रह्मा अहं विष्णुरहं देवो महेश्वरः ॥३६१॥
सर्वभूतनिवासोऽहं लोके श्रीचक्रचिन्तकः।
शक्तिन्यासेन पूतेन शरीरेण सुरासुराः ॥३६२॥
प्रदत्ता देशमात्रेण आज्ञां कुर्वन्ति मे सदा।
यत्किञ्चिद्योगिनीरूपं त्रैलोक्ये चास्ति शङ्करि ॥३६३॥
तत्सर्वं स्यान्निजे देहे शक्तिन्यास उपासिते।
कामिनी कुरुते चापि या न्यासं शक्तिनिर्मितम् ॥३६४॥
तां देवीं दिव्यरूपस्थां संसारे त्रिपुरां विदुः।
नमोऽस्तु ते जगन्मातर्नमोऽस्तु भुवनेश्वरि ॥३६५॥
नमो भोगप्रदे देवि नमो देवि महेश्वरि।
प्रकटा गोपिता सर्वा निर्वाणा भैरवी शिवा ॥३६६॥
संभ्रमा विजया हंसा शुभा सा जलदेवता।
यक्षिणी चूडकन्या च तथा चाकाशगामिनी ॥३६७॥
भूचरी चरिता कुम्भी सर्वागमनिवासिनी।
निरञ्जनी देवमैत्री प्रसिद्धा मदिरालिका ॥३६८॥

---

सुबलरेखेति नाम। मूले मूलाधारे ॥ ३६० ॥

एवं न्यासात्मिकां स्तुतिमुक्त्वा उक्तन्यासविशिष्टस्य स्वात्मनो विभावनीयप्रकारमाह—अहमित्यादि ॥ ३६१–३६२ ॥

शरीरेण युतेन मया प्रदत्तो यो आदेश आज्ञा, तन्मात्रेण सुरासुरा आज्ञां कुर्वन्तीति सम्बन्धः ॥ ३६३ ॥

शक्तिमयत्वेन निर्मितम् ॥ ३६४ ॥

एवंविधन्यासाधिष्ठातृदेवताप्रणामप्रकारमाह—नमोऽस्त्विति ॥ ३६५–३६६ ॥

या शास्त्रे पूजिता सा जलदेवतेत्युत्तरेणान्वयः ॥ ३६७–३६८ ।

पूजिता सर्वसिध्यर्थं शास्त्रेऽस्मिन् योगिनीमते ।
स्थापिनी कथ्यते सद्भिः सानन्दा वनवासिनी ॥३६९॥
चतुष्षष्ट्याश्रया देवी योगिन्यो येन चिन्तिताः ।
आधारे लीयमानासु स योगी योगविद्भवेत् ॥३७०॥
ललाटे मण्डला स्थातु विरजा स्थातु मस्तके ।
एकाक्षी दक्षिणे स्कन्धे वामे चैव त्रिलोचना ॥३७१॥
जयन्ती स्थातु मे कुक्षौ कट्यां कन्दर्पकुण्डली ।
मालिनी लिङ्गसन्धौ च हृदि स्थातु समृद्धिनी ॥३७२॥
अम्बिका पृष्ठवंशे च पार्श्वयोः स्थातु मेदिनी ।
दिग्गजाङ्गी कराग्रे च नागेन्द्री नखसन्धिषु ॥३७३॥
व्याघ्रवक्त्री च जङ्घायां स्थातु पादतले मही ।
अमृता शङ्खिनी रन्ध्रे लोचने च विलासिनी ॥३७४॥
कालिन्दी मूलजिह्वां च रक्तं रक्षतु रक्तिनी ।
लाङ्गला जाङ्गला रक्षेदस्थिनी चास्थिसंधिषु ॥३७५॥
मज्जिनी देहमज्जां तु शुक्रं शुक्रेश्वरी तथा ।
त्वचं रक्षतु वेताली मम रोगप्रणाशिनी ॥३७६॥
उद्भटा कुरुते शान्तिं सदैव मम विग्रहे ।
पादा पादतले स्थातु पथि रक्षतु पन्थिनी ॥३७७॥
चौराग्निराजसर्पेभ्यो भये रक्षतु भैरवी ।
दुष्टानां दृष्टिबन्धं तु सदा कुर्यात्तु बन्धिनी ॥३७८॥

---

योगिनी श्रीविद्या तन्मते ज्ञाता यत्र उपासकैः । एवंविधे अस्मिन् आगमशास्त्रे ॥ ३६९ ॥

चतुष्षष्टिकोटियोगिनीनाम् आश्रया कारणभूता या मूलदेवी तत्कार्यभूता योगिन्यश्च आधार आत्मनि लीयमानासु अन्तःकरणवृत्तिषु येन चिन्तिताः, योगिनीशक्तिरूपं जगद् देवताकार्यं तत्कारणं देवतेति ध्यायन् यो निर्विकल्पो भवतीति भावः ॥ ३७० ॥

पुनर्न्यासात्मकस्तुतिमाह—ललाटेति ॥ ३७१–३७४ ॥

मूलजिह्वां जिह्वामूलम् ॥ ३७५–३७६ ॥

कुरुते करोतु ॥ ३७७–३७८ ॥

चपेटी नाम या विद्या सा मे कुर्यात्तु मङ्गलम् ।
कर्मटी घण्टकर्णी च हनुमद्भीतिराविणी ।।३७९।।
घुर्घुरी कीर्तिविख्याता वन्दे विद्याचतुष्टयम् ।
चेटका ज्ञानदा विद्या कौमारी चरणावली ।।३८०।।
विघ्नराजस्तुता नाम तुष्टा सन्तानरूपिणी ।
मूलाकाशस्थिता हंसी पताकी दलनोद्धृता ।।३८१।।
दशैता मन्त्रविद्यास्तु तिष्ठन्तु मम मस्तके ।
शुभा मे चाग्रतः स्थातु लोहिता स्थातु दक्षिणे ।।३८२।।
वामाङ्के रतिका स्थातु पश्चिमे स्थातु शृङ्खला ।
शिखायां शिखिनी रक्षेदस्त्रे त्वस्त्रवती सदा ।।३८३।।
कवचे कवचाङ्गी च नेत्रे नेत्रकृतोत्सवा ।
तिष्ठन्ति योगिनीरूपास्त्रैलोक्ये सचराचरे ।।३८४।।
योगिन्यो यास्तु ताः सर्वा गेहं कुर्वन्तु मे वपुः ।
पुत्राणां च तथा देयो भक्तानां च विशेषतः ।।३८५।।

---

चपेटीत्यादिविद्या बहुतन्त्रदर्शिभिर्ज्ञातुं शक्या ।। ३७९ ।।

घुर्घुरी कीर्तिरिति विख्याता। चेटकेत्यादिदलनोद्धृतेत्यन्ता दश मन्त्रविद्याः। कौमारी विद्येत्येकम् ।। ३८० ।।

तुष्टा संतानरूपिणीत्यप्येकम् ।। ३८१–३८२ ।।

पश्चिमे पृष्ठतः ।। ३८३ ।।

योगः परशिवसम्बन्धः, सोऽस्यास्तीति योगिनी पराशक्तिः, तद्रूपा या योगिन्यस्तिष्ठन्तीत्यन्वयः ।। ३८४ ।।

एवं रुद्रशक्तिमयमित्यादि गेहं कुर्वन्तु मे वपुरित्यन्तं त्र्यधिकशतश्लोका ईषदन्तरत्वाच्छ्लोकशतं पठेदिति प्रागुक्तं संगच्छते। एते श्लोकास्तन्त्रेषु कृतभूरिपरिश्रमैर्व्याख्येया इति प्राचीनपद्धतिकृद्भिरुक्तम्। मया तूद्योतानुसरणेन कथञ्चिदेकदेशेषु व्याख्यातम्। एतन्न्यासस्यातिगोप्यत्वेन न यस्मै कस्मैचिद् देयमित्याह—पुत्राणामिति । पुत्राणामपि विशेषतो भक्तानामेव देयः ।। ३८५ ।।

शक्तिन्यासस्त्वयं देवि न देयो यस्य कस्यचित् ।
मनुष्याणां महीलोके चिन्तितार्थफलप्रदः ॥३८६॥
यः करोति सदा न्यासं षोढान्यासादिकं शिवे ।
स जीवन् शक्तिरूपी वै त्रैलोक्योन्मूलनक्षमः ॥३८७॥
अयं तु परमो न्यासः सकृद्विन्यस्य देहके ।
सकलन्यासजालानां यावज्जन्मफलं भवेत् ॥३८८॥
शक्तिन्यासकृते जीवे यः कश्चिच्छेदको भवेत् ।
कर्मणा मनसा वाचा तस्य पातो भविष्यति ॥३८९॥
एतत्ते गुह्यमाख्यातं सर्वन्यासोत्तमोत्तमम् ।
एवं विन्यस्तगात्रस्तु सपर्यामारभेच्छिवे ॥३९०॥
एवं न्यासविधिः प्रोक्तस्त्वेतत्तुल्यो न विद्यते ।
नित्यमेतद्विन्यसेद्वै श्रीचक्रं शक्तिमेव च ॥३९१॥
अथवा पर्वदिवसे विन्यसेत् परमेश्वरि ।
श्रीचक्रन्यासमाहात्म्यं किं वदामि तवेश्वरि ॥३९२॥
सकृद्विन्यासमात्रेण सर्वपापैः प्रमुच्यते ।
त्रिवारं न्यासयोगेन देवताप्रीतिमाप्नुयात् ॥३९३॥
मासमात्रं न्यस्तदेहो वन्द्यः स्यात् ससुरासुरैः ।
षण्मासं विन्यसेद्यस्तु तस्य देवास्तु किङ्कराः ॥३९४॥

---

न्यासमहिमानमाह—मनुष्याणामिति ॥ ३८६ ॥
यः सदा सर्वकालम् । उन्मूलनं नाशनम् ॥ ३८७ ॥
अयं महाशक्तिन्यासः । सकृत् जन्ममध्ये एकदा । सकलन्यासानां यावज्जन्मकरणे यत्फलम् ॥ ३८८ ॥
जीवे जने । छेदकः तद्वृत्त्यादेः ॥ ३८९ ॥
उपसंहरति—एतदिति । सपर्यां पूजाम् ॥ ३९० ॥
शक्तिन्यासविधिः । श्रीचक्रन्यासं शक्तिन्यासं च ॥ ३९१ ॥
प्रागुक्तश्रीचक्रन्यासमहिमानमाह—श्रीचक्रेत्यादि । किं वदामि ! अत्याश्चर्यभूतमिति भावः ॥ ३९२–३९४ ॥

संवत्सरन्यासमात्रात् सर्वदा श्रीपुरे वसेत् ।
शक्तिन्यासस्य माहात्म्यं वेत्ति साक्षान्महेश्वरः ॥३९५॥
तन्त्रभेदेषु विहिता न्यासाः सर्वे महेश्वरि ।
शक्तिन्यासस्य देवेशि कलां नार्हन्ति षोडशीम् ॥३९६॥

इति परमानन्दतन्त्रे पञ्चदशोल्लासः ॥ १५ ॥

---

एवं श्रीचक्रन्यासमहिमानमुक्त्वा शक्तिन्यासमहिम्नोऽनन्तत्वं वदन्नाह—महेश्वरो वेत्तीति ॥ ३९५ ॥

तन्त्रभेदेषु तन्त्रान्तरेषु । कलाम् अंशम् ।

पद्धतावेतन्न्यासान्ते सौभाग्यवर्धनन्यासः संमोहनन्यासश्चोक्तः । तदुभयं च ज्ञानार्णवेऽप्युत्तमत्वेन प्रोक्तमिति पद्धतिकृता लिखितम् । तन्मूलवचनानि लिख्यन्ते—"अथ वक्ष्ये महेशानि श्रीविद्यान्यासयुग्मकम् । शृणु सर्वोत्तमं चैतद् देवताप्रीतिकारकम् ॥ सम्पूर्णां चिन्तयेद्विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम् । स्रवत्सुधां षोडशार्णां महासौभाग्यदां स्मरन् ॥ वामांशदेशे सौभाग्यदण्डिनीं भ्रामयेत्ततः । रिपुजिह्वाग्रहां मुद्रां पादमूले प्रविन्यसेत् ॥ अहं त्रैलोक्यकर्तेति ध्यायन् फालस्य मध्यतः । संपूर्णया तु विन्यस्य वदने वेष्टयन् तथा ॥ पुनः संपूर्णया देवि गलोर्ध्वे विन्यसेत्तथा । पुनः संपूर्णया देहे वेष्टनत्वेन पादतः ॥ व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाभिवन्द्य च । श्रीविद्यापूर्णरूपोऽयं न्यासः सौभाग्यवर्धनः ॥ ब्रह्मरन्ध्रे क्षिपेद् देवि मणिबन्धे न्यसेत्ततः । ललाटेऽनामिकां कुर्यात् षोडशार्णां पठन् बुधः ॥ संमोहनाख्यो देवेशि न्यासोऽयं क्षोभकारकः ।" इति । एतदर्थः—सर्वोत्तममित्यादिप्रशंसनादेव पद्धतिकृता तत्रत्यान्यन्यासानुपेक्ष्यैतद् द्वयमेव लिखितम् । संपूर्णां विद्यां षोडशीम् । पूर्वं करशुद्धिकरीं विद्यां मध्यमादितलान्तकं न्यसेदिति करशुद्धिकर्याः खण्डशो न्यास उक्तः, तथा प्रकृतेऽपि खण्डशः प्राप्नोतीति संपूर्णामित्युक्तम् । अरुणप्रभामादौ चिन्तयेत् । ततः स्रवत्सुधां महासौभाग्यदां स्मरन् वामांशे सौभाग्यदण्डिनीमुद्रां भ्रामयेत् । पुनस्तथा पादमूले अर्थात्पादाधः रिपुजिह्वाग्रहमुद्रां न्यसेत् । संपूर्णया षोडश्या फालस्य मध्यतो ललाटमध्ये त्रैलोक्यस्याहं कर्तेति स्वात्मानं ध्यायन् विन्यस्य पुनस्तया वदने प्रादक्षिण्येन मुखस्य वेष्टनत्वेन विन्यस्य पुनस्तया गलस्योर्ध्वे अर्थाच्चिबुकाधो विन्यस्य पुनस्तया संपूर्णया देहे सम्पूर्णे पादतो दक्षपादादिवामपादान्तं व्यापकत्वेन विन्यस्य महायोनिमुद्रां मुखे क्षिप्त्वा विन्यस्य अभिवन्द्य प्रणम्येति श्रीविद्यापूर्णरूपः सौभाग्यवर्धनोऽयं न्यासः । अस्य श्रीविद्यापूर्णरूपत्वद्योतनायैव संपूर्णयेति पुनः पुनरुक्तम् । षोडशार्णां पठन् ब्रह्मरन्ध्रे अनामिकां क्षिपेद् अनामिकया न्यसेत् । पुनस्तथा दक्षमणिबन्धे वाममणिबन्धे चेतरेतरानामाभ्यां पुनस्तथा ललाटेऽनामिकां कुर्याद्

अनामिकया न्यसेत्। शत्रूणां क्षोभकारकः। अत्रानामा मुष्टिनिर्गतेति पद्धतिकृतः। अन्येऽनामाङ्गुष्ठाभ्यामित्याहुः। मूर्ध्नः परिभ्रमणेन ब्रह्मरन्ध्रे न्यासस्तु -"परिभ्राम्यानामिकां तु मूर्धानं परितः प्रिये" इति दक्षिणामूर्तिसंहितोक्तेः। मुद्रालक्षणमपि तत्रैव— "मुष्टेर्विनिर्गता वामा तर्जनी दण्डवत्तथा। सौभाग्यदण्डिनी मुद्रा" इति, "अङ्गुष्ठं मुष्टिगं तद्वै रिपुजिह्वाग्रहा भवेत्" इति। ९६॥

**सौभाग्यानन्दसंदोहे तेधीगापद्यबोधकः।**
**परमानन्दटिप्पण्यामभूत् पञ्चदशस्तु सः॥ १५॥**



## षोडशोल्लासः

श्रीदेव्युवाच

भैरव श्रोतुमिच्छामि पूजाक्रममहं शुभम् ।
सविधानं समन्त्रं च कथयस्व महेश्वर ॥१॥

श्रीभैरव उवाच

शृणु देवि प्रवक्ष्यामि पूजाविधिमनुत्तमम् ।
यस्य श्रवणमात्रेण देवता प्रीतिमाप्नुयात् ॥२॥
द्वारपूजां पूर्ववत्तु विधाय परमेश्वरि ।
अन्तःप्रविश्यासने तु तिष्ठेद् देव्यग्रतः शिवे ॥३॥
चक्रराजेऽथ कुण्डल्यां नार्मदे शिवनामके ।
सालिग्रामे प्रतिकृतौ पुस्तकादर्शयोरपि ॥४॥

---

पूजाविधानं प्रष्टुं श्रीदेव्युवाचेति । पूजायाः क्रमं तदङ्गकर्मणां पूर्वापरीभावम् । सविधानं सेतिकर्तव्यम् ॥ १ ॥

उत्तरं वक्तुं भैरव उवाचेति । यस्य पूजाविधेः । श्रवणमात्रेण देवताप्रीतिकथनादनुष्ठाने महाफलं द्योतितम् ॥ २ ॥

पूर्ववत् षष्ठोल्लासोक्तवत् । पूजागृहस्यान्तः तिष्ठेदुपविशेत् । बालाप्रकरणे द्वारपूजोत्तरं भूशुध्यादिकं विहितम् । प्रकृते भूशुध्यादिन्यासोत्तरं द्वारपूजाकथनाद् द्वारपूजाभूशुध्याद्योर्न पौर्वापर्यनियम इति द्योतितम् । अत एव त्रिपुरार्णवयोगिनीतन्त्रादिषु भूशुध्याद्यनन्तरं द्वारपूजा, द्वारपूजानन्तरं भूशुध्यादिकं दृश्यते । तथा एकोनविंशे-"अन्तःप्रविश्याकृत्वा तु न्यासान् पूर्वोक्तवर्त्मच्छिवे" इति न्यासपदं भूशुध्याद्युपलक्षकत्वेनोक्तम् ॥ ३ ॥

तत्र तिष्ठेद् देव्यग्रत इत्युक्तम्, तत्र प्रसङ्गाद् देवीपूजापीठभेदमाह—चक्रराजेत्यादि । प्रतिकृतिः प्रतिमा ॥ ४ ॥

आदर्शे चैकगुणितं पुस्तके द्विगुणं फलम् ।
प्रतिमायां चतुर्धा स्यात् सालिग्रामे तु षोडश ॥५॥
तत्र पूजनमात्रेण वाञ्छितार्थफलं भवेत् ।
शिवनाभे शतगुणं पूजनात् पुरुषार्थदम् ॥६॥
सहस्रधा नार्मदे तु फलं देवि प्रचक्षते ।
तत्र पूजनमात्रेण सर्वसिद्धिमवाप्नुयात् ॥७॥
कुण्डल्यां लक्षगुणितं देवतादर्शनं भवेत् ।
चक्रराजे तु या पूजा साऽनन्तफलदायिनी ॥८॥

---

एतेषां क्रमेण फलमाह—आदर्श इत्यादि ॥ ५ ॥
तत्र सालिग्रामे । पुरुषार्थो धर्मादिः ॥ ६ ॥
तत्र नार्मदे । सर्वस्य वाञ्छितस्य सिद्धिः ॥ ७ ॥

कुण्डल्यादिलक्षणं त्रिपुरार्णवे—"कुण्डली शिवनाभं च सालिग्राममपीश्वरि । यन्त्रालाभे पूजनाय पीठं तु परिकल्पयेत् ॥ तिर्यग्रेखासमाकीर्णा सार्धत्रिवलयैर्युता । अन्तः सूक्ष्मा बहिः स्थूला सर्पवेष्टनवत् स्थिता ॥ मध्यगर्ता कुण्डली स्याद् वामावर्ता महाफला । शिवनाभसमारूढा सालिग्रामेण संयुता ॥ द्वाभ्यां च संगता या तु सा सर्वत्र सुदुर्लभा । शिवनाभात्तु संयुक्तं सालिग्रामेण चेच्छिवे ॥ दुर्लभं तत्त्रिलोक्यां तु तत्र पूजा महाफला । यवार्धमानं लिङ्गं तु गर्तसंस्थं यदा भवेत् ॥ तद् गौरीशिवनाभं स्यात् त्र्यस्रगतं ततोऽधिकम् । सालिग्रामश्च चक्राढ्यश्चक्राधिक्ये महत्फलम् ॥" इति । योगिनीतन्त्रेऽपि—"कुण्डली शिवनाभं च गण्डक्युद्भवमुच्यते । तथा सालग्राममपि रक्तवर्णं परित्यजेत् ॥ खण्डितं चापि संत्याज्यं द्विधा तत्र तु कुण्डली । दक्षवामावर्तभेदाद् वामावर्तं महत्तरम् ॥" इति । नार्मदं नर्मदोद्भूतम् । तत्र पूजा महाफला । "त्रिकोणबिन्दुचिह्नाढ्यं तत्राप्युत्तममुच्यते । शिवनाभेऽपि या पूजा सा महाफलदायिनी ॥ महापुण्यं भवेद् गौरीशिवनाभे कृतार्चनम् ।" इति च । प्रतिकृतिरप्युक्ता त्रिपुरार्णवे—"प्रतिमा ध्यानसदृशी नवरत्नादिनिर्मिता । समानाङ्गा सुशोभाढ्या प्रसन्नवदनेक्षणा । क्रूररूपा कुलं हन्ति भग्ना दारिद्रचदायिनी ॥" इति । यन्त्रं प्रतिमां च पृथक् खण्डैर्योजितं तथा रिक्तगर्भं च न पूजयेत् । तदुक्तं त्रिपुरार्णवे—"यन्त्र मूर्ति च गिरिजे त्यजेत् खण्डमयं तथा । रिक्तगर्भं च यस्तत्र पूजयेत् तस्य वै मृतिः ॥" इति । पुस्तकादर्शाविक्तौ रुद्रयामले—"पुस्तकं कुलशास्त्राणां तथा मन्त्रस्तवैर्युतम् । पूजयेत्तत्र तां देवीं सपरिवारशोभिताम् ॥" इति । तथा—'आदर्शो निर्मलस्तद्वद्रसवीर्येण संयुतः । अखण्डो वक्त्रबिम्बादिदोषहीन इहेष्यते ॥" इति । तथा नार्मदे विशेषस्त्रिपुरार्णवे—"नर्मदोद्भवलिङ्गेऽपि पूजयेदथवा शिवे । अरक्तवर्णं तत्रापि सक्षतं चिपिटं त्यजेत् ॥ सुस्निग्धं वर्तुलं दीर्घं कुक्कुटाण्डसमं शुभम् ॥" इति ॥ ८ ॥

नवरत्ने स्फाटिके वा सालिग्रामशिलाभवे ।
स्वर्णे त्रिलोहे तारे वा ताम्रे दृषदि भूर्जके ॥९॥
पट्टवस्त्रेऽथवा भूमौ श्रीचक्रं रचयेद् बुधः ।
भूमौ सिन्दूररजसा भूर्जे वा पट्टवस्त्रके ॥१०॥
अष्टगन्धेनारचयेदन्यच्छिल्पिविनिर्मितम् ।
सुवर्णं दशभागं स्यात्ताम्रं द्वादशभागकम् ॥११॥
रौप्यं षोडशभागं तु त्रिलोहं परिकीर्तितम् ।
अथ चक्रस्य रचनां शृणु देवि समाहिता ॥१२॥
चतुरस्त्रं समं क्षेत्रमादर्शतलसन्निभम् ।
चतुरस्त्रं विनिर्माय प्रमाणेन सुशोधितम् ॥१३॥
षण्णवत्यङ्गुलैस्तत्तु विभज्य परमेश्वरि ।
चतुर्विंशत्यङ्गुलेन परिक्राम्य सुवृत्तकम् ॥१४॥

---

मन्त्रोद्धारपूर्वकं प्रतिष्ठां वक्तुं सप्तमोल्लासे विशेषफलपूर्वकमुक्तं यन्त्राधिकरणमनुवदति--नवरत्नेत्यादि । तारं रजतम् ॥ ९ ॥

भूम्यादौ विशेषमाह--भूमाविति । भूर्जे पट्टवस्त्रे अष्टगन्धेनेत्यन्वयः ॥ १० ॥

अन्यत् नवरत्नादिकं शिल्पिना शस्त्रेण निर्मितम् । त्रिलोहमाह—सुवर्णमित्यादि ॥ ११ ॥

नवरत्नादिमयशिवलिङ्गे निर्मितयन्त्रं तु सर्वोत्तमम् । तदुक्तं त्रिपुरारहस्ये—"यस्तु लिङ्गे यन्त्रराजं विलिख्य पूजयेच्च माम् । तत्फलं चक्रराजार्चाकोटिकोटिगुणं भवेत् ॥ लिङ्गमूर्ध्नि कृतं यन्त्रं सर्वयन्त्रोत्तमोत्तमम् । तत्र पूजनमात्रेण पूजिताः सर्वदेवताः ॥ यस्मात्त्रिमूर्तिरूपं तद् देवा मूर्तित्रयोद्भवाः ॥" इति ॥ १२ ॥

कुलशास्त्रोक्तप्रमाणेन सुशोधितं चतुरस्त्रं रेखाभिर्विनिर्माय तदन्तर्यन्त्राधिकरणस्थानं समं चतुरस्त्रं क्षेत्रं कुर्यात् । दीर्घचतुरस्त्रस्य उच्चनीचक्षेत्रस्य च व्यावृत्तये समम् आदर्शतलसन्निभमिति ॥ १३ ॥

तत् चतुरस्त्रक्षेत्रम् । अङ्गुलैरित्यंशोपलक्षकम्, रेखामर्धाङ्गुलामित्यादि वक्ष्यमाणत्वात् । चतुर्विंशत्यङ्गुलेन कर्काटकादिना । सुवृत्तं मध्ये कुर्यादिति शेषः । चतुर्विंशत्यङ्गुलकर्काटकभ्रामणेन वृत्ते कृते वृत्तान्तरमष्टाचत्वारिंशदङ्गुलं भवतीति ज्ञेयम् ॥ १४ ॥

वस्वब्धिसंख्याङ्गुलाढ्यगर्भं कृत्वा तु साधकः ।
प्राक्प्रत्यक्सूत्रमास्फाल्य तत्र रेखाष्टकं लिखेत् ॥१५॥
तिर्यग्रूपं रसैः षड्भिः शरैरग्निभिरेव च ।
प्रागाद्यथ रसैः षड्भिः ऋतुभिः शिवलोचनैः ॥१६॥
पश्चिमादि लिखित्वैवं त्रिकोणानि तु योजयेत् ।
त्रिषष्ठाभ्यां वृत्तसूत्रकोणं षट्कोणमालिखेत् ॥१७॥
आद्यन्तरेखासूत्राग्रं द्विसप्ताभ्यां च सन्धिभित् ।
अथान्त्यात्तु तृतीयाग्रं त्रिकोणं रचयेत् सुधीः ॥१८॥
ततश्चतुःपञ्चमाभ्यामन्तर्डमरुदेशतः ।
द्विसप्तरेखायुक्ताग्रं षट्कोणं स्यान्महेश्वरि ॥१९॥

---

एतदेवाह--वस्विति । वस्वब्धि अष्टाचत्वारिंशत् । गर्भं सुवृत्तकमिति संबन्धः । प्राक् प्रत्यग् वृत्तपूर्वमध्यात् पश्चिममध्यान्तम् । सूत्रमास्फाल्य रेखां कृत्वा तत्र सूत्राख्यरेखायां तिर्यग्रूपं दक्षिणोत्तरायतं रेखाष्टकम् ॥ १५ ॥

तत्प्रमाणमाह—रसैरित्यादि । प्रागादि प्राग्दिशमारभ्य षड्भिः षड्भिः पञ्चभिस्त्रिभिरङ्गुलै रेखाचतुष्टयं कर्तव्यमित्यर्थः । रस षट् । शर पञ्च । अग्नि त्रयः । अथ अनन्तरम् । पश्चिमादि लिखित्वेत्यन्वयः । रस षट् । ऋतु षट् । शिवलोचनं त्रयः । पश्चिमदिशमारभ्य षड्भिः षड्भिः षड्भिः त्रिभिरङ्गुलैः रेखाचतुष्टयम् । इत्येवं रेखाष्टकं लिखित्वा ॥ १६ ॥

तदनन्तरं ताभी रेखाभिस्त्रिकोणानि योजयेत् । तत्प्रकारमाह—त्रिषष्ठेति । तृतीयषष्ठरेखाप्रान्ताभ्यां वृत्तसूत्रपश्चिमपूर्वसन्धौ रेखाद्वयमाकृष्य संयोजनेन वृत्तसूत्रस्थकोण षट्कोणमालिखेत् ॥ १७ ॥

द्विसप्ताभ्यां द्वितीयसप्तमरेखापार्श्वाभ्यां प्रत्येकं रेखाद्वयमाकृष्य आदिरेखान्त्यरेखयोः सूत्रसन्धिस्थले संयोजनेन तृतीयषष्ठरेखास्थितसन्धिद्वयभेदेन परं षट्कोणमालिखेत् । अत्राद्यन्तेति व्यत्यस्तक्रमः । सन्धिभेदः सन्धिमध्ये रेखापातः । अथानन्तरम् । अन्त्यात् अन्त्यरेखापार्श्वाभ्याम् । तृतीयरेखास्थलसूत्रे अग्रं षष्ठसप्तमरेखास्थलसन्धिभेदेन त्रिकोणं रचयेत् । अत्र संधिभेदोऽष्टादशसु मर्माणीति वक्ष्यमाणवचनानुरोधेन ज्ञेयः ॥ १८ ॥

तत एवमन्त्यरेखया त्रिकोणरचनानन्तरम् । चतुःपञ्चमाभ्यां चतुर्थपञ्चमरेखयोः पार्श्वाभ्याम् अन्तर्डमरुदेशतः अन्तर्डमर्वन्तर्भागादित्यर्थः । डमरुर्नाम षट्कोणपार्श्वस्थं

अथाद्यरेखया पञ्चरेखाग्रं तु त्रिकोणकम् ।
आद्यन्तयोः सन्धिमध्ये रेखां डमरुसंयुताम् ॥२०॥
षष्ठरेखायुताग्रं तु त्रिकोणं विलिखेच्छुभम् ।
अष्टादशसु मर्माणि चतुर्विंशतिसन्धयः ॥२१॥
भवन्ति समकोणानि मध्ये बिन्दुं प्रकल्पयेत् ।
बहिर्वृत्ते दलान्यष्टौ कुर्यात् सप्ताङ्गुलावधि ॥२२॥
त्र्यङ्गुले तद्दलाग्रं च बहिर्वृत्तं समालिखेत् ।
षड्भिर्द्वाभ्यां च तद्बाह्ये नृपपत्रं प्रकल्पयेत् ॥२३॥

---

मिलिताग्रं त्रिकोणद्वयम् । तच्च तृतीयषष्ठरेखाभ्यां कृतषट्कोणपार्श्वद्वये बाह्यडमरुद्वयम् । द्वितीयसप्तमरेखाभ्यां कृतषट्कोणपार्श्वद्वयेऽन्तर्डमरुद्वयम् । तथा चान्तर्डमरुपर्यन्तमेव चतुर्थपञ्चमरेखाद्वयं प्रकल्पयेत् । एवंविधचतुर्थपञ्चमरेखाप्रान्ताभ्यां द्वितीयसप्तमरेखास्थलसूत्रे अग्रं यस्य । एवं षट्कोण कर्तव्यं स्यात् । अत्रापि द्विसप्तेति व्यस्तः क्रमः । अत्र चतुर्थरेखाप्रान्ताभ्यां त्रिकोणं पञ्चमरेखास्थसन्धिभेदेन कर्तव्यम् ॥ १९ ॥

अथानन्तरम् । आद्यरेखया आद्यरेखापार्श्वाभ्यां पञ्चमरेखास्थसूत्राग्रम् । त्रिकोणं कर्तव्यम् । एतच्च द्वितीयतृतीयचतुर्थरेखास्थसन्धिभेदेन ज्ञेयम् । आद्यन्तयोः आद्यन्तरेखाभ्यां कृतत्रिकोणयोर्यः सन्धिश्चतुर्थपञ्चमरेखामध्यस्थः, तन्मध्ये तत्सन्धिभेदेन चतुर्थपञ्चमरेखाभ्यां कृतषट्कोणपार्श्वस्थडमरुद्वयसंयुतां तत्पर्यन्तां रेखां कृत्वा ॥ २० ॥

षष्ठरेखास्थसूत्रयुताग्रं त्रिकोणं विलिखेत् । एवं च संभूयाष्टादशसु मर्माणि चतुर्विंशतिसन्धयः सम्पद्यन्ते । रेखात्रययोगो मर्म । रेखाद्वययोगः सन्धिः । एतच्च रेखामध्ययोग एव न प्रान्तयोगः । अन्यथा त्रिकोणाग्ररेखायोगस्य मर्मत्वेन गणनापत्तिः । तथा च द्वितीयचतुर्थपञ्चमसप्तममध्यमरेखासु द्वयं तृतीयषष्ठरेखयोः प्रत्येकं चत्वारीत्यष्टादश मर्माणि । रेखाष्टके प्रतिरेखे द्वौ द्वौ पार्श्वस्थडमर्वष्टके प्रत्येकमेक इति चतुर्विंशतिसन्धयः ॥ २१ ॥

समकोणानि पार्श्वेषु साम्येन स्थितानि त्रिकोणानि समानक्षेत्रफलानि भवन्ति । मध्ये प्रोक्तषण्णवत्यङ्गुलक्षेत्रमध्ये बिन्दु प्रकल्पयेत् । ततः षण्णवत्यङ्गुलमिते क्षेत्रे मध्येऽष्टाचत्वारिंशदङ्गुलं वृत्तं प्राक्कृतं पार्श्वद्वये प्रत्येकं चतुर्विंशत्यङ्गुलं क्षेत्रमुर्वरितम् । तत्राष्टदलादिलेखनमाह—बहिरिति । वृत्ताद् बहिः सप्ताङ्गुलमध्ये दलाष्टकं कुर्यात् ॥ २२ ॥

तद्बहिः त्र्यङ्गुलमध्ये तेषामष्टानां दलानामग्रं कृत्वा तद्बहिर्वृत्तं समालिखेत् । तस्य द्वितीयवृत्तस्य बाह्ये षड्भिरङ्गुलैर्मिते क्षेत्रे नृपपत्रं षोडशदलं द्वाभ्यामङ्गुलाभ्यां

**तद्बाह्ये वृत्तमालिख्य तद्बाह्ये चतुरस्रकम् ।**
**त्रिभिस्त्रिभिर्द्वारमपि दशाङ्गुलसुविस्तृतम् ॥२४॥**
**रेखामर्धाङ्गुलात् स्थूलां न कुर्यात्तु कदाचन ।**
**सूत्रं च शेषरेखाश्च मार्जयेत् परमेश्वरि ॥२५॥**

---

मिते क्षेत्रे षोडशदलाग्रं च प्रकल्पयेत् । अत्र दललेखनप्रकारो लिख्यते । प्रथमवृत्ताद् बहिः सप्तत्रिषड्द्व्यङ्गुलैर्वृत्तचतुष्टयं लिखेत् । प्रथमवृत्तेन सह वृत्तपञ्चकं भवति । तैरन्तरालचतुष्टयं भवति । अष्टदिक्षु समसूत्रपातेन दिगन्तरालेषु समसूत्रपातेन तदन्तरालेषु पुनः समसूत्रपातेन च वृत्तानि द्वात्रिंशद्धा विभज्य आद्यवृत्तगतविदिक्चिह्नाभ्यां बाह्यतः कर्कटकभ्रामणेन द्वितीयवृत्तपर्यन्तं नीत्वा ततोऽन्तर्भ्रामणेन तृतीयवृत्तगतदिक्चिह्नेऽग्रद्वययोजनेन दलाग्रं लिखेत् । एवं तृतीयवृत्तगतदिग्दिगन्तरालमध्यचिह्नाभ्यां बाह्यतो भ्रामणेन चतुर्थवृत्तपर्यन्तं नीत्वा ततोऽन्तर्भ्रामणेन पञ्चमवृत्तगतदिग्विदिक्चिह्नेष्वग्रद्वययोजनेन दलाग्रं लिखेदिति । एतच्च शारदातिलकोक्तपद्मकुण्डाभिज्ञानां सुलभतरमेव ॥ २३ ॥

तद्बाह्ये षोडशदलबाह्ये । वृत्तमित्येकवचनस्वारस्यादेकमेव वृत्तम् । एतेन षोडशदलबाह्ये वृत्तत्रयमिति प्रक्षिप्तम्, "वृत्तेऽष्टपत्रं तद्बाह्ये वृत्ते षोडशपत्रकम् । वृत्तं ततो भूपुराणां त्रितयं द्वारशोभितम् ॥" इति, "अष्टषोडशपत्रे तु कर्णिकाढ्ये ततः परम् । वृत्तं त्रिभूसदनकं चतुर्द्वारि विभूषितम् ॥"इति, "एतद्बाह्यगतं पद्ममष्टपत्रं समालिखेत् । तद्बाह्यतोऽपि देवेशि षोडशारं तथैव च ॥ परिवेषं भूपुरं च चतुर्द्वारोपशोभितम् ।" इति, बहिरष्टदलं पद्मं सुवृत्तेन समालिखेत् । तद्वत् षोडशपत्रं हि विलिखेत् पद्ममुत्तमम् ॥ सुवृत्तं परमेशानि ततो भूबिम्बमालिखेत् ।" इति च त्रिपुरार्णव-नित्यातन्त्र-वामकेश्वर-दक्षिणामूर्तिसंहितादिवचनेषु वृत्तं परिवेषमित्याद्येकवचनस्वारस्यात् । "त्रयश्चत्वारिंशद्वसुदलकलाश्रत्रिवल'य' इत्यादिसौन्दर्यलहर्यादिषु त्रिवलयादिकथनं पद्मद्वयकर्णिकावृत्तेन सहेति ज्ञेयम् । सुन्दरीतापनीय-त्रिपुरामहोपनिषदादिष्वपि कर्णिकावृत्तेन सहैव वृत्तत्रयस्य स्पष्टमुद्धारात् । यत्तु सेतुबन्धे--"तद्बाह्ये देवदेवेशि त्रिवृत्तं मातृकान्वितम्" इति, "गुणवृत्तं ततः कुर्याच्चतुरस्रं च तद्बहिः" इति ज्ञानार्णववामकेश्वरयोर्वचनमुदाहृतम्, तत्तत्रैव बहुषु पुस्तकेष्वेतद्वचनद्वयं नोपलभ्यत इत्युक्तम् । योगिनीहृदयव्याख्यायाममृतानन्दपादैरपि कर्णिकावृत्तेन सहैव वृत्तत्रयं न पृथगिति सुस्पष्टमुपपादितम् । तद्बाह्ये वृत्तबाह्ये । चतुरस्रं चतुरस्रत्रयम् । तच्चतुरस्रत्रयं त्रिभिरङ्गुलैः । तथा पुनस्त्रिभिरङ्गुलैर्दशाङ्गुलविस्तृतं द्वारं च कुर्यात् । भूपुरस्य रेखात्रयत्वम्, रेखात्रितयरूपत इति वक्ष्यमाणत्वात् । एतत्प्रकारस्तु त्रिपुरार्णवे उक्तः—"मध्ये दशाङ्गुलं हित्वा प्रत्येकं पार्श्वयोर्लिखेत् । तिर्यग्रेखात्रयं तेषां प्रान्तेभ्योऽधः समाक्षिपेत् ॥ रेखामङ्गुलमानेन त्रिचतुःपञ्चसंख्यया । परस्परं तु तद्बाह्ये मेलयेत् पर्वतात्मजे ॥" इति ॥ २४ ॥

रेखाप्रमाणमाह—रेखामिति । अर्धाङ्गुलादधिकस्थूलां न कुर्यात् । सूक्ष्मतायां न नियमः । सूत्रं मध्ये प्राक्प्रत्यक्रूपां रेखाम्, शेषरेखाः तृतीयषष्ठरेखाभिन्नरेखाणां

तत्रादौ भूपुरं बाह्ये तदन्तर्नृपपत्रकम् ।
अष्टपत्रं चेन्द्रकोणं द्विदिक्कोणं तदन्ततः ॥२६॥
अष्टकोणं त्रिकोणं च बिन्दुचक्रं तदन्ततः ।
नवचक्रं क्रमादेवं संहारक्रमयोगतः ॥२७॥

शुद्धः शिवः शक्तियोगाद्बिन्दुरूपोऽभवच्छिवे ।
तच्छक्तिश्च त्रिधा जाता इच्छाज्ञानक्रियात्मना ॥२८॥
सदाशिवेश्वरौ विद्या चेति तत्त्रितयं भवेत् ।
मायादिप्रकृतिं यावदष्टकोणमुदाहृतम् ॥२९॥

ज्ञानकर्मेन्द्रियाढ्यं वै दशारं चान्तरं स्मृतम् ।
तयोर्विषयरूपं तु दशारं बाह्यतः स्थितम् ॥३०॥
सत्त्वं रजस्तम इति गुणानां तारतम्यतः ।
अहङ्कारात् त्रयं देवि नवधा समजायत ॥३१॥

---

कोणाद् बहिर्भागाः ॥ २५ ॥

एवं चक्रलेखनक्रममुक्त्वा तदवयवभेदं कथयति--तत्रेत्यादि । भूपुरं चतुरस्रत्रयम् । बाह्ये सर्वबाह्ये । नृप षोडश । इन्द्र चतुर्दश । दिक् दश ॥ २६ ॥

तस्य त्रिकोणस्यान्ततो मध्ये । एवं भूपुरमित्यादि बिन्दुचक्रमित्यन्तं संहारयोगतः संहाररीत्या नवचक्रमुक्तम् ॥ २७ ॥

एवंविधचक्रस्य तत्त्वाभेदभावनाय तद्रूपतामाह--शुद्ध इत्यादि । शुद्धः शिवः प्रकाशमात्रवपुः । शक्तियोगाद् उन्मिषद्विमर्शशक्तिसहितत्वात् कारणबिन्दुमयोऽभवत् । स एव मध्यबिन्दुरूपः । शिवशक्त्योरत्यन्ताभेदद्योतनाय एकस्य बिन्दोस्तत्त्वद्वयात्मतोक्ता । तस्य शिवस्य शक्तिः स्वस्वातन्त्र्यवशाद् इच्छाज्ञानक्रियात्मना सदाशिवेश्वरौ विद्या चेति त्रिधा जाता । तत् त्रितयं त्रिकोणकोणत्रितयं भवेदित्यन्वयः ॥ २८ ॥

प्रकृतिं यावत् प्रकृतिपर्यन्तम् अष्टकम् ॥ २९ ॥

श्रोत्रादिपञ्चकं ज्ञानेन्द्रियम् । वागादिपञ्चकं कर्मेन्द्रियम् । इति दशकेनाढ्यं तादात्म्येन युक्तम् । आन्तरं दशारम् । तयोः ज्ञानकर्मेन्द्रिययोः । विषयः शब्दादिपञ्चकं वचनादिपञ्चकम् । बाह्यतः स्थितं दशारम् ॥ ३० ॥

तारतम्यतः न्यूनाधिकभावेन । अहङ्कारात्त्रयं अहङ्कारो बुद्धिर्मनश्चेति । एकैकं त्रिविधमिति नवधा ॥ ३१ ॥

जाग्रत्स्वप्नसुषुप्त्याख्यं पदत्रयमपीश्वरि ।
एतदाधारभूतं तु नभः प्राणो मरुच्छिवे ॥३२॥
चतुर्दशैतद् देवेशि मन्वस्रं समुदीरितम् ।
धर्माद्यष्टकलायुक्तं तेजश्चाष्टदलात्मकम् ॥३३॥
जलं नृपकलायुक्तं भवेन्नृपदलाम्बुजम् ।
चतुष्कलायुता पृथ्वी भूपुरात्मतया स्थिता ॥३४॥
इत्येवं चक्ररूपं स्यात् तत्त्वात्मकमिहेश्वरि ।
अथ मन्त्रात्मकं चक्रं कथयामि शृणु प्रिये ॥३५॥
बिन्दुर्नादात्मको देवि त्रिकोणं बिन्दुरूपकम् ।
वसुकोणं तुष्टिरूपं दशारं तेजआत्मकम् ॥३६॥
परं च वायुरूपं स्यान्मन्वस्रं शक्तिरूपकम् ।
स्पर्शात्मकं नागदलं रूपं देवि कलास्रकम् ॥३७॥
ज्योत्स्नाकारं नृपुरं स्यादेवं मन्त्रमयं शिवे ।
तत्त्वात्मकत्वाद् विद्यायास्तन्मयत्वमपीश्वरि ॥३८॥

---

जाग्रदादिपदत्रयम् अवस्थात्रयम् । एतस्य दृश्यस्य जगतः अवकाशप्रदत्वेनाधारभूतं नभः आकाशः, प्राणात्मको मरुत् वायुः ॥ ३२ ॥

एतत् अहङ्कारादिवाय्वन्तं चतुर्दश । मन्वस्रं चतुर्दशारम् । धर्मादिरूपा या अष्टकलोष्मादि वक्ष्यमाणा ॥ ३३ ॥

नृपकला शीतलादि वक्ष्यमाणषोडशकला । नृपदलं षोडशदलम् । धारिण्यादि वक्ष्यमाणकलाचतुष्टययुता पृथ्वी । ३४ ॥

उपसंहरति--इत्येवमिति । तत्त्वात्मकं चक्ररूपं स्यात् । इह उपासनाविषये । मन्त्राभेदभावनाय तदात्मतां वक्तुमाह--अथेति ॥ ३५ ॥

बिन्दुर्बिन्दुचक्रम् । नादात्मकः, नादः अर्धचन्द्ररोधिनीनादनादान्तशक्तिव्यापिकासमनोन्मन्यात्मकसूक्ष्मवर्णाष्टकम् । एतच्च हृल्लेखास्थबिन्दूपरि शास्त्रसिद्धम् । एतत्स्वरूपादिकं योगिनीहृदये वरिवस्यारहस्ये च द्रष्टव्यम् । बिन्दुर्हृल्लेखास्थः । तुष्टिः ई । तेजः ह ॥ ३६ ॥

परं द्वितीयदशारम् । वायुः स । मन्वस्रं चतुर्दशारम् । शक्तिः क । स्पर्श र । नागदलमष्टदलम् । रूपं ल । कलास्रं षोडशदलम् ॥ ३७ ॥

ज्योत्स्ना ए । एकादशोल्लासे विद्यायास्तत्त्वात्मताकथनात् प्रकृते चक्रस्य च तत्त्वात्मताकथनात् तन्मयत्वं विद्यामयत्वं भवेत् । तत्त्वात्मकत्वादपीत्यन्वयः ॥ ३८ ॥

तस्मादेव तु देवेशि चक्रं कामकलात्मकम् ।
एतच्चक्रप्रमाणं तु कथयामि वरानने ॥३९॥
शक्तिचक्राणि पञ्चात्र शिवचक्रचतुष्टयम् ।
तस्मादुभयरूपं स्यादतः कामकलात्मकम् ॥४०॥
त्रिकोणमष्टकोणं च दशकोणद्वयं तथा ।
मनुकोणं च देवेशि शक्तिचक्रं भवेच्छिवे ॥४१॥
बैन्दवं वसुपत्रं च नृपपत्रं महीगृहम् ।
शिवचक्राणि देवेशि तेषामैक्यमिहोच्यते ॥४२॥
त्रिकोणे बैन्दवैक्यं स्यादष्टारेऽष्टदलस्य च ।
दशारद्वितये देवि नृपपत्रस्य चैकता ॥४३॥
मनुकोणे भूगृहस्य चैवमेकत्वमुच्यते ।
ऐक्यमेवं सुविज्ञाय पूजयेच्चक्रनायकम् ॥४४॥
अन्यथा नैव सिद्धिः स्यात् कल्पकोटिशतैरपि ।
त्रिचत्वारिंशदत्र स्याद्योनीनां गणना शिवे ॥४५॥
तासां प्रकृतिभूतास्तु नवयोन्यः सुमध्यमे ।
तत्रापि शिवशक्त्योर्वै विभेदं शृणु शङ्करि ॥४६॥

---

यस्मादेकादशोक्तरीत्या कामकलात्मिकाया विद्यायाश्चक्रात्मकत्वं तस्मात् । शिवशक्त्यात्मकचक्रयोः प्रमाणं संख्याम् ॥ ३९ ॥

अत्र चक्रे । यस्मादुभयचक्रमस्ति, तस्माच्छिवशक्त्ययुभयरूपम् । अत एव शिवशक्तिवाचकाऽहङ्कारात्मकत्वेन तद्वाच्यकामकलात्मत्वम् ॥ ४० ॥

शिवशक्तिचक्रविभागमाह—त्रिकोणमित्यादि ॥ ४१ ॥

तेषां शिवचक्राणां शक्तिचक्राणां च ॥ ४२ ॥

नृपपत्रं षोडशदलम् ॥ ४३ ॥

मनुकोणं चतुर्दशारम् । एतदैक्यज्ञानस्य पूजाङ्गत्वं विधत्ते—सुविज्ञायेति ॥४४॥

एतस्यैव नित्यतां वक्तुं व्यतिरेके दोषमाह—अन्यथेति । सिद्धिः पूजाफलम् । योनिषु शिवशक्तिभेदं वक्तुमाह—त्रिचत्वारिंशदित्यादि । अत्र श्रीचक्रे योनिस्त्रिकोणम् ॥ ४५ ॥

तासां त्रिचत्वारिंशद्योनीनाम् । प्रकृतिभूताः कारणभूताः, उद्धारे नवत्रिकोणलेख-

पञ्चकं शक्तियोनीनां शिवयोनिचतुष्टयम् ।
ऊर्ध्वाग्रा शिवयोनिः स्यात् शक्तियोनिरधोमुखी ॥४७॥
तस्माच्छक्तिमयं सर्वं श्रीचक्रं शिवयोर्वपुः ।
ऊष्मा ज्वाला च धूम्रा च दाहिका पाचिका तथा ॥४८॥
प्रकाशिनी वीर्यभक्षा योगजेति कलाष्टकम् ।
एवं प्रोक्तस्तैजसस्तु शक्तिसंघो महेश्वरि ॥४९॥
शीतला स्यन्दिनी स्नेहा मधुरा निम्नयायिनी ।
स्वच्छा चाप्यायिनी तृप्तिः पोषिणी जीवनी तथा ॥५०॥
क्लेदिनी पावनी पुष्टिर्बीजा चैक्या च तारिणी ।
इति षोडशशक्त्यस्तु कलाः स्युर्जलतत्त्वगाः ॥५१॥
धारिणी कठिना गन्धा तिरोधिश्चेति शङ्करि ।
चतुष्कलायुता पृथ्वी स्थूलसूक्ष्मपरत्वतः ॥५२॥

---

नेनैव चतुर्दशत्रिकोणादीनां साधितत्वात् । तत्रापि नवयोनिष्वपि ॥ ४६ ॥

तद्विभागमेवाह--पञ्चकमिति । तल्लक्षणमाह--ऊर्ध्वेति । ऊर्ध्वाग्रा प्रागग्रा । अधोमुखी पश्चिमाग्रा ॥ ४७ ॥

यस्माच्छिवशक्तियोनिघटितत्वेन शिवयोर्वपुरपि शक्तियोनीनामाधिक्याच्छक्तिमयं शक्तिप्रचुरम्, तस्मात् सर्वमिदं श्रीदेव्याः पराशक्तेश्चक्रम् । प्रागुक्तानां तेजसोऽष्टकलानां नामान्याह—ऊष्मेत्यादि । कला प्रकृतेः शक्तिः, शक्तिसंघो महेश्वरीति वक्ष्यमाणत्वात् ॥ ४८ ॥

वीर्यं सारांशः । तद्भक्षणं काष्ठादौ प्रत्यक्षोपलब्धम् । योगेन काष्ठयोगाढसंयोगेन जाता योगजा ॥ ४९ ॥

जलकलानां नामान्याह—शीतलेत्यादि । निम्ने गभीरे । यायिनी गमनशीला ॥ ५० ॥

शक्त्यः शक्तयः । एता एव कलाः ॥ ५१ ॥

पृथ्वीकला आह—धारिणीत्यादि । भूपुरस्य त्रिधात्वं सहेतुकमाह- स्थूलेत्यादि । पृथिव्याः स्थूलसूक्ष्मपरत्वेन त्रैविध्यान्महीगृहं रेखात्रयरूपेण त्रिधेत्यन्वयः । पृथिव्याः सूक्ष्मरूपं गन्धः, परं रूपं शक्तिमयं जले स्वकारणे स्थिनम् । पृथिव्याश्चरमकार्यत्वेन तस्य त्रैविध्यकथनेनान्येषां त्रैविध्यमुक्तप्रायं वेदितव्यम् ॥ ५२ ॥

त्रिधा महीगृहं देवि रेखात्रितयरूपतः ।
एतच्चक्रं त्रिधा देवि मेरुभूकूर्मभेदतः ॥५३॥
समाधारे समारेखा भूप्रस्थं परिकीर्तितम् ।
उन्मग्नाधारके रेखामयं कूर्ममुदाहृतम् ॥५४॥
तथा कोणमयं चापि कूर्मप्रस्थमुदाहृतम् ।
भूगृहाद् बिन्दुपर्यन्तं क्रमादुच्चोच्चभूमिकम् ॥५५॥
मेरुप्रस्थमिति ख्यातं तस्मादेवं चतुर्विधम् ।
शुद्धं चक्रं भवेद् देवि मिश्रं शृणु महेश्वरि ॥५६॥
भूप्रस्थं नृपपत्रान्तं ततोऽन्यद् द्वितयं शिवे ।
भूप्रस्थं भूपुरं चापि ततोऽन्यद् द्वितयं तथा ॥५७॥
त्रिविक्रमादुन्नतं च मेरुप्रस्थमथापरम् ।
इति संक्षेपतः प्रोक्तं दशधा चक्रनायकम् ॥५८॥

---

चक्रभेदमाह—एतदिति ॥ ५३ ॥

तेषां लक्षणमाह—समेत्यादि । समे अनुच्चे । आधारे यन्त्राधिकरणे स्वर्णफलकादौ । समा अवक्रेति रेखास्वरूपकथनम्, समाधारे वक्ररेखाया असंभवात् । उन्मग्ने कूर्मपृष्ठादिवदुच्चे ऋजुरेखाया असम्भवादर्थाद्वक्ररेखामयम् ॥ ५४ ॥

तथेति । उन्मग्ने आधारे । कोणमयं रेखारहितम् । प्रोक्तत्रिकोणानामन्तरगतं चतुर्विधं शुद्धमित्युक्तेश्च । अत एव निम्नाधारेऽपि न यन्त्रसिद्धिः । उच्चोच्चभूमिकं सोपानवत् । मेरुप्रस्थमित्यन्वयः ॥ ५५ ॥

यस्मात्त्रिप्रकारान्तर्गतकूर्मप्रस्थस्य द्वैविध्यं तस्मात् । एवमुक्तप्रकारेण चतुर्विधं शुद्धचक्रं भवेत् ॥ ५६ ॥

तदेवाह—भूप्रस्थमित्यादि । नृपपत्रान्तं षोडशदलपर्यन्तम् । अन्यत् अष्टदलादिबिन्द्वन्तम् । कूर्मप्रस्थं मेरुप्रस्थं वा । ततो भूपुराद् अन्यत् षोडशदलादिबिन्द्वन्तम् । तथा पूर्ववत् । कूर्मप्रस्थं मेरुप्रस्थं वा ॥ ५७ ॥

त्रित्रिक्रमेणोन्नतरूपं मेरुप्रस्थम् । अपरं पूर्वोक्तादन्यत् । एवं संक्षेपेण दशधा चक्रम् । यथा—भूप्रस्थं कूर्मप्रस्थं मेरुप्रस्थमिति शुद्धं त्रयम् । नृपपत्रान्तं भूप्रस्थम्, अन्यद् रेखाकूर्मं कोणकूर्मं मेरुप्रस्थं वा । भूपुरं भूप्रस्थं अन्यद् रेखाकूर्मं कोणकूर्मं मेरुप्रस्थं वा । त्रित्रिक्रमादुन्नतं मेरुप्रस्थं वा इति । अत्र शुद्धे रेखात्मककोणात्मकयोः कूर्मस्यैक्यं दशधेति संख्यानुरोधाज्ज्ञेयम् ॥ ५८ ॥

एवंरीत्या बहुविधं चक्रं स्यात्तु वरानने ।
क्रमान्नामानि चैतेषां चक्राणां परमेश्वरि ॥५९॥
भद्रचक्रं वृद्धिचक्रं महाचक्रं महेश्वरि ।
श्रीकरं शुभचक्रं च कामिकं मोहनं तथा ॥६०॥
वैजयन्तं जयन्तं च नन्दनं चेति वै दश ।
अन्यत् सर्वं स्वस्तिचक्रमिति प्रोक्तं महेश्वरि ॥६१॥
चक्रशुद्धिं प्रवक्ष्यामि शृणु देवि समाहिता ।
वक्ररेखा रोगकरी निम्नरेखा मृतिप्रदा ॥६२॥
प्राक्प्रत्यक्सूत्रगं कोणं बिन्दुः प्राची निगद्यते ।
वक्रा प्राची दुःखकरी मर्मच्छिद्रं भयङ्करम् ॥६३॥
अयुक्तमर्मकोणं तु मानहानिप्रदं भवेत् ।
भूगृहं त्रिप्रकारं स्याद् गोमुखं व्याघ्रवक्त्रकम् ॥६४॥
सर्वतोभद्रमपि च तत्प्रकारं शृणु प्रिये ।
अग्रे संकुचितं देवि गोमुखं परिकीर्तितम् ॥६५॥

---

एवंरीत्या नवसु चक्रेषु भूपुरे कोणकूर्मस्यासम्भवाद् भेदत्रयम्, तथा बिन्दौ कूर्ममेर्वोरभेदाद् द्वैविध्यम्, अन्यत्र भेदचतुष्टयमिति वर्णप्रस्ताररीत्या भूप्रस्थादिलक्षण-मेलने बहुविधम्। तथाहि—९८३०० त्रिशतोत्तराष्टनवतिसहस्रसंख्यं मिश्रचक्रम्। एतेषां प्रागुक्तानां दशानाम्। नामानि शृण्विति शेषः॥ ५९ ॥

श्रीकरचक्रं कामिकचक्रं मोहनचक्रम् ॥ ६० ॥

वैजयन्तचक्रम्, जयन्तचक्रम्, नन्दनचक्रम्। अन्यत् शुद्धचतुष्टयं प्रोक्तमिश्रसप्तका-तिरिक्तम्। केचित्तु कोणकूर्मस्याप्यन्यस्मिन्नन्तर्भावमाहुः॥ ६१ ॥

चक्रशोधनं वक्तुमाह - चक्रशुद्धिमित्यादि ॥ ६२ ॥

पूर्वभूपुरद्वारमध्यात् पश्चिमभूपुरद्वारमध्यान्तं सूत्रे धृते तत्सूत्रगतं नवानां कोणानां बिन्दोश्च मध्ये प्राचीति चक्रशुद्धिनाम। मर्म रेखात्रयसंभेदः। तत्र च रेखा-प्रमाणभ्रंशे मध्यच्छिद्रं संपद्यते॥ ६३ ॥

सन्धिमध्ये तृतीयरेखायोगाभावे अयुक्तमर्म। एवं रेखामध्यासंबद्धं कोणम् अयुक्तकोणम्॥ ६४ ॥

अग्रे पश्चिमतः संकुचितं भूगृहम्॥ ६५ ॥

विस्तृतं व्याघ्रवक्त्रं स्यात् समं भद्रं प्रचक्षते ।
गोमुखे हानिरेव स्यात् व्याघ्रं मृत्युप्रदं भवेत् ॥६६॥
सर्वतोभद्रकं देवि सदा शुभफलप्रदम् ।
रेखाऽसमाना देवेशि चित्तचाञ्चल्यकारिणी ॥६७॥
सालिग्रामशिलादौ तु पलान्न्यूनं न कारयेत् ।
विस्तारे त्र्यङ्गुलान्यूनं स्थौल्ये चापि यवोदरात् ॥६८॥
द्वाविंशतिपलादूर्ध्वं स्थावरं चक्रमिष्यते ।
स्फाटिकादौ तु देवेशि नियमो नैव विद्यते ॥६९॥
विस्तारमानयोर्देवि यथेच्छं तु समाचरेत् ।
श्रीचक्रस्थापनाद् देवि नान्यत् कर्म महत्तरम् ॥७०॥

---

अग्रे विस्तृतम् । भद्रं सर्वतोभद्रम् ॥ ६६ ॥

रेखा असमाना । पूर्वं वक्ररेखेति रेखाया वक्रता निषिद्धा । असमा रेखेति । एका रेखा यवसमानस्थूला, अपरा यवार्धमितेति विषमा प्रकृते निषिध्यते । अत्रायुक्त-कोणमिति पूर्वपश्चिमकोणानामेव प्रागुक्तनियमो न पार्श्वकोणानाम्, असंभवात् । तृतीय-षष्ठत्रिकोणपार्श्वद्वयमेव वृत्तसम्बद्धं नान्यत् । अत एव त्रिपुरार्णवे प्रथमादिरेखापार्श्व-मार्जनमुक्तम् ॥ ६७ ॥

एवं चक्रशुद्धिमुक्त्वा चक्राधारप्रमाणमाह—सालिग्रामेति । आदिना स्वर्णादि-दृषदन्तानां ग्रहणम्, न भूर्जपत्रादेरसंभवात् । तत्प्रमाणं त्रिपुरार्णवे उक्तम्—"षडङ्गुला न्यूनमिते भूर्जपत्रे समालिखेत् । पट्टवस्त्रे विलेख्यं स्यादन्यूनं द्वादशाङ्गुलात् ॥ भूमौ लिखेत् तथा यन्त्रं हस्तान्न्यूनं महेश्वरि ।" इति । पलात् पलप्रमाणात् । न्यूनं न कारयेत् । अधिके तु न नियमः । एवं तोलनप्रमाणमुक्त्वा क्षेत्रप्रमाणमाह—विस्तारेति । त्र्यङ्गुलादन्यूनम् । तस्यैव स्थौल्ये यवोदरं यवमध्यं तस्मादन्यूनम् । अत्राप्याधिक्ये न नियमः ॥ ६८ ॥

एवं तोलनाधिक्यं द्वाविंशतिपलपर्यन्तं ततोऽधिकं स्थावरं स्थिरप्रतिष्ठायोग्यं चक्रम् । स्फाटिकादावित्यादिना पूर्वोक्तस्यापि नवरत्नस्य संग्रहः ॥ ६९ ॥

कुत्र नियमो नेति चेदाह—विस्तारेति । विस्तारे तोलनमाने च । अत एव यथेच्छमिति । त्रिपुरार्णवे तु विस्तारतोऽपि स्थावरनियम उक्तः—"द्वादशाङ्गुलत-श्चोर्ध्वं स्थावरं न तु जङ्गमम् । ततो न्यूनमपि व्यर्थं स्थावरं यन्त्रमद्रिजे ॥" इति । चक्रप्रतिष्ठां वक्तुमादौ तत्फलमाह श्रीचक्रेति । स्थापनं स्थिरम्, "चक्रस्थिरस्थापकानां फलं वक्ष्ये" इत्यादित्रिपुरार्णवोक्तेः । अग्रिमश्लोके च येन संस्थापितमिति सम्यक्स्थिर-

श्रीचक्रस्थापनादेव सर्वकर्मफलं भवेत् ।
येन संस्थापितं चक्रं तस्य वंशसमुद्भवाः ॥७१॥
सर्वपापविनिर्मुक्ताः श्रीपुरे निवसन्ति वै ।
यावद् भूमिर्वर्तते वै सशैलवनकानना ॥७२॥
तावन्निवासः श्रीदेव्या नगरे वै ध्रुवं भवेत् ।
ततः पश्चाच्छिवपदं तत्र ज्ञात्वा विशन्ति वै ॥७३॥
तद्विधिं तु प्रवक्ष्यामि शृणु संयतमानसा ।
प्रोक्ते शुभदिने देवि गुरुज्येष्ठादिभिस्तथा ॥७४॥
तदाज्ञयाऽथवा कुर्यादादौ गणपमर्चयेत् ।
पुण्याहं वाचयित्वाथ गुरून् ज्येष्ठान् प्रणम्य च ॥७५॥
वह्न्यङ्गदाबिन्दुभिस्तु पञ्चगव्यं प्रजप्य च ।
अष्टोत्तरशतावृत्त्या प्रणवेन निमज्जयेत् ॥७६॥

---

त्वेन स्थापितमिति वचनार्थस्याभिमतत्वात् । उपसंहारे यत्र संस्थापितं चक्रमिति ग्रन्थस्य स्थावरपरत्वेनैव संगतेश्च । शिवलिङ्गस्थयन्त्रस्था नं महाफलदम् । तदुक्तं त्रिपुरारहस्ये – "तत्रापि शिवलिङ्गस्थयन्त्रं संस्थापयेत्तु यः । स साक्षात्त्रिपुराकारो जीवन्नेव न संशयः ॥" इत्यादि ॥ ७०-७२ ॥

तत्र श्रीनगरे विशन्ति प्राप्नुवन्ति ॥ ७३ ॥

तद्विधिं स्थापनविधिम् । प्रोक्तं तन्त्रान्तरेष्वित्यर्थः । एतच्चोक्तं त्रिपुरार्णवे— "दीक्षादिसूक्तदिवसे" इति । गुरुज्येष्ठादिभिः, कारयेदिति शेषः । स्वज्येष्ठः । आदिना ॥ ७४ ॥

तदाज्ञया । अत्र गुर्वादिभिः कारयेदिति आचार्यत्वेन वृतैरित्यर्थः । स्थापनसंकल्पस्तु स्वेनैव कार्यः । गुरुज्येष्ठाद्यभावेऽन्यमाचार्यं न कुर्यात् । गुर्वादीनामशक्तत्वे तदाज्ञया तदभावे वा स्वेन कर्तव्यम् । एतदप्युक्तं त्रिपुरार्णवे –"अत्राचार्यो गुरुर्वापि ज्येष्ठो वा भवतीश्वरि । नान्यः कदाचिदथवा स्वयं कुर्यात्तदाज्ञया ॥" इति । तत्रादौ सङ्कल्पानन्तरं गणेशपूजनादि कृत्वा गुरून् ज्येष्ठांश्च प्रणम्य आचार्यवरणं कर्तव्यम् । गुरुज्येष्ठादिभिरिति बहुवचनेन समर्थैर्दीक्षोक्तरीत्या ब्रह्मादिवरणमपि कर्तव्यम् । तदपि तत्रैवोक्तम् –"ब्रह्माणं च सदस्यं च वृणुयात् संभवे सति" इति ॥ ७५ ॥

वह्न्यङ्गदा बिन्दुः ह्रौं । एतेन पञ्चगव्यमष्टोत्तरशतावृत्त्या प्रजप्य प्रणवेन तस्मिन् पञ्चगव्ये चक्रं निमज्जयेत् ॥ ७६ ॥

प्रजपेदथ तत्स्पृष्ट्वा चापोहिष्ठात्रयेण च ।
हिरण्येति चतुर्भिश्च पवमानानुवाकतः ॥७७॥
उद्धृत्य चक्रं तस्मात्तु मध्ये मध्ये च धूपयन् ।
पञ्चामृतैस्तु प्रत्येकं सुवासितजलेन च ॥७८॥
मूलाष्टकप्रजप्तेन स्नाप्याथो जलपात्रके ।
अष्टगन्धेन संमिश्रे मूलाष्टशतमन्त्रिते ॥७९॥
उक्तबीजेनाधिवास्य परेऽह्नि कृतसत्क्रियः ।
सिन्दूरेणाष्टपत्रं तु सकर्णिकमथेश्वरि ॥८०॥
नवयोनिं कर्णिकायां शालितण्डुलकोपरि ।
कलशानां तु नवकं प्रोक्तरीत्या निधापयेत् ॥८१॥

---

तत् निमग्नं चक्रं स्पृष्ट्वा स्पृशन् ॥ ७७ ॥

तस्मात् पञ्चगव्यात् । अष्टमोल्लासोक्तैर्दध्यादिपञ्चामृतैः स्नाप्येत्यन्वयः । तत्र दध्याद्येकैकाभिषेकान्ते धूपयेत् ॥ ७८ ॥

मूलाष्टकप्रजप्तेन सुवासितजलेनेति सम्बन्धः । वचनविपरिणामेन प्रजप्तैरिति पञ्चामृतेऽपि सम्बन्धनीयम्, "मूलाष्टमन्त्रितैः पञ्चामृतैश्चाप्यभिषेचयेत्" इति त्रिपुरार्णवानुरोधात् । अष्टमोक्ताष्टगन्धेन संमिश्रजलयुक्ते पात्रेऽष्टोत्तरशतमन्त्रिते अधिवास्येत्यन्वयः ॥ ७९ ॥

उक्तबीजं ह्रौं । अधिवासः स्थापनम् । अष्टगन्धोदकं पात्रे निमज्जनमितं ग्राह्यम्, "अष्टगन्धोदके यन्त्रं ततः पश्चान्निमज्जयेत्" इति योगिनीतन्त्रोक्तेः । कृतसत्क्रियः कृतनित्यकृत्यः । कलशस्थापनादिकं संकल्पयेत्, "परेऽह्नि वापि संकल्प्य" इति त्रिपुरार्णवात् । अत्र वापीत्यनेनानुपपत्तौ सद्योऽधिवासो ज्ञेयः । सकर्णिकं कर्णिकासहितम्, विलिख्येति शेषः ॥ ८० ॥

नवयोनिं द्वादशोल्लासोक्तां कर्णिकायां विलिख्य तत्र दलाष्टके कर्णिकायां चेति नवसु स्थानेषु शालितण्डुलपुञ्जनवकोपरि प्रोक्तरीत्या द्वादशे उक्तवत् त्रितन्तुवेष्टितम् अस्त्रक्षालितं धूपितमलङ्कृतं मूलं जपन् कलशानां नवकं निधापयेत् । तत्प्रमाणमुक्तं योगिनीतन्त्रे—"स्वर्णाद्यन्यतमं पञ्चपलान्यूनजलाश्रयम्" इति । अत्र कलशस्थापनादिकं वक्ष्यमाणवशिन्याद्यावरणानुरोधेन पश्चिमादिवामतो मध्यान्तं ज्ञेयम् ॥ ८१ ॥

मूलं जपन्नष्टगन्धौषधिक्वाथजलेन च ।
विलोममातृकां जप्त्वा पूरयेत् तत्र वै शिवे ॥८२॥
आच्छादयेत् पूर्ववत्तु पल्लवेन च पात्रतः ।
वशिन्याद्या मूलदेवीर्यथाशक्त्या समर्चयेत् ॥८३॥
कुशाग्रेण स्पृशन् मूलमष्टोत्तरशतं जपेत् ।
अधिवासादिसंस्कारसंस्कृतं यन्त्रराजकम् ॥८४॥

---

अष्टगन्धमिश्रितेन द्वादशोक्तवर्णौषधीनां सर्वासां मन्त्रभवानां क्वाथजलेन तत्र कलशेषु ॥ ८२ ॥

पूर्ववत् दीक्षोक्तवत् । पञ्चपल्लवेन, चकाराद् दूर्वया वस्त्रेण च । पात्रतः समानजातीयतण्डुलपूर्णचषकेण च कलशमुखमाच्छादयेत् । तेनूक्तक्रमेण वशिन्याद्या मूलदेवीं च शक्त्या षोडशभिश्चतुःषष्टिभिर्वोपचारैरावाहनादिपूर्वकं समर्चयेत् ॥ ८३ ॥

कलशान् स्पृशन् । अधिवासादीति । आदिना अग्न्युत्तारणं ग्राह्यम् । तच्चोक्तं कालीरहस्ये—' धातुजे यन्त्रमूर्त्यादौ साक्षादग्नेस्तु दाहतः । शिलामयादौ टङ्कादेरभिघाताऽग्निदाहतः ॥ तत्र देवी स्थापितापि न प्रसीदति शङ्करि । तेनाग्न्युत्तारणं कुर्यात्तद्दोषस्य निवृत्तये ॥ निवृत्तदोषे यन्त्रादौ देवता सुप्रसीदति । तत्संस्कारविधिं वक्ष्ये शृणु देवि समाहिता ॥ सुसाधितं पञ्चगव्यं मूलेनाष्टाभिमन्त्रितम् । धेनुं तार्क्ष्यं च संदर्श्याभिषेकं तेन कारयेत् ॥ जपन्मूलं मातृकां च पुनः शुद्धजलेन च । संमार्ज्य संस्थाप्य पीठे संकल्प्यालभ्य वै कुशैः ॥ शक्रायुधे निविष्टोऽसि वृत्रासुरजिघांसया । तस्मात् सर्वायुधानि त्वं व्याप्य संस्थितवानसि ॥ भुवनेशीं रमां चोक्त्वा अग्ने वै अमृतान्मयम् । कुरु मृत्युञ्जयान्तस्थयुगल वै शिरोऽन्त्यगम् ॥ जपेत् षोडशवारं च पुनः षोडशधा जपेत् । अग्नेपदस्य स्थाने तु कृत्वा यन्त्रादिनाम वै "अङ्गप्रतिकृतिकृतौ चैतत् सकृदेव जपेच्छिवे ।" इति । अस्य यन्त्रस्य टङ्कादिसकलदोषपरिहारार्थमग्न्युत्तारणमन्त्रैः संस्करिष्ये इति संकल्पः । पञ्चगव्याभिषेकस्तु संकल्पात् पूर्वं कथनादितदङ्गभूतं संस्कारान्तरमित्यवधेयम् । भुवनेशी ह्रीं । रमा श्रीं । अग्ने अमृतमयं कुरु स्वरूपम् । मृत्युञ्जयान्त्यस्थयुगलं जूंसः । एतत् शिरोऽन्त्यङ्गं स्वाहा इत्यस्यान्त्यगतम् । एवं षोडशवारं प्रजप्य अग्ने इति पदस्थाने यन्त्रं मूर्तिम् इत्याद्युक्त्वा पुनः षोडशधा जपेत् । अत्र यन्त्रमित्यादि द्वितीयान्तोल्लेखनमर्थानुरुद्धं साम्प्रदायिकं वेदितव्यम् । दीक्षादिकर्माङ्गभूतकलशादिषु संस्थाप्य प्रतिकृतौ प्रतिमायाम् अग्न्युत्तारणे कर्तव्ये एतत् शक्रायुधे इत्यादि सकृत् एकवारम् अग्निपदघटितमेकवारं प्रतिमापदघटितं जपेत् ॥ ८४ ॥

तत्तन्मन्त्रेण कलशैरभिषिच्य पुनर्जलैः ।
शुद्धवस्त्रेण संमार्ज्य निधाय शुभपीठके ॥८५॥
मूलाष्टकेनाभिमन्त्र्य शक्त्या चक्रं प्रपूज्य च ।
चक्रराजं समावाह्य प्राणान् संस्थाप्य चाष्टधा ॥८६॥
तद्गायत्रीं प्रजप्याथो पूजनं तु समाचरेत् ।
दीक्षोक्तविधिना वापि पूजोक्तेनापि वा हुनेत् ॥८७॥
तद्गायत्र्या चाष्टधा तु हुत्वा पश्चान्महेश्वरि ।
पायसेन हुनेत् पश्चान्मूलेनाष्टोत्तरं शतम् ॥८८॥
गायत्र्याश्चापि संपातं चक्रे मूलेन निक्षिपेत् ।
हुत्वा स्विष्टकृतं पश्चाद् व्याहृतीर्दण्डिनीमपि ॥८९॥
प्रायश्चित्तार्थमथ वै चक्रराजं समर्चयेत् ।
सुवासिनीर्गुरुं विप्रान् पूज्य भक्त्या तु शक्तितः ॥९०॥

---

एवमधिवासादिसंस्कारसंस्कृतं यन्त्रं वशिन्यादिकलशैर्वशिन्यादितत्तन्मन्त्रेण क्रमादभिषिच्य चक्रं संमार्ज्य शुभे नूतनवस्त्राद्यलङ्कृते पीठे निधाय ॥ ८५ ॥

चक्रममिमन्त्र्य शक्त्या चतुःषष्टिभिः षोडशभिर्वोपचारैः पूजनादौ कर्तव्यमाह—चक्रराजमित्यादि । चक्रराजस्यैवावाहनं प्राणप्रतिष्ठा च । अष्टधा तद्गायत्रीं प्रजप्येत्यन्वयः ॥ ८६ ॥

तद्गायत्रीं यन्त्रगायत्रीम्, त्रयोविंशतितमे वक्ष्यमाणाम् । दीक्षोक्तविधिना अग्निसाधनादि आवरणहोमान्तं कृत्वा, पूजोक्तविधिना वाग्निस्थापनादि हुत्वा । अत्र स्थिरप्रतिष्ठायां दीक्षोक्तविधिना चरप्रतिष्ठायां पूजोक्तविधिनेत्युद्योते उक्तम् ॥ ८७ ॥

तद्गायत्र्या यन्त्रगायत्र्या मूलदेव्यै ॥ ८८ ॥

गायत्र्या अष्टधा हवनसंपाताज्यशेषं मूलमन्त्रेण चक्रे निक्षिपेत् । चकाराद्दीक्षोक्ताग्निसिद्धिपक्षेऽप्यग्नेः संस्कारपर्यन्तसंपानस्यापि संग्रहः । दीक्षोक्तवदग्निसाधने व्याहृतिहोमोत्तरं प्रायश्चित्तार्थं वाराहीं तन्मन्त्रेण हुत्वा समपर्णाहुतिस्विष्टकृदादिहोमोत्तरतन्त्रं समापयेत् । पूजाङ्गवद्धवने स्विष्टकृतं हुत्वा प्रायश्चित्तार्थं व्याहृतीर्दण्डिनीं च हुत्वा यथोक्तवत् समापयेदित्युद्योतानुगतोऽर्थः ॥८९॥

यथोक्तवच्चक्रराजं समर्च्य सुवासिन्यादिगुर्वन्तान् तोषयेत् ॥ ९० ॥

दक्षिणाद्यैर्गुरुमपि तोषयेत् परमेश्वरि ।
स्थिरप्रतिष्ठाप्येवं स्याच्छ्रीचक्रं मार्जितं शिवे ॥६१॥

मूलं पठन्मातृकां च संस्कृते शुभपीठके ।
पञ्चरत्नसुवर्णादियुते संस्थापयेत् ततः ॥६२॥

मूलं पठन् सन्धिबन्धं बन्धनौषधयोगतः ।
कलशोदकशेषेण पीठं स्नाप्याथ शङ्करि ॥६३॥

वीक्षणाद्यं चाष्टमूलजपं धेन्वादिकं चरेत् ।
महानैवेद्यमादर्शं प्राणस्थित्यन्ततोऽर्पयेत् ॥६४॥

---

दक्षिणाद्यैः दक्षिणावस्त्रादिभिः । एवं चरप्रतिष्ठामुक्त्वा स्थिरप्रतिष्ठायां विशेषं वक्तुमाह—श्रीचक्रमित्यादि । मार्जितं कलशनवकाभिषेकोत्तरं मार्जितम् ॥६१॥

वक्ष्यमाणसंस्कारसंस्कृते । पञ्चरत्नसुवर्णाभ्याम्, आदिना बन्धनौषधेन च युते गर्तयुते शुभे पाषाणमयपीठे मूलं मातृकां पठन् संस्थापयेत् । तत्र मुख्यनियमस्त्रिपुरार्णवे—"प्रत्यङ्मुखं तु संस्थाप्यमथवा प्राङ्मुखं शिवे" इति । ततस्तदनन्तरम् ॥ ९२ ॥

मूलं पठन् बन्धनौषधयोगेन पीठयन्त्रयोः सन्धिं बन्धयेत् । पीठसंस्कारमाह—कलशेत्यादि । प्राक्संस्थापितकलशनवकोदकम् अभिषेकसमये संश्लेष्य पीठं तेन संस्नाप्य ॥ ९३ ॥

वीक्षाणाद्यं कुण्डादावुक्तं वीक्षणादिचतुष्टयम् । मूलाष्टकजपं धेन्वादिकम् अमृतीकरणादिचतुष्टयं च चरेत् कुर्यात् । शिवलिङ्गस्थयन्त्रस्थापने पूजने च विशेष उक्तस्त्रिपुराहस्ये—"एवं लिङ्गमसंस्थाप्य यन्त्रं यः स्थापयेन् क्रमात् । तथा संस्थाप्य वा लिङ्गे न यन्त्रं स्थापयेच्च यः ॥ प्रमादादालस्यतो वा महादोषमवाप्नुयात् ॥" इति । "स्थावरं यदि चेल्लिङ्गं सयन्त्रं कर्तुमिच्छति । तदा चरप्रतिष्ठां तु लिङ्गं कृत्वा ततः परम् ॥ राम स्थिरप्रतिष्ठां वै यन्त्रे कुर्याद् विधानतः । चरलिङ्गेऽप्येवमेव प्रतिष्ठा चरसंज्ञिता ॥" इत्यादि च । लिङ्गे चरप्रतिष्ठां कृत्वैव यन्त्रप्रतिष्ठा स्थिरा चरा वा कार्येति तदर्थः । "तत्रादौ तु महादेवं संपूज्यागमवर्त्मना । ततस्तु त्रिपुरां देवी पूजयेत् परमेश्वरीम् ॥ अन्यथा देवताद्रोहाद्विहतः स्यात् पदे पदे ॥" इति । शिवलिङ्गे आदौ शिवपूजनं कृत्वोद्वास्यानन्तरमेव यन्त्रे देवतां पूजयेदित्यर्थः । अष्टबन्धप्रकारस्तूद्योते—मधूच्छिष्टं सर्जरसं कार्पासं गुडमेव च । गुञ्जाकुरुन्दचूर्णं च हरीतक्या रजस्तथा ॥ चूर्णं चैषामक्षिनृपचन्द्रनेत्राश्विपक्षकाः । नेत्रभूपालकौ भागा जलेन परिपेषयेत् ॥ तैलं

मूर्तिस्थापनमप्येवं स्थिरं वा चरमेव वा ।
मूर्तिस्थापनमप्यत्र महच्छ्रेष्ठं महेश्वरि ॥९५॥
स्थिरमूर्तिस्थापकाश्च तत्पदं प्रविशन्ति वै ।
चक्रस्य स्थापको देवि वसेत्तु गुरुमण्डले ॥९६॥
तैर्बोधितः शिवपदं ज्ञात्वेच्छावशतो विशेत् ।
यत्र संस्थापितं चक्रं परितस्तत्र योजनम् ॥९७॥
श्रीक्षेत्रमिति विख्यातं तत्र ये निवसन्ति वै ।
श्रीविद्यासाधकाः सर्वे निर्धूताऽखिलपातकाः ॥९८॥
अन्ते सालोक्यमायान्ति सत्यं सत्यं वदामि ते ।
साधकस्तु सकृद्वापि जन्ममध्ये महेश्वरि ॥९९॥

---

दत्त्वा कुट्टयेच्च यावदेकत्वमाप्नुयात् ॥'' इति । योगिनीतन्त्रे तु—"बन्धनोक्तौषधैर्वापि गुडचूर्णादिनापि वा । यथा दृढं तथा देवि बन्धयेद् यत्नपूर्वकम् ॥" इति । देवताप्राणस्थापनान्ते महानैवेद्यम् आदर्शं च समर्पयेत् । चक्रे देवीं प्रपूजयेत् । प्राणान् संस्थाप्य वादर्शं नैवेद्यं विविधौदनमिति देवतावाहनोत्तरमेव त्रिपुरार्णवे एतत्प्रकथनात् ॥ ९४ ॥

उक्तविधिं मूर्तिप्रतिष्ठायामप्यतिदिशति—मूर्तीति । अत्र विशेषो योगिनीतन्त्रे—"मूर्तौ तु स्वर्णलेखन्या लिखेद् गन्धाष्टकेन वै । नेत्रमेवं समुन्मील्य प्राणानां स्थापना ततः ॥" इति । सिन्दूरादियन्त्रे विशेषस्तु बृहद्वामकेश्वरे—"वस्त्रे भूर्जे पृथिव्या च पार्थिवे तन्न विद्यते । प्राणस्थापनयन्त्रं तु केवलं त्रिर्जपेच्छिवे ॥" इति, तथा—"उद्वासिते तु संमार्ज्य भूयः संलिख्य पूजयेत्" इति । पृथिव्यां सिन्दूरलिखिते इति शेषः । पार्थिवे पृथ्वीमयमूर्तौ इति । मूर्तिस्थापनादिकं प्रशंसति—मूर्तीति । अत्र उपासनमार्गे ॥ ९५ ॥

तत्पदं देवतालोकम् । गुरुमण्डलम् ओघगुरूणां स्थानम् । एतद्विस्तरस्त्रिपुरार्णवे—"स्थापयेद्देवतामूर्तिं यस्तस्य शृणु वै फलम् । समस्ततीर्थदानानां पुण्यानां शतधा फलम् ॥ यस्तु यन्त्रं स्थापयेद्वै तस्यानन्त्यफलं भवेत् ।" इत्यादि तत्रैव द्रष्टव्यम् ॥ ९६ ॥

तैः गुरुभिः । शिवपदं मोक्षम् । बोधानन्तरमपि जीवन्मुक्तत्वेनावस्थाने स्वातन्त्र्यमाह—स्वेच्छावशत इति । यत्र स्थाने ॥ ९७ ॥

श्रीविद्यासाधका ये निवसन्ति ते सर्वे इत्यर्थः ॥ ९८ ॥

देहपातान्ते सालोक्यं श्रीपुराख्यदेवतालोकवासित्वम् ॥ ९९ ॥

स्थावरं चक्रमभ्यर्च्य सर्वपापैः प्रमुच्यते ।
आवाहनं तत्र नैव कर्तव्यं परमेश्वरि ॥१००॥
स्थावरप्रतिमायां च नित्यं संनिहिता परा ।
आवाहिता सकृत्तत्र उद्वासरहिता शिवे ॥१०१॥
हृदि तत्र च तां ध्यात्वा पूजयेत् परमेश्वरि ।
नावाहनं तत्र भवेत् प्राणस्थित्यन्तमीश्वरि ॥१०२॥

---

स्थावरयन्त्रादौ पूजने विशेषणमाह—आवाहनमिति । तत्र स्थावरयन्त्रे ॥१००॥

आवाहनाभावे हेतुमाह—नित्यमिति । यतः स्थावरे नित्यं सन्निहिता, अतो नावाहनमित्यर्थः । सकृदेकवारं तत्र स्थावरे आवाहिता उद्वासरहिता यतस्तत एव नित्यं सन्निहितेति योजनीयम् ॥ १०१ ॥

ननु आवाहनं विना कथं पूजयेति चेदाह—हृदीति । हृदि देवतां ध्यात्वा तामेव यन्त्रादौ ध्यात्वा पूजयेत् । तर्हि स्थावरे आवाहनादि कियत्कर्म न कर्तव्यमिति चेत्प्रत्याहाररीत्या तदाह—नावाहनमिति । आवाहनात् प्राणस्थापनान्तं न भवेदित्यर्थः ।

चक्रे मूर्तिध्यानानन्तरं प्राणप्रतिष्ठान्तं नास्तीति हृदि तत्र च तां ध्यात्वेति वचनैकवाक्यतया सिद्धोऽर्थः । अत्र पुनःप्रतिष्ठानिमित्तमुक्तं त्रिपुरार्णवे—"रजस्वलान्त्यजैश्चौरैर्विण्मूत्रासृक्श्वगर्दभैः । वराहपतितैः स्पर्शे स्थानभ्रंशेऽग्निदाहके ॥ शिलादिशुद्धिमुद्धृत्य कृत्वा संस्थापयेत् पुनः । चौरैर्हृते खण्डिते वा तद्दिने स्यादभोजनम् ॥ खण्डितं मूलमन्त्रेण चोद्धृत्य प्रक्षिपेज्जले । पुनः संस्थापयेत्तत्र हृते चौरैरपीश्वरि ॥ अमेध्यादिस्पर्शने च त्रिरात्रोर्ध्वमपूजने । दृष्टादृष्टाशेषदोषशान्तये प्रतिवत्सरम् ॥ महाभिषेकः कर्तव्यस्तद्विधानं शृणूच्यते । संस्कृतैः पञ्चगव्यैश्च गन्धाष्टकजलैस्तथा ॥ संस्नाप्य कुशतोयेन मूलेनाष्टोत्तरं शतम् । प्रोक्ष्य संस्पृश्य मूलेन तत्त्वं मन्त्रं च मातृकाम् ॥ विन्यस्य सिन्दूरकेण कुर्यादष्टदलाम्बुजम् ॥ तण्डुलोपरि तस्मिंस्तु दीक्षावत् कलशं न्यसेत् । देवतां तत्र संपूज्य जपेन्मूलं सहस्रधा ॥ मालामन्त्रं चाष्टधा च श्रीसूक्तं चाष्टधा तथा । प्रजप्य नित्यामन्त्रांश्च मातृकामूलमन्त्रतः । अभिषिञ्चेत् ततो रात्रौ पूजयेत्तु विशेषतः । सुवासिनीर्ब्राह्मणांश्च पूजयेद् गिरिकन्यके ॥ एतेन सर्वदोषाणां चरस्यापि स्थिरस्य च । यन्त्रस्य चाथवा मूर्तेः शान्तिः स्याद् गिरिराट्सुते ॥ प्रत्यब्दमेतत्कर्तव्यं स्थावरे वा चरेऽपि वा । दोषसंभावनायां तु नूतने वापि शङ्करि ॥ कर्तव्यं सर्वथा ह्येतत्त्रिपुरास्थितिहेतवे । महामहाभिषेके तु मालामन्त्रं च सूक्तकम् ॥ जपेच्चतुःषष्टिवारमष्टधा चापि वै हुनेत् । अशक्तेन ब्राह्मणैस्तु कारयेद्धवनं जपम् ।

नैवोद्वासोऽपि देवेशि कुण्डल्यामपि नैव तत् ।
एवं ज्ञात्वा महेशानि साधकः सिद्धिमाप्नुयात् ॥१०३॥
अन्यथाऽज्ञानसंमूढो नैवाभीष्टफलं लभेत् ।
एवंविधं श्रीचक्राद्यमभिषिच्योक्तपीठके ॥१०४॥
संस्थाप्य पीठपूजां तु कुर्यादुक्तप्रकारतः ।
मध्यमायां फणायां तु पद्ममष्टदलं स्मरेत् ॥१०५॥
पीठशक्तिस्तत्र चाष्टौ पूजयेत् पूर्वतः क्रमात् ।
मोहिनीं क्षोभिणीं चैव वशिनीं स्तम्भिनीं तथा ॥१०६॥
आकर्षिणीं द्राविणीं चाह्लादिनीं च ततः परम् ।
क्लिन्नां मध्ये क्लेदिनीं च कामबीजं च सर्वतः ॥१०७॥
तत्त्वं वै कमला वै सनाय हृन्मनुना शिवे ।
त्रयोदशाक्षरेणैवं समष्ट्या पीठमर्चयेत् ॥१०८॥

---

एवं सकृदनुष्ठानात् प्रसन्ना देवता भवेत् ॥ एतत्तु स्थावरे कृत्वा वाजपेयफलं भवेत् । सान्निध्यं त्रिपुरायास्तु नित्यं तत्र महेश्वरि ॥" इति ॥ १०२ ॥

तथा पूजायामुद्वासोऽपि न । रश्मिरूपेत्यादि मूलाधारे कुण्डलिनीस्थापनान्तमुद्वासनम् । कुण्डल्यामपि तद् आवाहनमुद्वासने च न । एवं ज्ञात्वा पूजनेनेति शेषः । सिद्धिं पूजाफलम् ॥ १०३ ॥

अन्यथा एतदज्ञात्वा । एतदज्ञानेन संमूढः सन् स्थावरादावावाहनादिकरणेन । चक्राद्यमिति नार्मदलिङ्गादिसंग्रहः । उक्तपीठके सुवर्णाद्युद्भवे इत्यादिना सप्तमोक्तलक्षणे संस्थाप्येत्यन्वयः । एतेन स्नानोपचाराय यन्त्रादेरुच्चालनं प्रतिषिद्धं वेदितव्यम् । एतच्च त्रिपुरार्णवे स्पष्टमुक्तम्--"अभिषिच्यैव यन्त्राद्ये पूजयेत् त्रिपुराम्बिकाम् । यत उद्वासनात्पूर्वं कुप्यत्युच्चालने परा ॥" इति । स्थावरयन्त्रादावुच्चालनाप्रसक्तेरभिषेकोपचारो मुख्य एव कर्तव्य इति ध्येयम् ॥ १०४ ॥

सप्तमे उक्तप्रकारतः । तत्र मध्यमे चार्कपत्राढ्यमिति स्थाने अष्टदलं पद्मं स्मरेत् ॥ १०५ ॥

तत्र पद्मदलेषु । द्वादशपीठशक्तिस्थाने अष्टौ पीठशक्तीः पूजयेत् । तासां नामान्याह—मोहिनीमित्यादि ॥ १०६ ॥

आह्लादिनीम् । मोहिन्यादिक्लिन्नान्तं दलेषु । मध्ये क्लेदिनीम् । कामबीजः क्लीं ॥ १०७ ॥

तः वैं बैं इति त्यक्त्वा सर्वेत्यादि नायेत्यन्तं स्वरूपम् । हृत् नमः ॥ १०८ ॥

पीठपूजाविधावेवं सर्वत्रैव महेश्वरि ।
निर्बीजाद्यान् पीठमन्त्रानाद्यबीजेन संयुतान् ॥१०९॥
सर्वत्रैवं विशेषस्तु तत्र तत्रैव चोच्यते ।
एवं पीठं समभ्यर्च्य पूज्यात्मानं यथाविधि ॥११०॥
आवाहयेत् परां देवीं भक्तिभावेन चेतसा ।
त्रिखण्डया शिरसि वै विमृशेत् पादुकां पराम् ॥१११॥
ततः श्रीगुरुनाथात्मशिवरूपं विभावयन् ।
निजात्मानं निरालम्बः क्षणं स्थित्वा महेश्वरि ॥११२॥
संपूज्य पञ्चधा नाथं पञ्चमुद्राः प्रदर्श्य च ।
प्रार्थयेच्छ्रीगुरुं पश्चात् पूर्वोक्तविधिना शिवे ॥११३॥
ध्यानान्तं पूर्ववत् कृत्वा मूलेन व्यापयेत्तनुम् ।
पादादिबिलपर्यन्तं ध्यायेत् पश्चान्महेश्वरि ॥११४॥

---

सर्वत्र बालादिपीठपूजाविधौ । एवम् उक्तरीत्या समष्टचा पूजनम् । अर्कं सोमं तथा वह्निं प्रणवाद्यमिति बोजयोगः क्वचिदुक्तः । मण्डूकमादौ संपूज्येत्यादौ बीजमनुक्तम् । एवं सति यत्र बीजमनुक्तं ते निर्बीजाद्या मन्त्राः । तान् आद्यबीजेन मं इत्यादिना संयुतान् कृत्वा पूजयेत् ॥ १०९ ॥

नायं विधिरत्रैव, किन्तु सर्वत्र पूजनमन्त्रे बीजाभावे बीजयोगः कर्तव्य इत्याह--सर्वत्रेति । विशेषस्त्विति । बीजविशेषास्त्वित्यर्थः । एवं प्राग् बालाप्रकरणोक्तपीठपूजायां प्रकृतोक्तविशेषयोजनेन । यथाविधि त्रयोदशाष्टमयोरुक्तस्वात्मीकारविधिना ॥११०॥

भक्तिः प्रीतिः, भावः श्रद्धा, ताभ्यां युक्तेन चेतसा । बालाप्रकरणोक्त-गुरुध्यानादौ कर्तव्यं विशेषमाह--त्रिखण्डेति । परां पादुकां महा-पादुकाम् ॥ १११ ॥

निजात्मानं विभावयन् ॥ ११२ ॥

नाथं गुरुम् । पञ्चमुद्राः चतुर्दशे उक्ताः स्तम्भनाद्याः । पूर्वोक्तविधिना श्रीगुरो दक्षिणामूर्ते इत्यादिना ॥ ११३ ॥

मूलन्यासादिध्यानान्तं कृत्वा पादादिबिलपर्यन्त ब्रह्मरन्ध्रान्तं व्यापकं न्यसेत् ॥ ११४ ॥

जगन्मातृकाविद्यानामैक्यं स्वात्मनि निश्चलः ।
गुरूक्तयुक्त्या देवेशि क्षणं विश्रम्य शङ्करि ॥११५॥
गुरूक्तमार्गादाधारादिष्वाराध्य च पराम्बिकाम् ।
पुष्पाण्यादायोक्तरीत्या बिन्दौ ध्यायेत् पराम्बिकाम् ॥११६॥
बिन्दौ ब्रह्मात्ममञ्चस्थकामेशाङ्कस्थितां शिवाम् ।
कुण्डलीं षट्चक्रभेदात् प्रविष्टां चन्द्रमण्डले ॥११७॥
एकीभूतां चिरं ध्यात्वा प्रकाशैकात्मकं स्मरेत् ।
त्रिपुराम्बां समुच्चार्य श्रीमहात्रिपुरा ततः ॥११८॥
सुन्दरीति पठित्वा तु महापद्मादिकं पठेत् ।
आवाह्य तामुक्तरीत्या कामेशाङ्कगतां स्मरन् ॥११९॥

---

ध्यानप्रकारमेवाह--जगदित्यादि। गुरूक्तयुक्त्या निश्चलचित्तो जगन्मातृकाविद्यानां स्वात्मन्यैक्यं ध्यायेत्। तत्प्रकारो यथा त्रिपुरार्णवे--"वाच्यानां वाचकं रूपं तत्पूर्वं प्रतिभासनात्। वाचका मातृकारूपा सा त्रिखण्डा त्रिकूटगा॥ कूटत्रयं च स्थूलादि-स्वात्मरूपं महेश्वरि।" इति। एवं ध्यायन् क्षणं विश्रम्य॥ ११५॥

आधारादिषट्चक्रेषु गुरूक्तमार्गादित्यस्यातिगोप्यत्वमुक्तम्। अत एव सूचनमात्रेण त्रिपुरार्णवे उक्तम्-"षडाधारे त्रिपीठे वा भुवनेऽध्वक्रमेऽथवा" इति। एतच्च प्राप्तसद्गुरूपासनानां सदानुष्ठीयमानत्वात् स्पष्टमेव। एतच्च प्राप्तपूर्णाभिषेकाणामेवोपदेष्टव्यम्। यत्र अन्तराराधनाख्या देहसंश्रयोऽस्तिरितित्रिपु राणवे पूर्णभिषेक लक्षणकथनात्। एतस्य सम्प्रदायानुरोधेन बहुविधत्वम्। तत्रैकः प्रकारः सौभाग्यभास्करे समयाचारतत्परेत्येतन्नामार्थैनिरूपणावसरे श्रीभास्कररायैर्निरूपितः। सौन्दर्यलहरीव्याख्याने लक्ष्मीधराचार्येरपि कतिचन प्रकारा निरूपिताः॥ ११६॥

ध्यानप्रकारमेवाह--बिन्दाविति। पञ्चब्रह्मात्ममञ्चस्थकामेशाङ्कस्थितां ध्यानोक्तरूपां ध्यात्वेति शेषः॥ ११७॥

चन्द्रमण्डलात्मकपरशिवेनैकीभूताम्। चिरं किञ्चित्कालं कुण्डलिनीं परशिवं चेत्युभयं परप्रकाशमयं स्मरेत्। प्रकृते विशेषं विधातुमत्र कुण्डलिनीमित्यादि बालाप्रकरणोक्तानुवादः। विशेषमेवाह—त्रिपुराम्बामिति। त्रिपुराम्बां चक्रेश्वरीमनुम्। श्रीमहात्रिपुरसुन्दरीति स्वरूपम्। सर्वत्र एतदेव नाम पुष्पाञ्जलितर्पणादौ योजनीयम्॥ ११८॥

महापद्मादिकं सुस्थिरा भवेत्यन्तं बालाप्रकरणोक्तरीत्या आवाह्य कामेशाङ्कगतां देवतामिति शेषः॥ ११९॥

आवाहनाद्यास्तार्तीयकूटाद्यास्तु प्रदर्शयेत् ।
मूलान्ते दीपिनीं चोक्त्वा मातृकां प्रोक्षयेत्तथा ॥१२०॥
जीवं समर्प्य प्राणानां स्थापनं च तथाचरेत् ।
अथ प्रदर्शयेन्मुद्रास्त्रयोदशविधाः शिवे ॥१२१॥
पूर्वोक्ताः संक्षोभिण्याद्याः पञ्च पश्चान्महेश्वरि ।
महाङ्कुशा खेचरी च बीजा योनिर्निरूपिता ॥१२२॥
पाशाङ्कुशधनुर्बाणास्त्रयोदश समीरिताः ।
पञ्च बाणाश्चाङ्कुशो वै खेचरी च महेश्वरि ॥१२३॥
प्रासादपरा वाग्बीजं पाशमायेऽङ्कुशद्वयम् ।
जिह्वात्वचौ बिन्दुयुते पञ्च बाणाश्च यादयः ॥१२४॥
चत्वारो वायुचरमा मुखवृत्तगतास्तथा ।
बिन्दुनापि तथा युक्तास्त्रयोदश समीरिताः ॥१२५॥

---

आवाहनाद्याः षण्मुद्राः । तार्तीयकूटं सकलह्रीं इति तत्तन्मन्त्रादौ पठित्वा प्रदर्शयेत् । मूलान्ते दीपिनीं मातृकां चोक्त्वा प्रोक्षयेत् । तथा त्रिधा शङ्खतोयेनेति प्रोक्तरीत्या ॥ १२० ॥

तथा प्रोक्तवत् संजीविन्या जीवं समर्प्य प्राणस्थापनं च चरेत् ॥ १२१ ॥

त्रयोदशविधमुद्राः संक्षोभिण्याद्याः । तासु पञ्च पूर्वोक्ता एव । तत्पश्चान्महाङ्कुशादित्रयम् । तदनन्तरं योनिः । सा च निरूपिता प्रोक्ता ॥ १२२ ॥

प्रोक्तमुद्राबीजान्याह—पञ्चबाणा इत्यादि । पञ्च बाणाः । द्रां द्रीं क्लीं ब्लूं सः । अंकुशः क्रों । खेचरी ह्स्खफ्रें ॥ १२३ ॥

प्रासादपरा ह्सौः । वाग्बीजं ऐं । पाशमाये आं ह्रीं । अङ्कुशद्वयं क्रों क्रों । जिह्वात्वचौ बिन्दुयुते धं थं । पञ्च बाणाः प्रोक्ताः ॥ १२४ ॥

यादयश्चत्वारो वान्ताः । वायुः स । मुखवृत्तं आ, बिन्दुना युक्ताः । यां रां लां वां सां इति । संक्षोभिण्यादियोन्यन्तानाम् एकैकं बीजं पाशाङ्कुशधनुषां द्वे द्वे । बाणस्य दशेति त्रयोदशबीजवर्णाः ॥ १२५ ॥

मुद्रालक्षणं प्रोच्यत इति शेषः । पूर्वोक्ताः संक्षोभिण्याद्याः । पञ्चेति प्राग् नामोद्देशः । सम्प्रति लक्षणमुच्यत इति न पुनरुक्तिः । तत्र त्रयोदशमुद्रासु आद्याः पञ्च बालाप्रकरणे ईरिताः कथिताः । पञ्चमी प्रोक्ता सर्वोन्मादिन्येव वक्रतर्जनीद्वययोगादङ्कुशा महाङ्कुशा भवेत् ॥ १२६ ॥

अथ मुद्रालक्षणं तु पञ्चाद्यास्तत्र चेरिताः ।
वक्रतर्जनिकायोगादङ्कुशा पञ्चमी भवेत् ॥१२६॥
दक्षोर्ध्वतः परीवर्त्य व्यत्यस्यानामिकाद्वयम् ।
अवष्टभ्य तु तर्जन्या मध्यमाग्रे तु योजिते ॥१२७॥
मध्ये चाङ्गुष्ठयोगेन खेचरीति निगद्यते ।
अनामिकाधृते देवि व्यत्यस्ते च कनिष्ठिके ॥१२८॥
मध्यमाग्रे च संयोज्य तर्जन्यावङ्कुशाकृती ।
अनामाग्रयुताङ्गुष्ठौ बीजमुद्रा समीरिता ॥१२९॥
योनिमुद्रा तु सैव स्याद् या पुरोक्ता विधानतः ।
दशाङ्गुष्ठान्तरेणैव तर्जन्यां वेष्टय तर्जनीम् ॥१३०॥
व्यत्यस्य वामोर्ध्वरीत्या मुष्टिपृष्ठमयोजितम् ।
वामस्कन्धे सन्निविष्टा मुद्रा पाशाभिधा भवेत् ॥१३१॥

---

दक्षोर्ध्वतः वामहस्तोपरि दक्षहस्त इति रीत्या परावर्त्य संवेष्ट्य । अनामिका-द्वयम् अनामाकनिष्ठे । व्यत्यस्य तर्जन्यावष्टभ्य । वामानामाकनिष्ठोर्ध्वस्थितं तदितरद् द्वयमिति त्रिपुरार्णवोक्त्या वामानामाकनिष्ठोर्ध्वस्थितदक्षानामाकनिष्ठे वामतर्जन्या वामानामाकनिष्ठे दक्षतर्जन्या धृत्वा मध्यमाग्रद्वयं योजितम् ॥ १२७ ॥

मध्यमयोर्मध्येऽङ्गुष्ठाग्रद्वययोगेन खेचरी । वामोर्ध्वरीत्या व्यत्यस्तकनिष्ठा-द्वयम् अनामाभ्यां धृतं दक्षोपरि स्थिता वामेत्येवं व्यत्यस्य तद्द्वयमिति त्रिपुरार्णव-वचनात् ॥ १२८ ॥

मध्यमाग्रद्वयं संयोज्य तत्पार्श्वे तर्जन्यावङ्कुशाकृती अनामाग्रे अङ्गुष्ठयो-र्योगः ॥ १२९ ॥

सैव या पुरा बालाप्रकरणे प्रोक्ता सैव । दक्षाङ्गुष्ठतर्जन्योरन्तरेण वामतर्जनीं प्रवेश्य परस्परं तर्जन्या तर्जनीमावेष्टय ॥ १३० ॥

दक्षहस्तस्योर्ध्वं वामहस्त इति रीत्या हस्तौ व्यत्यस्य । वामोर्ध्वेति स्वरूपकथन-मात्रम्, अन्यथाकरणासम्भवात् । मुष्टिद्वयं कृत्वा तत्पृष्ठद्वयमसंयोज्य । एवंविधहस्तद्वयस्य वामस्कन्धे सन्निवेशात् पाशमुद्रा ॥ १३१ ॥

दक्षस्कन्धे चाङ्कुशा स्यादुक्तरीत्या विनिर्मिता।
यथा मुष्टिगतश्चापो वामहस्तस्य मुष्टिका ॥१३२॥
अग्रे धृता समादिष्टा धनुर्मुद्रेति साधकैः।
यथा मुष्टिगतो बाणस्तथा हस्तस्य मुष्टिका ॥१३३॥
दक्षिणा हृत्समीपस्था बाणमुद्रा प्रकीर्तिता।
एतास्त्रयोदश ख्याता मुद्रा देवीप्रसादकाः ॥१३४॥
तथा पुष्पाञ्जलिं कृत्वा शतधा परितर्पयेत्।
सप्तधा वा त्रिधा वापि न तन्न्यूनं तु तर्पयेत् ॥
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥१३५॥

इति श्रीपरमानन्दतन्त्रे षोडशोल्लासः ॥१६॥

---

षष्ठोल्लासोक्तरीत्या निर्मिता दक्षस्कन्धे निवेशिता। प्रकृते अङ्कुशा। न तु संप्रत्युक्ता षष्ठी मुद्रा दक्षस्कन्धे संनिविष्टा तीर्थाह्वानाङ्कुशापरा इति त्रिपुरार्णववचनात्, एतस्या महाङ्कुशत्वाच्च। चापयुता मुष्टिरिव वाममुष्टिः ॥ १३२ ॥

अग्रे हृदयाग्रतो धृता दक्षिणा मुष्टिका हृत्समीपस्थेत्यन्वयः ॥ १३३ ॥

मुदं रातीति मुद्रा इति मुद्रापदार्थं सूचयन्नाह—देवीप्रसादका इति ॥ १३४ ॥

तथा बालाप्रकरणोक्तवत्त्रिधा। प्रागुक्तत्रिस्तर्पयेदिति स्थाने शतधा सप्तधा त्रिधा वेति विकल्पः। तन्न्यूनं त्रिवारन्यूनम्। उपसंहरति—एतदिति। सर्वं प्रश्नविषयं पूजनादिकम्। आख्यातमिति पूजोपयुक्तचक्रस्यातिदुःसाध्यस्यापि सुलभतया कथनात् आख्यातप्रायमिति भावः। अथ च परादित्रिविधपूजायां द्वयोः कथितत्वात्तृतीयस्या अप्युपक्रान्तत्वात् सर्वं पूजनं कथितप्रायमेव। त्रिविधपूजास्वरूपमुक्तं त्रिपुरार्णवे--"संघट्टमुद्रया मूर्ध्नि पादुकां प्रजपन् बुधः। आत्मानं शिवरूपं वै क्षणं ध्यायेन्निराश्रयः ॥ एषा परा सपर्योक्ता मिश्रा तु द्विविधा स्थिता। स्थूलसूक्ष्मविभेदेन स्थूलं मानसमर्चनम् ॥ सूक्ष्मं जगन्मातृमन्त्रसामरस्यात्मचिन्तनम्। बाह्योपचाररूपा तु पूजा स्यादपराभिधा ॥" इति। अथवा आ ईषत् ख्यातम्, स्थूलस्य सर्वस्यापि पूजनस्य वक्ष्यमाणत्वात् ॥ १३५ ॥

सौभाग्यानन्दसन्दोहे मालायापद्मबोधकः।
परमानन्दटिप्पण्यामुल्लासो षोडशोऽभवत् ॥ १६ ॥



## सप्तदशोल्लासः

श्रीदेव्युवाच

भैरव श्रोतुमिच्छामि क्रियां च तदनन्तराम् ।
निःसंदिग्धां सविस्तारां वद मे करुणानिधे ॥१॥

श्रीभैरव उवाच

शृणु देवि प्रवक्ष्यामि सावधानेन चेतसा ।
एवं संतर्प्य देवेशीं पूजयेदुपचारकैः ॥२॥
यथाविभवतो देवि लोभालस्यविवर्जितः ।
तद्विशेषं प्रवक्ष्यामि भूषणान्ते महेश्वरि ॥३॥
कामेश्वराङ्कोपवेशं कल्पयेत् परमेश्वरि ।
नैवेद्यमन्त्रेण कामधेनुं मूले निवेशयेत् ॥४॥
ताम्बूलान्तं तु संपूज्य कामबीजं पठन्नमेत् ।
एतदन्तं चोपचर्य पूजयेदावृतिं ततः ॥५॥

---

पूजाशेषं प्रष्टुं देव्युवाचेति । तदनन्तरां शतधा तर्पणानन्तराम् ॥ १ ॥

उत्तरं भैरव उवाचेति । एवं शतधा सप्तधा वेत्याद्युक्तरीत्या उपचारकैः चतुःषष्ट्यादिभिः ॥ २ ॥

विभवः सामर्थ्यं तदनतिक्रम्य । द्रव्यव्ययेन संपादनीये लोभः, शरीरपरिश्रमेण संपादनीये आलस्यम्, लोभमालस्यं च त्यक्त्वा स्वसामर्थ्यानुरोधेनोपचारैः पूजयेदिति भावः । तद्विशेषम् उपचारे पूर्वोक्ताद्विशेषम् ॥ ३ ॥

भूषणोपचारान्ते यागमण्डपप्रवेशनं कृत्वा पीठोपरि निवेशनस्थाने कामेश्वराङ्कोपवेशं कल्पयेत् । अन्यथा यागमण्डपप्रवेशोपचारलोपापत्तिः । नैवेद्यस्य मूलाभिमन्त्रणस्थाने कुलकामधेनुमन्त्रस्य पञ्चदशे शाम्भवविद्यान्यासप्रोक्तस्य निवेशः ॥ ४ ॥

ताम्बूलान्तं संपूज्य उपचर्य कामबीजं क्लीं । बालाप्रकरणवत् संपूर्णोपचारान्ते प्राप्तामावरणपूजामपवदितुमाह—एतदिति । एतदन्तं ताम्बूलान्तम् ॥ ५ ॥

संविन्मये परे देवि परामृतचरुप्रिये ।
अनुज्ञां त्रिपुरे देहि परिवारार्चनाय मे ॥६॥
इत्यनुज्ञां तु संप्रार्थ्य पूजयेदावृतिं ततः ।
श्रीपात्रान्मूलदेवीं तु त्रिबिन्दौ तर्पयेच्छिवे ॥७॥
आवृतेर्देवताः सर्वा मूलदेव्यास्तु संमुखाः ।
स्वात्माभेदमया ध्यात्वा तर्पयेत् परमेश्वरि ॥८॥
ततस्तु तिथिनित्यां च दिननित्यां प्रपूजयेत् ।
मूलदेव्या महेशानि तद्विधानमिहोच्यते ॥९॥
प्रतिपत्तिथिमारभ्य पूर्णिमान्तं महेश्वरि ।
कामेश्वर्यादिचित्रान्ताः कृष्णे स्यात्तु विलोमतः ॥१०॥
क्षये द्वयं तथा वृद्धावेकां ज्ञात्वा क्रमाद्यजेत् ।
इयं तु तिथिनित्या स्यादष्टाङ्गाद्दिननित्यका ॥११॥
तत्तन्मन्त्रेण देवेशि पूजयेत् तर्पयेदपि ।
सर्वत्र बिन्दौ देवीं तु श्रीपात्रेणैव तर्पयेत् ॥१२॥

---

तत्रादौ प्रार्थनमाह--संविन्मये इति । परामृतं संस्कृतं प्रथमम् । चरु तथाविधं द्वितीयादि ॥ ६ ॥

त्रिमूलदेवीतर्पणं मूलेन, "मध्यबीजे मूलदेवीं मूलेन तु त्रिधा यजेत्" इति सप्तमोक्तेः ॥ ७ ॥

आवरणदेवताः स्वात्मनोऽभेदमया अभेदप्रचुराः, भेदस्य वाचारम्भणमात्र-विषयत्वात् ॥ ८ ॥

ततः त्रिमूलदेवीतर्पणानन्तरम् । तद्विधानं तिथिनित्यादिननित्ययोः पूजन-प्रकारम् ॥ ९ ॥

पूर्णिमान्तमित्यनेन शुक्लपक्षे इति सिद्धम् । कृष्णे पक्षे विलोमतः चित्रादिकामेश्वर्यन्तम् । प्रतिपदाद्यमान्तमित्याक्षिप्तम् ॥ १० ॥

तिथिक्षये एकस्मिन् दिने नित्याद्वयम् । वृद्धौ दिनद्वये एका नित्या । एतत्स्पष्ट-मुक्तं त्रिपुरार्णवे—"उदयव्याप्तितिथिजां तिथिनित्यां प्रपूजयेत् । क्षये नित्याद्वयं वृद्धावेकां नित्यां दिनद्वये ॥" इति । अष्टाङ्गक्रमात् प्राप्ता दिननित्या ॥११॥

तत्तन्मन्त्रेण नित्यापारायणोक्ततत्तन्नित्यामन्त्रेण । सर्वत्र आवरणान्तर्गते अन्यत्र

अन्यत्रादाय दर्व्या तु तर्पयेदावृतिं क्रमात् ।
मध्यत्रिकोणे देवेशि अग्राद्वामेन वै क्रमात् ॥१३॥
पञ्चकं प्रतिरेखायां कोणाग्राणि परित्यजन् ।
मूलदेव्या समा ध्यात्वा दर्व्या श्रीपात्रतो यजेत् ॥१४॥
कामेश्वर्यादिकाः शुक्ले वामावर्तेन वै क्रमात् ।
दक्षावर्तेनैवमेव कृष्णे चित्रादिकाः क्रमात् ॥१५॥
षोडशीं मूलदेव्यां तु तद्वत् सप्तदशीमपि ।
नित्यामण्डलमिष्ट्वैवं मूलदेवीं त्रिधाऽर्चयेत् ॥१६॥
त्रिकोणात् पूर्वदेशे तु तिर्यग्रेखात्रयं स्मरेत् ।
ओघत्रयं गुरोः पात्राद् गुरूनपि तु तर्पयेत् ॥१७॥
प्रत्यग्रेखां समारभ्य पूर्वरेखावसानकम् ।
दक्षाद्युत्तरपर्यन्तं यजेदोघं त्रयं शिवे ॥१८॥

---

च । बिन्दौ देवीं श्रीपात्रेणैवेत्यनेन बिन्दौ नवमचक्रेश्वर्यादीनां दीक्षादावग्नौ मूलदेव्याश्च न श्रीपात्रेण तर्पणमिति फलितम् ॥१२॥

अन्यत्र मूलदेव्यतिरिक्ते । बिन्दुचक्रातिरिक्ते मूलदेव्यां च । दर्व्या उद्धरणपात्रेण । एवं तत्तद्दिनोत्थतिथिदिननित्ययोः पूजनमुक्त्वा नित्यामण्डलपूजनं वक्तुमाह—मध्येति ॥१३॥

मध्यत्रिकोणस्य अष्टमचक्रस्य रेखात्रयम् । तत्र प्रतिरेखायां नित्यानां मध्ये पञ्चकं पञ्चकं मूलदेव्या समानाकारं ध्यात्वा श्रीपात्राद्दर्व्या आदाय यजेत् । कोणाग्राणि परित्यजन् वा वामेनेत्यनेन दक्षिणरेखाग्राद्युत्तररेखाग्रान्तमिति फलितम् ॥१४॥

शुक्लपक्षे वामावर्तेन कामेश्वर्याद्याः कृष्णपक्षे दक्षावर्तेन चित्रादिकाः कामेश्वर्यन्ताः । तत्तन्मन्त्रेणेत्यनुवर्त्य यजेदिति योजयेत् । एवमेव प्रतिरेखायां पञ्चकमित्यादि ॥१५॥

तद्वद् मूलदेव्यां तर्पयेदर्चयेदित्यादिकं प्रागुक्तचतुर्दशाक्षर्या पूजातर्पणयोर्बाधकम् ।१६॥

त्रिकोणाद् बहिः पूर्वदेशेऽष्टकोणस्य पूर्वत्रिकोणात् पश्चिमतः, "विमलाजयिनीमध्ये पूजयेद् गुरुमण्डलम्" इति दक्षिणामूर्तिसंहितोक्तेः । तत्रत्यचतुरस्रात्मके क्षेत्रे तत्र तर्पयेत् । गुरून् स्वगुर्वादीन् ॥१७॥

प्रत्यग्रेखा पश्चिमरेखा । पश्चिमरेखादिरेखात्रये एकैकरेखायां दक्षाद्युत्तरान्तमेकैकमोघं यजेत् ॥१८॥

शुद्धस्फटिकसंकाशान् पद्मासीनान् त्रिलोचनान् ।
चित्पुस्तकाभयवरकरान् ध्यात्वाऽर्चयेत् क्रमात् ॥१६॥
स्वात्मीकारोक्तविधिना समष्टचौघत्रयं यजेत् ।
परप्रकाशश्च परशिवः शक्तिः परादिका: ॥२०॥
कौलेश्वराश्च शुक्लाद्या देवी चाथ कुलेश्वरः ।
कामेश्वरी चेति देवि दिव्यौघः परिकीर्तितः ॥२१॥
भोगः क्लिन्नश्च समयः सहजश्च ततः परम् ।
सिद्धौघो गगनो विश्वो विमलो मदनस्तथा ॥२२॥
भुवनश्च तथा लीलः स्वात्मा च प्रिय एव च ।
मानवौघ इति प्रोक्तः कामराजौघ ईरितः ॥२३॥
आनन्दनाथशब्दान्ताश्चाम्बान्तास्तु स्त्रियः स्मृताः ।
मुनिवेदेभसंख्याताश्चतुस्तारं तथादितः ॥२४॥
लोपामुद्राख्यविद्याया ओघत्रयमथो शृणु ।
परप्रकाशश्च परा शक्तिः कामेश्वरी ततः ॥२५॥

---

ओघादिगुरूणां ध्यानमाह—शुद्धेत्यादि । दक्षोर्ध्वाद्यधःपर्यन्तमायुधानि ॥१६॥

त्रयोदशे स्वात्मीकारप्रकरणे दिव्यौघेभ्यः पराख्येभ्य इत्याद्युक्तविधिना तत्तदोघतर्पणादौ तत्तदोघं समष्ट्या यजेत् । अत्र यजनं पुष्पाञ्जलिनैव, "इति पुष्पाञ्जलिं दत्वा" इति तत्रैवोक्तत्वात् । ओघान्तर्गतानां नामान्याह—परप्रकाशेत्यादि । परादिका शक्तिः पराशक्तिः ॥२०॥

शुक्ला देवी इति कामेश्वर्यन्तम् ॥२१॥

ततः परं सहज इति सिद्धौघः ॥२२॥

इति प्रियान्तमिति त्रयं कामराजविद्यौघः ॥२३॥

परिशेषात् पुरुषा आनन्दनाथशब्दान्ताः, "आनन्दनाथशब्दान्ताः पुरुषाः परिकीर्तिताः" इति दक्षिणामूर्तिसंहितावचने तु स्पष्टमेवोक्तम् । एतच्च, "आनन्दनाथशब्दान्ता अम्बान्ताश्चापि शक्तयः" इति प्रागुक्तस्यानुवादः । परप्रकाशानन्दनाथः पराशक्त्यम्बेत्यादि । मुनि सप्त, वेद चत्वारः, इभ अष्टौ । सर्वत्र नामादौ चतुस्तारम् ॥२४–२५॥

वज्रेश्वरी च भगमालिनी लोपादिमुद्रका ।
अगस्त्य इति दिव्यौघः कुलो धर्मादिचार्यकः ॥२६॥
मुक्तकेशीश्वरी दीपकलः सिद्धौघ ईरितः ।
विष्णुदेवो मातृगुप्तस्तेजोदेवस्ततः परः ॥२७॥
ओजोदेवो मनोजयः परमः स्वात्म एव च ।
ज्ञानश्च मानवौघोऽयं लोपामुद्रौघ ईरितः ॥२८॥
पराप्रासादौघमथो शृणु देवि समाहिता ।
परमाच्छिव आद्यः स्यात् ततः कामेश्वरी स्मृता ॥२९॥
दिव्यौघश्च महौघश्च सर्वः प्रज्ञादिदेविका ।
प्रकाशश्चेति दिव्यौघो दिव्यश्चित्रस्ततः परम् ॥३०॥
कैवल्यश्चाथ तत्पश्चान्महोदय इति स्मृतः ।
सिद्धौघश्चाथ चिद्विश्वशक्तिश्चाथ रमस्तथा ॥३१॥
कमलश्च परस्तद्वन्मनोहर इति स्मृतः ।
स्वात्मः प्रतिभ इत्येवं मानवौघः समीरितः ॥३२॥
पराविद्यौघमपि ते कथयामि महेश्वरि ।
पराभट्टारिका चाघोरः श्रीकण्ठस्ततः परम् ॥३३॥
अथ शक्तिधरः क्रोधीशश्च त्र्यम्बक एव च ।
पराभट्टारकश्चेति दिव्यौघः संप्रकीर्तितः ॥३४॥
प्रतिभश्चाथ वीरो वै संविदः संविदेव च ।
सिद्धौघ इति विख्यातः सदाशिवमहेश्वरौ ॥३५॥

---

लोपामुद्रा धर्माचार्यः ॥२६-२८॥

परमशिवः ॥२९॥

प्रज्ञा देवी ॥३०॥

चिद् विश्वशक्तिरिति द्वयं नाथान्तमेव, चिदाद्यष्टाविति योगिनीतन्त्रवचनाच्चिद् विश्वशक्तिरिति च पुरुष एव ॥३१-३४॥

संवित् शक्तिः, अम्बा संविच्चतुष्टयमिति योगिनीतन्त्रात्, संविच्छब्दस्य स्त्रीलिङ्गत्वाच्च, "अम्बान्ता गुरवो देवि स्त्रीलिङ्गाः परमेश्वरि" इति दक्षिणामूर्तिसंहितोक्तेः ॥३५॥

संविच्छ्रीविद्यकः संवित् ततः श्रीमदनुत्तरः ।
योगश्च संविदित्येवं मानवौघः समीरितः ॥३६॥
परौघश्चेति संप्रोक्तो मूलमादौ तु सर्वतः ॥
इत्येवं देवि संप्रोक्तः सम्प्रदायविभेदतः ।
ज्ञात्वा स्वस्वीयविद्यौघं पूजयेत् परमेश्वरि ॥३७॥

देव्युवाच

भैरवैतत् त्वदुक्तं मे संदेहोऽत्र महानभूत् ।
चातुर्विध्ये च को हेतुस्तं वदस्व महेश्वर ॥३८॥

भैरव उवाच

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
गुह्याद् गुह्यतमं देवि न क्वापि कथितं मया ॥३९॥
आकाशात् पतितं तोयं यथा गच्छति सागरम् ।
स्खलितं तु पदं यद्वद् भुवमेवानुगच्छति ॥४०॥
तथैवाभ्यर्हणं देवि शिवं गच्छति सर्वतः ।
अज्ञानेन विमूढोऽयं जनः क्लिश्यति सर्वदा ॥४१॥

---

संवित् श्रीविद्या इति द्वयम् ॥३६॥

परौघे सर्वत्रादौ मूलं परामूलं सौः इति, "परौघे तन्मूलयोगः" इति योगिनीतन्त्रात् । कामराजविद्यादिसम्प्रदायभेदतः ओघश्चतुर्धा प्रोक्तः । स्वोपास्यौघं स्वयं पूजयेत् । षट्चरणः श्लोकः ॥३७॥

ओघभेदकारणं प्रष्टुं देव्युवाचेति । एतद् ओघचतुष्टयम् । त्वया उक्तम् । चातुर्विध्ये को हेतुरिति सन्देहः । चातुर्विध्ये हेतुम् ॥३८॥

उत्तरं भैरव उवाचेति । यत्परिपृच्छसि तत्प्रवक्ष्यामि । गुह्यतमत्वादेव न क्वापि कथितम् ॥३९॥

ओघस्य चातुर्विध्यं मूलदेव्या मन्त्रमय्याश्चातुर्विध्यप्रयुक्तमिति वक्तुं तदादौ मूलदेवीं परशिवशक्तित्वेन वर्णनाय प्रसङ्गात् परशिवं स्तौति—आकाशादित्यादि ॥४०॥

अभ्यर्हणं पूजनम् । सर्वतः सर्वत्र विष्ण्वादावपि कृतं पूजनमित्यर्थः । तर्हि किमिति देवतान्तराराधनाय जनः क्लिश्यतीति चेदाह—अज्ञानेनेति ॥४१॥

ज्ञानयुक्तस्तु देवेशि सर्वक्लेशाद्विमुच्यते ।
यो यो यं यं यथा येन यत्कामाय यदैव तु ॥४२॥

पूजयत्यखिलं देवस्तत्तद्रूपमयः शिवः ।
तस्मै तथार्चितस्तेन तदा कामान् ददाति वै ॥४३॥

तमेव ज्ञानयोगेन समर्च्य जगदीश्वरम् ।
अक्षयं लभते विद्वान् सुखं साहजिकं नरः ॥४४॥

तस्यैषा सुन्दरी शक्तिः राधा विश्वेश्वरी शिवा ।
चतुर्धा मन्त्ररूपेण स्थिता शम्भोर्मुखे सदा ॥४५॥

आद्ये कृतयुगे देवि परा विद्या प्रचारिता ।
परमेण तदा तां तु सर्वे लोका उपासते ॥४६॥

उत्तमत्वात् परा प्रोक्ता ततस्त्रेतायुगे शिवे ।
पराप्रसादविद्या तु प्रसृता परमेशितुः ॥४७॥

---

एवंविधो द्वितीयपरशिवज्ञानवांस्तु यो य उपासको यं यमुपास्यं यथा सात्त्विकाद्युपासनया । येन साधनेन कामः फलं यदा यस्मिन् काले । ॥४२॥

तत्पूजनमखिलं तत्तदुपास्यरूपात्मकः शिवः, स्वीकृत्येति शेषः । तस्मै उपासकाय तेन साधनेन तथार्चितः सन् तदा तत्कर्मपरिपाकोत्तरं तं कामं ददाति । एतदेव श्रीमद्भगवतापि गीतम् - "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥" इति, "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इति च ॥४३॥

तमेव निरुक्तं परमशिवमेव ज्ञानयोगेन निरुक्ताद्वितीयात्मज्ञानात्मकोपायेन समर्च्य साहजिकम् अकृत्रिमम् अक्षयं सुखं मोक्षम् ॥४४॥

एषा, यस्या ओघश्चतुर्धा कथितः, चतुर्धा मन्त्ररूपेण मन्त्रचतुष्टयरूपेणेति भावः । सदा सर्वयुगादौ ॥४५॥

चतुर्षु युगेष्वाद्ये कृतयुगे परमेण शिवेन प्रचारिता परा विद्या ऊर्ध्वाम्नाये द्वितीया एकाक्षरी ॥४६॥

नाम्नोऽन्वर्थतामाह—उत्तमत्वादिति । पराप्रसादविद्या ऊर्ध्वाम्नायाद्या द्व्यक्षरी । परमेशितुः परमेश्वरात् ॥४७॥

द्वापरे हादिविद्यापि सौभाग्या तु कलौ युगे।
कृत्वा परप्रसादं तु तदा तस्माद् ददौ शिवः ॥४८॥
प्रोक्ता परप्रसादेति लोपामुद्राप्रसादतः।
इयं कामेन देवेशि प्राप्ता सौभाग्यकाङ्क्षया ॥४९॥
तेन सौभाग्यविद्येति प्रोच्यते परमेश्वरि।
एवं चतुर्विधा विद्या देवता तु परैव हि ॥५०॥
ललितेति पुरा प्रोक्ता सर्वत्रैका भवेदियम्।
इष्ट्वैवमौघत्रितयमन्त्यरेखान्त्यभागके ॥५१॥
शिवादिगुरुपर्यन्तं नव वा त्रयमेव वा।
त्रयं तु परमेष्ठ्यादि तत्तन्मन्त्रेण तर्पयेत् ॥५२॥
रेखात्रयं महातेजोमयं ध्यात्वा महेश्वरि।
श्रीपादुकां तर्पयेद् वै गुरुनामयुतां शिवे ॥५३॥
ओघत्रये च नामादौ पठेद् बालाद्यबीजकम्।
अथ दर्व्या समादाय श्रीपात्रादावृतिं यजेत् ॥५४॥

---

शिवः परप्रसादं कृत्वा तदा त्रेतादौ उपासकेभ्यो ददौ। तस्मात् परप्रसादेति प्रोक्तेत्यन्वयः ॥४८॥

शिवप्रसादतो लोपामुद्रा हादिविद्यां प्राप्तवती। अतः सा लोपामुद्राविद्येति शेषः। इयं प्रकृता सौभाग्यविद्या ॥४९॥

एवम् उक्तरीत्या। विद्यायाश्चातुर्विध्येऽपि देवतैक्यमाह—देवता त्विति ॥५०॥

का सा देवतेति चेदाह—ललितेति। पुरा तृतीयोल्लासे। सर्वत्र प्रोक्तविद्याचतुष्टयेऽपि। इयमेकैव देवता भवेत्। अन्त्यरेखा पूर्वरेखा, तस्या अन्त्यभागके उत्तरप्रान्ते ॥५१॥

ज्ञाते शिवादिस्वगुरुपर्यन्तम्। नव वा। तावदज्ञाने नवमगुरुमारभ्य स्वगुर्वन्तम्। तावतामप्यज्ञाने परमेष्ठिगुर्वादित्रयम्। एतदुक्तं त्रिपुरार्णवे—'शिवादींस्तर्पयेज्ज्ञाते नवमाद्यानथापि वा'' इति। त्रयतर्पणे गुर्वादित्रिगुरून् यजेदिति बालाप्रकरणोक्तमपवदितुमाह—त्रयं त्विति। पक्षत्रयेऽपि। परमेष्ठ्यादितर्पणं तत्तन्मन्त्रेणेति ज्ञेयम् ॥५२॥

श्रीपादुकां महापादुकाम्। चतुर्दशाक्षर्यादौ गुरुनामयुताम् ॥५३॥

ओघत्रयान्तर्गतनामादौ बालाद्यं ऐं। नित्याशेषनिवृत्तये पुनर्दर्व्यादानम् ॥५४॥

त्रिकोणाद् बाह्यतो बीजैः षडङ्गयुवतीर्यजेत् ।
अग्नीशासुरवायव्यपुरतो दिक्षु च क्रमात् ॥५५॥
सर्वज्ञा नित्यतृप्तिश्चानादिबोधा स्वतन्त्रका ।
तथा नित्यमलुप्ता चानन्तेत्यादौ क्रमात् पठेत् ॥५६॥
हृदयाच्छक्तिरित्यादेस्ततो देवीं त्रिधा यजेत् ।
समष्टियोगिनीविद्यां मूलान्ते प्रपठन् शिवे ॥५७॥
दत्त्वा पुष्पाञ्जलिं पश्चादावृतिं क्रमतोऽर्चयेत् ।
अणिमां लघिमां पश्चान्महिमामीशितां तथा ॥५८॥
वशित्वं प्राकाम्यभुक्तिमिच्छां प्राप्तिं ततः परम् ।
सर्वकामं च सिध्यादावाद्यबीजस्य योगतः ॥५९॥
भूपुरे चाद्यरेखायां द्वारे दक्षिणभागके ।
पश्चिमादिचतुर्दिक्षु कोणेष्वपि च मारुतात् ॥६०॥
प्रत्यङ्‌निर्ऋतिमध्ये च पूर्वेशानदिशोरपि ।
मध्ये त्वेवं दिक्षु दश क्रमात् पूज्या महेश्वरि ॥६१॥

---

अङ्गयुवतीरङ्गदेवताः । बीजैः बालाबीजद्विरावृत्त्या, पुरतश्चतुर्दिक्षु इति बाला-प्रकरणोक्तेः । दिक्षु प्रागादिचतुर्दिक्षु ॥५५॥

स्वतन्त्रा, हृदयाच्छक्तिरित्यादेरादौ पठेदित्यन्वयः ॥५६॥

आदिना शिरःशक्ति शिखाशक्तीत्यादि । एव च ऐं सर्वज्ञा हृदयशक्तिः क्लीं नित्यतृप्ता शिरःशक्तीत्यादिसंग्रहः । ततः अङ्गदेवतापूजानन्तरम् । मूलदेवीं त्रिधा । समष्टियोगिनीविद्या त्रयोदशे प्रोक्ता ॥५७॥

तत्रादौ प्रथमावरणदेवतानामान्याह – अणिमामित्यादि । ईशितामीशित्वम् । तथैव त्रिपुरार्णवाद्यखिलतन्त्रेषु मालामन्त्रे च पाठात् ॥५८॥

अणिमादिसर्वकामान्तदशकमाद्यबीजयुक्तं सिध्यादौ अं अणिमासिद्धिः, लं लघिमासिद्धीत्यादि ॥५९॥

एतासां स्थानमाह—भूपुरे इत्यादि । भूपुरे आद्यरेखायां यजेदिति शेषः । पश्चिमादिचतुर्दिक्षु चतुर्द्वारे दक्षिणभागे । अत्र द्वाराणां बाह्याभिमुखत्वेन तेषां दक्षभागो ग्राह्यः । न तु दक्षिणा दिक्, दक्षिणोदग्द्वारयोरसंभवात्, ब्राह्म्यादिपूजने वामभाग-निरूपणाच्च । मारुताद् वायव्यात् कोणेषु ॥६०॥

पश्चिमनैर्ऋत्ययोः पूर्वेशानयोर्मध्ये चेति स्थानदशकम् । एवं दशदिक्षु दशाणि-

ब्राह्मीं माहेश्वरीं तद्वत् कौमारीं वैष्णवीमपि ।
वाराहीमपि माहेन्द्रीं चामुण्डामपि च क्रमात् ॥६२॥
महालक्ष्मीमपि तथाऽष्टदिक्ष्वपि च पूर्ववत् ।
द्वारेषु वामभागे च मध्यरेखाचतुष्टये ॥६३॥
संक्षोभिणीं द्राविणीं वाकर्षिणीं च वशङ्करीम् ।
उन्मादिनीं चाङ्कुशां च त्रिखण्डामपि बीजकाम् ॥६४॥
खेचरीं योनिमपि च पूर्ववत् तु प्रपूजयेत् ।
रेखायां तु तृतीयस्यां मध्ये द्वारेषु पूजयेत् ॥६५॥
दीर्घस्वरांस्तु ब्राह्म्यादौ मुद्रान्ते बीजमादितः ।
सर्वसंक्षोभिणीत्यादि सर्वं सर्वत्र योजयेत् ॥६६॥
कामं बुद्धिमहङ्कारं शब्दं स्पर्शं च रूपकम् ।
रसं गन्धं चित्तधैर्यौ स्मृतिं नाम च बीजकम् ॥६७॥
आत्मामृते शरीरं चाकर्षिण्यादौ निवेशितम् ।
पश्चिमाद्यपसव्येन कलापत्रेऽर्पयेत् क्रमात् ॥६८॥

---

माद्याः पूज्याः ॥६१-६२॥

ब्राह्म्यादिमहालक्ष्म्यन्ताष्टकं पूर्ववत् पश्चिमादिक्रमेणाष्टदिक्षु भूपुरमध्यरेखाचतुष्टये द्वारेषु वामभागे प्रपूजयेदित्यन्वयः ॥६३॥

द्राविणी विद्राविणी । अङ्कुशा महाङ्कुशा । संक्षोभिणी विद्राविणीति महाङ्कुशा खेचरी चेति षष्ठषोडशोक्तेः । बीजाम् ॥६४॥

पूर्ववत् अणिमादिवत् । तृतीयरेखायां द्वारेषु मध्ये पूजयेत् ॥६५॥

दीर्घस्वरान् आं ईं इत्याद्यष्टौ । संक्षोभिण्यादीनामन्ते मुद्रां तत्तन्मुद्राबीजमादितः । सर्वसंक्षोभिणीत्यादिरीत्या सर्वपदं सर्वत्र मुद्रासु योजयेत् । आं ब्राह्मी० । द्रां सर्वसंक्षोभिणीमुद्रेत्यादि प्रयोगः । मुद्राबीजानि षोडशे प्रोक्तानि ॥६६॥

चित्तं धैर्यम् इति द्वयम् ॥६७॥

आत्मममृतमिति द्वयम् । कामादिशरीरान्तषोडशकम् आकर्षिणीत्यस्यादौ । रूपकं बीजकमित्यादौ पादपूरणार्थः ककारः । पश्चिमदलादि कलापत्रे षोडशपत्रे ॥६८॥

नित्याकलान्ताः प्रत्येकं स्वरवर्णमुखाः शिवे ।
कुसुमां मेखलां तद्वन्मदनां मदनातुराम् ॥६९॥
रेखां च वेगिनीं तद्वदङ्कुशां मालिनीमपि ।
अनङ्गाद्याः कादिवर्गाष्टकयुक्ता यजेच्छिवे ॥७०॥
पूर्वादिदिग्दले पश्चादाग्नेयात् कोणसंस्थिते ।
एवमष्टदले पश्चान्मनुकोणे प्रपूजयेत् ॥७१॥
संक्षोभिणीविद्राविण्याकर्षिण्याह्लादिनीस्तथा ।
संमोहिनीं स्तम्भिनीं च जृम्भिणीं च वशङ्करीम् ॥७२॥
रञ्जिनीमुन्मादिनीं च तथार्थात् साधिनीमपि ।
सम्पत्तिपूरिणीं मन्त्रमयीं द्वन्द्वक्षयङ्करीम् ॥७३॥
कादिढान्तयुता वामात् सर्वाद्याः शक्तयोऽग्रतः ।
सिद्धिप्रदां तथा सम्पत्प्रदां चैव प्रियङ्करीम् ॥७४॥
मङ्गलात्कारिणीं कामप्रदां दुःखविमोचिनीम् ।
मृत्युप्रशमनीं तद्वद्विघ्नादपि विनाशिनीम् ॥७५॥
अङ्गाच्च सुन्दरीं तद्वत् सौभाग्यदायिनीमपि ।
पश्चिमादपसव्येन देव्यन्तास्तु समर्चयेत् ॥७६॥

---

नित्याकलेति प्रत्येकनामान्ते । स्वस्वर्णमुखाः स्वराद्याः अं कामाकर्षिणी नित्याकलेत्यादि ॥६९॥

कुसुमादिमालिन्यन्ता अष्टौ अनङ्गपदाद्या मातृकाध्यानोक्तरीत्या कादिवर्गाष्टकयुक्ताः ॥७०॥

कोणसंस्थिते दले अष्टदले यजेत् । कं० अनङ्गकुसुमेत्यादि ॥७१॥

संक्षोभिण्यादिचतुर्णां द्वन्द्वः ॥७२॥

अर्थसाधिनीम् ॥७३॥

संक्षोभिणीत्यादि द्वन्द्वक्षयङ्करीत्यन्ताश्चतुर्दश कादिढान्ताक्षरयुताः सर्वपदाद्याः शक्तयः शक्त्यन्ताः कं सर्वसंक्षोभिणीशक्तीत्यादि । अग्रतः अग्रकोणमारभ्य वामात् वामावर्तेन ॥७४॥

मङ्गलकारिणीं विघ्नविनाशिनीम् ॥७५॥

अङ्गसुन्दरीं पश्चिमकोणादि ॥७६॥

णादिभान्तार्णसंयुक्ताः सर्वाद्याश्च महेश्वरि ।
ज्ञां शक्तिमैश्वर्यतस्तु प्रदायिनीमतः परम् ॥७७॥
तथा ज्ञानमयीं पश्चाद् व्याधितस्तु विनाशिनीम् ।
आधाराच्च स्वरूपां वै तथा पापहरामपि ॥७८॥
तथानन्दमयीं रक्षास्वरूपिणीमपीश्वरि ।
ईप्सिताच्च प्रदां चान्ते देव्यन्तास्तु समर्चयेत् ॥७९॥
पश्चिमाद्यपसव्येन मादिकक्षान्तयोगतः ।
सर्वाद्यास्त्वष्टकोणे तु यजेद् वाग्देवताष्टकम् ॥८०॥
न्यासोक्तमनुनामभ्यां मातृकावर्गयोगतः ।
वायव्यादीशपर्यन्त त्रिकोणस्य बहिस्ततः ॥८१॥
चतुष्टये तु कोणानामायुधानि यजेच्छिवे ।
बाणान् चापं पाशमपि चाङ्कुशं क्रमतोऽर्चयेत् ॥८२॥
कामेश्वरात्तथा कामेश्वरी बाणाच्च देवता ।
बाणस्थाने तु चापादिसर्वान्ते जम्भनेति च ॥८३॥
मोहनेति वशी पश्चात् करेति स्तम्भनेति च ।
आदौ पूर्वोक्तबीजानां योगः स्यात् परमेश्वरि ॥८४॥

---

णं सर्वसिद्धिप्रदा देवीत्यादि । ऐश्वर्यप्रदायिनीम् ॥७७॥

व्याधिविनाशिनीम् आधारस्वरूपाम् ॥७८॥

ईप्सितप्रदाम् । ज्ञा इत्याद्या दश अन्ते देवीपदेन युक्ताः ॥७९॥

पश्चिमकोणादि मादिहान्ता नव कक्षेति द्वयमेकत्र सर्वपदाद्याः मं सर्वज्ञा देवीत्यादि ॥८०॥

पञ्चदशोक्तवाग्देवतान्यासोक्तमन्त्रनाममातृकावर्गयोगात् । त्रिकोणस्य बहिर्वाय-व्यादीशपर्यन्तं कोणानां चतुष्टये अर्थादपसव्येनायुधानि यजेदित्यन्वयः ॥८१॥

आयुधान्येवाह—बाणानित्यादि ॥८२॥

तन्मन्त्रमाह – कामेश्वरादित्यादि । कामेश्वर कामेश्वरी बाणदेवता इति स्वरूपम् । द्वितीयादमन्त्रे बाणस्थाने चापादिपदं योजयेत् । सर्वपदान्ते जम्भन ॥८३॥

मोहन-वशीकर-स्तम्भनेति कामेश्वरेत्यस्यादौ । पुनः सर्वेत्यस्यादौ बाणादि-

पश्चिमाद्यपसव्येन त्रिकोणेषु समर्चयेत् ।
बिन्दौ च कामेश्वर्यादिन्यासोक्तमनुना शिवे ॥८५॥
तत्तदावरणानां तु समष्ट्यादौ समर्चयेत् ।
त्रैलोक्यमोहनं देवि सर्वाशापरिपूरकम् ॥८६॥
सर्वसंक्षोभणं सर्वसौभाग्यदायकं तथा ।
सर्वार्थसाधकं सर्वरक्षाकरमतः परम् ॥८७॥
सर्वरोगहरं पश्चात् सर्वसिद्धिपदं तथा ।
सर्वानन्दमयं चान्ते चक्राय हृदयं वदेत् ॥८८॥
आदौ चक्रेश्वरीमन्त्रान् योजयेत् त्रिपुरामुखान् ।
पुष्पाञ्जलिं प्रदायेत्थं चतुरस्रे त्रिधा पुनः ॥८९॥
चतुरस्राद्यरेखायै हृदयं चैव मेऽवतु ।
मध्यरेखां तथा चान्तश्चतुरस्रात्मिकां तथा ॥९०॥
शुक्लात्मकाद्यरेखायां रक्तवर्णेन्दुशेखराः ।
पद्मद्वयं तथा पाशमङ्कुशं चापि बिभ्रतीः ॥९१॥

---

प्रोक्तमुद्राबीजयोगः स्यात् । यथा द्रां द्रीं सां सर्वजम्भनकामेश्वरकामेश्वरीबाणदेवता इत्यादि ॥८४॥

पश्चिमकोणादि त्रिकोणस्य त्रिसंख्याककोणेषु । न्यासोक्तमनुना । ऐं क ४ अग्निचक्रे इत्यादि ॥८५॥

तत्तदावरणानामादौ । तन्नामान्याह—त्रैलोक्येत्यादि ॥८६–८७॥

त्रैलोक्यमोहनमित्यादि सर्वानन्दमयमित्यन्तानां नवानामन्ते । हृदयं नमः । अत्र पूजामन्त्रं वक्तुं त्रैलोक्यमोहनेत्यादिनाम्नां चतुर्दशोक्तानामनुवादः ॥८८॥

तेषामेवादौ चक्रेश्वरीमन्त्रान् चतुर्दशोक्तान् । चतुर्दशोक्तक्रमबाधनाय त्रिपुरामुखानिति। इत्थं अं आं सौः त्रैलोक्यमोहनचक्राय नम इत्यादि। एवं चतुरस्रत्रये समष्ट्या पुष्पाञ्जलिं प्रदाय पुनर्व्यष्ट्या त्रिधा पुष्पाञ्जलिं दद्यात् ॥८९॥

तत्र मन्त्रानाह—चतुरस्रेत्यादि । चतुरस्राद्यरेखायै नमः । इति पुष्पाञ्जलिं दत्त्वा अणिमाद्याः संतर्प्य । एवमेव मध्यरेखामन्तश्चतुरस्ररेखां च संपूज्यावृत्तिं यजेत् "तत्तद्रेखां समभ्यर्च्य चाणिमाद्याः प्रपूजयेत्" इति त्रिपुरार्णवात् ॥९०॥

तत्र चक्राणामावरणदेवतानां च ध्यानमाह—शुक्लेत्यादि । अत्र सर्वत्र

रक्तद्वितीयरेखायां नीलाङ्गा नीलभूषणाः ।
कपालयुग्मकं रक्तोत्पलयुग्मं च बिभ्रतीः ॥९२॥
पीततृतीयरेखायां रक्ताङ्गा रक्तभूषणाः ।
स्वस्वमुद्रां तथा पाशमङ्कुशं चापि बिभ्रतीः ॥९३॥
चन्द्राभे षोडशदले शुक्लाङ्गाः शुक्लभूषणाः ।
वरस्फाटिकपीयूषकुम्भपाशाङ्कुशैर्युताः ॥९४॥
जपासुमाभेष्टदले रक्ताङ्गा रक्तभूषणाः ।
नीलोत्पलनीलरत्नकुम्भपाशाङ्कुशैर्युताः ॥९५॥
दाडिमीकुसुमाभे तु रक्ताङ्गा रक्तभूषणाः ।
रत्नपीयूषकलशादर्शपाशाङ्कुशैर्युताः ॥९६॥
सिन्दूराभे दशारे तु शुभ्राङ्गाः शुभ्रभूषणाः ।
भूषां पेटीं तथा पाशमङ्कुशं चापि बिभ्रतीः ॥९७॥
जपासुभाभे दिक्कोणे बालार्काभविभूषणाः ।
वरं ज्ञानं तथा पाशं टङ्कं चापि च बिभ्रतीः ॥९८॥
अष्टारे पद्मरागाभे रक्ताङ्गा रक्तभूषणाः ।
वरं च पुस्तकं चापं पञ्चबाणांश्च बिभ्रतीः ॥९९॥
रक्ताङ्गा रक्तभूषाढ्या वराभयलसत्कराः ।
ऊर्ध्वहस्तद्वयधृतस्वायुधोत्तंसमस्तकाः ॥१००॥

---

दक्षाधोहस्तात्तदूर्ध्वान्तिमायुधानि ॥९१-९२॥

संक्षोभिण्यादि स्वस्वमुद्राम् ॥९३॥

पीयूषममृतम् । स्फाटिकामृतकलशः ॥९४॥

सुमं पुष्पम् । नीलरत्नमयकुम्भः ॥९५॥

दाडिमीकुसुमाभे मनुकोणे । आदर्शो दर्पणः ॥९६॥

अधो हस्तद्वये । भूषापेटी ॥९७॥

दिक्कोणे दशकोणे बालार्कवद् आभा भूषणानि च यस्याः ॥९८-९९॥

स्वायुधात्मकोत्तंसयुतं मस्तकं यासाम् । अत्र सर्वसिद्धिप्रदचक्रे पुष्पाञ्जल्यनन्तरमेवायुधपूजनम्, "पुष्पाञ्जलिं प्रदायेत्थमायुधानि प्रपूजयेत्" इति त्रिपुरार्णवात् ॥१००॥

बन्धूकाभे त्रिकोणे तु पीता शुक्ला च लोहिता ।
तथा भूषादिका बाणचापपाशाङ्कुशायुधाः ॥१०१॥
परब्रह्ममये बिन्दौ पञ्चब्रह्मात्ममञ्चके ।
स्वसमाकारकामेशवामके संस्थितां पराम् ॥१०२॥
मुदितां ललितां देवीमरुणाम्बरलेपनाम् ।
तथाभूषास्रगाढ्यां च स्वायुधोद्यत्कराम्बुजाम् ॥१०३॥
मन्दस्मितां महादेवीं ध्यात्वा संतर्पयेच्छिवे ।
षडङ्गयुवतीर्मूलदेव्या तुल्यायुधादिकाः ॥१०४॥
एवमावृत्तिशक्तीस्तु संपूज्याद्याग्रतो यजेत् ।
चक्रेश्वरीस्तद्वामे च दक्षेऽग्रे क्रमतो यजेत् ॥१०५॥
चक्रेशीस्त्रिपुराद्यास्तु मुद्राः संक्षोभिणीमुखाः ।
अणिमाद्याः सिद्धयश्च प्रकटाद्याश्च योगिनीः ॥१०६॥
तत्तन्मुद्राः प्रदर्श्याथ गन्धपुष्पादिसंयुतम् ।
सामान्यार्घ्यजलं दर्व्यामादाय परमेश्वरि ॥१०७॥

---

तथा पीतशुक्ललोहित ॥१०१॥

परब्रह्ममय इति । बिन्दुवर्णस्तु त्रिपुरार्णवे उक्तः—"रक्तशुक्लविमिश्राभं बैन्दवं चक्रमद्रिजे" इति ॥१०२॥

तथा अरुण । तृतीयोक्तानि स्वायुधानि ॥१०३॥

देवीं मूलदेवीम् । प्रसङ्गात् प्रागनुक्तमङ्गदेवताध्यानमाह—षडङ्गेति ॥१०४॥

एवं प्रोक्तरीत्या ध्यायन् । नवचक्रेषु तत्तच्चक्रस्य आद्याया देवताया अणिमादेरग्रतः चक्रेश्वरीर्यजेत् । तस्याश्चक्रेश्वर्या वामे दक्षे अग्रे च ॥१०५॥

तत्र पूज्यदेवतानामान्याह—चक्रेश्वरीरित्यादि । चक्रेश्वरीयोगिन्योर्नामानि चतुर्दशे प्रोक्तानि । अत्र चक्रेश्वरीः स्वस्वमन्त्रेण, मुद्राः सिद्धिश्च प्रोक्तवत् । योगिनी-सामान्यवचनात् प्रं प्रकटयोगिनीत्यादि स्वाद्यबीजेन पूजयेत् ॥१०६॥

तत्तदावरणपूजितां मुद्रामष्टमोक्तरीत्या प्रदर्श्य ॥१०७॥

एताः प्रकटयोगिन्यस्त्रैलोक्यान्मोहनादथ ।
चक्रे समुद्राः सततः सिद्धयः सायुधास्तथा ॥१०८॥
सवाहनाश्च सपरिवाराः संपूजितास्ततः ।
सन्तर्पिताः सन्तु चेति चार्पयेद् वामहस्तके ॥१०९॥
चक्रेश्वर्यास्ततो देवीं त्रिधा संतर्पयेच्छिवे ।
पुष्पाञ्जलिं तथा नाम मूलान्ते तु पठेच्छिवे ॥११०॥
अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥१११॥
मूलदेवीचरणयोरेवं निक्षिप्य भक्तितः ।
प्रकटाद्योगिनी पश्चान्मयूखायै च श्रीमहा ॥११२॥
त्रिपुरादत्तसुन्दर्यै हृदेवं प्रणमेच्छिवे ।
अशेषावरणेऽप्येवं तत्तन्नाम नियोजयेत् ॥११३॥

---

आत् । आदथ । ततः । तथा ॥१०८॥

च । ततः । इति त्यक्त्वा एता इत्यादि सन्तु इत्यन्तं स्वरूपम् । चक्रेश्वर्या वामहस्ते इत्यन्वयः ॥१०९॥

मूलान्ते नाम महात्रिपुरसुन्दरीति ॥११०॥

अभीष्टसिद्धिमित्यादि पठेत् ॥१११॥

एवम् अभीष्टेत्यादि । आत् । पश्चात् । च ॥११२॥

आदथ इति त्यक्त्वा प्रकटेत्यादिसुन्दर्यै इत्यन्तं स्वरूपम् । हृत् नमः । अशेषावरणेऽपि सर्वावरणेऽपि । एवम् आद्यदेवताग्रे तत्तच्चक्रेश्वरीं तद्वामदक्षाग्रेषु तत्तन्मुद्रा-सिद्धि-योगिनीश्च संपूज्य तत्तन्मुद्रां प्रदर्शयेदित्यादि । समर्पणमन्त्रे प्रकटयोगिन्यस्त्रैलोक्य-मोहनचक्रे इति स्थाने, पुष्पाञ्जलिमन्त्रे प्रथमावरणेति स्थाने, प्रणाममन्त्रे प्रकट-योगिनीति स्थाने च गुप्तयोगिन्यः सर्वाशापरिपूरकचक्रे द्वितीयावरणगुप्तयोगिनीत्यादि तत्तन्नामानि योजयेत् ॥११३॥

भूपुराद् बिन्दुपर्यन्तमेकरूपं विभाव्य च ।
अखण्डमनुना देवि तर्पयेद्रविवारकम् ॥११४॥
तुरीया च महौड्याणपीठे चर्या ततः परम् ।
नाथात्मके तुरीयातीतदशा परमेश्वरि ॥११५॥
धिष्टाय केशान्त्यतीताशक्त्यात्मकपरादथ ।
ब्रह्मात्मकप्रकाशाच्च विमर्शात् सामरस्यतः ॥११६॥
आत्मशक्तिश्रीमहात्रिपुराद्वै सुन्दरीति च ।
संतर्प्यैवं मूलदेवीं गन्धपुष्पाक्षतैर्युतम् ॥११७॥
सामान्यार्घ्यात् समादाय दर्व्या पूर्त्याख्यविद्यया ।
समर्प्य वामहस्ते तु मूलदेव्या महेश्वरि ॥११८॥
तद्वामदक्षयोस्तद्वत्त्रिखण्डां सर्वसिद्धिकाम् ।
संतर्प्य चित्रखण्डां वै प्रदर्श्य प्रणमेच्छिवे ॥११९॥
योन्या प्रणामः सर्वत्र पूजायां तु विशेषतः ।
निर्वर्त्यैवमखण्डाख्यां पूजां पश्चान्महेश्वरि ॥१२०॥

---

रविवारं द्वादशवारम् ॥११४॥

तुरीया चतुर्दशे उक्ता त्रयोदशाक्षरी । ततः परम् । परमेश्वरी ॥११५॥

आदथ । आच्च । आत् । तः ॥११६॥

आद्वै । इति त्यक्त्वा । महेत्यादि सुन्दरीत्यन्तं स्वरूपमिति मन्त्रेण मूलदेवीं रविवारं सन्तर्प्येति योजयेत् । युतं जलम् ॥११७॥

पूर्तिविद्या पञ्चदशे उक्ता ॥११८॥

तस्या मूलदेव्या वामदक्षयोः । तद्वत् तत्तद्बीजादियोगेन ॥११९॥

सर्वत्र तत्तदावरणान्ते, अन्यत्र च । विशेषत इत्यनेन पूजाङ्गातिरिक्ते प्रणामे योनिमुद्रायाः कृताकृतत्वमुक्तम् ॥१२०॥

तर्पयेत् पञ्चपञ्चाख्या वायव्यादिक्रमेण तु ।
मध्ये देवीं मूलतस्तु तेषां नाम शृणु क्रमात् ॥१२१॥
लक्ष्म्यं वाचाऽपि कोशाम्बा तथा कल्पलताम्बिका ।
तथा कामदुघाम्बा च रत्नाम्बा चेति पञ्चकम् ॥१२२॥
सर्वत्राद्या मूलविद्या लक्ष्मी तद्वन्महादिका ।
त्रिशक्तिलक्ष्मी साम्राज्यलक्ष्मी चेत्यादिपञ्चकम् ॥१२३॥
परंज्योतिः परान्ते तु निष्कलाच्छाम्भवी ततः ।
अजया मातृका चेति द्वितीयं पञ्चकं स्मृतम् ॥१२४॥
पञ्चकामा पारिजाता कुमारी च ततः परम् ।
पञ्चबाणा ततः पश्चात्तृतीयं पञ्चकं भवेत् ॥१२५॥
अथामृताच्च पीठेशी तथा चापि सुधान्तसूः ।
अमृतेशी चान्नपूर्णा चतुर्थं पञ्चकं भवेत् ॥१२६॥
सिद्धलक्ष्मी तथा राजमातङ्गी भुवनेश्वरी ।
वाराही चेति देवेशि पञ्चमं पञ्चकं भवेत् ॥१२७॥
ध्यानं क्रमाच्छृणु शिवे प्रोक्तपूजार्थकारणात् ।
सुवर्णाभाः श्वेतवस्त्रभूषामाल्यानुलेपनाः ॥१२८॥

---

मूलदेव्या वायव्यादिप्रादक्षिण्येन कोणेषु । तेषां पञ्चपञ्चकानाम् ॥१२१--१२२॥

एवं पञ्चपञ्चकनामोक्त्वा प्रतिपञ्चके पञ्चानां नामान्याह—सर्वत्रेत्यादि । सर्वत्र पञ्चपञ्चके । महादिका महालक्ष्मी । आद्यपञ्चकं लक्ष्म्यम्बाख्यम् ॥१२३॥

परनिष्कलशाम्भवी । द्वितीयं कोशाम्बाख्यं द्वितीयम् ॥१२४॥

तृतीयं कल्पलताम्बाख्यम् ॥१२५॥

अमृतपीठेश्वरी सुधासूः चतुर्थं कामदुघाम्बाख्यम् ॥१२६॥

पञ्चमं रत्नाम्बाख्यम् ॥१२७॥

पञ्चपञ्चकदेवतानां ध्यानम्, ध्यानस्य पूजाङ्गत्वात् पूजार्थत्वाद्धेतोर्वक्ष्यामीति शेषः ॥१२८॥

श्वेतपद्मचतुर्युक्तचतुर्बाहुविराजिताः ।
रक्ताभा रक्तवस्त्रादियुता नेत्रत्रयोज्ज्वलाः ॥१२९॥
वरं चाभीतिकं पाशमङ्कुशं चापि बिभ्रतीः ।
रक्तवर्णा रक्तवस्त्रभूषामाल्यविलेपनाः ॥१३०॥
अक्षमालापुस्तपाशाङ्कुशपाणिचतुष्टयाः ।
शुक्लवर्णाः शुक्लवस्त्रभूषामाल्यानुलेपनाः ॥१३१॥
वरं चाभीतिकं पाशमङ्कुशं चापि बिभ्रतीः ।
रक्तवर्णा रक्तवस्त्रादिकाः पूर्वायुधाः स्मरेत् ॥१३२॥
चतुःसमयदेव्यस्तु पुरो वामेऽथ दक्षके ।
बिन्दौ यजेत्तुरीयां तु सप्तधा तर्पयेच्छिवे ॥१३३॥
चतुर्द्वारेषु पूर्वादि यजेदाम्नायदेवताः ।
बिन्दोस्तु परितो देवि चोर्ध्वाम्नायस्य देवताः ॥१३४॥
कालसंकर्षिणीं चाग्रे चौघांश्च गुरुमण्डले ।
अग्रे वामे दक्षिणे च मध्ये चरणवासनाः ॥१३५॥
रहस्यानि मूलविद्या मूलदेव्यां यजेच्छिवे ।
गुरौ नाथांश्च पञ्चाम्बाश्चाग्रात् कोणचतुष्टये ॥१३६॥

---

चतुर्युक्त चतुष्टययुक्तेत्यर्थः ॥१२९-१३०॥

पूर्वायुधाः पूर्वोक्तवराभीतिपाशाङ्कुशायुधाः ॥१३२॥

बिन्दौ देव्याः पुर इत्यादि योजयेत् । अर्थात्तुरीयां देव्यां सप्तधा ॥१३३-१३४॥

बिन्दोरित्यनुवर्त्य तदग्रे कालसंकर्षिणीम् । एवमेवाग्रे वामे चेत्याद्यपि योजनीयम् ॥१३५॥

सप्तविंशतिरहस्यानि षोडश मूलविद्याः । बिन्दोरग्रादित्यत्रापि । अग्रे कोणचतुष्टये चेत्यर्थः ॥१३६॥

षट्कं त्रिकोणकोणेषु पार्श्वेष्वन्तः प्रपूजयेत् ।
योग्यतावशतः स्थानं ज्ञात्वा सर्वं प्रपूजयेत् ॥१३७॥
असक्तेन षडाम्नायसमयास्तर्पयेच्छिवे ।
सृष्टिस्थितिलयाख्येषु त्रिकेषु त्रयमीश्वरि ॥१३८॥
तुर्यां समस्ते बिन्दौ तु द्वयं सन्तर्पयेच्छिवे ।
समर्थेनाथ देवेशि पूर्वमण्डलरूपिणीम् ॥१३९॥

---

षट्कं षडध्वादिकं त्रिकोणस्यान्तः। एवं सामान्यतः स्थानमुक्त्वा विशेषतः स्थानमाह—योग्यतेति। योग्यता दीक्षान्यासाद्युक्तस्थानता तत्सजातीयता वा। यदुक्तं त्रिपुरार्णवे—"कथञ्चिदप्यसंसिद्धस्थानानां स्थानमीरितम्" इति। तथाहि—शुद्धविद्यादिपञ्चाम्नायाद्यविद्यानां कुम्भेषु मूलदेवीस्तु श्रीतीर्थेन त्रिधा यजेदिति दीक्षाप्रकरणोक्त्या मुख्यदेवतात्वान्मूलदेवतायाम्। एवमेव दीक्षोक्त्या बालामन्त्रिण्योः, वाराहीतिरस्करिण्योः, भुवनेश्वर्यन्नपूर्णयोः, महार्धाश्वारूढयोः, परापराशाम्भव्योश्च बिन्दुदक्षवामयोः समयविद्याषट्कस्य तदग्रे साजात्यात्। गुरुत्रयं गुरुमण्डलं च मानवौघान्ते। मुद्रा मुद्रावरणे। अन्यासां चतुराम्नायदेवतानां पूर्वादिचतुर्द्वारेषु। मालिनीमन्त्रराजयोः बिन्दुपृष्ठे | बिन्दोस्तु परित इत्युक्त्यनुरोधात्। षोडश्या मूलदेव्यां साजात्यात्। बिन्द्वग्रे कालसंकर्षिण्याः, ओघानां रेखात्रये, पराचरणवासनायां चतुष्कत्रयस्य चरणवासनावत्। त्रयोदशस्य व्यापकत्वेन। महाद्यो मातृकानन्दनाथश्चानेन व्यापकमित्यष्टादशे वक्ष्यमाणत्वात्। त्रिकोणस्य दक्षवामयोः, अग्रवामदक्षकोणेषु वामपृष्ठदक्षपार्श्वेषु बिन्दौ चेति नवशाम्भवचरणविद्यानां न्यासानुरोधात्। एवं सकलसच्चिदानन्देत्यादित्रयाणां बिन्दौ देवतामुखादित्रये वक्त्रादिविद्यात्रयम्। षडङ्गानामङ्गदेवतास्थाने बिन्दौ कामकलादिनिर्वाणपादुकान्तं महापादुकायाः प्रोक्तवत्। कामराजलोपामुद्रापादुकयोश्चरणवासनावत् साजात्यात्। आत्मपादुकायाः परं ज्योतिः कोशाम्बास्थले महावाक्यानां बिन्दौ, तेषां मूलदेवीप्रतिपादकत्वादिति व्याख्योद्योतानुरोधेन। परे तु अनुक्तानां स्थानमाह—योग्यतेत्यादि। अनुक्तास्तु अनुत्तराम्नायसमया, षोडशी, पराचरणवासना, शाम्भवविद्याः, परापादुकाक्रमः, कामराजलोपामुद्रापादुकाक्रमौ, महापादुका, वाग्देवताः, आत्मपादुका, महावाक्यानि—इत्येतावतीनामेव न्यासाद्युक्तयुक्त्या स्थानयोग्यतां ज्ञात्वा तत्तत्स्थाने समर्चनं नान्यासाम्, अतिप्रसक्तेर्ग्रन्थस्वारस्यहानेश्चेति प्राहुः ॥१३७॥

तत्स्थानमाह—सृष्टीत्यादि। त्रिकेषु त्रैलोक्यमोहनसर्वसौभाग्यदायकसर्वरोगहरादिचक्रत्रिकेषु ॥१३८॥

तुर्याम् उत्तराम्नायसमयाम्। समस्ते नवचक्रे। द्वये ऊर्ध्वानुत्तराम्नायसमये।

अकाररूपत्रिपुरसुन्दरीत्यादि पूजयेत् ।
ततो मूलं त्रिधा देवि सन्तर्प्य तदनन्तरम् ॥१४०॥
पुष्पाञ्जलिं प्रदद्याद्वै समष्टिं योगिनीं जपन् ।
सम्पूर्णावरणोपेतां यजेत् पञ्चोपचारकैः ॥१४१॥
नैवेद्यादि प्रकर्तव्यं पूर्वोक्तविधिना शिवे ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥१४२॥

इति परमानन्दतन्त्रे सप्तदशोल्लासः ॥ १७॥

---

रूपिणीं तर्पयेदिति शेषः ॥१३९॥

तत्प्रकारमाह—अकारेत्यादि । पूर्णमण्डलन्यासोक्तरीत्या अकाररूप आकार-रूपेत्यादि षट्सप्तत्युत्तरपञ्चशतधा पूजयेदित्यर्थः ॥१४०॥

योगिनीं समष्टिविद्याम् ॥१४१॥

तत्र दीपान्तचतुष्टयं पञ्चोपचारोक्तरीत्यैव । नैवेद्ये विशेषमाह—नैवेद्यादीति । आदिना प्रार्थनादेः संग्रहः । एतेन प्रार्थनादिताम्बूलान्तस्य पुनरावृत्तिः सिद्धाः । उपसंहारति—एतदिति ॥१४२॥

सौभाग्यानन्दसन्दोहे रोचयापद्यबोधकः ।
परमानन्दटिप्पण्यामुल्लासः षोडशात् परः ॥१७॥



## अष्टादशोल्लासः

**देव्युवाच**

भैरव श्रोतुमिच्छामि मन्त्रान् पूर्वत्र सूचितान् ।
पञ्चपञ्चाख्यकान् तद्वदाम्नायाख्यानपीश्वरि ॥१॥

**भैरव उवाच**

शृणु देवि प्रवक्ष्यामि मन्त्रान् सर्वानशेषतः ।
यज्ज्ञात्वा सिद्धिमाप्नोति साधकः परमेश्वरि ॥२॥
लक्ष्मीबीजेन चाद्या स्याल्लक्ष्यं वा परमेश्वरि ।
तारो रमा पुटा माया कमले कमलालये ॥३॥
प्रसीदयुग्ममाद्यादि विलोमेन महेश्वरि ।
महालक्ष्म्यै च हृदयं वसुपक्षाक्षरो मनुः ॥४॥
महालक्ष्मीति सम्प्रोक्ता द्वितीयात्र महेश्वरि ।
लक्ष्मी माया कामराजस्त्रिशक्तिस्त्र्यक्षरी स्मृता ॥५॥

---

पूर्वोक्तान् मन्त्रान् प्रष्टुं देव्युवाचेति । सूचितान् नाममात्रोद्देशेन कथितान् ॥१॥

उत्तरं भैरव उवाचेति । सिद्धि पूजादिफलम् ॥२॥

लक्ष्मीबीजं श्रीं । आद्या लक्ष्मी । तारः ॐ । रमापुटा माया श्रीं ह्रीं श्रीं कमले कमलालये स्वरूपम् ॥३॥

प्रसीद इति द्विः । आद्यादि तारादिचतुष्टयं विलोमेन । श्रीं ॐ । इति महालक्ष्म्यै स्वरूपम् । हृदयं नमः । वसुपक्षम् अष्टाविंशतिः ॥४॥

द्वितीया महालक्ष्मीति संप्रोक्तेयम् । अत्र लक्ष्म्या वा चतुष्टये । लक्ष्मी श्रीं । माया ह्रीं । कामराजः क्लीं ॥५॥

त्रिशक्तिलक्ष्मीनाम्नैव तृतीयेयं प्रकीर्तिता ।
रमा सह कलान्ते तु मायालक्ष्मीस्ततः परम् ॥६॥
सप्ताक्षरो समाख्याता साम्राज्येति महेश्वरि ।
इयं चतुर्थी चाद्या तु विद्या सौभाग्यसंज्ञिता ॥७॥
आत्माष्टाक्षरविद्यैव परं ज्योतिः प्रकीर्तिता ।
कोशाम्बेति महादेवि शृणुष्वान्यत् समाहिता ॥८॥
तारः परा निष्कलाच्च शाम्भवीति प्रकीर्तितः ।
अजपा तु पुरा प्रोक्ता मातृकापि महेश्वरि ॥९॥
पञ्चकामास्तु संप्रोक्ताः पूर्वमेव महेश्वरि ।
एषा कल्पलता प्रोक्ता पञ्चकामेश्वरी शिवे ॥१०॥
तारमायापुटं देवि त्रिपुराम्बाद्यबीजकम् ।
सरस्वत्यै च हृदयं रुद्रार्णा परमेश्वरि ॥११॥

---

इयं प्रोक्ता त्र्यक्षरी। रमा श्रीं। सहकलस्वरूपम्। महालक्ष्मीद्वयं स्पष्टम् ॥६॥

साम्राज्यलक्ष्मीः। सर्वत्राद्या मूलविद्येत्युक्तमेव। पुनः प्रकृते संख्यापूर्तयेऽनुवदति—आद्या त्विति ॥७॥

त्रयोदशे प्रोक्तात्मपादुकाख्या आत्माष्टाक्षरविद्या। परं ज्योतिः कोशाम्बा। अन्यत् त्रयम् ॥८॥

तारः ॐ। एकाक्षरी परनिष्कलशाम्भवी। द्वितीया पुरा षष्ठे प्रोक्ता। अजपा तृतीया। तत्रैवोक्ता मातृका चतुर्थी ॥९॥

पञ्चकामापि तत्रैवोक्ता आद्या कल्पलता ॥१०॥

त्रिपुराम्बाद्यबीजं तारमायाभ्यां पुटितम् ॐ ह्रीं ह्सौं ह्रीं ॐ इति। सरस्वत्यै स्वरूपम्। हृदयं नमः। रुद्र एकादश ॥११॥

पारिजातेश्वरी चेयं द्वितीया संप्रकीर्तिता ।
कामवाक्शक्तियोगेन कुमारी त्र्यक्षरी मता ॥१२॥
पञ्चबाणैः पुरा प्रोक्तैः पञ्चबाणेश्वरी भवेत् ।
एते द्वे चापि संप्रोक्ते तृतीया तुर्यसंख्यका ॥१३॥
अथ कामदुघां वक्ष्ये शृणु देवि समाहिता ।
तारो मायाऽजपा संजीवनि चामृतबीजकम् ॥१४॥
जीवं प्राण ग्रन्थि वै स्थं कुरुयुग्मान्त्यबाणकम् ।
मूर्धा चामृतपीठेयं त्रयोविंशाक्षरी भवेत् ॥१५॥
वदयुग्मं वाग्वादिनि त्रिपुराम्बाद्यमेव च ।
क्लिन्ने क्लेदिनि पश्चात्तु महाक्षोभं कुरुद्वयम् ॥१६॥
द्वितीयं प्रणवो मोक्षं कुरुयुग्मं तृतीयकम् ।
बिन्द्वाढ्यं सर्गरहितं भूगुणार्णा समीरिता ॥१७॥
सुधासूरिति विख्याता द्वितीयेयं समीरिता ।
अमृतेश्वरी तृतीया चात्र प्रोक्ता महेश्वरि ॥१८॥

---

काम क्लीं । वाक् ऐं । शक्तिः सौः । एतेषां योगेन कुमारी तृतीया ॥१२॥

पुरोक्तैः षष्ठोक्तैः पञ्चबाणबीजैः । पञ्चबाणेश्वरी चतुर्थी । कल्पलतासु तृतीया तुर्यसंख्यका चतुर्थी । एते द्वे कुमारीपञ्चबाणेश्वर्यौ प्रोक्ते ॥१३॥

तारः माया अजपा चेति स्पष्टम् । संजीवनि स्वरूपम् । अमृतबीजं कं जूं ॥१४॥

जीवं प्राणग्रन्थिस्वरूपम् । कुरु द्विः । अन्त्यबाणः सः । मूर्धा स्वाहा । अमृतपीठेश्वरी आद्या कामदुघा ॥१५॥

वद द्विः । वाग्वादिनि क्लिन्ने क्लेदिनि महाक्षोभं स्वरूपं त्रिपुराम्बाद्यं ह्स्रैं कुरु द्विः ॥१६॥

द्वितीयं सर्गरहितं बिन्द्वाढ्यम् । तृतीयकं चार्थात् त्रिपुराम्बाया एव ह् स् क्लीं ह्स्रौं इति । प्रणवः ॐ । मोक्षं स्वरूपम् । कुरु द्विः । भूगुण एकत्रिंशत् ॥१७॥

अत्र कामदुघासु । अष्टमे प्रोक्ता अमृतेश्वरी तृतीया ॥१८॥

अन्नपूर्णापि देवेशि पुरा प्रोक्तैव सा भवेत् ।
रागकालोपस्थयुतः स्पर्शो बिन्द्वाढ्यतुष्टिगः ॥१६॥
महाचण्ड तथा तेजः सङ्कर्षण च कालि च ।
मन्थाने सर्गयुक्ते जः सिद्धलक्ष्मीमनुः स्मृतः ॥२०॥
ऋषिचन्द्राक्षरी त्वेषा राजमातङ्गिका ततः ।
भुवनेशी च वाराही प्रोक्ता पूर्वं महेश्वरि ॥२१॥
महालक्ष्मीश्वरीवृन्दमण्डितासनसंस्थिता ।
सर्वसौभाग्यजननी चेति मन्त्रांस्ततः ततः पठेत् ॥२२॥
अन्ते तत्तन्नामयोगात् तर्पयेदेवमन्यतः ।
लक्ष्मीस्थाने तु कोशादीन्निवेश्य परमेश्वरि ॥२३॥
कामेश्वरी च वज्रेश्वरी प्रोक्ता भगमालिनी ।
चतुर्थी समयाविद्यां शृणु देवि समाहिता ॥२४॥

---

पुरा चतुर्दशोल्लासे प्रोक्तैव इह चतुर्थी । राग ज । काल ज्र्य । उपस्थ म । स्पर्शः र । बिन्द्वाढ्यतुष्टिः ईं । ज्ज्र्यंत्री इति ॥१६॥

महाचण्ड । तेजः । सङ्कर्षण । कालि । मन्थाने स्वरूपम् । सर्गयुक्ते जः हः ॥२०॥

ऋषिचन्द्र सप्तदश । एषा पञ्चरत्नास्वाद्या । ततो द्वितीया राजमातङ्गी । भुवनेशी तृतीया । वाराही चतुर्थी । मातङ्ग्यादित्रयी पूर्वं चतुर्दशे प्रोक्ता ॥२१॥

महालक्ष्मीत्यादि जननीत्यन्तं तत्तत्पञ्चलक्ष्म्यम्बामन्त्रान् ततो पठेत् ॥२२॥

जननीत्यन्तस्यात्यन्ते महालक्ष्म्यम्बेत्यादितत्तन्नामयोगात् तर्पयेत् । एवमेवान्यतः कोशाम्बादिपञ्चकेष्वपि । अन्ते परं ज्योतिः कोशाम्बेत्यादिनामयोगः । विशेषस्तु महालक्ष्मीश्वरीत्यत्र लक्ष्मीपदस्थाने कोशादीन् कोशकल्पलतेत्यादीन्निवेश्य महाकोशेश्वरी महाकल्पलतेश्वरीत्यादि पूजयेत् ॥२३॥

कामेश्वर्याद्या समयविद्यात्रयी चतुर्दशे प्रोक्ता ॥२४॥

कामो भगवति प्रान्ते तुर्यबाणस्तदन्ततः ।
कामेश्वरि ततो माया सर्वसत्त्ववशङ्करि ॥२५॥
अन्त्यबाणस्त्रिपुरभैरवि वाग्भवमेव च ।
विच्चे कामो महात्रिपुरसुन्दर्यै च हृत्ततः ॥२६॥
गगनाम्बुधिवर्णोऽयं त्रिपुरासमयामनुः ।
अथ मन्त्रान् प्रवक्ष्यामि सर्वानाम्नायसंभवान् ॥२७॥
पारायणे तथा न्यासे भूयः प्रोक्ता महेश्वरि ।
तच्छेषानधुना सर्वान् प्रवक्ष्यामि परिस्फुटम् ॥२८॥
शुद्धविद्यादिसंप्रोक्तं लघुश्यामलिकान्तकम् ।
गुरुत्रयं च तत्पश्चान्महागणपतिस्तथा ॥२९॥
प्रोक्तः पूर्वं चाधुना तु शृणु पीठत्रयं शिवे ।
अनुत्तरस्तत्परश्च बिन्दुयुक्तस्ततः परम् ॥३०॥

---

कामः क्लीं । तुर्यबाणः ब्लूं । माया ह्रीं । भगवति कामेश्वरि सर्वसत्त्ववशंकरि स्वरूपम् ॥२५॥

अन्त्यबाणः सः । वाग्भवं ऐं । कामः क्लीं । हृत् नमः । त्रिपुरभैरवी विच्चे महात्रिपुरसुन्दर्यै स्वरूपम् ॥२६॥

गगनाम्बुधि चत्वारिंशत् । त्रिपुरासमयामहात्रिपुरसुन्दर्यै इति मन्त्रलिङ्गात् । त्रिपुरार्णवानुरोधाच्च । महात्रिपुरसुन्दरीसमयेति नाम । आम्नाये संभवः स्थितिर्येषाम् ॥२७॥

चतुर्दशे पारायणे । पञ्चदशे न्यासे । भूयः बहुशः । तच्छेषान् प्रोक्तशेषाम्नायमन्त्रान् ॥२८॥

शुद्धविद्यादिलघुश्यामलान्तं दश पारायणे प्रोक्तम् । गुरुत्रयं महागणपतिश्चाष्टमे प्रोक्तः ॥२९॥

अनुत्तरः तत्परः बिन्दुयुक्तः अं आं ॥३०॥

शक्तिबीजं कामगिरिपीठाय ब्रह्म तत्परम् ।
आत्मशक्त च ये पश्चान्नमोऽष्टादशवर्णकः ।।३१।।
भुवनेशी रमा शक्तिः पश्चात् पूर्णगिरीति च ।
विष्णवात्मान्ते पूर्ववत् स्याद् वर्णसंख्यापि पूर्ववत् ।।३२।।
शक्तिर्माया रमा जालन्धरपीठाय तत्परम् ।
रुद्रात्म पूर्ववत् पश्चान्मुखे स्यात् सप्तबीजकम् ।।३३।।
समया तु पुरा प्रोक्ता पूर्वाम्नायः समीरितः ।
चतुर्विंशतिसाहस्रपरीवारेण संयुतः ।।३४।।
पूर्वाम्नायः कामगिरिपीठरूपो महेश्वरि ।
सौभाग्यविद्यामारभ्य तिरस्करणिकावधि ।।३५।।
उक्ता मन्त्रास्त्वथ श्रृणु शेषमन्त्रान् महेश्वरि ।
शङ्क्वस्त्रं फद्वितुर्यस्थं बिन्दुयुक्तं ततः परम् ।।३६।।
भुवनेशी रमा चैष षडर्णो ह्यष्टभैरवः ।
मन्थानश्चाथ फट्कारः स्वचक्रो रविभक्षकः ।।३७।।

---

शक्तिबीजं सौः । कामगिरिपीठाय ब्रह्मात्मशक्तये नमः स्वरूपम् ।।३१।।

भुवनेशी ह्रीं । रमा श्रीं । शक्तिः सौः । पूर्णगिरिविष्णवात्म स्वरूपम् । शेषं पूर्ववत् । पूर्णगिरिपीठायेत्यादि ।।३२।।

शक्तिः सौः । माया ह्रीं । रमा श्रीं । जालन्धरपीठाय रुद्रात्म स्वरूपं पश्चात्पूर्ववत् । शक्तये इत्यादि मुखे सर्वेषामादौ सप्तबीजकम् । चतुस्तारी बाला ।।३३।।

पुरा पारायणे पूर्वाम्नायसमया प्रोक्ता इति पूर्वाम्नायः । अत्रैकैकदेवतानां कतिपयपरिवारा मिलित्वा चतुर्विंशतिसहस्रपरिवाराः ।।३४।।

एतावत्परिवारसंयुतः पूर्वाम्नायः कामगिरिपीठरूपो भवति । सौभाग्यविद्यादि-तिरस्करण्यन्तपञ्चमन्त्राः ।।३५।।

पारायणे उक्ताः । शङ्क फ्रें । अस्त्रं फट् । फ इति द्वितीयतुर्यस्वरस्थं बिन्दुयुक्तं फां फीं ।।३६।।

भुवनेशी ह्रीं । रमा श्रीं । अष्टभैरवानां सर्वेषां समानो मन्त्रः । तेषां नामान्याह—

एकात्मा नन्दचण्डौ च नभो निर्मल एव च ।
डमर्वाद्यो भास्करश्च प्रोक्ता देव्यष्टभैरवाः ॥३८॥
त्रितारः पूर्णगिर्याख्यः सिद्धामन्त्रः षडक्षरः ।
महापूर्व दुर्मना च सुन्दरी विश्वपूर्विका ॥३९॥
दला करालिका तद्वच्चिबिडा च ततः परम् ।
भीमा कराली च खराननेति परिकीर्तिता ॥४०॥
विशालनयना चेति नवाम्बान्ताः प्रकीर्तिताः ।
भुवनेशी रमा हुं फट् बटुको वेदवर्णकः ॥४१॥
स्कन्दश्चित्रो विरिञ्चश्च वटुकत्रयमुच्यते ।
लोपामुद्राकूटयुग्मं तुरीया तदनन्तरम् ॥४२॥
चतुर्विंशत्यक्षरो वै पदद्वयमनुः स्मृतः ।
प्रकाशश्च विमर्शश्च पदयुग्मं प्रकीर्तितम् ॥४३॥
विद्या तु समयाख्या वै पुरैवोक्ता महेश्वरि ।
त्रिंशत्सहस्रसंख्याकपरीवारेण संयुतः ॥४४॥

---

मन्थान इत्यादि । रविभक्षः ॥३७॥

एकात्मानन्दः । चण्डः । डमरुभास्करः ॥३८॥

त्रितारः ऐं ह्रीं श्रीं । पूर्णगिरिपीठमन्त्रः ह्रीं श्रीं सौः । सर्वासां सिद्धानामयमेव मन्त्रः । नामान्याह—महेत्यादि । महादुर्मना विश्वदला ॥३९॥

पूर्वोक्ता करालिका । इयं कराली ॥४०॥

इति नव अम्बान्ताः सिद्धाः । महादुर्मनाम्बेत्यादि । भुवनेशी ह्रीं । रमा श्रीं । हुं फट् स्वरूपम् ॥४१॥

तन्नामान्याह—स्कन्द इत्यादि । लोपामुद्रा हादिविद्या । तस्याः प्रथमं द्वितीयम् इति कूटयुग्मम् । तदनन्तरं तुरीया विद्या त्रयोदशाक्षरी ॥४२॥

तन्नामनी आह—प्रकाशेत्यादि ॥४३॥

पुरा पारायणे ॥४४॥

दक्षिणाम्नायकः पूर्णगिरिपीठात्मकः शिवे ।
लोपामुद्रां समारभ्य तथा कामकलावधि ॥४५॥
मन्त्राश्चोक्तास्त्वथ श्रृणु शेषमन्त्रान् महेश्वरि ।
आद्यद्वितीयपीठं तु दूतीमन्त्रः षडक्षरः ॥४६॥
योनिस्तदादिसिद्धादिनाथा चैवं महादिका ।
दिव्ययोनिः शङ्खयोनिस्तदाद्या सिद्धनाथका ॥४७॥
पद्मयोनिस्तथा सापि चाम्बान्ता नवदूतिकाः ।
तारो माया रमा शक्तिर्माया पञ्चाक्षरो मनुः ॥४८॥
शक्तिस्थाने कामबीजं वाग्भवं च क्रमात् पठेत् ।
अग्निसूर्यसोमपूर्वमण्डलानां मनुः स्मृतः ॥४९॥
पञ्चषड्द्वित्रितुर्यं वै भैरवार्णान् क्रमान्न्यसेत् ।
वीराणां मन्त्र एष स्यात् पञ्चवर्णो महेश्वरि ॥५०॥
सृष्टिः स्थितिश्च संहारो रक्तो वै यम एव च ।
मृत्युर्भद्रोऽथ च पराक्रमो मार्तण्ड एव च ॥५१॥

---

लोपामुद्रादिकामकलान्ताश्चत्वारो मन्त्राः पारायणे उक्ताः ॥४५॥

आद्यद्वितीयपीठं कामगिरिपूर्णगिरिपीठयोर्मन्त्रः ॥४६॥

तदादिसिद्धादिनाथा योनिसिद्धनाथा । एवम् उक्तरीत्या । महादिका महायोनिः महायोनिसिद्धिनाथा । तदाद्या सिद्धिनाथका शङ्खयोनिसिद्धिनाथा ॥४७॥

तथा सापि पद्मयोनिसिद्धिनाथा । अम्बान्ता योन्यम्बेत्यादि । तारः ॐ । माया ह्रीं । रमा श्रीं । शक्तिः सौः । पुनर्माया ॥४८॥

अत्रैव शक्तेः सौः इत्यस्य स्थाने कामबीजं क्लीं वाग्भवं ऐं इति योगेन अग्निमण्डलादिमण्डलत्रयमन्त्राः ॥४९॥

भैरवमन्त्रेषु पञ्चमः ह्रीं । षष्ठः श्रीं । द्वितीयः फट् । तृतीयः फ्रां । तुर्यः फ्रीं ॥५०॥

नामान्याह—सृष्टिरित्यादि ॥५१॥

कालाग्निरुद्रश्च दश वीराः स्युर्भैरवान्तकाः ।
चतुस्तारं कामबीजं रमा माया च शक्तिकम् ॥५२॥
रमा मायेति नाथानां मन्त्रः स्याद् दशवर्णकः ।
मङ्गला चण्डिका ज्येष्ठा कन्तुकी पटहा ततः ॥५३॥
श्रेष्ठा कूर्माथ धनदा गन्धा स्यात्तु ततः परम् ।
मतङ्गा चम्पका पूज्या तथा कैवर्तका पुनः ॥५४॥
मतङ्गगमना सूर्यनभोभक्षे च स्तौतिका ।
रूपका दंष्ट्रका धूम्राक्षा ज्वाला तत्परत्र तु ॥५५॥
गान्धारा चाथ गगनेश्वरा माया महादिका ।
नित्या शान्ता तथा विश्वा कामुकोमा ततः परम् ॥५६॥
सुभगा च महालक्ष्मीर्विद्या मीनाऽमृता ततः ।
चण्डान्तरिक्षा सिद्धा च श्रद्धानन्ता च शम्बरा ॥५७॥
उल्का ततस्तु त्रैलोक्या भीमा वै राक्षसी ततः ।
मलिना च प्रचण्डा चानङ्गा विधिचरा ततः ॥५८॥
अथानभिहिता चाभिमहा वै सुन्दरी ततः ।
विश्वेश्वरा च कौला च तत्पश्चात्तु महेश्वरा ॥५९॥
महाकाला महादेवी तत्पश्चादभया स्मृता ।
विकारा च महापूर्वा सृकाला स्यात्ततः परम् ॥६०॥

---

भैरवान्तकाः सृष्टिवीरभैरवेत्यादि ॥५२॥

चतुस्तारम् । काम । रमा । माया । शक्तिः । इति स्पष्टम् । नामान्याह—मङ्गलेत्यादि ॥५३-५४॥

सूर्यभक्षा । नभोभक्षा । धूम्राक्षा ॥५५॥

महादिका महामाया । कामुका उमा ॥५६-५९॥

महापूर्वा महाविकारा ॥६०॥

पूता च शर्वरी व्योमा नाथाश्चाष्टगुणाष्टकाः ।
नाथान्ताः स्युर्महादेवीनाम्ना सिद्धाः प्रकीर्तिताः ॥६१॥
विद्या तु समयाख्या वै पुरैवोक्ता महेश्वरि ।
त्रिंशत्सहस्रसंख्याकपरीवारेण संयुतः ॥६२॥
पश्चिमाम्नायको जालन्धरपीठात्मकः शिवे ।
तुरीयाख्यां समारभ्य नवमुद्रावधीश्वरि ॥६३॥
मन्त्राः प्रोक्ताश्चाथ शृणु शेषमन्त्रान् महेश्वरि ।
वाग्भवं भुवनेशानी रमा बाला षडक्षरी ॥६४॥
बीरावलीमनुः प्रोक्तः पञ्चधा परमेश्वरि ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥६५॥
वीरावलीति संयुक्ता नामान्ते परमेश्वरि ।
विद्या तु समयाख्या वै पुरा प्रोक्ता महेश्वरि ॥६६॥
सहस्रद्वयसंख्याकपरीवारेण संयुतः ।
उत्तराम्नायकश्चोड्याणाख्यपीठात्मकः शिवे ॥६७॥
प्रसादा च पराद्या च द्वयं चैकत्र सङ्गतम् ।
पराप्रसादविद्यैषा प्रोक्ताम्नायक्रमे शिवे ॥६८॥

---

मङ्गलादिव्योमापर्यन्ता नाथान्ताः सिद्धाः । अष्टगुणाष्टकाश्चतुःषष्टिसंख्याः सिद्धाः । मङ्गलानाथेत्यादि ॥६१॥

पुरा पारायणे ॥६२॥

तुरीयादिवाग्वादिन्यन्ताः पञ्च मन्त्राः । पारायणे प्रोक्ताः । मुद्रानवकमन्त्र... षोडशे उक्ताः ॥६३॥

भुवनेशानी ह्रीं । अन्यत् स्पष्टम् ॥६४॥

तन्नामान्याह—ब्रह्मेत्यादि ॥६५॥

ब्रह्मवीरावलीत्यादि । पुरा पारायणे ॥६६॥

ओड्याणपीठात्मकः ॥६७॥

प्रासादा प्रासादपरा । पराद्या पराप्रासादा । पारायणक्रमे इमौ द्वौ मन्त्रौ,

पराप्रसादादिपराशाम्भवान्ताः प्रकीर्तिताः ।
मन्त्राश्चातः परं शेषमन्त्रान् शृणु महेश्वरि ॥६९॥
अकारादिक्षकारान्तं मालिनीमातृकामयी ।
उग्रं वीरं चाथ महाविष्णुं चाथ ज्वलं च तम् ॥७०॥
सर्वतो च मुखं पश्चान्नृसिहं भीषणं तथा ।
भद्रं वै मृत्युं मृत्युं नमाम्यहं रदनाक्षरः ॥७१॥
मन्त्रराज इति ख्यातः सर्वत्रायं सुगोपितः ।
बालाबीजत्रयं कादिविद्याकूटत्रयादिगम् ॥७२॥
अन्ते जयाक्रमाद्विंशद्वर्णः स्याद् गुरुमण्डले ।
आत्मा च परमात्मा च शाम्भवश्चापि तत्परम् ॥७३॥
चिन्मुद्रो वाग्भवो नीलकण्ठः सम्भ्रम एव च ।
चित्प्रसन्नश्च विश्वश्चाप्रकाशः स्वप्रकाशकः ॥७४॥
गुरुमण्डलकं देवि प्रोक्तं द्वादशसंख्यकम् ।
विद्या तु समयाख्या वै पुरा प्रोक्ता महेश्वरि ॥७५॥

---

आम्नायक्रमे तु एतद्द्वयम् एकत्र संगतं मिलितम् । पराप्रासादविद्येति एका प्रोक्ता ॥६८॥

पराप्रासादादि पराशाम्भवान्तास्त्रयो मन्त्राः । पारायणे प्रकीर्तिताः ॥६९॥

अकारादिक्षकारान्तं मातृकामयी इत्यनेन मातृकावद्बिन्दुयुतेत्यर्थः । तदुक्तं योगिनीतन्त्रे—"आदिक्षान्तं बिन्दुयुतं मालिनीमन्त्र उच्यते" इति । चाथ । चाथ । च ॥७०॥

च । पश्चात् । तथा । वै । इति त्यक्त्वा उग्रमित्यादि म्यहमित्यन्तं स्वरूपम् । रदन द्वात्रिंशत् ॥७१॥

कादिविद्यायाः कूटत्रये एकैककूटादौ एकैकं बालाबीजम् ॥७२॥

तस्या अन्ते अजपा हंसः । गुरुमण्डले विंशद्वर्णो विंशतिवर्णो मन्त्रः स्यात् । नामान्याह—आत्मेत्यादि ॥७३॥

चित् प्रसन्न इति द्वयम् । अप्रकाशः ॥७४॥

पुरा पारायणे ॥७५॥

एकसाहस्रसंख्याकपरीवारेण संयुतः ।
ऊर्ध्वाम्नायः शाम्भवाख्यपीठात्मक उदीरितः ॥७६॥
सेन्दुक्लिन्नास्थितो वह्निर्वायुर्व्यञ्जनरूपवान् ।
सेन्दुज्वाला सुन्दरी च शिवोऽहं सर्वबीजकः ॥७७॥
शिवसम्पुटबालान्त्यमहं सूर्याक्षरी त्वियम् ।
अनुत्तराम्नायसमया महासुन्दरी मता ॥७८॥

देव्युवाच

कथं भैरव संप्रोक्ता समयाख्याऽग्रतः प्रभो ।
अन्यत्रान्ते तु देवेश को हेतुर्वद शङ्कर ॥७९॥

भैरव उवाच

शृणु देवि प्रवक्ष्यामि रहस्यं सुमहत्तरम् ।
यन्न कुत्रचिदाख्यातं गोपनीयं विशेषतः ॥८०॥
शिवेन पञ्चवक्त्राणां पूर्वादिमुखतः क्रमात् ।
आम्नायानां पञ्चकं तु प्रोक्तं शक्त्यै महेश्वरि ॥८१॥

---

शाम्भवपीठात्मकः ॥७६॥

सेन्दुक्लिन्नास्थितो वह्निः ह्निं । अत्र क्लिन्नेति नित्यक्लिन्नाया नामैकदेशः । वायुर्व्यञ्जनात्मकः स् । सेन्दुज्वाला औं । अत्रापि ज्वालेति नामैकदेशः । एवं सुन्दरीत्यपि । सुन्दरी अः । शिवः अं । अहं स्वरूपम् । सर्वबीजको मुद्रा हसौः ॥७७॥

शिवसम्पुटबालान्त्यं अं सौः । अं । अहं । स्वरूपम् । सूर्य द्वादश । महासुन्दरीति नाम ॥७८॥

अन्यत्राम्नायान्ते समयविद्योक्ता । अत्र कुत आदाविति प्रष्टुं देव्युवाचेति । अत्रादौ कथने को हेतुः ॥७९॥

उत्तरं भैरव उवाचेति ॥८०॥

पञ्चवक्त्राणां मध्ये ॥८१॥

पृष्टः पुनः पराशक्त्या लोकानुद्धर्तुमिच्छया ।
अनुत्तरं महेशान ब्रूहि मे करुणानिधे ॥८२॥
तदा स भगवानाह करुणामूर्तिरव्ययः ।
महागोप्यमिदानीं वै लोकानुग्रहणेच्छया ॥८३॥
षष्ठाम्नायो महेशानि न क्वापि कथितो मया ।
साक्षाद्गुरोः करुणया लभ्यो नान्येन केनचित् ॥८४॥
त्रैवर्णिकैः पुण्यपुञ्जैर्गुरुसेवनतत्परैः ।
स्वच्छान्तःकरणैरेव प्राप्यतेऽन्यैर्न च क्वचित् ॥८५॥
इत्युक्त्वानुत्तराम्नायं प्रोक्तवान् परमेश्वरः ।
यत् साक्षान्मोक्षमार्गस्य कारणं परमेश्वरि ॥८६॥
तन्मन्त्राणां महत्त्वात्तु सर्वान्तस्थितिहेतुना ।
साक्षाच्छिवस्वरूपत्वात् संहारवपुषा स्थितेः ॥८७॥

---

अनुत्तरमाम्नायम् । ब्रूहीति पृष्ट इति योजना ॥८२॥

तदा प्रश्नानन्तरम् । एतावत्पर्यन्तं महागोप्यत्वेन स्थितमिति शेषः । इदानीं लोकानुग्रहणेच्छया ब्रवीमीति च ॥८३॥

अनुत्तराम्नायं स्तौति—षष्ठेत्यादि । अन्येन धनादिना ॥८४॥

त्रैवर्णिकैः अशूद्रैः । एवं च पादुकां षोडशीं विना शूद्रस्य संस्कारदीक्षैवेति त्रयोदशोक्तं सङ्गतम् । तत्र षोडशीपदं महाषोडशीपरत्वेन व्याख्यातम् । षोडश्या अनुत्तराम्नायगतत्वेऽपि विशिष्टाम्नायोपदेशाभावः सिद्ध एव । अन्यथाऽनुत्तराम्नायेऽनधिकारे सिद्धे पुनः पादुकां षोडशीं विनेति कथनासङ्गतिः । एवं च वैश्यवदस्य क्रमेणानुत्तराम्नायमन्त्राणानुपदेशो न, किन्तु अधिकारतारतम्येन । चरणादिन्यासार्थं तत्तन्मन्त्राः उपदेष्टव्या एव । वैश्यादपकृष्टत्वेन रहस्यादीनां नोपदेशः ॥८५-८६॥

एवं चानुत्तराम्नायमन्त्राणां महत्त्वादुत्कृष्टत्वादुत्कृष्टस्यान्ते निरूपणीयत्वेन सर्वान्तस्थितित्वहेतोः साक्षाच्छिवात्मकत्वेन संहाररूपत्वाच्च ॥८७॥

आदौ सा कथिता देवि गोपनीया ह्यतः सदा ।
षोडशी तु पुरा प्रोक्ता ततः पश्चाच्छृणु प्रिये ॥८८॥
कामबीजं कालसङ्कर्षिणी स्वाहा नवाक्षरी ।
चतुस्तारयुता वक्त्रे कालसङ्कर्षिणी त्वियम् ॥८९॥
ओघत्रयं चतुर्धा तु प्रोक्तं पूर्वं महेश्वरि ।
पूर्णाभिषेकयुक्तस्तु कुर्यादेतं शुभावहम् ॥९०॥
चरणानां चतुष्कस्य न्यासं तु परमेश्वरि ।
पुरा प्रोक्तांस्तु देवेशि षष्ठाम्नायगतान् शुभान् ॥९१॥
प्रातःकृत्यं तथा सन्ध्या भूशुद्ध्यादिकमेव च ।
दशधोक्तस्तथा न्यासः षष्ठाम्नायगतस्तथा ॥९२॥
सर्वविद्यानुस्मृतिश्च मुख्यविद्याजपस्तथा ।
चक्रराजार्चनं चैव प्रोक्तधर्मानुसेवनम् ॥९३॥

---

सा अनुत्तराम्नायसमया । महामन्त्राणामन्ते कथनीयत्वादनुत्तराम्नायं समयविद्याकथनेन समाप्यानन्तरं मन्त्राणां कथनम् । शिवात्मकत्वेन संहाररूपत्वाच्च विलोमेन कथनमिति भावः । अतः, यत एवमत्युत्तमः । एवं प्रसङ्गागतं समाप्य प्रकृतमाह—षोडशी त्विति । पुरा एकादशोल्लासे ॥८८॥

कामबीजं क्लीं । कालसंकर्षिणी स्वाहा स्वरूपम् । वक्त्रे आदौ ॥८९॥

ओघत्रयं दिव्यसिद्धमानवभेदात् । पूर्वं सप्तदशे चतुर्धा पराप्रसादादिभेदाद् विद्याचातुर्विध्येन चतुर्धा । एतद् वक्ष्यमाणं सर्वथाऽप्यसमर्थः कुर्यात् । समर्थेन तु "पश्चाम्बाद्यष्टकं चापि विन्यसेत्" इति, "दशधा न्यास आत्यन्तिक उदाहृतः" इति पञ्चदशोक्तेः ॥९०॥

तदेवाह—चरणानामिति । तुरप्यर्थे । पुरा प्रोक्तान् न्यासानपि ॥९१॥

प्रसङ्गात् साधकस्य समर्थस्य नित्यकृत्यं क्रमेणाह—प्रातरित्यादि । प्रातःकृत्यं गुरुध्यानादिस्नानान्तम् । भूशुध्यादीत्यादिना प्रागप्रतिष्ठान्तम् ॥९२॥

सर्वा आम्नायाद्यास्तत्तद्दीक्षासूपदिष्टा विद्याः, तासामनुस्मृतिः सकृत्कीर्तनम्, "अन्यान् मन्त्रान् सकृत्पठेत्" इति त्रिपुरार्णवात् । मुख्या विद्या तु दीक्षायां कलशे मुख्यत्वेन पूजिताः शुद्धविद्या बालाद्याः । यथा बालादीक्षायां गुरुत्रयगणपत्योरादावुप-

एतन्मुख्यं साधकस्य चान्यच्छ्रेयोवहं शिवे ।
चरणानां वासनां तु शृण्वोघक्रमतः शिवे ॥९४॥
अन्त्यबाणो वह्निरेफसर्गः शक्तिस्तथा जपा ।
विसर्गाद्यौ च तौ सोऽहं शक्तिः सर्गो द्वितीयकः ॥९५॥
हंसः सोऽहं शक्तिसर्गौ द्वितीयो हंस एव च ।
शिवः सोऽहं क्रमादेतच्चतुष्टयमुदीरितम् ॥९६॥

---

देशनात्तयोरपि मुख्यता । पञ्चदश्यास्तु मन्त्रदीक्षावत् षोडश्यभावो विशेषः । मन्त्र दीक्षायां तु मध्यकलशे नित्यास्त्रिकोणावरणान्तःपूजिताः षोडश्यादितिरस्कृत्यान्ताः सप्त । पूर्वप्राप्तक्रमानुरोधेन सर्वादौ गुरुत्रयम् । वशिन्यादीनां तु पूजितेषु न कथञ्चिन्मुख्यत्वम् । पूर्णदीक्षायां तु प्रागादिकलशेषु मध्ये मुख्यत्वेन पूजिताः शुद्धविद्यादिपराप्रासादविद्यान्ताः पञ्चपादुका महाषोडशी चेत्याम्नायोपदेशक्रमयुताः । तासां जपः पुरश्चरणे वक्ष्यमाणलक्षणश्चतुर्थे प्रोक्तसंख्यकः । आपत्तिषु विशेष उक्तस्त्रिपुरारहस्ये—"आपत्तिष्वथ रोगेषु पथि कार्यान्तरेषु च । यथाशक्त्या कर्म कुर्यात्तेन दोषो न विद्यते ॥"—जपस्तु न परित्याज्यः, 'सर्वथा तं समाचरेत् । अपवित्रः पवित्रो वा गच्छन् वापि स्थितोऽपि वा ॥ सुप्तो वाप्युपविष्टो वा मनसा वचसाऽपि वा । आपत्त्यादौ जपेनैव सर्वं कर्म कृतं भवेत् ॥" इति । प्रोक्तधर्माः धर्माष्टकम् । त्रयोदशे प्रोक्ताश्च । चकारात् स्तोत्रकवचसहस्रनामादिपाठः । तदुक्तं त्रिपुरार्णवे—"स्तोत्रं च कवचं नाम्नामावलिं चापि नित्यशः" इति । असमर्थस्य तु प्रागुक्तन्यासदशकं चक्रराजार्चने वक्ष्यमाणान्यतमप्रकारो ज्ञेयः ॥९३॥

अन्यत् पारायणन्यासकथामाहात्म्यवाचनादिकम् । एवं प्रसङ्गप्राप्तमुक्त्वा प्रकृतमाह—चरणेत्यादि । अत्र ओघक्रमत इत्युक्त्या आम्नाये प्रकृतचरणवासनाक्रमानुरुद्धक्रम ओघचतुष्टयस्य ज्ञेयः । आम्नायपुस्तकेषु पाठस्तु नैतत्तन्त्रानुरुद्धः । प्रोक्तौघगुरुचरणानां वासना मूर्ध्नि क्रियमाणा भावना । तत्रोपयुक्ता मन्त्राश्चरणवासनामन्त्राः ॥९४॥

अन्त्यबाणः सः । वह्निरेफसर्गः ह्रः । शक्तिः सौः । अजपा हंसः । विसर्गः अः । तदाद्यौ तौ ह्रः सौः । सोऽहं स्वरूपम् । शक्तिः सौः । सर्गः अः । द्वितीयः ह्रः ॥९५॥

हंसः सोऽहं स्वरूपम् । शक्तिः सर्गः द्वितीयः स्पष्टः । हंसः शिवः । सोऽहं स्वरूपम् । एवं क्रमादेतन्मन्त्रचतुष्टयमुदीरितम् ॥९६॥

बाणबाणाश्वनन्दार्णाश्चतुस्तारं मुखे भवेत् ।
प्रकाशचरणाभ्यां हृदेवमन्यत्र सर्वतः ॥९७॥
विमर्शश्चाथ आनन्दो ज्योतिष्पादस्ततः परम् ।
वह्निवायुस्पर्शयुतज्वालासर्गो मरुन्मुखः ॥९८॥
अङ्गदा बिन्दुसहिता द्वयं सर्गस्ततः परम् ।
शक्तिः सर्गस्ततो हंसः शिवः सोऽहमिति क्रमात् ॥९९॥
भूपक्षरामनागार्णाश्चतुस्तारं मुखे भवेत् ।
प्रकाशश्च विमर्शश्च द्वयं तद्वत् तुरीयकम् ॥१००॥
शक्तिशक्तिशक्तितारमायावर्मास्त्रमेव च ।
शक्तितारावघोरे च मायाबाणान्त्य एव च ॥१०१॥
घरमादथ घोरे च वह्निस्पर्शरतीन्दवः ।
घोररूपेऽथ माया च घोरान्मुखि च भीमभी ॥१०२॥

---

बाण पञ्च । अश्व सप्त । नन्द नव । एवं संख्यार्णाः प्रोक्तमन्त्रा मुखे आदौ । प्रकाशचरणाभ्यां स्वरूपम् । हृत् नमः । इति प्रथममन्त्रान्ते । अन्यत्र द्वितीयादिमन्त्रान्ते एवं वक्ष्यमाणरीत्या विमर्शचरणाभ्यां नम इत्यादि ॥९७॥

वह्निवायुस्पर्शयुतज्वालासर्गः ह्स्रौः । अयमेव मरुन्मुखः सकाराद्यः स्ह्रौः ॥९८॥

अङ्गदा बिन्दुसहिता औं । द्वयं ह्स्रौः स्ह्रौः । सर्गः अः । शक्तिः सौः । सर्गः अः । हंसः शिवः । सोऽहं स्वरूपम् ॥९९॥

भू एकम् । पक्ष द्वौ । राम त्रयः । नाग अष्टौ । इति चतुर्णां मन्त्राणां वर्णसंख्या । मुखे आदौ । तत्तन्मन्त्रान्ते प्रकाशचरणाभ्यां नम इत्यादि पूर्ववत् । द्वयं प्रकाशविमर्शौ । तुरीयकं प्रागुक्तचतुर्थं ज्योतिष्पादेति ॥१००॥

शक्तिः सौः । तार ॐ । माया ह्रीं । वर्म हुं । अस्त्रं फट् । शक्तितारौ माया स्पष्टम् । बाणान्त्यः सः । अघोरे स्वरूपम् ॥ १०१ ॥

घरमघोरे घोररूपे घोरमुखि भीमभी । स्वरूपम् । वह्निस्पर्शरतीन्दवः ह्लूं । माया ह्रीं ॥ १०२ ॥

षणि पश्चाद्वमद्वन्द्वं पिबद्वन्द्वं नभोङ्गदाम् ।
रर वै रुरु तारश्च मायास्त्रं चेति वै क्रमात् ॥१०३॥
भूचन्द्रभूतरामाब्धिवर्णा स्यात् क्रमतः शिवे ।
आनन्दचरणं देवि पराम्बात्रितयं तथा ॥१०४॥
अग्रमारभ्य मध्यान्तं वामेन तु क्रमान्न्यसेत् ।
शक्तितारौ तथा माया बिन्द्वाढ्यश्च प्रसादयुक् ॥१०५॥
मध्ये नमः शिवायेति पराप्रसाद एव च ।
शक्तितारौ तथा माया वर्मास्त्रं षोडशाक्षरी ॥१०६॥
महाद्यो मातृकानन्दनाथश्चानेन व्यापकम् ।
पराप्रसादविद्यायाश्चरणस्य तु वासना ॥१०७॥

---

षणि स्वरूपम् । वम पिब द्विः । नभः ह । अङ्गदा औ । अं स्वरूपम् । तेन हौं इति । रर रुरु स्वरूपम् । तार माया । अस्त्रं स्पष्टम् ॥ १०३ ॥

भू चन्द्र एकम् । भूत पञ्च । रामाब्धी त्रिचत्वारिंशत् । इति वर्णसंख्या । अत्र चरणपदसाम्यात् प्रागुक्तचरणन्यासवत् प्रकाशचरणाभ्यां नम इत्यादीनामन्ते प्रकाश-चरणश्रीपादुकां पूजयामि नम इति न्यसेत् । नामान्याह—आनन्दचरणमित्यादि । चरणपदानुरोधाद् अत्रापि अन्ते आनन्दचरणाभ्यां नम इति । पराम्बादीनां चरण-पदाभावान्नैतत् । आनन्दचरणपदानन्तरं पराम्बाया एव मन्त्रत्रयम् । अत्र वर्णसंख्या पूर्ववन्मन्त्रैकदेशस्यैव ज्ञेया ॥ १०४ ॥

प्रागुक्तचरणन्यासवदेवात्रापि प्रोक्तचतुष्कत्रयस्य अग्रवामदक्षकोणे मध्ये च वर्णत्रिकोणस्य त्रिखण्डमुद्रया न्यास इत्याह—अग्रमित्यादि । क्रमात् चरणन्यास-क्रमात् । शक्तिः तारः । माया स्पष्टम् । बिन्द्वाढ्यः प्रसादः प्रसादपरा ह्सौं । एतत् युक् द्विः ॥ १०५ ॥

प्रसादपरयोर्मध्ये । नमः शिवाय स्वरूपम् । पराप्रासादः स्हसौः । शक्तिः तारः । माया वर्म । अस्त्रं स्पष्टम् ॥ १०६ ॥

महामातृकानन्दनाथ इति नाम । उक्तस्थानचतुष्टये व्यापकम् । आम्नायपुस्तकेषु पराचरणेति नामैकदेशः ॥ १०७ ॥

कामराजाख्यविद्यायाः प्रोक्ता चरणवासना ।
लोपामुद्राख्यविद्याया एवमेव महेश्वरि ॥१०८॥
प्रकाशं च विमर्शं च द्वयं निर्वाणमेव च ।
लोपामुद्राख्यविद्याया भवेच्चरणवासना ॥१०९॥
परां विद्यां विसर्गं च मुखे निक्षिप्य विन्यसेत् ।
वेदवेदर्तुदिग्वर्णा लोपामुद्रावदीश्वरि ॥११०॥
इयं पराख्यविद्याया भवेच्चरणवासना ।
श्रीशाम्भवचरणविद्याः प्रोक्तास्तु महेश्वरि ॥१११॥
तद्वासनास्ततः कामकलाविद्यास्तथैव च ।
कूटत्रयान्ते सर्वान्ते शक्तिबीजं निवेशयेत् ॥११२॥
हंसः सोऽहं चोभयं च हंसान्त्यं शिवमध्यकम् ।
तद्द्वयं चेति शक्त्यादौ चैकैकस्मिन्निवेश्य च ॥११३॥

---

षोडशे प्रोक्ता। एवमेव कामराजविद्याचरणवासनावत् । कूटभेदस्त्वर्थसिद्ध एव ॥ १०८ ॥

रक्तशुक्लेत्यादौ विशेषमाह —प्रकाशमित्यादि। द्वयं प्रकाशविमर्शम् ॥ १०९ ॥

पराविद्यां सौः। विसर्गं अः। मुखे मन्त्रादौ कूटस्थाने वर्णसंख्यामाह—वेदेत्यादि। वेद चत्वारः। ऋतु षट्। दिक् दश। लोपामुद्रावत्। सौः अः इत्यस्यान्ते हंसः प्रकाश-चरणाभ्यां नम इत्यादि ॥ ११० ॥

एतस्या एव स्रोतश्चरणवासनेति तन्त्रान्तरस्थं नाम। पञ्चदशे प्रोक्ताः ॥१११॥

तद्वासना शाम्भवचरणवासना। तथैव पञ्चदशे प्रोक्ता। कामकलाविद्यानामेव तन्त्रान्तरानुरुद्धं परापादुकाक्रम इति नाम। कूटत्रयान्ते व्यष्टया। सर्वान्ते समष्टया। शक्तिबीजं सौः ॥ ११२ ॥

उभयं हंसः सोऽहम्। तद्द्वयं हंसः सोऽहं। एतद् हंसान्त्यं शिवमध्यकं हंसः शिवः सोऽहं हंसः इति । हंस इत्यादिचतुष्टयं शक्त्याद्यत्वविधानाय प्रागुक्तमेवानूदितं ज्ञेयम् ॥ ११३ ॥

रक्ताच्छुक्लान्मिश्रतश्च निर्वाणादपि पादुका ।
श्यामन्ते हृदयं चेति हादिविद्याविधावपि ॥११४॥
प्रकाशाच्च विमर्शाच्चोभयादपि महेश्वरि ।
चतुष्पादज्योतिष्मती शेषं पूर्ववदेव हि ॥११५॥
कादिहाद्योस्तु देवेशि पादुकाक्रम ईरितः ।
पारम्पर्यं तु संप्रोक्तं स्वात्मीकारविधौ शिवे ॥११६॥
प्रोक्ता तथैव च गुरोः पादुकापि महेश्वरि ।
सप्तविंशतिसंख्यानि रहस्यानि शृणु प्रिये ।
ध्यात्वा संपूज्य मनसा पञ्चभिः प्रपठेन्मनून् ॥११७॥
अकलङ्कं शशाङ्काभा त्र्यक्षा चन्द्रकलावती ।
मुद्रापुस्तकसद्बाहुः पातु मां परमा कला ॥११८॥
महीमूलभागोर्ध्वशक्त्यन्तरत्न-
प्रभाकीर्णसौवर्णपीठाधिरूढा ।
वमन्ती बहिर्विश्वमन्तश्च संवित्
परादेवताऽहंपरामर्शरूपा ॥११९॥

---

हृदयं नमः । क ४ हंसः सोः रक्तपादुकाभ्यां नम इत्यादि । हादिविद्याया विधौ विषयेऽप्येवम् ॥ ११४ ॥

तत्र विशेषमाह—प्रकाशादित्यादि । रक्तादिस्थाने प्रकाशेत्यादि । उभयं प्रकाशविमर्शः । निर्वाणस्थानं चतुष्पादज्योतिष्मतीति । शेषं पादुकाभ्यां नम इति । ह । ४ । हंसः सौः प्रकाशपादुकाभ्यां नम इत्यादि ॥ ११५ ॥

कामराजविद्याया लोपामुद्राविद्यायाश्चेमौ पादुकाक्रमौ । पारम्पर्यमिति महापादुकाया ओघः । त्रयोदशे संप्रोक्तम् ॥ ११६ ॥

तथैव त्रयोदशे गुरोः पादुका महापादुका । रहस्यमनून् । षट्चरणः श्लोकः ॥ ११७ ॥

ध्यानमेवाह— अकलङ्कमिति । कलङ्करहितशशाङ्कवदाभाऽङ्गकान्तिर्यस्याः । पुस्तं पुस्तकम् । मुद्रा चिन्मुद्रा । दक्षवामयोरायुधे । परमा कला पराशक्तिः ॥ ११८ ॥

एनामेव स्वात्माभेदेन ध्यातुं चिदात्मशक्तित्वेन वर्णयति—महीत्यादि । मही पृथ्वी । मूलं प्रकृतिः । माया षष्ठं तत्त्वम् । ऊर्ध्वशक्तिर्द्वितीयं तत्त्वम् । एतदन्तात्मकानि

स्वर्णे निर्मलवर्णरञ्जितमिदं तत्त्वावलीप्रोल्लस-
ज्जाग्रत्स्वप्नसुषुप्तितुर्यघटितैः पृथ्व्यादिशक्त्यन्तिमैः।
अण्डैर्मण्डितमाश्रिता विजयते पीठं विसर्गात्मकं
देवी सप्तदशी कलोदितपदं यन्मूर्ध्नि विश्वं सदा ॥१२०॥

---

रत्नानि। पृथ्वीप्रकृतिमायाशक्तीनां मुख्याण्डचतुष्टयप्रकृतित्वमित्यग्रिमश्लोके स्पष्टीभविष्यति। तेषां प्रभाभिः प्रभास्थानीयैर्जलादितत्त्वान्तरैराकीर्णं व्याप्तं खचितं सौवर्णं वक्ष्यमाणरीत्या स्वर्णमयं यत्पीठम्, तत्राधिरूढा नित्यसंबद्धा। बहिर्बाह्यदृष्टौ विश्वं प्रपञ्चं वमन्ती आभासयन्ती। अन्तः अन्तर्दृष्टौ संवित् शुद्धसंविदात्मना स्थिता। सर्वं हि जगद् बहिर्दृष्टीनामेव भेदेनेदमिति भासते। अन्तर्दृष्टीनां तु शुद्धचिद्रूपेणाहमित्येवान्तर्भासते। एतच्च स्पष्टमुक्तं प्रत्यभिज्ञायाम्––"मेयं साधारणं मुक्तः स्वात्माभेदेन मन्यते। महेश्वरो यथा बद्धः पुनरत्यन्तभेदवत् ॥" इति। स्पन्देऽपि––"तेन शब्दार्थचिन्तासु न साऽवस्था न यः शिवः" इति। भगवताऽपि गीतम्––"या निशा सर्वभूतानां तस्यां जागर्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥" इति। परामर्शरूपा विमर्शरूपा। अहमस्मीति स्वात्माभेदेन विभावनमुक्तम्। ११९॥

अत्र स्वर्णमित्यादिकं पीठस्य विशेषणम्। स्वर्णं सुष्ठु उचिततया अर्णा वर्णा वाचकपदघटका यत्र। इदमिति पीठस्य जगद्रूपेण वर्णनीयत्वात्तत्र सर्वे वर्णा वाचकघटकत्वेन सम्बद्धा एवेति भावः। निर्मलवर्णरञ्जितम्। निर्मलौ अविकृतौ सर्वकारणभूतौ यौ वर्णौ अहङ्कारौ, ताभ्यां रञ्जितं तद्रागयुक्तं तत्प्रकाशप्रकाश्यमिति यावत्। तथाहि विरूपाक्षपञ्चाशिकायाम्–"स्वपरावभासनक्षम आत्मा विश्वस्य यः प्रकाशोऽसौ। अहमिति स एक उक्तोऽहन्तास्थितिरीदृशी तस्य ॥" इति। श्रीभगवत्पादैरप्युक्तम्–'जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्" इति। इदं इदन्त्वेन भासमानम्। तत्त्वावलीप्रोल्लसत् तत्त्वानां षट्त्रिंशतामावली पङ्क्तिः, तया प्रोल्लसत् शोभमानम्। पृथ्वादिशक्त्यन्तेमानि पृथिवीप्रकृतिमायाशक्त्याख्यानि यानि, तैरण्डैर्मण्डितम्। यदुक्तं परमार्थसारे––"निजशक्तिवैभवभरादण्डचतुष्टयमिदं विभागेन। शक्तिर्माया प्रकृतिः पृथ्वी चेति प्रभावितं प्रभुणा ॥" इति। एतद्व्याख्याने श्रीमद्योगराजाचार्यैरेतद्वितत्य वर्णितम्। अण्डानां विशेषणं आग्रत्स्वप्नसुषुप्तितुर्यघटितैरिति। अत्र जाग्रदादिपदेन तदधिष्ठातारो ब्रह्मविष्णुरुद्रसदाशिवा उच्यन्ते। एतैर्घटितानि तत्तदण्डाधिपतिभिरधिष्ठितानीत्यर्थः। एतदपि प्रोक्तपरमार्थसारश्लोकव्याख्याने स्पष्टम्। विसर्गात्मकं सृष्टिरूपम्। कलोदितपदं कला हकारः, "हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः" इति रहस्यागमात्। तया उदितमुक्तं पदं स्थानम्। हकारस्य शक्तिवाचकत्वेन शक्तिरूपत्वाज्जगतः। यदुक्तं

सौवर्णपीठमारूढां जाग्रतीमग्रपृष्ठयोः ।
चिच्चक्रवर्तिमहिषीं वन्दे तां परदेवताम् ॥१२१॥

ब्रह्मेन्दुमण्डलनिविष्टचतुर्दशात्म-
त्र्यस्रालयां त्रिनयनां घनसारगौराम् ।
कन्यामयीं करधृतागमबोधमुद्रा-
माद्यां परां भजत चन्द्रकलावतंसाम् ॥१२२॥

---

रहस्यागमे—'शक्तिश्च शक्तिमांश्चेति पदार्थद्वयमुच्यते । शक्तयोऽस्य जगत्सर्वं शक्ति-मांस्तु महेश्वरः ॥' इति । एवंविधं पीठम् आश्रिता देवो विजयते । तस्या विशेषणं सप्तदशीति । सप्तदशी सप्तदशीनित्यात्मिका तुरीयेति यावत् । अथवा सप्तदशीकलोदित-पदमित्येकम् । सप्तदशी कला संवित्कला । यदुक्तं त्रिपुरारहस्ये—"द्वे कले तस्य नाथस्य कार्यता कर्तृतेति च । कार्यता स्यात् षोडशधा कर्तृता चैकरूपिणी ॥ इन्द्रियाणां तु दशकं भूतानां पञ्चकं तथा । अन्तःकरणमित्येवं कार्यता षोडशात्मिका ॥ कर्तृता स्यात् सप्तदशी कला नित्या महेशितुः । सा षोडशाग्रगीभूता संवित् सर्वस्य कारणम् ॥" इति । स्पन्दशास्त्रेऽप्येतत्संक्षिप्योक्तम्—'अवस्थायुगलं चास्य कार्यकर्तृत्वशब्दितम् । कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥" इति । भगवताप्येतद् भङ्ग्यन्तरेण गीतम्—"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥" इति । तस्या उदितं पदं स्थानं तस्या जगदुपादानकारणत्वात् । यन्मूर्ध्नि यस्या देव्या मूर्ध्नि मूर्धस्थानीये चित्प्रकाशे विश्वं सदा भासते इति शेषः । यदुक्तं चिद्विलासे—"स्वप्रकाशशिव एव भास्करस्तद्विमर्शविभवा मरीचयः । यैः स भासयति वेद्यमण्डलं तस्य पूजनमहन्तया स्थितिः ॥" इति । परमार्थसारेऽपि—"सर्वविकल्पविहीनं शुद्धं शान्तं लयोदयविहीनम् । यत्परतत्त्वं तस्मिन् विभाति षट्त्रिंशदात्म जगत् ॥" इति ॥१२०॥

प्राक्प्रतिपादितसौवर्णपीठमारूढाम् अग्रपृष्ठयोर्जाग्रतीम् । जाग्रत् ज्ञानम्, 'ज्ञानं जाग्रत्' इति शिवसूत्रात् । सर्वेषां जनानामग्रत एव ज्ञानं पृष्ठतस्त्वज्ञानमिति स्वसंवेदन-सिद्धमेव । इयं तु सर्वतो जाग्रती, अप्रतिबद्धज्ञानशक्तित्वात् । अथवाऽग्रमित्यपरोक्षं पृष्ठमिति परोक्षम् । यद्वाऽग्रमिति बहिः, पृष्ठमित्यन्तः । सर्वथापीयं सर्वज्ञा इति पर्यव-सितोऽर्थः । चिच्चक्रवर्ती परशिवः, तस्य महिषी मुख्यशक्तिः । यदुक्तं भगवत्पादैः—"महामाये विश्वं भ्रमयसि परब्रह्ममहिषी" इति ॥१२१॥

ब्रह्मात्मकं यदिन्दुमण्डलम् ऊर्ध्वसहस्रदलस्थितम्, तस्मिन्निविष्टं यच्चतु-र्दशात्म त्र्यस्रम्, तत्र कर्णिकायां चन्द्रबिम्बात्मिकायां त्र्यस्रं मातृकामयं

इति ध्यात्वा महेशानि मन्त्रानावर्तयेत् ततः ।
स्वराः समस्ताः स्पर्शास्तु व्यस्ता याद्याः समस्ततः॥ १२३॥
क्रियाज्ञानेच्छानन्दचिच्छक्तयः पञ्चसंख्यकाः ।
रूपान्ताः पञ्च सद्याद्याः सद्योजातोऽथ शङ्करि ॥१२४॥
वामदेवस्तथाऽघोरस्ततस्तत्पुरुषः शिवे ।
ईशान इत्यात्मकाच्छ्रीपरा भट्टारिका तथा ॥१२५॥
अम्बाश्रीपादुकां पूजयामि हृत् कीर्तयेत् क्रमात् ।
शक्तिबीजं सर्वतत्त्वं स्वरान्ते विनिवेशयेत् ॥१२६॥
चिदाद्याः शक्तयो देवि ईशानाद्या विलोमतः ।
कायन्तेषु क्रमाच्छक्तिं पृथिव्यादींश्च योजयेत् ॥१२७॥

---

प्राक् प्रतिपादितम् । तच्च जाग्रत्स्वप्नसुषुप्तितुर्यात्मकचतुर्दशारूपम् । मातृकाणां तदात्मकत्वात्, 'सुषुप्तिराद्याः काद्यास्तु स्वप्नो जाग्रच्च यादयः । अहङ्कारात्मकं तुर्यं तुर्यातीतं तु शून्यकम् ॥" इति योगिनीतन्त्रोक्तेः । मातृकाचक्रविवेकेऽपि भङ्ग्यन्तरेणोक्तमनुसन्धेयम् । तदेवालयः स्थानं यस्याः । घनसारः कर्पूरम्, तद्वद् गौरां कन्यामयीं कन्यात्मिकाम् । आगमः पुस्तकम् । बोधमुद्रा ज्ञानमुद्रा । वामदक्षयोरायुधे ॥ १२२ ॥

ध्यात्वा संपूज्य मनसेत्युक्तं प्राक् । तत्र ध्यानप्रकार एवमुक्तः—एवं ध्यात्वा पञ्चभिर्मानसैः संपूज्य । अत्र पूज्यदेवतानाम पराभट्टारिका, वक्ष्यमाणमन्त्रलिङ्गात् । मन्त्रानेवाह—स्वरा इत्यादि । षोडश स्वराः । समस्ता एकस्मिन्मन्त्रे । ततः स्पर्शाः कादिमान्ताः पञ्चविंशतिः । व्यस्ताः एकैकस्मिन् मन्त्रे । याद्याः समस्ता एकस्मिन् मन्त्रे इति सप्तविंशतिः ॥ १२३ ॥

रूपान्ताः पञ्च शक्तयः । क्रियाशक्तिरूपज्ञानशक्तिरूपेत्यादि । सद्यआदिपञ्चकमेवाह—सद्योजात इत्यादि ॥१२४॥

अघोर इति पञ्चकान्ते प्रत्येकम् । आत्मक श्रीत्यादि । आत्मकश्रीपराभट्टारिका स्वरूपम् ॥ १२५ ॥

अम्बां श्रीपादुकां पूजयामि स्वरूपम् । हृत् नमः । तत्र प्रथममन्त्रानुपूर्वीमाह—शक्तीति । शक्तिबीजं सौः । सर्वतत्त्वं स्वरूपम् । एतद्द्वयं स्वरान्ते ॥ १२६ ॥

चिदाद्याः पञ्च पूर्वोक्ताः शक्तयः । ईशानाद्यांश्च विलोमतो व्युत्क्रमेण निवेशयेदिति संबन्धः । अंअः सौः सर्वतत्त्वचिदानन्देच्छाज्ञानक्रियाशक्तिरूप-ईशानतत्पुरुषाघोरवामदेव-

समस्तपाद्यं ततस्तु नियत्यादिशिवान्तकम् ।
समस्तशक्तिं सद्यादिपञ्चकं चापि योजयेत् ॥१२८॥
सप्तविंशतिसंख्याता विद्याः स्युः परमेश्वरि ।
पञ्चाम्बा नवनाथाश्च मूलाः षोडशसंख्यकाः ॥१२९॥
षडाधाराः षडध्वाश्च दर्शनान्यपि षट् क्रमात् ।
वाग्देवतास्तथैवाष्टौ योगिन्यः षडपि क्रमात् ॥१३०॥
आत्मनः पादुका चापि प्रोक्ताः पूर्वं महेश्वरि ।
महावाक्यानि चत्वारि तदन्ते देवि कीर्तयेत् ॥१३१॥
अनुत्तराम्नाय एष प्रोक्तो विस्तरशः शिवे ।
इभचन्द्रौ नागपक्षौ चन्द्रनन्दौ खपक्षकौ ॥१३२॥
वसुचन्द्राविति शिवे संख्याः पूर्वादिषु क्रमात् ।
पञ्चाम्नायभवा संख्या प्रोक्तैवं तु महेश्वरि ॥१३३॥

---

सद्योजातात्मकश्रीपराभट्टारिकाम्बाश्रीपादुकां पूजयामि नम इति । द्वितीयादिमन्त्रानाह—काद्यन्तेष्विति । यथा कं सौः पृथिवीतत्त्वक्रियाशक्तिरूपसद्योजातात्मकश्री० इत्यादि ! तत्त्वानां शक्तीनां सद्यअदीनामेकैकं क्रमेण प्रतिमन्त्रं जपेत् ॥ १२७ ॥

एवं कादिमान्तं पृथिव्यादिपुरुषान्तं जातम् । ततो यादिसमस्तं दशकं तदन्ततः नियत्यादिकम्। यथा यं० क्षं नियतिकालरागविद्या० शक्तिशिवतत्त्वक्रियाज्ञानचिच्छक्ति-रूपसद्योजात० षेशानात्मकश्री० ॥ १२८ ॥

एवं सप्तविंशतिविद्याः स्युः । षोडशमूलविद्याः प्रोक्ता इति द्वितीयस्थेनान्वयः ॥ १२६-१३० ॥

पञ्चाम्बादि आत्मपादुकान्ताः पूर्वं चतुर्दशादिषु प्रोक्ताः । वेदचतुष्टयगतानि चत्वारि महावाक्यानि । तान्युक्तानि त्रिपुरारहस्ये—"प्रज्ञानं ब्रह्म तत्राद्यमहं ब्रह्मास्मि तत्परम् । तृतीयं तत्त्वमस्युक्तेऽयमात्मा ब्रह्म कीर्तितम् ॥" इति । तदन्ते आत्मपादुकान्ते ॥ १३१ ॥

अनुत्तराम्नायमुपसंहरति—अनुत्तरेति । पञ्चाम्नायानां प्रत्येकं मन्त्रसंख्यामाह—इभेत्यादि । इभचन्द्रौ अष्टादश १८, नागपक्षौ अष्टाविंशतिः २८, चन्द्रनन्दौ एकनवतिः ९१, खपक्षौ विंशतिः २० ॥ १३२ ॥

वसुचन्द्रौ अष्टादश १८ । पूर्वादिष्वाम्नायेषु क्रमादेवं मन्त्रसंख्याः ॥ १३३ ॥

एतत्ते देवि सर्वस्वं प्रोक्तं सर्वोत्तमोत्तमम्।
न वक्तव्यमभक्तेषु पुत्रेष्वपि कदाचन ॥१३४॥
दत्वा प्रमादाल्लोभाद्वा मोहादपि महेश्वरि।
शापं स्याद्योगिनीनां वै गोपनीयं ततः शिवे ॥१३५॥

इति श्रीपरमानन्दतन्त्रे अष्टादशोल्लासः ॥ १८ ॥

---

उपसंहरति—एतदिति। अत्युत्तमत्वादेव पुत्रेष्वपि न वक्तव्यमित्याह—न वक्तव्यमिति ॥ १३४ ॥

विपर्यये दोषमाह—दत्त्वेति। प्रमादोऽनवधानम्, मोहोऽज्ञानम्। यतः शापः स्यात् ततः ॥ १३५ ॥

सौभाग्यानन्दसंदोहे शलाकापद्यबोधके।
परमानन्दटिप्पण्यामुल्लासोऽष्टादशोऽभवत् ॥१८॥



# एकोनविंशोल्लासः

देव्युवाच—

महेश श्रोतुमिच्छामि पात्रसंस्थापने विधिम् ।
पूजाशेषं च देवेश वद विस्तरशो मम ॥१॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि पात्रसंस्थापने विधिम् ।
तथा पूजासमाप्तिं च सावधानेन चेतसा ॥२॥
आचम्य द्वारपूजां तु कुर्यादुक्तविधानतः ।
अन्तःप्रविश्य कृत्वा तु न्यासान् पूर्वोक्तवच्छिवे ॥३॥
देशकालौ समुल्लिख्य चाष्टाङ्गस्थितिमेव च ।
कामेश्वरीप्रीतयेति संकल्पं तु समाचरेत् ॥४॥

---

प्राक्प्रतिपादितपात्रस्थापनविधौ प्रकृते विशेषं पूजाशेषं च प्रष्टुं देव्युवाचेति । पूजाशेषः सामयिकपूजानन्तरं क्रियमाण उत्तरपूजाख्यः ॥ १ ॥

उत्तरं भैरव उवाचेति । पूजासमाप्तिः उत्तरपूजा ॥ २ ॥

प्राग्द्वारपूजायामनुक्तं विशेषमाह—आचम्येति । एतच्च सामान्यतः प्राप्तात् । एतद् द्वयं तु सर्वत्रेत्युक्तादाचमनादतिरिक्तम् , विधानसामर्थ्यात् । षष्ठे उक्तविधानतः । न्यासानिति भूशुद्ध्याद्युपलक्षणम् । इदं च सन्ध्याद्युत्तरं कथञ्चिद् भूशुद्ध्याद्यकरणाभिप्रायेणेति ज्ञेयम् । परे तु एवं सन्ध्यादिकं कृत्वा भूशुद्ध्यादिकमाचरेत् । अथवा पूजनस्यादौ द्वारपूजां ततश्चरेदिति योगिनीतन्त्रोक्तेर्नित्यसन्ध्योत्तरमेव भूशुद्ध्यादिन्यासान्तम् । सन्ध्योत्तरं नैमित्तिकाचमनकाले प्राप्ते तु द्वारपूजोत्तरमेव भूशुद्ध्यादिकमिति विकल्पव्यवस्थामाहुः ॥ ३ ॥

संकल्पमाह—देशकालाविति । एतत्प्रकारः पञ्चमे सन्ध्याप्रकरणे वितत्य व्याख्यातः । अष्टाङ्गेति । अत्र ऋतुनक्षत्रयोगकरणान्यपि प्रोक्तानि कालोत्तरवासनायाम्—"अष्टौ प्रोक्ताश्चाप्यृतवः श्रीकरी मोहिनीति च । कायिनी विमला तद्वद्धरिणी भ्रामणी तथा ॥ गौरी लक्ष्मी कुमारीति दीर्घस्वरमयी भवेत् । योगा आद्या लृतो भानि षड्विंशत् संख्यकानि वै । द्वादशैव ऋकारात्तु करणानि प्रचक्षते ॥" इति ॥ ४ ॥

संपाद्य पूजासामग्रीं ततः पूजां समारभेत् ।
महागणपतिं जप्त्वा समर्प्य प्रार्थयेदथ ॥५॥
विघ्नेश्वर नमस्तेऽस्तु भक्ताभीष्टफलप्रद ।
मया संप्रार्थितो विघ्नान् पूजायां विनिवारय ॥६॥
ततस्तिरस्कृतिं जप्त्वा द्वारे ध्यात्वा च पूजयेत् ।
विन्यस्य मूलं जप्त्वा तु भक्त्या शक्त्या महेश्वरि ॥७॥
मार्तण्डभैरवायार्घ्यं दद्यात् तन्मन्त्रमुच्चरन् ।
पात्राणि स्थापयद् देवि पूर्वोक्तविधिना शिवे ॥८॥

---

पूजासामग्री पूजोपकरणं गन्धपुष्पादि । तत्स्थानमुक्तं बृहद्वामकेश्वरे--"स्वदक्षपृष्ठकोणे तु पात्रं प्रक्षालनाभिधम् । स्वदक्षभागे पूजायाः सामग्रीमपि कल्पयेत् ॥" इति । प्रक्षालनपात्रं पात्रोच्छिष्टादिप्रक्षालनाय सम्पादितम् । ततः सामग्रीसम्पादनानन्तरम् । महागणपतिम् अष्टमोल्लासोक्तमष्टाविंशतिवर्णं मन्त्रम् । ऋष्यादिन्यासपूर्वकं जप्त्वा जपं समर्प्य अथानन्तरं प्रार्थयेत् । तद् ऋष्यादिन्यासप्रकारस्तु रुद्रयामले उक्तः—"गणकस्तु ऋषिश्छन्दो गायत्री निचृदादिका । गाङ्गीमित्यादि विन्यस्य ध्यायेत्तच्छृणु शङ्करि ॥ बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः । ध्येयो वल्लभया सपद्मकरयाश्लिष्टो ज्वलद्भूषया विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥" इति ।

बीजापूरः फलम् । रुजा त्रिशूलम् । अब्जः शङ्खः । व्रीह्यग्रं व्रीहिकलमः । स्वविषाणः स्वदन्तः । वामदक्षक्रमेणोर्ध्वादधःपर्यन्तं दशहस्तेषु । शुण्डायां रत्नकलशः । विघ्नो विघ्नेश्वरः ॥ ५ ॥

प्रार्थने मन्त्रमाह—विघ्नेश्वरेति ॥ ६ ॥

ततः प्रार्थनानन्तरम् । जप्त्वेति समर्पणस्याप्युपलक्षकम् । अत एव गणपतिवज्जपित्वेति पद्धतावुक्तम् । एतन्न्यासप्रकारोऽपि रुद्रयामले प्रोक्तः—"ऋषिरस्याहृश्यचरश्छन्दः स्यादुष्णगीश्वरि । ह्रां ह्रीमित्यादियोगेन विन्यस्य ध्यानमाचरेत् ॥ नीलं तुरङ्गमधिरुह्य विराजमाना नीलांशुकाभरणमाल्यविलेपनाढ्या । निद्रापटेन भुवनानि तिरोदधाना खड्गायुधा भगवती परिपातु भक्तान् ॥" इति । पूजागृहद्वारे पुष्पाद्यैः पूजयेत् । मूलं पञ्चदशीं न्यासादिसमर्पणान्तविधिना जप्त्वा । शक्त्येति महागणपत्यादावपि योज्यम् । शक्त्येति चतुर्थोल्लासे व्याख्याताष्टोत्तरशतार्धं वेत्यादि संख्या ज्ञेया ॥ ७ ॥

अर्घ्यं चाष्टमोक्तयवदूर्वादियुतम् । तन्मन्त्रं पञ्चमोक्तसूर्यमन्त्रम् । पूर्वोक्तविधिना स्वासनात्तु पुरोभागे इत्याद्यष्टमोक्तविधिना । देवतापीठसमीपे दक्षिणाद्युत्तरान्तं सामान्य-

हेतुकुम्भं तथा शङ्खं श्रीपात्रं गुरुपात्रकम् ।
बलिपात्रं पुरोभागे चात्मपात्रं महेश्वरि ॥९॥
विशेषार्घ्येण तुल्यं स्याच्छ्रीपात्रं चात्मपात्रकम् ।
तदर्धं गुरुपात्रादि कर्तव्यं तु महेश्वरि ॥१०॥
नित्ये नैमित्तिके काम्ये स्थापयेत् पञ्चपात्रकम् ।
हेतुं शङ्खं श्रियं तद्वद् गुरुं चापि बलिं तथा ॥११॥
अन्यत् सर्वं समानं स्याद् यथासंभवतः शिवे ।
अथवा नित्यपूजायां पूर्ववत्तु त्रिपात्रकम् ॥१२॥
नैमित्तिके त्वमुख्यं स्यादनुकल्पे द्विपात्रकम् ।
सामान्यार्घ्यं विशेषार्घ्यमिति पात्रस्य निर्णयः ॥१३॥

---

कलशादिमुद्रापात्रान्तं स्थापयेदित्यर्थः ॥ ८ ॥

प्रकृते विशेषमाह—हेतुकुम्भमित्यादि । अत्र प्रागुक्तविशेषार्घ्यस्थाने श्रीपात्रं गुरुपात्रं बलिपात्रमिति त्रयमात्मपात्रं चेत्येवापूर्वं विहितम् । एतेषु पात्रेषु क्रमविधानाय हेतुकुम्भशङ्खयोः प्रकृतेऽनुवादः । पुरोभागे श्रीपात्रात्मनोर्मध्ये विशेषार्घ्यात्मनोर्मध्ये इत्यष्टमोक्तेः ॥ ९ ॥

श्रीपात्रादीनां त्रयाणां मानमाह—विशेषार्घ्येणेति । हेतुकुम्भार्धमानं बिशेषार्घ्यस्य । तदर्धं श्रीपात्रार्धम् । आदिना बलिपात्रम् ॥ १० ॥

पञ्चपात्रमिति हेतुपात्रादिबलिपात्रान्तम् । तदेवाह—हेतुमित्यादि ॥११॥

अन्यत् सामान्यकलशः, द्वितीयतृतीयमुद्रापात्राणि । समानम् अष्टमोक्तवत् । द्वितीयतृतीययोरनुकल्पत्वे चैकमेव पात्रमित्यादिवक्ष्यमाणं द्योतयन्नाह—यथासंभवत इति । पक्षान्तरमाह—अथवेति । पूर्ववत् अष्टमोक्तवत् । त्रिपात्रकं हेतुकुम्भसामान्यार्घ्य-विशेषार्घ्यरूपम् ॥ १२ ॥

अमुख्यं नैमित्तिके त्रिपात्रं न मुख्यम् । एतेन नित्ये त्रिपात्रमपि मुख्यमित्युक्तं भवति । अनुकल्पे नारिकेलजलादौ । पूजोपयोगित्वेन गृहीते इति शेषः । पात्रद्वयमेवाह-सामान्यार्घ्यमिति । सामान्यार्घ्यं स्थापयेदिति सम्बन्धः । इति एवम् । पात्रस्य संख्या-निर्णयः ॥ १३ ॥

आलस्येनान्यथा वापि कृत्वा पात्रद्वयं शिवे ।
पूजाफलेन हीनस्तु विक्रियां लभते शिवे ॥१४॥
तस्मात् पात्रद्वयं देवि नैव कुर्यात् कदाचन ।
द्रव्यसंस्कारतः पश्चात् कलशे प्रजपेच्छिवे ॥१५॥
त्रिधा मूलजपस्थाने तिरस्करणिकां सकृत् ।
हेतुपात्रत्रिकोणे तु न्यासोक्तमनुनाऽर्चयेत् ॥१६॥
अमृतेशीजपान्ते तु दीपिनीं त्वष्टधा जपेत् ।
मूलविद्यां तु नवधा गोपालं गणनाथकम् ॥१७॥

---

अन्यत्र मुख्यद्रव्ये पात्रद्वयं निन्दति––आलस्येनेति । अन्यथा नास्तिक्यात् । विक्रियां विकारं रोगादिकम् ॥ १४ ॥

यस्मात् फलहानिर्विकारप्राप्तिश्च तस्मात् । "एकपात्रं न कुर्याद्वै यदि साक्षात् कुलेश्वरः" इत्यादिकुलार्णवादिवचनेष्वपि एकपात्रमिति सामान्यार्घ्यविशेषार्घ्योभयपरमेव, अन्यथा सामान्यार्घ्याभावे समर्पणाद्यनुपपत्तेः, एकपात्रमित्यस्य विशेषद्रव्यपात्रपरत्वे-नोपपत्तेश्च । अत एव 'श्रीपात्रसंस्थितं हेतुं न दद्याद् भैरवाय च" इति तदग्रिमग्रन्थस्य पुरुषाणां सामयिकपूजाङ्गत्वेन प्राप्तश्रीपात्रद्रव्यनिषेधकस्य सामञ्जस्यम् । अन्यथा द्विपात्रपक्षेऽप्येतद्दोषस्य सुस्थितत्वादेकपात्रे एवैतद्दोषासंगतेः । सुस्पष्टमुक्तं त्रिपुरार्णवे–– "विशेषार्घ्यान्न वी णां शक्तीनां हेतुपात्रतः । ततो निषिद्धमन्यत्र प्रोक्तमप्येकपात्रकम् ॥" इति । ननु परशुरामसूत्रवामकेश्वरादिषु पात्रद्वयविधानं विरुध्येतेति चेच्छृणु—अग्रिमो-ल्लासेऽनुकल्पपूजायां पात्रद्वयस्यैव सुस्पष्टं वक्ष्यमाणत्वादनुकल्पपूजापरम् । अत एव तत्र शापमोचनमन्त्राणामभाव इत्यपि सुवचम् । अथवा आत्मयोगाभ्यासिपरम् । अत एव त्रिपुरार्णवे—"आत्मयोगपराणां तु नाङ्गलोपेन हीयते" इत्युक्तम् । अत एव श्रीभास्कररायैः एकपात्रादिसंक्षेपपूजनमभ्यासशीलानामिति सेतुबन्धे निरूपितम् । अथवा परमापत्पक्षो वा । तदुक्तं स्वतन्त्रे––"प्रत्यक्षे युग्मपात्रं वै कृत्वा शापमवाप्नुयात् । क्वचिन्मयैवोपदिष्टः परमापत्तिकालिकः ॥" इति । योगिनीहस्तादासादिते कलशे ॥१५॥

मूलतः त्रिधा प्रजप्येत्यष्टमोक्तत्रिधामूलजपस्थाने तिरस्करणिकां सकृत्प्रजपेदिति सम्बन्धः । वर्णत्रिकोणाद् बहिःस्थिते हेतुपात्रत्रिकोणे । कामेश्वर्यादिचतुष्टयम् । पञ्चदशे कामेश्वर्यादिन्यासोक्तैः ऐं क ४ । अग्निचक्रे इत्याद्यैः ॥ १६ ॥

अत्र अखण्डैकेत्यादि मन्त्रजपस्तु त्रयोदशोक्तस्वात्मीकारविधौ बीजकूटोभय-युक्तस्यैव निरूपणाद्योग्यतया प्रकृतेऽपि तथैव ज्ञेयः । पञ्चधा अमृतेशीजपानन्तरं चतु-

बटुकं चान्नपूर्णां च सकृदावर्तयेच्छिवे ।
धेन्वा स्पृष्ट्वा हेतुपात्रं यो न्यासं छादयेदपि ॥१८॥
धेनुयोनी प्रदर्श्यैव शेषं पूर्ववदाचरेत् ।
विशेषार्घ्यवदेवेह श्रीपात्रादिकमर्चयेत् ॥१९॥
मूलाष्टकं तथा बालां श्रीपात्रे गुरुपात्रके ।
पादुकां बलिपात्रे तु बटुकं प्रजपेच्छिवे ॥२०॥
आत्माष्टाक्षरविद्यां तु प्रजपेदात्मपात्रके ।
अथ पीठाभ्यर्चनं तु कुर्याद् देवि समाहितः ॥२१॥
कामः कृष्णाय गोविन्दाय गोपीजनवल्लभा ।
य मूर्धाऽष्टादशार्णोऽयं गोपालस्य मनुः स्मृतः ॥२२॥
इति प्रोक्तो महेशानि पात्राणां स्थापने विधिः ।
अथ वक्ष्ये चोत्तरां तु पूजां शृणु समाहिता ॥२३॥

---

र्दशोक्तां दीपिनीमष्टधा जपेत् । क्रमद्योतनाय मूलविद्यां तु नवधेत्यनुवादः । गोपालं गणनाथं बटुकमन्नपूर्णां सकृदावर्जयेदित्यन्वयः ॥ १७ ॥

कुर्याद्धेत्वादिकमित्यत्र विशेषमाह--धेन्वेत्यादि । धेन्वा धेनुमुद्रया । योन्या महायोनिमुद्रया ॥ १८ ॥

धेनुयोनिमुद्रे प्रदर्श्य । अत्र स्पर्शनाच्छादनप्रदर्शनं तत्तद्बीजं पठन्निति ज्ञेयम् । शेषं सुधादेवीपूजनम् । विशेषार्घ्यवत् आधारपात्रद्रव्येष्वग्निसूर्यसोमकलाः । हेतुपात्रद्रव्येणापूरणम् । आदिना गुरुबल्यात्मपात्राणि ॥ १९ ॥

मूलाष्टकमित्यनुवादः समुच्चयार्थः । बालां सकृत् श्रीपात्रे गुरुपात्रे महापादुकाम् ॥ २० ॥

अथ एवं पात्रस्थापनानन्तरम् ॥ २१ ॥

गोपालमन्त्रमाह—काम इति । कामः क्लीं । कृष्णायेत्यादि वल्लभायेत्यन्तं स्वरूपम् । मूर्धा स्वाहा ॥ २२ ॥

प्रथमप्रश्नार्थमुपसंहरति--इतीति । द्वितीयप्रश्नोत्तरं वक्तुमाह—अथेति ॥ २३ ॥

आवृत्त्यनन्तरं देवि नैवेद्यान्तं तु पूर्ववत् ।
चित्पात्रेति तु संप्रार्थ्य ध्यायेत् पश्चान्महेश्वरीम् ॥२४॥

ब्रह्मेशाद्यैः सरभसमभितः सूपविष्टैः समेता
सिञ्जद्बालव्यजननिकरैर्वीज्यमाना सखीभिः ।
नर्मक्रीडाप्रहसनपरा पङ्क्तिभोक्तॄन् हसन्ती
भुङ्क्ते पात्रे कनकघटिते षड्रसान् चिद्विलासा ॥२५॥

जपेदात्मस्वरूपं तु ततः कामकलात्मकम् ।
समर्प्यैशदिशाभागे हावयेत् परदेवताम् ॥२६॥

देवतायाः पूजनान्तमग्नौ कृत्वा ततः परम् ।
अग्नये मूलदेव्यै त्रिस्तिथिनित्यां च षोडशीम् ॥२७॥

गुरुत्रयं षडङ्गं च न्यासप्रोक्तं महेश्वरि ।
कामेश्वर्यादिकं पश्चात् त्रयं मूलं तदन्ततः ॥२८॥

---

एवं पात्रस्थापनान्ते पीठपूजादि आवृत्तिपूजान्तं नैवेद्यान्तं च कृत्वा चित्पात्रेति पूर्ववत् संप्रार्थ्य ध्यायेदित्यन्वयः । प्रागनुक्तं ध्यानप्रकारं वक्तुं ध्यायेदित्यनुवादः ॥ २४॥

तत्प्रकारमेवाह—ब्रह्मेति । सरसं यथा तथा हसन्तीत्यन्वयः । सिञ्जन्तः शब्दं कुर्वन्तो ये बालव्यजननिकराः चामरव्यजनसमूहास्तैः । नर्म परीहासः । चितो विलासो विमर्शस्तद्रूपा ॥ २५ ॥

आत्मस्वरूपं कामकलात्मकं ध्यायन् इति शेषः । ध्यायन् जपेदित्यन्वयः । कामकलास्वरूपं तु एकादशे वितत्य निरूपितम् । तत्र कामकलाया यत्परं रूपं पूर्णाहन्तात्मकं तद्रूपमात्मानं विद्वान् ध्यायेत् । अविदितदेहाद्यतिरिक्तात्मभावोऽविद्वांस्तु कामकलाया यत्स्थूलं रूपं बिन्दुत्रयत्रिकोणात्मकं तद्रूपं स्वात्मनः स्थूलं देहं बिन्दुमुखात्मकः सर्ग इत्यादिदेवतास्थूलरूपध्यानवद् ध्यायेत् । एतदुक्तं त्रिपुरार्णवे—"सूक्ष्मध्यानेऽसमर्थश्चेत् स्थूलं ध्यायेद् यथोक्तवत्" इति । जपं समर्प्य ॥ २६ ॥

होमे विशेषमाह—देवताया इति । उल्लेखनादि वह्नौ देवतापूजान्तं दशमोक्तवत् कृत्वा अग्नये सकृत् । चकारात् षोडशीं नित्यामिति ॥ २७ ॥

षडङ्गदेवताहोमेऽपि तिथिनित्यादिवदावरणपूजोक्तमन्त्रप्राप्तौ तं निषेद्धुमाह—न्यासप्रोक्तमिति । हृदयाय नमः स्वाहेत्यादित्रयम् । मूलमिति पृथगुल्लेखान्नात्र चतुर्थो

समस्तयोगिनीविद्यामेवं विंशतिधा हुनेत् ।
ततस्तु बलिपूजां वै कुर्यात् पूर्वोक्तवत् क्रमात् ॥२९॥
उत्तरस्यां सर्वभूतान् राजराजेश्वरं ततः ।
पूजयेद् बलिना देवि मण्डलादि तु पूर्ववत् ॥३०॥
तारो माया सर्वविघ्नकृद्भ्यः सर्व च भू च ते ।
भ्यो हूं मूर्धा सर्वभूतेभ्य एष बलिर्न मम ॥३१॥
अष्टाविंशाक्षरो ह्येष सर्वभूतबलेर्मनुः ।
क्षेत्रनाम क्षेत्रपाल राजराजेश्वरात् ततः ॥३२॥
इमां पूजां बलिं गृह्णद्वयमग्निप्रिया तथा ।
द्वाविंशार्णः समुद्दिष्टो राजराजेश्वराख्यकः ॥३३॥
अङ्गुलीनां पञ्चकेन मध्यमाङ्गुष्ठयोगतः ।
भूता ये विविधाकारा दिव्या भूम्यन्तरिक्षगाः ॥३४॥

---

न्यासोक्तमन्त्रः । किन्तु केवलं स्वाहान्तमूलेन होमः ॥ २८ ॥

समस्तयोगिनीविद्यां त्रयोदशोक्तयोगिनीसमष्टिविद्याम् । ततः होमानन्तरम् । पूर्वं दशमे उक्तवद् वटुकादिगणपत्यन्तबलिचतुष्टयं कुर्यात् ॥ २९ ॥

विशेषमाह—उत्तरस्यामिति । उत्तरस्यां बटुकगणपत्योर्मध्ये । सर्वभूतान् ततः सर्वभूतेभ्य उत्तरस्याम् इत्यावृत्या योजयेत् । राजराजेश्वरं बलिदानेन पूजयेत् । मण्डलादिकं दशमवदेव । आदिना पूजनादि ॥ ३० ॥

मन्त्रमाह—तार इति । तारः ॐ । माया ह्रीं । च । च । आत् । इति त्यक्त्वा । सर्वेत्यादि ममेत्यन्तं स्वरूपम् । मूर्धा स्वाहा ॥ ३१ ॥

अष्टाविंशत्यक्षरः । राजराजेश्वरमन्त्रमाह—क्षेत्रेति । क्षेत्रनाम काशी प्रयागेत्यादि आत्ततः ॥ ३२ ॥

एतत् त्यक्त्वा क्षेत्रपालेत्यादि बलिमित्यन्तं स्वरूपम् । गृह्ण द्विः । अग्निप्रिया स्वाहा । राजेश्वर इमामित्यसन्धिः । द्वाविंशत्यर्णः । राजराजेश्वर इत्याख्या यस्य मनोः ॥ ३३ ॥

बलिमुद्राद्वयं क्रमेणाह—अङ्गुलीनामिति । प्रार्थनामन्त्रावपि क्रमेणाह—भूता इति ॥ ३४ ॥

पातालतलसंस्थाश्च शिवयोगेन भाविताः ।
क्रूराद्याः शतसंख्याकाः पाखण्डाद्या व्यवस्थिताः ॥३५॥
ध्रुवाद्याः सत्यसन्धाश्चापीन्द्राद्याशाव्यवस्थिताः ।
तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ॥३६॥
अनेन बलिदानेन बटुवर्गसमन्वितः ।
राजराजेश्वरो देवः सर्वदा मे प्रसीदतु ॥३७॥
बलिपात्रगतैर्द्रव्यैर्बलिपूजां समाचरेत् ।
आरार्तिकान्ते संपूज्य श्रीगुरोर्गुरुपात्रतः ॥३८॥
दद्याद्वा तत्समानाय स्वस्मिन् वा विनियोजयेत् ।
बटुकाय बलेः पात्रात् पूजनं प्रोक्तरीतितः ॥३९॥

---

शिवयोगः शिवे चित्तनिरोधः । क्रूराः प्राखण्डा इति भूतानां नाम ॥ ३५ ॥ ध्रुवादिकमपि नाम ॥ ३६-३७ ॥

प्राग्विशेषार्घ्यद्रव्यैः पूजनमुक्तम्, प्रकृते विशेषमाह—बलिपात्रेति । बलिपूजां बटुकादिसकलबलिपूजाम् । बलिविसर्जनाद्यारार्तिकान्तं दशमोक्तवत् । तत्र दशमे चकारेण सूचितां गुरुपूजामाह—श्रीगुरोरिति । गुरुपात्रतो दद्यादित्यन्वयः ॥ ३८ ॥

परमगुर्वादिसान्निध्ये तस्यैवादौ पूजनम्, तदाज्ञया वा गुरोः पूजनम्, 'गुरोः गुरौ समीपस्थे प्रगुरुं पूजयेच्छिवे" इति त्रयोदशे निरूपणात् । त्रिपुरार्णवेऽपि—"न स्वीकुर्यात् पूजनं वै गुरूणां सन्मुखे क्वचित् । तेषामाज्ञां विना देवि त्वन्यथा गुरुघातकः ॥" इति । गुरूणामसान्निध्ये आह—तत्समानायेति । एतदपि तत्रैवोक्तम्—"असान्निध्ये गुरूणां तु पूजयेत्तत्समान् शिवे" इति । तत्समा अपि तत्रैवोक्ताः—"गुरोः कनिष्ठाः स्वज्येष्ठास्तथा पुत्रादिका अपि । प्रोक्ता गुरुसमास्तांस्तु गुरुस्थाने प्रपूजयेत् ॥" इति । पुत्रादिका अपि तथा गुरोः कनिष्ठाः स्वस्माज्ज्येष्ठा इति तदर्थः । आदिना भ्रात्रादयः । गुरुज्येष्ठास्तु गुरव एवेत्यत्र वचनं त्रयोदशे उदाहृतम् । गुर्वादिपत्न्यस्तु स्वस्मात् कनिष्ठा अपि सुवासिन्यो गुरुरूपिण्य एव । तदपि तत्रैवोक्तम्—'गुर्वादि पूर्वपूर्वेषां पत्नी स्यात् सधवा यदि । स्वज्येष्ठा वा कनिष्ठा वा गुरुपूजां समर्हति ॥" इति । अत्र गुरुसमेषु स्वज्येष्ठेषु गुरुकनिष्ठत्वविशेषणाद्विद्यासम्बन्धेनैव स्वज्येष्ठाः, न तु योनिसम्बन्धमात्रेण, कथञ्चित्कनिष्ठस्य गुरुपूजानर्हत्वात् । यदुक्तं बृहद्वामकेश्वरे—-योन्या वा विद्यया वापि कनिष्ठेन गुरुं यजेत्" इति । विद्यायोनिसंबन्धश्च त्रयोदशे व्याख्यातः । तथा गुरोः कनिष्ठो वा ज्येष्ठो

सुवासिन्यै दर्शयेद्वै त्रयोदशविधाः शिवे ।
ध्यायेत् कामकलारूपं जपादौ परमेश्वरि ॥४०॥

---

वा स्वज्येष्ठोऽपि योनिसम्बन्धात् स्वकनिष्ठो यस्तं न गुरुस्थाने पूजयेत् । तदपि तत्रैवोक्तम्--'गुरोर्ज्येष्ठः कनिष्ठो वा स्वावरो यदि योनितः । गुरुप्रतिनिधिर्नैव कदापि भवतीश्वरि ॥" तत्समस्याप्यसान्निध्ये आह—स्वस्मिन् वेति । एतत्प्रकारोऽप्युक्तस्तत्रैव—'गुर्वादीनामभावे तु ध्यात्वा तान् स्वकलेवरे । समर्प्य मनसा तस्य शेषबुद्धया हुनेत् स्वयम् ॥" इति । अत्र गुर्वादीनामित्यादिना बटुकादिग्रहणम् । मूले गुरुसाहचर्यादेव बटुकाद्यभावेऽप्येवमित्ययमर्थो द्योतित एव । एवं गुर्वादिपूजामाहात्म्यमपि तत्रैवोक्तम्—'निर्वर्त्य श्रीक्रमं सम्यग् गुरवे शिवरूपिणे। शक्त्यै च श्रीमहाराज्ञीरूपायै भक्तितोऽर्चयेत् ॥ बलिपात्रं प्रदद्याद्यस्तेन दत्तं न किं भवेत् । इष्टास्तेन मखाः सर्वे दत्ताश्चाखिलदक्षिणाः ॥" इति । कुमार्यै प्रागुक्तक्रमेण श्रीपात्रादेव । बटुकाय विशेषमाह—बलेः पात्रादिति । दशमे प्रोक्तरीत्या पूजनं गुर्वादीनाम् ॥ ३९ ॥

प्रोक्तवत् सुवासिन्यावाहनादिपुष्पाञ्जलिप्रदानान्तम् । मुद्राप्रदर्शने विशेषमाह—त्रयोदशविधा इति । मुद्रा इति शेषः । संक्षोभिण्यादिबाणमुद्रान्ताः षोडशोक्ताः । पूजायां सुवासिन्या आवश्यकत्वमुक्तं कुलार्णवे—"तस्मात् सुलक्षणां शक्ति गन्धपुष्पाक्षतादिभिः । अभ्यर्च्य देवताबुद्ध्या पात्राणि विनिवेदयेत् ॥" इति । तदभावे दोषोऽपि तत्रैवोक्तः—"अनिवेद्य तु यः शक्त्यै कुलद्रव्यं निषेवते । पूजनं निष्फलं देवि देवता न प्रसीदति ॥" इति । त्रिपुरार्णवेऽपि—"सुवासिनीमसंपूज्य पूजनं वै निरर्थकम् । तस्मात् यथाकथञ्चिद्वा संपूज्यादौ सुवासिनी ॥" इति । यथाकथञ्चिदित्यनेन यथोक्तलक्षणहीनां वा मण्डलाद् बहिर्वा दूरे स्थितां वा पूजयेत् । अत एव सुवासिनीनां मण्डलनियमाभावस्तत्रैवोक्तः—' मण्डलाद् बाह्यतो यस्तु कुलद्रव्यं निषेवते । पशुपानं तेन कृतं सत्यं देवि ब्रवीमि ते ॥ मण्डलाद् बाह्यतोऽप्येताः सुवासिन्यस्तवांशजाः । निषेवन्त्यः कुलद्रव्यं न दोषं प्राप्नुवन्ति ताः ॥" इति । अत एव—'असान्निध्ये सुवासिन्या मनसा तु यथाविधि । संपूज्योद्दिश्य तां तत्र त्यजेद् द्रव्यं यथाविधि ॥" इति तत्रैवोक्तम् । सर्वथा सुवासिन्यलाभेऽपि तत्रैवोक्तम्—"तद्रूपां देवतां ध्यात्वा पूजयित्वा यथाविधि । संतर्प्य चाष्टवारं तु शेषं भाव्य हुनेत् स्वयम् ॥" इति । सा च सुवासिनी दीक्षायुता मुख्या । केवलमन्त्रोपासनावती मध्यमा । मन्त्रहीना निकृष्टा। एतदपि त्रिपुरार्णवे उक्तम्—"शक्तिपूजाविधाने तु दीक्षावत्युत्तमा स्मृता । सर्वलक्षणहीनाऽपि दीक्षायुक्ता प्रशस्यते ॥ अभावे केवल मन्त्रवती पूज्या महेश्वरि । सापि चेल्लभ्यते नैव तदा पूज्या हि केवला ॥" इति। तस्याः सद्यः संस्कारोऽपि तत्रैवोक्तः—"तां तु संस्कृत्यैव सद्यः पूजयेत् तद्विधिं शृणु। मूलेन शङ्खतोयेन प्रोक्ष्य तस्याः स्तनौ न्यसेत् । मूर्ध्न्यास्ये हृदये नाभौ श्रियं तत्त्वत्रयं

प्रणम्य च ततो देवीं भक्त्या सम्यक् क्षमापयेत् ।
भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ॥४१॥
त्वयि जाताऽपराधानां त्वमेव शरणं शिवे ।
अपराधो भवत्येव सेवकस्य पदे पदे ॥४२॥
कोऽपरः सहतां लोके केवलं स्वामिनीं विना ।
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ॥४३॥
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि ।
इति नत्वा बहुविधैर्देवतां तु क्षमापयेत् ॥४४॥
छत्रादिषट्कं पश्चात्तु नृत्यान्तं परिकल्पयेत् ।
समर्पणाद्यावृत्तीनां लयान्तं पूर्ववद् भवेत् ॥४५॥

---

क्रमात् । प्रजपेद्दक्षकर्णे तु सकृत्तस्याः श्रियं शिवे ॥" इति । श्रियं श्रीबीजम् । श्रीनम इत्यादि प्रागुक्तवत् पुष्पादिभिर्न्यसेत् । अत्र गुर्वादिषु बहुषु सत्सु एकत्रैव गुरुपूजाद्यं कर्तव्यम्, नानेकेषु । तदपि तत्रैवोक्तम्— 'समवाये बहूनां तु एकत्रैवोत्तमे शिवे । गुरुपूजां शक्तिपूजां कुर्यान्न त्वखिलेष्वपि ॥" इति । ततः पुष्पाञ्जल्यादिन्यासानन्तरं जपादौ कामकलारूपं देवतास्वरूपमेकादशोक्तवद्ध्यायेत् ॥४०॥

ततो जपसमर्पणादिप्रणामान्ते क्षमापने विशेषं वक्तुं प्रणम्येत्यनूदितम् । तत्र प्रणाममन्त्रे कुमारकामेश्वराङ्केत्यत्र योग्यत्वाद्राजराजेशवामाङ्केति पद्धतिकृदुक्तं ज्ञेयम् । क्षमापनविधिमाह—भूमावित्यादि । यथा भूमिरवलम्बनं तथा त्वमेव शरणमिति योज्यम् ॥४१-४२॥

स्वामिनीं त्वां विना ॥४३॥

इति बहुविधैरन्यैरपि स्तोत्रैः । एतद् बालाप्रकरणेऽपि योजयितुं युक्तम् ॥४४॥

उपचारेषु प्रार्थनमिति यदुक्तं तदेवेदं क्षमापनं न त्वन्यदिति द्योतनाय प्रार्थनानन्तरोपचाराननुवदति—छत्रादीति । प्रार्थनस्य पश्चात् । नृत्यान्तं छत्रादिषट्कम् । समर्पणमन्त्रे श्रीबालायै इत्यत्र श्रीमहात्रिपुरसुन्दर्यै इति । आवृत्तीनां लयान्तं रश्मिरूपेति पुष्पाञ्जल्यन्ते आवृत्तीनां मूलदेव्यां लयध्यानान्तम् । रश्मिरूपेति मन्त्रे बालासुन्दरीति स्थाने श्रीसुन्दरीति संयोज्य पादपूर्त्यर्थं पद्धतौ ता इत्यन्ते प्रोक्तम् । पूर्ववत् दशमवत् ॥४५॥

खेचरीं तु प्रदर्श्याथ तेजोरूपां विभावयेत् ।
शेषिकाबलिदानं तु श्रीपात्रादेव वै भवेत् ।।४६।।

विशेषार्घ्यस्य होमे तु पादुकामपि कीर्तयेत् ।
शेषं प्रियाय शिष्याय दद्याद् भक्ताय सुव्रते ।।४७।।

शान्तिस्तवं प्रवक्ष्यामि शृणु संयतमानसा ।
समस्तदोषशान्त्यर्थं देवताप्रीतये तथा ।
पूजायां जातदोषाणां शान्तिः स्याद्यस्य पाठतः ।।४८।।

जयन्तु देव्यो हरपादपङ्कजं
प्रसन्नधामामृतमोक्षदायकम् ।
अनन्तसिद्धान्तमतिप्रबोधनं
नमामि चाष्टाष्टकयोगिनीगणम् ।।४९।।

---

अथ लयभावनानन्तरम् । खेचरीं मुद्राम् । क्रमद्योतनाय तेजोरूपामित्यनुवादः । अथ प्राधान्याभिप्रायेण शेषिकाध्यानं तन्त्रान्तरस्थं मातङ्गीं नवेत्यादि पद्धतावुक्तम् । वलिपात्रप्रसक्तिपरिहारोऽपि सिद्धः श्रीपात्रादिति ।।४६।।

शान्त्युदके विशेषार्घ्यबिन्दुस्थाने योग्यत्वाच्छ्रीपात्रबिन्दुर्देयः । एवं विशेषार्घ्योद्धारस्थले श्रीपात्रोद्धारोऽपि ज्ञेयः । पादुकामपीत्यपिना मूलमादौ ज्ञेयम् । शिष्यश्च प्राप्तषोडश्यन्त एव । तदुक्तं त्रिपुरार्णवे— 'एतन्न देयमप्राप्तषोडशीकाय सर्वथा" इति । अनेकेषु प्रीतावनेकेभ्योऽपि देयमित्यप्युक्तं तत्रैव—"यद्यनेके प्रियाः शिष्या दत्त्वा ज्येष्ठाय वै गुरुः । आज्ञापयेत्तु सर्वांस्तान् क्रमेण नगकन्यके ।।" इति । एतन्महिमापि तत्रैवोक्तः—"संतोष्य श्रीगुरुं यस्तु विशेषार्घ्यस्य शेषकम् । गुरोरासाद्य जुहुयात् तस्यानन्त्यफलं भवेत् ।। सहस्रधा सोमपानफलमाप्नोत्यसंशयम् ।" इति ।।४७।।

प्राक्सूचितं शान्तिस्तवं वक्तुमाह—शान्तिस्तवमिति । तत्फलमाह—समस्तेति । पूजायां दोषा अज्ञाताङ्गलोपादिजनितप्रत्यवायाः । षट्चरणः श्लोकः ।।४८।।

तमेवाह—जयन्त्विति । देव्यः मूलदेवीरश्मिभूताः । समस्तावरणदेवता जयन्तु । हरपादपङ्कजं नमामीत्यन्वयः । हरस्य परशिवात्मकगुरोः, "मनुष्यचर्मणा बद्धः साक्षात् परशिवो गुरुः" इत्युक्तेः, "उपायोपेयरूपाय शिवाय गुरवे नमः" इत्युक्तेश्च । तत्पादात्मकं यत्पङ्कजं तस्य विशेषणम्—प्रसन्नेत्यादि, अनन्तेत्यादि च । प्रसन्नं क्षुत्पिपासादिदुःखरहितं धाम ब्रह्मलोकादिरूपं स्थानम् । अमृतः सर्वथा पुनरावृत्तिरहितो मोक्षः

योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम् ।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥५०॥
आपदो दुरितं रोगाः समयाचारलङ्घनात् ।
ये ते सर्वे व्यपोहन्तु दिव्यचक्रस्य मेलनात् ॥५१॥
आयुरारोग्यमैश्वर्यं कीर्तिर्लाभो जयः सुखम् ।
कान्तिर्मनोरथश्चास्तु पान्तु सर्वाश्च देवताः ॥५२॥
संपूजकानां परिपालकानां
यतीन्द्रयोगीन्द्रतपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञः
करोतु शान्तिं भगवान् कलेशः ॥५३॥
नन्दन्तु षड्विधकुलान्वयदर्शना ये
सिंहासनाध्युषितशाक्तमहान्वया ये ।
नन्दन्तु सर्वकुलकौलरताः परा ये
चान्ये विशेषपदसाधकशाम्भवा ये ॥५४॥

---

कैवल्यात्मा, तयोर्दायकम् । अनन्ता ये तत्तच्छास्त्राणां सिद्धान्तास्तद्विषयिणी या मतिस्तस्याः प्रबोधनं कारणम् । अष्टसंख्याकमष्टकं चतुःषष्टिसंख्ययोगिनीनां गणं च नमामि ॥४९॥

योगिनीनामुक्तसंख्यानां यच्चक्रं समुदायस्तन्मध्ये स्थितम् । मातरो ब्राह्म्याद्या वर्णशक्तयः, तासां मण्डलेन समुदायेन वेष्टितं परिवृतम् । एवंविधं नाथं गुरुरूपिणं भैरवीप्रियं भैरवं परशिवम् ॥५०॥

दुरितं पापम् समयाः सङ्केतरूपा ये आचारा उपासकधर्माः, तेषां लङ्घनादनाचरणात् संभूता ये आपदादयः, ते सर्वे दिव्यं देवतासंबन्धि यच्चक्रं समूहः, तस्य मेलनात् एकत्र पूजनाद् व्यपोहन्तु ॥५१॥

अत एव दिव्यचक्रमेलनात् । आयुरादिकं मेऽस्तु । मां सर्वाश्च देवताः पान्तु ॥५२॥

संपूजकादीनां राजान्तानां शान्तिम् आपदादिनाशं करोतु । कुलस्य दृश्यवर्गस्य । जगत ईशो नियन्ता ॥५३॥

षड्विधं यत्कुलम् अर्थसमूहः षडध्वादिः, तस्यान्वय ऐक्यं तस्य दर्शनं ज्ञानं येषां ते । तच्च तन्त्रभेदेन बहुधा वर्णितम् । एतदेव स्वात्मीकारविधौ बहुविधकुल-

मार्गारम्भसंभावित इति सूचितम् । अयमाशयः—दृश्यं द्रष्टेति द्विविधं वस्तु परस्परव्यावृत्तं प्रतीयते । तत्र शरीरादिर्न द्रष्टा, तस्य दृश्यत्वात् । तत्र द्रष्टृत्वव्यवहार औपचारिक एव । मुख्यद्रष्टा तु शरीरादिरूपद्रष्टुर्घटादिरूपदृश्यस्यान्तरस्थसंबन्धादिव्यपदेश्यं दर्शनात्मकं ज्ञानं घटपटाद्यखिलज्ञानानुस्यूतं तत्तज्ज्ञानाद्यन्तसाक्षिपदस्थम् । यदुक्तम्—''ग्राह्यग्राहकसंवित्तिः सामान्या सर्वदेहिनाम् । योगिनां तु विशेषोऽयं सम्बन्धे सावधानता ॥'' इति । घटशरीरादिग्राह्यग्राहकज्ञानं सर्वेषां समानम् । तदुभयमध्यवर्तिसम्बन्धरूपचिदात्मनि तु योगिनां सावधानतेति तदर्थः । एतदेव वासिष्ठे निरूपितम् —
'देशाद्देशान्तरं दूरं प्राप्तायाः संविदो वपुः । निमिषेणैव यन्मध्ये तद्रूपं परमात्मनः ॥'' इति । एवंविधे मध्यस्थरूपे मुख्यप्रमातरि अयोगिनां सावधानत्वं नास्ति । एतदप्युक्तं श्रीगीतासु—''या निशा सर्वभूतानां तस्यां जागर्ति संयमी'' इति । एवंविधं मुख्यं प्रमातृरूपं तु न कथमपि दृश्यम्, तस्य स्वप्रकाशद्रष्ट्रैकरूपत्वात् । एतदुक्तं श्रीस्पन्दे —''जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति । निवर्तते निजान्नैव स्वरूपादुपलब्धृतः ॥'' इति । श्रीप्रत्यभिज्ञायामपि—''दृक् स्वाभासैव नान्येन वेद्या रूपदृशेव दृक् । रसे संस्कारजत्वं तु तत्तुल्यत्वं न तद्गतिः ॥'' इति । एवं च निरुक्तशुद्धज्ञानात्मैव द्रष्टा । स च सर्वत्र सर्वदा ज्ञानमात्ररूप इत्येक एव । दृश्यं तु शास्त्रेषु बहुधा प्रपञ्चितम् । तद्बहुविधमपि किञ्चित्सामान्यरूपेणानुगमय्य षडध्वादिरूपेण निरूपितम् । तत्र षडध्वरूपत्वं वर्णपदमन्त्रकलातत्त्वभुवनात्मकषट्समुदायरूपेण । एवं षड्विधमपि दृश्यं द्रष्टृमात्ररूपम् । तदुक्तम्—''भावाभावतया ज्ञानं बहिरन्तः प्रकाशते'' इत्यादि, 'भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः'' इति च । एवमेवैक्यज्ञानं षड्विधकुलान्वयदर्शनमिति । एतदुक्तं त्रिपुरारहस्ये—''दृश्यं तु द्विविधं प्रोक्तं कालदेशविभेदतः । कालः क्रियामयो ज्ञेयो देशो मूर्तिमयः स्मृतः ॥ वर्णः पदं तथा मन्त्र इति कालस्त्रिधा स्मृतः । कला तत्त्वं च भुवनमिति देशोऽपि वै त्रिधा ॥ षडध्वनाम्ना चैतत्तु प्रोक्तं षट्संघरूपतः । स्वकारणात्मकं कार्यं तरोर्बीजात्मता यथा ॥ तेन वर्णादयः कालः कलादिर्देश उच्यते । द्रष्टुस्तद्द्वयनिर्भानाद् द्रष्टात्मकमुदीरितम् ॥ तस्मादखिलमेतद्वै द्रष्टृरूपं प्रकीर्तितम् ।'' इति । प्रकारान्तरेण योगिनीतन्त्रेऽप्युक्तम्—''जगद्द्विविधतो भित्वा संज्ञाभिः शास्त्ररीतिभिः । सर्वमात्मस्वरूपं चेत्येव शास्त्रेषु कथ्यते ॥ पञ्चाशद्धा च षड्त्रिंशत् त्रिंशद्भेदं वदन्त्युत । षड्विंशतिं तथा पञ्चविंशतिं सप्तधा तथा ॥ नवधा च त्रिधा तद्वदेवं भित्वाप्यनेकधा । परस्परं विलाप्याथ संशेष्य शिवमद्वयम् ॥ नाम सत्ता ह्यधिष्ठानं शक्तिः फलमपीश्वरि । शून्यात्मतेति षड्रूपं शिवादन्यन्न विद्यते ॥ इति कौलिकविज्ञानं प्रसारपरमार्थतः ।'' इति । सर्वं वस्तु नामादि षड्रूपेण भासते । नाम घट इत्यादि । सत्ता अस्तीति । अधिष्ठानं घटादि सर्वं ज्ञानाधिष्ठितं सत्तत्तादात्म्येन भासत इति ज्ञानम् । शक्तिर्जलादिधारणसामर्थ्यम् । फलं जलधारणादि । शून्यात्मता नास्तीति प्रत्येयता इति तदर्थः । एवं षड्विधकुलान्वयदर्शनाः कौलिकोत्तमाः । सिंहासने आसनश्रेष्ठे पञ्चब्रह्ममये

नन्दन्तु सिद्धगुरवस्तदनु क्रमौघा
ज्येष्ठानुगाः समयिनो बटुकाः कुमार्यः ।
षड्योगिनीप्रवरवीरकुले प्रसूता
नन्दन्तु भूमिपतयो द्विजसाधुलोकाः ॥५५॥
नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठा
निर्मत्सरा निरुपमा निरुपद्रवाश्च ।
नित्यं निरञ्जनरता गुरवो निरीहाः
शान्ताश्च शान्तमनसो हतशोकशङ्काः ॥५६॥

---

अध्युषितं स्थितं शाक्तं शक्तितत्त्वं त्रिपुरसुन्दरीरूपम्, तस्य महान्वयोऽहमस्मीति निर्विकल्पस्वात्मैक्यज्ञानं येषां ते 'मध्यमकौलिकाः। प्रोक्तद्विविधेभ्यः परा भिन्नाः सर्वकुलकौलरताः। कुलस्य देहस्य सम्बन्धि यत्कौलं परदेवताया आधारादिचक्रेषु क्रियमाणमानसपूजनम् तस्मिन् रता आसक्ता निकृष्टकौलिकाः। विशेषात्मकं यत्पदं स्थानं मन्त्रमूर्त्यादिरूपं पूजापीठं तस्य साधकास्तत्पूजापराः शाम्भवाः शम्भूक्ततन्त्रमार्गनिष्ठाः। पूर्वेभ्यः अन्ये निकृष्टतरकौलिकाश्च नन्दन्त्वित्यन्वयः। एवं चतुर्विधकौलिका अस्मिन् श्लोके प्रोक्ताः। एतेषां स्वरूपमुक्तं रहस्यार्णवे—"उत्तमाः स्वात्मविश्रान्ता मध्यमा देवतामयाः। अन्तःपूजा निकृष्टाः स्युर्बाह्यपूजास्ततोऽवराः॥" इति, "शम्भुप्रोक्तागमज्ञानपराः स्युः शाम्भवाः शिवे। अन्ये तु पशवो ज्ञेयाः पशुवज्ज्ञानशून्यतः॥" इति च। एतदेव वितत्योक्तं त्रिपुरार्णवे—"उत्तमा मध्यमा तद्वदधमाश्चाधमाधमाः। चतुर्धा कौलिकाः प्रोक्तास्तेषां भेदमिमं शृणु॥ अशेषजगतामात्मप्रसरत्वं सुवेत्ति यः। स कौलिकोत्तमो ज्ञेयो भावयत्यनिशं तु यः॥ जगद्देव्यात्मनामैक्यं स मध्यः कौलिको मतः। योऽन्तराधरचक्रेषु मानसार्चापरः सदा। अधमः स तु विज्ञेयो यो बाह्यार्चारतः सदा॥ अधमाधमः स विज्ञेयो भवेदेवं चतुर्विधा॥" इति ॥५४॥

सिद्धगुरवः निसर्गसिद्धाः श्रीकण्ठसदाशिवप्रभृतयः। तदनु तत्पश्चात् क्रमौघाः क्रमतः स्थिता दिव्यसिद्धमानवौघाः। ज्येष्ठाः विद्यायोनिसम्बन्धतः स्वसमाज्ज्येष्ठाः। अनुगाः तथाभूतस्वकनिष्ठाः। ज्येष्ठाश्चानुगाश्चेति द्वन्द्वः। समयिनः विद्यायोनिसम्बन्धरहिताः कौलसंकेताभिज्ञाः। बटुकाः कुमार्यश्च दशमे व्याख्याताः। षटसंख्या योगिन्यो डाकिन्याद्याः। अथवा षण्णां वर्णपदाध्वादिषडध्वनां नामसत्तेत्याद्युक्तानां वा योग ऐक्यम्, सोऽस्यास्तीति षड्योगिनी संविद्रूपा त्रिपुरसुन्दरी। सा प्रवरा पूज्या येषां तादृशा ये वीराः पराकृतद्वैतशात्रवाः। एवमेव वीरलक्षणमुक्तम्—"अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः। पराक्रमपरो भुङ्क्ते स्वात्मानमशिवापहम्॥" इति। तेषां कुले वंशे प्रसूताः। भूमिपतिप्रमुखाः। साधुलोकाः शान्ताः। द्विजसाधुलोका इति द्वन्द्वः॥ ५५ ॥

नीतिनिपुणा उपास्तिकुशलाः। निरवद्या निर्दोषा निष्ठा स्थितिर्येषाम्। अत

नन्दन्तु योगनिरताः कुलयोगनिष्ठा
आचार्यसामयिकसाधकपुत्रकाश्च ।
गावो द्विजा युवतयो बटुकाः कुमार्यो
धर्मे चरन्तु सततं गुरुभक्तियुक्ताः ॥५७॥

नन्दन्तु साधककुलान्यणिमादिसिद्धाः
शापाः पतन्तु समयद्रुहियोगिनीनाम् ।
सा शाम्भवी स्फुरतु कापि ममा-
प्यवस्था यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥५८॥

---

एव निर्मत्सराः । निरुपमाः निरुपद्रवाश्च । अत एव नित्यं निरञ्जने परशिवे स्वात्मनिरताः । अत एव पूर्णत्वान्निरीहा निष्कामाः शान्ताः क्षोभरहिताः । शान्तं नष्टं मनो येषाम् । अत एव हतशोकशङ्काः ॥ ५६ ॥

योगे चित्तनिरोधे निरताः, कुले जगति योगः स्वात्मशक्तित्वचिन्तनम्, तत्र निष्ठा स्थितिर्येषाम् । एतदुक्तं त्रिपुरार्णवे—'स्वविकल्पैकसंसिद्धिसारं जगदशेषकम् । स्वशक्तिमात्रं जानीयात् कुलयोगस्त्वयं शिवे ॥" इति । श्रीप्रत्यभिज्ञायामप्युक्तम्—"सर्वो ममायं विभव इत्येवं परिजानतः । विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता" इति । आचार्याः प्राप्तपूर्णदीक्षाद्याः, सामयिकाः अप्राप्तदीक्षा उपासनसङ्केतज्ञाः । साधका दीक्षाधिकाररहिताः । पूजोपकरणसाधकाः पुत्रकाः अर्थादेतेषां पुत्राः । तथा पूजोपयुक्ता गावः द्विजा ब्राह्मणाः युवतयः सुवासिन्यः बटुकाः कुमार्यश्च । एते नन्दन्तु धर्मे देवतायां सदा भक्त्येत्यादि द्वादशोक्ते धर्माष्टके गुरुभक्तियुक्ताः चरन्तु च ॥ ५७ ॥

साधकानां कुलानि । अणिमाद्यैश्वर्ये सिद्धा ये योगिनः, अणिमाद्यैश्वर्ययुता इति यावत्, ते च नन्दन्तु । योगिन्यः प्रकटाद्याश्चक्राधिष्ठात्र्यः, तासां शापाः । समयस्य सकेतरूपस्य तन्त्रशास्त्रस्य द्रुहि दूषके । समयिद्रुहीति पाठे तु समयिनः साधकाः, तद्द्रुहि तदपकारिणि पतन्तु । सा शास्त्रेषु प्रसिद्धा कापि अलौकिकी शाम्भवव्यवस्था योगिनामिव ममापि स्फुरतु । यस्यामवस्थायां गुरोश्चरणपङ्कजमेव लभ्यम्, गुरोरेव परशिवात्मनः फलरूपत्वात् । यदुक्तम्—"गृणते तत्त्वमात्मीयं स्वात्मीकृतजगत्त्रयम् । उपायोपेयरूपाय शिवाय गुरवे नमः ॥" इति । शाम्भवव्यवस्थालक्षणमुक्तं योगिनीतन्त्रे—'पदयोरन्तरं पश्यन् नैव पश्यन् पदद्वयम् । शाम्भवव्यवस्थां प्राप्नोति सर्वसाधारणः स्थितः ॥" इति । त्रिपुरार्णवेऽपि—"अन्तर्लक्ष्यं बहिर्दृष्टिः सन्तुष्टो निश्चलस्थितिः । एषा तु शाम्भवी मुद्रा जीवन्मुक्तिफलप्रदा ॥" इति ॥ ५८ ॥

याश्चक्रक्रमभूमिकावसतयो नाडीषु याः संस्थिताः
याः कायोद्गतरोमकूपनिलया याः संस्थिता धातुषु ।
उच्छासोर्मिमरुत्तरङ्गनिलया निश्वासवाताश्च या-
स्ता देव्यो रिपुपक्षभक्षणपरास्तृप्यन्तु कौलार्चिताः ॥५९॥

या देव्यः कुलसंभवाः क्षितिगता या देवतास्तोयगा
या नित्यप्रथितप्रभाः शिखिगता या मातरिश्वाश्रयाः ।
या व्योमाहितमण्डलाऽमृतगता याः सर्वगाः सर्वदा
ताः सर्वाः कुलमार्गपालनपराः शान्तिं प्रयच्छन्तु मे ॥६०॥

ब्रह्मश्रीशेशदुर्गागुहबटुकगणा भैरवक्षेत्रदिक्पा
वेतालादित्यरुद्रग्रहमनुवसुसिद्धाप्सरोगुह्यकाद्याः ।
भूता गन्धर्वविद्याधरपितृमुनियक्षासुराः किन्नराश्च
योगीशाश्च चारणकिंपुरुषनरवराश्चक्रगाः पान्तु सर्वे ॥६१॥

देहस्थाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवा
योगिन्यो बटुकाश्च सिद्धपितरो भूताः पिशाचा ग्रहाः ।
अन्ये भूचरदिक्चराश्च खचरा वेतालकाश्चेटका-
स्तृप्ताः स्युः कुलपुत्रकस्य पिबतः पानं सदीपं चरुम् ॥६२॥

---

चक्राणाम् अकुलादीनां क्रमरूपा पूर्वापरीभूता या भूमिका तत्र वसतिरावासो यासाम् । नाडीषु देहगतासु द्विसप्ततिसहस्रसंख्यासु याः संस्थिताः काये उद्गता ये रोमकूपास्तेषु निलयो यासाम् । धातुषु त्वगादिषु याः संस्थिताः, उच्छ्वासरूपोर्मिषु मरुतां शरीरान्तःसञ्चारिणां तरङ्गेषु निलयो यासाम् । निःश्वासात्मकवाता आश्रयो यासाम्, एवंविधा या देव्यः, ताः कौलेन कुलशास्त्रोक्तमार्गेणार्चिताः मद्रिपुपक्षाणां भक्षणपराः तृप्यन्तु ॥ ५९ ॥

कुले शरीरे सम्भवो यासां ताः । शिखिगता वह्निसंस्थाः । तद्विशेषणं नित्यप्रथितप्रभा इति । नित्यं प्रथिता विस्तृता प्रभा यासाम् । मातरिश्वा वायुराश्रयो यासाम् । व्योम्न्याकाशे आहितं स्थितं यश्चन्द्रमण्डलसम्बन्ध्यमृतं तस्मिन् ताः स्थिताः । एवंविधाः सर्वा देव्यः कुलशास्त्रोक्तोपासनमार्गपालनपराः शान्तिं प्रयच्छन्तु ॥ ६० ॥

श्रीशो विष्णुः, गुह्यकाद्या इत्याद्यपदेन नागादिः । नरवरा मनुष्यश्रेष्ठाः । चक्रगा जगच्चक्रसंस्थाः ॥ ६१ ॥

देहे स्थिताः गजमुखाद्या अन्ये देहाद् बहिःस्थिता भूचराद्या अखिला देवताश्च

सत्यं चेद् गुरुवाक्यमेव सततं वैशेषविद्योगिनी
प्रीतिश्चेत्परदेवता यदि भवेद् वेदाः प्रमाणं हि चेत् ।
कौलोऽयं यदि दर्शनं भवति चेदाज्ञाप्यमोघास्ति चेत्
सत्यं चाखिलकौलधर्मनिवहः स्यान्मे जयः सर्वदा ॥६३॥

नन्दन्तु कुलयोगिन्यो नन्दन्तु कुलपुत्रकाः ।
नन्दन्तु च कुलाचार्या नन्दन्तु कुलदीक्षिताः ॥६४॥

नन्दन्तु साधकाः सर्वे नश्यन्तु कुलदूषकाः ।
अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥६५॥

तृप्यन्तु मातरः सर्वाः समुद्राः सगणाधिपाः ।
योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः ॥६६॥

---

कुलपुत्रकस्य मत्सम्बन्धि मत्समर्पितं पानं प्रथमं पिबतः पिबन्तः अनुस्वारलोप आर्षः । सदीपं दीपसहितं चरुं द्वितीयादिकम् । अत्र दीपपदम् अखिलपूजोपकरणोपलक्षकम् । तेन गन्धाद्यखिलपूजायुक्तं द्वितीयादिकं स्वीकुर्वन्तः पानं पिबन्तः तृप्ताः स्युः । अत्र देहस्था अखिलदेवता इति सामान्येनोक्तानामेव गजमुखा इति विशिष्य कथनम् ॥६२॥

गुरुवाक्यं दीक्षावसरे उपदिष्टं देवताप्रतिपादकं मन्त्ररूपं मननात्त्राणकरं सत्यं चेत् मे जपः स्यात् । युक्तं चैतत्, मन्त्रस्य मननत्राणधर्मत्वोक्तेः । एतदुक्तं महार्थमञ्जर्याम्— "मणणमपीणि अबिहवे णि असंकोऽभयम् ताण मई कबकियवीसविअप्पा अणु हू ई कोवि मन्तसन्दथो ॥" इति । उपासकानामुपासनासु सदसद्रूपविशेषसम्बन्धिनी वित् ज्ञानं यासां योगिनीनां प्रकटादीनाम्, अत्रोपासनमार्गे प्रीतिश्चेत्, परदेवता यदि भवेत्, अस्ति चेत् कौलः कुलागमः दर्शनं सच्छास्त्रं भवति चेत्, यः कौलमार्गनिरतो भुक्तिमुक्त्योः सभाजनमित्याद्याज्ञा अमोघा अव्यर्था अस्ति चेत्, अखिलाः सम्पूर्णा ये कौलधर्मा देवतायां भक्त्या वर्तितव्यमित्यादि दीक्षाप्रकरणोक्ताः, तेषां निवहः सत्यं स्यात् चेत् ॥६३॥

कुलस्य कुलशास्त्रस्य योगः सम्बन्ध आसामस्तीति कुलयोगिन्यः शक्तयः, कुलानां कुलशास्त्रज्ञानां पुत्रकाः कुत्सिते कन्, अनुपासितपुत्रा आचार्याः पीठाधिकृताः दीक्षितास्तदधिकाररहिताः ॥ ६४ ॥

शाम्भवी अवस्था प्रागुक्ता ॥ ६५ ॥

मातरः अणिमाद्याः, समुद्राः तत्तदावरणमुद्रायुताः । तत्तदावरणगणाधिपाश्चक्रेश्वर्यस्ताभिर्युताः योगिन्यः प्रकटाद्याश्च बहिः पूजया तृप्यन्तु । उद्वासिताः मम देहे व्यवस्थिताः क्षेत्रपाला मद्देहरक्षका भवन्त्विति शेषः ॥ ६६ ॥

यासामाज्ञाप्रभावेण सुस्थितं भुवनत्रयम् ।
नमस्ताभ्यो योगिनीभ्यः समस्ताभ्यो निरन्तरम् ॥६७॥
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादिशिवान्तं च जगद् यज्ञेन तृप्यतु ॥६८॥
शान्तिस्तवं पठित्वैवं पूजान्ते साधकोत्तमः ।
पूजाफलमवाप्नोति प्रसन्ना तस्य देवता ॥६९॥
इत्येतत् कथितं देवि यन्मां त्वं पृष्टवत्यसि ।
पुनः किं ते श्रोतुमिच्छा वद सर्वेश्वरेश्वरि ॥७०॥

इति परमानन्दतन्त्रे एकोनविंशोल्लासः ॥१९॥

---

सुष्ठु स्थितं स्थितिं प्राप्तम् । एतच्च सृष्टिसंहारयोरुपलक्षकम् । सुसृष्टं सुसंहृतं भवतीति शेषः ॥ ६७ ॥

शिवाद्यवनिपर्यन्तं जगत् । ब्रह्मा हिरण्यगर्भः । स्तम्बोऽतिसूक्ष्मकृमिविशेषः । ब्रह्मादिस्तम्बान्तक्षेत्रज्ञप्रमातृवर्गयुतम् । कालाग्न्यादिशिवान्तं रुद्रप्रमातारो यत्तत् । यज्ञेन प्रस्तुतसपर्यारूपेण तृप्यतु, अथवा जगद्यज्ञेन विश्वं जुहोमि वसुधादिशिवावसानमिति प्रोक्तरीत्या कृतेन । विश्वकरणकयज्ञेन शिवाद्यवनिपर्यन्तं तृप्यतु इति ॥ ६८ ॥

फलस्तुतिमाह—शान्तिस्तवमिति ॥ ६९ ॥

उपसंहरति—इत्येतदिति ॥ ७० ॥

सौभाग्यानन्दसंदोहे नाथपद्यार्थबोधकः ।
परमानन्दटिप्पण्यामुल्लासोऽष्टादशात् परः ॥१९॥



## विंशतितमोल्लासः

देव्युवाच—

भैरव श्रोतुमिच्छामि पूजां नैमित्तिकामहम् ।
वद विस्तरशो देव सविधानं सनिर्णयम् ॥१॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि पूजां नैमित्तिकीं पराम् ।
नित्यां नैमित्तिकीं चापि साधकस्त्वाचरेत् सदा ॥२॥
नित्यामकृत्वा यो मोहादालस्यादन्यथापि वा ।
नैमित्तिकामाचरन् वै न तस्याः प्राप्नुयात् फलम् ॥३॥
यथा सन्ध्यामकृत्वा तु नित्यपूजा भवेत्तथा ।
यथा स्नानमकृत्वा तु सन्ध्यां कुर्यात्तथा भवेत् ॥४॥
अप्राप्य दीक्षां यद्वत्तु स्यादुपास्तिर्भवेच्चथा ।
तस्मान्नित्यां निर्वर्त्यैव कुर्यान्नैमित्तिकार्चनम् ॥५॥

---

नैमित्तिकपूजां प्रष्टुं देव्युवाचेति। विधानम् इतिकर्तव्यता, निर्णयस्तत्कालादीनाम् ॥ १ ॥

उत्तरं भैरव उवाचेति। परां नित्यपूजातोऽन्याम् द्वयोः पूजयोरावश्यकतां वक्तुमाह—नित्यामित्यादि। सदा तत्तत्कालात्यागेन ॥ २ ॥

नैमित्तिकपूजया न नित्यपूजा सिध्यतीति वक्तुमाह—नित्यामिति । मोहात् नैमित्तिकपूजया नित्यपूजा कृता भवतीति भ्रान्त्या। अन्यथा कार्यान्तरव्यापृतत्वाद्वा। तस्या नैमित्तिकपूजायाः ॥ ३ ॥

नित्यपूजाया नैमित्तिकादौ आवश्यकत्वकथनाय तदकरणे नैमित्तिकपूजायाः फलाभावे सन्ध्यादिदृष्टान्तत्रयमाह—यथेत्यादि ॥ ४ ॥

यथा सन्ध्यां स्नानम् अकृत्वा दीक्षामप्राप्य नित्यपूजा, सन्ध्या उपास्तिश्च भवेत्तथा नित्यपूजामकृत्वा नैमित्तिकपूजा निष्फलेत्यर्थः। यत एवं तस्मात् ॥ ५ ॥

नैमित्तिके यद्यसक्तो जपेदष्टोत्तरं शतम् ।
यथोक्तविधिना देवि नित्यपूजां समाचरेत् ॥६॥

संक्षेपेणापि वा कुर्याद् भक्तिभावसमन्वितः ।
अनुकल्पेन वा देवि मालामन्त्रजपोऽथवा ॥७॥

सर्वथा नित्यपूजां तु कुर्यादेव महेश्वरि ।
अकुर्वन् नित्यपूजां तु न दीक्षाफलमश्नुते ॥८॥

देव्युवाच—

संक्षेपेण कथं पूजा कथं स्यादनुकल्पकः ।
अनुकल्पे यथा पूजा वद सर्वं सुविस्तरम् ॥९॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
सावधानेन मनसा गोपनीयं प्रयत्नतः ॥१०॥

बालाविधिवदेवेह त्रिपात्रं स्थापयेच्छिवे ।
हेतुपात्रं च सामान्यविशेषार्घ्यद्वयं तथा ॥११॥

---

नैमित्तिकपूजानुकल्पमाह—नैमित्तिक इति । अष्टोत्तरशतं मूलम् । सदा नैमित्तिकदिनेऽपि ॥ ६ ॥

नित्यनैमित्तिकोभयाशक्तं प्रत्याह—संक्षेपेणापीति । भक्तिर्देवतानुरागः । भावो भावना । भक्तिभावप्रकर्षात् संक्षेपेण कृतापि यथोक्तफलदेति भावः । अनुपपन्नं प्रत्याह—अनुकल्पेनेति । तत्राप्यशक्तं प्रत्याह—मालामन्त्रेति । मालामन्त्रः आवरणमालामन्त्र एकत्रिंशदुत्तरसहस्रार्णस्त्रिपुरार्णवाद्युक्तः, तस्य सकृज्जपः ॥ ७ ॥

सर्वथा उक्तप्रकारान्यतमेन । एवकारेणाकरणव्यवच्छेदः । न प्रागुक्तनैमित्तिकपूजाफलाभाव एव नित्यपूजाऽकरणे, किन्तु दीक्षाफलाभावोऽपीत्याह—अकुर्वन्निति ॥८॥

संक्षेपपूजाम् अनुकल्पम् अनुकल्पपूजां च प्रष्टुमाह—देव्युवाचेति ॥ ९ ॥

उत्तरं भैरव उवाचेति । श्रुत्वा चैतद् गोपनीयम् ॥ १० ॥

बालाविधिवत् । अष्टमोक्तवत् इह संक्षेपपूजायाम् । तदेव पात्रत्रयं विशिष्योद्दिशति—हेत्वित्यादि । अत्र बालाविधिवदिति पदस्वारस्यात् त्रिपात्रमित्यनेन गुरुपात्रबलि-

मन्त्रान् सर्वान् विशेषार्घ्ये प्रजपेत्तु महेश्वरि ।
यथेच्छमुपचर्याथ परिवारान् समर्चयेत् ॥१२॥
अखण्डपूजां तां कृत्वा पञ्चिकाद्याः समर्चयेत् ।
आम्नायान्तं तु संतर्प्य मूलविद्यां षडङ्गकम् ॥१३॥
स्वाहान्तं च पठन् होमं मनसापि तु भावयेत् ।
सर्वभूतबलिं वापि शिवाद्यर्वानमन्त्रकम् ॥१४॥
समापयेत्तु पूजां वै चात्यशक्तौ तथापदि ।
आद्यावृत्तित्रयं षट्कं समष्ट्या वापि तर्पयेत् ॥१५॥
गुरोः शक्तेस्तु पूजा स्याद् विशेषार्घ्यान्महेश्वरि ।
अन्येषां हेतुपात्रात् स्याद्व्यर्थाऽमुख्ये तु तर्पयेत् ॥१६॥

---

पात्रात्मपात्राणामेव व्यावृत्तिर्नान्येषाम्, सामान्यकलशादीनामावश्यकत्वात् । ननु सामान्यकलशादिपात्रसप्तके बालाविधिवदित्यनेन अथवा नित्यपूजायां पूर्ववत्तु त्रिपात्रकमित्यूनविंशतिवचनेनैव च प्रोक्तेऽर्थे सिद्धे हेतुपात्रमित्यादिगणनं व्यर्थमिति चेन्न, गुरुपात्रादिषु प्रजप्य पादुकादिकन्त्राणां विशेषार्घ्ये एव विधानाय तस्यानूदितत्वात् ॥ ११ ॥

मन्त्रान् पादुकादीन् सर्वान् गुरुपात्रादिषु विहितान् यथेच्छं षोडशधा चतुःषष्टिधा वा ॥ १२ ॥

नित्याः गुरुमण्डलानि अङ्गावरण द्यखिलावरणं च प्रत्येकं विशेषार्घ्यदिवादाय दर्व्या कर्तव्यम् । तत्राखण्डपूजां तां यथोक्तवत्कृत्वा पञ्चिकाः पञ्चपञ्चिकाः, तासामाद्याः महात्रिपुरसुन्दरीलक्ष्म्यम्बाद्याः । एवं पञ्चपञ्चिकानन्तरमाम्नायान्तं संतर्प्य ॥ १३ ॥

मूलविद्यां षडङ्गकं हृदयाय नम इत्याद्यङ्गमन्त्रषट्कं च स्वाहान्तं पठन् मनसा होम भावयेत् । अपिना समर्थो होमं कुर्यात् । सर्वभूतबलिम् एकं दत्त्वा शिवाद्यवनीत्येकं शान्तिस्तवश्लोकं पठेत् । वापीत्यनेन समर्थो बलिषट्कं सम्पूर्णं शान्तिस्तवं वा पठेत् ॥ १४ ॥

शेषां पूजां यथोक्तवत् समापयेत् । अत्यशक्तौ सत्यामापदि वा आद्यावृत्तित्रयं षट्कं वा त्रैलोक्यमोहनादिसर्वसंक्षोभणान्तं सर्वरक्षाकरान्तं वा समष्ट्या त्रैलोक्यमोहनचक्रदेवताश्रीपादुकां पूजयामि तर्पयामि नम इत्यादिरीत्या समर्थस्य यथोक्तमित्याशयेन वापीति ॥ १५ ॥

त्रिपात्रपक्षे गुर्वादिपूजामाह—गुरोरित्यादि । तुरप्यर्थे । तेन वटुककुमार्योरपि संग्रहः । तथा च गुरुकुमारीवटुकसुवासिनीनां पूजा विशेषार्घ्यात् कर्तव्येति । अन्येषां

परमापदि नित्यादिसप्तमावरणान्तकम् ।
अथानुकल्पाः प्रोच्यन्ते शृणु देवि समाहिता ॥१७॥
हेतुद्रव्यं द्वितीयं च तृतीयं चाष्टगन्धकम् ।
समानं वटिकां कृत्वा संशोष्य स्थापयेच्छिवे ॥१८॥
अनुघृष्योदके तां तु योजयेदर्घ्यपात्रके ।
नारिकेलजलं कांस्ये ताम्रे क्षीरं तु तक्रकम् ॥१९॥

---

सामयिकानां हेतुपात्रात् पूजा। यद्यप्येतत् ततः सामयिकान् पूज्य हेतुतीर्थैरिति दशमोक्त्या सिध्यति, तथापि प्रकृते आत्मपात्राकथनाद् बालाप्रकरणवदेवात्मपूजेति द्योतनायान्येषामिति। विशेषार्घ्याद् गुरुपूजाया उक्तत्वाद् गुरुमण्डलपूजनमपि तत एव प्राप्तमित्यत आह—अमुख्ये इति। मूलदेवीतर्पणापेक्षया सर्वस्याप्यमुख्यत्वात्। एतदुक्तं स्वतन्त्रे—"मूलदेवीतर्पणात्तु सर्वं गौणं महेश्वरि" इति। पात्रत्रयपक्षे नित्यामण्डलादितर्पणवद् गुरुमण्डलतर्पणमपि विशेषार्घ्याद्द्रव्यमादाय कुर्यादित्यर्थः ॥१६॥

परमापत्तिषु नित्यामण्डलश्री० गुरुमण्डलश्री० इत्यादि सर्वरोगहरचक्रान्तमर्चयेदित्याह--परमेति। अनुकल्पान् वक्तुमाह- अथेति ॥१७॥

तत्र प्रथमानुकल्पमाह—हेतुद्रव्यमिति। हेतुद्रव्यं प्रथमं द्वितीयं तृतीयं गन्धाष्टकमष्टमोक्तमित्येषां समानं भागं गृहीत्वा वटिकां कुर्यात्। ततः संशोष्य स्थापयेत् ॥१८॥

तां वटिकाम् उदकेऽनुघृष्यार्घ्ये योजयेत्। अत्र मुख्यद्रव्यमपि बहुविधम्। तदुक्तं योगिनीतन्त्रे—"द्राक्षोद्भवा च खार्जूरी माध्वी गौडी तथान्नजा। मधुपुष्पभवा वार्क्षी ख्याता सप्तप्रकारतः॥ यथोत्तरं ह्रासगुणा चाद्यमाद्यं तथोत्तमम्। अत्यन्तशीघ्रबोधाढ्यं दुष्टामोदविवर्जितम्॥ सुगन्धाढ्यं प्रीतिकरमविकारकरं तथा। अन्यप्रकारजं वापि पाकजं वाप्यपाकजम्॥ स्वतः सिद्धमपीशानि सुगुणं बोधसंयुतम्॥" इति। तथा "स्वनिर्मितं चोत्तमं स्यात् क्रयक्रीतं तु मध्यमम्। अधमं याचितं देवि प्रथमं त्रिविधं स्मृतम्॥" इति। त्रिपुरार्णवेऽपि--"अतिबोधसमायुक्तं स्वच्छं तैक्ष्णौष्ण्यवर्जितम्। रञ्जितं रक्तपीताद्यैः सुगन्धं तत्र चोत्तमम्॥" इति। एतद्भेदो निर्माणप्रकारश्च तन्त्रराजकुलार्णवादिषु द्रष्टव्यः। नारिकेलफलान्तस्थं स्वतःसिद्धं जलम्, तच्च कांस्यपात्रे संस्थापितम् अर्घ्यपात्रे योजयेदित्यन्वयः। एवमग्रेऽपि। तथा ताम्रे स्थापितं क्षीरं तक्रकं गुडयुक्तमित्यन्वयः ॥१९॥

**गुडयुक्तं जलं वापि जलं चन्दनमिश्रितम् ।**
**मुख्यालाभे चानुकल्पो नान्यथा तु कदाचन ॥२०॥**

---

गुडयुक्तमित्यस्योभयत्रान्वयः, गुडमिश्रेण तक्रेणेति कुलार्णवात्, गुडोदकं तथा तक्रमिति त्रिपुरार्णवाच्च । ताम्रे इति क्षीरादित्रये योज्यम्, तदभावे ताम्रपात्रे क्षीरं वाथ गुडोदकमिति स्वतन्त्रात् । अत्र गुडमित्यैक्षवोपलक्षणम् । अत एव ऐक्षवेण युतं तद्वन्मधुना ताम्रके जलमिति योगिनीतन्त्रे उक्तम् । ताम्रे इत्यस्यैतदन्तानुवृत्तिद्योतनायापिशब्दः । नैतेषां मुख्येन समविकल्पपक्ष इत्याह—मुख्यालाभ इति । अन्यथा निषिद्धबुध्यादिना । अत एवोक्तं योगिनीतन्त्रे—"अनुकल्पेन संपूज्या मुख्यालाभे महेश्वरि । मुख्ये निषिद्धबुध्या तु येऽर्चयन्त्यनुकल्पतः ॥ ते जनाः पशवः प्रोक्तास्तामिस्रं प्राप्नुवन्ति ते ॥" इति । एतत्त्रयोदशोल्लासे वितत्य विचारितम् ॥२०॥

द्वितीयानुकल्पमाह—पलाण्डुमित्यादि । द्वितीयभेदोऽपि योगिनीतन्त्रे उक्तः—"द्वितीयभेदं वक्ष्यामि द्विविधं तच्छृणु प्रिये । भूचरं खेचरं चैव पुनस्तद् द्विविधं स्मृतम् ॥ ग्रामजं वनजं चापि ग्रामजौ छागमेषकौ । वराहः शल्यको रोजो रुरुर्हरिण एव च ॥ खड्गी गोधा च शशको दशधा भूचराः स्मृताः । रोगिणः कालनिहताः परित्याज्या महेश्वरि ॥ कोमलाः पुष्टवर्ष्माणो भवेयुश्चोत्तमोत्तमाः । ग्राम्यारण्यौ कुक्कुटौ च मयूरस्तित्तिरिस्तथा ॥ चक्रवाकः सारसश्च राजहंसस्तथैव च । जलकुक्कुटहंसौ च चटको दश खेचराः ॥" इति । त्रिपुरार्णवेऽपि—"ग्रामजं च तथारण्यं भूचरं खेचरं तथा । आगमोक्तं पवित्रं च सम्यक् संस्कारसंस्कृतम् ॥ मधुराम्लहिङ्गुजीरमरिचाज्यसुपाचितम् । सुगन्धं मृदुपक्वं च सुस्वादु च मनोहरम् ॥" इति । तृतीयानुकल्पमाह—मूलकमिति । तृतीयभेदोऽप्युक्तो योगिनीतन्त्रे—'मत्स्यः कूर्मश्च देवेशि तृतीयं द्विविधं स्मृतम् । अकृशानेकशल्यांश्च रोहितादींस्तथोत्तमान् ॥ सद्यः समुद्धृतान् देवि पूजार्थं विदुरीदृशान् ।" इति । त्रिपुरार्णवेऽपि—"अल्पकण्टकसंयुक्तं सुपक्वं स्वादुसंयुतम् । लिकुचाम्लादिसंयुक्तं विधिना संस्कृतं तथा ॥" इति । पद्धतौ तु ज्ञानयुक्ततदाकारचणपक्वानिति संविद्युतमत्स्याकृतिचणकपिष्टवटकानीति तृतीयेऽनुकल्पान्तरमप्युक्तम् । तच्च—'संवित्संयुक्तचणकपिष्टजं वटकं शिवे । मीनाकृतिकृतं तद्वन्मूलकं वापि योजयेत् ॥" इति रहस्यार्णवानुसृतम्, वटिकाचणपिष्टस्य विजयायुक् तदाकृतिरिति स्वतन्त्रानुरुद्धं च वेदितव्यम् । त्रिपुरार्णवे तु—'मूलकं गृञ्जरं वापि तृतीये संनिवेशयेत्" इति विशेषः । मुद्रापदार्थोऽपि योगिनीतन्त्रे उक्तः—"चणकोत्था माषजा वा मुद्राः स्युर्घृतपाचिताः । तैलपक्वा अपि शिवे मधुरा वा सुसंस्कृताः ॥ लवणाद्यैः संस्कृता वा गोधूमैस्तण्डुलादिभिः । निर्माता रुचिराकाराः स्वादुयुक्ता महेश्वरि ॥" इति । त्रिपुरार्णवेऽपि—"माषैश्च चणकैस्तद्वद् गोधूमाद्यैरपीश्वरि । घृतादिपक्वै रुचिरैर्मधुरैर्लवणैरपि ॥" इति । तृतीयस्यानावश्यकतापि

**पलाण्डुं वापि लशुनं तद्वदार्द्रकमेव वा।**
**इति द्वितीयानुकल्पो मूलकं तु तृतीयकम् ॥२१॥**
**पूर्वानुकल्पे तु परं मुख्यं नैव तु योजयेत्।**
**नारिकेलजलादौ तु तर्पणं कुसुमेन वै ॥२२॥**

---

तत्रैवोक्ता, अलाभे तु तृतीयस्य द्वितीये त्र्यम्बकं जपेदिति। प्रोक्तं प्रथमादिकं पर्युषितं निषिद्धमिति च तत्रैवोक्तम् – "एतत्पर्युषितं सर्वमनर्हं पूजनादिषु। तत्पूजया प्रकुप्यन्ति योगिन्यस्त्वतिभीषणाः ॥" इति। पर्युषितप्रकारोऽपि तत्रैवोक्तः–"संस्कारैः संस्कृतं तद्वल्लौकिकैरागमेरितैः। पूजासमाप्त्युत्तरं तु यामात् पर्युषितं भवेत् ॥ प्रथमादिचतुर्थान्तं सर्वं त्याज्यं सुसाधकैः। तथा विकृतिमापन्नं मार्जाराद्यैरुपाहतम्। केशाश्रुनखनिष्ठीव-दूषितं च परित्यजेत् ॥" इति। एतच्छूद्रादिसंस्कृतमपि पूजार्हम्। तदपि तत्रैवोक्तम्— "भक्तिमद्भिश्चतुर्थाद्यैर्द्वितीयाद्यं सुसंस्कृतम्। पूजनार्थं तु यद्देवि तत्पवित्रं प्रचक्षते ॥ तथा पूजानिमित्तं वै प्रथमाद्यमुपाहृतत्। यज्ञीयं तत्पवित्रं स्याद् दृष्ट्वा स्पृष्ट्वा शुचिर्भवेत् ॥ तथैव मण्डले प्राप्तं सर्वं तदमृतं भवेत्। विप्रेणान्येन वानीतं देवतायै निवेदयेत् ॥ प्रथमाद्यैः संस्कृतैस्तु युक्तं तत्तदगात्मजे। अविशेषेण सर्वैस्तु ग्राह्यं शङ्काविवर्जितैः ॥" इति। एवं नैवेद्यपात्रगतस्य मण्डलाद् बहिरुद्वासानन्तरं च दोषो नास्तीति तत्रैवोक्तम्— "देव्यै निवेदितं सर्वं प्रथमादिकमद्रिजे। येन केनापि संस्पृष्टं समानीतं सुसंस्कृतम् ॥ उद्वासानन्तरं वापि मण्डलाद्बाह्यतोऽपि वा। आदरेण समादेयं सर्वैः पर्वतगोत्रजे ॥ उपवासपरैश्चापि स्वीकर्तव्यं सुभक्तितः। भोजनादौ तथा सर्वैः स्वीकर्तव्यं प्रसादकम् ॥ निवेदितं यत्प्रथमं सर्वैरापोशनान्ततः। चुलुकेन समादेयं मूलं स्वाहान्ततोच्चरन् ॥ एतत्सर्वं तदमृतं करोति शृणु शङ्करि!" इति। तथा मण्डले यत्किञ्चिदानीतं निवेदन-मन्तरेण न स्वीकर्तव्यमित्यपि तत्रैवोक्तम् – "मण्डले येन केनापि यत्किञ्चिदुपसंहृतम्। अनिवेद्य परायैतन्न स्वीकर्तव्यमद्रिजे ॥ यस्तु मोहात् प्रमादाद्वा मण्डले प्रथमादिकम्। फलं वा पुष्पमपि वा नाचार्याय समर्पयेत् ॥ निवेदनाय देवेश्यै तथैव स्वयमाददेत्। तस्मै देवी महाराज्ञी क्रुद्धा यच्छति चापदम् ॥ स भवेद् देवताद्रोही बहिष्कार्यस्तु मण्डलात् ॥" इति ॥ २१ ॥

अत्र पूर्वस्यानुकल्परूपत्वे परं मुख्यं न ग्राह्यमित्याह – पूर्वेति। यथा प्रथमस्य घुटिकोदकादिरूपत्वे द्वितीयादिकं न मुख्यं कर्तव्यम्, एवं द्वितीयस्य पलाण्ड्वाद्यनुकल्प-त्वेन तृतीयं मुख्यम्। प्रथमस्य मुख्यत्वे द्वितीयं यथासंभवं मुख्यमनुकल्पं वा। प्रथमस्या-नुकल्पत्वे तु द्वितीयादिकमनुकल्पमेवेति भावः। तत्रापि विशेषमाह—नारिकेलेति। आदिना क्षीरादिकम्। एतेन नारिकेलजलादिपक्षे द्वितीयतृतीये न स्त एव, कुसुमेनैव तर्पणविधानात्, द्वितीयस्यानुपयोगात्। एतच्च स्पष्टमुक्तं त्रिपुरार्णवे—"घुटिकानन्तरे

**सामान्यार्घ्यं विशेषार्घ्यं पात्रद्वितयमेव वै ।**
**स्वात्मीकारो मानसः स्यान्मन्त्रावृत्तिं समाचरेत् ॥२३॥**
**घुटिकोदकपूजायां हेतुपात्रमपीश्वरि ।**
**आर्द्रकं मूलकं चापि एकपात्रे निधापयेत् ॥२४॥**

---

कल्पे न द्वितीयतृतीयके" इति । तथा च प्रथमस्य मुख्यत्वपक्षे द्वितीयादिकं मुख्यमनुकल्पं वा । घुटिकापक्षे तु द्वितीयादिकमनुकल्परूपमेव । नारिकेलजलादिपक्षे तु द्वितीयतृतीययोरभाव एवेति विवेकः ॥ २२ ॥

अनुकल्पे द्विपात्रकमित्यूनविंशोक्तं स्फुटयति—सामान्येत्यादि । एवकारस्तूभयतो नियमसूचकः । नारिकेलजलादावेव पात्रद्वितयम्, पात्रद्वितयमेव नारिकेलजलादावित्यूनविंशवचनप्रकृतवचनयोरनुरोधात् । स्वात्मीकार आत्मपूजाङ्गपात्रहवनम् । स च मानसो भावनामयः । तन्मन्त्राणां तद्भावनकाले आवृत्तिं जपं समाचरेत् । अत्र गुर्वादितर्पणादिकं तु स्वतन्त्रे स्पष्टमुक्तम्—"द्रव्यप्रतिनिधौ देवीतर्पणं कुसुमेन वै । स्वात्मीकारादिकं नास्ति अक्षतैर्गुरुपूजनम् ॥ संपूर्णमन्त्रपाठेन स्वात्मीकारं तु भावयेत् । पूर्णबोधं भावयन् वै बाह्यपूजां समाचरेत् ॥" इति । एवमनुकल्पपूजायां गुर्वादिपूजनमपि मानसमेव । तदुक्तं त्रिपुरार्णवे—"अनुकल्पेन पूजायां गुरुपूजादि मानसम्" इति । अनुकल्पेन नैमित्तिकपूजायां तु गुरुपूजादिकं तत्त्वशोधनं विना कर्तव्यमेव । तदपि तत्रैवोक्तम्—"तत्त्वशोधनकं त्यक्त्वा गुर्वादीनर्चयेत् क्रमात् । नैमित्तिकार्चने तत्तन्मन्त्रपाठेन भावयन् ॥" इति । स्वतन्त्रेऽपि—'शक्तिपूजा विना तत्त्वशोधनं संप्रकीर्तिता" इति ॥ २३ ॥

घुटिकोदकपूजायां विशेषमाह—घुटिकेति । अपिना सामान्यार्घ्यविशेषार्घ्ययोः संग्रहः । एवं च नारिकेलजलादौ द्विपात्रमेव, घुटिकायां त्रिपात्रमेव, मुख्यद्रव्यपूजायां तु नित्ये त्रिपात्रं पञ्चपात्रं वा । नैमित्तिकं पञ्चपात्रं मुख्यम्, त्रिपात्रममुख्यम् । काम्ये तु पञ्चपात्रमेवेति व्यवस्था, ऊनविंशादिषूक्तवचनाद्यनुरोधात् । चापीत्येवार्थे । आर्द्रकं मूलकमेवैकपात्रे एव निधापयेदित्यर्थः, "घुटिकायामार्द्रकं वा मूलकं नान्यदिष्यते" इति रहस्यार्णवात्, 'द्वितीयादिकपर्यायं स्थापयेदपृथक्तया" इति स्वतन्त्राच्च । प्रथमस्य मुख्यत्वेऽपि द्वितीयतृतीयानुकल्पयोरेकपात्रत्वमेव, स्वतन्त्रवचनस्य सामान्यत्वात् । त्रिपुरार्णवेऽपि – "तृतीयस्यानुकल्पत्वे द्वितीयेन सह न्यसेत्" इति तृतीयमात्रानुकल्पेऽपि द्वितीयेन सह स्थापनकथनात् ॥२४॥

अनुकल्पेन पूजायां यथाशक्त्या समर्चयेत् ।
व्यष्ट्या वापि समष्ट्या वा सर्वत्रेच्छानुरोधतः ॥२५॥
मुख्ये यथोक्तं कर्तव्यमन्यथा पतितो भवेत् ।
एवं ज्ञात्वा तु कर्तव्यमन्यथा हानिमाप्नुयात् ॥२६॥

श्रीदेव्युवाच--

देव पञ्चमकारैस्तु प्रोक्तमन्यत्र पूजनम् ।
किमत्र प्रोक्तं नैवान्त्यं वद तत्कारणं विभो ॥२७॥

---

यथाशक्त्येति । समर्चयेदित्यत्र साङ्गं समर्चनं ज्ञेयम् । तेन पात्रस्थापनपीठपूजादावपि व्यष्ट्या समष्ट्या वापीच्छानुरोधतः । एतेनाशक्तेन पात्रस्थापने कलापूजनं समष्ट्या कार्यम् । एवं पीठपूजायामपि यथासंभवं समष्ट्या पूजनम् । एवमत्र नारिकेलजलाद्यनुकल्पे शापमोचनसंस्कारस्त्वावश्यकः । यदुक्तं त्रिपुरारहस्ये—"शापमोचनसंस्कारान् मन्त्रैर्वैदिकतान्त्रिकैः । कुर्यादेवानुकल्पेऽपि न चेच्छापमवाप्नुयात् ॥" इति । शापमोचनसंस्कारान् इत्यनेन स्त्रादिष्ठयेत्यादि तिरस्करिणीजपान्त एव ज्ञेयः, न तु योगिनीपूजनादि । एतच्च विशेषार्घ्ये एव कर्तव्यम्, कारणकलशस्योपयोगाभावात् । तत्र सोमकलापूजनात् पूर्वम् । एवं सर्वान् मन्त्रान् विशेषार्घ्ये प्रजपेदिति प्रोक्तवचनस्य योग्यतयाऽत्रापि संबन्धाद् वर्णत्रिकोणभावनादिसुधादेवीपूजनान्तहेतुपात्रोक्तसंस्कारोऽपि विशेषार्घ्ये कार्य इति । आवरणपूजायां प्रोक्तरीत्या विस्तारे व्यष्ट्या संक्षेपे समष्ट्या पूर्वं मुख्यपूजायामापदनापदनुरोधेन समष्टिव्यष्टिपूजोक्ता । प्रकृते तु इच्छानुरोधतः ॥ २५ ॥

मुख्ये मुख्यद्रव्यपूजायाम् । यथोक्तं संक्षेपराहित्येन अन्यथा अशक्त्या पदं विना संक्षेपकरणे पतितो मण्डलबाह्यः । अत्र— 'सामान्यार्घ्यमेकमेव पीठशक्तींश्च पूजयेत् । यथाशक्त्या समावाह्य संपूज्योक्तविधानतः ॥ मूलं त्रिस्तिथिनित्यां च षोडशीं तत्परामपि । त्रिगुरून् पादुकामङ्गत्रिकोणाखण्डदेवताः ॥ अष्टादशेमाः संपूज्य चान्याश्चापि तु देवताः । मालामन्त्रोक्तनाम्ना तु प्रत्येकं कुसुमाक्षतैः ॥ पूजयन्नपि पूजायाः फलं प्राप्नोत्यसंशयम् ॥" इति त्रिपुरार्णवोक्तपूजैव व्यष्ट्या समष्ट्या वेत्यनुरोधेन पद्धतावथवेत्यादिनोक्ता । तत्र दिननित्यादिकं प्रकृततन्त्रानुरुद्धं ज्ञेयम् । एवं प्रोक्तवत् । संक्षेपविस्तारयोर्व्यवस्थां ज्ञात्वा, तुरवधारणे, ज्ञात्वैवेत्यर्थः । अन्यथा अज्ञानात् समर्थेन मुख्यद्रव्यपूजायां संक्षेपकरणे हानिमभिमतनाशं ज्ञात्वा । अन्यथाकरणे पतितता, अज्ञात्वा करणे हानिरिति विवेकः ॥ २६ ॥

पञ्चमपदार्थव्यवस्थां प्रष्टुं देव्युवाचेति । अन्यत्र दक्षिणामूर्तिसंहिताज्ञानार्णवादिषु । अन्त्यं पञ्चमं द्रव्यम् । अत्र तन्त्रे किमिति न प्रोक्तं तस्य कारणम् । पञ्चमकारास्तूक्ता

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि सावधानेन चेतसा।
दूतीजननमार्गेण निष्पाद्यैव तु पञ्चमम् ॥२८॥
योजयेत्तु विशेषार्घ्ये तदक्षयफलं भवेत्।
योगिनामेव लभ्यं तदन्येषां दुर्लभं भवेत् ॥२९॥
तत्कारणं वदाम्यद्य शृणु निश्चलमानसा।
शिवाधिक्ये निरानन्दः शक्त्याधिक्ये तु मूढता ॥३०॥
शिवशक्त्योः समं ब्रह्म संपाद्यं तादृगेव तत्।
एतन्मया सकृल्लब्धं यस्माद् भैरवतां गतः ॥३१॥

---

योगिनीतन्त्रे— 'मद्यमांसमत्स्यमुद्रामैथुनानि तु पञ्चकम्" इति ॥ २७ ॥

उत्तरं भैरव उवाचेति। एतस्यातिगहनत्वादाह—सावधानेनेति। दूतीयजनमार्गेणेति। एतच्च—"दीक्षितः सन्महेशानि दूतीयागं समाचरेत्" इत्यादिना दक्षिणामूर्तिसंहितायामुक्तम्। "दूतीयागविधिं कुर्यात् खेचरो जायते प्रिये" इत्याद्युपक्रम्य, "अर्घ्यपात्रामृते क्षिप्त्वा निर्विकल्पः सदानघे" इत्यन्तेन ज्ञानार्णवे वितत्य निरूपितम्। एवं ज्ञानार्णवाद्युक्तदूतीयजनमार्गेण पञ्चमं पञ्चमद्रव्यं शुक्रशोणितरूपम्। मार्गेणैव संपाद्येत्यन्वयः ॥ २८ ॥

एव पञ्चमं संपाद्य विशेषार्घ्ये योजयेत्। अत्र विशेषार्घ्येति पञ्चपात्रपक्षे श्रीपात्रस्याप्युपलक्षकम्। तद् एवं पञ्चमं संयोज्य तेन बिन्दुना समर्चनम्। अक्षयं फलं यस्य। एवं समर्चनस्यानन्तफलमित्यर्थः। योगिनां समाहितचित्तानाम्। तत् पञ्चमम्। अन्येषाम् असमाहितचित्तानाम्। दुर्लभं लब्धुमशक्यम् ॥ २९ ॥

तत्कारणं दुर्लभत्वकारणम्। तदवाह—शिवेत्यादि। अत्र मैथुनेनोत्पादितं शुक्रशोणित हि पञ्चमम्। तत्र यदि शिवस्य शुक्लस्याधिक्ये आधिक्यादादौ स्खलने निरानन्दः दूत्या असन्तोषः। एतदुक्तं स्वतन्त्रे—"कदाचिच्छक्तितः पूर्वं क्षोभे जाते शिवस्य वै। शक्त्यसन्तोषतो देवि नाशमेति स वै पुमान् ॥" इति। शक्त्याधिक्ये शक्तेः शोणितस्याधिक्यात् प्रथमतः स्खलने मूढता जडत्वं स्थावरादिजन्म। एतदुक्तं योगिनीतन्त्रे—'शिवस्य तु प्रपतने हानिरादौ प्रकीर्तिता। शक्तेरादौ प्रपतने स्थावरत्वमवाप्नुयात् ॥ तस्माच्छक्त्यनुरोधेन धारयन् क्रमतस्त्यजेत्।" इति ॥ ३० ॥

शिवशक्त्योः समं समकालस्खलितं शुक्लं शोणितम्। ब्रह्म यथा ब्रह्म शिवशक्तिसामरस्यरूपमेवं तत् पञ्चमं द्रव्यं तादृगेव संपाद्यम्। मया भैरवेण। एतत् पञ्चम-

दूतीमनोऽनुरोधेन निश्चलेन्द्रिययोगतः ।
साधयेदन्यथा देवि भाजनं निखिलापदाम् ॥३२॥
तस्मादसाध्यमित्येतदनुकल्पेन पूजयेत् ।
कुसुमं लिङ्गयोन्योर्वा सकाश्मीरं च चन्दनम् ॥३३॥

---

द्रव्यम् । सकृदेकवारं लब्धम् । यस्मात् यल्लाभात् । भैरवतां गतः प्राप्तः । एतच्च त्रिपुरार्णवेऽप्युक्तम्—"पञ्चमं नहि सर्वेषां सुलभं पर्वतात्मजे । योगीन्द्राणामपि तु तद् दुर्लभं सर्वथा भवेत् । समानमिलितं तच्च ग्राह्यं ज्ञात्वा यतो भवेत् । अतस्तत्तु महायोगिगम्यमेव न चान्यथा ॥" इति ॥ ३१ ॥

अत एवाह—दूतीमनोऽनुरोधेनेति । दूत्याः ज्ञानार्णवाद्युक्तलक्षणाया शक्तेः मनोऽनुरोधेन मनसो यावन्मथनमिष्टं तावन्मथनेन । नाधिकेन न्यूनेन वा । निश्चलेन्द्रिययोगतः । इन्द्रियाणां चक्षुरादीनां योगः दूतीशरीरपूजनकाले तत्तत्स्थानसंबन्धः । स निश्चलो यस्मिन्विधाने । एवंविधानेन साधयेत् । अन्यथा चलितेन्द्रियत्वे । एतच्च त्रिपुरार्णवे स्पष्टमभिहितम्—"एवंविधानमज्ञात्वा विचलेन्द्रियमानसः । अन्यथाभावमापन्नः समूलं नाशमाप्नुयात् ।" इति । योगिनीतन्त्रेऽपि—"एतद्धि दुर्लभतरं गोचरं ह्यूर्ध्वरेतसाम् । साहसेन न कर्तव्यं यतो नाशमवाप्नुयात् । युवतीमुखमालोक्य रेतो मुञ्चति तत्क्षणात् । तत्कथं ह्येतदिच्छेत ह्यतिसाहसमाश्रितः ॥" इति । स्वतन्त्रे तु—"पञ्चमं शृणु देवेशि द्वैविध्यं चोक्तमेव ते । आद्यं तत्र कलौ देवि त्रिसहस्रान्तमिष्यते ॥ द्वितीयं तु भवेद् देवि स्वयोषिति सुरेश्वरि ।" इति । अत्र पूर्वग्रन्थे पञ्चमेन यजनं द्विप्रकारकमुक्तम्—एकं पात्रस्थापनोत्तरमुक्तरीत्या दूतीयजनं कृत्वा शुक्रशोणितं समादाय विशेषार्घ्ये संयोज्य पूजनम्, द्वितीयं तु सामयिकपूजोत्तर दूतीं संपूज्य तस्या अङ्गे न्यासपूजनादिकं विधाय तया सह मण्डले देवतोत्तरतः संगच्छन् मन्त्रपठनपूर्वकं होमभावनया तस्या योनौ देवताप्रीणनबुध्या रेत उत्सृजेदिति । एतच्च स्वयोषिति स्वपत्न्यामेवेति नियमः । एतच्च ताराभक्तिसुधार्णवे उद्योते च विवेचितं द्रष्टव्यम् । रहस्यार्णवे तु त्रिधा निरूपितम्—"एष प्रकारो देवेशि योगिराजैकगोचरः । द्वितीयं तु समर्च्यान्ते दूतीं पूज्य यथाविधि ॥ योनिकुण्डे शिवात्माग्नौ मन्त्रमावर्तयन् क्रमात् । रेतोहविर्हावयित्वा देवताप्रीतिमाप्नुयात् ॥ अथवा शिष्यभूतां वा चान्यां वापि महेश्वरि । प्रार्थितो वा तया स्वेन प्रार्थिता वापि शङ्करि ॥ संपूजिता तु पूजान्ते भोगपात्रं निवेद्य च । मनसा तां समागच्छन् देवतायै निवेदयेत् ॥ ततस्तया यथाकालं संगच्छेत् साधकोत्तमः ॥" इति । एवं त्रिविधे पञ्चमपूजने आद्यप्रकार एवासाध्यो योगिमात्रगम्यः, यदुपक्रम्योक्तं सिद्धनाथसंहितायाम्—"अद्वैतज्ञाननिष्ठो यो योऽसौ संसारपारगः । स एव यजने दूत्या अधिकारी तु नापरः ॥" इति ॥ ३२ ॥

यस्मादेतद्योगिनां निश्चलेन्द्रियाणां सुलभं तस्मात् । अन्येषामसाध्यमिति हेतो-

योजयेन्मूलमनुना वाष्टधा त्वभिमन्त्रितम् ।
नैमित्तिकार्चाकालं तु शृणु तत्रादितः शिवे ॥३४॥
तत्तन्मासोत्थकुसुमैः फलैरन्यैरपीश्वरि ।
पञ्चपर्वस्वेकतमे निमित्तोल्लेखपूर्वकम् ॥३५॥
रात्रौ नैमित्तिकीं पूजां पर्वयोगे दिवापि च ।
गुरुतीर्थव्रतप्राप्तौ जन्मदीक्षादिने तथा ॥३६॥

---

रेतत् पञ्चममनुकल्पेन कृत्वा पूजयेत् । अनुकल्पमेवाह—कुसुममिति । लिङ्गयोन्योः कुसुमं रक्तकरवीरकृष्णापराजितयोः कुसुमम् । एतदुक्तं योगिनीतन्त्रे—"रक्तं तु करवीरं वै तथा कृष्णापराजिता । एतत्प्रोक्तं लिङ्गयोनिपुष्पं तत् तत्र योजयेत् ॥" इति । पक्षान्तरमाह---सकाश्मीरमिति । केसरयुतं श्वेतचन्दनम् ॥ ३३ ॥

एतद्वा विशेषार्घ्ये योजयेत् । अथवा एतत्स्थाने अष्टधा मूलमनुना अभिमन्त्रितं कुर्यात् । एतदुक्तं स्वतन्त्रे—'अथवा लिङ्गयोन्योश्च कुसुमं तत्र योजयेत् । काश्मीरपङ्के मूलेन श्वेतचन्दनपङ्ककम् । संयोज्य योजयेद्देवि मूलाष्टजप एव वा ॥' । इति । मूलाष्टकजपस्तु मूलाष्टकेनाभिमन्त्र्येति, मूलाष्टकं तथा बालामित्यष्टमैकोनविंशयोरुक्त एव, न पुनरन्योऽष्टधा जपः । "एतन्मूलाष्टकजपः पञ्चमप्रतिरूपकः" इति त्रिपुरार्णवोक्तेः । नैमित्तिकपूजां वक्तुमाह —नैमित्तिकेति । आदितः चैत्रमासात् ॥३४॥

तत्तन्मासश्चैत्रदिमासः । अन्यैः धान्याद्यैः । कृष्णाष्टमीचतुर्दश्यौ पूर्णिमा च संक्रम इति पञ्चपर्व । तेष्वेकतमे एकस्मिन्नित्यर्थः । निमित्तोल्लेखः अनुकपुष्पपूजामुकफलपूजेत्यादि ॥ ३५ ॥

रात्रौ नैमित्तिकीमित्यनेन नैमित्तिकपूजाकाल उक्तः । एवं च तत्र नैमित्तिकतिथ्यादिकं प्रदोषव्याप्तं ग्राह्यम् । यदि दिनद्वये प्रदोषव्याप्तिस्तदा अधिकव्याप्तदिने, समव्याप्तौ परदिने, अव्याप्तौ पूर्वदिने इति ज्ञेयम् । एतदुक्तं नित्यातन्त्रे—"प्रदोषव्याप्ततिथ्यादौ कुर्यान्नैमित्तिकार्चनम् । विषमे त्वधिकं ग्राह्यं समे परदिने तथा ॥ रात्रिव्याप्ते त्वलाभे वै पर्वयोगे दिवैव तु ॥" इति । दिवैव संक्रान्त्यादिपर्वयोगे दिवैव पूजयेत् । अपिरेवार्थो ज्ञेयः । दिवैव वेत्यर्थः । पर्वाण्येवाह—गुर्वित्यादि । गुरुप्राप्तावित्यादित्रिष्वपि प्राप्तेरन्वयः । गुर्वात्मनोर्जन्मदीक्षादिने इत्यन्वयः । जन्मदिने दीक्षादिने इत्यर्थः । एतच्च परमगुर्वादेरुपलक्षकम्, "गुरोर्जन्मदिने तद्वत् तद्गुरोस्तद्गुरोरपि" इत्यादिकुलार्णवात् ॥ ३६ ॥

गुर्वात्मनोर्मृतदिने पञ्चपर्वसु चेश्वरि।
बाह्यपर्वस्वक्षराणां योगे चान्तरपर्वसु ॥३७॥

---

गुरोरित्यध्याहृत्य मृतदिने इति योज्यम्। पर्वपञ्चकमुक्तं बाह्यपर्वयुगादिप्रमुखम्। एतच्चोक्तं त्रिपुरार्णवे—'पञ्चपर्व युगाद्यादौ तथा पुण्याधिके दिने" इति। पुण्याधिकदिनं ग्रहणवारुण्यर्धोदयादिः। अत्र ग्रहणे पर्वकाले एव पूजा न वेधकाले। एतदुक्तं रहस्यार्णवे—"ग्रहणे पूजनं कृत्वा कोटिपूजाफलं लभेत्। पर्वकाले तदन्ते वा पूजयेन्न तदादितः॥ त्याज्यत्वाद्वेधकालस्य तत्र पूजा तु हानिकृत्॥" इति। पर्वणः सूक्ष्मत्वे तदन्ते वेत्युक्तम्। तन्महिमापि तत्रैवोक्तः—"अत्र पूजा जपो ध्यानं पूजोपकृतिरेव च। स्वात्मीकारश्च देवेशि फलानन्त्यप्रदं स्मृतम्॥" इति। अक्षराणां योगो द्वाविंशे वक्ष्यमाणः। आन्तरपर्वाणि कुलतिथ्यादीनि। तदुक्तं त्रिपुरार्णवे—"समा तिथिः कुलतिथिर्द्वितीया दशमी तथा। कुलाकुलतिथिः षष्ठी चान्या स्यादकुला तिथिः। कुलवारौ भौमशुक्रौ कुलाकुलमयो बुधः। कुलं स्यात् समनक्षत्रं रौद्रवारुणमूलभम्॥ कुलाकुलं चाभिजिच्च तथान्यदकुलं स्मृतम्॥" इति। तथा देवीपर्वाण्यपि तत्रैवोक्तानि—"कृष्णा त्रयोदशी शुक्ला तृतीया दशमी तथा। असितद्वादशी चामा शुक्लषष्ठी सितेतरा॥ चतुर्दशी तथा शुक्ला नवमी कृष्णपञ्चमी। पूर्णिमासी शुक्लगता चतुर्थी कृष्णपक्षगा॥ एकादशीति चैत्रादिमासेष्वेकैकशो भवेत्। एतानि देवीपर्वाणि पूजयित्वा महाफलम्॥" इत्यादि। एवंविधेषु नैमित्तिककालेषु नैमित्तिकी पूजा भवेदित्यन्वयः। एवंविधनैमित्तिककालेषु पूजनमावश्यकम्। तदुक्तं कुलार्णवे—"श्रीचक्रं कौलिको मोहाद्विशेषदिवसेषु यः। न करोति समर्थः सन् स भवेद् योगिनीपशुः॥" इति। त्रिपुरार्णवेऽपि—"नित्यां नैमित्तिकां चापि साधकस्त्वाचरेत् सदा। अशक्तो नित्यपूजायां मालामन्त्रं पठेच्छिवे॥ नैमित्तिकां सर्वथैव कुर्यात् साधकपुङ्गवः। तत्रासमर्थो गुर्वाद्यैः कारयेदर्चनं बुधः॥ प्रतिमासं चैकवारमपि वार्चां तु कारयेत्। तत्राप्यशक्तः षड्भिस्तु मासैर्वा कारयेत्तु ताम्। तत्रोक्तविधिना हेतुमुखैर्द्रव्यैस्तु भक्तितः। यथाशक्त्या पराशक्तेः पूजां वै कारयेत् सुधीः॥ आलस्यादथवा लोभात् षड्भिर्मासैरनर्चयन्। पशुर्भवेत्तस्य सङ्गं साधकः परिवर्जयेत्॥" इति। एतच्च मुख्यहेत्वादिद्रव्यपूजापरम्, दमनादिकतिपयपूजनात्यावश्यकत्वस्य वक्ष्यमाणत्वात्। रात्रौ नैमित्तिकीं पूजां पर्वयोगे दिवापि चेत्युक्तम्, तत्र नित्यपूजाकाले नैमित्तिकप्राप्तावुक्तस्त्रिपुरार्णवे—'काले प्राप्ते नित्यपूजां पश्चात् कुर्यादगाङ्गजे। एवं संध्यादिकं सर्वं मध्येऽन्त्ये वा समाचरेत्॥" इति। अत्र सन्ध्यादीनां पूजान्ते कालसंभवे पूजान्ते कर्तव्यत्वमन्यथा मध्ये इति ज्ञेयम्। बृहद्वामकेश्वरेऽपि—"नित्यकालस्य पूर्वं वा तत्काले वा महेश्वरि। नैमित्तिके तु सम्प्राप्ते पश्चान्नित्यं समाचरेत्॥" इति। सन्ध्या तु तत्काले एव कर्तव्या। तदपि तत्रैवोक्तम्—"पूजादिकर्म मध्ये तु सन्ध्याकाले समागते। अवान्तरान्ते सन्ध्यां तु

नैमित्तिकी भवेत् पूजा चान्यान्यपि शृणु प्रिये ।
चैत्रशुक्लप्रतिपदि निम्बपुष्पैः प्रपूजयेत् ॥३८॥
शङ्खतोयेन संप्रोक्ष्य निम्बपुष्पं महेश्वरि ।
अमृतीकृत्य तत्पश्चात् तन्मन्त्रं सप्तधा जपेत् ॥३९॥
तारोऽस्त्रं निम्ब पश्चात्तु निवासिनि च निम्ब वै ।
प्रिये सर्वामयाद्धारिणि वै पर च देवता ॥४०॥
प्रियकारिणि वर्मान्ते मूर्धा द्वात्रिंशदक्षरः ।
नैवेद्यान्ते समभ्यर्च्य गुडाद्यैः संस्कृतं च तत् ॥४१॥

---

कृत्वा शेषं समापयेत् ॥" इति । अवान्तरं पात्रस्थापनाद्यङ्गम् । तदुक्तं त्रिपुरार्णवे--"मध्ये त्वावश्यके प्राप्ते समाप्यैकाङ्गमीश्वरि । पात्रादिस्थापनारूपं कुर्यादावश्यकक्रियाम् ॥" इति । सूक्ष्मपर्वकाले उक्तं बृहद्वामकेश्वरे--"पर्वकाले सुसूक्ष्मे तु तदा नैमित्तिकं शिवे । संकल्प्यादौ तु तत्काले पूजयेदावृतिं क्रमात् ॥" इति । यदैकस्मिन्नेव दिनेऽनेकपर्वसंपातस्तद्विशेषोऽपि तत्रैवोक्तः – 'अनेकानां निमित्तानां सम्पाते युगपच्छिवे । उपचारानावृत्तिं च होमं तत्संख्यया चरेत् ॥ अवशिष्टं तु तन्त्रेण संकल्पादिकमीश्वरि ॥" इति । एतच्च नैमित्तिकेष्वङ्गाधिक्ये एव । तदुक्तं त्रिपुरार्णवे--"एकदा पर्वणां योगे चाङ्गाधिक्ये च कर्मणाम् । आवर्तयेत् पूजनं वै तत्तदङ्गेन चैमिश्रितम् । तदभावे तु चैकेन पूजनेन कृतार्थता ॥" इति । अयमर्थः--आश्विनशुक्लप्रतिपदि नित्यापूजनं नवरात्रपूजनं चेति द्वयं प्राप्तम् । तत्र नित्यपूजातो नवरात्रपूजने जपहोमाद्यङ्गाधिक्यमस्ति । तत्र तत्तदङ्गमिश्रितोपचाराद्यावृत्तिः । संक्रान्तिपौर्णमास्योरेकदिनप्राप्तौ तत्राङ्गाधिक्याभावादेकपूजनेनैव चारितार्थ्यम् । सर्वत्र संकल्पे त्वखिलनिमित्तोल्लेखः कर्तव्यः । तदुक्तं त्रिपुरार्णवे--"उल्लिख्य तु निमित्तानि संकल्पे त्वखिलानि तु" इति । दमनारोपसंक्रान्त्योः संपाते एकत्रैवाङ्गाधिक्येन "अङ्गाधिक्ये च कर्मणाम्" इति बहुवचनस्वारस्यान्न पूजावृत्तिः । एवं चावृत्तिस्थले संकल्पादिदेवतातर्पणान्तं सकृद् उपचारावरणहोमानामावृत्तिः । शङ्खोद्वासनाद्यवशिष्टं सकृत् । तत्र बलिपूजनमुपस्थितत्यागानौचित्यात् प्रथमावृत्तौ । गुर्वादिपूजान्त्यावृत्तौ, "गुरुशक्त्यादिपूजां तु कुर्यात् सर्वान्ततः शिवे" इति त्रिपुरार्णवादिति ॥ ३७ ॥

अन्यानि वक्ष्यमाणानि ॥ ३८-३९ ॥

मन्त्रमेवाह—तार इति । तारः ॐ । अस्त्रं फट् । पश्चात्तु च । वै । आत् । वै । च ॥ ४० ॥

इति त्यक्त्वा निम्बेत्यादि कारिणीत्यन्तं स्वरूपम् । वर्म हुं । मूर्धा स्वाहा । प्रथम-

आवृत्त्यन्ते निवेद्याथ ब्राह्मणांश्च सुवासिनीः।
भोजयेच्छक्त्यनुगुणं स्वयं भुञ्जीत साधकः ॥४२॥
अथैतत्पूर्णिमायां तु दमनारोपणं भवेत्।
शिवप्रसादसंभूत अत्र सन्निहितो भव ॥४३॥
शिवकार्ये समुच्छिद्य नेतव्योऽसि शिवाज्ञया।
तारमादौ पठेदस्य चतुस्तारं तथान्ततः ॥४४॥
संपूजयेद् रतिकामदेवाभ्यां नम इत्यथ।
आहरेन्मूलसहितं गुच्छं वाप्यस्त्रमन्त्रतः ॥४५॥
पात्रस्थं मनुना प्रोक्ष्य मध्यात्तु नवधा स्थितम्।
आनन्दभैरवार्णैस्तु बिन्दुयुक्तैर्नमोन्तकैः ॥४६॥

---

नैवेद्यान्ते तत्पुष्पैर्देवतां समभ्यर्च्य ॥ ४१ ॥

गुडादिसंस्कृतं तद् निम्बपुष्पमावृत्त्यन्ते देवतायै निवेद्येति सम्बन्धः। गुडादीत्यादिना अम्ललवणादिग्रहणम्। अथ पूजानन्तरम्। शक्त्यगुणं यथाशक्ति। पुष्पसहितमेव भोज्यादिकं भोजयेद् भुञ्जीत च। अत्र तत्तत्कालोक्तफलपुष्पादिपूजनप्रकारस्त्रिपुरार्णवे उक्तः--"एवमन्येषु तद्द्रव्यैर्देवतामग्निमेव च। सुवासिनीसामयिकानर्चयेद् विधिवच्छिवे ॥" इति। एतेन प्रकृतेऽपि निम्बपुष्पैरग्न्यादिपूजनं ज्ञेयम् ॥ ४२ ॥

दमनपूजां वक्तुमाह—अथेति। निम्बपूजानन्तरमित्यर्थः। एतत्पूर्णिमायां चैत्रपूर्णिमायाम्। दमनस्यारोपणं यस्मिन् पूजने। तत्र दमनपूजामन्त्रमाह—शिवप्रसादेति ॥४३॥

शिवप्रसादेत्यस्यादौ तारं ॐ शिवाज्ञयेत्यस्यान्ततः अन्ते चतुस्तारम्। अत्र शिवकार्ये इत्यत्र तत्तत्पूजार्थे देवीकार्येत्यादि तत्तन्नामोह इति ताराभक्तिसुधार्णवे उक्तम्। तच्छिवप्रापके कार्ये इत्याद्यर्थसंभवेन विरोधाभावादनादेयमेव। अन्यथा शिवपूजायाः सर्वथा प्रकृततन्त्रेऽप्रस्तुतत्वात्तथा कथनस्यासामञ्जस्यापत्तेः ॥४४॥

चतुस्तारान्ते रतिकामदेवाभ्यां नम इति दमनवृक्षं संपूजयेत्। अथ पूजनानन्तरम्। अस्त्रमन्त्रतः फट् इति। मूलसहितं गुच्छं वा आहरेत्। अलाभे तु क्रयक्रीते एव गुच्छे पूजनादि कर्तव्यम्, "सिद्धे मन्त्राः प्रयोक्तव्याः" इति न्यायात्। त्रिपुरार्णवेऽप्युक्तम्—"अलाभे तु क्रयक्रीतं संपूज्याहृत्य पूजयेत्" इति ॥४५॥

पात्रे मध्येऽष्टदिक्षु च नवधा दमनं विभज्य स्थितं कृत्वेति शेषः। आनन्दभैरवः ह्स्क्ष्म्ल्व्यूँ। एतद्बीजगतैर्नवभिर्वर्णैर्बिन्दुयुतैर्नमोऽन्तैः संपूज्येत्यन्वयः ॥ ४६ ॥

संपूज्य कुर्याद्धेन्वादि वस्त्रेणाच्छादयेत् ततः।
अघोरे वाग्भवं घोरे माया सर्वं च तस्तथा ॥४७॥
सर्वशर्वेभ्यो च घोरतरे लक्ष्मी नमोस्तु ते।
अस्तु रुद्राच्च रूपेभ्यो माया लक्ष्मीर्मुखे ध्रुवः ॥४८॥
रामाग्निवर्ण एषः स्यात् प्रोक्षणे दमनस्य तु।
नवयोनिं द्विधा वृत्तमष्टपत्रं च भूगृहम् ॥४९॥
सिन्दूरेण विरच्याथो तदूर्ध्वे यवपुञ्जकम्।
तत्र तण्डुलपूर्णं तु स्थापयेत् कलशं शुभम् ॥५०॥
तद्दक्षिणेऽष्टपत्रं तु सिन्दूरेणैव कारयेत्।
अशोकं कर्णिकायां तु नानावर्णोपशोभितम् ॥५१॥
तन्मूले च त्रिकोणं वै तत्र कामं प्रपूजयेत्।
रतिप्रीतियुतं नाम्ना बीजाद्येन महेश्वरि ॥५२॥

---

तत्र दमनं मध्यादीशान्तं पुष्पाक्षतैः हं नमः सं नम इत्यादि सपूज्य धेन्वादि अमृतीकरणसंरक्षणावगुण्ठनानि कुर्यात्। नूतनवस्त्रेणाच्छादयेत्। वाग्भवं ऐं। माया ह्रीं। च तथा ॥ ४७ ॥

लक्ष्मी श्रीं। तु। अत्र। इति त्यक्त्वा अघोरे इत्यादि रूपेभ्य इत्यन्तं स्वरूपम्। माया लक्ष्मीश्च प्रोक्ते। मुखे सर्वादौ। ध्रुवः ॐ ॥ ४८ ॥

रामाग्नि त्रयस्त्रिशत्। एष दमनस्य प्रोक्षणे मन्त्रः। नवयोनिं द्वादशे उक्ताम्। तद्बहिर्द्विधावृत्तं वृत्तद्वयम्। अष्टपत्रमेकं भूपुरं च सिन्दूरेण विरच्येत्यन्वयः ॥ ४९ ॥

तदूर्ध्वे नवयोन्युपरि। यवानां पुञ्जं राशिं स्थापयेदित्यन्वयः। तत्र यवपुञ्जोपरि। अत्र कलशस्तु दीक्षोक्तसौवर्णाद्यन्यतमः। त्रिगुणतन्तुवेष्टितः सुधूपितस्तण्डुलभरितपूर्णपात्रयुतः। एतदुक्तं त्रिपुरार्णवे—"दीक्षोक्तवत्तु कलशं पूर्णपात्रेण संयुतम्" इत्यादि। कलशप्रमाणमुक्तं योगिनीतन्त्रे—"तण्डुलप्रस्थमानं वा तदर्धं वा तदर्धकम्" इति ॥ ५० ॥

तस्य कलशस्य दक्षिणे भागेऽष्टपत्रं कर्णिकायामशोकवृक्षं कारयेदित्यन्वयः। एवकारेणाष्टपत्रं नानावर्णव्यावृत्तिः ॥ ५१ ॥

तस्याशोकस्य मूले कर्णिकान्तस्त्रिकोणं योगतया सिन्दूरेण कारयेत्। क्लीं तद् रतिप्रीतियुतकामाय नम इति मन्त्रेण तत्र त्रिकोणे कामं पूजयेत् ॥ ५२ ॥

कलशे देवतां चापि पूजयेदुपचारकैः ।
चक्रराजं तु संपूज्य तस्य पश्चिमभागतः ॥५३॥

दमनैः सर्वतोऽभ्यर्च्य निर्माल्यं मूर्ध्नि धारयेत् ।
कामबीजेन तत्पश्चाद् दक्षिणावस्त्रसंयुतम् ॥५४॥

दद्यात्तु दमनेनाढ्यं देवतां भावयन् हृदि ।
अथवा ज्येष्ठपर्यन्ते वस्वङ्केन्द्रतिथावपि ॥५५॥

वैशाखे हैमसलिलैरुशीरव्यजनादिभिः ।
पानकैः शीतलद्रव्यैः पूजयेत् परमेश्वरीम् ॥५६॥

ज्येष्ठे रम्भाम्रपनसफलैः पूजां समाचरेत् ।
आषाढे पञ्चगन्धैस्तु पूजयेत् परदेवताम् ॥५७॥

---

देवतां मूलदेवताम् । तस्य कलशस्य ॥ ५३ ॥

अत्र सङ्कल्पोत्तरं श्रीचक्रपश्चिमतः पात्रासादनादि आत्मपूजान्तं कृत्वाऽऽहृतदमनपूजां कृत्वा कामं कलशे देवतां चक्रराजं च पूजयेत्, कलशे देवतार्चान्ते चक्रराजं तु संपूज्येति चक्रराजपूजाया एव विधानात्, सर्वपूजने पात्रस्थापनाङ्गस्यावृत्त्ययोगाच्च, शङ्खतोयेन सम्प्रोक्ष्येति निम्बपूजनवचनानुगुण्याच्च । एवमेव पवित्रारोपणादावपि । ततो दमनैः सर्वतः सर्वत्र कामकलशदेवताचक्रराजेषु । इदं चावृत्तिपूजान्ते पञ्चपूजादौ ज्ञेयम् । तदुक्तं त्रिपुरार्णवे—"पञ्चपूजादिहोमाद्यं ततो निर्वर्तयेत् क्रमात्" इति । एवमेव सर्वत्र ज्ञेयम् । पूजां समाप्य सर्वत्रोद्वास्य कामबीजेन क्लीं इति निर्माल्यदमनं मूर्ध्नि धारयेत् । दक्षिणावस्त्रसंयुतं स्थापितकलशमिति शेषः ॥५४॥

सुवासिन्यै ब्राह्मणाय वा हृदि देवतात्मत्वेन ध्यायन् दद्यात् । एतदुक्तं त्रिपुरार्णवे—"दद्यात्तत्तु सुवासिन्यै ब्राह्मणायाथवा शिवे" इति । चैत्रपौर्णमा यां कर्तुमशक्तस्य कालान्तराण्याह—अथवेति । चैत्रादिज्येष्ठपर्यन्तं वस्वङ्केति अष्टमीनवमीचतुर्दशीषु । अपिना पूर्णिमायां च । एतदुक्तं त्रिपुरार्णवे—"चैत्रादिज्येष्ठपर्यन्तं नागाङ्केन्द्रदिनेऽथवा" इति ॥५५॥

वैशाखे पञ्चपर्वाद्यन्यतमतिथौ हिमसंबन्धिसलिलैः उशीरनिर्मितव्यजनादिभिः । आदिना तन्मासजातफलपुष्पादिभिः । पानकैः शर्करोदकैः । शीतलद्रव्यैश्चन्दनैलादिनिर्मितद्रव्यैः प्रथमपदार्थैः ॥५६॥

रम्भा कदली ॥५७॥

एला कङ्कोलकं जातीफलं केसरमेव च ।
चन्दनेन युतं देवि पञ्चगन्धं वदन्ति वै ॥५८॥
पवित्रैः पूजनं देवि श्रावणे परिकीर्तितम् ।
सुवर्णतारताम्रैश्च पट्टपद्मोत्थसूत्रकैः ॥५९॥
दर्भमुञ्जाशणभवैः कार्पासैर्वा प्रकल्पयेत् ।
कार्पाससूत्रं नवधा गुणितं स्यान्महेश्वरि ॥६०॥
ऋतुनन्दगुणं तावद्ग्रन्थियुक्तं पवित्रकम् ।
नृपग्रन्थिगुणं युग्ममेकग्रन्थिगुणैककम् ॥६१॥
अष्टगन्धेनानुघृष्य क्वचित् पात्रे निधापयेत् ।
अस्त्रेणाभ्युक्ष्य धेन्वाद्यैः संस्कृत्याभ्यर्चयेच्छिवाम् ॥६२॥

---

पञ्चगन्धानेवाह—एलामित्यादि । चन्दनेन युतमेलादिचतुष्टयम् ॥५८॥

पवित्रपूजनमाह—पवित्रैरित्यादि । पवित्रप्रकारमाह—सुवर्णेत्यादि । तारो रौप्यम् । ताम्रैर्निर्मितसूत्रैः ॥५९॥

शणभवैः सूत्रैः पवित्रं प्रकल्पयेत् । कार्पाससूत्रं नवगुणितमिति विशेषः ॥६०॥

ऋतुनन्दगुणं षण्णवतिगुणम् । तावद्ग्रन्थिः षण्णवतिग्रन्थिः । एवंविधं पवित्रमेकमिति शेषः । नृपाः षोडश । तावद्ग्रन्थिगुणयुतं युग्मं द्वयम् । एकग्रन्थिगुणयुक्तमेकम् । इति पवित्रचतुष्टयं कर्तव्यम् । अत्र पवित्रसूत्रादिकमुक्तं त्रिपुरार्णवे—"प्रोक्तेषु शणमुञ्जादिवनस्थानामुदीरितम् । भूभुजां तु सुवर्णादि सर्वेषां पट्टसूत्रजम् ॥ रक्तकौशेयसूत्रोत्थं त्रिपुरापरमप्रियम् । वितस्तित्रितयं मालाकारवद्वेष्टयेत् क्रमात् ॥ तदर्धान्न्यूनमपि वा वित्तशाठ्यं विवर्जयेत् । तत्रान्त्यसूत्रेण समप्रदेशे ग्रन्थयेद् दृढम् ॥ संयोज्य सूत्रान्त्ययुगं ग्रन्थयेच्चरमं दृढम् ।" इति । बृहद्वामकेश्वरेऽपि—"अखण्डसूत्ररचितं ब्रह्मग्रन्थ्या समन्वितम् । नागग्रन्थियुतं वापि मुक्तारत्नादिचित्रितम् ॥" इति । समप्रदेशे ग्रन्थयेदिति ग्रन्थीनामन्तरालं समानमपेक्षितमित्यर्थः । अखण्डसूत्रमित्यनेन सूत्रान्तरेण ग्रन्थिकरणमसाम्प्रदायिकमेव ॥ ६१॥

एवं सूत्रचतुष्टयं संपाद्य तदष्टगन्धेनानुघृष्य धेन्वाद्यैश्चतुष्टयैः संस्कृत्य पवित्रैरभ्यर्चयेत् ॥६२॥

दमनारोपवत् कुम्भे स्थूले चक्रे समर्पयेत् ।
द्वितीयं तु सुवासिन्यै तृतीयं होमकर्मणि ॥६३॥

एकग्रन्थियुतं पश्चात् कलशं चार्पयेत्तथा ।
मिथुनार्कं समारभ्य तुलार्कान्तं भवेदियम् ॥६४॥

भाद्रपूर्णादिषु यजेत् केतकीकुसुमैः शिवे ।
नित्यापूजनकं कुर्यादाश्विने सितपक्षके ॥६५॥

आद्यां तिथिं समारभ्य पूर्णिमान्तं महेश्वरि ।
सुवासिनीं नित्यमेकां कुमारीं वापि पूजयेत् ॥६६॥

एकद्वित्रिशतं देवि जपं होमं क्रमाचरेत् ।
पूर्णिमायां तिथिशतं जपं होमं समाचरेत् ॥६७॥

पुनः शतं तथा जप्त्वा हुत्वा पश्चान्महेश्वरि ।
पूजयेत्तु सुवासिन्या युग्मं नाम्ना च पूजयेत् ॥६८॥

---

दमनारोपवत् कुम्भे देवतां संपूज्य तस्यै स्थूलं षण्णवतिगुणसूत्रं चक्रराजे द्वितीयं षोडशगुणं सुवासिन्यै तृतीयं षोडशगुणम् ॥ ६३ ॥

एकग्रन्थियुतं चतुर्थं होमकर्मणीति सम्बन्धः । अग्नौ देवतापूजोत्तरम् उपचारमन्त्रेण पवित्रमर्पयेत् । एवमेव कलशादिषु सर्वत्र । अन्यत्रापि तत्तद्द्रव्यसमर्पणमेवमेव ज्ञेयम् । ततः पूजासमाप्तेः पश्चात् कलशमर्पयेत् । तथा दमनपूजावत् । सुवासिन्यै ब्राह्मणाय वेत्यादि । एतस्यापि गौणकालावधिमाह—मिथुनेति । मिथुनार्कं मिथुनसङ्क्रमम् । तुला-संक्रमान्तमष्टम्याद्युक्ततिथिषु । इयं पवित्रपूजा ॥ ६४ ॥

भाद्रस्य पूर्वादिषु पूर्णिमादिषु । सितपक्षे शुक्लपक्षे ॥६५॥

आद्यां तिथिं प्रतिपदम् । पूजाङ्गसुवासिन्यादिपूजानन्तरं तत्सुवासिनोपूजनं मुख्यम् । एतदुक्तं त्रिपुरार्णवे—"पूजाङ्गतोऽन्या संपूज्या चालाभे पूजयेत्तु ताम्" इति । पूजाङ्गसुवासिन्या अन्या पूज्या, अलाभे पूजाङ्गसुवासिनीमेव तत्तन्नाम्ना पूजयेदिति तदर्थः ॥ ६६ ॥

प्रतिपदाद्येकैकतिथौ एकशतं द्विशतं त्रिशतमिति क्रमाज्जपं होमं च चरेत् । पूर्णिमायां सिद्धसंख्यामाह—पूर्णिमायामिति । तिथि पञ्चदश ॥ ६७ ॥

पञ्चदशशतजपहोमानन्तरं पुनस्तथा पूर्ववत् जपपूर्वकं शतं हुत्वा युग्मद्वयं

नित्यारूपां परां देवीं तत्तन्नाम्ना प्रपूजयेत् ।
नवनीतं शर्कराश्मदुग्धं चापूपकं तथा ॥६९॥
रम्भाफलं शर्करान्नं द्राक्षां नेत्रफलं तथा ।
खर्जूरं च तिलान्नं च दधिपार्थुकतण्डुलाः ॥७०॥
चणकाश्चापि मुद्गाश्च पायसं च क्रमाच्छिवे ।
निवेद्य भोजयेच्छक्तिमेवं नित्याः प्रपूजयेत् ॥७१॥
सकृत्पूजनमात्रेण वाञ्छितार्थान् लभेच्चिरम् ।
इयं पूजा महापुण्या सर्वसिद्धिविधायिनी ॥७२॥
तस्मादेतत्प्रयत्नेन कुर्याच्छ्रेयोऽभिवाञ्छकः ।
पक्षेऽस्मिन्नेव देवेशि नवरात्रव्रतं भवेत् ॥७३॥
उपासकानामत्यन्तमुख्यं पुण्योदयं परम् ।
पूर्वोक्तवत्तु देवेशि नवम्यन्तं समाचरेत् ॥७४॥

---

नाम्ना तत्तत्तिथिनित्यानाम्ना ॥ ६८ ॥

नाम्ना पूजाप्रकारमाह—नित्येति । कामेश्वरीनित्यारूपायै परादेव्यै इत्यादि । तिथिक्रमेण नैवेद्यभेदानाह—नवनीतमित्यादि । शर्कराश्म सितोपला ॥६९॥

रम्भाफलं कदलीफलम् । शर्करान्नं शर्करौदनम् । नेत्रफलं नारिकेलफलम् । पार्थुकतण्डुलाः पृथुकाः ॥ ७० ॥

क्रमात् एकैकतिथावेकमेकम् । अत्र जपहोमौ नैवेद्यमध्यजपान्ते पूजाङ्गहोमान्ते च क्रमात् कर्तव्यौ । तदुक्तं त्रिपुरार्णवे—"आवृत्यन्ते तु निर्वर्त्य नैवेद्यस्य जपान्ततः । शतं जपे तु होमान्ते शतधा च पृथग् हुनेत् ॥" इति । एवं तिथिवृद्धिक्षययोः । अनुष्ठानावृत्तिः समुच्चयश्च कर्तव्यः । तदुक्तं बृहद्वामकेश्वरे—"क्षये समुच्चित्य कुर्याद् वृद्धावावर्तनं चरेत्" इति । समुच्चयपूजा तु प्रागुक्तपर्वद्वयसंपातन्यायेन । होमद्रव्याणि नित्यपूजाहोमप्रोक्तान्येव ॥ ७१ ॥

एतत्फलमाह—सकृदिति ॥ ७२ ॥

यत एवं फलं पूजायाः, तस्मादिति । अस्मिन् आश्विनशुक्ले ॥ ७३ ॥

श्रीविद्योपासकानाम् अत्यन्तमुख्यम् । तत्र हेतुः परमिति । प्रोक्तेभ्यः सर्वेभ्यः, उत्कृष्टमित्यर्थः । अत्रापि हेतुः पुण्योदयमिति । अखिलपूजापुण्यस्योदयो यस्मादित्यर्थः ।

**आद्यात् त्रिपञ्चतिथितः सप्तम्या वा समारभेत् ।
सप्तरात्रं पञ्चरात्रं त्रिरात्रं वाप्यनीश्वरः ॥७५ ।**

एतदुक्तं त्रिपुरार्णवे—"अशक्तः सर्वपूजायां दमनं च पवित्रकम् । पूजयेन्नवरात्रे च सर्वपूजाफलोदयम् ॥" इति । एवं दमनपवित्रपूजयोरन्यत्रापि फलमुक्तं ज्ञानार्णवे—"दमनारोपणं वक्ष्ये साधकानां हिताय वै । संवत्सरकृता पूजा पूर्णा येन भवेत् प्रिये ॥" इति । तथा—"दमनेन तु यो मन्त्रो वर्षमध्ये न पूजयेत् । तस्य सांवत्सरी पूजा दमनाय भविष्यति ॥" इति । दमनो दैत्यः । दक्षिणामूर्तिसंहितायाम्—"अथ वक्ष्ये महेशानि पवित्रारोपणं महत् । यस्मिन् कृते कृतं सर्वमन्यथा शून्यमुच्यते ॥ गते संवत्सरे यस्तु न करोति पवित्रकम् । एकीकृत्य फलं तस्य नीयते दुर्गणैर्बलात् ॥" इति । दुर्गणैः दुष्टपिशाचादिगणैः । महाकालसंहितायाम्—"दमनारोपणाख्यैका पवित्रारोपणी परा । प्रतिसंवत्सरं चैते यो न कुर्वीत साधकः ॥ तस्य वर्षकृता पूजा व्यर्था भवति भामिनि । कृतामपि विलुम्पन्ति भूतप्रेतादयो गणाः ॥" इति । नित्यातन्त्रे—"चैत्रे दमनपूजां तु कुर्यात् पूर्णेन्दुसंयुते । येन सवत्सरकृता पूजा सफलतामियात् ॥' इति । तथा "पवित्रैः पूजयेद्देवीं श्रावणे मासि शङ्करि । यत्पूजनं विना व्यर्था पूजा संवत्सरे कृता ॥" इति । तथा—"आश्विनस्य सिते पक्षे नवरात्रस्य पूजनम् । कर्तव्यं सर्वथा सर्वैः प्रयत्नेनापि सर्वथा ॥ नवरात्रेष्वसंपूज्य यद्यत्कर्म करोति वै । पाषण्डाः प्रेतभूताद्याः फलमादाय यान्ति वै ॥" इति । रहस्यार्णवेऽपि—"नैमित्तिकं बहुविधं प्रोक्तं तन्त्रविभेदतः । सर्वेषां तत्र मुख्यं तु द्वितयं तच्छृणुष्व मे ॥ दमनारोपणं चैव पवित्रारोपणं तथा । शाक्तानां नवरात्रं चाश्विनशुक्ले महोत्सवम् ॥ न कुर्यात् त्रितयं यस्तु सन्ध्याभिः संमितं शिवे । किमन्येन कृतेनेह व्यर्थं भस्महुतं यथा ॥" तथा योगिनीतन्त्रे नवरात्रव्रतं प्रक्रम्य—"एतद् व्रतं साधकस्तु न करोति यदा तदा । सर्वं तद् वत्सरकृतं निष्फलं तस्य जायते ॥ नित्यं नैमित्तिकं वापि सर्वपूर्तिकरं त्विदम् ॥" इति । तथा—"सर्वोऽप्यत्र व्रतं कुर्यादुपवासादिकं शिवे । दिवा न भोजनं कुर्याद् रात्रौ यत्किञ्चिदाचरेत् ॥ पूजनं वा जपं वापि न्यासं पारायणानि वा । स्तोत्रपाठोऽथवार्चायां परिचर्यां यथाविधि ॥ अशक्तः पूजयेदन्यैर्धनं वा वितरेच्छिवे ॥" इति । बृहद्वामकेश्वरेऽपि नवरात्रं प्रक्रम्य—"इदमत्यन्तमुख्यं स्यात् सर्वपूर्तिकरं यतः । अशक्तोऽपि च पूजादौ किञ्चिन्नियममाचरेत् ॥ दिवा न भोजनं कुर्यान्नित्यवद्वापि पूजयेत् । एवं यो नाचरेत्तस्य सा सदैव पराङ्मुखी ॥" इति । एवं च नैमित्तिकलोपे तन्त्रान्तरोक्तसहस्रजपात्मकप्रायश्चित्तमप्यशक्तानां दमनपवित्रनवरात्रविषयमेव ज्ञेयम् । पूर्वोक्तवन्नित्यापूजनवत् । प्रतिपदादि एकशततद्विशतादिजपो होमश्च नवम्यां नवशतजपहोमोत्तरम् एकशतं जपो होमश्च सुवासिनीद्वयं चेति । एतदुक्तं त्रिपुरार्णवे—"द्वितीयादौ द्वित्रिशतजपहोमौ समाचरेत् । नवम्यामधिकं चैकं शतं स्याज्जपहोमयोः ॥ एका सुवासिनी तद्वदधिका पूजने भवेत् ॥" इति ॥ ७४ ॥

आद्यात् प्रतिपदो नवम्यन्तमिति सम्बन्धः । अशक्तं प्रत्याह—त्रिपञ्चेति ।

दुर्गा तथोमा गौरी च पद्मा चापि रमा तथा ।
लक्ष्मी च भारती मेधा तथैव तु सरस्वती ॥७६॥

नामभिस्तु क्रमादेभिः पूजयेच्छक्तिमन्वहम् ।
मुद्गौदनं तिलान्नं च माषान्नं कृसरौदनम् ॥७७॥

शर्करान्नं च दध्यन्नं घृतान्नं दुग्धसंस्कृतम् ।
पायसं चेति नवधा नैवेद्यं परिकल्पयेत् ॥७८॥

---

त्रिपञ्चतिथितः तृतीयायाः पञ्चम्याः। प्रतिपत्तिथिमारभ्य नवरात्रव्रतं शक्ताभिप्रायेण। तृतीयादिपक्षत्रयमशक्तितारतम्येन। तृतीयादिषु दिनसंख्यामाह---सप्तरात्रमित्यादि। अत्र सप्तरात्रव्रतं करिष्ये इत्याद्येव संकल्पोऽपि ज्ञेयः। एवं तृतीयाद्यारम्भपक्षे शतत्रयजपादिकं ज्ञेयम्। अनीश्वरः असमर्थः समारभेत् ॥ ७५ ॥

सुवासिनीपूजार्थं नामान्याह—दुर्गेत्यादि ॥ ७६ ॥

क्रमात् प्रतिपदमारभ्य दुर्गारूपायै परादेव्यै इत्यादि नवम्यां द्वितीयसुवासिनीं तु महात्रिपुरसुन्दरीमिति पूजयेत्। तदुक्तं त्रिपुरार्णवे—"सरस्वतीं नवम्यां तु महात्रिपुरसुन्दरीम्" इति। नित्यापूजने तु षोडशी त्रिपुरसुन्दर्यर्थेसिद्धैव। क्रमेण नैवेद्यभेदान्याह—मुद्गौदनमित्यादि। अत्र कृसरौदनमिति हरिद्रादिसंस्कृतं खिच्चडीति काशीभाषाप्रसिद्धम्, "मुद्गैस्तिलैस्तथा माषैर्हरिद्राभिर्गुडैरपि। दधिभिश्च घृतैर्दुग्धैः संस्कृतान्नैश्च पायसैः॥" इति त्रिपुरार्णवात्। कृसरौदनं तु तिलमिश्रितौदनमिति शास्त्रेषु प्रसिद्धस्य। तिलान्नमित्यनेन पुनरुक्तत्वाच्च ॥ ७७ ॥

दिनक्रमेण नैवेद्यम्। अत्र नवरात्रारम्भसमाप्त्योर्निर्णय उक्तो बृहद्वामकेश्वरे—"उदयानन्तरं यस्मिन् दिनेऽन्यूनं मुहूर्ततः। तत्रारम्भः प्रकर्तव्यो न दर्शन युते क्वचित्॥ मुहूर्ताद्यदि चेन्न्यूना प्रतिपत् स्यान्महेश्वरि। तदा दर्शयुता ग्राह्या प्रारम्भे देवताव्रते॥ तैलाभ्यङ्गस्नानमादौ कृत्वा वस्त्रादिभूषितः। आद्यपादं प्रतिपदश्चित्रां वैधृतिमेव च॥ त्यक्त्वा गणेशं संपूज्य पश्चात् संकल्पयेद् व्रतम्। मध्याह्नतः पूर्वमेव चान्यथा हानिमाप्नुयात्॥ लेशमात्रेणापि युतनवम्यां तु समापयेत्।" इति मध्याह्नात् पूर्वं सति संभवे चित्रादिवर्जनं ज्ञेयम्, हानिरूपदोषोक्तेः, निर्णयसिन्ध्वादिष्वप्येवमेव कथनाच्च। नित्यापूजने तु तिथिनित्याकालवत् ॥ ७८ ॥

नारिकेलोदकैस्तत्र पूर्णिमायां प्रपूजयेत् ।
दीपपूजां कार्तिकस्य पूर्णिमायां समाचरेत् ॥७९॥
पैष्टानि घृतपक्वानि डमर्वाभानि कारयेत् ।
कर्पूरगर्भवर्तीनि घृतपूर्णानि तानि तु ॥८०॥
कुङ्कुमाष्टदले मध्ये श्रीचक्रं तु समर्चयेत् ।
प्रज्वाल्य दीपकान् तस्य पद्मस्य परितो न्यसेत् ॥८१॥
परिवारसमान् तद्धद्धोमयेद् दीपकैः शिवे ।
दीपपूजा महापुण्या धनधान्यविवर्धिनी ॥८२॥
नारिकेलजलं माषवटकं मार्गशीर्षके ।
तथा पौषे तदुद्भूतपुष्पाणि च फलानि च ॥८३॥

---

तत्राश्विने ॥ ७९ ॥

तत्प्रकारमाह —पैष्टानीति । दीपपात्राणीति शेषः । कर्पूरगर्भाः कर्पूरयुता वर्तयो येषु । तानि दीपपात्राणि ॥ ८० ॥

कुङ्कुमेन कृताष्टदलपद्मे मध्ये कर्णिकामध्ये संस्थाप्येति शेषः । आवृत्त्यन्तं समर्चयेत्, "आवृत्त्यन्तं समभ्यर्च्य ततो दीपान् समर्पयेत्" इति त्रिपुरार्णवोक्तेः । दीपन्यासे मन्त्रोऽपि तत्रैवोक्तः—"दीपोपचारमन्त्रेण तत्तन्नामान्ततोऽर्पयेत्" इति । यथा महात्रिपुरसुन्दर्यै दीपं कल्पयामि नम इत्यादि । परिवारसमान् दीपकानित्यन्वयः ॥ ८१ ॥

दीपसंख्यामाह—परिवारेति । एतत्संख्यापि तत्रोक्ता—"नागनन्देन्दुसंख्याता दीपाः स्युर्मुख्यकल्पकाः" इति । नागोऽष्टौ नन्द नव, इन्दुरेकः । तेन १९८ अष्टनवत्यधिकशतसंख्या जाता । तत्प्रकार इत्थम्—मूलदेवी १ । नित्या १७ । ओघ २३ । अङ्ग ६ । अणिमादि ३० । कामाकर्षिण्यादि १८ । अनङ्गकुसुमादि १० । संक्षोभिण्यादि १६ । सिद्धिप्रदादि १२ । ज्ञादि १२ । वशिन्यादि १० । आयुध ४ । कामेश्वर्यादि ५ । बिन्दु ३ । अखण्ड १ । पश्चिका २० । समया ४ । आम्नाय ६ इति । तत्राखिलाम्नायपूजा तु समर्थाभिप्रायेणोक्तेति । आम्नायसमयदेवतामात्रग्रहणं तिथिनित्यादिननित्ययोरपि मूलदेव्यामन्तर्भावः, पश्चपाश्चिकाद्यदेवतानां मूलदेव्यन्तर्भावाभिप्रायश्च ज्ञेयः । प्रकृते समर्थेन त्वाम्नायदेवता अपि परिसंख्याय तावन्तो दीपाः समर्पणीया एव । अल्पशक्तेन तु संक्षेपपूजाद्युक्तदिशा क्वचिदावरणेषु समष्ट्या दीपाः कल्पनीया एव । अत एवामुख्यकल्पका इत्युक्तम् ॥ ८२ ॥

मार्गशीर्षे पौषे च पूर्णिमायामित्यन्वयः ॥ ८३ ॥

निवेदयेत् पूर्णिमायां तिलापूपैश्च माघके ।
आम्रपुष्पैर्मधूकैश्च फाल्गुने पूजयेच्छिवाम् ॥८४॥
गुर्वादिक्षयतिथ्यादौ दीक्षितान् नवसंख्यकान् ।
नामभिर्मानवौघोक्तैर्गुरुं तन्नामतोऽर्चयेत् ॥८५॥
समष्ट्या वा मानवौघं ब्राह्मणद्वयमेव च ।
गुर्वादिपात्रतो देवि यजेदेवं परां शिवाम् ॥८६॥

---

एवं फाल्गुनेऽपि । अत्र सर्वमासेषु पञ्चपर्वस्वेकतमे इति पूर्वं सामान्येन कालमभिधाय पुनस्तत्तत्पूर्णिमाकथनेन पूर्णिमाया मुख्यत्वमुक्तम् । एतदुक्तं योगिनीतन्त्रे—"तत्तन्मासे पूर्णिमायां मुख्यं पूजनमीरितम् । असम्भवे तत्र देवि पञ्चपर्वसु च क्वचित् ॥" इति ॥ ८४ ॥

गुर्वादीत्यादिना परमगुर्वादिग्रहणम् । क्षयतिथ्यादावित्यादिना क्षयतिथिसदृशश्राद्धपर्वग्रहणम् । तच्च स्मृतिपुराणादिषु द्रष्टव्यम् । दीक्षितान् दीक्षावतः । नवसंख्याकान् ब्राह्मणान् । तत्राद्यौ ब्राह्मणान् मानवौघोक्तनामभिः गगनानन्दनाथेत्यादिसप्तदशोक्तनामभिः । नवमं गुरुं तन्नाम्नाऽर्चयेत् ॥ ८५ ॥

अशक्तं प्रति ब्राह्मणद्वयपक्षमाह—ब्राह्मणद्वयमेव चेति । तत्र पूजनप्रकारमाह—समष्ट्या वेति । मानवौघेभ्य इत्यादि । एवं ब्राह्मणान् समभ्यर्च्य गुर्वादिपात्रतो यजेत् । गुरुपात्रात्तेभ्यो ब्राह्मणेभ्यः पात्रं दद्यादित्यर्थः । अत्र गुर्वादीत्यादिना नैमित्तिकपूजायां त्रिपात्रमप्युक्तम् । तत्पक्षे विशेषार्घ्यादिति द्योतितम् । एवमुक्तप्रकारेण परां शिवां यजेत् ॥ ८६ ॥

रुद्रयामले तु पित्रादिक्षयतिथौ कौलश्राद्धप्रकारोऽप्युक्तः । यथा—'देव्युवाच—देवदेव महादेव शङ्कर प्राणवल्लभ । त्वत्तः श्रुतं पुरा सर्वं त्रिपुरायाः सुविस्तरम् ॥ पूजनादिविधानं च त्रिकूटाख्ये रहस्यके । अधुना श्रोतुमिच्छामि कौलश्राद्धविधिं तथा ॥ अन्त्येष्टिं चापि देवेश वद सम्यग् दयानिधे । ईश्वर उवाच—शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि । यस्य श्रवणमात्रेण देवताप्रीतिमाप्नुयात् ॥ कौलश्राद्धमकृत्वा तु चान्यैः श्राद्धसहस्रकैः । नैव तृप्तिर्भवेद् देवि पितॄणां परमेश्वरि ॥ मृताहे तद्द्वितीये वा कृतनित्यक्रियः शुचिः । चतुरो ब्राह्मणान् द्वौ वा दीक्षायुक्तान्निमन्त्रयेत् ॥ संकल्प्याथ विशेषार्घ्यंपुरतः पात्रयुग्मकम् । विशेषां चैव देवानां पितॄणां च क्रमाच्छिवे ॥ आवृत्ति पूज्य नैवेद्यं कृत्वा शक्तिं प्रपूज्य च । चर्यानाथस्वरूपान् वै विश्वान् देवाँस्तु पूजयेत् ॥

**इत्येवं कथिता देवि पूजा नैमित्तिकाह्वया।**
**आत्यन्तिकतया देवि किं भूयः श्रोतुमिच्छसि ॥८७॥**

**इति परमानन्दतन्त्रे नैमित्तिकपूजाकथनं विंशतितमोल्लासः ॥२०॥**

---

मित्रीशादिस्वरूपांश्च पितॄन् संपूजयेत् क्रमात्। व्यष्ट्या वाथ समष्ट्या वा पूर्वोत्तरमुखान् शिवे ॥ आसनावाहने कृत्वा प्रार्थयेत्तु कृताञ्जलिः। विश्वेदेवा स्वागतं वो यज्ञेऽस्मिन् स्थीयतां क्षणम्। सावधानेन मनसा स्वीकुर्वन्तु सभाजनम्। चतुरस्रे तथा वृत्ते मण्डले पूज्य पादयोः ॥ क्षालनं चाथ सामान्यार्घ्यादर्घ्यं चापि कल्पयेत्। आचाममेवं वस्त्रादिदीपान्तेन पितॄन् यजेत् ॥ स्वाहान्तनाम्ना तत्पात्रात्तेभ्यः पात्रं समर्पयेत्। पूर्ववन्मण्डलं कृत्वा पूज्य भोजनपात्रकम् ॥ परिवेष्याभ्युक्ष्य तद्वै दत्त्वा हस्ते तथोदकम्। संविन्मये महापात्रे आनन्दमयभोज्यकम् ॥ भोक्ता त्वं पुरुषः साक्षी महाशक्तिर्महेश्वरः। सर्वमन्नं शक्तिमयं भोक्ता साक्षात् परः स्वयम् ॥ तस्मात् सर्वं शिवः साक्षाद् भोक्ता दाता च भोज्यकम्। विश्वेदेवा देवता नो भुञ्जन्त्वत्र मखे मम ॥ यावच्छक्यं तावदिह भोक्तव्यं स्वस्थमानसैः। पेयं खाद्यं भक्ष्यभोज्यं सर्वं वः सुसमर्पितम् ॥ पितॄणां परमानन्दहेतवे तद् भवेच्छिवम्। इत्येवं तोयमुत्सृज्य पितृस्थानेऽपि चोत्सृजेत् ॥ तत आपोशनं दत्त्वा यथेष्टं भोजयेत्ततः। यथासम्भवपक्वाद्यैस्तृप्ता यूयं भविष्यथ ॥ कुलद्रव्यैश्च वर्णैश्च पितॄणां शान्तिहेतवे। प्रार्थ्यैवं भोजनस्यान्ते प्रार्थयेत् पुनरेव च ॥ विश्वेदेवाश्च पितरस्तृप्ताः स्थास्मिन् महामखे। सर्वं सुमिष्टं सम्पन्नं भवत्वत्र यथेप्सितम् ॥ उत्तरापोशनं दत्त्वा तथा ताम्बूलदक्षिणाः ॥ विश्वान् देवान् तथा पितॄन् देवतारूपमास्थितान्। नमः पुरस्तात् पश्चाच्च पार्श्वयोरपि वो नमः। अनेन कौलश्राद्धेन विधिना पितृमुख्यकाः ॥ परमं पदमास्थाय भवन्त्वेते सुनिर्वृताः। परिक्रम्य नमस्कृत्य चैवं पश्चाद् विसर्जयेत् ॥ यथागतं तु पितरो गच्छन्त्वस्मान्महामखात्। विश्वेदेवैश्च सहिताः प्रसन्नाः सन्तु मे चिरम् ॥ ततः सामयिकान् पूज्य कर्म देव्यै समर्पयेत्। इत्येवं कथितो देवि कौलश्राद्धविधिः परः ॥ एतदावश्यकं देवि साधकानां शुभावहम्। कौलश्राद्धमिदं देवि सर्वतन्त्रेषु गोपितम् ॥ कर्तुः पितॄणां च देवि भवेत् फलमनन्तकम्। पशोरपि कृते श्राद्धे तस्य दीक्षाफलं भवेत् ॥ तस्मात् सर्वप्रयत्नेन कुर्यादेतच्छुभावहम्। तस्मादेतत् प्रयत्नेन साधकस्तु समाचरेत् ॥" एवं कौलश्राद्धविधिः रुद्रयामले देवीरहस्ये पञ्चषष्टितमपटले निरूपितः, त्रिकूटाख्ये रहस्यके रुद्रयामलान्तर्गते। अन्त्येष्टिर्मृतानां तान्त्रिकौर्ध्वदेहिकक्रिया मृताहे स्मार्तश्राद्धोत्तरमेव कर्तव्या, वैदिकान्ते एव तान्त्रिकाधिकारात्। एतच्च पञ्चमे व्याख्यातम्। मृताहेऽनवकाशे द्वितीयदिने कर्तव्या, मृतदिनस्यैव श्राद्धे मुख्यत्वस्मृतेः। अशक्ताभिप्रायण द्वौ वेति। अत्रासमर्थेन देवतापूजनमन्येन कारयितव्यमित्युक्तमुद्योते, विशेषार्घ्यस्य पुरत इति विशेषार्घ्यात्मनार्मध्ये आत्मपात्रस्थाने विधानात्।

आत्मपात्रात्मनोर्मध्यस्य नैवेद्यस्थानत्वात् । आत्मपात्रानन्तरं स्थापनीयत्वेन विशेषार्घ्यपुरतो हेतुपात्रादिवद् उत्तरादिदक्षिणान्तम् आत्मपात्रं विश्वेदेवपात्रं पितृपात्रं च स्थापनीयम् । तत्पात्रप्रमाणं तु विशेषार्घ्यसाहचर्यात्तत्तुल्यं ज्ञेयम् । अर्थात् स्थापनमपि तथैव । प्रकृते विशेषार्घ्य इति श्रीपाञ्चोपलक्षकम् । अत्र गुरुश्राद्धे गुरुपूजनं न कर्तव्यम् । गुरोरेव श्राद्धे पूजनीयत्वादित्युक्त मुद्योते । वस्तुतस्तु गुरुपूजायाः पूजाङ्गत्वाद् गुरुपात्रप्रतिपत्तेरावश्यकत्वादौ गुरुज्येष्ठादिषु गुरुपूजा कर्तव्यैव, अन्यथा जीवति परमगुर्वादौ तत्सान्निध्येऽप्यकर्तव्यत्वप्रसक्तेः । न चैतद्युक्तं प्रतीयत इति । गुरुकनिष्ठादेश्च गुरुश्राद्धे गुरुपूजनं कर्तव्यमेव । किन्तु तेन पात्रमादाय ज्येष्ठप्रतीक्षणवच्छ्राद्धान्ते स्वात्मीकर्तव्यमिति युक्तं प्रतीयते । परमगुर्वादौ जीवत्यपि तत्परगुरुद्वयेन सह त्रयोद्देशेन श्राद्धं स्मार्तन्यायेन कर्तुं युक्तमेव । कृतपुष्पाञ्जलीनेव ब्राह्मणान् पूजयेत् । तैरपि यथोक्तरीत्या तर्पणादिपूर्वकमेव स्वात्मीकर्तव्यम् । अत एव गुरुपूजाप्रकरणे उक्तं त्रिपुरार्णवे—"पुष्पाञ्जलिं प्रदायैव संतर्प्य स्वगुरूंस्तथा । गुरुपूजां समादद्यादन्यथा पापमाप्नुयात् ॥ असंपूज्याथ त्रिपुरामसंतर्प्य गुरून् स्वकान् । यः सेवेत कुलद्रव्यं स स्यान्मण्डलबाह्यगः ॥" इति । ब्राह्मणचतुष्टयपक्षे मित्रीशरूपं पितरम्, षष्ठीशरूपं पितामहम्, ओड्डीशरूपं प्रपितामहमिति । ब्राह्मणद्वयपक्षे समष्ट्या मित्रीशषष्ठीशोड्डीशरूपपितृपितामहप्रपितामहानिति पूर्वमुखान् विश्वान् देवानुदङ्मुखान् पितॄनुपवेश्य पूजयेत् । चतुरस्रवृत्ते देवपितृमण्डले । प्रार्थनमन्त्रे विश्वेदेवपदस्थाने पितृदेवेति पद्धत्युक्त ऊहोऽनुसन्धेयः । एवमग्रेऽपि । विश्वेदेवपात्राद्विश्वेदेवेभ्यो देवेभ्यः स्वाहेति विश्वेभ्यो देवेभ्यः । पितृपात्रादमुकानन्दनाथाय पित्रे इत्यादि पितामहप्रपितामहयोः प्रत्येकं पात्रं देयम् । समष्टिपक्षेऽपि प्रत्येकम् । एवं यथाशास्त्रं पात्रादिदानेन ब्राह्मणान् संतोष्य ततः पात्रमण्डलाद्युद्वासान्तं कुर्यात् । तन्नाम्ना त्रिधा होमः, पिण्डदानसमत्वादेतस्येत्युक्त मुद्योते । अत्र देवपितृपात्रविशेषः स्मार्तन्यायेन सर्वैः स्वीकार्य इति संक्षेपतस्तद्विवरणम् । सविस्तरप्रयोगः पद्धतौ द्रष्टव्यः । एतच्च कौलश्राद्धमकृतान्त्येष्टिकैर्न कर्तव्यम् । तत्प्रकारोऽपि तत्रैवाग्रिमपटले प्रोक्तः । यथा—"ईश्वर उवाच । अथातः संप्रवक्ष्यामि विधिमन्त्येष्टिसंज्ञितम् । अवश्यं तत्साधको वै कुर्याद् गुर्वादिषु प्रिये ॥ अन्त्येष्टिविधिना हीनो मण्डलस्थो न जायते । तस्मात्कुर्यात् प्रयत्नेन चान्त्येष्टिविधिमुत्तमम् ॥ यस्य न क्रियते देवि न दीक्षाफलमश्नुते । नैव कृत्वान्त्येष्टिविधिं कौलश्राद्धे न चार्हता ॥ सूतकान्ते तथाद्ये वा मासे वर्षेऽपि वा शिवे । अन्त्येष्टिमेव कुर्वीत मण्डलान्तर्गमाय वै । यस्यान्त्येष्टिर्न क्रियते प्रमादेनापि हेतुतः । तन्नाम्ना मूलमन्त्रं जप्त्वा श्राद्धं ततश्चरेत् ॥ न ज्ञायते यस्य नाम तस्य श्राद्धविधौ शिवे । मानवौघाद्यनाम्ना तु सर्वं देवि समाचरेत् ॥ मृतेऽह्नि पर्वसु तथा तीर्थे श्राद्धं समाचरेत् । उपासको वा तद्वश्यो वीरत्वं गच्छतीश्वरि ॥ बाह्यसंस्कारयोगेन प्रेतत्वात्तु विमुक्तितः । मण्डलान्तःप्रवेशार्थमन्त्येष्टिं तु समाचरेत् ॥ एकान्ते तु शुचौ देशे संकल्प्योदङ्मुखः शिवे । आचार्यं चापि ब्रह्माणं वृणुयात्तत्र शक्तितः ॥ आचार्यस्तु समभ्यर्च्याथ नैवेद्यान्तं विधानतः ।

हस्तसंमितवेद्यां तु सिन्दूररजसा लिखेत् ॥ श्रीयन्त्रं तत्र चावाह्य देवतां शक्तितो यजेत् । वितस्तिसंमितां तत्र कुशपुत्तलिकां न्यसेत् ॥ उदक्शीर्षो तत्र वीरं नाम्नावाह्य विधानतः । आगच्छ वीरपुरुष तिष्ठ चात्र कृतक्षणः ॥ विनियुक्तो मया पश्चात् परं धाम प्रपत्स्यसि । मण्डलेषु निविष्टः सन् भुवनेषु चिरं स्थितः ॥ निवृत्तिं परमां प्राप्य याहि तत्परमं पदम् । एतज्जपित्वा तत्कर्णे न्यसेत्तस्मिन् षडङ्गकम् ॥ तन्मात्राकर्षिणीः पञ्च श्रोत्रादिषु तु विन्यसेत् । हृदि चित्ताकर्षिणीं च मूर्ध्नि कालीं तु बीजतः ॥ मर्मकृन्तनिकां कण्ठे चाङ्कुशां ब्रह्मरन्ध्रके । प्राणाकर्षिणिकां मां ह्रीं मुखे कृत्वा तु विन्यसेत् ॥ ततस्तु मन्त्रं संश्राव्य निष्प्राणं तु विभावयेत् । कालधर्मं तु संप्राप्य न क्लेशं प्राप्तुमर्हसि ॥ न ते मृत्युः शिवो यस्मात् साक्षात्त्वं बहुशक्तिमान् । स्वशक्त्या स्वस्वरूपस्य गोपनारूपया ननु ॥ स्वातन्त्र्याख्यमहाशक्त्या पशुत्वं प्राप्तवानसि । गुरोर्वाक्यं स्मर क्षिप्तं भव श्रीशिवरूपकः ॥ देहान्मितात्समुत्क्रम्य सर्वकर्तृत्वमाप्नुहि । शिवाग्नौ देहसंस्कारं ततः संकल्पयेच्छिवे ॥ पादजानूरुनाभिषु हृत्कण्ठमुखलोचने । मूर्ध्नि विन्यस्य चक्रेशीमन्त्रान् चक्रात्मकं स्मरन् ॥ संपूज्य तु विशेषार्घ्यात्तन्नाम्ना तर्पयेत्त्रिधा । पार्श्वे मृताग्निं संस्थाप्य यन्त्राद् देवीं समावहेत् । संपूज्य तु विशेषार्घ्यात्त्रिधा संतर्प्य वै ततः ॥ पालाशसमिधां मूलेनाष्टोत्तरशतं हुनेत् । घृतेन स्रुचमापूर्य वीर तत्र तु निक्षिपेत् ॥ दक्षपादं तथोत्तानस्रुवेणाच्छादयेत्ततः । गृहीत्वोत्थाय तद्धस्ते वौषडन्ते हुनेत्ततः ॥ पराशक्तिस्वरूपस्य मृतवह्नेर्महामुखे । पूर्णाहुतिं प्रदास्यामि तन्नाम कथयेत्ततः ॥ पश्चात्तस्य तु वीरस्य पूर्णताप्राप्तिहेतवे । त्वं वीराग्नौ हुतोऽस्मिन् वै मलं भौतिकरूपकम् ॥ कामं मानसमप्येवं मायिकं चान्तरं तथा । आणवं च विसृज्याग्नौ धूममार्गेण चाथवा ॥ तेजोमार्गेणोर्ध्वलोकं प्राप्यान्ते परमं पदम् । पुनरावृत्तिरहितं व्रज मन्त्रप्रभावतः ॥ मूलं च पादुकामुक्त्वा तत्राग्नौ तद्विनिक्षिपेत् । तत्संख्यया घृतैर्हुत्वा होमं तं तु समापयेत् ॥ संपूज्य सामयीन् पश्चादाचार्यादीन् विसर्जयेत् । पुनर्दिनद्वयं देवि गुर्वादिद्वारतोऽर्चयेत् ॥ कुर्याच्छ्राद्धं चतुर्थेऽह्नि देवि मण्डलमेलनम् । वीरपात्रं च संस्थाप्य विश्वान् देवान् प्रपूज्य च ॥ पितामहादित्रितयं वीरं प्रत्यङ्मुखं यजेत् । त्रिकोणं मण्डलं तस्य जलमुत्सृज्य वै ततः ॥ पात्रयोर्मेलनादत्र मण्डलं मिलितं भवेत् । अद्य प्रभृत्ययं वीरो मण्डत्रयमध्यगः ॥ तेन मित्रीशतां प्राप्तो विहरेत्तु यथासुखम् । पठन्नेवं वीरपात्रं पितृपात्रे विनिक्षिपेत् । ततो मित्रीशरूपाय पित्रे चेति पुनर्हुनेत् ॥ सर्वत्र क्रमतो देवि वृद्धे तु त्रितयात्मना । पित्रादीनां चतुर्णां तु ततः पूजां समाचरेत् ॥ न पृथग्वीरशब्देन सर्वमेवं समापयेत् । अन्त्येष्टिविधिरेषोक्तः सर्वतन्त्रेषु गोपितः ॥ त्वत्प्रीत्या कथितो ह्यद्य मया तद् गोपयेश्वरि ।" इति । गुर्वादीत्यादिना पित्रादिग्रहणम् । नैव तृप्तिर्भवेद्देवि पितॄणामित्युक्तम् । तत्र पितॄणां पितृलोकं प्राप्तानां मृतानामित्यर्थः, प्रकृते गुरुपदानुरोधात् । तेन स्मृत्युक्तानां पितृपितामहमातुलादीनां स्मृत्युक्तैः पुत्रपौत्रभागिनेयाद्यैः कर्तृभिः कर्तव्यमिति फलितम् । संन्यासिनां तु स्मार्तदाहसपिण्डीकरणनिषेधात् प्रकृतान्त्येष्टिर्न

कर्तव्येति यद्यपि प्रतीयते, तथापि तत्र सन्यासिनां प्रेतत्वाभावेन तन्निवर्तकसपिण्डीकरणाद्यनावश्यकत्वेऽपि मण्डलप्रवेशस्य संन्यासमात्रात् सिद्धौ प्रमाणानुपलम्भात्तत्सिद्धये कर्तव्येत्येव युक्तं ज्ञेयम्। अन्त्येष्टिमन्तरा दीक्षाफलाभावकौलश्राद्धानर्हत्वादेरुक्तत्वाच्च। तथा दीक्षावतां बाह्यसंस्कारविहीनानां वीरदूतत्वम्। बाह्यसंस्कारमात्रवतां वीरत्वम्। अन्त्येष्टिसंस्कारवतामेव मण्डलान्तःप्रवेश इत्यादि वितत्य व्याख्यात त्रयोदश। तत्कालमाह—सूतकान्ते इत्यादि। सूतकान्ते इति सपिण्डीकरणान्तोपलक्षकम्, सपिण्डीकरणमन्तरा प्रेतत्वस्य स्थिरत्वेन वीरत्वाभावेनान्त्येष्टचनधिकारात्। एवं च द्वादशाहे सपिण्डीकरणोत्तरं आद्यमासे तृतीयपक्षादौ कृतसपिण्डीकरणस्य आद्यवर्षे वा कर्तव्यम्। वर्षान्तसपिण्डीकरणपक्षे तदव्यवहितोत्तरमेव कर्तव्यम्, प्रेतत्वात्तु विमुक्तित इति वक्ष्यमाणत्वात्, वर्षे इत्यस्य वर्षान्तोपलक्षकत्वात्। अन्त्येष्टिमेवेत्येवकारेण मण्डलप्रवेशे साधनान्तरव्यावृत्तिः। प्रमादेन अज्ञानात्। हेतुतः स्थानसाधनाद्यनुपपत्तेः। तस्यान्त्येष्टिकालात्यये कौलश्राद्धचिकीर्षुरयुतमूलं जप्त्वा श्राद्धं चरेत्। तन्नाम्ना अमुकनाम्नान्त्येष्टचकरणप्रत्यवायपरिहारद्वारा कौलश्राद्धाधिकारसिद्ध्यर्थमयुतमूलजपमित्यादि सङ्कल्पपूर्वकं जपेत्। नामाज्ञानमदीक्षितानां नामाभावाद् अन्येषामश्रवणाच्च मानवौघाद्यनाम गगनानन्दनाथेति स्त्रीणां गगनाम्बेति। मृताहमनूद्य श्राद्धे कालान्तराण्यप्याह—मृतेऽह्नीत्यादि। पर्वसु पैतृकपर्वसु। युगादिप्रभृतिषु तत्रैव श्राद्धाधिकारात्। उपासक उपासकवंश्यो वा बाह्यसंस्कारेण संस्कृतः प्रेतत्वाद्विमुक्तौ वीरत्वं गच्छति। अनुपासकस्य अतद्वंश्यस्य प्रेतत्वाद्विमुक्तस्य च न वीरत्वम्। तदभावेऽन्त्येष्टचनधिकार इत्युक्तं भवति। अन्त्येष्टियोग्यं स्थानमाह—एकान्त इति। शक्तित इति ब्रह्माणं कुशबटुरूपं वा कुर्यादित्यर्थः। द्वितीयनैवेद्यान्तं श्रीचक्रादौ समर्च्य शक्तितः चतुःषष्टयुपचारैः षोडशोपचारैर्वा। तत्र सिन्दूररचितश्रीयन्त्रे कुशपुत्तलिकां कुशपुरुषं नाम्ना अमुकानन्दनाथं वीरमित्यावाह्य। तत्कर्णे कुशपुरुषकर्णे तस्मिन् तस्यैवाङ्गे। तन्मात्राः शब्दस्पर्शरूपरसगन्धाः। शब्दाकर्षिणीस्पर्शाकर्षिणीत्यादि श्रोत्रादिषु प्राणान्तेषु बीजतः तद्बीजानन्तरं क्रीं काल्यै नम इति। अङ्कुशात् क्रों इत्यस्यान्ते। मर्मकृन्तनीं आं ह्रीं प्राणाकर्षिण्यै नम इति ब्रह्मरन्ध्रे। संश्राव्यं मन्त्रमेवाह--कालधर्ममित्यादि। तस्य पादादिमूर्धान्तनवसु त्रिपुरादिनवचक्रेश्वरमन्त्रान् विन्यस्य तच्छरीरं श्रीचक्रात्मकं ध्यात्वा तन्नाम्ना वीरदेहायेति षोडशोपचारैः संपूज्य तथैव त्रिविशेषार्घ्यात् सन्तर्प्य वेदीपार्श्वे दीक्षोक्तविधिना विवाहान्ते मरणसंस्कारेणापि संस्कृतमग्निं संस्थाप्य यन्त्रात् वेदीस्थात् अग्नौ समावहेत्। पञ्चोपचारैः संपूज्य मूलदेवीं संतर्प्य तत्र स्रुचि निक्षिपेत् स्थापयेत्। पराशक्तीत्यादि प्रभावत इत्यन्ते मूलं पादुकां वौषट् इत्यन्ते तन्नामेति गगनानन्दनाथस्य वीरस्येत्यर्थः। तत्संख्यया समित्संख्यया। गुर्वादीत्यादिना आचार्यादिग्रहणम्। तत्र कौलश्राद्धाद्विशेषमाह—वीरपात्रं चेति। पितृपात्रान्ते वीरपात्रमपि पितृस्थाने पितामहप्रपितामहवृद्धप्रपितामहेति। अत्र ब्राह्मणपञ्चकं त्रयं वा। तत्र पञ्चमे तृतीये वा प्रत्यङ्मुखे वीरं पूजयेत्। तस्य वीरस्य पाद्यस्थाने पात्राधश्च त्रिकोण-

मण्डलम्। तद्भवेच्छिवमिति जलोत्सर्गान्ते पुनः कौलश्राद्धोक्तरीत्या यथाशास्त्रं पात्रग्रहणोत्तरं सर्वत्र विश्वदेवादिषु। क्रमतः तत्तत्पात्राद्धुनेत्। ततो वीरपदं त्यक्त्वा मित्रीशरूपाय पित्रे इत्यादि। वृद्धे तु त्रितयात्मता मित्रीशषष्ठीशोड्डीशरूपाय वृद्धप्रपितामहाय। पूजामापोशनदानाद्युद्वासान्तामवशिष्टाम्। न वीरशब्देन व रं पृथक्तया सर्वान्ते पूजयेत्। उपसंहरति—अन्त्येष्टिविधिरिति। एतद्विस्तरप्रयोगोऽपि पद्धतौ द्रष्टव्यः। अत्र गुर्वादीनां तत्पितृपितामहेत्यादि। पितामहादौ जीवति पित्रादिमृतौ स्मार्तप्रक्रियया धर्मशास्त्राद्यनुरोधेन सर्वमपि कर्तव्यमिति। त्रिपुरार्णवे त्वन्येऽपि पूजाविशेषा उक्ताः। यथा—"चैत्रे सुगन्धिकुसुमैः कुर्याद्वासन्तिकार्चनम्" इति। तथा—'वैशाखे चाश्विने चापि पूर्णिमायां यजेद् बुधः। चन्द्रिकायां सितैः पुष्पैश्चन्दनैः शर्करादिभिः॥ नैवेद्यैः श्वेतवर्णैश्च श्वेताम्बरविभूषितः। चन्द्रिकापूजनादेव प्रसन्ना वाञ्छितार्थदा॥" इति। तथा—"वैशाखे पूजयेद्दोलास्थितां त्रिपुरसुन्दरीम्। बीजयेद्व्यजनैस्तत्र दोलितां स्तुतिभिः स्तुवन्॥" इति। तथा—"पुष्पवाटीषु चारामभूमिष्वद्रितटेषु च। सुवृक्षमूले संस्थाप्य पूजयेच्छक्तितः शिवाम्॥ "श्रावणे मासि शुक्ले वै दिवैवेत्थ प्रपूजयेत्।" इति, "ज्येष्ठे सलिलपूजां तु कुर्यात्तद्विधिरुच्यते। परितः स्वच्छपरिखं कृत्वा स्वच्छजलैर्भृतम्॥ विकीर्य तोये पुष्पाणि मध्ये देवीं प्रपूजयेत्। परितो जलयन्त्राणि कारयेद् रुचिराणि तु॥" इति, "कदम्बकरवीराम्रबकुलादितरुर्यदा। पुष्पयुक्तं तदा तेषां मूले संस्थाप्य पूजयेत्॥ तत्तत्पुष्पैर्यथावत्तु विधिना परमेश्वरीम्।" इति, 'शरत्सु सरितां द्वीपे द्वीपपूजां समाचरेत्। नौकायामपि तद्वत्तु पूजयेत्त्रिपुरां पराम्॥" इति च। नैमित्तिकविधिमुपसंहरति—इत्येवमिति। आत्यन्तिकतयेति। अतिमुख्यतया स्थिता नैमित्तिकपूजेत्यन्वयः। अतिमुख्यभूतैवोक्तेति तात्पर्यम्॥ ८७॥

**सौभाग्यानन्दसंदोहे सदापद्यार्थबोधकः।**
**परमानन्दटिप्पण्यां विंश उल्लासकोऽभवत्॥ २०॥**



# एकविंश उल्लासः

देव्युवाच—

देवदेव महादेव परिपूर्णकृपाम्बुधे ।
कलौ जनाः साधकास्तु सर्वदा कामनापराः ॥ १ ॥
तेषां सिद्धिः कथं देव नह्यभोगेन तृप्तता ।
वद सिद्धिविधानं वै मन्त्राणां विस्तरेण तु ॥ २ ॥

श्रीभैरव उवाच—

शृणु देवि प्रवक्ष्यामि साधकानां हिताय तु ।
सुखं दुःखं तथा मोहो जनानां क्रमतो भवेत् ॥ ३ ॥
प्रकृतिं त्रिगुणां देवीं संश्रितानामधीश्वरीम् ।
तेषां वृत्तिस्त्रिधैव स्याद् गुणयोगेन सर्वदा ॥ ४ ॥

---

काम्यं प्रष्टुं देव्युवाचेति । परिपूर्णकृपाम्बुधे इति काम्यस्य निषिद्धत्वेऽपि त्वया वक्तव्यमिति द्योतितम् । कलौ कामनैकपराः । कलिधर्मप्रवृद्धयर्थं लोकाः कामपरायणा इति प्रथमे उक्तम् ॥ १ ॥

ननु कलिधर्मप्रवृद्धिरनिष्टा, कुतस्त्वं कामिनां सिद्धिं पृच्छसीत्याशङ्क्याह—नह्य-भोगेनेति । कामं भोगं विना तृप्त्यभावात् कामनाऽनिवृत्तेः । सद्गतिं प्रति तस्याः प्रति-बन्धकत्वादिति भावः । अतो मन्त्राणां सिद्धिविधानं विस्तरेण वद । मन्त्रे सिद्धे हि कामनाः सर्वाः सेत्स्यन्तीति भावः ॥ २ ॥

उत्तरं भैरव उवाचेति । हिताय अभिमतकामलाभाय । तुरेवार्थः परमार्थहितं व्यवच्छिनत्ति । तत्र कामनां निन्दितुं तदुत्पत्तिप्रकारं वक्तुमाह—सुखमिति । जनानां जननमरणप्रवाहपतितानां सुखं दुःखं मोह इति त्रयं क्रमतः साधनप्रयासं विना भवेत् । यथा दुःखमोहावनिच्छितावप्यापततः, एवं सुखमपि । अतस्तत्साधनप्रयासो व्यर्थ इति भावः । अत एवोक्तम्—"कृत्वोपमां तु दुःखाप्ति सुखेच्छां त्यज दूरतः" इति ॥ ३ ॥

ननु सुखादीनां कारणमन्तरा प्रवृत्तावाकस्मिकत्वापत्तिरत आह—प्रकृतिमिति । जपाकुसुमाश्रितस्फटिकस्य लौहित्यववत् प्रकृत्याश्रितानां जनानां सा नानुपपन्नेति

**सत्त्वाज्ज्ञानं तु रजस इच्छा मोहस्तमोद्भवः ।**
**उत्कर्षाकर्षयोगेन त्रयमेतदनेकधा ॥ ५ ॥**
**शुद्धसत्त्वाच्चिन्मयता रजःसत्त्वात् समुद्भवेत् ।**
**वैराग्यादिशुभे धर्मे निश्चलेच्छा महेश्वरि ॥ ६ ॥**
**तमःसत्त्वात्तु मोहादिर्विज्ञातो भवतीश्वरि ।**
**तमोरजोभ्यां सत्त्वेन मोहत्यागेच्छया युतः ॥ ७ ॥**

---

भावः । प्रकृतिः अनाद्यनेकजन्मसमर्जितविचित्रकर्मवासनापिण्डः । सा च अधीश्वरी ईश्वरीं पराशक्तिं चिन्मयीमधिश्रित्य अधिष्ठानत्वेनाश्रित्य स्थिता । एतदुक्तं त्रिपुरारहस्ये—“चितिशक्तिमधिष्ठाय विचित्रानादिकर्मणाम् । जनानां वासनापिण्डः स्थितः प्रकृतिरुच्यते ॥” इति । सा च देवी परशिवक्रीडारूपा । क्रीडेच्छासंवलितेति तात्पर्यम् । तथा त्रिगुणा । कर्मणामुत्तममध्यमाधमत्वेन वासनात्रैविध्यात् सत्त्वरजस्तमोगुणमयी । एवंविधां प्रकृतिं सम्यक्त्वतादात्म्येन सश्रितानामध्यासं प्राप्तानां जनानां तत्तद्वासनापरिपाककालक्रमेण सुखादिकं भवेदित्यर्थः । एवंविधप्रकृतितादात्म्यं प्राप्तत्वात्तेषां जनानां प्राकृतगुणत्रययोगेनैव वृत्तिस्त्रिधा स्यात् । एवकारेण सुखादीनां प्राकृतगुणत्रयसंबन्धातिरिक्तस्य कारणस्य व्यवच्छेदः ॥ ४ ॥

अथ सत्त्वादीनां सामान्येन कार्यमाह—सत्त्वादिति । एतद्गीतं भगवता—“सर्वद्वारेषु देहेऽस्मिन् प्रकाशमुपजायते । ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा । रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ अप्रकाशो प्रवृत्तिश्च प्रमादो मोह एव च । तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥” इति । लोभादिकं सर्वमिच्छामूलकमिति रजस इच्छेत्युक्तम् । प्रकृते मोहोऽप्रकाशः । तस्यैव मुख्यत्वेन मोहस्तमोद्भव इत्युक्तम् । गीतायां तु मोह इत्यप्रकाशजनितं मूढत्वम् । उत्कर्ष आधिक्येनोद्भवः । आकर्षोऽपकर्षोऽभिभवो गुणानामुद्भवाभिभवयोगेन । एतद् गुणत्रयकार्यम् ॥ ५ ॥

अनेकविधत्वमेवाह—शुद्धसत्त्वादित्यादि । अत्र शुद्धसत्त्वं रजसा तमसा रजस्तमोभ्यां च युक्तमित्येकैकस्य चातुर्विध्येन द्वादशानां कार्यं क्रमेण ज्ञेयम् । शुद्धसत्त्वाद् अभिभूतरजस्तमोयुक्तसत्त्वात् चिन्मयता ज्ञानात्मता, अन्तःकरणस्येति शेषः । रजःसत्त्वाद् रजसा युतसत्त्वात् । रजसेत्यप्राधान्ये तृतीया । तेन रजोंऽशस्याप्राधान्यं सत्त्वस्य प्राधान्यम् । इच्छा समुद्भवेदित्यन्वयः । वैराग्यादीत्यादिना ज्ञानसाधनभूताः शुभप्रापकाः—“वैराग्यं शान्तिरास्तिक्यं श्रद्धाकरणसंयमौ । मुमुक्षुता विचारश्च श्रेयःसाधनमुच्यते ॥” इत्याद्युक्तं ग्राह्यम् । निश्चला उत्कटा ॥ ६ ॥

तमःसत्त्वात्तमसा युतसत्त्वात् । मोहादिरित्यादिना गीतोक्ता प्रवृत्त्यादि । विशेषेण

रजःसत्त्वात् कर्मविधिनिश्चयः सम्यगुद्भवेत् ।
रजसा शुद्धरूपेण क्रियोपायविचिन्तनम् ॥ ८ ॥
तमोयुक्तेन रजसा क्रियासिद्धौ विमुह्यति ।
तमसत्त्वसमायुक्तरजसा तत्र संशयः ॥ ९ ॥
तमःसत्त्वादीषदेव मोहज्ञानं चलं भवेत् ।
रजोयुक्तेन तमसा मूढः कुर्यात्तदन्यथा ॥१०॥
शुद्धेन तमसा देवि परं मूढत्वमाप्नुयात् ।
रजःसत्त्वयुतेनैव ज्ञानं कर्म च व्यस्तकम् ॥११॥
जनानां सर्वचेष्टास्तु त्रिगुणैर्व्यापृताः शिवे ।
नास्ति क्वापि च यत्किञ्चिदगुणात्मकमल्पकम् ॥१२॥
तेनैव मोहमापन्नः कामान् कामयति ध्रुवम् ।
सत्त्ववृत्तिसमभ्यासादुभयं क्षीयते द्रुतम् ॥१३॥

---

सम्यग्ज्ञातो भवति । तमोरजोभ्यां युक्तेन सत्त्वेन युतो भवति ॥ ७ ॥

रज इति । लुप्तपञ्चम्यन्तम् । सत्त्वादिति तृतीयार्थे पञ्चमी आर्षा । सत्त्वेन युताद् रजस इत्यर्थः । कर्मणो विधिः करणं तत्र निश्चयः । शुद्धरूपेण केवलेन ॥ ८ ॥

विमुह्यति अनिश्चयमाप्नोति । तत्र क्रियासिद्धौ । संशयः क्रियासिद्ध्यभिमतः, फलं भवति न वेति ॥ ९ ॥

तमःसत्त्वादित्यस्य सत्त्वयुक्ततमस इति पूर्ववदर्थो ज्ञेयः । ईषन्मोहस्य चलमस्थिरं ज्ञानम् । मूढः सन् तत् कर्तव्यम् ॥ १० ॥

परम् अत्यन्तं मूढत्वम् । रजःसत्त्वयुतेन तमसा । व्यस्तकं विपरीतम् ॥ ११ ॥

एवंविधा जनानां सर्वाश्चेष्टा अन्तःकरणस्य परिणामरूपाः क्रियाः । त्रिगुणैर्व्यापृता व्याप्ताः । क्वापि देशे काले वा । अगुणात्मकं गुणत्रयापरिणामरूपम् । एतदपि भगवता गीतम्—"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥" इति ॥ १२ ॥

तेनैव रजोयुक्ततमसा मोहम् अन्यथा अहंप्राप्तः कामान् विषयान् कामयति । ध्रुवं निश्चयेन । तदुक्तम्—'पश्यन् दुःखफलं कर्म रजोवेगविमोहितः । करोत्येव सदा कर्म विशङ्कश्च पदे पदे ॥' इति । ननु तर्हि जनस्य यत्नो व्यर्थः, कालक्रमपरिपक्वसंचितवासनोद्भूतगुणप्रवाहपतितत्वादित्याशङ्क्याह—सत्त्ववृत्तीति । प्रोक्तसत्त्वोद्भूतवृत्तीनां

यस्य यस्य यथाऽभ्यासस्तदन्यत् क्षीयते तथा ।
तस्माद्रजोगुणेनैव कामना सर्वदा भवेत् ॥१४॥
तेन दुःखं भवेद्देवि ततः कामान् परित्यजेत् ।
तथापि शृणु देवेशि यस्मात्त्वं पृष्टवत्यसि ॥१५॥
कामनायां मूलदेवीं कदापि न नियोजयेत् ।
कूटेश्वरीभिर्मन्त्रिण्या दण्डिन्या साधयेत्प्रियम् ॥१६॥
पुरश्चरणयोगेन मन्त्रसिद्धिं समाश्रयन् ।
कामान् सुसाधयेत् सर्वान् विधिना परमेश्वरि ॥१७॥

---

चिन्मयत्ववैराग्येच्छादिरूपाणां सम्यगभ्यास आवर्तनं भावनमिति यावत् । उभयं रजस्तमश्च क्षीयते । यदुक्तम्—"महास्रोतस्यूह्यमानो वेगभारसुनिर्भरः । ईषत्संशान्तवेगेषु प्रवाहस्यान्तरेषु वै ॥ यत्नं कुर्वन् क्रमेणैव प्रवाहेण विमुच्यते । एवं रजस्तमोवेगन्यग्भावात्मदशासु वै ॥ भावयन् सत्त्वमेकाग्रो मुच्यते क्रमतो जनः ॥" इति ॥ १३ ॥

एवमेव रजस्तमसोरभ्यासेऽपीत्याह—यस्येति । यथाभ्यासः तीव्रतया मन्दतया वा तदन्यत् अभ्यस्तादन्यत् तथा क्षीयते शीघ्रं विलम्बेन वा क्षीयते । तस्मात् अभ्यस्तेन रजोगुणेन ॥ १४ ॥

तेन रजोगुणैकमूलत्वेन कामानां रजोगुणस्य दुःखात्मत्वेन च । यतो दुःखं भवेत् ततः कामानां दुःखमूलत्वेन तत्साधनं प्रकृततन्त्रे सात्त्विके वक्तुमनुचितमेव । यत्तु नह्यभोगेन तृप्ततेत्युक्तम्, तदपि भ्रान्तिमात्रम्, यतो भोगिनां तृप्त्यनुदयात् । यदुक्तम्—"न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥" इति । तथा—"यावद् व्रीहियवं लोके पशवोऽश्वा धनं स्त्रियः । न तावदलमेकस्य चेति मत्वा शमं व्रजेत् ॥" इति । तथापि यस्मात्त्वं पृष्टवती, अतः शृणु, त्वत्प्रीत्या वदामीति तात्पर्यम् ॥ १५ ॥

न नियोजयेत् नोपयुञ्ज्यादित्यर्थः । एतेन मन्त्रान्तरेषूक्तं मूलदेव्या काम्यसाधनं श्येनयागवदनिष्टजनकं वेदितव्यम् । तर्हि कथं काम्यसाधनं तदाह—कूटेश्वरीभिरिति । कामेश्वरीवज्रेश्वरीभगमालिनीभिरित्यर्थः । एतासामेव कूटेश्वरीत्वेन वक्ष्यमाणत्वात् । मन्त्रिणी राजमातङ्गी । दण्डिनी वाराही । प्रियं काम्यम् ॥१६॥

पुरश्चरणरूपसंस्कारयोगेन । सम्यक् आश्रयन् वक्ष्यमाणविधिना सम्यङ्मन्त्रसिद्धिं सम्पादयन्नित्यर्थः । समाश्रयन् कामान् साधयेदित्यनेन संकृत्प्रयोगं कृत्वा तु

तद्विधानं शृणु शिवे विस्तरेण ब्रवीमि ते ।
वश्यतां च तथा मैत्रीं ऋणित्वं च विचारयेत् ॥१८॥
सिद्धारिमपि मन्त्राणां नाम्ना स्वपरयोरपि ।
तत्रादौ कथमाम्यद्य सिद्धारिं परमेश्वरि ॥१९॥
समषोडशके कोष्ठे वर्णास्तु क्रमतो लिखेत् ।
अकथादि त्रिधा कृत्वा रूपभूताक्षिषष्ठकाः ॥२०॥
विश्वनन्देन्द्रदिग्वेदवस्वग्निस्वरभूमिपाः ।
मार्तण्डतिथिरुद्राः स्युरकाराद्याः स्वराः क्रमात् ॥२१॥
एवं कादींस्तु तत्रैव यादीन् हादित्रयं तथा ।
चतुश्चतुष्कं तज्ज्ञात्वा प्रादक्षिण्यक्रमेण तु ॥२२॥

---

पुनः पञ्चसहस्रकं जपेदिति वक्ष्यमाणसिद्धिनिदानसंस्कारावृत्तिर्द्योतिता । सर्वान् वश्यादीन् । वक्ष्यमाणेन विधिना ॥१७॥

तद्विधानं मन्त्रसिद्धेर्विधानम् । तत्रादौ मन्त्राणां वश्यतादिकं विचारयेत् ॥१८॥

स्वपरयोः साधकसाध्ययोः । साधको यं वशीकर्तुमिच्छति स साध्यः । तयोर्नाम्ना मन्त्रस्य विचारयेत् । स्वस्य शुभफलः साध्यस्य विपरीतो मन्त्रोऽपेक्षित इति भावः ॥१९॥

ऊर्ध्वाधस्तिर्यक् च पञ्चरेखाभिः समषोडशकोष्ठं कृत्वा तत्र कोष्ठेषु वर्णान् क्रमेण लिखेत् । वर्णलेखनप्रकारमाह--अकथेति । अकारादिककारादिथकारादीति षोडशवर्णात्मकं खण्डत्रयं कृत्वा तत्र कोष्ठचतुष्टयात्मकपङ्क्तिचतुष्टये प्रथमकोष्ठादिक्रमेण लेखनीयान् वर्णानाह—रूपेत्यादि । रूप प्रथमः अ । भूत पञ्चमः उ । अक्षि द्वितीयः आ । षष्ठः ऊ । इति चतुष्टयं प्रथमपङ्क्तौ लेखनीयम् ॥२०॥

निश्व त्रयोदशः ओ । नन्द नवमः लृ । इन्द्र चतुर्दशः औ । दिक् दशमः लॄ । वेद चतुर्थः ई । वसु अष्टमः ॠ । अग्नि तृतीयः इ । स्वर सप्तमः ऋ । भूमिप षोडशः अः । मार्तण्ड द्वादशः ऐ । तिथि पञ्चदशः अं । रुद्र एकादशः एं । एवम् ओकाराद्याः द्वितीयादि पङ्क्तिकोष्ठेषु । एवमकाराद्याः स्वराः षोडशकोष्ठेषु यथा स्युस्तथा लिखेत् ॥२१॥

एवमुक्तप्रकारेण कादीन् पादींश्च क्रमाल्लिखेत् । प्रथमद्वितीयतृतीयस्वरस्थाने

तस्मान्मन्त्रादिवर्णान्तं कोष्ठानि गणयेत् पृथक् ।
चतुश्चतुष्कं प्रत्येकं प्रादक्षिण्यक्रमेण तु ॥२३॥
सिद्धसिद्धं सिद्धसाध्यमथ सिद्धसुसिद्धकम् ।
सिद्धारिं चापि देवेशि साध्याद्यानि पुनः क्रमात् ॥२४॥
चत्वार्यथ सुसिद्धाद्यान्यपि चत्वारि वै पुनः ।
अर्यादीन्यपि चत्वारि तेषां देवि फलं शृणु ॥२५॥

---

वैदिकहळक्षान् । तेषां फलं वक्तुमाह—चतुश्चतुष्कमिति । प्रथमद्वितीयपङ्क्त्योराद्यद्वितीयकोष्ठमिति प्रथमचतुष्कम् । तृतीयचतुर्थकोष्ठमिति द्वितीयं चतुष्कम् । तृतीयचतुर्थपङ्क्त्योस्तृतीयचतुर्थकोष्ठमिति तृतीयं चतुष्कम् । प्रथमद्वितीयकोष्ठमिति चतुर्थचतुष्कमिति चतुश्चतुष्कं ज्ञात्वा । यत्र यस्मिश्चतुष्के यस्मिन् कोष्ठे साधकनामाद्यक्षरमस्ति ॥२२॥

| | | | |
|---|---|---|---|
| अ क थ ह | उ ङ प | आ ख द ळ | ऊ च फ |
| ओ ड व | ल झ म | औ ढ श | लॄ भ य |
| ई घ न | ऋ ज भ | इ ध क्ष ग | ॠ छ ब |
| अः त स | ऐ ठ ल | अं ण ष | ए ट र |

तस्मात्तत्कोष्ठात् । मन्त्रादिवर्णो यस्मिन् कोष्ठेऽस्ति तत्कोष्ठान्तं पृथगेकैकशः कोष्ठानि गणयेत् । एवं प्रत्येकं चतुश्चतुष्कं चतुश्चतुष्कस्थितानि कोष्ठानि गणयेत् । कोष्ठानां चतुष्काणां च गणनं प्रादक्षिण्यक्रमेण ॥२३॥

तेषां नामान्याह—सिद्धसिद्धमित्यादि । साध्याद्यानि चत्वारीत्यन्वयः । साध्यसिद्धं साध्यसाध्यं साध्यसुसिद्धं साध्यारीति ॥२४॥

एवं सुसिद्धाद्यानि चत्वारि । सुसिद्धसिद्धेत्यादि । अर्यादीनि । अरिसिद्धमित्यादि । तेषां सिद्धसिद्धेत्यादि अर्यरोत्यन्तानां षोडशानाम् ॥२५॥

उक्ताज्जपाद् द्विगुणतः प्राप्तिमात्राच्च सिद्ध्यति ।
प्राप्त्या स्वबान्धवमृतिरिति क्लेशेन सिद्ध्यति ॥२६॥

दुःखकृत् सिद्धिकृत्तद्वद्धननाशस्ततेष्टदः ।
सिद्धिरुक्तजपात्तद्वत् सकृदुच्चारणात् फलम् ॥२७॥

हानिदः स्त्रीसुतभ्रातृस्वनाशः परतः क्रमात् ।
सिद्धारिमन्त्रानेवं वै ज्ञात्वा वै साधयेत् क्रमात् ॥२८॥

राशिमैत्रीं शृणु शिवे प्रवक्ष्यामि यथाक्रमात् ।
वेदाग्न्यग्न्यक्षिनेत्राक्षिबाणेष्विषुशराः शराः ॥२९॥
अब्धिसंख्याः शादयस्तु कन्यायां मेषतो लिखेत् ।
अथ वक्ष्ये क्रमादेषां फलं शृणु समाहिता ॥३०॥

---

उक्ताज्जपात् सिध्यतीत्यस्य प्रत्येकं सम्बन्धः । द्विगुणतः सिध्यतीत्यादि । सिध्यतीत्यस्य मन्त्र इत्यादिः । उक्ताज्जपात् तत्र तत्रोक्तजपसंख्यया जपकरणादित्यार्थो ज्ञेयः । मन्त्रप्राप्तिरुपदेशस्तन्मात्रात् ॥२६॥

दुःखकृदित्यादिचतुष्टये प्राप्तिमात्रादिति सम्बन्धनीयम् । फलं सिद्धिः ॥२७॥

तथा हानिद इत्यादावपि प्राप्तिमात्रादिति योज्यम् । स्त्रीसुतभ्रातृस्वानां नाशः स्त्रीनाशः, सुतनाश इत्यादि चतुष्टयं ज्ञेयम् । हानिद इत्यस्य परतः । एवमुक्तप्रकारेण सिद्धार्यादिमन्त्रान् ज्ञात्वा तत्तत्फलं ज्ञात्वा साधयेत् । यथा देवदत्तस्य नामाद्यक्षरे दकारः । स च द्वितीयचतुष्काद्यकोष्ठेऽस्ति । तथा बालाद्याक्षरं ऐकारः । स च चतुर्थचतुष्कतृतीयकोष्ठेऽस्ति । तथा च नामकोष्ठान्मन्त्रकोष्ठान्तं गणने एकादश सुसिद्धसुसिद्धं नाम । तत्फलं सकृदुच्चारणात्फलम् इति तच्चतुष्के यत्र कोष्ठे नामाद्यमक्षरं तत्कोष्ठमारभ्यैव सर्वचतुष्के कोष्ठगणनं कर्तव्यमिति ॥२८॥

राशिचक्रमाह—राशीति । वेद चत्वारः ४, अग्नि ३, अग्नि ३, अक्षि २, नेत्र २, अक्षि २, बाण ५, इषु ५, इषु ५, शराः ५, शराः ५ ॥२९॥

अब्धि ४ । एते अकारादिवकारान्तानां वेदाग्नीत्यादिद्वादशखण्डा मेषादिद्वादशसु क्रमाल्लेखनीयाः । उर्वरिताः षट्शादयस्तु कन्यायां पुनर्लेखनीयाः । एवं मेषता लिखेत् ॥ ३० ॥

स्थितिसम्पद्भ्रातृबन्धुपुत्रारिस्त्रीमृतिः सुकृत् ।
कर्मलाभव्ययाश्चैषां फलानि क्रमतो भवेत् ॥३१॥
तत्र त्यजेद्रिपुमृतिव्ययान्नामगुणैर्युतान् ।
स्वजन्मराशिमारभ्य गणयेन्मन्त्रराशिकम् ॥३२॥
एवं ज्ञात्वा निषिद्धं तु परित्याज्यं महेश्वरि ।
अथ वक्ष्ये भूतचक्रविधानं शृणु साम्प्रतम् ॥३३॥

---

फलमेवाह—स्थितीत्यादि । स्थित्यादिषु प्राप्तिरित्यध्याहृत्य योजनीयम् । तेन स्थितिप्राप्तिः, सम्पत्प्राप्तिरित्यादि ॥ ३१ ॥

| | | |
|---|---|---|
| २ उ ऊ ऋ | | १२ य व |
| ३ ॠ लृ ॡ | १ अ आ इ ई | ११ प म |
| ४ ए ऐ | | १० त न |
| ५ ओ औ | ७ क ङ | ९ ट ण |
| ६ अं अः श क्ष | | ८ च ञ |

तत्र द्वादशविधे स्थित्यादिरूपे फले रिपुमृतिव्यया नाम तुल्यफलदास्तान् त्यजेत् । एतद् गणनप्रकारमाह—स्वजन्मेति । स्वजन्मराशिमारभ्य मन्त्रराशिपर्यन्तं गणयेत् । यथा मूलनक्षत्रे जातस्य देवदत्तस्य धनूराशिः । बालाया आद्याक्षरमैकारः । तस्य प्रोक्तरीत्या कर्कराशिः । स च धनूराशेरष्टमः । तत्र फलं मृतिः । अतस्त्यजेत् ॥ ३२ ॥

एवमुक्तप्रकारेण ॥ ३३ ॥

पञ्चह्रस्वाः पञ्चदीर्घाः सन्धयः पञ्च कादयः ।
शान्ताश्च नव वर्गाः स्युरग्न्यब्ध्यश्वीन्द्विषु क्रमात् ॥३४॥
षवर्गोऽब्ध्यश्विबाणेन्दुवह्निरेवं लिखेदथ ।
भूवाय्वोरग्निजलयोररित्वमथ मित्रता ॥३५॥

---

तदेवाह--पञ्चेति । पञ्च ह्रस्वा अइउऋऌ इति । पञ्चदीर्घाः आ ई ऊ ॠ ॡ इति । सन्धयः पञ्च ए ऐ ओ औ अं इति। विसर्गो हकारेऽन्तर्भूतो ज्ञेयः मातृकोत्पत्तिक्रमे तथा निरूपितत्वात् । कादयः शान्ताः षड् वर्णाः । इति पञ्चवर्णात्मका नव वर्गाः । तत्र पृथिव्यादिपञ्चभूतेषु वर्णविन्यासप्रकारमाह—अग्नीत्यादि । अग्नि तृतीयम्, अब्धि चतुर्थम्, अश्वि द्वितीयम्, इन्दु प्रथमम्, इषु पञ्चमम् । एवं क्रमेण पृथिव्यादिषु नववर्ग वर्णाल्लिखेत् ॥ ३४ ॥

| | |
|---|---|
| भू | उ ऊ ओ ग ज ड द ब ल ळ |
| जल | ऋ ॠ औ घ झ ढ धभ व स |
| अग्नि | इ ई ऐ ख छ ठ थ फ र क्ष |
| वायु | अ आ ए क च ट प य ब |
| नेत्र | ऌ ॡ ङ ञ ण न म श ह |

षवर्गस्य भिन्नक्रममाह—षवर्ग इति । अब्धि चतुर्थम्, अश्वि द्वितीयम्, बाण पञ्चमम्, इन्दु प्रथमम्, वह्नि तृतीयम् । एवं षवर्गो यथा भवति तथा लिखेत् । अथ एवं लेखनानन्तरं विभाव्येत्यन्वयः । अथानन्तरं शेषवर्णाणां सर्वेषाम् अग्निवाय्वादि-द्वन्द्वानां मित्रता । यथा देवदत्तस्य पृथिवी । बालाया अग्निः । पृथिव्यग्न्योर्मैत्रीति मन्त्र-साधकयोर्मैत्री सिद्धा ॥ ३५ ॥

अन्येषां तु विभाज्यैव साधयेत् परमेश्वरि ।
पक्षेन्द्वग्न्यब्धीन्दुरूपाक्षीन्द्वश्व्यश्वीन्दुलोचनम् ॥३६॥
नेत्रनेत्रेन्द्वश्विरामचन्द्राग्नीन्द्विन्दुचन्द्रमाः ।
पक्षेन्द्वश्व्यग्न्यब्धिसंख्यवर्णान् भेषु क्रमाल्लिखेत् ॥३७॥
स्वरान्त्यं च तदाद्यं च क्षकारान्त्ये निवेशयेत् ।
स्वभाच्च गणयेन्मन्त्रभपर्यन्तं क्रमाच्छिवे ॥३८॥
नवभिस्तु विभज्याथ शेषाद् ज्ञेयं क्रमात् फलम् ।
साम्यं धनं दुःखसुखे शत्रुमित्रविनाशकाः ॥३९॥

---

नक्षत्रचक्रं वक्तुं तद्वर्णानाह—पक्षेत्यादि । पक्ष द्वौ । इन्दु एकः । अग्नि त्रयः । अब्धि चत्वारः । इन्दु एकः । रूप एकः । अक्षि द्वौ । इन्दु एकः । अश्वि द्वौ । अश्वि द्वौ । इन्दु एकः । लोचनं द्वौ ॥ ३६ ॥

नेत्र द्वौ । नेत्र द्वौ । इन्दु एकः । अश्वि द्वौ । राम त्रयः । चन्द्र एकः । अग्नि त्रयः । इन्दु एकः । इन्दु एकः । चन्द्रमा एकः । पक्ष द्वौ । इन्दु एकः । अश्वि द्वौ । अग्नि त्रयः । अब्धि चत्वारः । एवंसंख्यान् वर्णान् भेषु अश्विन्यादिनक्षत्रेषु क्रमाल्लिखेत् ॥ ३७ ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ अ आ | ४ ऋ ॠ लृ ॡ | ७ ओ औ | १० घ ङ | १३ झ ञ | १६ ढ ण | १९ न प फ | २२ म | २५ व श |
| २ इ | ५ ए | ८ क | ११ च | १४ ट ठ | १७ त थ द | २० ब | २३ य र | २६ स ष ह |
| ३ ई उ ऊ | ६ ऐ | ९ ख ग | १२ छ ज | १५ ड | १८ ध | २१ भ | २४ ल | २७ अं अः क्ष ळ |

स्वरान्त्यं अः । तदादि अं । एतद्द्वयं क्षकारस्यान्ते निवेश्यैवं क्रमेषु मातृकावर्णेषूक्तसंख्यया वर्णान् भेषु स्थापयेत् । स्वस्य भात् जन्मनक्षत्रात् । मन्त्रस्य भपर्यन्तं नक्षत्रपर्यन्तम् ॥ ३८ ॥

स्वनक्षत्रान्मन्त्रनक्षत्रान्तं गणितां संख्यां नवभिर्विभज्य । फलमेवाह—साम्यमित्यादि ॥ ३९ ॥

सौख्यं सर्वेष्टिलाभश्च तत्तन्मन्त्राद्धिजायते ।
त्रयस्त्रिंशत्तु कोष्ठानां त्रिपङ्क्त्या चालिखेच्छिवे ॥४०॥
मध्यकोष्ठेषु देवेशि लिखेद्वर्णान् क्रमेण तु ।
अकारादि द्विशो देवि षडेकारादिकं क्रमात् ॥४१॥
त्रिरावृत्त्या ककारादीन् हान्तानेकैकशो लिखेत् ।
रसर्तुरसखाग्न्यब्धिवेदखव्योमखाग्नयः ॥४२॥
साध्याङ्का ऊर्ध्वकोष्ठस्थाः साधकाङ्कास्त्वधोगताः ।
पक्षाश्वीषुखखाश्वीन्दुखवेदाब्धीन्दवः क्रमात् ॥४३॥

---

चरमं फलं शून्यशेषे ज्ञेयम् । यथा देवदत्तनक्षत्रान्मूलाद् बालाया आर्द्रानक्षत्रं तदन्तगणने पञ्चदश, तस्य नवभिर्भागे षट् शेषसंख्या । तेन षष्ठं मित्रं फलम् । एवं च नामार्थानुगुणत्वात् फलस्य शुभरूपता । धनर्णचक्रमाह—त्रयस्त्रिंशदिति । एकस्यां पङ्क्तौ कोष्ठैकादशकमिति पङ्क्तित्रयेण कोष्ठानां त्रयस्त्रिंशल्लिखेत् ॥ ४० ॥

मध्यकोष्ठेषु मध्यमपङ्क्तिकोष्ठेषु । वर्णानां क्रममेवाह—अकारादीति । अकारादिलृकारान्तं पञ्चसु कोष्ठेषु लिखेत् । ततः षट्सु कोष्ठेषु एकारादिकं क्रमादेकैकं लिखेदिति शेषः ॥ ४१ ॥

कादिटान्तं ठादिफान्तं बादिहान्तमिति कादीन् त्रिरावृत्त्या हान्तान् एकैकशो लिखेत् । रस ६ । ऋतु ६ । रस षट् । ख शून्यम् । अग्नि त्रयः, अब्धि ४, वेद ४ चत्वारः ॥४२॥

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ६ | ६ | ० | ३ | ४ | ४ | ० | ० | ० | ३ |
| अ आ ठ व | इ ई ख ड भ | उ ऊ ग ढ भ | ऋ ॠ घ प य | लृ ॡ ट त र | ए च घ ल | ऐ छ द ब | ओ ज ध श | औ स न ष | अं भ प स | अः ट प ह |
| २ | २ | ५ | ० | ० | २ | १ | ० | ४ | ४ | १ |

इति ऊर्ध्वकोष्ठेषु साध्यस्य मन्त्रवर्णस्याङ्का लेखनीयाः । साधकस्योपासकस्य नामवर्णसंख्या अधोभागे अधःपङ्क्तौ स्थिताः । तदङ्कानेवाह—पक्षेत्यादि । पक्ष२ अश्वि द्वौ, इषु ५ पञ्च । ख ० शून्यम् । इन्दु१ एकम् । वेद४, अब्धि४, चत्वारः । इति साधकाङ्काः ॥ ४३ ॥

मन्त्रवर्णा नामवर्णाः स्वरव्यञ्जनभेदिताः ।
पृथगङ्कांस्तु संयोज्य चाष्टभिर्भागमाहरेत् ॥४४॥
शेषाङ्को यस्य यस्मात्तु यावानेवाधिको भवेत् ।
तावत्तस्य ऋणं ज्ञेयं धनी मन्त्रो न सिद्धिदः ॥४५॥

---

मन्त्रस्य नाम्नश्च वर्णाः स्वरव्यञ्जनाभ्यां भेदिताः । यथा देवदत्तनाम्नः द एव अ द अ त त अ इति वर्णा नवधा भेदिताः । एवं मन्त्रस्य ऐ अं क ल ई अं स औ अः इति वर्णा नवधा भेदिताः । मन्त्रनामवर्णानाम् ऊर्ध्वाधो विद्यमाना ये अङ्कास्तान् पृथक् संयोज्यैकीकृत्य ॥ यथा ॥ १ ॥ २ ॥ १ ॥ २ । १२ । ० । ० । २ । इति साधकनामवर्णाङ्काः । तेषां संयोजने ११ एकादश । अष्टभिर्भागे शेषः ३ त्रयम् ॥ ४ ॥ ६ । ४ । ६ । ० । ० । ० ३ । इति साध्यमन्त्रवर्णाङ्काः । तेषां संयोजने २३ त्रयोविंशतिः । अष्टभिर्भागे शेषः ७ सप्त ॥ ४४ ॥

यस्य यस्माद्यावदधिकं मन्त्राङ्कस्य नामाङ्कात् चतुष्टय ४ मधिकं तावत् चतुष्टयं तस्य मन्त्रस्य ऋणं प्रकृते ज्ञेयम् । धनी मन्त्रो न सिद्धिदः । परिशेषाद् ऋणी सिद्धिदः ॥ ४५ ॥

| | | | | | |
|---|---|---|---|---|---|
| १ अ ह | २ क ण | ३ ख | ४ ग | ५ घ स | ६ ए ङ |
| २० आ ञ | २१ च | २२ छ | २३ ज | २४ ष | ७ ऐ ज्ञ |
| १९ इ व | ३२ ट | ३३ ऋ ठ | ३४ लृ | २५ ढ | ८ ओ ण |
| १८ ई न | ३१ त | ३६ ॠ थ | ३५ ॡ द | २६ ध | ९ औ न |
| १७ उ म | ३० प | २९ फ | २८ ब | २७ भ | १० अं म |
| १६ ऊ श | १५ य ह | १४ र | १३ ल | १२ व क्ष | ११ अः श |

एतद्दणधनाख्यं स्यादन्यच्छृणु वरानने ।
तिर्यग्रेखासप्तकं च तथा सप्ताधरोर्ध्वतः ॥४६॥
भवन्ति षट् च त्रिंशच्च कोष्ठानि तु महेश्वरि ।
ऊर्ध्वाधःपङ्क्तिरूपेषु षट्सु कोष्ठेषु वै क्रमात् ॥४७॥
तत्राद्यपङ्क्तावूर्ध्वात्तु अकारादीन् षडुल्लिखेत् ।
एकारादीनन्त्यपङ्क्तौ षण्ढान्मध्यचतुष्टये ॥४८॥
द्वितीयपङ्क्तौ वर्गाद्यान् तृतीयस्यां द्वितीयकान् ।
चतुर्थ्यां तु तृतीयान् वै पञ्चम्यां च चतुर्थकान् ॥४९॥
पञ्चमानाद्यन्तपङ्क्त्योर्द्विधा देवेशि संलिखेत् ।
द्वितीयादौ पञ्चमादौ षसौ हक्षौ तथान्त्ययोः ॥५०॥
आद्यकोष्ठात्तु देवेशि लिखेदेकादितोऽङ्ककान् ।
प्रादक्षिण्यक्रमेणैव कुण्डल्याकारवल्लिखेत् ॥५१॥

---

तिर्यगूर्ध्वाधश्च सप्त रेखाः कुर्यात् ॥ ४६ ॥

षट्कोष्ठात्मकपङ्क्तिषट्कमिति षट्त्रिंशत्कोष्ठानि जायन्ते । क्रमादुल्लिखेदित्यन्वयः ॥ ४७ ॥

तत्र षट्पङ्क्तिमध्ये । आद्यपङ्क्तौ ऊर्ध्वादधःपर्यन्तम् अकारादीनूकारान्तान् षडुल्लिखेत् । अन्त्यपङ्क्तौ ऊर्ध्वाद्यधःपर्यन्तम् एकारादिविसर्गान्तान् मध्यकोष्ठचतुष्टये तृतीयचतुर्थपङ्क्तितृतीयचतुर्थकोष्ठयोः, ऊर्ध्वाधक्रमेण षण्ढान् ऋ ॠ ऌ ॡ इति लिखेत् ॥ ४८ ॥

वर्गाद्यान् कचटतपयान् । तृतीयस्यां पंक्तौ द्वितीयकान् खछठथफरान् । चतुर्थ्यां पङ्क्तौ तृतीयान् गजडदबलान् । पञ्चम्यां पङ्क्तौ चतुर्थकान् घझढधभवान् ॥ ४९ ॥

पञ्चमान् ङञणनमशान् । आद्यन्तपङ्क्त्योर् आदिपङ्क्तौ अन्त्यपङ्क्तौ च द्विधा द्विवारं लिखेत् । द्वितीयादौ द्वितीयपङ्क्तेराद्यकोष्ठे । पञ्चमादौ पञ्चमपङ्क्तेराद्यकोष्ठे क्रमेण षकारसकारौ । द्वितीयपञ्चमपङ्क्त्योरन्त्यकोष्ठयोः हकारशकारौ लेखनीयौ ॥ ५० ॥

प्रथमपङ्क्तेराद्यकोष्ठाद् अकारकोष्ठमारभ्य एकादितः एकद्वित्रिरित्यादि षट्त्रिंशदन्तानङ्कान् षट्त्रिंशत्कोष्ठेषु लिखेत् । अङ्कलेखनक्रममाह—प्रादक्षिण्येति ।

थकारे तु समाप्तिर्वै चान्ते षट्त्रिंशदङ्ककम् ।
नामाद्यक्षरकोष्ठात्तु मन्त्रारम्भार्णकोष्ठकम् ॥५२॥
गणयित्वा फलं ज्ञेयं क्रमेणाङ्कस्य चेश्वरि ।
वश्यावश्ये तथा सिद्धिर्हानिर्लाभो रिपुः सुखम् ॥५३॥
मृतिः शून्यं चेति पुनश्चतुर्धा गणयेत् क्रमात् ।
आद्ये तात्कालिकी सिद्धिर्द्वितीये चाल्पकालतः ॥५४॥
तृतीये दीर्घकालेन चतुर्थे परजन्मनि ।
एवमेतत्तु विज्ञाय प्रयोगादींस्तु साधयेत् ॥५५॥
सम्यक्त्वं नाम्ना मन्त्राणां गणयित्वा विचक्षणः ।
भराशिभूतधनर्णसिद्धार्यन्त्येषु वै क्रमात् ॥५६॥

---

प्रदक्षिणक्रमेण कुण्डल्याकारवद् बाह्यादन्तर्वेष्टनक्रमेण । प्रथमादिषट्पङ्क्तीनामाद्यकोष्ठेष्वेकादिषडन्तानङ्कान् । षष्ठपङ्क्तौ द्वितीयादिषष्ठान्तं सप्तादि एकादशान्तान् । पञ्चमपङ्क्त्यादिप्रथमपङ्क्त्यन्तं षष्ठेषु द्वादशादि षोडशान्तान् । आद्यपङ्क्तौ पञ्चमादिद्वितीयान्तम्, सप्तदशादिविंशत्यन्तान् द्वितीयतृतीयचतुर्थपञ्चमानां द्वितीयेषु । पञ्चमस्य तृतीयचतुर्थपञ्चमेषु चतुर्थतृतीयद्वितीयानां पञ्चमेषु । द्वितीयस्य चतुर्थतृतीययोः । तृतीयचतुर्थयोः पङ्क्त्योस्तृतीययोः । चतुर्थतृतीयपङ्क्त्योः चतुर्थयोरेकविंशत्यादिषट्त्रिंशदन्तान् लिखेत् ॥ ५१ ॥

आद्यकोष्ठादुक्तक्रमेणैकद्व्यधिकानां थकारे थकारकोष्ठे समाप्तिः कर्तव्या । आदौ एकाङ्कः, अन्ते षट्त्रिंशदङ्ककम् । साधकनामाद्यक्षरं यस्मिन् कोष्ठेऽस्ति तदारभ्य मन्त्रारम्भवर्णो यस्मिन् कोष्ठेऽस्ति तदन्तम् ॥ ५२ ॥

अङ्कस्य क्रमेण कोष्ठानि गणयित्वा फलं ज्ञेयम् । फलान्येवाह—वश्येति ॥५३॥

वश्यादिशून्यान्तं फलनवकमुक्तम् । तेषां चतुर्धाङ्कक्रमेण गणनेन षट्त्रिंशत्कोष्ठसमाप्तिः कार्या । तत्राद्यनवके तात्कालिकी फलसिद्धिः । एवमग्रेऽपि ॥ ५४ ॥

यथा नामाद्यक्षरे दकारः । स च पञ्चत्रिंशाङ्कयुते कोष्ठेऽस्ति । मन्त्राद्यक्षरमैकारः । स च सप्ताङ्ककोष्ठेऽस्ति । तद्गणने पञ्चत्रिंशदादिद्वयम् आद्यादिसप्तकमिति नव । तथा च नवमं शून्यं फलम् । तच्चाद्यनवकगतमिति तात्कालिकी फलसिद्धिर्ज्ञेया । एवमुक्तप्रकारेण एतन्मन्त्राणां सिद्धार्यादिषट्चक्रसाधितं फलं विज्ञाय ॥५५॥

स्वनाम्ना मन्त्राणां चक्रेषु सम्यग्गणयित्वा एतद्विज्ञायेति सम्बन्धः । भचक्र-

फलद्विगुणता ज्ञेया द्वात्रिंशत्फलमन्त्यके ।
एकत्रिंशद्‌गुणान्मन्त्रात् पादन्यूनफलं भवेत् ॥५७॥
तिथिसंख्यगुणान्मन्त्रादर्धं पादं स्वरोन्मितात् ।
तस्मान्न्यूनगुणो मन्त्रः फलं नैव प्रयच्छति ॥५८॥
मन्त्रनाम्नोः समावृत्त्या वश्यसिद्धारिचक्रयोः ।
सर्वेषामाद्यन्तयोस्तु आदेर्मुखादिकं फलम् ॥५९॥
एवं धनर्णे शून्ये तु हानिरेव न संशयः ।
एवं स्वेष्टफलं मन्त्रं संस्कुर्यात् परमेश्वरि ॥६०॥

---

राशिचक्रभूतचक्रधनर्णचक्रसिद्धारिचक्रेषु अन्त्ये वश्यावश्यचक्रे । क्रमात् फलद्विगुणतेत्यन्वयः ॥ ५६ ॥

तथा च भचक्रस्यैकगुणम् । राशिचक्रस्य द्विगुणम् । भूतचक्रस्य चतुर्गुणम् । एवं क्रमेण फलद्वैगुण्येऽन्त्यके वश्यावश्यके द्वात्रिंशत्फलम् । एवं चक्राणां फलमुक्त्वा तद्विचारमाह—एकत्रिंशदिति । यस्य मन्त्रस्य एकत्रिंशद्‌गुणः । तस्मान्मन्त्रात् साधितात् पादन्यूनं फलं भवेत् ॥ ५७ ॥

तिथि पञ्चदश, स्वराः सप्त । तस्मात् सप्तसंख्यगुणात् । यथा यस्य मन्त्रस्य षट्सु चक्रेष्वपि शुभं फलमागतं स त्रिषष्टिगुणः । तस्य संपूर्णं फलम् । यस्य तु एकत्रिंशदन्यूनो गुणो यथासंभवचक्राणां गुणमेलनेन, स पादन्यूनफलः । एवमन्येषाम् । प्रकृते देवदत्तस्य बालामन्त्रः षट्चक्रैः शोधितः सिद्धारिभूतनक्षत्रधनर्णेषु शुभगुणवान् । तेषां क्रमेण षोडशचतुरेकाष्टगुणाः । तेषां मेलने ऊनत्रिंशत् तिथिसंख्यगुणा न्यूनत्वादर्धं फलं ज्ञेयम् ॥ ५८ ॥

अत्र विशेषमाह—मन्त्रेति । अत्र वश्यावश्यचक्रे मन्त्राद्यवर्णस्य नामाद्यवर्णेन मन्त्रद्वितीयवर्णस्य नामद्वितीयवर्णेनेत्यखिलनाममन्त्रवर्णानां शोधनीयम् । तत्र मन्त्रस्याधिकाक्षरत्वे नामसमावृत्त्या नाम्नोऽधिकाक्षरत्वे मन्त्रसमावृत्त्या पूरणीयम् । यथा देवदत्तबालामन्त्रयोः । ऐकारस्य दकारेण ककारस्य वकारेण सकारस्य दकारेण प्रकृतनाम्नि तकारस्याधिक्यान्मन्त्रवर्णावृत्त्या पुनरैकारेणेति नाममन्त्राखिलवर्णशुद्धौ मुख्यं फलम् । मन्त्रनाम्नोराद्यन्तवर्णशुद्धौ मध्यं फलम् । आदिवर्णमात्रशुद्धावधमफलम् ॥ ५९ ॥

एवं यथा स्वरोन्मितान्न्यूनगुणो मन्त्रः फलं न प्रयच्छति तथेत्यर्थः । तथा प्रकृते धनर्णचक्रशोधने यद्युभयत्र शून्यशेषस्तदा साधकस्य हानिरेव । एवं षट्चक्रशोधनं कृत्वा स्वेष्टफलदत्वेन दृष्टमन्त्रं वक्ष्यमाणसंस्कारैः संस्कुर्यात् ॥ ६० ॥

असंस्कृतास्तु ये मन्त्रास्तेभ्यो नैव फलं लभेत् ।
तस्माद् वक्ष्यामि देवेशि संस्कारविधिमुत्तमम् ॥६१॥
जननं जीवनं देवि दीपनं बोधनं ततः ।
ताडनं चाभिषेकश्च विमलीकरणं प्रिये ॥६२॥
तर्पणाप्यायने गुप्तिर्दशैता मन्त्रसंस्क्रियाः ।
पश्चिमाग्रं त्रिकोणं तु विलिख्येशादि सप्तधा ॥६३॥




संस्काराणामावश्यकत्वं वक्तुमाह--असंस्कृता इति ॥ ६१ ॥
संस्कारनामान्याह--जननमिति ॥ ६२ ॥
तर्पणमाप्यायनम् इति द्वयम् । तत्र जननमाह--पश्चिमेति । ईशादि ईशकोणात् प्रागुदग्ररेखास्पृष्टसमषड्रेखाभिः सप्तधा विभजेत् ॥ ६३ ॥

विभजेदेवमाग्नेय्याः पुनः पश्चिमकोणतः ।
एवं चैकोनपञ्चाशत् त्रिकोणानि भवन्ति वै ॥६४॥
तत्रेशादिक्रमाद् देवि हकारान्तानकारतः ।
अष्टगन्धेन विलिखेत् त्रयोदशसु पङ्क्तिषु ॥६५॥
भूर्जपत्रेऽथवा तालपत्रे चालिख्य यन्त्रकम् ।
देवतां तत्र चावाह्य पूजयेद् भक्तिभावतः ॥६६॥
तद्यन्त्रान्मन्त्रवर्णांस्तु स्वरव्यञ्जनभेदतः ।
उद्धरेत् क्रमशो देवि जननं तद्भवेच्छिवे ॥६७॥
शिरःशिखाभ्यां पुटितं सहस्रं प्रजपेन्मनुम् ।
एतज्जीवनमाख्यातमजपायुग्ममध्यगम् ॥६८॥
सहस्रं प्रजपेदेतद्दीपनं संप्रकीर्तितम् ।
एवं मायापुटं जप्त्वा बोधनं तु भवेच्छिवे ॥६९॥

---

एवमाग्नेयकोणात् प्राग्दक्षिणरेखास्पृष्टषड्रेखाभिः पश्चिमकोणाद् दक्षोदग्रेखास्पृष्टषड्रेखाभिः सप्तधा विभजेत् । एकोनपञ्चाशत् त्रिकोणानि पङ्क्त्याकारेण पश्चिमाग्राणि प्रागग्राणि च ॥ ६४ ॥

तत्र त्रिकोणमध्ये । ईशकोणस्थत्रिकोणमारभ्य आग्नेयान्तं पङ्क्त्याकारेण पश्चिमत्रिकोणपर्यन्तम् अकारतः अःकारमारभ्य हकारान्तम् ऊर्ध्वाधोमुखत्रिकोणानां त्रयोदशसु पङ्क्तिषु अष्टगन्धेन लिखेत् । अष्टगन्धस्त्वष्टमे प्रोक्तः ।.६५ ॥

प्रोक्तत्रिकोणयन्त्रकम् । तत्र यन्त्रे । षोडशोपचारादिना पूजयेत् । भावो भावना ॥ ६६ ॥

तद्यन्त्रात् पूजितत्रिकोणयन्त्रात् मन्त्रगतान् वर्णान् स्वरव्यञ्जनभेदेन क्रमशो मन्त्रक्रमेणैवोद्धरेत् वाचयेत् । तत् एवं वाचनम् ॥ ६७ ॥

शिरः स्वाहा। शिखा वषट् । एताभ्यां पुटितम् आद्यन्तयोः संपुटक्रमेण संयोजितम्, न तु शिरःशिखयोर्मध्यगतम् । तथा सति शिरःशिखामध्यगतमित्येव ब्रूयात् । यथा स्वाहा वषट् मू० वषट् स्वाहा इति । सम्पुटस्वरूपं दशमे निरूपितम् । मनुं मन्त्रम् । एतत् सहस्रजपः । अजपा हंसः । एतद्युग्ममध्यगम् । यथा हंस० मू० हंसः इति ॥६८॥

एवमजपायुग्ममध्यगतमनोः सहस्रं प्रजपो दोपनम् । एवं सहस्रं मायापुटं जप्त्वा । माया ह्रीं ॥ ६९ ॥

अस्त्रेण तद्वज्जप्त्वा तु ताडनं वै भवेच्छिवे ।
बालाद्यहंसतारैश्च सहस्रं पुटितं जपेत् ॥७०॥
तालपत्रेऽथवा भूर्जे मनुं लिख्याभिषेचनम् ।
कुर्यात् सुगन्धतोयेन पुष्पेणोद्धृत्य सुन्दरि ॥७१॥
अभिषेचनमेतद्वै तारमायावषट्पुटम् ।
सहस्रं प्रजपेदेतद् विमलीकरणं स्मृतम् ॥७२॥
भूर्जे पूर्ववदालिख्य त्रितारपुटितेन वै ।
सहस्रधाऽर्पयेद्वै दुग्धैः पुष्पोद्धृतैः शिवे ॥७३॥
ततः प्रासादपुटितं जपेच्चैव सहस्रकम् ।
एतदाप्यायनं प्रोक्तं मन्त्रसिद्धिविधायकम् ॥७४॥

---

अस्त्रेण तद्वत् पुटितं सहस्रं जप्त्वा बालाद्यम् ऐं । हंसोऽजपा । तारः ॐ पुटितम् । यथा ऐं हंसः । ॐ मू० ॐ हंसः ऐं इति ॥ ७० ॥

मनुं मन्त्रम् । जपन् । पुष्पेणोद्धृत्य सुगन्धितोयेन अभिषेचनं कुर्यादिति सम्बन्धः । अत्र प्रतिमन्त्रमिति सहस्रधाऽभिषेचनमपि । तदुक्तं योगिनीतन्त्रे--"सहस्रधा तु प्रत्येकमेवं जप्त्वाभिषेचयेत्" इति ॥ ७१ ॥

एतत् प्रोक्तम् । तार ॐ । माया ह्रीं । वषट् स्वरूपम् । यथा ॐ ह्रीं वषट् मू० वषट् ह्रीं ॐ इति ॥ ७२ ॥

पूर्ववद् अष्टगन्धेन आलिख्येत्यस्य मन्त्रमित्यादिः । त्रितारपुटितम् । यथा ऐं ह्रीं श्रीं मू० ऐं ह्रीं श्रीं इति । अत्र त्रितारस्य बीजत्रयरूपत्वेन नानुलोमविलोमाभ्यां योजनम्, विलोमरूपस्य त्रितारत्वाभावात्, अन्यथा अजपाया अपि संपुटस्थले सः हं इति रूपतापत्तेः । यदीष्टमजपात्वं तस्य तदोभयोरजपात्वेनानुलोमविलोमतानिर्णयाभावप्रसङ्गात् । एवमेवोद्योते स्थितम् । पुष्पोद्धृतैस्तर्पयेत् । एतत्तर्पणमिति स्पष्टत्वादनभिहितम् । अत्राभिषेकतर्पणयोः स्वरूपसाम्येऽपि संकल्पे भेदस्तथा मन्त्रेऽपि । यदुक्तं योगिनीतन्त्रे—"अभिषिञ्चेत्तु मन्त्रान्ते अभिषिञ्चामीति वै पठन्" । तथा—"तर्पयामीति मन्त्रान्ते तर्पणं तु समाचरेत् ।।" इति ॥ ७३ ॥

प्रासादः हसः । प्रासाद इति नामैकदेशः । "सहस्रधा जपेद्विद्यां हसःकारपुटितां तथा" इति योगिनीतन्त्रोक्तेः ॥ ७४ ॥

सहस्रं प्रजपेन्मायापुटितं तद्धि गोपनम् ।
एवं तु संस्कृतैर्मन्त्रैरभीष्टानि प्रसाधयेत् ॥७५॥
वक्ष्यमाणेन विधिना सिद्धैर्मन्त्रैः प्रियाणि वै ।
असक्तानां तु देवेशि साधने विधिरुच्यते ॥७६॥
मायाकामरमाबीजान्यादौ मन्त्रेषु योज्य तु ।
साधयेत् सर्वकर्माणि शत्रुमन्त्रैरसंस्कृतैः ॥७७॥
अथान्यच्छृणु देवेशि सर्वतन्त्रेषु गोपितम् ।
जननान्मरणान्मन्त्रे सूतकद्वितयं भवेत् ॥७८॥
तथा मन्त्रा न सिद्ध्यन्ति शतकोटिजपैरपि ।
आद्यन्तयोस्तु मन्त्राणां सूतकं द्वयमस्ति वै ॥७९॥
तच्छुद्ध्यर्थं तारपुटं सहस्रं प्रजपेच्छिवे ।
एवं संशुद्धमन्त्रांस्तु साधयेत् परमेश्वरि ॥८०॥

---

माया ह्रीं । उपसंहरति—एवमिति ॥ ७५ ॥

वक्ष्यमाणमन्त्रसिद्धिविधिना सिद्धैर्मन्त्रैः प्रियाणि साधयेदिति सम्बन्धः । प्रोक्तवत्संस्कारं कर्तुमसमर्थानाम् । मन्त्रसाधने ॥ ७६ ॥

माया ह्रीं । काम क्लीं । रमा श्रीं । मन्त्रेष्वादौ । मन्त्रसिद्धिं संपाद्य वश्यादिसर्वकर्माणि साधयेत् । शत्रुमन्त्रैरित्युपलक्षणम् ऋणिमन्त्रादीनाम् । तदुक्तं योगिनीतन्त्रे—"बीजत्रयाद्यः संसिध्येदशुद्धश्चाप्यसंस्कृतः" इति । अशुद्धश्चक्रशुद्धिरहित इति तदर्थः ॥ ७७ ॥

अन्यत् संस्कारः मरणं जननं चोपदेशकाले गुरुशरीरवियोगाच्छिष्यशरीरसंयोगात् । तदपि योगिनीतन्त्रे उक्तम्—"आचार्यसाधकाङ्गस्य वियोगाद्योगतोऽपि च । मृतिर्जनिर्हि मन्त्राणां सूतकद्वयकारणम् ॥" इति ॥ ७८ ॥

तथा मन्त्राः सूतकद्वययुता मन्त्राः । मन्त्राणामाद्यन्तयोः प्रागुक्तजननमरणयोः ॥ ७९ ॥

पूर्वश्लोके यदित्यध्याहृत्य यत्सूतकद्वयमस्ति तदिति योजनीयम् । तच्छुद्ध्यर्थं सूतकद्वयशुध्यर्थम् । तारः ॐ । एतत्पुटं मन्त्रम् । एवमुक्तप्रकारेण पुरश्चरणेन साधयेत् ॥ ८० ॥

असाधितानां मन्त्राणां विनियोगान्महेश्वरि ।
सद्यः कुप्यत्यनर्थाय देवता परमेश्वरि ॥८१॥
अतस्तु साधने देवि मन्त्राणां प्रब्रवीमि ते ।
आदौ सुसाधयेद् विद्वान् मूलदेवीमभीष्टदाम् ॥८२॥
सिद्धायां मूलदेव्यां तु शीघ्रं सिध्यन्ति मन्त्रकाः ।
मूलविद्यामप्रसाध्य सिसाधयिषतेऽन्यकम् ॥८३॥
अन्तरिक्षे तु सोपानं कर्तुमिच्छति मूढधीः ।
तस्मादादौ मूलदेवीं साधयेत् परमेश्वरि ॥८४॥
पुरश्चरणयोगेन जप्त्वा हुत्वा महेश्वरि ।
प्राप्तदीक्षेण पुरतः कर्तव्यत्वात् पुरस्क्रिया ॥८५॥
पुरस्करोति यो नैव तस्य विद्या पराङ्मुखी ।
अशक्तश्चेद् दैशिकेन ब्राह्मणेन च कारयेत् ॥८६॥

---

असाधितानाम् अकृतपुरश्चरणानां विनियोगात् वश्यादिकर्मसु विनियोजेनात् । अनर्थाय अनिष्टप्राप्तये ॥ ८१ ॥

यतः कुप्यति, अतः साधनं पुरश्चरणविधानम् । तत्र मूलदेव्याः कामनायां विनियोगो निषिद्ध इति न तत्साधनमपेक्षितमिति प्राप्ते आह—आदाविति । सुसाधयेत् सुष्ठु सम्यग् मुख्यकल्पेन साधयेत् । कामनायामनुपयोगान्न तत्राश्रद्धा विधेयेति भावः ॥ ८२ ॥

एतत्प्रयोजनमाह--सिद्धायामिति । मन्त्रकाः कामनोपयुक्ताः । अन्यकम् अन्यं मन्त्रं सिसाधयिषते साधयितुमिच्छति ॥ ८३ ॥

य एवं सिसाधयिषते स इत्यध्याहार्यं इच्छतीति योज्यम् । सोपानं आरोहणम् । मूलविद्यासाधनमन्तराऽन्यसाधनमशक्यमिति भावः ॥८४॥

पुरश्चरणस्य योगो विधानम् । तेन जपहोमादिकं कृत्वा मूलदेवीं साधयेदिति सम्बन्धः । पुरश्चरणपदार्थमाह—प्राप्तेति । प्राप्तदीक्षेण पुरत आदौ क्रियत इति पुरस्क्रिया । यदुक्तम्—"पुरतश्चरणीयत्वात् पुरश्चरणमुच्यते" इति ॥८५॥

तस्य अकृतपुरश्चरणस्य । पुरश्चरणं स्वयं कर्तुमशक्तश्चेद् दैशिकेन गुरुणा च इति वार्थे, "गुरुणा वापि पत्न्या वा ब्राह्मणाद्यैरथापि वा" इति योगिनीतन्त्रोक्तेः ॥८६॥

अशयाने हरौ काले दीक्षोक्ते शुभसंयुते।
मनःप्रसादो यत्रास्ति तत्र पुण्ये समाचरेत् ॥८७॥
पुरश्चरणकं देवि पञ्चाङ्गं प्रोच्यते बुधैः।
जपो होमस्तर्पणं च मार्जनं ब्रह्मभोजनम् ॥८८॥
पूर्वपूर्वदशांशेन चाङ्गं स्यादुत्तरोत्तरम्।
जपस्तु लक्षसंख्याको होमादिस्तद्दशांशतः ॥८९॥
प्रत्यहं वा समाप्तौ वा लक्षान्ते वा महेश्वरि ॥९०॥

---

तत्कालमाह—अशयान इति। विष्णावसुप्ते। कार्तिकशुक्लैकादश्यादि आषाढशुक्लदशम्यन्तं दीक्षाप्रकरणोक्तशुभतिथ्यादियुते काले। मनसः प्रसादः प्रसन्नता यत्रास्ति एवंविधे पुण्ये पुण्यफलदे देशे तन्त्रान्तरोक्ते, अस्मिन्नपि वक्ष्यमाणे निजे गृहे इत्यादिना। निजगृहगोष्ठसमुद्रतीरकुलवृक्षाधःपर्वताग्रसमुद्रयुङ्नदीतीरपुण्यनदीतीरस्वयम्भुदेवालय-पश्चिममुखनन्दिशून्यशिवालयनार्मदलिङ्गसन्निधिगुरुसन्निधिरिति एकादश स्थानानि। मनःप्रसाद इति एकान्ताद्युपलक्षकम्। तच्चोक्तं कृष्णयामले—"म्लेच्छदुष्टमृगव्यालशङ्कातङ्कविवर्जिते। एकान्ते पावने निन्दारहिते भक्तसंयुते॥ राजानः सचिवा राजपुरुषाः प्रभवो जनाः। चरन्ति येन मार्गेण न तत्र स्थानमिष्यते॥ जीर्णदेवालयोद्यानगृहवृक्षतलेषु च। नदीकुलादिकूलेषु भूच्छिद्रेषु च नो वसेत्॥" इति। अत्र जीर्णत्वमुद्याने असंस्कृतत्वेन कीटादिदोषयुक्तत्वम्, अन्यत्र पतनयोग्यत्वम् ॥८७॥

पुरश्चरणकं समाचरेदिति सम्बन्धः। तच्च पञ्चाङ्गं प्रोच्यते। अङ्गान्येवाह—जप इत्यादि ॥८८॥

अङ्गसंख्यामाह—पूर्वेति। पूर्वं जपादि। उत्तरं होमादि। तथा च जपदशांशो होमः, होमदशांशस्तर्पणमित्यादि। तत्र सर्वाद्यस्य जपस्य संख्यामाह—जपस्त्विति। तद्दशांशत इति फलितमुक्तम् ॥८९॥

होमकालमाह—प्रत्यहं वेति। प्रत्यहं कृतजपदशांशेन जपान्ते समाप्तौ सर्वजपान्ते लक्षजपान्त्ये वा होमयेत् होमं कुर्यात्। अत्र लक्षान्त्ये तद् युगसंख्याकलक्षकमिति वक्ष्यमाणद्वित्रिलक्षजपपरम्। त्रयोदशोक्तरीत्या नाडीसाधनान्तकर्मणा साधितेऽग्नौ नित्यपूजाङ्गहोमवद्धुत्वेति ज्ञेयम्। एतदुक्तं योगिनीतन्त्रे—"नाडीसन्धानपर्यन्तसाधितेऽग्नौ महेश्वरि। सर्वकर्मसु होमः स्यादन्यथा निष्फलं भवेत्॥" इति। अत्र देवार्चनाभावात् तद्द्रव्येण तर्पणं नास्ति। अग्निसाधनाशक्तौ बृहद्वामकेश्वरे उक्तम्—"अथवा नित्यपूजोक्तविधिना साध्य हावयेत्" इति ॥९०॥

चतुस्तारं मुखे क्षिप्त्वा मूर्धान्तेन महेश्वरि।
पायसं विल्वपत्रं वा द्राक्षां पुण्यफलानि वा ॥९१॥
करवीरं किंशुकं वा कमलं वा कुसुम्भकम्।
मधूकं वा जपा वापि चान्यद्वा शुभगन्धयुक् ॥९२॥
एतेषां कुसुमं तद्वद् गव्यक्षीरं घृतं तथा।
पुष्पाणि तु समग्राणि कौसुम्भं दशसंख्यकम् ॥९३॥
अम्लानं सुप्रफुल्लं च होमकर्मणि योजयेत्।
कर्षद्वयन्यूनफलं समग्रं होमयेत् तथा ॥९४॥
ततोऽधिकफलस्येह खण्डं स्यात् कर्षतोऽधिकम्।
घृतश्रीखण्डागुरूणां माषत्रयमितं भवेत् ॥९५॥

---

होममन्त्रमाह—चतुस्तारमिति। मुख्ये आदौ। मूर्धा स्वाहा। तदन्तेन मूलेनेति शेषः। होमद्रव्याण्याह—पायसमित्यादि। पुण्यफलानि नारिकेलादीनि स्मृतिप्रसिद्धान्यनिषिद्धानि ॥ ९१ ॥

उक्ताद् भिन्नम्। तच्च सुगन्धयुक् शास्त्रेषु प्रसिद्धमप्रसिद्धं वा। अत एव योगिनीतन्त्रे उक्तम्—"उक्तं तथाऽन्यद् वा पुष्पं सुगन्धं हवने भवेत्" इति ॥ ९२ ॥

प्रोक्तानां करवीरादीनां किमङ्गं होमे ग्राह्यमित्याशङ्क्याह—एतेषामिति। करवीरादीनामित्यर्थः। पायसमित्यादि सर्वं होमकर्मणि योजयेदिति व्यवहितेन संबन्धनीयम्। गव्यमिति क्षीरघृतयोरन्वेति। होमे द्रव्यप्रमाणमाह—पुष्पाणीत्यादि। दशसंख्यकं दशान्यूनम्, 'कौसुम्भं तु दशान्यूनम्' इति योगिनीतन्त्रोक्तेः ॥ ९३ ॥

कलिकां म्लानं च निषेद्धुमाह—अम्लानमिति। फलप्रमाणमाह—कर्षेति। कर्षमानं द्वादशे प्रोक्तम्। कर्षद्वयमितं फलम्। तथा तस्मान्न्यूनं वा तथा अम्लानादिलक्षणम्। सुप्रफुल्लमिति प्रकृते सुपक्वं ज्ञेयम् ॥ ९४ ॥

ततः कर्षद्वयमितादधिकस्य फलस्य कर्षादधिकं खण्डं होमे स्यात्। श्रीखण्डः चन्दनम् ॥ ९५ ॥

षष्टितण्डुलजं तद्वत् पायसं संप्रकीर्तितम् ।
क्षीरं कर्षमितं ज्ञेयमेवमन्यन्महेश्वरि ॥९६॥
शूद्राणां च तथा स्त्रीणां होमो नैव भवेच्छिवे ।
उत्कटेच्छाभक्तियुतशूद्रस्य स्यान्नमोऽन्ततः ॥९७॥
अथवा ब्राह्मणद्वारा होमः कर्तव्य एव तु ।
सर्वत्रायं विधिः प्रोक्तः पूजादिषु महेश्वरि ॥९८॥
होमाभावे द्विगुणतस्तत्संख्याया जपः स्मृतः ।
अशक्त्या यस्य चाङ्गस्य लोपस्तद्द्विगुणो जपः ॥९९॥
ब्राह्मणस्य द्विगुणतः क्षत्रियस्य त्रिधा स्मृतः ।
चतुर्धा तु विशः पञ्चगुणः शूद्रस्य वै जपः ॥१००॥
अशक्तवृद्धस्त्रीणां तु सिद्धिर्जपाद् द्विजार्चनात् ।
अङ्गद्वयेनैव तेषां पुरश्चरणकं भवेत् ॥१०१॥

---

अन्यत् केसरकस्तूर्यादिकम् । एवं कस्तूरीकुङ्कुमशशिगुञ्जामात्रं हुनेदित्यादि दक्षिणामूर्तिसंहिताद्युक्तमानयुतम् ॥ ९६ ॥

शूद्रादीन् प्रति होमं निषेधति--शूद्राणामिति । होमकरणे उत्कटेच्छायुतस्य भक्तस्य नमोऽन्तमन्त्रेण होमः, न स्वाहान्तेन । एतदुक्तं वाराहीतन्त्रे—"यदि कामी भवेच्चैव शूद्रोऽपि होमकर्मणि । वह्निजायां परित्यज्य जुहुयात्तु नमोऽन्ततः ॥" इति ॥ ९७ ॥

ब्राह्मणद्वारा स्त्रीशूद्राभ्यां होमः कारयितव्यः । प्रसङ्गादन्यत्रापि नियममाह—सर्वत्रेति । सर्वत्र पूजादिषु । आदिना दीक्षादिः ॥ ९८ ॥

होमकरणपक्षे विशेषमाह—द्विगुणत इति । तत्संख्याया होमसंख्याया द्विगुणतः । एवं तर्पणाद्यङ्गेष्वप्याह -अशक्तेति ॥ ९९ ॥

होमाद्यङ्गानुकल्पजपे वर्णभेदेन विशेषमाह—ब्राह्मणस्येत्यादि । ब्राह्मणादीनां चतुर्णां क्रमेण द्वित्रिचतुःपञ्चगुणस्तत्तदङ्गानुकल्पजपः ॥ १०० ॥

अशक्ताः रोगादिना यथोक्तकरणेऽसमर्थाः । वृद्धाश्च स्त्रियश्च । एतेषां सिद्धिः पुरश्चरणफलं जपो द्विजार्चनमित्यङ्गद्वयेनैव । तेषामशक्तादीनाम् । अशक्तपदसाहचर्याद्

दुग्धेन गन्धतोयेन तर्पयेद्वापि मूलतः ।
जले देवीं समावाह्य संपूज्यैव तु पूर्ववत् ॥१०२॥

स्वमूर्ध्नि देवतां ध्यात्वा तीर्थमावाह्य पूर्ववत् ।
मार्जयेन्मूलमनुना मार्जयामीति वै शिवे ॥१०३॥

ब्राह्मणान् विविधैर्देवि उपचारैस्तु भोजयेत् ।
आदौ भूमिग्रहं कुर्यात् पूर्वस्मिन् दिवसे शिवे ॥१०४॥

संकल्प्यामुकमन्त्रस्य पुरश्चरणसिद्धये ।
मयेयं गृह्यते भूमिर्मन्त्रो मे सिध्यतामिति ॥१०५॥

---

वृद्धादीनां यथोक्ताङ्गानुष्ठानं न निषिद्धमिति। ज्ञेयम् । तदुक्तं योगिनीतन्त्रे—'स्त्रीभिर्वृद्धैः कृतं चाङ्गद्वितीयं सर्वपूर्तिकृत् । अन्याङ्गनि कृतानि स्युर्यदाऽनन्त्यं तदा फलम् ।।'' इति। अत्रेत्थं व्यवस्था—असमर्थानां तत्तदङ्गद्विगुणादिजपः । अत्यशक्तानां वृद्धानां स्त्रीणां तु आद्यचरमाङ्गद्वयेन चारितार्थ्यमिति ॥ १०१ ॥

तर्पणमाह—दुग्धेनेति । गन्धतोयेन वेत्यन्वयः । पूर्ववदिति मूलत इत्यनेन योजनीयम् । तेन पूर्ववत् चतुस्ताराद्येनार्थातर्पयामीत्यन्तेन मूलतो मूलेन तर्पयेदित्यर्थः । जले नद्यादौ पात्रे वा।एतदप्युक्तं तत्रैव—"नद्यादौ वा शुभे तोये पात्रस्थे वापि देवताम् । आवाह्य मूलमनुना तर्पयामीति तर्पयेत् ॥ तथा षोडशभिर्वापि पञ्चभिर्वोपचारकैः । संपूज्य चान्ते तस्मात्तु तोयादुद्वासयेत्प्रिये ।।" इति ॥ १०२ ॥

पूर्ववत् जले कलशपूजोक्तविधिना तीर्थमावाह्य । अत्र तर्पणमार्जनयोर्लक्षकमुक्तं तत्रैव—"देवतीर्थेनाञ्जलिर्नं जलदानं तु तर्पणम् । मार्जनं तु कुशैर्वापि निषिञ्चेत्तत्त्वमुद्रया ।।" इति ॥ १०३ ॥

विविधैः उक्तैरनुक्तैश्च आसनाद्यैः सुगन्धद्रव्याद्यैः उपचारैः संपूज्य भोजयेत् । पुरश्चरणकर्मण आदौ यस्मिन् दिने पुरश्चरणारम्भस्तस्मात् पूर्वस्मिन् दिवसे ॥ १०४ ॥

भूमिग्रहं करिष्य इति संकल्प्य सिध्यतामिति प्रार्थ्य प्रणमेत् । तदुक्तं योगिनीतन्त्रे—'भूपरिग्रहमेवं तु प्रार्थ्य कृत्वा नमश्चरेत्" इति ॥ १०५ ॥

ग्रामे क्रोशमितं तद्वन्नगरे द्विगुणं भवेत् ।
अन्यत्र तु यथेच्छं स्यात् पुण्यारण्यादिषु प्रिये ॥१०६॥
तद्दिक्षु क्षीरवृक्षोत्थान् कीलान् वैतस्तिकान् शिवे ।
मूलास्त्रेणाभिमन्त्र्याथ पूर्वादिदशदिक्षु तान् ॥१०७॥
निखनेत्तेषु गन्धाद्यैरस्त्रेणाभ्यर्च्य दिक्पतीन् ।
माषभक्तबलिं दद्यात्तत्तन्मन्त्रेण मन्त्रवित् ॥१०८॥
एहीन्द्र पूर्वदिग्भागे पूजितो वस कीलके ।
मां रक्ष च ततो निर्विघ्नेन कार्यं च साधय ॥१०९॥
पुनः साधय वै माष ततो भक्तबलिं तथा ।
गृह्णद्वयं ततो मूर्धा रामवेदाक्षरो मनुः ॥११०॥
तत्तद्दिशा देवनामसंयोगादन्यमन्त्रकाः ।
नैतत् सुरालये कुर्याद्यतस्तैः पूर्वसंग्रहात् ॥१११॥

---

परिग्राह्यभूमेः प्रमाणमाह—ग्राम इत्यादि । द्विगुणं क्रोशद्वयम् । अन्यत्र पुण्यारण्यादिषु । आदिना नदीकूलादि ॥ १०६ ॥

तस्याः परिगृहीतभूमेर्दिक्षु । क्षीरवृक्षः छेदने क्षीरनिर्गमो यस्मिन् स उदुम्बरादिः, तदुत्थान् तन्निर्मितान् । वैतस्तिकान् वितस्तिपरिमितान् । पूर्वादीशान्तोर्ध्वाधोरूपदशदिक्षु निखनेदित्यन्वयः ॥ १०७ ॥

अस्त्रेण मूलास्त्रमन्त्रेण दिक्पतीन् सप्तमोक्तान् । तदुक्तं योगिनीतन्त्रे—"पूर्वाद्यधो दिगन्तं तु सुरेशादीन् दिशापतीन् । अनन्तान्तान्" इति । १०८ ॥

तन्मन्त्रमाह—एहीत्यादि । च ततो । च ॥ १०९ ॥

पुनः वै ततो इति त्यक्त्वा एहीत्यादि बलिमित्यन्त स्वरूपम् । गृह्ण द्विः । मूर्धा स्वाहा । रामवेद त्रिचत्वारिंशत् ॥ ११० ॥

आग्नेयादिदिक्षु आग्नेयादिदिङ्नाम अग्न्यादिदेवनाम च । इन्द्रेत्यस्य पूर्वेत्यस्य च स्थाने संयोज्यान्यमन्त्रा ज्ञेया इत्याह—तत्तदिति । एतत् भूपरिग्रहादिकम् । अत्र हेतु-

तन्मध्ये गणपं क्षेत्रपालं वास्त्वीशमर्चयेत् ।
पूर्ववत् कूर्मचक्रं तु पूजयेत्तदनन्तरम् ॥११२॥
नवकोष्ठेषु पूर्वादीशान्तकोष्ठेषु वै क्रमात् ।
विलिखेत् काद्यष्टवर्गान् मध्यकोष्ठे तु पूर्वतः ॥११३॥
द्वन्द्वं स्वराणां संलिख्य कूर्मं भक्त्या समर्चयेत् ।
प्रागादिनवकोष्ठेषु क्षेत्रपालान्नवार्चयेत् ॥११४॥
अमृतं वृषमं शैलराजं वासुकिमेव च ।
अर्थकृच्छक्तिपद्मादियोनीन् शङ्खमहादिकम् ॥११५॥
छायाछत्रगणं चेति क्रमात् संपूजयेद् बुधः ।
दीपस्थानं तत्र देवि ज्ञात्वा संसाधयेन्मनून् ॥११६॥

---

माह—यत इति । तैः सुरैः विष्ण्वादिभिः पूर्वमेव संगृहीतत्वात् । अयमाशयः—बलिदानमन्त्रार्थपर्यालोचनया तस्य विघ्नविनाशः फलम् । तच्च विष्ण्वादिसुरपरिगृहीतस्थले विघ्नकर्त्रसंभवादेव सिद्धमिति ॥ १११ ॥

तस्य गृहीतक्षेत्रस्य मध्ये । गणेशक्षेत्रपालवास्तुपुरुषान् पूर्ववद् बलिदानान्तैः समर्चयेत् । तदनन्तरं वास्तुपुरुषान्तार्चनानन्तरं कूर्मचक्रं पूजयेत् ॥ ११२ ॥

तल्लेखनप्रकारमाह – नवकोष्ठेष्विति । प्राक्प्रत्यग्दक्षिणोत्तरतश्च रेखाचतुष्टयलेखनेन नवकोष्ठमारच्य तेषु नवकोष्ठेषु पूर्वादीशान्तकोष्ठेष्वष्टसु काद्यष्टवर्गान् कचटतपयशलानन्तर्मातृकाध्यानोक्तान् क्रमाद्विलिखेत् । मध्यकोष्ठे पूर्वभागादष्टदिक्षु ॥ ११३ ॥

अ आ । इत्यादि स्वरद्वन्द्वं विलिख्यैवंविधं कूर्मचक्रं शक्त्या समर्चयेत् ॥ ११४ ॥

अर्थकृत्, शक्तिः, पद्मादिर्योनिः पद्मयोनिरित्येषां द्वन्द्वः । महादिकं शङ्खं महाशङ्खम् । अमृतादिछायाछत्रगणान्तनवकं क्रमात् प्रागादिमध्यान्तनवकोष्ठे पूजयेत् । तत्र कूर्मचक्रे ॥ ११५-११६ ॥

तत्कूर्मस्य मुखं देवि दीपस्थानं प्रकीर्तितम् ।
दीप्यन्ते यत्र मनवो दीपस्थानं ततस्तु तत् ॥११७॥
गृहनामाद्यक्षरं तु यत्र कोष्ठे स्थितं शिवे ।
तत्कूर्ममुखमुद्दिष्टं निर्विघ्नं तत्र सिध्यति ॥११८॥
मध्यं पृष्ठं तस्य चाधः पुच्छं पार्श्वेषु वै क्रमात् ।
हस्तयुग्मं कुक्षियुग्मं पादयुग्मं प्रकीर्तितम् ॥११९॥

| | | |
|---|---|---|
| ळ<br>ई | क मू<br>पूर्वः ख | च<br>आ |
| श<br>उ | अं अ इ<br>ओ ड<br>ए लृ ऋ | ट०<br>द० |
| य<br>वा | प<br>प | त<br>नि |

दीपस्थानमेवाह—तदिति । कूर्मचक्रस्य यन्मुखं तद्दीपस्थानम् । दीपस्थानपदस्यान्वर्थतामाह—दीप्यन्त इति । यतो यत्र स्थाने जप्ता मनवो दीप्यन्ते तेजोमया वीर्यवत्तरा भवन्ति ततस्तत्स्थानं दोपस्थानम् ॥ ११७ ॥

मुखज्ञानप्रकारमाह—गृहेति । गृहस्य यन्नाम वास्तुशास्त्रोक्तं तदाद्यमक्षरं यस्मिन् कोष्ठेऽस्ति तत्कूर्ममुखम् । तत्र जपे क्रियमाणे निर्विघ्नं सिध्यति ॥ ११८ ॥

तत्कूर्मस्याङ्गान्तराण्यप्याह--मध्यमिति । यत्र कोष्ठे गृहनामाद्यक्षरं तन्मुखं मध्यकोष्ठं पृष्ठ तस्याधः पुच्छं क्रमात् पार्श्वेषु मुखादित्रयाणामुभयपार्श्वेषु हस्तयुग्मं कुक्षियुग्मं पादयुग्मं च ज्ञेयम् । यथा कान्तनामकगृहे नामाद्यक्षरस्य ककारस्य पूर्वकोष्ठस्थत्वात्तन्मुखम् । मध्यकोष्ठं पृष्ठं पश्चिमकोष्ठं पुच्छम् । अग्नि-ईशकोष्ठद्वयं हस्तयुग्मम्,

मुखे पृष्ठे चोत्तमं स्यान्मध्यमं हस्तयुग्मके ।
अन्यत्र तु निषिद्धं स्यादेष देवि त्रिधा स्थितः ॥१२०॥
देशकूर्मं ग्रामकूर्मं गृहकूर्ममितीश्वरि ।
भावयेत्तत्र तत्रैव प्रोक्तरीत्या विचिन्तयेत् ॥१२१॥
मुख्यं फलं त्रयाणां तु लाभे स्यादेकमेव वा ।
तत्रोक्तपरकूर्मं तु पूजयेत्तत्र वै जपेत् ॥१२२॥
कुरुक्षेत्रे प्रयागे च महाकाले तथैव च ।
पर्वते च शुभारण्ये समुद्रस्योपकूलके ॥१२३॥

---

दक्षिणोत्तरकोष्ठद्वयं कुक्षियुग्मम्, निर्ऋतिवायुकोष्ठद्वयं पादयुग्मम् । एवं ध्रुवनामकगृहे निर्ऋतिमध्येशानकोष्ठानि मुखपृष्ठपुच्छानि । दक्षिणपश्चिमद्वयमाग्नेयवायव्यद्वयं पूर्वोत्तरद्वयं च हस्तकुक्षिपादयुग्ममिति । अत्र स्वराणां मध्यकोष्ठस्थानामपि तत्तद्दिक्कोष्ठस्थत्वं मुखादिचिन्तने ज्ञेयम् ॥ ११९ ॥

उत्तमं जपस्थानम् । एषः कूर्मः ॥ १२० ॥

तस्य त्रिप्रकारत्वमेवाह—देशेति । यस्मिन् देशे जपः कर्तव्यः, तत्रादौ कूर्मं भावयेत् । देशे कूर्मचक्रलेखनमशक्यमिति भावयेदित्युक्तम् । तत्र तत्र देशे ग्रामे गृहे चेत्यर्थः । आदौ देशे कूर्मं विभाव्य मुखादिकं विचिन्तयेत् । ततस्तद्देशकूर्ममुखादिस्थितग्रामे पुनः कूर्मं विभाव्य ग्रामकूर्ममुखादिस्थगृहे कूर्मं विभाव्य गृहकूर्ममुखादौ जपे मुख्यं फलं ज्ञेयम् ॥ १२१ ॥

एतदेवाह—मुख्यं फलमिति । त्रयाणां गृहग्रामदेशकूर्माणां चिन्तनेन शुभस्थानानां त्रयाणां लाभे । त्रयालाभे एकं त्रिष्वन्यतमं चिन्तयेत् । एतद् द्वयस्याप्युपलक्षणम् । अर्थाद् अधमं मध्यमं वा फलमपि ज्ञेयम् । तत्र देशग्रामयोः कूर्मे शुभस्थानं संचिन्त्य तत्रस्थगृहे कूर्मचक्रं संपूज्य तत्र तन्मुखादौ त्रयोदशोक्तवत् परकूर्मं विलिख्य संपूजयेत् । एवं परकूर्मे स्थित्वा जपेत् ॥ १२२ ॥

क्वचित् स्थानेषु त्रिविधकूर्मचिन्तनानावश्यकतामाह—कुरुक्षेत्र इत्यादि । शुभफलदे अरण्ये । उपकूलके तीरे ॥ १२३ ॥

काश्यां च चिन्तनं नैव दीपस्थानस्य शङ्करि ।
निजे गृहे यथोक्ते स्याद् गोष्ठेऽब्धेस्तीर एव च ॥१२४॥

द्विगुणं कुलवृक्षाधः पर्वताग्रे त्रिधा फलम् ।
अब्धिसंयुक्सरित्तीरे पुण्यस्रोतस्तटे तथा ॥१२५॥

स्वयम्भुदेवगेहे च शतधा फलमुच्यते ।
पश्चिमाभिमुखे नन्दिशून्ये त्वेव शिवालये ॥१२६॥

तथा नार्मदलिङ्गस्य चालये गुरुसन्निधौ ।
अनन्तसंख्यं तु फलं मनःकान्ते विशेषतः ॥१२७॥

दीपनाथस्वमन्त्राणामाद्यमेकाक्षरं यदा ।
तदारिमन्त्रा अपि च सिध्यन्ति द्रुतमीश्वरि ॥१२८॥

---

पुण्यदेशे समाचरेदिति यदुक्तं तत्र पुरश्चरणयोग्यस्थानानि फलोद्देशपूर्वकमाह—निजे गृह इत्यादि । यथोक्तं फलमित्यन्वयः ॥ १२४ ॥

कुलवृक्षास्त्रयोदश उक्ताः । अब्धिसंयुक् सरित् समुद्रे सम्यक् प्रत्यक्षेण युता नदी ॥ १२५ ॥

नन्दिशून्ये तु इति तुना नन्दियुतव्यवच्छेदः । तदुक्तं योगिनीतन्त्रे—"प्रत्यग्भिन्नमुखे नन्दियुते हानिः शिवाशये" इति ॥ १२६ ॥

नार्मदलिङ्गालये नायं नियमः । तदपि तत्रैवोक्तम्—"नर्मदालिङ्गसहिते नियमो नायमीश्वरि" इति । मनःकान्ते इति । सर्वत्र विशेषणम् । अत एवोक्तं योगिनीतन्त्रे—"अप्रसन्नं मनो यत्र तत्रोत्तमतमेऽपि च । मन्त्रसिद्धिर्न भवति यथोक्तानुष्ठितावपि ॥" इति । अत एव मनःकान्ते विशेषत इति मनःकान्तत्वस्य मुख्यतोक्ता ॥ १२७ ॥

एवं स्थानमुक्त्वा तद्विशेषमाह—दीपेति । दीपनाथा दीपस्थानादिनाथा अमृतवृषभाद्याः । स्वम् आत्मा साधकः मन्त्रश्चेति त्रयाणाम् । आद्यमेकाक्षरं यदा आद्याक्षराणामैक्यम् । अरिमन्त्राः कुलचक्रादिष्वपरिभूताः । अपिना असाध्या धनिरूपाश्च ॥१२८॥

तत्र स्थित्वा जपेल्लक्षं हविष्याशी समाहितः ।
मन्त्रसाधनकामस्तु युगसंख्याकलक्षकम् ॥१२९॥
आदौ शुभे दिने केशान् वापयित्वा महेश्वरि ।
अयुतं प्रजपेत्तत्र तद्गायत्रीं समाहितः ॥१३०॥
तेनाधिकारो भवति पुरश्चरणसाधने ।
तदादिनियमं कुर्यात् प्रयत्नेन तु साधकः ॥१३१॥
स्थानसाधकयोरेवमरित्वेऽपि परित्यजेत् ।
शिवेश्वरौ दूतिकले वाक्सुन्दर्यौ तथैव च ॥१३२॥

---

हविष्याशनधर्मविधानाय लक्षं जपेदित्यनुवादः । नित्यात्मकपुरश्चरणस्य लक्षसंख्या प्रागुक्ता । मन्त्रेण काम्यसाधनकामस्तु तत्तद्युगसंख्याकलक्षकं जपेत् । कृतादियुगेषु क्रमेण एकद्वित्रिचतुर्लक्षजपः काम्यसाधनाय भवेदिति भावः । एवं च कलौ चतुर्लक्षजपात् काम्यसाधनसमर्थो भवति । एतच्च ध्यानादिसमर्थस्य स्थिरचित्तस्य । अन्यस्य तु षोडशलक्षजपः । तदुक्तमेकवीराकल्पे—"भावनारहितानां च क्षुद्राणां क्षुद्रचेतसाम् । चतुर्गुणो जपः प्रोक्तः सिद्धये नान्यथा भवेत् ॥" इति । योगिनोतन्त्रेऽपि—'असंयतात्मनामुक्ताज्जपः षोडशधा भवेत् ॥'' इति ॥ १२९ ॥

पुरश्चरणसङ्कल्पदिवसादादौ कस्मिंश्चिच्छुभे दिने । तत्र तस्मिन् दिने । तद्गायत्री मूलगायत्री ॥ १३० ॥

तेन गायत्रीजपेन । अत्र तद्दिने एव गायत्र्ययुतं जपेत् । अथवाऽनेकदिनैर्वा गायत्रीजपः कर्तव्यः । एतदुक्तं योगिनीतन्त्रे—"गायत्रीं प्रजपेद् देवि दशसाहस्रसंख्यकाम् । एकेन वा तथाऽनेकैर्जपेन्नियमतो दिनैः ॥" इति । अयं जपः प्रायश्चित्तरूपः । तदपि तत्रैवोक्तम्—'एवं जपेन संशुद्धौ सर्वकर्माधिकारिता । प्रायश्चित्तान्तरेऽशक्तो जपेनैव विशुध्यति ॥" इति । तदादि गायत्रीजपारम्भदिनादि । नियमं शुद्धं स्वच्छमित्यादि वक्ष्यमाणम् ॥ १३१ ॥

एवं गायत्रीजपपूर्वकं पुरश्चरणं कर्तव्यम् । तच्चारिस्थाने न कर्तव्यमित्यतोऽरिस्थानं वक्तुमाह—स्थानेति । एवं कूर्मपुच्छादिवत् । तत्स्थानं परित्यजेत् । शिवः अकारः । ईश्वरो गकारः । एतौ परस्परमरिभूतौ । यथा अमृतनामकस्य गयास्थानमरि-

आकाशमङ्गले तद्वच्च सदाशिवकालयोः ।
पुंरागयोरहङ्कारश्रोत्रयोः पाणिजिह्वयोः ॥१३३॥
स्पर्शपाय्वोः शब्दवाय्वोररित्वं स्यान्महेश्वरि ।
शुद्धं स्वच्छं तथा वासःस्थानमङ्गं च मूर्धजाः ॥१३४॥
सुगन्धामलकैः केशशोधनं बन्धनं सदा ।
पञ्चतिक्तमुखो निद्राजृम्भालस्यादिवर्जनम् ॥१३५॥
निष्ठीवनं भयं नीचस्पर्शभाषणमेव च ।
अकार्यभाषणं क्रोधं चित्तचाञ्चल्यमेव च ॥१३६॥
वर्जयेच्च महेशानि सदा नियतमानसः ।
आहारस्तु फलं क्षीरं मूलं तद्वद्धविष्यकम् ॥१३७॥

---

भूतम् । एवमन्यत्रापि । दूती ऋ । कला च । वाक् प । सुन्दरी कुलसुन्दरी लृ ॥ १३२ ॥

आकाश ष । मङ्गला ओ । सदाशिव ख । काल ज्ञ । पुं ट । राग ज । अहङ्कार ड । श्रोत्र त । पाणि फ । जिह्वा ध ॥ १३३ ॥

स्पर्श र । पायु भ । शब्द य । वायु स । एवं तत्तद्द्वन्द्वानामरित्वं ज्ञेयम् । अत्र शिवेश्वरावित्यादि प्रथमान्तेषु तयोरित्यध्याहृत्य योजनीयम् । एवं दूतीत्यादि शिवदूत्यादि नामैकदेशो ज्ञेयः । प्रागुक्तान्नियमानाह—शुद्धमित्यादि । शुद्धम् अधौतत्वात् अस्पृश्यत्वादिरहितम् । स्वच्छममलिनम् । तथा वासोवत् अङ्गादकम् ॥ १३४ ॥

नित्यं सुगन्धमुस्तादिद्रव्यैरामलकैश्च केशशोधनम् । बन्धनमिति मुक्तकेशत्वनिषेधः । पञ्चतिक्तं वक्ष्यमाणम् ॥ १३५ ॥

स्पर्शने नीच इति नीचाङ्गम् । भाषणे नीचो नास्तिकादिः । अकार्यभाषणं व्यर्थभाषणम् । निष्ठीवनादिकं वर्जयेदित्यन्वयः । पञ्चतिक्तमुख इत्यादि । चित्तचाञ्चल्यवर्जनान्तं जपकाले ज्ञेयम् , योग्यत्वात् ॥ १३६ ॥

सदा जपकालादन्यत्रापि । नियतमानसः दुष्टविषयेभ्यो निगृहीतचित्तः । जपकाले चित्तचाञ्चल्यवर्जनं तु वक्ष्यमाणमन्त्रवर्णादिध्यानानुवृत्तिगमकम् । एवं शारीरादिचेष्टानियममुक्त्वा प्रागुहविष्याशीत्युपलक्षणविधयोक्तमाहारनियमं स्पष्टतयाह—आहार-

भुञ्जीयाद् रात्रिसमये शयनं स्थण्डिलेऽथवा ।
कुशासनेऽजिने श्वेतकम्बले धूतवाससि ॥१३८॥
जपस्थानसमीपे तु शयनं प्रत्यहं भवेत् ।
ब्रह्मचर्यं सदा कुर्यात् कायवाङ्मानसैः शिवे ॥१३९॥
त्रिकालं वा द्विकालं वा स्नानं स्यात् प्रातरेव वा ।
त्रिकालं वा द्विकालं वा सकृद्वा देवतार्चनम् ॥१४०॥
आमध्याह्नं च देवेशि जपं कुर्यात्तथाऽन्वहम् ।
मूलाभिमन्त्ररहितं न पिबेन्न च भक्षयेत् ॥१४१॥
कदलीमधुपर्णेषु पालाशे मध्यवर्जिते ।
हितं मितं च भुञ्जीयाद्देवतायै निवेदितम् ॥१४२॥

---

स्त्वति । तुरिति फलाद्यन्यव्यवच्छेदाय । फलादिकं स्मृत्युक्तमनिषिद्धम् । हविष्यं तु व्रीहिजातस्तण्डुलः स्यादित्याद्यग्रे वक्ष्यति ॥ १३७ ॥

स्थण्डिले लिप्तभूतले ॥ १३८ ॥

प्रत्यहमिति रात्रौ कदाचिदपि जपस्थानादन्यत्र न शयीतेत्युक्तम् । कायादिभिर्ब्रह्मचर्यं कामावहव्यापारवर्जनम् ॥ १३९ ॥

अशक्तितारतम्येन त्रिकालादौ स्नानम् । तदुक्तं योगिनीतन्त्रे—"अशक्तस्तु द्विकालं वा स्नायात् प्रातरथापि वा" इति । प्रातःस्नानस्यावश्यकताद्योतनाय एककालमित्यनुक्त्वा प्रातरेवेत्युक्तम् । अत एवोक्तं बृहद्वामकेश्वरे—"अशक्तस्तु प्रातरेव स्नायादावश्यकं हि तत्" इति । देवतार्चनं कुर्यादिति शेषः ॥ १४० ॥

पुरश्चरणजपे कालप्रमाणमाह—आमध्याह्नमिति । अत्र मध्याह्नपदं दिनमध्यपरम् । अत एव नारदपाञ्चरात्रे—"संपूज्याथ जपं कुर्याद् यावद्वै प्रहरद्वयम्" इति । गौणकालोऽपि योगिनीतन्त्रे उक्तः—"संकटे तु दिनस्यान्तं तृतीयांशं परित्यजेत्" इति । दिनस्यान्तं तृतीयांशं परित्यज्यादावंशद्वये जपं कुर्यादिति तदर्थः । अन्वहमिति जपस्य कालवैषम्यं परिहृतम् । यत्किञ्चिदपि न पिबेन्न भक्षयेच्च ॥ १४१ ॥

मध्यपर्णवर्जिते पलाशपत्रपात्रे निवेदितमेव भुञ्जीयात् ॥ १४२ ॥

एलालवङ्गकर्पूरजातीपत्रफलात्मकम् ।
पञ्चतिक्तं तेन युतं ताम्बूलं निशि भक्षयेत् ॥१४३॥

न वदेदप्रियं मिथ्यां बहुभाषणमेव च ।
अर्कच्छायां स्नुहीछायां करञ्जस्यापि सुन्दरि ॥१४४॥

नैवाक्रमेद्विभीतस्य छायां चापि क्वचिच्छिवे ।
मौनेन भोजनं स्नानमप्रतिग्रह एव च ॥१४५॥

क्षौरमुष्णजलस्नानं गीतवाद्यनिषेवणम् ।
अनृतुस्त्रीसङ्गमं च कञ्चुकोष्णीषधारणम् ॥१४६॥

अन्धकारे च शयनं वर्जयेत् साधकोत्तमः ।
अन्यानपि यथाशास्त्रं नियमानाचरेत् प्रिये ॥१४७॥

नियमांस्तु परित्यज्य य इच्छेन्मन्त्रसाधनम् ।
चण्डभानुं समाश्रित्य शीतलं वाञ्छति ध्रुवम् ॥१४८॥

स्त्रीणां तथा रोगिणां च वृद्धानामपि सुन्दरि ।
यथाशक्त्या भवेदेतन्नियमानां तु धारणम् ॥१४९॥

---

तेन पञ्चतिक्तेन । निशि रात्रौ ॥ १४३ ॥

प्रागकार्यभाषणं जपकाले निषिद्धम् । इदानीम् अप्रियभाषणादि सामान्यतो निषेधति—न वदेदित्यादि । त्रयोदशे सामान्यतो निषिद्धमपि अर्कादिच्छायाक्रमणं पुरश्चरणाङ्गत्वेन प्रकृते निषेधति- अर्केत्यादि । नैवाक्रमेदित्यन्वयः ॥ १४४ ॥

क्वचित् संकटेऽपि । मौनेनेति स्नानेऽप्यन्वेति ॥ १४५ ॥

क्षौरादिकं वर्जयेत् । निषेवणं यत्नतः श्रवणम् ॥ १४६ ॥

यथाशास्त्रं शास्त्रानतिक्रमेण स्मृत्याद्युक्तानपि नियमान् ॥ १४७ ॥

नियमाचरणस्यावश्यकत्वं वक्तुं तदभावे फलाभावं सदृष्टान्तमाह—नियमानिति ॥ १४८ ॥

स्त्र्यादीनां नैवं निर्बन्ध इत्याह—स्त्रीणामिति ॥ १४९ ॥

आदौ गुरुं ब्राह्मणांश्च देवतां प्रणमेद् बुधः ।
संकल्प्य गणनाथार्चां पुण्याहं वाचयेत्तथा ॥१५०॥

गुर्वाद्याज्ञां समादाय जपं कुर्यात्तु भक्तितः ।
विन्यस्य मूलविद्यां तु प्राणायामत्रयं चरेत् ॥१५१॥

सामान्यकलशोदेन पञ्चतिक्तं निवेदयेत् ।
मूलाभिमन्त्रितं तच्च मुखे संस्थाप्य साधकः ॥१५२॥

गृहीत्वा वामपाणौ तु पात्रस्थां जपमालिकाम् ।
कलशोदकविप्रुड्भिः प्रोक्ष्य संप्रार्थयेच्छिवे ॥१५३॥

ॐ माले त्वं महामाये सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥१५४॥

---

एवमादौ कस्मिंश्चिद्दिने क्षौरं गायत्रीजपं च कृत्वा पुरश्चरणारम्भस्य पूर्वदिने भूपरिग्रहादिकं कुर्यादित्युक्तम् । अधुना तदारम्भदिनकृत्यमाह—आदाविति । संकल्प्येति । संकल्प उक्तो योगिनीतन्त्रे—"तिथ्याद्युक्त्वा गोत्रनामद्वयमुल्लिख्य शङ्करि । श्रीविद्यासिद्धि वै द्वारा महात्रिपुरसुन्दरी ॥ प्रीत्यर्थं दिनसंख्यां च जपसंख्यां समुल्लिखन् । पञ्चाङ्गं पुरश्चरणं करिष्य इति वै वदेत् ॥" इति । अर्चां कृत्वेति शेषः ॥ १५०-१५१ ॥

पूजास्थानाद् दूरतो जपस्थाने सति सामान्यकलशं संपूज्य देवतायै निवेदयेत् । तत् पञ्चतिक्तम् । अत्र पूजासमीपे एव उपस्थाप्य पूजाङ्गसामान्यकलशोदकेनैव पञ्चतिक्तनिवेदनं ज्ञेयम् । द्वित्रिकालपूजाकरणपक्षे द्वारपूजाद्यावाहनान्तम् उत्तरपूजा च सकृद् उपचाराद्यावृत्तिर्नैमित्तिकद्वयसंपातवत् । तदुक्तं योगिनीतन्त्रे—"द्वित्रिकालार्चने देवि उपचारान् तथावृतिम् । आवर्तयेद्धोममपि चान्यत् सर्वं सकृद् भवेत् ॥" इति ॥ १५२ ॥

कस्मिंश्चित्पात्रे संस्थापितां जपमालिकाम् । कलशः सामान्यकलशः । विप्रुड्भिः बिन्दुभिः । मालिकां प्रोक्ष्य प्रार्थयेत् ॥ १५३ ॥

प्रार्थने मन्त्रमाह—ओमिति । त्वं सिद्धिदा भवेत्यन्वयः । महामाया पराशक्तिः । अत एव सर्वशक्तिस्वरूपिणी । चतुर्वर्गः धर्मार्थकाममोक्षाः ॥ १५४ ॥

सम्पूज्य मन्त्रयोगेन गृहीत्वा दक्षहस्तके।
मायासिध्यै च हृदयं पञ्चार्णः पूजने मनुः ॥१५५॥
अविघ्नं कुरु पश्चाद्वै मे माले च शिरस्तथा।
गमाद्यं ग्रहणे चैषो रुद्रवर्णः स्मृतो मनुः ॥१५६॥
मूर्ध्नि संस्थाप्य मालां तु मातृशृङ्गाटके बिले।
तन्मयीं मूलविद्यां तु मुखे हृदि पराम्बिकाम् ॥१५७॥
तद्वाच्यां तन्मयं नाथमाज्ञायां तु विभावयेत्।
प्रोक्तानां तु स्वरूपैक्यं देवतां हृदि भावयेत् ॥१५८॥
नत्वा मालां समादाय हृदयस्य समीपतः।
चिन्तयन् देवतां मन्त्रं तद्वर्णान् वा जपेच्छिवे ॥१५९॥

---

मन्त्रयोगेन वक्ष्यमाणमन्त्रपाठपूर्वकं मालां संपूज्य मालां दक्षहस्ते गृहीत्वा। पूजामन्त्रमाह—मायेति। माया ह्रीं। सिध्यै स्वरूपम्। हृदयं नमः॥ १५५॥

दक्षहस्ते मालाग्रहणे मन्त्रमाह अविघ्नमिति। पश्चाद्वै इति त्यक्त्वा अविघ्नमित्यादि माले इत्यन्तं स्वरूपम्। शिरः स्वाहा। गं इति सर्वाद्यं कुर्यात्। रुद्र एकादश॥ १५६॥

ततो मालां मूर्ध्नि संस्थाप्य। मातृशृङ्गाटकं मातृकात्रिकोणम्। बिले ब्रह्मरन्ध्रे। तन्मयीं मातृकामयीम्। मूलविद्यां मुखे हृदि तद्वाच्यां देवतां भावयेदित्यन्वयः॥१५७॥

तद्वाच्या मूलविद्यावाच्या पराम्बिकादेवता। तन्मयं देवतामयम्। नाथं गुरुम्। आज्ञायां भ्रूमध्यगताज्ञाचक्रे। प्रोक्तानां मातृकामूलविद्यादेवतागुरूणां स्वरूपं वर्णमयं ध्यानप्रोक्तं च तदैक्यं तदैक्यरूपम्। देवतां स्वात्मशक्तिम्। एतदुक्तं योगिनीतन्त्रे—"तेषामैक्यात्मिकां स्वात्मशक्तिं हृदि विभावयन्" इति॥ १५८॥

देवतां भावयन् नत्वा दक्षहस्तेन मालां समादाय हृदयसमीपतः कृत्वा। देवतां देवतामूर्तिम्, मन्त्रं मन्त्रार्थम्, तद्वर्णान् मन्त्रवर्णान् वा विचिन्तयन् जपेत्॥१५९॥

मनश्चाञ्चल्यरहितो भक्तिभावेन संयुतः ।
भ्रूमध्यं नासिकाग्रं वा पश्यन्नृजुकलेवरः ॥१६०॥
अर्धमीलितनेत्रस्तु चाञ्चल्यादिविवर्जितः ।
आरम्भः प्रणवाद्देवि समाप्तिः प्रणवे भवेत् ॥१६१॥
मन्त्रोच्चारो नास्ति शीघ्रं नातिमन्दं न चास्फुटम् ।
उच्चरेन्मणिमालेव नादैक्यं व्यक्तवर्णकम् ॥१६२॥
धारायां नैव विच्छेदं कुर्यान्मन्त्री कदाचन ।
अन्ते प्रणम्य तेनैव मूर्ध्नि संस्थाप्य प्रार्थयेत् ॥१६३॥
प्राणानायम्य ऋष्यादि पूजयित्वा समर्पयेत् ।
गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ॥१६४॥

---

भक्तिः प्रीतिः । भावः श्रद्धा । ऋजुकलेवरः अवक्रदेहः ॥१६०॥

शरीरे चाञ्चल्यशैथिल्यवर्जितः प्रणवोच्चारपूर्वकं जपारम्भः समाप्तिरपि । प्रणवे जपारम्भे समाप्तौ च प्रणवमुच्चरेदिति भावः ॥१६१॥

अस्फुटं लुप्तवर्णम् । मणिमालावदुच्चरेत् । नादस्याधारोद्भूतस्य ऐक्यं सर्वमन्त्रवर्णेष्वनुस्यूतता यस्य । व्यक्ता व्यक्तिमागता वर्णा यस्य मन्त्रस्य । एवं मन्त्रमुच्चरेत् । आधारनाद एवाविच्छिन्नस्तत्तद्वर्णात्मना परिणमन्मध्ये केवलरूपेण स्थित इति भावयन्नुच्चरेदिति भावः । एतदुक्तं वरिवस्यारहस्ये—"आधारोत्थितनादो गुण इव परिभाति वर्णमध्यगतः" इति ॥१६२॥

धाराविच्छेदं मन्त्रावृत्तिमध्ये विरामम् । तेन पूर्वोक्तमन्त्रेण मालां संस्थाप्य ॐमाले इत्यादि प्रार्थयेत् ॥१६३॥

ऋष्यादि पूजयित्वेति जपं समाचरेदन्ते करादौ न्यस्य पूजयेदिति पञ्चदशोक्तं तु करन्यासादिपूजान्तं नित्यजपे । प्रकृते तु ऋष्यादिन्यासादिपूजान्तं कृत्वेत्यर्थः । तत्र समर्पणमन्त्रमाह—गुह्येति । गुह्यानां गोप्यानां देवतार्पितकर्मणाम्, अतिगुह्यानां ज्ञानसाधनानां शमादीनाम् । एतदुक्तं त्रिपुरारहस्ये—"एवं यत्कर्म सम्प्रग्वै देवतायै समर्पितम् । तद् गुह्यं जायते तस्मादतिगुह्यं विमुक्तिदम् ॥" इति । तयोर्गोप्त्री गोपनकर्त्री । देवतार्पितकर्मणां तत्फलभूतानां शमादिज्ञानसाधनानां रक्षणकर्त्रीति भावः ॥ १६४ ॥

सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ।
चुलकोदकमेवं वै तस्या हस्ते समर्पयेत् ॥१६५॥
मालां पूर्ववदभ्यर्चेत् प्रत्यहं चैवमेव तु ।
मालाजपविधिं वक्ष्ये शृणु देवि समाहिता ॥१६६॥
मध्यमामध्यपर्वस्थामङ्गुष्ठेनैकबीजकम् ।
स्पृशन्नितरमस्पृष्ट्वा प्रत्येकं प्रजपेद् बुधः ॥१६७॥
पूर्वबीजस्पर्शने तु विघ्नः स्याद्धि पदे पदे ।
उत्तरस्पर्शनाद्देवि जपो निष्फलतामियात् ॥१६८॥
सशब्दया मालया तु क्षयः स्यादायुषः शिवे ।
एतज्ज्ञात्वा जपं कुर्यादन्यथा निष्फलं भवेत् ॥१६९॥
जपभेदं शृणु शिवे सावधानेन चेतसा ।
उच्चोपांशू जिह्वकश्च मानसश्च चतुर्विधः ॥१७०॥

---

सिद्धिर्जपफलम् । चुलके सामान्यकलशोदकं गृहीत्वा एवमुक्तमन्त्रपठनेन तस्याः देव्याः हस्ते वामहस्ते ध्यायन् जप्त्वा वामकरे इति, दशमे जपसमर्पणस्य वामहस्ते उक्तत्वात् ॥ १६५ ॥

पूर्ववत् ह्रीं सिद्ध्यै नम इति गन्धादिभिः, अर्चेत् अर्चयेत् । ततो जपमालां रहसि स्थापयेत् "पश्चाज्जपस्य मालां तु रहस्ये विनिधापयेत् । अन्यथा वै जपफलं भवेद्रक्षोगणैर्हृतम् ॥" इति योगिनीतन्त्रोक्तेः । एवमेव प्रत्यहं जपविधिः ॥ १६६ ॥

मध्यपर्वस्थां मालां कृत्वेति शेषः । एकबीजकम् एकमणिम् । इतरं मणिमङ्गुष्ठेनास्पृष्ट्वा । एवं प्रत्येकमेकैकशः सर्वमणिं स्पृशन् जपेत् ॥ १६७ ।

एवमङ्गुष्ठेन मध्यमामध्यपर्वस्थमालाया एकैकमन्त्रावृत्तेरादावन्ते वैकैकमणीनन्तः परिवर्तयेत्, "मणिमालास्वेवमेव मणीनेकैकशः शिवे । मन्त्रादौ वा तथान्ते वा चान्तर्विपरिवर्तयेत् ॥" इति योगिनीतन्त्रोक्तेः । इतरमस्पृष्ट्वेत्यत्रेतरस्पर्शे दोषमाह—पूर्वेति । पूर्वबीजं परिवर्तितमणिम् उत्तरबीजस्पर्शने । १६८ ॥

धूननेन वा मणिशैथिल्येन वा शब्दयुतमालया । एतत् पूर्वादिमणिस्पर्शनादिफलम् । निष्फलं जपकरणम् ॥ १६९ ॥

उच्चः, उपांशुः, जिह्वकः, मानसश्चेति जपश्चतुर्विधः ॥ १७० ॥

उच्चः स्पष्टतयोच्चारादुपांशुश्चोष्ठसंस्थितः ।
जिह्वको जिह्वयोच्चारान्मानसो हृदि संस्थितः ॥१७१॥
क्रूरकर्मातिरिक्ते तु वाचिकं नैव सिद्धिदम् ।
उपांशुस्तु यथासंख्यः शतधा जिह्वके फलम् ॥१७२॥
मानसेऽनन्तगुणितं नियमस्तत्र नैव तु ।
गच्छन् शयान आसीनो भुक्तो वान्यत्र कुत्रचित् ॥१७३॥
अस्नातश्चापवित्रश्च न दोषस्तत्र विद्यते ।
अथासनानि वक्ष्यामि शृणु तत्त्वेन सुन्दरि ॥१७४॥
हरिणव्याघ्रयोश्चर्म कुशवेत्रभवं कटम् ।
कार्पासपट्टौर्णवस्त्रमच्छिद्रास्फुटितं भवेत् ॥१७५॥

---

तेषां लक्षणमाह—उच्च इति । ओष्ठसंस्थितः ओष्ठचलनमात्रेणोच्चरितः । हृदि मनसि संस्थितः उल्लिखितः ॥ १७१ ॥

क्रूरकर्म मारणविद्वेषणादि । वाचिकं जपकरणम् । यथासंख्यः यथोक्तफलः ॥ १७२ ॥

तत्र मानसजपे । नियमाभावमेवाह—गच्छन्नित्यादि । अन्यत्र कुत्रचित् । यथोक्तस्थानातिरिक्ते स्थित इति शेषः ॥ १७३ ॥

अपवित्र उच्छिष्टमुखादिः । गच्छन् मानसं जपं यः कुर्यादिति शेषः । तच्च तथा जपे दोषो न विद्यत इत्यन्वयः । एतच्च पुरश्चरणजपातिरिक्ते सार्वकालजपादौ चेति ज्ञेयम्, "मानसे नियमो नास्ति त्वन्यत्र तु पुरस्कृतेः" इति योगिनीतन्त्रोक्तेः । "सार्वकालं जपेद्विद्यां मनसा यस्तु केवलाम् । नियतो वाप्यनियतोऽप्यकुर्वन्नित्यकृत्यकम् ॥ तथापि तस्य शुद्धस्य तरसा सा प्रसीदति ।" इति बृहद्वामकेश्वरोक्तेः, "अपवित्रः पवित्रो वा मनसा यदि संजपेत्" इति रहस्यार्णवाच्च । आसनानि वक्तुमाह—अथेति ॥ १७४ ॥

कुशभवं वेत्रभवं वा कटम् । कार्पासवस्त्रं पट्टवस्त्रम् और्णवस्त्रं वा । एतत्त्रिविधमप्यच्छिद्रमस्फुटितम् । अत्र विशेषो योगिनीतन्त्रे—"छिद्रयुक्तानि दग्धानि जीर्णानि स्फुटितानि च । परकीयान्यासनानि वर्जयेज्जपकर्मणि ॥" इति ॥ १७५ ॥

त्रयं वा द्वयमेकं वा भिन्नजातीयकं स्मृतम् ।
अत्रासीनः स्वस्तिकेन पद्माख्येनासनेन वा ॥१७६॥
योन्यासनेन सिद्धेन कपालासनकेन वा ।
एतेषां लक्षणं देवि संक्षिप्यैव ब्रवीमि ते ॥१७७॥
व्यत्यस्य पादयुगलं जान्वोरन्तरे क्षिपेत् ।
ईषत्स्पृष्टाङ्गुष्ठकं तु स्वस्तिकासनमीरितम् ॥१७८॥
वामदक्षिणयोरूर्वोर्मूलयोर्विन्यसेत् क्रमात् ।
दक्षवामाङ्घ्रियुगलं तस्योपरि करद्वयम् ॥१७९॥
सरलाङ्गुलमुत्तानं चैवं पद्मासनं भवेत् ।
वामजानुमधः कृत्वा तदूर्ध्वं दक्षजानुकम् ॥१८०॥
पार्श्वद्वये भूगताङ्घ्रियुगलं करयुग्मतः ।
अवष्टभ्याम्बरस्थे तु योन्यासनमुदाहृतम् ॥१८१॥

---

प्रोक्ताजिनकटवस्त्रात्मकत्रिविधासने त्रयं द्वयं एकं वा । तच्च भिन्नजातीयम्, न तु वस्त्रमेव त्रिविधम्, अजिनमेव वा द्विविधम् । एतत् क्रमोऽपि तत्रैव—"वस्त्राधस्त्वजिनं तस्याप्यधः कुर्यात् कटं बुधः" इति । अत्र निरुक्तासने स्वस्तिकाद्यङ्गबन्धरूपासनेनासीनः ॥ १७६ ॥

एतेषां स्वस्तिकादीनाम् ॥ १७७ ॥

पादयुगलं चरणद्वयम् । व्यत्यस्य दक्षजानूर्वन्तरे मध्ये वामचरणम् । एवं वामजानूर्वन्तरे दक्षचरणं क्षिपेत् । तच्चरणद्वयाङ्गुष्ठम् ईषत्स्पृष्टम् ऊर्ध्वं बहिर्निगतम् ॥ १७८ ॥

वामोरुमूले दक्षिणाङ्घ्रिं दक्षिणोरुमूले वामाङ्घ्रिं विन्यसेत् । तस्योपरि अङ्घ्रियुगलोपरि करद्वयं विन्यसेत् ॥ १७९ ॥

सरलाङ्गुलम् उत्तानम् । ऊर्ध्वमुखतलं करद्वयम् । तदूर्ध्वं वामजानूर्ध्वे दक्षजानुकं कृत्वा ॥ १८० ॥

स्फिचोः पार्श्वद्वये । भूमौ गतं स्थितमङ्घ्रियुगलं कृत्वा । तदङ्घ्रियुगलं कराभ्यामवष्टभ्य आक्रम्य । अम्बरस्थे तु भूमौ गुदमनासज्याकाशस्थे सति ॥ १८१ ॥

योनिस्थाने वामगुल्फं लिङ्गे दक्षिणगुल्फकम् ।
पश्यन् भ्रुवोरन्तरालमिति सिद्धासनं स्मृतम् ॥१८२॥
भुवि कृत्वा मस्तकं तु चरणद्वयमूर्ध्वतः ।
अचलः स्थिरदृष्टिश्च कपालासनमीरितम् ॥१८३॥
इत्येवं कथितं देवि आसनानां तु लक्षणम् ।
स्वस्तिके तु यथोक्तं स्यात् पद्माख्येऽष्टगुणं स्मृतम् ॥१८४॥
योन्यासने शतगुणं सहस्रं सिद्धनामके ।
कपालासनकेऽनन्तं फलं देवि प्रकीर्तितम् ॥१८५॥
उद्गारजृम्भाछिक्कानां जपमध्ये तु संभवे ।
जपेत् चतुस्तारकं तु प्राणायाममथापि वा ॥१८६॥
निद्राऽपानोद्गारयोगे तन्मालां तु परित्यजेत् ।
आचम्य विन्यसेदङ्गं मालास्रंसे तु निद्रया ॥१८७॥

---

योनिस्थानं वृषणगुदयोरन्तरालम् । तस्मिन् वामगुल्फं कृत्वा । एवं लिङ्गे लिङ्गस्थाने दक्षिणगुल्फकम् । अत्र गुल्फपदं पार्ष्णिपरम्, तत्र गुल्फकरणासंभवात् । "वामेतरं पार्ष्णियुगं योनौ लिङ्गे च विन्यसेत्" इति योगरत्नावलिवचनाच्च ॥ १८२ ॥

ऊर्ध्वतः आकाशाभिमुखतः ॥ १८३ ॥

आसनलक्षणमुपसंहरति– इत्येवमिति । अत्र सर्वासने ऋजुकायश्चाञ्चल्यरहितो भवेत् । जपमध्ये आसनबन्धत्यागं च न कुर्यात् । तदुक्तं योगिनीतन्त्रे--"जपमध्ये त्वासनानां बन्धं नैव परित्यजेत् । वक्राङ्गं चञ्चलाङ्गं च न कुर्यात् सर्वथा शिवे ॥" इति । यत्तु अचल इति कपालासने उक्तम् तत्कपालासने अनभ्यस्तस्य चाञ्चल्यसंभवात् सम्यगभ्यासेनाचलो भवेदित्यर्थकम् । एवं स्वस्तिकादावपि । तेषां फलमाह-- स्वस्तिक इति । यथोक्तं फलमित्याद्यन्वयः ॥ १८४ ॥

सिद्ध इति नामवत्यासने। अत्र पद्मासने योन्यासने च वर्णमालाजप एव, हस्तयोरासने उपयुक्तत्वादन्यमालासंभवात् ॥ १८५ ॥

चतुस्तारकं ॐ ऐं ह्रीं श्रीं । अथवा प्राणायामं कुर्यादिति विकल्पः ॥ १८६ ॥

निद्रायोगे । अपानोद्गारः अपानवायुः, तद्योगे आकस्मिकप्राप्तौ । जप्त्वाऽवशिष्ट-

जपेदष्टोत्तरशतं तथा त्रोटे सहस्रकम् ।
आजानुकूर्परान्तं तु प्रक्षाल्य करपादयोः ॥१८८॥
कृत्वाचामनकं देवि त्रिधा प्राणस्य धारणम् ।
मूत्रोत्सर्गे मलोत्सर्गे स्नानं चापि विधीयते ॥१८९॥
विस्मृतौ जपसंख्यायाः पुनरारम्भ एव च ।
नित्यं समानसंख्याकं जपेन्मन्त्रं महेश्वरि ॥१९०॥
स्तोत्रपाठादिना देवि दिनशेषं नयेत्ततः ।
आमध्याह्नजपात् पश्चाद् रात्रौ स्याद् भोजनं शिवे ॥१९१॥
व्रीहिजातास्तण्डुलाः स्युर्यवाः कृष्णतिलास्तथा ।
मुद्गा नीवारकाश्चापि षष्टिकाश्च महेश्वरि ॥१९२॥

---

मालां परित्यजेत् । तत्रैव विरमेत् । मालासमाप्तिं न कुर्यादित्यर्थः । अङ्गं विन्यसेत् अङ्गन्यासं कुर्यात् ॥ १८७ ॥

निद्रया हस्तान्मालायाः स्रंसे च्युतौ। अष्टोत्तरशतं जपेदिति सम्बन्धः । जपमध्ये मालात्रोटे माला त्रुटिता चेत् तथा अष्टोत्तरसहस्रं जपेत् । मूत्रोत्सर्गे विशेषमाह— आजान्विति । मालां समाप्य मूत्रोत्सर्गं कृत्वा करयोः कूर्परान्तं पादयोराजानु प्रक्षाल्य ॥ १८८ ॥

त्रिधा प्राणस्य धारणं प्राणायामं कुर्यादिति शेषः । मलोत्सर्गे स्नानं चेति हस्तपादप्रक्षालनादि प्राणायामान्तम् ॥ १८९ ॥

जपसंख्याया यावद्विस्मृतिः तावत्संख्याकजपस्य पुनरारम्भकरणम् । लक्षसंख्याकपुरश्चरणं यावद्भिर्दिनैः कर्तव्यं तावद्दिनेषु तां संख्यां साम्येन विभज्य कर्तव्यमित्याह —नित्यमिति । तथाहि—लक्षसंख्यजपो यदि विंशतिभिर्दिवसैः कर्तव्यस्तदा लक्षसंख्याया विंशतिभिर्भागे सहस्रपञ्चकमिति प्रत्यहं पञ्चसहस्रजपः कार्यः । मासेन जपे कर्तव्ये तु दशमन्त्रसंख्या शिष्यते । आद्येऽन्त्ये वा दिने तावदधिकजपः कर्तव्यः । तदुक्तं योगिनीतन्त्रे—"आद्ये दिने तथाऽन्त्ये वा शेषसंख्यं जपं चरेत्" इति ॥ १९१ ॥

आमध्याह्नजपात् पश्चात् स्तोत्रपाठादिना दिनशेषं नयेत् । आदिना माहात्म्यादेर्वाचनेन । ततः रात्रावित्यन्वयः । प्रागुक्तहविष्यपदार्थान् विशिष्याह —व्रीहीति । व्रीहिजाता इति कोद्रवादितण्डुलव्यावर्तनाय । नीवाराः षष्टिकाश्च व्रीहिविशेषाः ॥१९२॥

सैन्धवं चापि सामुद्रं लवणं द्विविधं स्मृतम् ।
गव्यं घृतं पयश्चैव दध्यनिःसृतसारकम् ॥१९३॥
ऐक्षवं सर्वमेव स्याद् गुडवर्जं महेश्वरि ।
फलं तु नारिकेलं स्यात् कदली लवली तथा ॥१९४॥
तिन्तिण्याम्रफलं तद्वद् दाडिमस्य फलं तथा ।
आर्द्रकं नागरं धात्री तथैव च हरीतकी ॥१९५॥
पटोलं वास्तुशाकं च कन्दं स्यात्तु पवित्रकम् ।
निवेदितं तथान्यद्वा चार्थप्राप्तं न संत्यजेत् ॥१९६॥
भुक्त्वैव तु जपस्थानसमीपे शयनं चरेत् ।
मूलेन सप्ताभिमन्त्र्य प्रार्थयेद्देवतागणम् ॥१९७॥
अत्र देवास्त्रयस्त्रिंशदाशापाला मरुद्गणाः ।
रक्षन्तु मां मन्त्रसिध्यै यतन्तं विबुधेश्वराः ॥१९८॥
महाविद्यासाधकस्य भूता वेतालकादयः ।
विघ्नं कुर्वन्ति सततं तेभ्यो रक्षतु मां शिवः ॥१९९॥

---

गव्यमिति दध्यन्तेष्वन्वेति । अनिःसृतसारकमिति योग्यत्वात् पयसि दध्नि च योज्यम् । सारस्तत्र घृतांशः ॥ १९३ ॥

लवली कर्कटी । हरफारेवडीति भाषया प्रसिद्धमित्यन्ये ॥ १९४ ॥

नागरं शुण्ठी । धात्री आमलकम् ॥ १९५ ॥

पटोलं परवर । वास्तुशाकं बथुआ इति काशीभाषया प्रसिद्धम् । कन्दं पवित्रकं शास्त्रे पवित्रत्वेन परिगणितं सूरणादि । उक्तादन्यदपि पवित्रं देवतायै निवेदितं फलादिकम् । अर्थात् अनिच्छया प्राप्तमपि न संत्यजेत् ॥ १९६ ॥

भुक्त्वैवेत्येवकारेण रात्रावप्यभुक्त्वा शयननिषेधः । शयनं मूलेन सप्तधाऽभिमन्त्र्य प्रार्थयेत् ॥ १९७ ॥

प्रार्थने मन्त्रानाह— अत्रेत्यादि । अत्र जपस्थाने यतन्तं माम् ॥ १९८ ॥

तेभ्यो भूतादिभ्यः ॥ १९९ ॥

भैरवा मातृसहिताः कोटिशः संचरन्ति वै ।
सिद्धिनाशाय लोकस्य तेभ्यो रक्षतु शङ्करः ॥२००॥
सुप्तं सर्पादिरूपेण साधकं भीषयन्ति वै ।
सिद्धिलोपाय देवाद्याः शूलपाणिस्ततोऽवतु ॥२०१॥
अनन्तमूर्ध्नि देव्येषा धरा यस्मात् प्रतिष्ठिता ।
तेन सत्येनावतु मामनन्तः सर्वरक्षकः ॥२०२॥
नमः स्वप्नाधिपतये रुद्रायामिततेजसे ।
इष्टार्थान् सम्यगाचक्ष्व नाशयानिष्टसूचकान् ॥२०३॥
रुद्रमन्त्रं त्रिधा जप्त्वा विन्यस्याङ्गं तु सुस्वपेत् ।
तारश्च हृदयं स्वप्नाधि वै पत च ये ततः ॥२०४॥
रुद्राय हृदयं मूर्ध्ना नृपवर्णः स्मृतो मनुः ।
साधकस्य तु सिद्धेर्वै चिह्नानि शृणु शङ्करि ॥२०५॥
आश्चर्यदर्शनं चित्तप्रसादोऽल्पाशनं तथा ।
अल्पनिद्रा मनोल्लासः सिद्धिचिह्नानि शङ्करि ॥२०६॥

---

तेभ्यो भैरवादिभ्यः ॥ २०० ॥

जपसिद्धिलोपकरणाय । ततः देवादिभ्यः ॥ २०१ ॥

अनन्तः शेषः ॥ २०२ ॥

अमितम् अपरिच्छिन्नं तेजो यस्य । इष्टार्थान् सिद्धिचिह्नानि आचक्ष्व प्रकाशय ॥ २०३ ॥

रुद्रमन्त्रमेवाह—तार इति । तारः ॐ । हृदयं नमः । वै । च । ततः ॥ २०४ ॥

इति त्यक्त्वा स्वप्नेत्यादि रुद्रायेत्यन्तं स्वरूपम् । हृदयं नमः । मूर्धा स्वाहा । चिह्नानि जाग्रति स्वप्ने च ज्ञेयानि ॥ २०५ ॥

आश्चर्यम् अकस्मात् गन्धर्वनगरादि । प्रसादः प्रसन्नता । उल्लासो हर्षयुक्तता ॥ २०६ ॥

अथ स्वप्नान् प्रवक्ष्यामि शुभांश्चैव तथेतरान् ।
उपास्य देवतारूपं प्रसादं स्फटिकोपमम् ॥२०७॥
गुरुं प्रियजनं पूर्णचन्द्रं सूर्यं सरित्पतिम् ।
पूर्णां नदीं तटाकं च प्रफुल्लं कमलाकरम् ॥२०८॥
यन्त्रराजं महादेवलिङ्गं हैरण्यपर्वतम् ।
दृष्ट्वा सिद्धिस्तथा नौकातरणं स्वस्य वै जयः ॥२०९॥
ज्वलदग्निं हंसचक्रवाकसारसबर्हिणः ।
अश्वयुग्रथमध्यस्थं श्वेतच्छत्रादिभूषणम् ॥२१०॥
दीपपङ्क्तिं श्वेतमाल्यं दिव्यस्त्रीणां कदम्बकम् ।
फुल्लवृक्षं चाममांसं खे यानमभयं तथा ॥२११॥
श्वेताश्ववृषभौ मत्तवारणं तेषु रोहणम् ।
विमानगमनं मद्यपानं मांसस्य भक्षणम् ॥२१२॥
विष्टालेपं रक्तलेपं दधिलेपं च भक्षणम् ।
राज्याभिषेकं रत्नादिभूषणं चैवमादिकम् ॥२१३॥

---

इतरान् अशुभान् ॥ २०७ ॥

सरित्पतिं समुद्रम् । चकारात् पूर्णत्वं तटाकेऽपि योज्यम् । शून्यतटाकादे निन्दितत्वात् ॥ २०८ ॥

स्वस्येति तरणे जये च योज्यम् ॥ २०९ ॥

मध्यस्थं स्वम् श्वेतच्छत्रादीत्यादिना चामरादिराजचिह्नानि । भूषणं कुण्डलादि ॥ २१० ॥

कदम्बं समूहम् । फुल्लवृक्षं पुष्पितवृक्षम् । आममांसमपक्वमांसम् । अभयमभीतिम् ॥ २११ ॥

तेषु श्वेताश्ववृषभयोर्मत्तवारणे च विमाने स्थित्वा गमनम् ॥ २१२ ॥

दधिभक्षणम् एवमादिकं हर्षहेतुकरमित्यन्वयः ॥ २१३ ॥

हर्षहेतुकरं चित्रं स्वप्नं विद्याच्छुभावहम् ।
एतन्निवेदनविधिं शृणु वक्ष्यामि सुन्दरि ॥२१४॥
प्रातःस्नानं च सन्ध्यादि विधाय गुरुसन्निधौ ।
तत्समानसमीपे वा देवतानिकटेऽथवा ॥२१५॥
नत्वा कृताञ्जलिः सर्वं वाच्यं दृष्टवदेव हि ।
शुभस्वप्ने पुनः स्वापो न कर्तव्यः कदाचन ॥२१६॥
दर्शने चाथाशुभस्य शान्तिं वक्ष्यामि संशृणु ।
मन्त्रराजं पठित्वा तु नृसिंहं प्रार्थ्य वै जपेत् ॥२१७॥
नृसिंहबीजं देवेशि शुचिर्भूतो ह्युदङ्मुखः ।
पृथ्वीस्पर्शयुता ज्वाला निन्दाढ्येति समीरितम् ॥२१८॥
नृसिंहाय नमो दोषान् जहि दुःस्वप्नजान् मम ।
यतः स्वप्नाधिपस्त्वं वै सर्वेषां फलदो मतः ॥२१९॥
अथाशुभांस्तु स्वप्नान् वै प्रवक्ष्यामि शृणु प्रिये ।
काकगृध्रोलूकघूकान् खरमार्जारमाहिषान् ॥२२०॥

---

हर्षहेतुकरं प्रियवचनश्रवणादि । चित्रं आश्चर्यम् चतुर्दन्तहस्त्यादि । एतस्य स्वप्नस्य निवेदनविधिम् ॥ २१४ ॥

तदेवाह—प्रातरिति । आदिना पूजान्तं गुरुतत्समदेवतासु पूर्वाभावे उत्तरं ज्ञेयम् "पूर्वाभावे परत्र तु" इति योगिनीतन्त्रात् । सन्निधौ गत्वेति शेषः ॥ २१५ ॥

दृष्टवदेव यथादृष्टमेव नान्यथा । शुभस्वप्ने दृष्टे सति ॥ २१६ ॥

अशुभस्य स्वप्नस्य मन्त्रराजम् ऊर्ध्वाम्नायोक्तं द्वात्रिंशदक्षरं मन्त्रं नृसिंहबीजं जपेदित्यन्वयः ॥ २१७ ॥

तद्बीजमाह—पृथ्वीति । पृथ्वी क्ष स्पर्श र । ज्वाला औ । क्ष्रौं इति । बीजं समीरितम् ॥ २१८ ॥

प्रार्थनमन्त्रमाह—नृसिंहायेति ॥ २१९ ॥

घूकान् पश्यन्निति व्यवहितेनान्वयः ॥ २२० ॥

चण्डालं कृष्णपुरुषं स्त्रियं वा विकटां तथा ।
शून्यगर्तं शुष्कवृक्षनदीपुष्करवापिकाः ॥२२१॥
तैलाभ्यङ्गं कण्टकयुग्वृक्षं प्रासादभञ्जनम् ।
उन्मत्ततां नग्नतां च भीततां स्वात्मनस्तथा ॥२२२॥
संकटेन समायोगं पश्यन् शान्तिं समाचरेत् ।
वर्षेण च तदर्धेन तदर्धेन च मासतः ॥२२३॥
आद्ययामादितो ज्ञेयं फलं यामचतुष्टये ।
एष तेऽभिहितो देवि मन्त्रस्य साधने विधिः ॥२२४॥

इति श्रीपरमानन्दतन्त्रे पुरश्चरणविधिर्नामैकविंशोल्लासः ॥२१॥

---

कृष्णवर्णं पुरुषम् । विकटां विरूपाम् । शुष्काः वृक्षनदीपुष्करवापिकाः ॥२२१॥

स्वस्य तैलाभ्यङ्गम् । उन्मत्ततादौ स्वात्मन इति योज्यम् ॥ २२२ ॥

एवं स्वात्मनः संकटेन समायोगमिति । काकादिकं पश्यन् दुःस्वप्नशान्तिं समाचरेदिति सम्बन्धः । स्वप्नफले कालनियममाह—वर्षेणेति । तदर्धेन मासषट्केण । तदर्धेन मासत्रयेण ॥ २२३ ॥

रात्रौ यामचतुष्टये आद्ययामादितः फलं ज्ञेयम् । रात्रावाद्ययामे दृष्टस्वप्नस्य वर्षेण फलं भवतीत्यादि । उपसंहरति—एष इति ॥ २२४ ॥

सौभाग्यानन्दसंदोहे भारुपद्यबोधकः ।
परमानन्दटिप्पण्यामुल्लासस्त्वेकविंशतिः ॥ २१ ॥



# द्वाविंशोल्लासः

श्रीदेव्युवाच—

भैरव श्रोतुमिच्छामि अशक्तानां तु तद्विधिम् ।
कथं तैस्तु प्रकर्तव्यं तेषां सिद्धिर्यथा भवेत् ॥१॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि सावधानेन चेतसा ।
रहस्यातिरहस्यं वै नाभक्तेषु प्रकाशय ॥२॥
तद्विधानं बहुविधं तन्त्रेषु कथितं शिवे ।
संक्षेपतः प्रवक्ष्यामि सारभूतं महेश्वरि ॥३॥
मासमात्रं त्रिकालं तु पूर्णिमातः समारभेत् ।
श्रीचक्रराजं संपूज्य दूर्वाश्वत्थवटाङ्कुरैः ॥४॥

---

अशक्तानां पुरश्चरणप्रकारं प्रष्टुं श्रीदेव्युवाचेति । तद्विधिं पुरश्चरणविधिम् । तैः अशक्तैः । तेषामशक्तानां सिद्धिर्यथा भवेत्तथा वदेति शेषः ॥ १ ॥

उत्तरं भैरव उवाचेति । अतिरहस्यत्वेऽपि भक्तेषु प्रकटनीयमेवेत्याशयेनाह—अभक्तेष्विति । केवलकामिष्वित्यर्थः ॥ २ ॥

तद्विधानम् अशक्तपुरश्चरणविधानम् । तेषु विधिषु सारभूतं सुलभेन फल-प्रापकम् ॥ ३ ॥

तदेवाह—मासमात्रमित्यादि । पूर्णिमातः पूर्णिमायां पुरश्चरणं समारभेत् । पूर्णिमादिमासमात्रं त्रिकालं संपूज्य ॥ ४ ॥

त्रिकालं पूजनान्ते तु सहस्रं प्रजपेन्मनुम् ।
न्यूनायुतं लक्षजपं कुर्यादेवं महेश्वरि ॥५॥
चतुर्दश्यां सितायां तु समाप्तिः स्यान्महेश्वरि ।
अन्ते पूर्वोक्तविधिना होमाद्यङ्गं निर्वर्तयेत् ॥६॥
एवं करोति यो भक्त्या प्रसन्ना तस्य देवता ।
अथ वाश्विनशुद्धे तु आरभ्य प्रतिपत्तिथिम् ॥७॥
पूर्णिमान्तं जपेदेवं तेनाप्युक्तफलं भवेत् ।
अथवा नवरात्र्यां तु प्रातः श्रीचक्रराजकम् ॥८॥
संपूज्य तु यथाशक्त्या जपेद् वेदायुतं मनुम् ।
तेनापि तत्फलं देवि स्यादशक्तस्य शङ्करि ॥९॥

---

त्रिकालं पूजनान्ते प्रत्येकं सहस्रं मनुं प्रजपेत् । एवं मासेन एकायुतन्यूनं लक्षजपं नवतिसहस्रजपं कुर्यात् ॥ ५ ॥

सितायां शुक्लपक्षसम्बन्धिन्यां चतुर्दश्यां जपसमाप्तिः स्यात् । एतेन यस्मिन् मासि पूर्णिमादि चतुर्दश्यन्तं त्रिंशद्दिनं भवेत्तस्मिन्नेव कुर्यात् । अन्यथा पूर्णिमायामारम्भश्चतुर्दश्यां समाप्तिर्नवतिसहस्रजप इत्याद्यसम्भवात् । अन्ते जपान्ते पूर्वोक्तविधिना प्रत्यहं समाप्तौ वा प्रोक्तद्रव्यादिना ॥ ६ ॥

एवमुक्तरीत्या यः पुरश्चरणं करोति । अत्र नित्यपूजनं कृत्वा पुरश्चरणाङ्गपूजनं कार्यम्, "नित्यक्रियां समाप्यैव पुरश्चरणकं चरेत्" इति योगिनीतन्त्रोक्तेः । यथोक्तपूजनाशक्तौ संक्षेपविधिना वा कुर्यात् । तदप्युक्तं तत्रैव—"अशक्तः संक्षेपतो वा पूजयेदनुकल्पतः" इति । आवाहनादिकं सकृदिति प्रागुक्तम् । प्रसन्ना तस्य देवतेत्यनेनास्य मुख्यपुरश्चरणत्वं द्योतितम् । युक्तं चैतत्, ततोऽप्यस्याधिकायाससाध्यत्वात् । अत एव योगिनीतन्त्रे—"एवं कृते तु पूर्वोक्तादधिकं फलमाप्नुयात्" इत्युक्तम् । प्रकारान्तरमाह—अथवेति ॥ ७ ॥

एवं त्रिकालपूजनादि कुर्वन् । नाम नवतिसहस्रजपः । योग्यत्वात्तदर्धजप एव । पक्षान्तरमाह—अथवेति । नवरात्रिः शारदी, आश्विनसान्निध्यात् ॥ ८ ॥

यथाशक्त्या संपूज्येति प्रातरिति चोक्त्या त्रिकालं दूर्वेत्यादिविधिनिवृत्तिः सूचिता । नवरात्रदिवसैः प्रत्यहं समानसंख्याजपेन यथा वेदायुतं चत्वारिंशत्सहस्रं जपो भवेत्तथा जपेत् ॥ ९ ॥

वारोदयाख्ययोगे वा भवेदेवं जपात् फलम् ।
कृष्णाष्टमीं समारभ्य तच्चतुर्दशिकावधि ॥१०॥
चत्वारिंशत्सहस्रं तु जपेदुक्तविधानतः ।
नित्यायोगं समारभ्य चित्रान्तं विधिना जपेत् ॥११॥
तिथिसंख्यशतं नित्यं तथा शुक्लाष्टमीदिनात् ।
पूर्णिमान्तं चन्द्रबिम्बे ध्यात्वा देवीं पराम्बिकाम् ॥१२॥
जपेद् रात्रौ षोडशकशतसंख्यं विधानतः ।
सूर्योदयं समारभ्य पुनः सूर्योदयावधि ।
यथोक्तविधिना जप्त्वा फलं प्रोक्तं भवेच्छिवे ॥१३॥

---

वारोदयः अनुपदं वक्ष्यमाणः, तद्योगे । आरभ्य एव नवरात्रमुक्तरीत्या जपात् । अन्यप्रकारमाह—कृष्णेति ॥ १० ॥

उक्तविधानतः प्रत्यहं समसंख्ययेत्यादि नित्यायोगस्तिथिनित्यादिननित्ययोरैक्यम् । तदारभ्य चित्रान्तम् । अत्र नित्यायोगः शुक्लप्रतिपदि अमावास्यायां वा ग्राह्यः । आरम्भत्यागानौचित्यात् । अन्यथा द्वितीयादिपूर्णिमान्तेषु नित्यायोगसंभवेनानियमप्रसङ्गात् । अत एव नित्यायोगमारभ्य चित्रान्तं पञ्चदशदिनपर्यन्तमिति पद्धतावुक्तम् । विधिना प्रोक्तपञ्चाङ्गादिविधिना ॥ ११ ॥

तिथि पञ्चदश । प्रकारान्तरमाह—तथेति । तथा नित्यायोगाच्चित्रान्तं नित्यं पञ्चदशशतं जपेत् । अत्र षोडशशतजपः प्रत्यहम्, "चन्द्रबिम्बे पूजनान्ते नित्यं नृपशतं जपेत्" इति योगिनीतन्त्रोक्तेः । तथा च ध्यानान्ते मानसं पञ्चोपचारपूजनं च सिद्धम् । एवं जप्त्वा पुरश्चरणं भवेदित्यर्थः । चन्द्रबिम्बे आकाशस्थचन्द्रमण्डले । पराम्बिकां मूलदेवीम् ॥१२॥

चन्द्रबिम्बे ध्यात्वा जपेदित्यनेनैव सिद्धत्वाद्रात्राविव्यनुवादः । अत्र होमादिकं नित्यकरणपक्षे रात्रावेव । अन्यप्रकारमाह—सूर्योदयमिति । अत्र सन्ध्यादि तत्तत्कालप्राप्तं संक्षेपात् कर्तव्यम्, 'संध्यादिकं तु संक्षिप्य कृत्वा सूर्योदयादनु । संकल्प्य तु जपं कुर्यात् सन्ध्याद्यं न तु लोपयेत् ॥" इति योगिनीतन्त्रोक्तेः । प्रोक्तं फलं पुरश्चरणफलम् । षट्चरणः श्लोकः ॥१३॥

देव्युवाच—

देव वारोदयं किं तन्नित्यायोगं च किं भवेत् ।
ब्रूहि तन्मे महेशान विस्तरेण च भैरव ॥१४॥

भैरव उवाच--

शृणु देवि प्रवक्ष्यामि सर्वतन्त्रेषु गोपितः ।
अष्टाङ्गस्य विधिर्देवि पुरा प्रोक्तस्तु विस्तरात् ॥१५॥
वर्णानां तत्र योगेन पर्वाणि स्युर्महेश्वरि ।
अक्षरत्रययोगेन चतुर्णां मेलनेन च ॥१६॥
पञ्चानां तथा षण्णां पर्वयोगो भवेच्छिवे ।
अक्षरद्वययोगेन पर्वषट्कं महेश्वरि ॥१७॥
पुष्पिणी मोहिनी तद्वज्जयिनी च कुमारिका ।
विमला श्रीकरी चेति क्रमात्तल्लक्षणं शृणु ॥१८॥
वर्षेण मासयोगे स्यादाद्याऽन्या दिनयोगतः ।
उदयाक्षरयोगेन तृतीया दिनमासयोः ॥१९॥

---

वारोदयादिकं प्रष्टुं देव्युवाचेति । वारोदयमित्यादि नपुंसकत्वमार्षम् ॥१४॥

उत्तरं भैरव उवाचेति । प्रकृते वारोदयादियोगानामष्टाङ्गप्रकृतिकत्वात्तं प्रशंसति--शृण्वित्यादि । यत्पृष्टं तच्छृण्वित्यध्याहृत्य योज्यम् । पुरा चतुर्दशे ॥ १५ ॥

तत्र अष्टाङ्गवर्णेषु । द्वित्र्यादिवर्णानां योगेन वारोदयादिप्रसङ्गात् पर्वान्तराण्यपि वक्तुमाह—अक्षरेति । चतुर्णामक्षराणाम् ॥ १६ ॥

एवं पञ्चानामित्यादौ वर्णानां योगेनेति योज्यम् । पर्वषट्कं भवतीति शेषः ॥१७॥

तेषां नामान्याह – पुष्पिणीत्यादि । तस्य पुष्पिण्यादेर्लक्षणम् ॥ १८ ॥

वर्षेण वर्षाक्षरेण । मासयोगे मासाक्षरयोगे, वर्षमासाक्षरयोरैक्य इति यावत् । आद्या पुष्पिणी । वर्षेण दिनयोगे वर्षदिनाक्षरैक्ये । एवमग्रेऽपि । अन्या द्वितीया मोहिनी । वर्षेणोदयाक्षरस्य योगेन तृतीया जयिनी ॥ १९ ॥

चतुर्थी पञ्चमी मासोदययोगाद् भवेच्छिवे ।
दिनोदयसमायोगात् षष्ठी प्रोक्ता महेश्वरि ॥२०॥
षट्त्रिंशद्वर्षकैराद्या प्रतिमासं तथाऽपरा ।
आद्यसप्तमयोः पश्चाद्दशकेषु ततः परा ॥२१॥
प्रतिवर्षं चतुर्थी स्यादाद्यैकादशमासयोः ।
पञ्चमी स्याद्दिनैस्तद्वद् द्विचत्वारिंशसंख्यकैः ॥२२॥
षट्चत्वारिंशकैरेवं त्रिधा षष्ठी भवेच्छिवे ।
वर्षमासदिनैर्देवि वारोदयसमागमे ॥२३॥
सूर्योपरागः कथितो मासवारोदयैः सह ।
दिनयोगे चन्द्रपर्वकृतं तस्मिन्ननन्तकम् ॥२४॥
सूर्यपर्व भवेद्देवि पञ्चभिः परिवृत्तिभिः ।
चन्द्रपर्व भवेत्तद्वद् वर्षैः पञ्चभिरेव तु ॥२५॥

---

दिनमासाक्षरयोर्योगेन चतुर्थी कुमारिका । मासोदयाक्षरयोर्योगात् पञ्चमी विमला । दिनोदयाक्षरयोर्योगे षष्ठी श्रीकरी ॥२०॥

एवं पर्वणां लक्षणमुक्त्वा कालप्रमाणमाह--षट्त्रिंशदिति । षट्त्रिंशद्वर्षैराद्या वर्षमासयोगरूपा पुष्पिणी भवति । षट्त्रिंशद्वर्षैः पुष्पिणीयोगो भवतीति भावः । परा द्वितीया वर्षदिनयोगरूपा मोहिनी प्रतिमासम् । एवमग्रेऽपि । ततः परा तृतीया आद्यसप्तमयोः अकारचकारात्मकयोः, वर्षयोरिति शेषः । ततो दशकेषु दशमेषु तपअवर्षेषु ॥२१॥

चतुर्थी प्रतिवर्षम्, आद्ये अमासे, एकादशे एमासे च पञ्चमी द्विचत्वारिंशसंख्यकैर्दिनैः षट्चत्वारिंशसंख्यकैस्त्रिधा त्रिवारं षष्ठी भवेदित्यन्वयः ॥२२॥

वर्षमासदिनाक्षरैर्वारोदयाक्षरयोर्योगे सूर्योपरागः कथित इत्यन्वयः ॥२३॥

मासवारोदयाक्षरैर्दिनाक्षरस्यैक्ये चन्द्रपर्व, तस्मिन् । सूर्यपर्वणि चन्द्रपर्वणि च कृतं जपपूजादिकम् । अनन्तम् अक्षयफलम् ॥२४॥

तद्योगयोरपि कालप्रमाणमाह--पञ्चभिरिति ॥२५॥

वारनित्याघटिदिनयोगे श्रीरात्रिरीरिता ।
पञ्चभिः पञ्चभिर्मासैरियं स्यात् परमेश्वरि ॥२६॥
सूर्येन्दुपर्वणी तद्वच्छ्रीरात्रिरपि शङ्करि ।
अकारान्नैव चान्यत्र भवेदिति हि निर्णयः ॥२७॥
अनेकदिनव्याप्तानामेषां वर्णत्रयस्य च ।
मासारम्भे पर्वता स्यादेवमन्यन्महेश्वरि ॥२८॥
दिननित्यातिथेर्नित्या यदा एकीभवेच्छिवे ।
नित्यामेलनमेतद् वै नित्यायोगं प्रचक्षते ॥२९॥

---

इयं श्रीरात्रिः । अत्रेदमवधेयम्--वर्षमासार्णयोर्योगः । अवर्षे अमासे एव । स च सम्पूर्णमासव्यापकः । वर्षदिनयोगस्तु तत्तद्वर्षे तत्तद्दिने । वर्षोदयघटीयोगस्तु अचतप इति वर्षचतुष्टये । प्रतिमासं क्वचिदष्टधा क्वचित् सप्तधा । दिनमासयोगस्तु अमासे अदिने इति वर्षारम्भदिने एव । मासोदयघटीयोगस्तु अमासे एमासे च क्वचिदष्टधा क्वचित् सप्तधा । दिनोदयघटीयोगस्तु अचतपेति दिनचतुष्टये प्रायः प्रतिमासं सकृत् क्वचिन्मासे न भवति च । वर्षमासदिनवारोदयघटीनां योगः सूर्यपर्व । एतच्च अवर्षे अमासे अदिने एव । मासदिनवारोदयघटीनां योगश्चन्द्रपर्व । एतच्च अमासे अदिने एव । दिननित्यावारघटीयोगस्तु अदिने एव ॥२६॥

अत्र केषाञ्चित् पर्वणां वर्णनियममाह—सूर्येत्यादि । अपिना पुष्पिणीकुमारीकयोरनुक्तयोरपि संग्रहः । अकारान्नैवान्यत्रैति स्वरूपकथनम् । अत्र सूर्यपर्वणि पुष्पिण्याद्यखिलपर्वणां योग आवश्यकः । चन्द्रपर्वणि कुमारिकाविमलाश्रीकरीश्रीरात्रीणां योगो नियतः । एवं श्रीरात्र्या श्रीकरीयोगः । तथा अनेकदिनव्याप्तानां मासारम्भे पर्वत्वस्य वक्ष्यमाणत्वात् पुष्पिण्यां मोहिनीकुमारिकयोर्नियमः ॥२७॥

अनेकदिनव्याप्तानामिति । अनेकदिनव्याप्तिस्तु सान्तत्येन । अन्यथा सर्वषामप्यनेकदिनव्याप्तिप्रसङ्गः । एषां पर्वणां प्रोक्तानां वर्णत्रयस्य वर्णत्रययोगस्य अनेकदिनव्याप्तस्याऽव्याप्तस्य वा मासारम्भदिने एव पर्वत्वम् । अन्यत् चतुरक्षरयोगादिकमप्येवं मासारम्भदिने एव पर्व ॥२८॥

दिननित्यातिथिनित्ययोः सप्तदशे प्रोक्तयोरेकीभावे एकत्वप्राप्तौ । यथा शुक्लप्रतिपदि तिथिनित्या कामेश्वरी । अष्टाङ्गक्रमागतापि यदि दिननित्या कामेश्वरी भवेत्तदा नित्यामेलनं तदेव नित्यायोगः ॥२९॥

**शतपर्वसमं ह्येतदेवं मासे च पक्षके ।**
**नित्यामासश्च पक्षश्च तत्रानन्तफलं भवेत् ॥३०॥**

---

नित्यायोगं स्तौति—शतेति । एवं शुक्लप्रतिपदादि दर्शान्तं कृष्णप्रतिपदादि पूर्णिमान्तं वा सान्तत्येव योगे नित्यामासः । पक्षमात्रे योगे नित्यापक्षः । तत्र योगे यत्किञ्चित्कृतं जपादिकम् अनन्तफलम् ॥३०॥

वाराक्षरोदयाक्षरयोरैक्ये वारोदयः । अयं पञ्चचत्वारिंशद्दिनैर्भवति । एतन्निरूपणं रुद्रयामले पञ्चभिः पटलैर्वितत्य कृतम् । तत्र प्रथमपटले अहर्गणोपायो निरूपितः, द्वितीये अष्टाङ्गाद्यानयनप्रकारः, तृतीये पर्वभेदः, चतुर्थपञ्चमयोरैक्यवासनादि । तत्र तृतीये पटले विशेष उक्त इति स पटल एवात्र लिख्यते--"देव्युवाच—ईश्वर श्रोतुमिच्छामि पर्वरूपं यथाविधम् । अक्षराणामैक्यभवं सुन्दरीविषयं स्फुटम् ॥ ईश्वर उवाच – शृणु देवि महागुह्यं तन्त्रसर्वस्वमुत्तमम् । त्वत्प्रीत्या कथयाम्यद्य गोपनीयं विशेषतः । प्रागुक्ताष्टाङ्ग-वर्णाना योगा द्वित्रिक्रमेण तु । पर्वाणि बहुधाभूतान्यपि तत्र विशेषतः ॥ महायुगैः पञ्चभिस्तु पर्व स्यादतिरात्रकम् । तत्र सर्वाणि वर्णानि मिलितानि भवन्ति वै । युगैस्तु पञ्चभिर्देवि वर्णसप्तकमेलनात् । कालरात्रं पर्व भवेत् पञ्चभिर्परिवृत्तिभिः ॥ षडक्षर-समायोगात् सूर्यपर्व प्रकीर्तितम् । पञ्चवर्षैः पञ्चवर्णयोगात् पर्वैन्दवं स्मृतम् । पञ्चमासैश्चतुर्वर्णयोगाच्छ्रीपर्व सुन्दरि । वर्णत्रयसमायोगाद्देवीपर्व प्रकीर्तितम् ॥ एतावन्ति च सर्वाणि अकारेकाश्रयाणि वै । द्विवर्णयोगात् पर्वाणि षट् प्रकाराणि शङ्करि ॥ पुष्पिणी-वर्षमासाभ्यां मोहिनीदिनवर्षयोः । वर्षोदयाभ्यां जयिनी कुमारीदिनमासयोः । मासोद-याभ्यां विमला श्रीकर्युदयतत्त्वयोः । संनिपाते पर्वणां तु महदन्तर्गताः परे ॥ समानेऽ-नवकाशं स्यात्प्रायो मासाद्यसंश्रयम् । कालदेशव्याप्तिमपि शृणु सर्वमशेषतः ॥ कालो देशश्च संव्याप्तो नाथनित्यास्वरूपतः । युगादिदिनमारभ्य क्रमेणैव तु शङ्करि ॥ नव-भिस्तु प्रकाशाद्यैर्नाथैर्व्याप्तिं विभावय । पञ्चत्रिंशत्परिवृत्तिव्याप्तिः प्रतियुगं भवेत् ॥ तथा चाद्ययुगे चान्त्यपरिवृत्तौ भवेच्छिवे । आद्यो नाथो द्वितीयस्तु द्वितीये युग इष्यते ॥ एवं परिवृत्तौ वर्षे दिने व्याप्तिः समीरिता । अन्ते षट्त्रिंशकव्याप्तिरेवं वर्षान्तमीश्वरि ॥ नव-मासैश्च षण्मासैर्द्विधा चैकेन चैककम् । घटिकानां तु षट्केन चान्तरे समितेन च ॥ दिने व्याप्तिस्तु संप्रोक्ता चाथ नित्यास्थितिं शृणु । सुन्दरीं तु समारभ्य चित्रान्ताः षोडशेरिताः । नन्दाग्निपरिवृत्तीनामन्ते वसुयुगात्मना । चतुस्त्रिंशद्दिनैरन्ते द्वात्रिंशत् संख्यकैरपि ॥ सार्धत्रिघटिकाभिश्च चतुर्भिरपि शङ्करि । नाथानां चापि नित्यानां सर्वव्याप्तौ महाफलम् ॥

तत्र पूजादिकं सर्वंनन्तफलदं भवेत् । नैतस्य सदृशं पुण्यमन्यदत्र भवेत्प्रिये ॥ सकृन्मन्त्रजपे देवि पुरश्चर्याफलं स्मृतम् । सकृत्पूजनमात्रेण कोटिपूजाफलं भवेत् ॥ देशव्याप्तिसमायोगे नित्यानाथसुमेलने । कोटिकोटिगुणं ज्ञेयं फलं तत्र जपादितः ॥ मेरुः सप्तविधा द्वीपाः सप्तवारिधिमध्यगाः । बहिस्त्रिदात्मदेशश्चेत्येवं षोडशसु क्रमात् ॥ एकैकवर्षसंस्थानाद् द्वीपाब्ध्योर्मिश्रणेन तु । नाथाः स्थितास्तु देवेशि वर्षसंमितकालगाः ॥ यदा प्रकाशवारश्च सुन्दरी चापि शङ्करी । सर्वकालदेशयुता तस्य पुण्यं न गण्यते ॥ एतेषां सूक्ष्मयोगस्तु सर्वज्ञानप्रदायकः । एतत्ते सर्वमाख्यातं किंभूयः परिपृच्छसि ॥" इति ।

एतावन्ति ऽतिरात्रादि देविपर्वान्तानि । अकारैकाश्रयाणि अकारात्मकयुगादावेव संभाव्यानि । पर्वणामनेकानां संनिपाते एकस्मिन् दिने योगे । महदन्तर्गताः परे महति पर्वणि परे अन्ये पर्वात्मकयोगा अन्तर्गताः । अन्येषां लघुभूतानां योगानां न पर्वत्वमिति भावः । यथा अतिरात्राख्ये अष्टाक्षरयोगे पर्वणि युक्तानां कालरात्रादिपर्वणां न पृथक् पर्वत्वम् । समाने मिलितयोर्योगयोः समानत्वे महत्वाल्पत्वाभावे । कुमारीमोहिन्योः दिनमासात्मकं दिनवर्षात्मकवर्णद्वययोगात्मकयोर्महत्वाल्पत्वाभावेन समानत्वेऽनवकाशं स्यात् । यस्य पर्वणोऽनवकाशस्तदेव स्यान्नान्यत् । प्रकृते दिनमासयोर्योगो वर्षारम्भदिने एव, दिनवर्षयोस्तु प्रतिमासं संभवतीति कुमारीपर्वणोऽनवकाशत्वात् कुमारीपर्वैव । सावकाशयोर्वा निरवकाशयोर्वा उभयोर्मेलने पर्वद्वयमपि ज्ञेयम् । अतिरात्राद्युक्तानि पर्वाणि प्रायो मासादावेव भवन्ति । क्वचित्केषाञ्चिन्मासमध्येऽपि संभवः । युगादिदिनमारभ्येत्यत्र युगं कृतत्रेतादिकालो देशश्च संव्याप्त इति संबन्धः । नाथव्याप्तिमाह—पञ्चत्रिंशदिति । प्रतियुगं पञ्चत्रिंशत्परिवृत्तिव्याप्तिरेकैकनाथस्य । कलियुगादौ अयुगे पञ्चत्रिंशत्परिवृत्तिपर्यन्तं प्रकाशनाथव्याप्तिः । ततः अयुगे क्षपरिवृत्तिमारभ्य कयुगे हपरिवृत्तिपर्यन्तं विमर्शनाथस्य पञ्चत्रिंशत्परिवृत्तिव्याप्तिः । ततः कयुगे परिलवृत्तिमारभ्य खयुगे सपरिवृत्तिपर्यन्तम् आनन्दनाथस्य पञ्चत्रिंशत्परिवृत्तिव्याप्तिः । एवमग्रेऽपि । अन्ते हयुगे खपरिवृत्तिमारभ्य कयुगे लपरिवृत्त्यन्तं प्रतिभनाथव्याप्तिः । ततो कयुगे कपरिवृत्तिमारभ्य क्षपरिवृत्त्यन्तं सुभगनाथव्याप्तिः । क्षयुगे अपरिवृत्त्यादि क्षपरिवृत्त्यन्तं षट्त्रिंशत् सुप्रकाशनाथव्याप्तिः । द्वितीयमहायुगादौ अयुगादौ विमर्शनाथादिव्याप्तिरिति क्रमः । फलितमाह—तथा चेति । आद्ययुगे कृतादियुगानाम् आद्ये प्राथमिके युगे आदिक्षान्तयुगसमुदायात्मके महायुगे । अन्त्यपरिवृत्तौ क्षयुगात्मकेऽन्त्यपरिवृत्तिसमुदाये । आद्यः प्रकाशनाथो भवेदिति सम्बन्धः । द्वितीये युगे युगसमुदायात्मके महायुगे तु द्वितीयो विमर्शो नाथ आरम्भे भवेदिति शेषः । एवं युगसमुदाये नाथव्याप्तिवत् परिवृत्तिसमुदाये वर्षसमुदाये च व्याप्तिः । दिने दिनसमुदाये तु नाथमण्डलव्याप्तिः समीरिता । अष्टाङ्गनिर्णयावसरे प्रतिदिनमेकैको नाथ इति प्रोक्ता । अत्र एवं परिवृत्तौ वर्षे इति युगवत्परिवृत्तिवर्षयोर्व्याप्तिरुक्ता । तत्र यथा युगव्याप्तौ एकैकनाथस्य पञ्चत्रिंशत्परिवृत्तिव्याप्तिस्तथा परिवृत्तिव्याप्तौ एकैकनाथस्य पञ्चत्रिंशद्वर्षव्याप्तिः । युग-

परिवृत्त्योः षट्त्रिंशदवयवकत्वात् समानो व्याप्तिप्रकारः । वर्षेऽपि किञ्चिन्न्यूनयुगपरिवृत्त्योरेकैकनाथव्याप्तिवत् किञ्चिन्न्यूनवर्षव्याप्तिरेकैकनाथस्य । तथान्ते सर्वतोऽधिकव्याप्तिरेकस्य । यथा एकैकनाथस्य सार्धपञ्चदशमासव्याप्तिः । एवं चतुर्धा नाथमण्डलव्याप्त्यनन्तरमष्टादशमासव्याप्तिरेकस्य नाथस्येति द्वितीयवर्षमण्डलारम्भे द्वितीयो नाथ इति ।

ननु वर्षव्याप्तिप्रकारः स्वकपोलकल्पितो न युक्तः । ग्रन्थसङ्गतिस्त्वन्यथापि भविष्यति । तथाहि—एवं युगव्याप्तिवत् परिवृत्तिव्याप्तिः । वर्षदिनयोर्व्याप्तिस्तु नवमासैश्च षण्मासैरिति घटिकानां तु षट्केनेति च वक्ष्यमाणप्रकारेणेति चेन्न, युगपरिवृत्त्योर्व्याप्तौ किञ्चिन्न्यूनैकयुगपरिवृत्त्योरेकैकनाथव्याप्तिर्वर्षदिनयोर्व्याप्तौ तु एकवर्षे द्विधा नाथमण्डलस्य एकदिने एकवारं नाथमण्डलस्य व्याप्तिरित्येतस्यातिवैषम्यात् । एवं परिवृत्तौ वर्षे इत्यादि वाक्यासङ्गतत्वप्रसङ्गात् । कालस्य युगपरिवृत्तिवर्षमासदिनघटिकात्मकस्य सामान्येन व्याप्तिकथनं प्रतिज्ञाय युगपरिवृत्तिवर्षदिनव्याप्ते मात्राभिधाने मासघटिकयोर्व्याप्त्यकथने न्यूनत्वप्रसङ्गाच्च । तथा च युगव्याप्तौ युगावयवैकपरिवृत्तिन्यूनव्याप्तिर्यथा, एवं वर्षावयवार्धमासन्यूनव्याप्तिः । संपूर्णमासन्यूनवर्षव्याप्तौ तु चरमनाथस्य षट्त्रिंशन्मासव्याप्तिरापततीति चरमनाथस्येतरस्माद्यत्किञ्चिदाधिक्यवैसादृश्यप्रसक्तिरित्याद्यवधेयम् । अन्ते षट्त्रिंशदात्मकयुगसमूहान्ते । षट्त्रिंशकव्याप्तिः षट्त्रिंशत्परिवृत्तेरेकनाथव्याप्तिः । एवं युगवत् । यथा युगव्याप्तौ किञ्चिन्न्यूनैकयुगे एकनाथव्याप्तिरेवं किञ्चिन्न्यूनयोरेकपरिवृत्तिवर्षयोरेकनाथव्याप्तिः । अन्ते च किञ्चिदधिकव्याप्तिरितरस्मात् । वर्षान्तमित्यनेन मासव्याप्तौ वक्ष्यमाणो विशेषः सूचितः । तदेवाह—नवेति । नवमासैः षण्मासैर्द्विधा द्विवारं नाथमण्डलव्याप्तिः । नवसु एकैकमासे एकैकनाथ इत्येकनाथमण्डलव्याप्तिः । षण्मासेषु चतुर्विंशतिदिनव्याप्तिरेकैकनाथस्येति द्वितीयनाथमण्डलव्याप्तिः ।

ननु नवमासैः षण्मासैरिति पञ्चदशसु मासेषु एकैकनाथस्य त्रिंशद्दिनव्याप्त्या द्विधानाथमण्डलव्याप्तिरिति चेन्न, त्रिंशद्दिनव्याप्तेः किञ्चिन्न्यूनमासव्याप्तत्वात् । एवं मासान्तमीश्वरीति वक्तुं युक्तत्वेन नवमासैरित्यादेर्वैयर्थ्यप्रसङ्गात् । पञ्चदशमासैर्द्विधेत्येवमेव वक्तुमुचितत्वाच्च । एकेन चैककं वर्षान्ते चैकेन मासेनैकनाथव्याप्तिः । घटिकानां षट्केनैकैकनाथव्याप्तिरिति सकृन्नाथमण्डलव्याप्तिः । अन्ते सकृन्नाथमण्डलव्याप्त्यन्ते रसमितेन षट्संख्याकघटिकासमूहेन पुनरेकस्याद्यनाथस्य व्याप्तिः । एवं युगादिघटिकान्तपञ्चविधकालव्याप्ति निरूप्य दिनव्याप्तिस्त्वष्टाङ्गनिरूपणावसरे कथितप्रकारैवेति दृढीकरणायाह--दिनेति । अथ नाथव्याप्तिकथनानन्तरम् । नित्यानां स्थितिं व्याप्तिम् । सुन्दरी कामेश्वरी भगमालिनीत्यादि चित्रान्ताः षोडशनित्याः । पूर्वपटले सर्वान्ते सुन्दरी नित्योक्ता । तत्क्रमं प्रकृते बाधितुं सुन्दरीमित्यादि पुनरत्र कथनम् । युगव्याप्तिमाह—नन्देति नन्द नव अग्नि त्रयः । तेन एकोनचत्वारिंशत् । पूर्वकिञ्चिन्न्यूनैकैकयुगे एकैकनाथव्याप्तिरुक्ता । प्रकृते किञ्चिदधिकैकैक-

युगव्याप्तिरिति विशेषः। एव चैकैकनित्याया एकोनचत्वारिंशत्परिवृत्तिव्याप्तिः। एवं द्विवारं नित्यमण्डलव्याप्तेरन्ते। वसु अष्टौ। युग चत्वारः। अष्टाचत्वारिंशत्परिवृत्त्यात्मना स्थितस्य युगस्यैकनित्याव्याप्तिः। एवं परिवृत्तिव्याप्तावपि एकोनचत्वारिंशद्वर्षव्याप्तिरिति द्विवारं नित्यामण्डलव्याप्त्यन्ते अष्टाचत्वारिंशद्वर्षव्याप्तिरेकनित्यायाः। एवं वर्षव्याप्तिरपि। एवं परिवृत्तौ। वर्षे दिने व्याप्तिः। समीरितेति प्रकृतेऽप्यनुवृत्त्या योजनीयम्। वर्षव्याप्तिरपि सपादसप्तदशमासैरेकैकनित्याव्याप्तिरिति द्विवारं नित्यामण्डलव्याप्त्यन्ते चतुर्विंशतिमासे एकनित्याव्याप्तिरिति। मासव्याप्तिमाह—चतुस्त्रिंशदिति। चतुस्त्रिंशद्दिनैरेकैकनित्याव्याप्तिरित्येकवारं नित्यामण्डलव्याप्तिः। अन्ते द्वात्रिंशद्दिनैरेकनित्याया व्याप्तिः। दिनव्याप्तिस्तु एकैकदिने एकैकनित्येति पूर्ववदष्टाङ्गक्रमोऽत्रैव। घटिका व्याप्तिमाह—सार्धेति। सार्धत्रिघटिकाभिरेकैका नित्येति सकृन्नित्यामण्डलव्याप्तिः। अन्ते चतुर्भिर्घटिकाभिरेकनित्याव्याप्तिरिति।

इष्टदिने नाथनित्यामण्डलयोर्व्याप्तिज्ञानोपायः संक्षिप्य श्लोकरूपेण लिख्यते—
महायुगयुगान्येवं परिवृत्तिश्च वत्सरान्। धनैर्हृत्वा गतान् शेषान्नाथोऽतीतो युगादिकः। महायुगे वर्तमाने परिवृत्तीर्गतास्तु वै। मालाभक्ता लब्धकेन युगनाथं गतं वदेत्। युगवर्षैरेवमेव नाथं परिवृतेर्वदेत्। एवं परिवृतेर्मासे द्विगुणे यागभागतः॥ वर्षनाथो मासदिनघटिकानां स्फुटास्तु ते। महायुगादेश्चाहेन भागान्नित्या युगादिगाः॥ युगस्य परिवृत्तेश्च नित्या धूलीहृताद्भवेत्। मासाच्चतुर्गुणा धातृहृतान्नित्या तु वर्षगा॥ पूर्वनाथादिकं ज्ञेयं युगाद्यन्ते तु शेषके॥

अस्यार्थः—अत्र प्रकृतयुगनाथपरिवृत्तिनाथादीनां ज्ञानाय युगादिनाथपरिवृत्त्यादिनाथादिज्ञानोपायमाह—महायुगेति। गतमहायुगानि धनैर्नवभिर्हृत्वा शेषात्तत्तन्महायुगाद्ययुगादिनाथो ज्ञेयः। एवमतीतयुगपरिवृत्तिवत्सरैस्तत्तद्युगपरिवृत्तिवर्षेष्वाद्यपरिवृत्तिवर्षमासनाथा ज्ञेयाः। यथा—वर्तमाने कलियुगे ४९२९ एकोनत्रिंशदुत्तरनवशताधिकचतुःसहस्रमितवर्षेऽतीतेऽतीतमहायुगं शून्यम्। तेन शेषस्यापि शून्यत्वात् वर्तमाने महायुगे आद्यो युगादिनाथ आद्यः प्रकाशः। वर्तमानस्य खयुगत्वाद् गतयुगे द्वे। तत्र नवभिर्भागासंभवाच्छेषं द्वयमेव। तेन नाथद्वयमतीतम्। वर्तमानस्तृतीयो युगादौ परिवृत्त्यादिनाथः। एवं वर्षमासादिनाथावपि परिवृत्तिवर्षाद्यगतौ ज्ञेयौ॥

युगनाथानयनप्रकारमाह—महायुगे इति। वर्तमाने महायुगे गताः परिवृत्तीः अक इति युगद्वयस्य ७२ द्विसप्ततिः। खयुगेऽतीताश्चतुर्दश १४। मेलः ८६ षडशीतिः। मा ५ ला० ३॥ पञ्चत्रिंशत् ३५॥ तेन भक्ताः। लब्धकं द्वयम्। तेन गतौ द्वौ युगनाथौ वर्तमानस्तृतीय आनन्दो युगनाथः॥

एव वर्तमानखयुगेऽतीतवर्षैः। अतीतचतुर्दशपरिवृत्तेः ५०४ चतुरुत्तरपञ्चशतम्। वर्तमानपरिवृत्तावतीतवर्षा २९ एकोनत्रिंशत्। तयोर्मेलने ५३३ त्रयस्त्रिंशदुत्तर-

पञ्चशतम्। तैः पञ्चत्रिंशद्भक्तैः प्राप्तं लब्धं १५ पञ्चदश। तत्र पञ्चदशसु नवभिरेकं नाथमण्डलमतीतम्। शेषषट्केन पूर्वसिद्धपरिवृत्त्याद्यनाथात् तृतीयात् षडतीताः। वर्तमानः सप्तमः परिवृत्तिनाथः सुभगाख्यः। एवं वर्तमाने ढपरिवृत्तौ अतीतमासाः। अतीतैकोनत्रिंशद्वर्षाणां ४६४ चतुःषष्ट्युत्तरचतुःशतम्। वर्तमानवर्षेऽतीतमासाः ११ एकादश। मेलने ४७५ पञ्चसप्तत्युत्तरचतुःशतम्। तस्य द्वैगुण्ये ९५० पञ्चाशदुत्तरनवशतम्। पा० १ ग० ३ एकत्रिंशत् ३१ तेन भागे लब्धं ३० त्रिंशत्। तत्र सप्तविंशत्या नाथमण्डलत्रयमतीतम्। शेषत्रयेण पूर्वसिद्धवर्षाद्यनाथात् षष्ठा त्रयोऽतीताः। वर्तमानश्चतुर्थः परिवृत्तिनाथः सुभगाख्यः। एवं भागतो वर्षनाथ इत्यग्रिमेणान्वयः॥

मासदिनघटिकानां नाथाः स्फुटाः स्पष्टाः। यथा—पूर्वसिद्धमासाद्यनाथात्तृतीयाद् गतैकादशमासेषु नवमासैरेकं नाथमण्डलम्। मासद्वयेन त्रयोऽतीताः। द्वादशे मासे एकादशदिने चतुर्थः पूर्णाख्यो मासनाथः। दिननाथस्तु विमर्शाख्यः, अष्टाङ्गक्रमात् सिद्धः। स एव घटिकादिनाथोऽपि। युगाद्यनित्याद्यानयनप्रकारमाह—महायुगेति। महायुगयुगपरिवृत्तिवर्षाणामतीतानां च ६ पे० १ न षोडशभिः १६ भागात् शेषेण युगाद्यनित्याद्याः॥

युगनित्या परिवृत्तिनित्या च धू ९ ली ३। एकोनचत्वारिंशत् ३९ हृताद् भवेत्। यथा—गतपरिवृत्तिः ८६ षडशीतिः। तत्रैकोनचत्वारिंशद्भागे लब्धं द्वयम् २। तेन पूर्वसिद्धयुगाद्यनित्या आद्या सुन्दरी। ततो द्वयमतीतम्। वर्तमानात्तृतीया युगनित्या भगमालिनी। एवमतीतवर्षाः ५३३। एकोनचत्वारिंशद्भागे लब्धं १३। तेन पूर्वसिद्धपरिवृत्त्याद्यनित्या तृतीया भगमालिनी। ततोऽतीतास्त्रयोदश वर्तमाना चतुर्दशी चित्रा परिवृत्तिनित्या। एवमतीतमासाः ४७५ चतुर्गुणे १९०० नवशताधिकैकसहस्रम्। तत्र धा ९ तृ ६ एकोनसप्ततिः ६९ तेन हृते लब्धं २७ सप्तविंशतिः। तेन पूर्वसिद्धवर्षाद्यनित्या पञ्चदशी। लब्धसप्तविंशत्यां षोडशभिरेकं नित्यामण्डलमतीतम्। एकादश शेषः। तेन वर्षाद्यनित्यात एकादशातीताः। वर्तमाना द्वादशी कुलसुन्दरी वर्षनित्या। मासनित्याद्याः स्पष्टाः। यथा—वर्षेऽतीतदिनानि ४०७ सप्तोत्तरचतुःशतम्। चतुस्त्रिंश ३४ द्भागेलब्ध-११ मेकादश। तेन पूर्वसिद्धमासाद्यनित्या चतुर्दशी। तत एकादशातीताः। द्वादशी त्वरिता वर्तमानमासनित्या। दिननित्या अष्टाङ्गक्रमप्राप्ता ज्वालामालिनी। सैव प्रातर्घटिकानित्येति युगादीनामन्ते शेषपरिवृत्त्यादिषु पूर्व एव नाथो नित्या च ज्ञेया। यथा—अत्र महायुगेऽक्षयुगेऽक्षपरिवृत्तौ अतीताः परिवृत्तयः १२९५ पञ्चनवत्युत्तरद्वादशशतम्। तत्र पञ्चत्रिंशद्भिर्भागे लब्धं ३७ सप्तत्रिंशत्। तेन द्वितीयो विमर्शो युगनाथः प्राप्तः। पूर्वनाथादिकमित्युक्त्या प्रकाशनाथ एव सिद्धः। एवं परिवृत्यादिनाथादिष्वपि ज्ञेयम्। नाथानामिति। सर्वव्याप्तौ युगादिघटिकान्तषट्संख्यसर्वकालव्याप्तौ। युगादिषण्णामेकनाथव्याप्तावित्यर्थः। महाफलप्रदं पर्व। एतेन किञ्चिन्न्यूनव्याप्तौ किञ्चिन्न्यूनफलं पर्वेति केचित्॥ देशव्याप्तिमेवाह—मेरुरिति। मेरुः जम्ब्वादिसप्तद्वीपाः। तदन्तरगता

**वारोदयार्णयोरैक्ये वारोदय इतीरितः ।**
**अथवा ग्रहणे सोमसूर्ययोस्तु जपाद् भवेत् ॥३१॥**
**व्रती पूर्वदिने स्पर्शात् स्नात्वा कण्ठजले स्थितः ।**
**नाभिदघ्नजले वापि जपं कुर्याद् विचक्षणः ॥३२॥**

---

लवणादि सप्त समुद्राः । सर्वबहिश्चिदात्मदेश इति षोडशखण्डे देशे । कल्पाद्यवर्षे मेर्वादिचिदात्मान्तं सुन्दर्यादिचित्रान्ता नित्याः । द्वितीयवर्षे चित्रादिज्वालामालिन्यन्तास्तृतीये ज्वालामालिन्यादिसर्वमङ्गलान्ताः । षोडशे कामेश्वर्यादिसुन्दर्यन्ताः । इति षोडशवर्षैरेकपरिवृत्तिः ॥

द्वीपाब्ध्योरैक्येन नवखण्डे नवनाथाः पूर्ववत्स्थिताः । अत्र वर्षो द्वादशमासात्मकः सौरः, "कलौ नित्यापरिवृत्तिः मुनिपक्षसहस्रकम्" इत्यग्रिमपटलानुरोधात् ॥

यदा युगादिसर्वकाले देशे च प्रकाशनाथः सुन्दरी नित्या च भवति, तदा तस्य पर्वणः ॥

सूक्ष्मयोगस्त्वग्रिमपटले वक्ष्यमाणः ॥

प्रकारान्तरेण पुरश्चरणमाह—अथवेति । सोमसूर्ययोर्ग्रहणे जपात् पुरश्चरणं भवेत् ॥३१॥

ग्रहणात् पूर्वदिने व्रती । व्रतं तूपवासः । अशक्तानामेकभुक्तं वा । तदुक्तं योगिनीतन्त्रे—"पूर्वेद्युरुपवासी स्यादशक्तस्त्वेकभुक्तकम्" इति । अत्र स्नाने तीर्थनियमोऽपि तत्रैवोक्तः—"गङ्गादिपुण्यसरिति पुष्करादिह्रदेऽथवा । स्नात्वा जपं प्रकुर्वीत चान्यत्र व्यर्थतामियात् ॥" इति । अन्यत्र व्यर्थतेति तीर्थप्रशंसनम् । अत एव बृहद्वामकेश्वरे—"नद्यां सरसि वा चैवं जपेद्वापीषु वा शिवे । गङ्गादिपुण्यतीर्थेषु जपे कोटिगुणं फलम् ॥" इति । तत्र स्पर्शात् स्पर्शकालमारभ्य, अर्थान्मोक्षान्तं जपेत् । अत्र स्नानं तु स्पर्शात्पूर्वं परं वा, 'स्नात्वा संकल्पकं कृत्वा सूक्ष्मदृष्ट्याऽवलोकयन् । स्पर्शादारभ्य मोक्षान्तं निमेषमपि चात्यजन् ॥ सम्पूर्णकाले प्रयतो जपेदुक्तविधानतः ॥" इति, "सूक्ष्मदृष्ट्या विनिश्चित्य स्पर्शं स्नात्वा तदुत्तरम् । संकल्प्य मोक्षपर्यन्तं जपेज्जलसमाश्रयः ॥" इति बृहद्वामकेश्वर-योगिनीतन्त्रयोरुक्तत्वात् । कण्ठमितजले स्थितः । अशक्तो नाभिदघ्नजले नाभिमात्रजले वा स्थितः । अत्यशक्ते तु--"कण्ठमात्रजलेऽशक्तो नाभिमात्रजले जपेत् । अत्यशक्तस्तु संस्नात्वा क्वचिद्देशे जपेच्छिवे ॥" इति योगिनीतन्त्रे उक्तम् । एतत्संकल्प उक्तो योगिनीतन्त्रे—"तिथ्यादि उल्लिख्योपरागे स्पर्शान्मोक्षान्तमुच्चरत् । विद्यामुल्लिख्य च

अथवा प्रत्यहं मासं शतसंख्यं जपेच्छिवे ।
आदिक्षान्तार्णपुटितं जपेदेवं फलं भवेत् ॥३३॥
नामपारायणं मन्त्रपारायणमथापि वा ।
चक्रपारायणं कृत्वा पुरश्चर्याफलं लभेत् ॥३४॥

---

जपं तद्दशांशादिहोमतः ॥ आदिरूपं च पश्चाङ्गपुरश्चरणकं वदेत् । अहं करिष्य इत्येवं संकल्पं तु समाचरेत् ॥" इति ॥३२॥

प्रकारान्तरमाह—अथवेति । आदिक्षान्तवर्णैः पुटितां विद्यां जपेत् । तल्लक्षणं दशमे उक्तम् । एवं जपे कृते इति शेषः । फलं पुरश्चरणफलम् । एते सर्वे पुरश्चरणानुकल्पा न मन्त्रसिद्धिरूपदृष्टफलसाधकाः, अपि तु नित्यपुरश्चरणाकरणप्रत्यवायपरिहाररूपादृष्टफलसाधकाः, "एते सर्वे चानुकल्पाः पुरश्चर्याक्रमस्य वै ॥ देवताप्रीतिजननाः पापनाशनहेतवः ॥ भवसिद्धिनिमित्तं तु मुख्यमेव प्रकीर्तितम् ।" इति योगिनीतन्त्रोक्तेः । अत्र सर्वपक्षेऽपि होमः पूर्वोल्लासोक्तवत् प्रत्यहमन्ते वा । अग्निरक्षणसमर्थे आद्यदिने साधितेऽग्नौ चरमदिनहोमानन्तरं समर्पणहोमाद्युत्तरतन्त्रं कुर्यात् । असमर्थस्तु प्रत्यहमग्निसिद्धिविसर्जनं च कुर्यात् । सर्वपुरश्चरणान्ते होमकरणपक्षेऽपि सर्वहोमस्यैकस्मिन् दिवसे करणाशक्तौ जपवत् समसंख्यया संकल्पपूर्वकमनेकदिनैर्होमं कुर्यात् । एतदुक्तं योगिनीतन्त्रे—"सर्वान्ते होमकरणे बहुभिर्वा दिनैः शिवे । जपवत् समसंख्याकहोमं कुर्याद्विचक्षणः । अग्निरक्षणशक्तस्तु सर्वान्ते वै विसर्जयेत् । अन्येन प्रत्यहं कार्यमग्निसिद्धिविसर्जनम् ॥" इति । त्यागकथनं तु प्रत्येकमाहुत्यन्ते तत्तद्दिनसर्वहोमान्ते वा कर्तव्यम्, "प्रत्येकं वा त्यजेत् सर्वहोमान्ते वापि प्रत्यहम्" इति योगिनीतन्त्रोक्तेः । एवं तर्पणादिकं ज्ञेयम् । अत्र प्रत्यहं जपान्ते होमादिकरणपक्षे होमादिकं चतुष्टयमपि कर्तव्यमिति न नियमः, अपि तु होमादिषु तत्तद्दिनजपान्ते एकं द्वयं त्रयं वा कर्तव्यम् । अवशिष्टं त्वन्ते कर्तव्यम् । अत एवोक्तं योगिनीतन्त्रे—"शेषाङ्गं तु जपस्यान्ते कुर्यादत्र महेश्वरि" इति ॥३३॥

अथ पुनरनुकल्पान्तरमाह—नामपारायणमित्यादि । नामपारायणं वा मन्त्रपारायणं वेति प्रत्येकमन्वयः । पारायणान्ते न होमादिकम्, पूर्वोक्तविधिना एवमित्याद्युक्तेः, मुख्यादाधिक्येनाशक्तविषयत्वानुपपत्तेः । "पारायणत्रयेणैव मन्त्रसिद्धिः प्रजायते" इति चतुर्दशवचने एवकारस्वारस्याच्च । तत्र पारायणत्रयेण मन्त्रसिद्धिरेकैकेन तु पुरश्चरणफलमिति तद्वाक्यैकवाक्यतयाऽनुसन्धेयम् । नियमाचरणं त्वावश्यकम्, तदभावे "नियमांस्तु परित्यज्य" इत्येकविंशे प्रत्यवायोक्तेः ॥३४॥

अशक्तेन तु देवेशि गुरुविप्रमुखेन वै ।
कर्तव्या स्यात् पुरश्चर्या तेनापि तु फलं भवेत् ॥३५॥
एवं संसाध्य विद्यां तु साधयेद् वाञ्छितं शिवे ।
तच्च वश्यं द्वेषणं च तथोच्चाटनमारणे ॥३६॥
शान्तिस्तम्भनमित्येवं षड्विधं कर्म वै भवेत् ।
उदङ्मुखो वसन्ततौं रक्तवस्त्रासनादिभिः ॥३७॥
रक्तैः पुष्पोपहारैश्च देवीपाशेन पाशितम् ।
साध्यं ध्यायन् यथोक्तेन पूजयित्वा ततः परम् ॥३८॥
सहस्रं प्रजपेत् पुष्पैः करवीरैस्तु लोहितैः ।
हुत्वा चापि सहस्रं तु स्तोत्रपाठादिकं चरेत् ॥३९॥
वश्यमेवंविधं देवि सम्यक् प्रोक्तं समाचरेत् ।
नैर्ऋताभिमुखो ग्रीष्मे धूम्रवस्त्रासनादिभिः ॥४०॥
धूम्रैः पुष्पोपहारैश्च देव्याः क्रूरेण चक्षुषा ।
पराङ्मुखं पूर्ववत्तु राजिकाभिर्हुनेत् ततः ॥४१॥

---

गुरुविप्रमुखेन गुर्वादिद्वारा फलं पुरश्चरणस्य ॥३५॥

एवं प्रोक्तमन्त्रसाधनविधिना संसाध्य सम्यग्मन्त्रसिद्धिपर्यन्तं कलौ चतुर्गुणादि-संख्यया । "असिद्धायां तु विद्यायां सप्तवारं सुसाधयेत्" इति प्रागुक्तसिद्धिचिह्नानाम-सत्त्वे सप्तधा जपेदिति योगिनीतन्त्राग्रिमोल्लासयोरुक्तदिशा शरभपारिजाताद्युक्तमन्त्र-साधनप्रयोगादिना वा विद्यां साधयित्वा वाञ्छितं काम्यम्, तच्च काम्यं च षड्विधं भवेदित्यन्वयः । उच्चाटनं मारणम् ॥३६॥

वश्यादीनां सामान्यतो विधिमाह—उदङ्मुख इत्यादि ॥३७॥

साध्यं वशीकर्तव्यं जनम् । यथोक्तेन अर्घ्यस्थापनादिविधिना ॥३८॥

मूलं सहस्रं प्रजपेत् । सहस्रनामादि स्तोत्रपाठादिकम् ॥३९॥

विद्वेषणादिप्रकारमाह—नैर्ऋतेत्यादि ॥४०॥

चक्षुषा पराङ्मुखं साध्यं पुरुषम् । पूर्ववज्जपादि । राजिकाः क्षुद्रसर्षपाः ॥४१॥

एवं विद्वेषणं कुर्यात् पूर्वोक्तविधिना शिवे ।
वायव्याभिमुखो वर्षाकाले कृष्णाम्बरादिभिः ॥४२॥
देवताक्रूरदृष्ट्या तु पलायन्तं स्मरन् बुधः ।
लवणेन हुनेत् प्रोक्तविधिनोच्चाटनं भवेत् ॥४३॥
आग्नेयाभिमुखः कृष्णवसनादिः शरदृतौ ।
देव्यङ्कुशप्रहारेण विभिन्नहृदयं स्मरन् ॥४४॥
मरिचैर्जुहुयात् प्रोक्तविधिना मारणं भवेत् ।
ईशाभिमुखहेमन्ते शुक्लवस्त्रासनादिभिः ॥४५॥
देवीकराम्बुजस्पृष्टमस्तकं हृदि संस्मरन् ।
घृताक्तबिल्वपत्रैस्तु जुहुयाच्छान्तिहेतवे ॥४६॥
प्राङ्मुखः पीतवस्त्रादिः शिशिरर्तौ महेश्वरि ।
देवीपादतलाक्रान्तहृदयं विमृशन् शिवे ॥४७॥
कार्पासैर्होमयेद् देवि स्तम्भनं त्वेवमीरितम् ।
ऋतूनां ते व्यवस्थां तु कथयिष्यामि तच्छृणु ॥४८॥
अहोरात्रस्य षड्भागं कृत्वा सूर्योदयादितः ।
ऋतवस्तु क्रमाज्ज्ञेया वसन्तादौ महेश्वरि ॥४९॥

---

पूर्वोक्तविधिना स्तोत्रपाठादिना । वर्षाकाले वर्षर्तौ ॥४२॥

पलायन्तं साध्यम् ॥४३॥

हृदयं साध्यम् ॥४४-४५॥

मस्तकं साध्यम् ॥४६॥

विमृशन् ध्यायन् ॥४७॥

प्रागुक्तानां वसन्ताद्यृतूनां व्यवस्थां स्वरूपम् ॥४८॥

एकैकदिने षड्ऋतुक्रममाह—अहोरात्रस्येति । षड्भागाः प्रत्येकं दशघटिकात्मकाः । सूर्योदयात् प्रत्येके दश घटिकाः । वसन्ताद्याः षड्ऋतवः । एवं वसन्तादौ

तत्रारम्भः प्रकर्तव्यः कर्मणां सिद्धये शिवे ।
यथोक्तविधिना सर्वकर्माणि खलु साधयेत् ॥५०॥
विधिहीनः प्रयोगस्य कर्ता दुःखमवाप्नुयात् ।
असंश्रित्य गुरोः पादमकृत्वा मन्त्रसाधनम् ।
अज्ञात्वा तन्त्रमार्गं च कृत्वा सद्यो विनश्यति ॥५१॥

इति परमानन्दतन्त्रे द्वाविंशोल्लासः ॥२२॥

---

क्रमाज्ज्ञेयम् । एतेन वसन्ते वसन्ताद्याः, ग्रीष्मे ग्रीष्माद्याः षड् ऋतव इत्यादि । तदुक्तं महाशरभकल्पे--"तत्तदृतौ तदाद्यास्तु ऋतवो दशनाडिकाः" इति ॥४९॥

दशघटिकात्मैकऋतौ प्रोक्तपूजाद्यखिलं कर्म कथं भवेदत आह--तत्रेति । तत्तदृताविन्त्यर्थः । वश्यादिकर्मणामारम्भः । यथोक्तदीक्षापुरश्चरणादिविधिना युक्तः ॥५०॥

गुरुपादसंश्रय इति दीक्षाद्युक्तम् । मन्त्रसाधनं पुरश्चरणम् । तन्त्रमार्गः साधनादिधर्मः । षट्चरणः श्लोकः ॥५१॥

सौभाग्यानन्दसंदोहे कामपद्यार्थबोधकः ।
परमानन्दटिप्पण्यामभूद् द्वाविंशतिस्तु सः ॥२२॥



# त्रयोविंशोल्लासः

भैरव उवाच—

एवं संसाध्य देवेशीं ततः कामांस्तु साधयेत् ।
तत्साधने पुरा प्रोक्ताः कूटेश्वर्यो महेश्वरि ॥१॥

मन्त्रिणी दण्डनाथा च साधनीयाः पुनः क्रमात् ।
कूटेश्वर्यो महेशानि आद्या कामेश्वरी भवेत् ॥२॥
वज्रेशी तु द्वितीया स्यात्तृतीया भगमालिनी ।
मन्त्राः पुरैव संप्रोक्ता विधानं शृणु साम्प्रतम् ॥३॥
ब्रह्मा विष्णुश्च रुद्रश्च ऋषयः परिकीर्तिताः ।
गायत्र्युष्णिगनुष्टुप् च छन्दांसि क्रमतः शिवे ॥४॥
बालया विन्यसेदाद्यं ह्रीमित्यादि द्वितीयके ।
पञ्चबाणैस्तृतीये स्यात् समष्टिव्यष्टिभेदतः ॥५॥

---

एवं सामान्यतः कामनासाधनमुक्त्वा तद्विशेषं वक्तुमाह—भैरव उवाचेति । एवं पुरश्चरणेन । देवेशीं मूलदेवीम् । तत्साधनं न मूलविद्ययेति वक्ष्यमाणत्वादाह—तत्साधने इति । पुरा चतुर्दशे । कूटेश्वर्यः कामेश्वरीवज्रेश्वरीभगमालिनो विद्याः ॥१॥

मन्त्रिणी दण्डनाथा चेति । पुनः मूलविद्यासाधनोत्तरम् । उक्तक्रमात् साधनीयाः । कूटेश्वरीषु आद्या ॥२॥

कामेश्वर्यादीनां मन्त्राः । पुरा चतुर्दशोल्लासे । विधानं न्यासादीनाम् ॥३॥

कामेश्वर्यादितिसृणां विद्यानाम् ऋष्यादिन्यासं यथासंख्यं युगपदाह—ब्रह्मेत्यादि ॥४॥

आद्यं कामेश्वरीमन्त्रे । एवं द्वितीयके इत्यादि व्याख्येयम् । ह्रामित्यादि । ह्रीं ह्रः इति । पञ्चबाणैः द्रां द्रीं क्लीं ब्लूं सः इति । व्यष्ट्या पञ्चभिरङ्गुलीषु । समष्ट्या करतलपृष्ठयोः ॥५॥

पीतां पीतांशुकां पीतमाल्याभरणभूषिताम् ।
प्रसूनबाणपुण्ड्रेक्षुपाशाङ्कुशलसत्कराम् ॥६॥
त्रिनेत्रां चन्द्रचूडालां पीतपद्मासने स्थिताम् ।
ध्यायेत् कामेश्वरीं भक्तकामनापूरणोद्यताम् ॥७॥
ध्यात्वैवं प्रजपेद् विद्यामयुतानां चतुष्टयम् ।
श्वेतवर्णां श्वेतवस्त्रभूषामाल्यविराजिताम् ॥८॥
पुष्पबाणान् पुण्ड्रधनुर्दधानां पाशमङ्कुशम् ।
बालेन्दुशेखरां नेत्रत्रयशोभिमुखाम्बुजाम् ॥९॥
वज्रेश्वरीं हृदि ध्यायेद् भक्तपालनतत्पराम् ।
एवं सञ्चिन्त्य विद्यां तु जपेत् पञ्चायुतं शिवे ॥१०॥
रक्ताभां रक्तवसनां रक्तमाल्यविभूषणाम् ।
प्रसूनविशिखानिक्षु चापं पाशं तथाङ्कुशम् ॥११॥
धारयन्तीमिन्दुखण्डशेखरां च त्रिलोचनाम् ।
भगमालां हृदि ध्यायेद् भक्तसौभाग्यवर्धिनीम् ॥१२॥
एवं संस्मृत्य तद्विद्यामयुतं प्रजपेच्छिवे ।
पीतैः श्वेतैः तथा रक्तैः पुष्पैर्होमं सुगन्धिभिः ॥१३॥
तर्पणादित्रयं देवि पूर्वोक्तविधिना भवेत् ।
कृतादिषु महादेवि जपसंख्या चतुर्विधा ॥१४॥

---

तासां क्रमेण ध्यानान्याह--पीतामित्यादि ॥६-७॥

अयुतचतुष्टयं चत्वारिंशत्सहस्रम् ॥८-९॥

पञ्चायुतं पञ्चाशत्सहस्रम् ॥१०॥

मूलदेवतावदायुधध्यानम् ॥११-१२॥

अयुतं दशसहस्रम् । क्रमेण होमद्रव्याण्याह--पीतैरित्यादि ॥१३॥

पूर्वोक्तविधिः एकविंशोक्तविधिः, "मन्त्रसाधनकामस्तु युगसंख्याकलक्षकम्"

एकद्वित्रिचतुःसंख्यगुणेन तु क्रमाद् भवेत् ।
प्रागुक्तसिद्धिचिह्नानामसत्त्वे सप्तधा जपेत् ॥१५॥
अथ पूजाविधिं वक्ष्ये शृणु देवि समाहिता ।
तत्र यन्त्रं प्रवक्ष्यामि पूजनाय क्रमात् त्रिधा ॥१६॥
बिन्दुत्रिकोणषट्कोणवृत्ताष्टदलभूपुरम् ।
बिन्दुत्रिकोणं षट्कोणं चतुरस्रं च षट्दलम् ॥१७॥
अष्टपत्रं भूगृहं च भवेद् यन्त्रं द्वितीयकम् ।
बिन्दुत्रिपञ्चकोणं च षट्कोणं वृत्तमेव च ॥१८॥
अष्टपत्रं कलापत्रं भूपुरं चेति वै क्रमात् ।
पूर्वोक्तेन विधानेन विलिख्यैवं प्रपूजयेत् ॥१९॥
कलशानां सप्तके तु षडङ्गं मूलदेवताम् ।
सम्पूज्य चक्रं पूर्वोक्तविधिना स्थापयेच्छिवे ॥२०॥

---

इत्येकमत्येकविंशत्युक्तमेव स्पष्टतयाऽनुवदति सिद्धयेऽधिकं किञ्चित् विधातुम्--कृतादीति ॥१४॥

चातुर्विध्यमेवाह—एकेति । प्रागेकविंशे सप्तधेति । भगमालिन्या अयुतसंख्या । कलौ तच्चतुर्गुणम् । सिद्धिचिह्नाभावे तत्सप्तधा अष्टविंशत्ययुतमित्यर्थः । एवं सप्तधा जपेन सिद्धिचिह्नाद्यभावे शरभपारिजाताद्युक्तमन्त्रसाधनप्रयोगैः सिद्धिः संपाद्या ॥१५॥

क्रमात् तिसृणाम् ॥१६-१७॥

पश्चिमादाग्नेयान्तं ततो वायव्यान्तम् । ततो नैर्ऋत्यन्तम् । तत ईशान्तं ततः पुनः पश्चिमान्तम् इति पञ्चकोणम् ॥१८॥

कला षोडश । अत्र भूपुरमेकरेखात्मकम् । पूर्वोक्तेन षोडशोक्तेन समकोणदलादि-प्रमाणेन ॥१९॥

सामान्यतश्चक्रप्रतिष्ठाविधिमाह—कलशानामिति । षट्कोणवत् कलशषट्कं मध्ये चैकमिति कलशसप्तकम् । हेतुपात्रषट्कोणवदङ्गदेवतां संपूज्य । पूर्वोक्तविधिना षोडशोक्तविधिना ॥२०॥

बिन्दौ पार्श्वद्वये मूलदेवीं वज्रेश्वरीं तथा ।
भगमालां तथाऽन्यत्र कामेशीं भगमालिकाम् ॥२१॥
कामेशीं चापि वज्रेशीं त्रिकोणे रतिमेद च ।
प्रीतिं मनोभवं चैव षट्कोणे चाङ्गदेवताः ॥२२॥
असिताङ्गाष्टमिथुनमष्टपत्रेऽथ भूगृहे ।
दिक्पालान् द्वारकोणेषु तद्बहिश्चायुधान्यपि ॥२३॥
इति सर्वेषु यन्त्रेषु साधारणविधिः स्मृतः ।
आयुधान्यपि पूर्वोक्तयुक्तया तत्र प्रपूजयेत् ॥२४॥
आग्नेयादिचतुर्ष्वग्रे पञ्चकामान् प्रपूजयेत् ।
द्वितीये तु चतुरस्रे वज्रां वज्रमुखीं तथा ॥२५॥
वज्रमालां वज्रकरां वज्रभूषां च वज्रिणीम् ।
वज्रमूलां सर्ववज्रां पश्चिमाद्यष्टदिक्षु वै ॥२६॥
प्रागादिषड्दले पश्चात् कालीं लक्ष्मीं सरस्वतीम् ।
भद्रां च विजयां कृष्णां पूजयेत् क्रमतः शिवे ॥२७॥

---

आवरणपूजामाह—बिन्दाविति । बिन्दोर्दक्षवामपार्श्वद्वये मूलदेवीं कामेश्वरीम् । अन्यत्र वज्रेश्वरीभगमालिन्योरावरणे ॥२१-२२॥

असिताङ्गाद्यष्टमिथुनं द्वारेषु कोणेषु च भूगृहे दिक्पालान् । तदायुधानि च—"वज्रशक्तिः दण्डखड्गपाशाङ्कुशगदास्तथा । शूलं कमण्डलु पद्ममिति दिक्पालहेतयः॥" इति रुद्रयामलोक्तानि ॥२३॥

सर्वेषु कामेश्वर्यादित्रिषु । आयुधान्यपि साधारणतया पूर्वोक्तयुक्तया मूलावरणोक्तयुक्तया त्रिकोणाद् बहिर्वायव्यादीशान्तम् ॥२४॥

इति सर्वसाधारणमुक्त्वा कामेश्वरीयन्त्रे शेषमाह—आग्नेयेति । भूपुराग्नेयादि । द्वितीये यन्त्रे आद्यचतुरस्रे ॥२५-२७॥

प्रादक्षिण्याद् कूपपूजा चान्यत्राग्रात्तु वामतः ।
बीजाभावे सबिन्द्वाद्यमिति सार्वत्रिकं शिवे ॥२८॥
तृतीये पञ्चकोणे तु ऐश्वर्यां जम्भिनीं तथा ।
मेरुण्डां मोदिनीं हेमा मैं ब्रूमित्यादियोगतः ॥२९॥
अष्टपत्राग्रभागे तु भगिनीं च भगोदरीम् ।
भगाङ्गां भगमालां च तत्पश्चात्तु भगावहाम् ॥३०॥
भगगुह्यां भगयोनिं तथा भगनिपातिनीम् ।
नृपपत्रे तु देवेशि अमृताममृतेश्वरीम् ॥३१॥
आप्यायिनीं जीवनां च धात्रीं चापि विधात्रिकाम् ।
पालनां मङ्गलां विश्वां मोदां भद्रां प्रमोदिनीम् ॥३२॥
आनन्दामीप्सितां शान्तां सौभाग्यामिति पूजयेत् ।
बालोक्तविधिना पात्रसंस्थापनमिहेष्यते ॥३३॥
मूलं षडङ्गदेवीं च नित्यहोमं समाचरेत् ।
एवं संसाध्य तत्पश्चात् प्रयोगांस्तु सुसाधयेत् ॥ ४॥

---

अन्यत्रावरणे अनुक्तस्थले । प्राक् षोडशे पीठपूजाप्रकरणोक्तं बीजाभावे सबिन्द्वाद्य-बीजयोगं स्पष्टार्थमनुवदति—बीजाभाव इति ॥२८॥

तृतीये यन्त्रे ऐं ब्लूं जं ब्लूं इत्यादिमूलोक्तपञ्चकयुक्तम् ऐश्वर्यादि ॥२९-३०॥

नृपपत्रे षोडशपत्रे ॥३१-३२॥

आवरणपूजामुक्त्वा अर्घ्यस्थापनादिकमाह—बालोक्तेति । पात्रस्थापनमित्युपचारादेरुपलक्षणम् । पीठशक्तिस्तु कूटेश्वरीणां मूलदेव्यात्मत्वान्मोहिन्यादीरेव पूजयेत् ॥३३॥

होमे विशेषमाह—मूलमिति । अग्निहोमान्तं समानम् । मूलस्यैकवारं होम इति विशेषः । एवम् उक्तसंख्याक पुरश्चरणादिना ॥३४॥

जपो होमोऽभिषेकश्च यन्त्रं तन्त्रमितीश्वरि ।
पञ्चधा तत्समादिष्टं सर्वतन्त्रेषु शङ्करि ॥३५॥
एकेन वाथ द्वाभ्यां वा त्रिभिर्वापि चतुष्टयैः ।
पञ्चभिर्वापि स्वाभीष्टं साधयेद्योग्यतावशात् ॥३६॥
जपः पूर्वोक्तविधिना द्विगुणस्त्रिगुणोऽपि वा ।
तथा होमो महेशानि विधिना साधिते शुचौ ॥३७॥
अभिषेकमथो वक्ष्ये शृणु देवि समाहिता ।
दीक्षाप्रकरणोक्तं तु कलशं जलपूरितम् ॥३८॥
गोधूमोपरि विन्यस्य तद्वद् वस्त्रेण वेष्टितम् ।
तत्तद्दिङ्मुख आसीनस्तत्तत्काले तथार्चयेत् ॥३९॥
प्रजप्य तु सहस्रं वै नामसाध्ययुतं मनुम् ।
अन्ते कुरुयुतं पश्चात् साधकं चाभिषेचयेत् ॥४०॥

---

प्रयोगे साधनभेदमाह—जप इत्यादि । तत् साधनम् ॥३५॥

योग्यतावशाद् राजतापसादिवशीकरणादिकं पञ्चभिः । साधारणपुरुषस्यैकेन द्वाभ्यां वेत्यादि ॥३६॥

क्रमेण प्रोक्तपञ्चविधसाधनप्रकारमाह—जप इति । पूर्वोक्तविधिनेति पूर्वोल्लासोक्तविधिना । द्विगुणः द्विसहस्रमित्यादि । तथा द्विगुणो वा होमः । शुचौ अग्नौ ॥३७॥

प्रकरणोक्तवत् ॥३८॥

पञ्चधान्यस्थाने गोधूमः । तद्वद् दीक्षोक्तवत् । तत्तद्दिक् उत्तरादिदिक् । तत्तत्काले वसन्तादिकाले । तथा रक्तपुष्पादिना ॥३९॥

नामेत्यादि । देवदत्तं वशं कुरु इति मन्त्रान्तयुतम् । साधको वश्यादोच्छुः ॥४०॥

एवं त्रिसप्तकेनैव भवेद् वश्यादि शङ्करि ।
द्वेषणे कृष्णमाषः स्याद् उच्चाटे सर्षपोपरि ॥४१॥
शान्तिस्तण्डुलसंस्थानान्मारणं कोद्रवाद् भवेत् ।
स्तम्भनं मुद्गयोगेन ज्ञात्वैवं साधयेच्छिवे ॥४२॥
अथ यन्त्रं शृणु शिवे तत्सामान्यविधिं पुरा ।
रौप्ये सीसे ताम्रके च सत्त्वे स्वर्णे च रङ्गके ॥४३॥
पट्टवस्त्रे चोर्णवस्त्रे ध्वजवस्त्रे तथैव च ।
शववस्त्रे भूर्जपत्रे कार्पासजनिते तथा ॥४४॥
तत्तद्वर्णोद्भवैः सूत्रैर्बन्धनं तु भवेच्छिवे ।
लोहेन धातुषु लिखेद् वंशेनार्कभवेन च ॥४५॥
वैभीतकेनास्थिजेन बैल्वेन खादिरेण च ।
रक्तचन्दनकं तद्वद् हरितालं च गैरिकम् ॥४६॥

---

त्रिसप्तकेन एकविंशतिदिनैः । द्वेषणे कर्तव्ये कलशाधः कृष्णमाषः स्थापनीयः । एवमग्रेऽपि ॥४१॥

एवं तत्तत्प्रयोगे तत्तद्धान्यम् ॥४२॥

पुरा आदौ यन्त्रसामान्यविधिम् । यन्त्राधारं धातुमयं षट्कमाह—रौप्येति । सीसे सत्वं रङ्गं च । सीसा जस्ता रांगा इति काशीभाषया प्रसिद्धम् ॥४३॥

यन्त्राधारं क्रमेण वस्त्रभेदमप्याह—पट्ट इत्यादि । कार्पासजनिते वस्त्रे ॥४४॥

तत्तद्वर्णः वश्याद्युक्तरक्तादिवर्णः । दक्षहस्तादिषु बन्धनम् । लेखनीमाह—लोहेनेति ॥४५॥

पट्टवस्त्रादिषट्के क्रमेण वंशादिलेखनीषट्केन । रक्तचन्दनादि लेखनद्रव्यम् ॥४६॥

चिताङ्गारं चाष्टगन्धं दरदं चेति वै क्रमात् ।
लेखनद्रव्यमुक्तं ते तद्वेष्ट्यावेष्टयेत्ततः ॥४७॥
तत्तद्वर्णेन सूत्रेण लाक्षया तस्य चोपरि ।
गृहे तन्निहितं देवि दक्षहस्ते शिरस्यथ ॥४८॥
कटिदेशे वामहस्ते हृदि कण्ठे च धारयेत् ।
कोष्ठात्मकं कोणरूपं दलात्मकमिति त्रिधा ॥४९॥
प्रासादपरबीजं तु मध्यबीजादधो लिखेत् ।
षष्ठ्यन्तं साधकपदं तदूर्ध्वं साध्यनामकम् ॥५०॥
द्वितीयान्तमधो देवि कुरुशब्दं तु पार्श्वयोः ।
नेत्रे श्रोत्रे च कोणेषु जलबीजं च दिक्षु वै ॥५१॥
यन्त्रगायत्रिकावर्णांस्त्रिशश्चाष्टसु दिक्षु वै ।
दिक्पबीजानि तद्बहिश्च मातृकावेष्टनं बहिः ॥५२॥

---

दरदं हिङ्गुलम् । तत् स्वर्णपट्टादिरूपं वेष्ट्य संवर्त्य तत्तद्वर्णेन सूत्रेणावेष्टयेत् ॥४७॥

तस्य सूत्रस्योपरि लाक्षया आवेष्टयेत् । तद्यन्त्रं साध्यस्य गृहे क्वचिन्निहितं कार्यम् । क्वचित् स्वाङ्गे वा धारणीयम् । तान्यङ्गानि क्रमेणाह—दक्षहस्त इत्यादि ॥४८॥

कोष्ठाद्यात्मना यन्त्रसामान्यं त्रिधा ॥४९॥

यन्त्रसामान्यलेखनविधिमाह—प्रासादेति । प्रासादपरबीजं हसौः । मध्यकोष्ठस्थमध्यबीजात् । षष्ठ्यन्तं साधकपदं देवदत्तस्येति । तदूर्ध्वे मध्यबीजोर्ध्वे ॥५०॥

मध्यबीजाधो द्वितीयान्तं साध्यनाम यज्ञदत्तमिति । मध्यबीजपार्श्वयोः नेत्रे ईं इः श्रोत्रे उं ऊं । यन्त्रस्य ईशाग्निवायुनिर्ऋतिकोणेषु । जलबीजं वं ॥५१॥

दिक्पबीजानि अष्टमे उक्तानि । तद्बदर्ष्टदिक्षु । बहिः सर्वबहिः ॥५२॥

तथैव वेष्टनं प्राणमनुनापि महेश्वरि ।
यवराजाय विद्महे वरप्रादाय धीमहि ॥५३॥
तन्नो यन्त्रः प्रचो वै दयाच्चतुर्विंशदक्षरी ।
यन्त्रगायत्रिरित्येषा मया प्रोक्ता महेश्वरि ॥५४॥

एवं विलिख्य तत्काले प्राणान् संस्थाप्य पूजयेत् ।
ततो जपेत्सहस्राणां दशकं तु समाहितः ॥५५॥
नामादियुक्तं पश्चात्तु होमाद्यङ्गं समापयेत् ।
तत्तत्काले धारणं स्यादेवं संसाधयेद् बुधः ॥५६॥

अथ यन्त्रेषु देवेशि विशेषं वच्मि तच्छृणु ।
कामेश्वर्यास्तु देवेशि यन्त्राणि प्रब्रवीमि ते ॥५७॥
रेखाचतुष्टयेनैव नवकोष्ठं लिखेद् बुधः ।
बालाबीजत्रयं तत्र त्रिधा कोष्ठेषु वै लिखेत् ॥५८॥
तिर्यग्रूपेण रेखाग्रे त्रिशूलानि प्रकल्पयेत् ।
पाशबीजं लिखेदूर्ध्वशूलाग्रेष्वधरेषु च ॥५९॥

---

तथैव मातृकावेष्टनवत् । मातृकावेष्टनाद् बहिः वश्ययन्त्रस्य प्राणा इह प्राणेत्यादि प्रोक्तप्राणप्रतिष्ठामनुना । यन्त्रगायत्रीमाह—यन्त्रराजायेति । आत् आत् ॥५३॥

वै इति त्यक्त्वा यात् इत्यन्तं स्वरूपम् ॥५४॥

तत्काले वश्यादावुक्तवसन्तादिकाले । यन्त्रस्य प्राणान् संस्थाप्य । तत्र देवतामावाह्य पूजयेत् । ततः एवं पूजान्ते ॥५५॥

नामादि देवदत्तं वशं कुरु इत्यादि मन्त्रान्ते युक्तम् । पूर्वोक्तवत् । एवं जपः सर्वप्रयोगेषु ज्ञेयः । तत्तद् वश्यादिकाले ॥५६॥

सामान्यविधिमुक्त्वा बीजादिविशेषमाह—अथेति ॥५७-५८॥

बीजलेखनप्रकारमाह—तिर्यग्रूपेणेति । कोष्ठत्रयात्मकपङ्क्तित्रये बालाबीजत्रयम् । पाशबीजं आ । पार्श्वेषु शूलाग्रेषु । मायाबीजं लिखेदित्यन्वयः ॥५९॥

पार्श्वेषु मायाबीजं च तथान्यच्छृणु शङ्करि ।
कोष्ठषोडशके देवि पञ्चबाणांस्तु बाह्यतः ॥६०॥
अन्तश्चतुष्टयं चैकं कृत्वा बाणेषु तुर्यकम् ।
शेषं पूर्ववदत्रापि शृणुष्वन्यत् समाहिता ॥६१॥
पञ्चविंशतिकोष्ठेषु तिर्यग्बाणान् लिखेत् सुधीः ।
शेषं पूर्ववदेव स्यात् षट्त्रिंशत्कोष्ठके शृणु ॥६२॥
पञ्चबाणान् बहिर्वीथ्यामन्तर्वीथ्यां तथैव च ।
षडावृत्त्या लिखित्वैवं मध्यमेकं प्रकल्पयेत् ॥६३॥
तत्र मायां समालिख्य शेषं पूर्ववदाचरेत् ।
त्रिकोणं तु समालिख्य अधोमुखतया शिवे ॥६४॥
अग्रादिवामतो बालात्रयं मध्ये तु वाग्भवम् ।
अग्रकोणबहिः पाशं मायां पार्श्वस्य कोणयोः ॥६५॥
बहिर्वृत्तं समालिख्य भूपुरं तु प्रकल्पयेत् ।
पञ्चकोणं लिखित्वैवमधोमुखतया शिवे ॥६६॥

---

अन्यत् यन्त्रान्तरम् । बाह्यतः मध्यकोष्ठचतुष्टयं त्यक्त्वा बहिश्चतुर्दिक्षु द्वादशसु कोष्ठेषु ॥६०॥

तुर्यरहितान् पञ्चबाणान् द्रां द्रीं क्लीं सः इति बाह्यतो मध्यकोष्ठचतुष्टयमेकीकृत्य तत्र बाणेषु तुर्यं ब्लूं ॥६१॥

षड्रेखाभिः पञ्चविंशतिकोष्ठेषु तिर्यक्पञ्चपङ्क्तिषु पञ्चबाणान् सप्तरेखाभिः षट्त्रिंशत्कोष्ठके ॥६२॥

बहिर्वीथ्यां विंशतिकोष्ठेषु चतुरावृत्त्या । अन्तर्वीथ्यां बीजद्वयाधिकद्विरावृत्त्येति षडावृत्त्या । मध्यचतुष्कमेकीकृत्य तत्र मायामित्यन्वयः ॥६३॥

कोणयन्त्राण्याह—त्रिकोणमिति । अधोमुखं पश्चिमाग्रम् ॥६४॥

वामतः कोणान्तर्बालाबीजत्रयम् । वाग्भवं ऐं । पाशं आं । कोणयोर्बहिः ॥६५-६६॥

पञ्चबाणांस्तु कोणेषु मायां मध्ये तथा लिखेत् ।
पाशं मायां कोणबाह्ये क्रमेणैव तु संलिखेत् ॥६७॥
वृत्तं भूपुरमप्युक्तं षट्कोणं रचयेद् बुधः ।
बालां द्विधा तु कोणेषु मध्ये पाशं बहिस्तथा ॥६८॥
पाशं मायां लिखेद् विद्वान् दलयन्त्रमथो शृणु ।
चतुर्दले कर्णिकायां पाशं पत्रेषु वाग्भवम् ॥६९॥
दलाग्रे तुर्यबाणस्तु वृत्तं भूपुरमेव च ।
कर्णिकायां तथा मायां द्विर्बालां षड्दलेषु च ॥७०॥
दलाग्रे तुर्यबाणः स्याद् वृत्तं भूपुरमेव च ।
कर्णिकायां तुर्यबाणो दले मायां च पाशकम् ॥७१॥
वाग्भवं तु दलाग्रे तु वृत्तं भूपुरमेव च ।
वश्ये त्विमानि यन्त्राणि प्रोक्तानि तु महेश्वरि ॥७२॥
वेष्टयेन्नामवर्णैस्तु साध्यस्य पृथिवीपुटैः ।
आकाशबीजपुटितैर्द्वेषणे नामवर्णकैः ॥७३॥
वायुबीजेन पुटितैरुच्चाटे मारणे तथा ।
अग्निबीजेन पुटितैर्जलबीजेन शान्तिके ॥७४॥

---

कोणबाह्ये पार्श्वद्वये । पाशं मायां दक्षवामक्रमादिति प्रतिकोणम् ॥६७॥
कोणबहिः । तथा पूर्वोक्तवत् । पार्श्वद्वये पाशं मायाम् इत्यन्वयः ॥६८-६९॥
दलाग्रेऽन्तः ॥७०॥
षड्दलं यन्त्रं प्रकारान्तरेणाह—कर्णिकायामिति । मायां पाशं त्रिरावृत्त्या षड्दलेषु ॥७१॥
इमानि नवकोष्ठादिषड्दलान्तानि ॥७२॥
वश्ये पृथिवीपुटैः साध्यनामवर्णैः । लं दे लं व लं द लं त्त लं । इति यन्त्रस्य सर्वबाह्ये वेष्टयेत् । आकाशबीजं हं ॥७३॥
वायुबीजं यं । अग्निबीजं रं । जलबीजं वं ॥७४॥

स्तम्भने चाङ्कुशेनैव ज्ञात्वैवं तु समाचरेत् ।
वज्रेश्यास्तु तथा यन्त्रे बालास्थाने तथेश्वरि ॥७५॥
कवचं चापि शङ्कुं च मायां चैव तु योजयेत् ।
पञ्चबाणे पञ्चरत्नबीजान्यपि महेश्वरि ॥७६॥
यन्त्रेषु भगमालिन्याः पाशं मायां तथाङ्कुशम् ।
बालास्थानेऽथ बाणेषु ब्रूमाद्यान् पञ्चबीजकान् ॥७७॥
प्रोक्तान्येवं तु यन्त्राणि तन्त्राणि शृणु मे तथा ।
ताड्पत्रे समालिख्य त्रिकोणं तद्बहिः पुनः ॥७८॥
षट्कोणमष्टपत्रं च भूगृहं चापि शङ्करि ।
त्रिकोणे तु त्रिबीजानि बालायास्तुर्यबाणकम् ॥७९॥
षट्कोणेष्वष्टपत्रेषु पाशं नामाक्षराणि च ।
सन्धिष्वेवं लिखित्वा तु प्राणान् संस्थाप्य मार्तिके ॥८०॥
पात्रे क्षौद्रेण भरिते क्षिप्त्वा तु प्रजपेद् बुधः ।
सहस्रं सप्तदिवसैः कालोऽपि वशमेष्यति ॥८१॥

---

अंकुशः क्रों । कामेश्वरीयन्त्रेषु यत्र बालाबीजं तत्स्थाने ॥७५॥

कवचं हुं । शङ्कुं फ्रें । पञ्चबाणस्थाने पञ्चरत्नानि ग्लूं स्लूं म्लूं प्लूं ब्लूं इति ॥७६॥

बालास्थाने पाशं मायामङ्कुशम् । पञ्चबाणस्थाने क्लूमित्यस्याद्यं तन्मन्त्रस्थितं पञ्चकम् । ऐं जं भें में हें इति ॥७७-७८॥

तुर्यबाणकं ब्लूं । इति षट्कोणेष्वित्यन्वयः ॥७९॥

षट्कोणेषु पाशम् । अष्टपत्रेषु साध्यनामाक्षराणि । एवं षट्कोणवत्तत्र षट्कोण-सन्धिषु दलवद्दलसन्धिषु च पाशं नामाक्षराणि च क्रमेण । साध्यप्राणान् प्रतिष्ठाप्य । मार्तिके पात्रे ॥८०॥

क्षौद्रं मधु । यन्त्रं क्षिप्त्वा ॥८१॥

नारी चारुन्धतीतुल्या वशीभवति वै ध्रुवम् ।
षट्कोणं चाङ्कुशं क्षिप्त्वा कटुतैले तु निक्षिपेत् ॥८२॥
विद्वेषः स्यादतिप्रीतियुक्तेऽपि चिरमीश्वरि ।
निक्षिप्य गोमूत्रके तु पाचयेच्चुल्लिकोपरि ॥८३॥
उच्चाटनं शिवस्यापि कैलाशाद् भवति द्रुतम् ।
स्नुहाक्षीरे तु निक्षिप्य पाचयेत्तेन वै शिवे ॥८४॥
अमरोऽप्यन्तकपुरं प्रयात्यत्र न संशय ।
षट्कोणे तु लिखेद् बीजममृताख्य महेश्वरि ॥८५॥
गोक्षीरे निक्षिपेद् यन्त्रं शान्ताः स्युः सकलापदः ।
गोघृते निक्षिपेत्तेन ज्वराच्छान्तिर्भवेच्छिवे ॥८६॥
अजाक्षीरे विनिक्षिप्य शान्तः स्याच्छीतिकाज्वरः ।
निम्बक्वाथे तु निक्षिप्य वातरोगः प्रशाम्यति ॥८७॥
नारिकेलोदके तद्वत् पित्तरोगः शमं व्रजेत् ।
मरिचक्वाथमध्यस्थं शीतरोगं हरेच्छिवे ॥८८॥
शीतोदकस्थितं तत्तु दाहं दूरीकरोति वै ।
गुडोदकस्थापितं तु अतीसारादिकं हरेत् ॥८९॥
चन्दनोदकमध्यस्थं नेत्ररोगं हरेद् द्रुतम् ।
त्रिफलाक्वाथमध्यस्थं सर्वरोगहरं भवेत् ॥९०॥

---

तद्यन्त्रस्यैव षट्कोणे पाशस्थानेऽङ्कुशं क्षिप्त्वा ॥८२॥
तदेव यन्त्रं गोमूत्रे निक्षिप्य पाचयेत् ॥८३॥
स्नुही सेहुण्डेति काशीभाषया ॥८४॥
अमृताख्यं जूं ॥८५॥
आपदः मार्याद्युपद्रवजनिताः ॥८६-८८॥
अतीसारादीत्यादिना संग्रहण्यादि ॥८९-९१॥

अर्कदुग्धस्थितं चुल्ल्यां पाचयेत् तत्तु शङ्करि ।
स्तम्भनं तु भवेत्तेन वायोरपि न संशयः ॥९१॥
अथान्यच्छृणु देवेशि रहस्यं सर्वतोवरम् ।
भ्रमच्चक्रमृदा देवि पृथिव्यस्पर्शयोगतः ॥९२॥
कृत्वा पुत्तलिकां मूर्ध्नि साध्यनाम लिखेत्ततः ।
तत्प्राणस्थापनं कृत्वा हृदि पाशं विलिख्य च ॥९३॥
कनिष्ठाङ्गुलरक्तेन तदङ्गं लेपयेद् बुधः ।
पूज्य षोडशभिस्तं वै निखनेद् हस्तमात्रके ॥९४॥
रक्तस्य करवीरस्य मूले तत्रैव संस्थितः ।
जपेद् विद्यायुतं देवि त्रिलोकीं वशमानयेत् ॥९५॥
अङ्कुशं हृदि निक्षिप्य कटुकस्तु विलेपतः ।
निखनेत्तालवृक्षाधो द्वेषः स्याद् द्रुतमेव वै ॥९६॥
हृदि वायुं विनिक्षिप्य गोमयेन विलिप्य च ।
यद्ग्राममार्गे निखनेत् तत्रोच्चाटो भवेद् द्रुतम् ॥९७॥
विलिख्य हृदि वह्निं तु संलिप्य कटुकत्रयैः ।
बर्बूरकण्टकेनैव हृदि संविध्य शङ्करि ॥९८॥

---

भ्रमद् यत्कुलालचक्रं तदुपरिस्थितमृदं पृथिव्यामसंस्थाप्य ॥९२॥
तन्मृदा पुत्तलिकां साध्यप्रतिमाम् । तन्मूर्ध्नि साध्यप्राणस्थापनम् ॥९३॥
स्वकनिष्ठाङ्गुलं तदङ्गं प्रतिमाङ्गम् ॥९४-९५॥
पुत्तलिकाहृदि निक्षिप्य विलिख्य । कटुकाः क्षुद्रसर्षपाः ॥९६॥
वायुं यं । तत्र तद्ग्रामे ॥९७॥
वह्निं र । कटुकत्रयं मरीच पिप्पली शुण्ठी । बर्बूरः बबूर इति भाषया । प्रतिमाहृदि संविध्य ॥९८॥

निखनेत्तु चितास्थाने शीघ्रं मृत्युपुरं व्रजेत् ।
हृदि बीजं पार्थिवं तु विलिख्य शणसूत्रकैः ॥९९॥
तिलपिण्याकलेपेन निखनेद् गोष्ठमध्यतः ।
तस्योपरि शिलां दत्वा स्यात् स्तम्भनमतिद्रुतम् ॥१००॥
अथ ते कथयिष्यामि सद्यः प्रत्ययकारकान् ।
प्रयोगान् शृणु देवेशि दुर्लभान् कामिनां नृणाम् ॥१०१॥
शालिपिष्टप्रतिकृतिं हृदि वायुं तथाङ्कुशम् ।
उन्मत्तरसलेपेन निखनेत् तत्तरोरधः ॥१०२॥
जपेन्निशीथके नग्नो मुक्तकेशस्तु निर्भयः ।
एकाकी दर्शदिवसे सहस्रजपमात्रतः ॥१०३॥
उन्मत्तस्तु भवेत् सद्यस्तथोद्धृत्य नदीजले ।
द्विधा छित्वा विनिक्षिप्य जले स्नात्वा सहस्रकम् ॥१०४॥
पुनः स्वस्थो भवेत् सद्यः साक्षाद्देवोऽपि शङ्करि ।
मरिचेन समालिप्य स्नुहीमूले खनेद् बुधः ॥१०५॥
महाज्वरेण संयुक्तो भवत्येव न संशयः ।
शल्यकीकण्टकेनैव हृद्याविध्य महेश्वरि ॥१०६॥

---

पार्थिवबीजं लं ॥९९॥

सूत्रकैः संवेष्टितोपरि पिण्याकलेपेन । पिण्याकं तैलनिर्गमानन्तरशेष-पिष्टम् ॥१००-१०१॥

प्रतिकृतिः प्रतिमा । व य्वङ्कुशबीजे विलिख्य । तत्तरुरुन्मत्ततरुः ॥१०२॥

तत्र स्थित्वा जपेत् । दर्शः अमावास्या ॥१०३॥

शत्रुरुन्मत्तो भवेत् । प्रशमोपायमाह—उद्धृत्येति । तज्जले स्नात्वा सहस्रकं जपेदिति शेषः ॥१०४॥

मरिचेन तां प्रतिकृतिं समालिप्य ॥१०५॥

आविध्य निखनेत्, इति योज्यम् ॥१०६-१०७॥

हृदि शूलव्यथा तस्य जायते द्रुतमेव तु ।
धूपयित्वा बिडालस्य रोमभिर्निखनेद् भुवि ॥१०७॥
अपस्मारी भवेत् सद्यः शान्तिं पूर्ववदाचरेत् ।
सेनाभङ्गं प्रवक्ष्यामि शृणु देवि समाहिता ॥१०८॥
सीसपट्टे हस्तमिते त्रिकोणं वृत्तमेव च ।
षट्कोणं चाष्टकोणं च नृपपत्रं ततः परम् ॥१०९॥
भूपुरत्रयमालिख्य सेना यस्यां दिशि स्थिता ।
तत्र द्वारं प्रकुर्वीत समरेखान्यतो भवेत् ॥११०॥
बीजत्रयं त्रिकोणेषु बालायाः परमेश्वरि ।
षट्कोणेषु षडङ्गानि नागकोणेऽङ्कुशं लिखेत् ॥१११॥
नृपपत्रे पञ्चबाणान् प्रत्येकं विलिखेच्छिवे ।
तद्बाह्ये नाम सेनायाः पत्युरष्टदिशासु वै ॥११२॥
तत्पार्श्वे भञ्जयद्वन्द्वं वायुबीजेन वेष्टनम् ।
दलाग्रेषु त्रिशूलानि तत्र वह्निं समालिखेत् ॥११३॥

---

सर्वत्र शान्तिः पूर्ववत् । आरम्भोक्तं मूर्ध्नि नामलेखनादिकं सर्वत्र ज्ञेयम् । शत्रुसेनाया भङ्गो यस्मात्तं प्रयोगम् ॥१०८॥

नृप षोडश ॥१०९॥

स्वस्थानाद्यस्यां दिशि सेना स्थिता, यन्त्रे तद्दिशि भूपुरे द्वारम्, अन्यतोऽन्यत्र द्वाररहितं भूपुरं समरेखारूपम् ॥११०॥

त्रिकोणकोणेषु । अङ्गानि नमः स्वाहा इत्यादीनि । नागकोणमष्टकोणम् ॥१११॥

एकैकपत्रे पञ्चबीजमिति प्रत्येकम् । बहिरष्टदिक्षु सेनापतिनाम ॥११२॥

पतिनाम पार्श्वयोः प्रत्येकं भञ्जयद्वन्द्वम् । भञ्जय देवदत्तं भञ्जयेति । वायुबीजं यं । तत्र त्रिशूलेषु । वह्निः रं ॥११३॥

प्रत्येकं साध्यनामार्णान् वायुबीजपुटान् शिवे ।
वेष्टयित्वा ततः पश्चाद् द्वारं सेनाभिमुख्यतः ॥११४॥
प्राङ्मुखं चापि तद्यन्त्रं तत्र वै निखनेद् बुधः ।
जपेत् पञ्चायुतं देवि करवीरसुमैर्हुनेत् ॥११५॥
रक्तैः पञ्चायुतं तेन तत्रागत्य तु सा चमूः ।
महाभयेन भग्ना वै पलायति न संशयः ॥११६॥
अथ शृणु महेशानि मन्त्रिणीदण्डिनीविधिम् ।
मतङ्गश्च वराहश्च ऋषिः पश्चान्महेश्वरि ॥११७॥
पङ्क्तिश्छन्दोऽथ गायत्रीछन्दश्चापि प्रकीर्तितम् ।
काममायारमाभिर्वै द्वितीयादित्रिभिस्तथा ॥११८॥
विन्यस्य तु विधानेन हृदि ध्यायेन्महेश्वरीम् ।
रत्नासनस्थां श्यामाभां शृण्वतीं शुकभाषणम् ॥११९॥
चन्द्रचूडां विपञ्चयाढ्यहस्तां पद्मपदां भजे ।
हलं च मुसलं शङ्खं चक्रं पद्मं च पाशकम् ॥१२०॥
वरं चाभीतिकां चैव दधानां पाणिपङ्कजैः ।
हेमाभां पोत्रिवदनां चन्द्रचूडां शुचिस्मिताम् ॥१२१॥

---

साध्यनाम सेनापतिनाम यं दे यं व यं द यं त्त यं इति सर्वबहिर्वेष्टयित्वा । यत्र द्वारं तत्सेनाभिमुख्यतः ॥११४॥

तन्मार्गे सेनागमनमार्गे । रक्तैः सुमैः पुष्पैः ॥११५-११६॥

न्यासादिविधिम् ॥११७॥

काम माया र ' क्लीं ह्रीं श्रीं। वाराहीमन्त्रे द्वितीयादि ऐं ग्लौं सौः ॥११८-११९॥

दण्डिनीध्यानमाह—हलं चेति ॥१२०॥

ऊर्ध्वाद्वामदक्षक्रमेणायुधानि । पोत्रिवदना वाराहमुखी ॥१२१-१२२॥

पृथुस्तनभरां पद्मसंस्थां हृदि विभावयेत् ।
एवं ध्यात्वा जपेद्देवि चत्वारिंशत्सहस्रकम् ॥१२ ॥
अम्भोजैः करवीरैर्वा जपापुष्पैर्दुनेत्ततः ।
बिन्दुस्त्रिपञ्चकोणे च वसुभूपवसुच्छदम् ॥१२३॥
चतुर्दलं भूपुरं च मन्त्रिणीयन्त्रमुत्तमम् ।
मूलविद्यां त्रिधा वेष्ट्या षडङ्गयुवतीर्यजेत् ॥१२४॥
अग्रादिक्रमतो देवि रतिप्रीतिमनोभवान् ।
त्रिकोणे पञ्चकोणे तु मूले द्रावणबाणकम् ॥१२५॥
शोषणं बन्धनं मोहनमुन्मादनबाणकम् ।
अग्रे तु पञ्चकामांस्तु तत्तद्बीजादियोगतः ॥१२६॥
पञ्चकोणस्यैव मध्ये पृष्ठपार्श्वे तथैव च ।
शुकादिषट्कं देवेशि श्यामलायाः समर्चयेत् ॥१२७॥
वसुपत्रस्य मूले तु ब्राह्म्याद्यष्टकमर्चयेत् ।
लक्ष्मीसरस्वतीरतिप्रीतिकीर्तीस्तु शान्तिकाम् ॥१२८॥
पुष्टिं तुष्टिं दलाग्रेषु नृपपत्रेऽथ पूजयेत् ।
वामाज्येष्ठारौद्रीशान्तिश्रद्धाः पश्चात् सरस्वतीम् ॥१२९॥

---

यन्त्रमाह—बिन्दुरिति । त्रिकोणं पञ्चकोणम् । वसुभूपवसुछदम् अष्टपत्रं षोडशपत्रम् अष्टपत्रम् ॥१२३॥

आवृतिमाह--मूलेति । मूलविद्यां बिन्दौ । बाला षडङ्गवत् षडङ्गयुवतीः॥१२४॥

त्रिकोणे अग्रादिक्रमत इत्यन्वयः । पञ्चकोणमूले ॥१२५॥

शोषणादिकं च बाणाऽन्त्यम्, आन्ध्यतयोर्बाणयोगात् । पञ्चकोणाग्रे । पञ्चकामा बालाप्रकरणोक्ताः ॥१२६॥

पञ्चकोणमध्ये बाणकामान्तराले षष्ठीपृष्ठपार्श्वे पञ्चकोणपृष्ठभागे शुकादिश्यामलायाः षट्कं शुकश्यामलादिकम् ॥१२७-१२९॥

कृपाशक्तिं लक्ष्मीसृष्टिमोहिनीश्च प्रमाथिनीम् ।
आश्वासिनीवीचिविद्युन्मालिनीस्तदनन्तरम् ॥१३०॥
सुरानन्दां नागबुद्धिमष्टपत्रे सिताङ्गकाः ।
चतुर्दले तु मातङ्गीं सिद्धलक्ष्मीं ततः परम् ॥१३१॥
महाद्ययुग्ममेतद्वै भूपुरे दिक्षु वै क्रमात् ।
वीणामृदङ्गपणवतालवेणुश्रुतीरणाः ॥१३२॥
मुरजं चर्चयेद् बाह्ये दिक्पालांस्तु क्रमेण वै ।
अथ वक्ष्ये दण्डनाथायन्त्रं शृणु समाहितम् ॥१३३॥
बिन्दुत्रिपञ्चषट्कोणं नागपत्रं शतच्छदम् ।
सहस्रपत्रं भूरेखात्रयमत्र सुपूजयेत् ॥१३४॥
षडङ्गान्तं पूर्ववत्तु त्रिकोणे तु प्रदक्षिणम् ।
जम्भिनीं मोहिनीं तद्वत् स्तम्भिनीं पञ्चकोणके ॥१३५॥
अन्धिन्याद्यास्तु षट्कोणे ब्राह्मीं माहेश्वरीं तथा ।
कौमारीं वैष्णवीं तद्वद् इन्द्राणीं चण्डिकां तथा ॥१३६॥
षड्योगिनीस्तु कोणाग्रे डाकिन्याद्याः समर्चयेत् ।
अष्टपत्रे तु वार्तालीं वाराहीं च ततः परम् ॥१३७॥

---

कृपाशक्तिरित्येकम् । वीचिः । विद्युन्मालिनी ॥१३०-१३१॥

महाद्ययुग्मम् । महामातङ्गी । महासिद्धलक्ष्मीः । श्रुति ईरण इति द्वयम् ॥१३२॥

भूपुरबाह्ये ॥१३३॥

त्रिकोणं पञ्चकोणं षट्कोणं नाग अष्टौ ॥ ३४॥

पूर्ववद् मन्त्रिण्यावरणवत् । पञ्चकोणके अन्धिन्याद्या इत्यन्वयः ॥१३५-१३६॥

कोणाग्रे इत्यनेन पूर्वोक्ता ब्राह्म्याद्याः कोणमध्ये । योगिनीडाकिन्याद्या लघुषोढान्यासोक्ताः ॥१३७॥

वाराहमुखीमन्त्रिण्यावपि पञ्चकमीश्वरि ।
पञ्चविंशतिपत्राणां खण्डे प्रागादितः क्रमात् ॥१३८॥
महिषं च वराहं च सिंहं व्याघ्रं तदेव च ।
सहस्रच्छदके तस्मादष्टधा तु विभक्तके ॥१३९॥
हेतुकं भैरवं कालं करालं बटुकं शिखिम् ।
भीषणं दण्डहस्तं च पूजयेत् क्रमतः शिवे ॥१४०॥
भूपुराद्ये हलं शङ्खं मुशलं चक्रमब्जकम् ।
पाशं वरं चाभयं च दिक्पालांस्तु द्वितीयके ॥१४१॥
तदायुधानि तार्तीये बालाविधिवदर्चयेत् ।
प्रयोगा एतयोर्देवि कामेश्वर्या इवैव तु ॥१४२॥
सात्त्विके श्यामला देवि तामसे दण्डधारिणी ।
सकृत्प्रयोगं कृत्वा तु जपेत् पञ्चसहस्रकम् ॥१४३॥

---

शतपत्रे पञ्चविंशतिपत्रात्मकखण्डचतुष्टये ॥१३८॥

एवं सहस्रदले सपादशतात्मकाष्टखण्डे । तस्मात् प्रागादितः ॥१३९-१४०॥

भूपुराद्येऽष्टदिक्षु । द्वितीयके भूपुरे ॥१४१॥

तेषां दिक्पालानामायुधानि । तार्तीये भूपुरे । अत्र सृष्टिक्रमानुरोधात्तार्तीयरेखा बाह्यरेखा । आद्यरेखा आन्तररेखा ज्ञेया । बालाविध्युक्तक्रमादर्चयेत् । एतयोः मन्त्रिणीदण्डिन्योः ॥१४२॥

सात्त्विके शान्त्यादौ । तामसे मारणादौ । एवं काम्यस्य सकृदनुष्ठानेऽपि प्रायश्चित्तमाह—सकृदिति । पद्धतौ निरूपितमहार्चनोपयुक्तमन्त्रिणीदण्डिन्योः पूजनप्रकारः प्रसङ्गाद् विविच्यते । तत्र द्वारपूजादिमातृकान्यासान्तं समानम् । विशेषन्यासस्तु परशुरामसूत्रोक्तो ज्ञेयः । स च मन्त्रिण्या मातृकान्यासो रत्यादिन्यासो मूलविद्यान्यास इति त्रिधा । तथा च सूत्रम्-षडङ्गां बालासहितां मातृकां मूलहृन्मुखेषु रतिप्रीतिमनोभवान् विन्यस्य मूलं सप्तदशधा खण्डयित्वा षड् ब्रह्मबिले त्रीणि ललाटे चत्वारि भ्रूमध्ये दक्षवामेक्षणयोः षडष्टौ सप्तास्ये दक्षवामश्रुतिकण्ठेष्वेकैकम् । दक्षवामांसयोरष्टौ च दश हृदि दश दक्षवामस्तनयोरष्टावष्टौ नव नाभौ। द्विः स्वाधिष्ठाने षडाधारे पुनराधारादिब्रह्मबिलपर्यन्तं सप्तदशखण्डानुक्तस्थानेषु न्यस्येति मन्त्रिणीक्रमे सर्वत्र मन्त्रादौ बाला ज्ञेया । षडङ्गं न्यस्य ऐं क्लीं सौः अं नम इत्यादि मातृकां च न्यस्य आधारहृदयमुखेषु रतिप्रीतिमनोभवान्न्यस्य । मूलसप्तदशखण्डैर्न्यसेत् । प्रकृते सूत्रोक्तो मन्त्रोऽष्टनवत्यक्षरात्मकः ।

आदौ प्रणवाभावः। राजमातङ्गीश्वरीत्यत्र श्रीमातङ्गीश्वरीत्येकाक्षरन्यूनता सर्वजनं मे वशमानयेत्यत्र अमुकं मे वशमानयेति एकाक्षरन्यूनता। एवं च मूलतन्त्रानुरुद्धस्य एकोत्तरशताक्षरस्य ततोऽक्षरत्रयाधिक्यं ज्ञेयम्। न्यासो यथा ब्रह्मरन्ध्रे—ॐ सौः १ ललाटे ॐ० ३ मः १ भ्रूमध्ये भ० ४ ति ३ दक्षनेत्रे रा० रि ४ वामे नेत्रे स० रि ५ मुखे स० ति ६ श्रोत्रे क्लीं ७ श्रोत्रे ह्रीं ८ कण्ठे श्रीं ९ अंसे स० रि १० अंसे स० १० रि १ हृदि स० रि २ स्तने स० ८ रि ४। नाभौ स० १० य५ स्वाधिष्ठाने स्वाहा ६ आधारे सौः० ६ ऐं १७ इति प्रकृतमन्त्रानुरुद्धो न्यासः। पुनस्तानेव सप्तदशखण्डानाधारादिबिलान्तेषु उक्तस्थानेष्विति सूत्राक्षरस्वारस्याद्विलोमेन न्यसेदिति। वाराहीविशेषन्यासा अपि तत्रैव। यथा—मातृकासंपुटितां द्वितारीम् इत्यादिमातृकास्थानान्युक्त्वा। अं धे प्रभृतिसप्तार्णा। पञ्चकमङ्गुष्ठादिकनिष्ठान्तं वाङ्नमो भगवतीत्यारभ्य त्रयोदशभिर्हृदयं षड्भिः शिरो दशभिः शिखा सप्तभिः सप्तभिः सप्तभिः कवचनेत्रास्त्राणि विन्यस्येति। वाराहीक्रमे ऐं ग्लौं इति सर्वमन्त्रादौ। तथा च ऐं ग्लौं अं ह्रीं श्रीं अं नमः, ऐं ग्लौं आं ह्रीं श्रीं आं नमः इत्यादिमातृकैकैकवर्णसंपुटितां द्वितारीं मातृकास्थानेषु न्यस्य अन्धे अन्धिन्यै नम इत्यादि मोहे मोहिन्यै नम इत्यन्तं सप्तार्णपञ्चकम् अङ्गुष्ठादिकनिष्ठान्त न्यस्य। स्तम्भे स्तम्भि० मः मोहे मोहि मः इत्यनयोः सूत्रे पाठे व्यत्यासो ज्ञेयः। ऐं नमो भ० वार्तालि १३। वारां० हि६ वाराह० खि १०। अन्धे० म० ७ रुन्धे मः७। जम्भे० म ७। इति हृदयादिषडङ्गेषु। इत्येवं न्यासोत्तरं मूलषडङ्गन्यासः। बालावदेव संकल्पादिपात्रस्थापनान्तम्। पात्राधोमण्डले तत्तन्मूलषडङ्गैः पूजनम्। सर्वत्र मूलजपन्यासादौ तत्तन्मूलजपन्यासादिर्बोध्यः। हेतुपात्रत्रिकोणमध्ये तत्तन्मूलेन तत्तन्मूलदेवीं पूजयेत्। षट्कोणे तत्तदङ्गैः पूजनम्। तत्र मन्त्रिणीपीठपूजामतङ्गतन्त्रोक्ता यथा—"अमृताम्भोनिधिं तत्र द्वीपं मारकतं तथा। नवरत्नैर्निर्मितं च सप्तावरणमन्दिरम्॥ मध्यमे कादम्बवनं वाटिकाम् ऋतवस्ततः। मण्डपं वै मारकतं तद्द्वारेषु क्रमेण तु। शुकं च सारिकां विद्यां संगीताद्यां तथा पुनः। साहित्याद्यां रत्नसिंहासनं तत्पुरतस्तथा॥ देवीं हसन्तीं धर्माद्यान् पादेषु दिक्षु वै ततः। अधर्मादीननन्तं तु मध्येऽष्टदलपद्मकम्॥ फणायाममृतकन्दं ज्ञानकाण्डं तथैव तु। प्रज्ञानपत्रं तन्मध्ये मण्डलत्रयकर्णिकाम्॥ अष्टैश्वर्यकेसरं च अष्टपत्रेषु वै क्रमात्। सरस्वतीं तथा लक्ष्मीं रुद्राणीमीश्वरीं तथा॥ गौरीं हंसवतीं चाह्लादिनीं वै नन्दिनी ततः॥ परानन्दां मध्यतस्तु समष्ट्या चाथ पूजयेत्॥ इति समष्टिपूजनं क्लीं सर्वतत्त्वकमलासनायेति वाराहीपीठपूजा सूत्रोक्ता। यथा स्वर्णप्राकाराय सुधाब्धये वराहद्वीपाय वराहपीठाय नम इति आं आधारशक्त्यै कुं कूर्माय कं कन्दाय अं अनन्तनालायेति च धर्मादिभिः सह षोडशमन्त्रैः पीठमभ्यर्च्य त्रिपञ्चषडारदलाष्टकशतसहस्रारपद्मासनाय नम इति चक्रमिष्ट्वा वह्निमण्डलाय सूर्यमण्डलाय सोममण्डलाय इति त्रयो गुणमन्त्रा आत्ममन्त्राश्चत्वार इति सप्तविंशतिकमिदं पीठे वरिवसनीयम्। ह्रौं प्रेतपद्मासनाय सदाशिवाय नम इति चक्रोपरि देव्यासनविमृष्टिरिति। अत्र स्वर्णप्राकारादि

मारणं नैव कुर्वीत शत्रोरपि महेश्वरि ।
कृत्वा प्रमादाल्लोभाद् वा क्रोधाद् वापि महेश्वरि ॥१४४॥
देवताशापमाप्नोति सत्यं देवि वदामि ते ।
साधुद्वेषिणि पापिष्ठे बहुविप्रकुलान्तके ॥१४५॥

---

अनन्तनालान्ताष्टकं पीठे पूजयेत् । ततः पीठपादेषु धर्मादिचतुष्टयम् । तद्दिक्षत्रधर्मादिचतुष्टयम् । त्रिपञ्चेत्यादि चक्र पूजयेत् । पुनर्वह्निमण्डलादित्रयं सत्त्वापेत्यादिगुणत्रयम् आत्माऽन्तरात्मा परमात्मा ज्ञानात्मेति चतुष्टयं च पीठे । ततः ह्रौं प्रेतेत्यादि देवतासने इति । अत्रापि मूलोक्तं क्लीं सर्वेत्यादि समष्टिपूजनं ज्ञेयम् । तत आत्मपूजायां हृदि त्रिकोणे बिन्दौ मन्त्रिणीक्रमे त्रिकोणदेवताया बालावरणतुल्यत्वात् कोणेषु रतिप्रीतिमनोभवान् मध्ये मूलदेवीम् । दण्डिनीक्रमे तु त्रिकोणेषु तदावरणवद् जम्भिनीं मोहिनीं स्तम्भिनीं मध्ये मूलदेवीमिति । अविशेषाद् बालावदेव षण्मुद्राप्रदर्शनम् । ततस्ताम्बूलोपचारान्तम् । संविन्मयेति प्रार्थनम् । बिन्दौ मूलदेव्यास्त्रिस्तर्पणं षडङ्गयुवती पूजनमिति बालापूजनोक्तगुरुपूजनमप्युपलक्षितं ज्ञेयम् । भूपुरे बाह्ये दिक्पालान् वीणाद्यष्टकं रेखायाम्, चतुर्दले मातङ्ग्यादिचतुष्टयम्, अष्टदले सिताङ्गादिभैरवाष्टकम्, षोडशपत्रे वामादिषोडशकम्, अष्टपत्रे लक्ष्म्याद्यष्टकं ब्राह्म्याद्यष्टकं च, पञ्चकोणे शुकश्यामलादिषट्कं कामपञ्चकं द्रावणादिबाणपञ्चकम्, त्रिकोणे रत्यादित्रयम्, बिन्दौ मूलदेवीम् । इत्यावरणाष्टकम् । इति मन्त्रिण्यावरणम् ।

एवमेव दण्डिन्यावरणपूजायां प्रार्थनादि षडङ्गपूजनान्तं पूर्ववत् । भूपुरतृतीयरेखायां दिक्पालायुधदशकं वज्रशक्तिदण्डखड्गपाशाङ्कुशगदात्रिशूलकमण्डलुपद्मानीति । द्वितीयभूपुरे दिक्पालान् । अन्तर्भूपुरे हलाद्यायुधाष्टकम् । अष्टधा विभक्तसहस्रदले हेतुकाद्यष्टकम् । चतुर्धा भक्तशतदले महिषादिचतुष्टयम् । अष्टपत्रे वार्ताल्याद्यष्टकम् । षट्कोणे डाकिन्यादियोगिनीषट्कं ब्राह्म्यादिषट्कं च । पञ्चकोणे अन्धिन्यादिपञ्चकम् । त्रिकोणे जम्भिन्यादित्रयम् । बिन्दौ मूलदेवीमित्यावरणाष्टकम् । इति दण्डिन्यावरणम् ।

अत्र प्रत्यावरणं संक्षोभिण्याद्येकैकमुद्राप्रदर्शनम् । अष्टमावरणेऽपि श्रीक्रमादिवद्योनिमुद्राप्रदर्शनम् । अर्थात् सप्तमावरणेऽपि पूर्वोत्तरसाहचार्याद्योनिमुद्राप्रदर्शनमेवेति ज्ञेयम् । एवमावरणपूजान्तेषु पुष्पाञ्जल्यादिनैवेद्यान्ते पूजाङ्गहोमान्ते विशेषहोमं कुर्यात् । तत्राग्निपरिषेचनं बालावदेव, दण्डिन्याः पीठशक्त्यनुक्तेः । क्लीं सर्वतत्त्वेत्यादि समष्टिपूजामात्रमग्नौ ज्ञेयम् । अत्रानुक्तं सर्वमपि बालाप्रकरणवज्ज्ञेयम् ॥१४३॥

प्रमादादिना मारणं कृत्वा ॥१४४॥

धर्मभूपरिषौ वापि कुर्यान्निर्लोभमानसः ।
ततस्त्र्यहमनश्नन् वै जपेदयुतमूलकम् ॥१४६॥
तदपि ब्राह्मणेनैव कुर्याद्योषित्स्वपीश्वरि ।
प्रयोगांस्तु नैव कुर्यान्मूलदेव्यास्तु सेवके ॥१४७॥
अज्ञानात्तत्कृतं देवि स्वात्मानं नाशयेद् द्रुतम् ।
अथान्यत्तेऽभिधास्यामि सर्वाभीष्टसुसाधनम् ॥१४८॥
रहस्यनामपाठेनाऽप्यभीष्टमखिलं भवेत् ।
सहस्रपाठतो देवि श्रियं प्राप्नोत्यनुत्तमाम् ॥१४९॥
अयुतेनापदां नाशं सर्वसिद्धिं तु लक्षतः ।
सकृत्पुष्पैश्चक्रराजमभ्यर्च्य तु महाफलम् ॥१५०॥
हुत्वा तु करवीरैर्वा कुसुम्भैः किंशुकैरपि ।
देवताप्रीतिमाप्नोति सर्वाभीष्टं च विन्दति ॥१५१॥
तिलहोमात् पापनाशस्तेजः स्याद् घृतहोमतः ।
मधुत्रयेण विद्यां वै सुगन्धैः सौमनस्यताम् ॥१५२॥

---

तर्हि मारणनिरूपणं तन्त्रेषु व्यर्थमिति चेदाह—साधुद्वेषिणीति ॥१४५॥

एवंविधेऽपि धनाद्यर्थित्वेन न कुर्यादित्याह—निर्लोभेति । एवमपि मारणे कृते प्रायश्चित्तमाह—तत इति ॥१४६॥

तदपि निर्लोभेन मारणमपि । एवं मारणं क्वचिन्निषिध्य सामान्यतः प्रयोगमपि क्वचित् निषेधति—प्रयोगानिति ॥१४७॥

तत् प्रयोगकर्म । अन्यत् काम्यकर्म ॥१४८॥

रहस्यनामेति ब्रह्माण्डपुराणोक्तं सहस्रनामस्तोत्रम्, "रहस्यैर्नामभिर्दिव्यैश्चक्रुः स्तोत्रमनुत्तमम् । रहस्यनामसाहस्रमिति तद् विश्रुतं परम् ॥" इति भूयस्तत्रैव तथोक्तत्वात् ॥१४९-१५०॥

हवनं तु दीक्षाप्रकरणोक्तरीत्या साधितेऽग्नौ ॥१५१॥

मधु शर्करा घृतं चेति मधुत्रयम् । सुगन्धैश्चन्दनादिद्रव्यैः ॥१५२॥

तत्तद्विधानहोमेन वश्यादीनपि साधयेत् ।
नाशाय दुरितानां वै वाञ्छितार्थाप्तये तथा ॥१५३॥
सुवासिनीर्ब्राह्मणान् वा प्रत्येकं नामभिर्यजेत् ।
शुभे पर्वणि पुण्याहं वाच्य चाष्टौ सुवासिनीः ॥१५४॥
वशिन्याद्यभिधानैस्तु भक्त्या शक्त्या समर्चयेत् ।
तरुणोल्लासयुक्तास्तु भोजयित्वा यथाविधि ॥१५५॥
पुरश्चर्योक्तविधिना समसंख्याविधानतः ।
सुवासिनीर्ब्राह्मणान् वा भोजयेद् दक्षिणादिभिः ॥१५६॥
अन्ते पुनर्वशिन्याद्याः पूजयेदुक्तमार्गतः ।
एवमेव त्रिशत्याः स्यात् पूजाहोमादिकं शिवे ॥१५७॥

---

तद् विधानं पूर्वोल्लासोक्तम्, उदङ्मुखो वसन्ततर्वित्यादि । इतोऽन्ये प्रयोगाः सहस्रनामोत्तरपीठिकायां पौर्णिमास्यां चन्द्रबिम्ब इत्याद्युक्त्या अप्यनुसन्धेयाः । नाशाय यजेदित्यग्रिमेणान्वयः ॥१५३॥

सहस्रनामघटकप्रत्येकैकनामभिर्यजेदिति भोजनप्रधानम्, "यः सहस्रं ब्राह्मणानामेभिर्नामसहस्रकैः । समर्च्य भोजयेद् भक्त्या" इति सहस्रनामोत्तरपाठिकायामुक्तत्वात्, भोजयेद्दक्षिणादिभिरित्यत्रापि वक्ष्यमाणत्वात् । तत्प्रकारमाह—शुभे इति । शुभे दुष्टयोगवर्जिते । पर्वणि पूर्णिमादौ । सुवासिनीः समर्चयेदित्यन्वयः ॥१५४॥

वशिन्याद्यभिधानैः वशिनीकामेश्वरीत्यादिनामभिः । भक्त्या शक्त्येत्यनादरलोभौ निरस्तौ । तरुणोल्लासेत्यनेनात्र सपर्यायोगोऽप्यनुसन्धेयः । एतदेव सहस्रनामभाष्ये संस्कृतैः सहेतुभिः संतर्प्येयुक्तम् । यथाविधि प्राक्संस्थमुदक्संस्थं वा वशिन्यादिषु आसनाद्येकैकोपचारकल्पनरूपपदार्थानुसमयेन ॥१५५॥

पुरश्चर्योक्तविधिना । नित्यं समानसंख्याकं जपेन्मन्त्रमित्युक्तरीत्या । समसंख्याविधानतः विंशतिदिनैः सहस्रभोजने कर्तव्ये प्रत्यहं पञ्चाशत्संख्यसुवासिनीः ब्राह्मणान् वा भोजयेत् । दक्षिणादिभिस्तोषयेच्चेति शेषः ॥१५६॥

सहस्रभोजनान्ते । उक्तमार्गतः । वशिन्याद्यभिधानैरित्यादि । एवमेव सहस्रनामवदेव । त्रिशत्याः ब्रह्माण्डपुराणोक्तत्रिशतनामस्तुतेः । पूजाहोमादिकं स्यात् आदिना पठनसंग्रहः ॥१५७॥

भोजने तु तदाद्यन्ते नित्याः षोडश पूजयेत् ।
अथवा केवलं नित्या वशिनीर्वा प्रपूजयेत् ॥१५८॥
एवं पूजाविधानेन महाफलमवाप्नुयात् ।
तस्य श्रीनगरे वासः पश्चात् सायुज्यमेव तु ॥१५९॥
अथ वक्ष्यामि मिथुनपूजनानां विधिं शिवे ।
कृष्णाष्टम्यां चतुर्दश्यां मुक्तपर्वसु कुत्रचित् ॥१६०॥
निमन्त्र्य मिथुनान्यादौ चक्रराज्यं प्रपूज्य च ।
ब्राह्म्यादिनामभिस्तद्वदसिताङ्गादिभिर्यजेत् ॥१६१॥

---

भोजने । तन्नामभिर्ब्राह्मणभोजने । तुरिति विशेषद्योतकः । आद्यन्ते वशिन्यादि-पूजनवत् षोडशनित्या अपि पूजयेत् । एवं सहस्रनामभोजनैराद्यन्तयोर्वशिनीपूजनं त्रिशतनामभोजने नित्याभोजनं चेत्युक्त्वा अङ्गे विकल्पमाह—अथवेति । अयमभिप्रायः—अत्र सहस्रनामभोजने आद्यन्त्ययोर्वशिन्यादिपूजनमुक्तम् । "रहस्यनामसाहस्रभोजनेऽप्येवमेव हि । आदौ नित्याबलिं कुर्यात् पश्चाद् ब्राह्मणभोजनम् ॥" इति त्रिशत्युक्ताङ्गस्य नित्याबलेश्चोपसंहारेण समुच्चयोऽङ्गद्वयस्य । एवं त्रिशतनामभोजने एवमेवेति वाक्यात्प्राप्तवशिन्यादिपूजनस्य भोजनं तु तदाद्यन्ते नित्याः षोडश पूजयेदिति वाक्यप्राप्तनित्याबलेश्च समुच्चयः । इति एवम् । उभयत्राङ्गद्वयसमुच्चये प्राप्ते विकल्पमाह—केवलमिति । नित्या एव वा वशिनीरेव वा आद्यन्तयोः प्रपूजयेदित्यर्थः । वशिनीरित्यस्य वशिन्याद्या इत्यर्थः । अत्र नित्यापूजनादौ सुगन्धितैलाभ्यङ्गोष्णोदकस्नानगन्धवस्त्रादिपूजनसूपापूपशर्करापायसफलभोजनादिकमपि त्रिशत्युक्तमुपसंहर्तव्यम् । तथा त्रिशतभोजने शुक्लप्रतिपदादिकालोऽपि तदुत्तरपीठिकोक्तो ज्ञेयः । एवं ब्राह्मणेषु विद्यावित्त्वम् । विद्या च प्रकृते श्रीविद्या । एवं नित्याषोडशिकारूपान् विप्रानिति प्रकृतेऽष्टौ सुवासिनीरित्यनयोः सुवासिनीविप्रयोः समुच्चयेऽष्टषोडशसंख्याबाधाद्विकल्प एव ॥१५८॥

एवमुक्तरीत्या सहस्रभोजनादिरूपपूजाविधानेन तस्य उक्तसहस्रभोजनादि-कर्तुः । पश्चात्कर्मफलभोगान्ते । एवं त्रिपुरारहस्येऽष्टोत्तरशतनामभोजनाद्युक्तमपि । तत्र तदितिकर्तव्यताभावान्नामभोजनसाम्यादेवमेव वशिन्यादिपूजनादिकं ज्ञेयम् ॥१५९॥

उक्तपर्वसु पुष्पिण्यादिषु ॥१६०॥

मिथुनं तु योग्यत्वाद्दम्पतीरूपम् । तत्रादौ संकल्प्य पूजान्ते दम्पतीक्रमेणोप-विष्टेष्वष्टमिथुनेषु सुवासिनीर्ब्राह्मीत्यादिनाम्ना तत्तत्पुरुषान् क्रमेणासिताङ्गादिनम्ना

नवकं मिथुनानां चाप्येवमेव प्रपूजयेत् ।
चक्रेश्वरीनामभिस्तु प्रकाशाद्यैश्च नाथकैः ॥१६२॥
एकाशीत्युत्तरशतमिथुनानां प्रपूजनम् ।
एवमेव भवेन्मालामन्त्रोक्तैर्नामभिः शिवे ॥१६३॥
आवृतीनां क्रमादेतत् कर्तव्यं चैकशो द्विशः ।
अथान्यदभिधास्यामि रहस्यातिरहस्यकम् ॥१६४॥
साक्षाच्छिवेन कथितं तन्त्रेषु बहु गोपितम् ।
मिथुनाष्टकपूजैषा सर्वापत्प्रविनाशिनी ॥१६५॥
सर्वसम्पत्प्रदा तद्वल्ललिताप्रीतिदायिनी ।
तथैव नवसंख्यातमिथुनानां प्रपूजने ॥१६६॥

---

चैकैकमिथुनं पूजयेत् । अत्रापि पूजनं भोजनप्रधानमेव, सहस्रनामभोजनादिसंमेलनमिथुनभोजनान्तभोजनप्रकरणमध्यगतत्वात् । अत एव पद्धतिषु मिथुनाष्टकभोजविधिरित्याद्युक्तम् ॥१६१॥

एवमेव मिथुनाष्टकपूजनवदेव । विशेषमाह—चक्रेश्वरीति । महात्रिपुरसुन्दर्यादित्रिपुरान्तचक्रेश्वरीनामभिः, नाथपारायणादौ प्रकाशादिनाथेष्वेवं क्रमेणैव चक्रेश्वरीयोगस्योक्तत्वात् । नाथकैः नाथनामभिः ॥१६२॥

त्रिपुरसुन्दर्यादिमहाश्रीचक्रनगरसाम्राज्ञ्यन्तैर्नामभिः स्त्रीपुम्भेदितैर्मिथुनानि पूजयेत् । एवमेव पूर्वोक्तवदष्टम्यादिष्वारभ्य ॥१६३॥

तत्र विशेषमाह—आवृतीनामिति । अङ्गनित्यागुरुमण्डलमिति त्रयम् । अणिमाद्यावृत्तिनवकम् । चक्रेश्वरीमण्डलं मूलदेवीमण्डलमिति द्वयमिति मिलित्वा चतुर्दशावृत्तयः । न चावरणं गुरुपङ्क्तिद्वयमिदमम्बापदाम्बुजप्रसरमित्याद्युक्त्या गुरुमण्डलादेर्नावृत्तित्वमिति वाच्यम्, प्रकृते एकाशीत्युत्तरशतदेवतानां मालामन्त्रोक्तानामावृत्तिक्रमेण पूजाकथनात् । गुरुमण्डलादेस्तदन्तर्गतत्वात् । एवमेवेति । ब्राह्म्याद्यादिमिथुनभोजनवदेकदिने कर्तव्यम् । अथवा प्रत्यहमेकावृत्तिद्व्यावृत्तिपूजनं वा । एतदेवोक्तमेकशो द्विश इति । कर्मान्तरं वक्तुमाह—अथेति ॥१६४॥

रहस्यादपि रहस्यत्वे हेतुमाह—साक्षादिति । अन्यैरविदितत्वात् साक्षाच्छिवेनैव मां प्रत्युक्तम् । अत एव तन्त्रेष्वन्येषु बहु अत्यन्तं गोपितम् । नोक्तमिति यावत् ।

मालामन्त्रोक्तनाम्नापि मिथुनानां प्रपूजनात् ।
सर्वसिद्धिप्रदा तस्य ललिता सर्वदा भवेत् ॥१६७॥
एतत्सर्वं तु देवेशि महाफलमितीर्यते ।
इदं तु सर्वमूर्धन्यं सर्वपूजोत्तमोत्तमम् ॥१६८॥
सम्मेलनाख्यमिथुनपूजनं परमेश्वरि ।
सम्मेलनविधेर्देवि फलं वक्तुं न शक्यते ॥१६९॥
विधिनापि भवेनापि हरिणापि मयापि च ।
साक्षात् स एव देवेशि ललितारूपवान् भवेत् ॥१७०॥
तपःपूजाव्रतस्नानयज्ञाध्ययनमेकतः ।
कलां नार्हन्ति देवेशि सम्मेलनविधेः शिवे ॥१७१॥
दीपेषु सम्पूजयेद्द्वे प्रागादिक्रमयोगतः ।
दीपाद् बहिर्वृत्ततस्तु निवेश्यानि यथाक्रमम् ॥१७२॥
वीरयुग्मशक्तियुग्मक्रमेण परमेश्वरि ।
महालक्ष्मीयुतां ब्राह्मीं ब्राह्मीयुक्तासिताङ्गकम् ॥१७३॥

---

तस्यैव विशेषतो महिमानं वक्तुं प्रोक्तमिथुनाष्टकपूजनादिकं प्रशंसति--मिथुनेत्यादि ॥१६५-१६७॥

प्रकृतं वक्ष्यमाणं स्तौति--इदं त्विति ॥१६८॥

तन्नामाह--संमेलनेति ॥१६९-१७०॥

तपःप्रभृतीनि कलां नार्हन्ति ॥१७१॥

वक्ष्यमाणप्रकारेण स्थापितदीपेषु प्रागादिक्रमात् संपूजयेत् । दीपाद् बहिर्वृत्तक्रमेण दीपाभिमुखत्वेनाष्टौ मिथुनानि निवेश्यानि ॥१७२॥

तत्क्रममाह--वीरेति । वीरयुग्मं पुरुषयुग्मम् । शक्तियुग्मं सुवासिनीयुग्मम् । इति क्रमेण । द्वौ ब्राह्मणौ । ततो द्वे सुवासिन्यौ । पुनर्द्वौ ब्राह्मणौ द्वे सुवासिन्याविति क्रमेणेति भावः । तेषु पूजनीयदेवतानामान्याह--महालक्ष्मीति । तत्राष्टदिक्षु दीपपात्राष्टकं प्रतिपात्रे पार्श्वद्वयस्थमुखद्वये प्रज्वलितवर्तिकाद्वयम् । तच्च पार्श्वस्थदीपपात्रान्तरप्रज्व-

असिताङ्गयुतं तद्वद् गुरुमेवं प्रपूजयेत् ।
संहारयुक्तामन्ते तु महालक्ष्मीं प्रपूजयेत् ॥१७४॥
संस्तुत्वा प्रणमेत्तांस्तु भुञ्जानान् परमेश्वरि ।
महालक्ष्म्या युता देवी ब्राह्मी मे वाचि संस्थिता ॥१७५॥
हंसारूढासिताक्षस्रक्पुस्ताभीतिवरैर्युता ।
मां रक्षतु सदा देवि विद्या व्याहारकर्मसु ॥१७६॥
ब्राह्मीयुतोऽसिताङ्गस्तु वाक्प्रेरकतया स्थितः ।
हंसारूढः सितोऽक्षस्रक्पुस्ताभीतिवरैर्युतः ॥१७७॥
मच्छत्रुवाचं बध्नातु प्रसन्नो मां सदावतु ।
असिताङ्गयुतो देवो रुरुरैश्वर्यप्रेरकः ॥१७८॥
वृषारूढः सितः शूलमृगाभयवरैर्युतः ।
प्रसन्नो मद्रिपुगणसमृद्धीनां तु भक्षकः ॥१७९॥
माहेश्वरीरुरुयुता मत्पाणितलसंस्थिता ।
वृषारूढासिता शूलमृगाभयवरैर्युता ॥१८०॥

---

लितवर्तिकायुतम् । ईशान्यपूर्वपात्रयोर्दक्षिणोत्तरमुखस्थवर्तिद्वयमेलनेनैको दीपः । एवं पूर्वाग्नेयपात्रदक्षिणोत्तरमुखस्थवर्तिद्वयेनैको दीप इत्यादि । तत्र पूर्वदीपोत्तरमुखाद ईशान्यदीपदक्षिणमुखान्तषोडशसु । महालक्ष्मीयुता ब्राह्मी, ब्राह्मीयुतासिताङ्गम् । असिताङ्गयुतं रुरुम्, रुरुयुतां माहेश्वरीम्, माहेश्वरीयुतं कौमारीम्, कौमारीयुतं चण्डम्, चण्डयुतं क्रोधम्, क्रोधयुतां वैष्णवीम्, वैष्णववाराहीम्, वाराहीमुन्मत्तम्, उन्म० कपालिनम्, कपा० माहेन्द्रीम्, माहेन्द्री चामुण्डाम्, चामु० भीषणम् । भीषणयुतं संहारम्, संहारयुतां महालक्ष्मीं पूजयेत् । एतन्मुखसंमुखस्थितसुवासिन्यादौ चैवं संपूज्य स्तुत्वा प्रणमेत् ॥१७३-१७४॥

स्तोत्रमेवाह--महालक्ष्म्येत्यादि ॥१७५॥

विद्याया व्याहारः प्रवचनम् ॥१७६-१७८॥

समृद्धिर्धनादिवृद्धिः ॥१७९-१८०॥

मां रक्षतु सदा देवी धनधान्यागमादिषु ।
माहेश्वरीयुता देवी कौमारीरूपसंस्थिता ॥१८१॥
मयूरस्थारुणा शक्तिभल्लाभयवरान्विता ।
मां रक्षतु सदा देवी रूपसौन्दर्यदायिनी ॥१८२॥
कौमारीयुक्तश्चण्डस्तु रूपसौन्दर्यप्रेरकः ।
मयूरस्थोऽरुणः शक्तिभल्लाभयवरान्वितः ॥१८३॥
मद्रिपूणां तु सौन्दर्यं रूपं नाशयतु द्रुतम् ।
चण्डयुक्तः क्रोधमयो बलवीर्यादिप्रेरकः ॥१८४॥
गरुडस्थोऽसितः शङ्खचक्रारिकमलान्वितः ।
मच्छत्रूणां बलं वीर्यं हरत्वाशु मयार्चितः ॥१८५॥
वैष्णवी क्रोधसंयुक्ता मदीयभुजसंश्रया ।
गरुडस्थासिताशङ्खचक्रारिकमलान्विता ॥१८६॥
मां रक्षतु महादेवी युद्धे रिपुसमागमे ।
वाराही वैष्णवीयुक्ता संस्थिता मन्मनोभुवि ॥१८७॥
किरिसंस्था सुवर्णाभा हलशूलाम्बुजान्विता ।
मां रक्षतु महादेवी महापद्विनिवारणी ॥१८८॥
वाराही सहितोन्मत्तो भक्तानामभयप्रदः ।
किरिसंस्थः सुवर्णाभो हलशूलाम्बुजान्वितः ॥१८९॥

---

कौमारीरूपेण संस्थिता ॥१८१-१८३॥

क्रोधमयः क्रोधरूपः ॥१८४॥

अरिः खड्गः ॥१८५-१८७॥

किरिर्वराहः । अम्बुजद्वयान्विता ॥१८८-१८९॥

मच्छत्रूणां च सर्वेषां भयपीडाप्रयच्छकः ।
उन्मत्तयुक्तः सामर्थ्ये कपालीप्रेरकः शुभः ॥१९०॥
गजस्थो गौरगात्रश्च वज्राङ्कुशलसत्करः ।
मच्छत्रूणां तु सामर्थ्यं हरत्वाशु मयार्चितः ॥१९१॥
कपालियुक्ता माहेन्द्री सर्वगात्रेषु संस्थिता ।
गजस्था गौरगात्री च वज्राङ्कुशलसत्करा ॥१९२॥
मां रक्षतु महादेवी सामर्थ्यस्य प्रदानतः ।
माहेन्द्रीयुक्ता चामुण्डा सर्वतः समवस्थिता ॥१९३॥
नृदेहस्थासिता शूलघण्टाचर्मासिसंयुता ।
मां रक्षतु सदा देवी सर्वतो भयनाशिनी ॥१९४॥
स चामुण्डो भीषणस्तु सर्वतो भयनाशकः ।
नृदेहस्थोऽसितः शूलघण्टाचर्मासिसंयुतः ॥१९५॥
मच्छत्रूणां सर्वतस्तु प्रयच्छतु सदा भयम् ।
संहारो भीषणयुतः सर्वसिद्धिप्रदः शुभः ॥१९६॥
पद्मसंस्थोऽरुणोऽक्षस्रग्ज्ञानाभयवरान्वितः ।
मच्छत्रूणां सर्वसिद्धिं निवारयतु चार्चितः ॥१९७॥
ससंहारा महालक्ष्मीर्मम नेत्रद्वयस्थिता ।
पद्मसंस्थाऽरुणाक्षस्रग्ज्ञानाभयवरान्विता ॥१९८॥
मां रक्षतु सदा देवि सर्वसिद्धिप्रदानतः ।
मिथुनाष्टकसंयुक्ता जपाकुसुमसन्निभा ॥१९९॥

---

सामर्थ्ये सामर्थ्यस्य प्रेरकः ॥१९०-१९८॥

समष्टिदेवताध्यानमाह—मिथुनेति ॥१९९-२००॥

कामेशवामाङ्कगता नेत्रत्रयविराजिता ।
सृणिपाशेक्षुचापेषुधरा रत्नविभूषिता ॥२००॥
सर्वाभीष्टप्रदा मेऽस्तु पूजितानेन सुन्दरी ।
इति स्तुत्वा भोजयित्वा दक्षिणाद्यैः सुतोषयेत् ॥२०१॥
दीपस्थाश्च ततोद्वास्य दीपपात्रं तु भक्षयेत् ।
सिन्दूराष्टदले दीपान् गुडपिष्टसुसंस्कृतान् ॥२०२॥
घृतपक्वान् पार्श्वमुखान् पूर्णान् कर्पूरवर्तिकान् ।
मुखयुक्तांस्तु प्रज्वाल्य हूमाद्यानन्दभैरवैः ॥२०३॥
बीजैर्व्यष्टया पूजयित्वा समष्टया देवतां यजेत् ।
श्रीतीर्थेन तु संतर्प्य मिथुनान्येवमर्चयेत् ॥२०४॥
आवाहनोत्तरं मध्ये न व्रजेत्तु कदाचन ।
द्रव्याद्यैस्तर्पयेत्तावद्दीपान् रक्षेत् समाहितः ॥२०५॥

---

अनेन विधिना । इति महालक्ष्म्या युतेत्यादि । दक्षिणाद्यैर्मिथुनानि सन्तोषयेत् ॥२०१॥

ततः चकारद्योतितमिथुनोद्वासनानन्तरम् । दीपस्था देवताः । भोजनसमये दीपपात्रं भक्षयेत् । दीपस्थापनप्रकारमाह--सिन्दूरेति । गुडयुतपिष्टेन सम्यक् संस्कृतान् निर्मितान् । योग्यतया आरत्युक्तवद् डमरुप्रभान् ॥२०२॥

पार्श्वद्वये वर्तिकानिधानाय मुखयुतान्, अर्थात् घृतपूर्णान् । कर्पूरगर्भवर्तिकायुतान् । स्वसंमुखस्थदीपान्तरमुखेन युतान् मिलितान् । एवंविधान् दीपान् हूँ सूं इत्याद्यानन्दभैरवव्यष्टिवर्णबीजेन प्रज्वाल्य ॥२०३॥

तेषु दीपेषु क्रमेण महालक्ष्मीयुतब्राह्म्याद्यावाह्य व्यष्टया प्रत्येकं पूजयित्वा ततः समष्टया सर्वदीपेषु मूलदेवतां यजेत् । ततः श्रीपात्रतीर्थेन दर्व्या हृतेन समष्टिव्यष्टिदेवताः सन्तर्प्य । एवं दीपे पूजितक्रमेण तत्तद्दीपसंमुखस्थसुवासिन्यादिषु तत्तन्नाम्ना ब्राह्म्याद्यर्चयेत् ॥२०४॥

सुवासिन्यावाहनोत्तरं मध्ये न गच्छेत् । एवं मिथुनानां मध्येऽव्रजन्नेव द्रव्याद्यैस्तर्पयेद् । तावत् मिथुनानां पूजासमाप्तिपर्यन्तम् ॥२०५॥

**अन्तःस्थित्वैव सर्वास्तु तोषयेद् भोजनादिभिः ।**
**मध्ये व्रजन् दीपनाशाद् देवता कुप्यति द्रुतम् ॥**
**पुनः कुर्यात्तस्य शान्त्यै सर्वमेवं निरूपितम् ॥२०६॥**

**इति श्रीपरमानन्दतन्त्रे त्रयोविंशतितमोल्लासः ॥२३॥**

---

मिथुनमण्डलान्तःस्थित्वैव । बाह्याद् भोज्यपदार्थमादाय परिवेष्य तोषयेत् । मिथुनमण्डलमध्यगमनेन दीपनाशेन च देवता कुप्यति । तस्य देवताकोपस्य । पुनः संमेलनमिथुनपूजां कुर्यात् । उपसंहरति—सर्वमिति । हे देवि इत्याक्षिप्य योजनीयम् । त्वया यत्पृष्टं तत्सर्वमेवं निरूपितमिति । षट्चरणः श्लोकः ॥२०६॥

अत्र प्रार्थनमन्त्रेषु ब्राह्मी-माहेश्वरी-कौमारी-चामुण्डा-महालक्ष्मीनां दक्षोर्ध्वादितदधोऽन्तमायुधानि । वैष्णवीवाराह्योर्वामोर्ध्वादितदधोऽन्तम्, माहेन्द्र्या दक्षवामयोरिति । एवं सर्वत्रायुधध्यानं प्रोक्तम् । तत्रेयं व्यवस्था—यत्रायुधव्यवस्था तत्तद्ध्यानोक्ता तत्र प्रोक्तवदेवायुधध्यानम् । यत्र विशेषो नोक्तस्तत्र सामान्यवचनानुरोधेन । तदुक्तं रुद्रयामले—"आयुधानां तु ते ध्यानं ब्रवीमि शृणु शङ्करि । खड्गबाणाङ्कुशगदातालशूलभुशुण्डिकाः ॥ मल्लदण्डवज्रशक्तिपरिघप्रासतोमराः । मालामुसलपरशुमुखा दक्षकरस्थिताः ॥ पाशशङ्खचापफलचर्मखट्वाङ्गपुस्तकम् । घण्टा डमरु मुण्डं च वामहस्तसुसंस्थितम् ॥ वराभयशङ्खचक्रपुष्पपात्रद्वयस्थितम् । अनुक्तेषु वामदक्षप्रादक्षिण्येतरक्रमैः ॥ युक्त्या सर्वत्रायुधानि ज्ञेयानि परमेश्वरि । पाशाङ्कुशौ धनुर्बाणौ खड्गचर्मणी शङ्करि ॥ चक्रशङ्खौ तथाभीतिवरौ संमुखसंस्थितौ ॥" इति । अयमर्थः—खड्गादिपरश्वन्तान्यायुधानि दक्षकरसंस्थितानि । परशुमुखेत्यत्र मुखेति दक्षहस्तप्रयोगयोग्यानि कुठारादीन्युपलक्ष्यन्ते । पाशादिमुण्डान्तं वामकरसंस्थितम् । वरादिपात्रान्तं करद्वयस्थितम् । पात्रमिति कलशादिकम् । नियमेऽनुक्ते प्रोक्तस्थानानुरोधेन दक्षवामक्रमेण वामदक्षक्रमेण वा प्रादक्षिण्येनाप्रादक्षिण्येन वा ऊर्ध्वादधरान्तम् अधरादूर्ध्वान्तं वा यत्किञ्चित्क्रमेणैव, न तु दक्षोर्ध्वे ततो वामाध इत्यादि क्रमराहित्येन बह्वनुकूलस्वल्पविरोधाश्रयणयुक्त्या आयुधानि ज्ञेयानि । पाशाङ्कुशादिद्वन्द्वपञ्चकं परस्परसम्मुखस्थं ग्राह्यमिति ।

पद्धतावखिलदोषप्रायश्चित्तादिरूपा महापूजोक्ता । तन्मूलवचनानि प्रसङ्गादत्र व्याख्यायन्ते । तदुक्तं स्वतन्त्रे—"अज्ञानेन महापापे महापूजां समाचरेत् । तद्विधानं तु देवेशि सावधानमनाः शृणु ॥१॥ शुभमासदिने पक्षे रहस्ये पुण्यभूतले । गुर्वनुज्ञां समादाय

गणेशं च तिरस्कृतिम् ॥२॥ क्षेत्रपालं च संपूज्य मण्डपे समलङ्कृते। पुण्याहं मातृकां नान्दीं कृत्वा मण्डपमर्चयेत् ॥३॥ पुरश्चरणवत्कीले दिक्पालान् बलिनार्चयेत्। मातृका-सहितानष्टभैरवानर्चयेच्छिवे ॥४॥ मण्डपान्तर्द्वारदेशे कोणेषु च यथाक्रमम्। मण्डपोपरि कालाग्निरुद्रं शान्ताम्बिकायुतम् ॥५॥ मण्डपं तु समष्टयैव चिन्तयेद्देवतात्मकम्। ततो मण्डपमध्ये तु प्रविशेद् ब्राह्मणैः सह ॥६॥ सङ्कल्प्य विधिवद्देवि आचार्यादिवृतिं ततः। आचार्यं च विधातारं ऋत्विजां तु चतुष्टयम् ॥७॥ वृणुयात् पूर्वदक्षादिक्रमेणैव तु ऋत्विजः। चतुर्द्वारे मण्डपे तु मध्ये वेदीं प्रकल्पयेत् ॥८॥ सर्वतोभद्रकं तत्र कृत्वा दीक्षोक्तरीतितः। तत्क्रमेणैव कलशं मध्ये चैकं तु विन्यसेत् ॥९॥ पञ्चरत्नैर्व्रीहिभिस्तु संपूर्योपरि पल्लवान्। फलेन मुखमाच्छाद्य पट्टवस्त्रेण वेष्टयेत् ॥१०॥ पश्चिमादिषु देवेशि प्रादक्षिण्येन पूजयेत्। संबद्धासूपवेदीषु चक्राणां च चतुष्टये ॥११॥ मूलदेवीं च वाराहीं गणेशं मन्त्रिणीं तथा। पूजयेद्विधिवद्देवि तत्तदागमवित् क्रमात् ॥१२॥ प्रथमे दिवसे देवि आचार्यो वरणान्ततः। विघ्नेशमुत्तरमुखः पूजयेच्च विधानतः ॥१३॥ वायुनैर्ऋतयोर्मध्ये तिष्ठेदेकासने शुभे। यजमानः सभार्यश्च विधाता सोमदिङ्मुखः ॥१४॥ तत्तद्द्वारे ऋत्विजस्तु स्थिताः पूर्वोत्तरा-मुखाः। आचार्यः सर्वकर्मादौ तिष्ठन् संप्रार्थयेद्विधिम् ॥१५॥ तदाज्ञया कर्म कृत्वा पश्चादन्ते निवेदयेत्। यजमानस्य वाञ्छार्थसिद्धयेऽस्मिन् महार्चने ॥१६॥ गणेशं पूजयिष्यामि आज्ञया तव भो प्रभो। अनेनैव तु मन्त्रेण अन्ते च विनिवेदयेत् ॥१७॥ एवं गणेशं संपूज्य कुलद्रव्यै-र्यथाक्रमम्। शक्त्यृत्विग्यजमानादिसर्वेषां तत्त्वशोधनम् ॥१८॥ पूजाकर्म समाप्याथ देवोद्वास-नकं विना। पूर्वदिगृत्विजं तत्र संपूज्य विनियोजयेत् ॥१९॥ जगन्मातुर्महायागे पूर्वदिग्गण-पार्चने। सावधानेन मनसा कर्मशेषं समापय ॥२०॥ इति संप्रार्थ्य हस्तेन गृहीत्वा ह्युपवेशयेत्। उपविष्टः सुभक्त्या सः प्रणमेद् गणनायकम् ॥२१॥ उदङ्मुखो गणेशस्य स्तोत्रपाठादिकं पठेत्। ततः सायाह्नसमये प्राङ्मुखः पश्चिमे दिशि ॥२२॥ श्रीचक्रं तत्क्रमोक्तेन विधिना पूजयेच्छिवे। नैवेद्यान्तं हि निर्वर्त्य ततो होमं समाचरेत् ॥२३॥ ईशान्ये चतुरस्रे तु कुण्डे त्वावरणादिकम्। सर्वं दीक्षोक्तसंशुद्धवह्नावाज्येन पात्रतः ॥२४॥ अन्ये त्रिवारं श्रीपात्रद्रव्येण स्रुक्स्थितेन वै। होमं कुर्यान्मूलदेव्यै समाप्योद्वासनं विना ॥२५॥ शक्त्यादीनां तत्त्वशुद्धिं कृत्वा पूजां समापयेत्। पूर्णबोधेन संयुक्ता स्वस्वशक्तियुताश्च वै ॥२६॥ पवित्रशयने देवि शयाना भक्तिसंयुताः। अग्नेः संरक्षणं कुर्याद्दीपदेवतयोरपि ॥२७॥ द्वितीयदिवसे चैवं मातङ्गीं दक्षभागके। उदङ्मुखः समाराध्य शेषं पूर्ववदाचरेत् ॥ २८॥ पुष्पिणीं पूजयेच्छक्तिं स्नानन्यासादिसंस्कृताम्। अप्रसूतां तथा दीक्षाव्रतीं बाल्यप्रसूतिकाम् ॥२९॥ विंशदर्वाग्वयस्कां वा पूजयेच्छुद्धमानसः। तच्छेषं तु समादाय ब्रह्मणे विनिवेदयेत् ॥३०॥ आचार्यस्तच्छेषकं तु स्वयं स्वीकृत्य शेषकम्। देयं हि यजमानाय स्वीकुर्यात् स तु भक्तितः ॥३१॥ तत्पात्रं स्वर्णभरितं तस्यै शक्त्यै निवेदयेत्। दक्षिणावस्त्रभूषाद्यैः संतोष्यो-द्वासयेच्च ताम् ॥३२॥ पूर्ववद्दक्षिणद्वार ऋत्विजं विनियोजयेत्। गणेशं पूजयेत् पूर्वद्वार ऋत्विग् यथाविधि ॥३३॥ सर्वेषां पूर्ववद्देवि तत्त्वशोधनमिष्यते। श्रीचक्रं तत आचार्यः

पूर्ववत् सम्प्रपूजयेत् ।।३४।। आवाहनं तथोद्वासो नास्ति देवेशि सर्वतः। आवाहनं त्वाद्यदिने चान्त्ये चोद्वासनं भवेत् ।।३५।। ततस्तृतीयदिवसे वाराहीं चोत्तरे दिशि । पूजयेत्तद्विधानेन कुलद्रव्यैस्तु प्राङ्मुखः ।।३६।। दण्डनाथार्चने सर्वैर्मौनं कार्यं हि मण्डले । उपांशुभाषणं देवि क्वचित्किञ्चित् समाचरेत् ।।३७।। शक्तिपूजादिकं सर्वं पूर्ववत् परिकीर्तितम् । चतुर्थेऽह्नि महादेवि प्रातःकाले तु पश्चिमे ।।३८।। द्वारदक्षिणभागे तु हस्तमात्र सुवेदिके। बालाचक्रं तद्विधिना पूजयेत् प्राङ्मुखः स्थितः ।।३९।। सर्वं पूर्ववदत्रापि समाप्यर्त्विग्नियोजनम् । ततः सर्वे स्वस्वपूजां कुर्युश्च युगपच्छिवे ।।४ ।। आदौ द्रव्यस्थापनं वै पृथक् कुर्यात्तथाविधि । तद्विधानं महादेवि शृणु संयतमानसा ।।४१।। आग्नेये वेदिकां कृत्वा हस्तद्वयमितां शुभाम् । तत्र मध्ये महादेवि मण्डलं गन्धतोयतः ।।४२।। वृत्तं वेदत्रिषट्कोणं मत्स्यया मुद्रया भवेत् । भैरवं चापि दिक्पालान् त्रिशक्ति च षडङ्गकम् ।।४३।। अभ्यर्च्य प्रार्थयेद्देवि मण्डलेशं तु भक्तितः । नमो मण्डलनाथाय महामण्डलरूपिणे ।।४४।। कारणं धारयाक्षय्यं महदानन्दकारणम् । एवं पुष्पाञ्जलिं दत्वा पुण्यकाष्ठसमुद्भवम् ।।४५।। आधारं पञ्चपादं वै वर्तुलं स्थापयेच्छिवे । निवृत्त्यादिकलाः पञ्चपादेषु क्रमतोऽर्चयेत् ।।४६।। उपर्यग्नि-कलास्तत्र पूज्य प्राणमनुं जपेत् । पूज्य षोडशधा तत्र स्वर्णरौप्यभवं तथा।।४७।। काचं वा मृन्मयं वापि पात्रं वै यावदिच्छितम् । स्थाप्यार्चयेत् सूर्यकलां प्राणस्थापनपूर्वकम् ।।४८।। अर्चयेत् पूर्ववद्देवि गन्धाद्यैरुपचारकैः । आनीतं तु सुधापात्रं शक्तिहस्तगतं शिवे ।।४९।। सम्पूज्य मधुवातेति त्रयेण द्वितयेन च। हिरण्यपात्रेति तथा स्वाद्वीं त्वेत्यनुवाकतः ।।५०।। स्वाहान्तेनार्द्रमन्त्रेण चाभिमन्त्र्य ततः शिवे । तत्पात्रं यजमानो वै गृहीत्वा मस्तके वहेत् ।।५१।। शक्ति भूषणवस्त्राद्यैर्दक्षिणाभिश्च तोषयेत् । प्रदक्षिणत्रयं कृत्वा मण्डपान्तस्तु सर्वतः ।।५२।। आचार्येणाथ तद्गृह्य महापात्रं प्रपूरयेत् । तत्र सोमकलां चैव पूर्ववत् पूजनं चरेत् ।।५३।। अथ तस्य चतुर्दिक्षु संस्थिता ऋत्विजः क्रमात् । द्रव्यशोधनमन्त्राणि पूजोक्तानि वरानने ।।५४।। शन्नो मित्रश्च सह नाववत्विति ततः परम्। भद्रं कर्णेभिरित्येतत्ततः पूर्णमदं तथा ।।५५।। आप्यायन्त्विति शान्तीनां पञ्चकं वीरवन्दिते । प्रजपेयुरथाचार्यः शुद्धमालां पठेत् स्पृशन् ।।५६।। अथ तन्मुखमाच्छाद्य पूज्य षोडशधा ततः । वस्त्रेणाच्छाद्य तत्पात्रं पूजार्थं तत आहरेत् ।।५७।। स्वस्वपूजोपयोगार्थं तत्काले चानयेत् क्रमात । पूजासमाप्तौ तत्पात्रे नावशेषो यथा

भवेत् ॥५८॥ तथा कुर्यादथ शिवे रात्रौ तच्चक्रपञ्चकम्। पूजनीयं विधानेन युगपदृत्विगादिभिः ॥५९॥ कृत्वा तु शक्तिपूजान्तं सर्वैः समयिभिः सह । ब्रह्मादिभिश्च सहितो यजमानो महेश्वरि ॥६०॥ आचार्यचक्रं संपूज्य तर्पयित्वा गुरुक्रमम् । तत्त्वशुद्धिं विधायाथ गणेशादीन् प्रपूज्य च ॥६१॥ क्रमेण तत्प्रसादं वै यावदिष्टं पिबेत् सुधीः । अन्ते श्रीदण्डनाथायाः स्त्रीकुर्यात्तु प्रसादकम् ॥६२॥ ततः परं न पानं स्याद्विधिः सार्वत्रिको मतः । प्रत्यहं स्वस्वपूजाया नैवेद्यान्ते स्वदेवताम् ॥६३॥ चक्रादग्नौ समावाह्य होमयेद्देवतां त्रिधा । अन्ते स्रुचा विशेषार्घ्यतत्त्वेन जुहुयात् त्रिधा ॥६४॥ उद्वास्य देवतां चक्रे पूजाशेषं समापयेत् । गणेशादिक्रमेणैव होमं पूजां समाचरेत् ॥६५॥ गणेशं मोदकापूपलड्डुकाद्यैः प्रपूजयेत् । मन्त्रिणीपूजने गानं वाद्यं चापि प्रकल्पयेत् ॥६६॥ परस्परं चोपहासवाक्यैः सन्तोषयेच्च ताम् । बालां कुमारीपूजाद्यैर्हल्लीसाखेलनादिभिः ॥६७॥ क्षमापनैः प्रणामाद्यैः पूज्या मौनेन दण्डिनी । श्रीदेवीमुपचाराद्यैः पूजयेत् प्रत्यहं शिवे ॥६८॥ चतुर्थदिवसे चैवं गणेशादीन् प्रपूज्य च । यजमानं सपत्नीकमेकं वा पूर्वभागके ॥६९॥ वेदिकाद्वारमध्ये तु स्थितं पीठे सुशोभने । उद्वास्य वेदीकलशाद्देवतां तद्गतोदकैः ॥७०॥ जपन्मूलं मातृकां च ब्रह्माऽऽचार्य्यश्च ऋत्विजः । अभिषिच्य सशेषं तु कुम्भं संस्थाप्य वेदितः ॥७१॥ महाकारणकुम्भे वै सर्वपूजावशेषकम् । विशेषार्घ्यगतं द्रव्यं हेतुकुम्भस्थितं तथा ॥७२॥ निक्षिप्य तं वेदिमध्ये स्वाधारादवतारयेत् । कुम्भस्य परितः सर्वे वृत्ताकारेण संस्थिताः ॥७३॥ आचार्य्यो ऋत्विजो ब्रह्मा यजमानश्च तत्प्रिया । अन्ये सामयिका देवि त्रिगुरून् तर्प्य मस्तके ॥७४॥ यावत्तरुणबोधाः स्युस्तावत्पानं विधाय च । अवशिष्टं क्षिपेद्देवीकुम्भे तेनाभिषिञ्चयन् ॥७५॥ परस्परं शान्तिपाठं पठित्वा च समापयेत् । यजमानस्ततः पूजां समर्प्याभरणादिभिः ॥७६॥ दक्षिणाहेमवासोभिः सन्तोष्यर्त्विङ्मुखान्नमेत् । एवं देवि महापूजा ख्याता तन्त्रेषु दुर्लभा ॥७७॥ जन्ममध्ये सकृद् वापि कृत्वा पापैः प्रमुच्यते । शताश्वमेधसदृशं कोटिचक्रार्चनोपमम् ॥७८॥ शतधा सोमपानस्य यत्फलं तत्फलं भवेत् । महायागफलं वक्तुं मम शक्तिर्न विद्यते ॥७९॥ एतद्यागस्य कर्तारं पूजयन्ति सुराधिपाः । यत्र यत्र व्रजेदेष तत्र तत्र पराम्बिका ॥८०॥ स्थिता भवति सा भूमिः सर्वक्षेत्रोत्तमोत्तमा । बहुना किमिहोक्तेन भवेत् साक्षात् महेश्वरः ॥८१॥ एतत्ते सर्वमाख्यातं किं पुनः श्रोतुमिच्छसि ॥" इति ।

महापापं महापातकम्। तच्च गुरुद्रोहश्च तत्पत्नीगमनमित्यादि तत्रैवोक्तम्, कुलार्णवादिष्वपि प्रकारान्तरेणोक्तं तत एव ज्ञेयम्। अज्ञानात्तादृग्विधे महापापे कृते तत्प्रायश्चित्तरूपा महापूजा। न च महापातकिन एवात्राधिकार इति वाच्यम् शताश्वमेधसदृशमित्यादि फलान्तरस्याप्यन्ते वक्ष्यमाणत्वात् ॥१॥

शुभमासादिकं दीक्षोक्तं ज्ञेयम्। उत्सर्गतः प्राप्तत्वादादौ संकल्पोऽपि कर्तव्यः। ततो गणेशादिपूजनं कुर्यात्। गणेशादिपूजनं दीक्षोक्तवत् कलशादौ कर्तव्यम् ॥२॥

मण्डपशास्त्रोक्ते मण्डपे पुण्याहवाचनादिकं कृत्वा ॥३॥

मण्डपार्चनप्रकारमाह—पुरश्चरणेति। पुरश्चरणोक्तवद्दशदिक्पालान् पूजयेत्। मातृका ब्राह्म्याद्याः। असिताङ्गाद्यष्टभैरवाः। दिक्ष्वेकैकमर्चयेत् ॥४॥

तत्स्थानमाह—मण्डपान्तरिति। मण्डपबहिस्थितः मण्डपोपरि कालाग्निरुद्रं पूजयेत् ॥५-६॥

आचार्यादिवृतिं वरणं संकल्प्य ततो वृणुयादिति। संबन्धचतुष्टयं पूर्वादिभेदात् ॥७॥

पूर्वद्वार ऋत्विग्·दक्षिणद्वार ऋत्विगित्यादिक्रमेण ऋत्विग्वरणम्। मण्डपनवमभागेन स्तम्भचतुष्कमध्ये हस्तोच्चा वेदिकेति पद्धतिकृतः ॥८॥

तत्र वेदिकायां तत्क्रमेण दीक्षाक्रमेण ॥९॥

सर्वतोभद्रव्रीहिभिः सम्पूर्य तदुपरि कलशं न्यसेदित्यन्वयः। न तु कलशं व्रीहिभिः संपूर्येति, कलशोदकेनान्तेऽभिषेककथनात्। अत्र पञ्चधान्यान्तर्गतव्रीहेः पुनर्विधानादन्येषां धान्यानां निवृत्तिर्बोध्या। पञ्चरत्नैर्युतं कलशमित्यनुवादः। तथा पञ्चपल्लवान्मुखे विन्यस्येत्यादिरप्यनुवादः ॥१०॥

कलशे मूलदेवीपूजनमप्यतिदेशप्राप्तमेव। मध्यवेदिकायाः पश्चिमादिषु संबद्धा उपवेदिकाः। नाभेर्नीचस्थानस्य पूजने निषेधाद् द्वादशाङ्गुलोच्छ्रितेति पद्धतावुक्तम्। हस्तविस्तृतिस्तु सिन्दूरादियन्त्रलेखनस्य तन्न्यूनेऽसम्भवाभिप्रायेण ॥११॥

चक्रचतुष्टये पूज्यदेवतामेवाह--मूलदेवीमित्यादि। पश्चिमादिप्रादक्षिण्येन। तत्तदागमः तत्तत्पूजाविधिः ॥१२॥

एवं सामान्येनोक्त्वा विशेषतः पूजाविधानमाह—प्रथम इति। वरणस्यान्ततः अनन्तरम्। पूर्ववेदिकायामुत्तरमुखः ॥१३॥

गणेशपूजनादिक्रमकाले यजमानादेरुपवेशस्थानमाह—वाग्विति। एकासने यजमानः सभार्यस्तिष्ठेत्। योग्यत्वाद्यजमानदक्षिणत आचार्यसमीपे ब्रह्मा तिष्ठेत् ॥१४॥

स्वस्वद्वारे वक्ष्यमाणरीत्या पूर्वमुखोदङ्मुखा ऋत्विजः स्थिता भवेयुरिति शेषः। पूजारूपसर्वकर्मादौ ॥१५॥

आज्ञां प्रार्थ्य कर्मान्ते ब्रह्मणे निवेदयेत्। तत्र मन्त्रमाह—यजमानेति ॥१६॥

अत्र ब्रह्मण आदानेऽयमेव मन्त्रो योग्यतया—"गणेशं पूजयाचार्य सावधानेन चेतसा" इति पद्धतिषु पठितः। अन्ते च विनिवेदयेदित्यत्र चकाराद् ब्रह्मण आज्ञादानेऽप्ययं मन्त्र इति तत्तात्पर्यम्। विनिवेदनेऽप्येवम्, "गणेशः पूजितो देव आज्ञया तव भो प्रभो" इति ॥१७॥

आज्ञाप्रार्थनमाज्ञादानमन्ते निवेदनं प्रत्यहं तत्तत्पूजनाद्यन्तयोस्तेन तेन कर्तव्यं ज्ञेयम्। तत्त्वशोधनं स्वात्मीकारो भवेत् ॥१८॥

गणेशोद्वासनं विना पूजां समाप्य। तत्र गणेशपूजायाम् ॥१९॥

तत्र मन्त्रः—जगन्मातुरिति ॥२०॥

इति ऋत्विजं संप्रार्थ्य तं हस्ते गृहीत्वा देवसम्मुखे उपवेशयेत्। स ऋत्विक् ॥२१॥

उदङ्मुख उपविष्ट इति संबन्धः। आदिना न्याससहस्रनामादि। ततः गणेश-ऋत्विङ्नियोजनानन्तरम्। आचार्यः श्रीदेवीं पूजयिष्यामीत्याज्ञां प्रार्थ्य। पश्चिमायां दिशि ॥२२॥

प्राङ्मुखः पूजयेत् ॥२३॥

होमविधिमाह—ईशान्य इति। अत्र कुण्डप्रमाणं कुण्डशास्त्राज्ज्ञेयम्। दीक्षोक्तवद् गणेशहोमान्तसंस्कारसंस्कृते वह्नौ पुरश्चरणोक्तवन्नाडीसन्धानान्ते आवरणं सर्वं हुनेदिति शेषः। अत्रावरणं तु अणिमादिमूलदेव्यन्तमेव। न नित्यादिपञ्च-पञ्चिकादि, "गुरुत्रयं षडङ्गानि सम्पूर्णमावृतिं तथा" इत्यत्र द्वादशोल्लासे आवृत्तिपदे-नाणिमादेरेव ग्रहणात्। दीक्षापदसाहचर्यात् तत्रोक्ततिथिनित्याषोडशीसप्तदशी-गुरुत्रयाङ्गानामादिपदेन संग्रहः ॥२४॥

पात्रतः स्रुक्स्थितेन होमं कुर्यादिति सम्बन्धः। आवरणहोमान्ते स्रुक्स्थितेन द्रव्येण योग्यतया श्रीपात्रस्थं द्रव्यं श्रुवातः पात्रान्तरेण गृहीत्वा मूलदेव्यै स्रुचा होमं कुर्यादिति भावः। अत्राग्निस्थापनं प्रातर्गणेशपूजननैवेद्यान्ते एव कर्तव्यम्, "प्रत्यहं स्वस्वपूजाया नैवेद्यान्ते स्वदेवताम्। चक्रादग्नौ समावाह्य होमयेद्देवतां त्रिधा॥" इति वक्ष्यमाणवचनानुरोधेन गणेशपूजाङ्गहोमस्य प्रातः कर्तव्यत्वात्। अत्र गणेश-मन्त्रश्चतुर्धा। होमान्तं दीक्षोक्तम् अग्निसाधनम् आचार्येण सकृत्कार्यम्। प्रत्यहं तत्तत्पूजानैवेद्यान्ते स्वस्वपीठशक्तिपूजनादिनाडिसन्धानान्तं प्रत्येकं कार्यम्। पात्रान्तरे श्रीपात्रद्रव्यमादाय स्रुचा त्रिधा मूलदेव्यै होमं कुर्यात्। एवं होमं कृत्वा उद्वास्य देवतां चक्रे इति वक्ष्यमाणवचनाद्देवतामग्नेरुद्वास्य होमं समाप्य शक्त्यादीनां तत्त्वशुद्धिं कृत्वा देवतोद्वासनं विना समापयेदिति सम्बन्धः ॥२५॥

स्वस्वाधिकारोक्तो बोधः पूर्णबोधः। स्वस्त्रशक्तियुता इति शक्तिसंभवाभिप्रायेण। अत एव यजमानं सपत्नीकमेकं वेत्यन्ते वक्ष्यति, शक्तिरहितस्यापि महापापसभावनेनाधिकारस्य दुर्निवारत्वात् ॥२६॥

शरगना यजमानाद्याः ॥२७॥

एवं प्रातर्गणेशपूजनवत्। दक्षभागस्थवेदिकायां शेषं तत्त्वशुध्द्यादि ॥२८॥

तत्र विशेषमाह—पुष्पिणीमिति। पुष्पिणीं रजस्वलाम्। तत्संस्कारन्यासादयस्तु तन्त्रान्तरेषु द्रष्टव्याः। अथवा अप्रसूताम् अल्पप्रसूतां वा दीक्षायुताम् ॥२९॥

विंशदर्वागवयस्का विंशतिवर्षतो न्यूनवयोवती वा। शुद्धमानस इति पुष्पिण्यादिपूजने विकल्पहीनः। तस्याः शक्तेः शेषम्। आचार्यो विनिवेदयेत् ॥३०॥

तच्छेषकं ब्रह्मणः शेषं स्वयं स्वीकृत्य स्वशेषकं यजमानाय देयम्। यजमानः भक्तितः स्वीकुर्यात् ॥३१॥

यजमानो निवेदयेत्। तां शक्तिम् ॥३२॥

पूर्ववद् गणेशपूजनवत् ॥३३॥

पूर्ववत् शक्त्यृत्विगादिक्रमेण। ततः गणपतिपूजानन्तरम्। पूर्ववत् प्रथमदिनवत् ॥३४॥

सर्वतः सर्वदिने प्रत्यहमिति यावत्। अथवा सर्वत्र गणेशादिबालान्तेषु। तर्हि कदा आवाहनाद्यमिति चेदाह—आवाहनमित्यादि। गणेशादिबालान्तानां तत्तदाद्यदिने आवाहनम्, अन्त्यदिने उद्वासनम्। अत्राद्यदिने इत्यत्र दिनपदं पूजनपरम्। तेन बालायाश्चरमदिने आवाहनं न विरुद्धम्। द्वितीयादिदिनेषु स्थावरयन्त्रे इवावाहनोद्वासने विना पूजनम् ॥३५॥

प्रातराचार्य्यो वाराहीं पूजयेत् ॥३६॥

अर्चने अर्चनसमये। भाषणप्रयोजने क्वचित् कदाचित् किञ्चित् स्वल्पं तदपि उपांशुभाषणम् ॥३७॥

शक्तिपूजादीत्यादिना तच्छेषं तु समादायेत्यादि। पूर्ववत् मन्त्रिणीपूजनवत्। पश्चिमे भागे ॥३८॥

वेदिके वेदिकायाम्। आचार्यः पूजयेत् ॥३९॥

सर्वं शेषग्रहणब्रह्मप्रार्थनादिकम्। ऋत्विङ्नियोजनं कृत्वा सर्वे आचार्यो ऋत्विजश्च ॥४०॥

आदौ पूजनादौ पृथक् पूजास्थानादन्यत्र ॥४१॥

मण्डपाग्नेये तत्र वेदिकायाम् ॥४२॥

वेदत्रिषट्कोणं चतुष्कोणत्रिकोणषट्कोणानि। आन्तराद् बाह्यान्तरक्रमेण। वृत्ते भैरवम्। चतुरस्रे दिक्पालान् क्रमेण। त्रिकोणे इच्छाज्ञानक्रियात्मकशक्तित्रय-मग्राद् वामतः। षट्कोणे षडङ्गं प्रागादिप्रादक्षिण्येन ॥४३॥

तत्र मन्त्रमाह--नम इति ॥४४॥

कारणं प्रथमम्। एवं प्रार्थनपूर्वकम् ॥४५॥

मण्डलोपरि स्थापयेत्। निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीतेति निवृत्त्यादि-कलाः प्रागादिक्रमतः ॥४६॥

तत्र आधारे उपरि अग्निकलाप्राणप्रतिष्ठां कुर्यात्। प्राणस्थापनपूर्वकमिति वक्ष्यमाणानुरोधात्। अग्निकलां संपूज्य षोडशधा षोडशोपचारैः। तत्र आधारे ॥४७॥

यावदिच्छितम्। सामयिकादिस्वात्मीकारादिपर्याप्तद्रव्यसंमितम्। संस्थाप्य तत्र पात्रे ॥४८॥

पूर्ववत् षोडशोपचारैः। गन्धाद्यैः पञ्चोपचारकैः। आनीतं सुधापात्रं संपूज्येत्यन्वयः ॥४९-५०॥

स्वाहान्तेन आर्द्रं ज्वलतीति मन्त्रेण शक्तिहस्ताद् गृहीत्वा ॥५१॥

आचार्यस्तोषयेत्। यजमानो मण्डपान्तः सर्वतो बालादिदेवताग्न्यादीनां कलशं वहन् प्रदक्षिणत्रयं कृत्वा। स्थिताद् यजमानात् ॥५२॥

आचार्येण आचार्यस्तत्पात्रम्। गृह्य गृहीत्वा। महापात्रं काष्ठाधारोपरि स्थापितम्। तत्र पात्रस्थे कारणे पूर्ववत् प्राणप्रतिष्ठापूर्वकषोडशधा पूजनम् ॥५३॥

तस्य पात्रस्य ऋत्विजश्चत्वारः क्रमात् स्थिताः। द्रव्यशोधनमन्त्राणि मन्त्रान् स्वादिष्ठयेत्यादि विमोचिकायै स्वाहेत्यन्तान् ॥५४॥

शन्नो मित्र इत्यादि शान्तिमन्त्रपञ्चकमित्यन्वयः ॥५५॥

कलशं स्पृशन् शुद्धमालामन्त्रमाचार्यः पठेत् ॥५६॥

तस्य कलशस्य मुखम्। कलशं षोडशोपचारैः संपूज्य ॥५७॥

कदा आहरेत्तदाह—तत्काले इति। संस्कारकाले क्रमाद् योगिनीद्वारा क्रमेण योगिनीपूजनस्यावश्यकत्वात्। पूजासमाप्तौ यथा नावशिष्येत्तथा आनेयमित्याह—पूजेति ॥५८॥

रात्रौ तारकोदये उपचारादिना पूजनीयम्। युगपद्. एककाले। ऋत्विगादो-त्यादिनाचार्यः ॥५९॥

एवं पूजां शक्तिपूजान्तां कृत्वा स्थितेष्वाचार्यादिष्विति शेषः। ब्रह्मादिभिः सर्वैः समयिभिः सह यजमानः ॥६०--६१॥

क्रमेण गणेशमन्त्रिणीदण्डिनीबालाक्रमेण प्रपूज्य तत्प्रसादं गणेशादिप्रसादम्। प्रथमादि यावदिष्टं शास्त्रेषु यस्य यावदिष्टमुक्तम्। उल्लासभेद आरम्भादिकम्। प्रसादं पिबेदित्यनेन तर्पयित्वा गुरुक्रममिति प्रागुक्तेन च आदावेव तर्पणं न पुनर्गणेशादौ, किन्तु तत्र पानमात्रम्। तच्च सामान्यवचनेन मूलपादुकान्यतरमन्त्रेणेति ज्ञेयम् ॥६२॥

ततः परं दण्डनाथाप्रसादस्वीकारानन्तरम्। सार्वत्रिकः सर्वसाधारणः। एवं प्रकृतमुक्त्वा तत्प्रकरणानुक्तं गणेशादिहवनक्रममाह—प्रत्यहमिति ॥६३॥

अग्नाविति भूतविभक्त्या साधिते कुण्डस्थितेऽग्नौ, न तु होमार्थं पृथगग्निसाधनम्। अत एव एकाग्नौ युगपद्धोमासंभवाद् गणेशादिक्रमेणेति वक्ष्यति। अत एव चक्रात्तदग्नावावाह्येति पाठान्तरमपि संगतम्। तत्तत्पूजने नैवेद्यान्ते। अर्थात् पूजाङ्गहोमस्थाने स्वस्वदेवतां स्वस्वचक्रात्तदग्नावावाह्य प्रत्येकम् आज्येन विशेषार्घ्यद्रव्येण च देवतां त्रिधा हुनेत्। अयं होमस्तु पूजाङ्गहोमोत्तरमेव, "विशेषपूजोक्तहोमो नित्यहोमान्तन्त्रो भवेत्" इति नित्यातन्त्रोक्तेः। तत्त्वं द्रव्यं पूर्वोक्तवज्जुहुयात् ॥६४॥

अग्नेर्देवतां चक्रे उद्वास्य। ननु युगपत् पूजां कुर्युरिति प्रागुक्तम्। तत्राग्नेरैक्यात् कथं युगपत्पूजाङ्गहोम इति चेदाह—गणेशादिक्रमेणेति। गणेशमन्त्रिणीदण्डिनीबालाक्रमतः। मूलविद्या प्रत्यहं सर्वान्ते पूज्यत इति तद्धोमः सर्वान्ते चरमदिने स्वहोमान्ते अग्निप्रयोजनस्य निवृत्तत्वादध्याहृतिहोमाद्युत्तरतन्त्रं समापयेत्। एवं यजमानादिरपि स्वात्मीकाराङ्गपूजां क्रमेण कुर्यात्। न तु प्रसादस्वीकारक्रमेणेत्याह—पूजामिति ॥६५॥

अथ गणेशादिपूजने विशेषमाह—गणेशमित्यादि। आद्यैरित्यन्यभक्ष्यैः ॥६६॥

तां मन्त्रिणीम्। हल्लीसा खेलनम्। परस्परं रञ्जितकाष्ठदण्डाद्याघातरूपं दक्षिणदेशे आन्ध्रकुमारीभिः क्रियमाणं नृत्यं प्रसिद्धम् ॥६७-६८॥

एकं वेति पत्न्यसंभवाभिप्रायेण। मण्डपान्तः पूर्वभागे ॥६९॥

स्थितं यजमानम् ॥७०॥

अभिषिच्य स्नापयित्वा वेदीतः वेद्याम् ॥७१॥

काष्ठाधारस्थे कुम्भे। गणेशादीनां पूजाविशेषकम् ॥७२॥

तं कुम्भं काष्ठमयस्वाधारात् ॥७३॥

के ते सर्वे इत्याशङ्क्याह—आचार्यं इति। कुम्भात् पात्रमाचार्यदत्तमादाय। त्रिगुरून् संतर्प्य ॥७४॥

देवीकुम्भे मध्यवदिकास्थिते ॥७५॥

आचार्यो ऋत्विजश्च। नेनोदकेन परस्परमभिषिञ्चन् निर्माल्यधारणान्तां पूजां

समापयेत् । यजमानाभिषेकादिकं तु शान्तिस्तवपाठस्यादावुक्तत्वाद् उच्छिष्टभैरव-बल्यन्ते कर्तव्यमिति ज्ञेयम् । ततः आचार्यादिभिः पूजासमापनानन्तरम् ।।७६।।

उपसंहरति--एवमिति ।।७७-७९।।

पराम्बिका स्थिता भवतीत्यन्वयः ।।८०-८१।। इति तस्यार्थः ।

अत्र मन्त्रिणीदण्डिनीबालामूलदेवीनां पूजापद्धतिर्मूलतन्त्रे तत्तत्प्रकरणे निरूपिता । गणपतिपद्धतिर्मूलेऽनुक्तेति परशुरामसूत्रानुरोधेन संक्षिप्य निरूप्यते । तथा च सूत्रम्– "अथ यागविधिगृहमागत्य स्थण्डिलमुपलिप्य द्वारदेशे उभयपार्श्वयोर्भद्रकाल्यै भैरवाय द्वारोर्ध्वे लम्बोदराय नम इत्यन्तःप्रविश्यासनमन्त्रेणासने स्थित्वा प्राणानायम्य षडङ्गानि विधाय मूलेन व्यापकं कृत्वा स्वात्मनि देवं सिद्धलक्ष्मीसमाश्लिष्टपार्श्वमर्धेन्दुशेखर-मारक्तवर्णं मातुलिङ्गगदापुण्ड्रेक्षुकार्मुकशूलसुदर्शनशङ्खपाशोत्पलधान्यमञ्जरीनिजदन्ता-ञ्चलरत्नकलशपरिष्कृतपाण्येकादशकं प्रभिन्नकरटमानन्दपूर्णमशेषविघ्नध्वंसनिघ्नं विघ्ने-श्वरं ध्यात्वा पुरतो मूलसप्ताभिमन्त्रितेन गन्धाक्षतपुष्पधूपदीपपूजितेन वारिणा शुद्धेन त्रिकोणषट्कोणवृत्तचतुरस्राणि विधाय तस्मिन् पुष्पाणि विकीर्य वह्नीशासुरवायुषु मध्ये दिक्षु च षडङ्गानि विन्यस्याग्निमण्डलाय दशकलात्मनेऽर्घ्यपात्राधाराय नमः सूर्यमण्डलाय द्वादशकलात्मनेऽर्घ्यपात्राय नमः सोममण्डलाय षोडश-कलात्मनेऽर्घ्यामृताय नम इति शुद्धजलमापूर्यास्त्रेण संरक्ष्य कवचेनावगुण्ठ्य धेनुयोनिमुद्रे प्रदर्श्य सप्तवारमभिमन्त्र्य तज्जलविप्रुड्भिरात्मानं पूजोपकरणानि च संप्रोक्ष्य तज्जलेन पूर्वोक्तमण्डलं परिकल्प्य तद्वदादिमं संशोध्य तत्रोपादिमं मध्यमं च निक्षिप्य वह्न्यर्कन्दुकला अभ्यर्च्य वक्रतुण्डगायत्र्या गणानां त्वा गणप० सादनम् इत्यनयर्चा चाभिमन्त्र्यास्त्रादिरक्षणं कृत्वा तद्विन्दुभिस्त्रिशः शिरसि गुरुपादुकामाराध्य पुरतो रक्तचन्दननिर्मितपीठे महागणपतिप्रतिमायां वा चतुरस्राष्टदलषट्कोणत्रिकोणमये चक्रे वा तीव्रायै ज्वालिन्यै नन्दायै भोगदायै कामरूपिण्यै उग्रायै तेजोवत्यै सत्यायै विघ्ननाशिन्यै ऋं धर्माय ऋं ज्ञानाय लृं वैराग्याय लॄमैश्वर्याय ऋमधर्माय ऋमज्ञानाय लृमवैराग्याय लॄमनैश्वर्याय नम इति पीठशक्तीर्धर्माष्टकं चाभ्यर्च्य मूलमुच्चार्य महागणपतिमावाहयामीत्यावाह्य पञ्चपञ्चोपचर्य दशधोपतर्प्य मूलेन मिथुनाङ्ग-विघ्नब्राह्म्यादीन्द्रादिरूपपञ्चावरणपूजां कुर्यात् । त्रिकोणे देवः । तस्य षडस्रस्यान्तराले श्रीपत्यादिचतुर्मिथुनानि ऋद्ध्यामोदादिषण्मिथुनानि षडस्रे मिथुनोभयं षडस्रो-भयपार्श्वयोस्तत्सन्धिष्वङ्गानि ब्राह्म्याद्या अष्टदले चतुरस्राष्टदिक्ष्विन्द्राद्याः पूज्याः । सर्वत्र देवतानामसु श्रीपूर्वपादुकामुच्चार्य्य पूजयामीत्यष्टाक्षरं योजयेत् । एवं पञ्चावरणी-मिष्ट्वा पुनर्देवं गणनाथं दशधोपतर्प्य षोडशोपचारैरुपचर्य प्रणवमायान्ते सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहेति त्रिः पठित्वा बलिं दत्त्वा गणपतिबुध्यैकं वटुकं सिद्धलक्ष्मी-बुद्ध्यैकां शक्तिं चार्घ्यगन्धपुष्पाक्षतैरभ्यर्च्यादिमोपादिममध्यमान् दत्त्वा मम निर्विघ्नं भूयादित्यनुग्रहं कारयित्वा नमस्कृत्य यथाशक्ति जपेत् । यद्यग्निकार्यसम्पत्तिर्बलेः पूर्वं विधिवत्संस्कृतेऽग्नौ नतिस्वाहान्तश्रीश्रीपत्यादिविघ्नकर्तृपर्यन्तैर्मन्त्रैर्हुत्वा पुनरागत्य

देवं त्रिवारं सन्तर्प्य योग्यैः सह मपञ्चकमुररीकृत्य महागणपतिमात्मन्युद्वास्य सिद्धसङ्कल्पः सुखं विहरेदिति शिवमिति ।

द्वारदक्षवामोर्ध्वेषु भद्रकालीभैरवलम्बोदरान् पुष्पाक्षतैः संपूज्य भूशुध्यादिमातृकान्यासान्तं तन्त्रोक्तम् ।

अथ रुद्रयामलोक्ता विशेषन्यासाः—ॐ आत्मतत्त्वाय हृदयाय नमः। ॐ विद्यात० शिरसे स्वाहा। ॐ शिवत० शिखायै व०। ॐ गुरुतत्त्वा० कवचा०। ॐ योगत० नेत्रत्र०। ॐ सर्वतत्त्वायास्त्राय फट्। इति तत्त्वन्यासः। अं कं खं घं ङं आं हृदयाय नम इत्यादि मातृकाङ्गन्यासो द्वितीयः। एतद्द्वयमादौ कराङ्गुष्ठादावपि न्यसेत्। हृदि ॐ गं काशीपीठाय नमः। शिरसि ॐ गं काञ्चीपीठा०। शिखायाम् ॐ गं मथुरापी०। कवचे ॐ गं ओग्रयाणपा०। नेत्रे ॐ गं अयोध्यापी०। अस्त्रे ॐ गं जालन्धरपीठाय नमः। इति पीठन्यासः। ॐ हृदयाय श्रीं गणपतये शिरसे स्वाहा। ह्रीं वरवरद शिखायै०। क्लीं सर्वजनं मे कवचा०। ग्लौं वशमानय नेत्रत्र०। गं स्वाहा अस्त्राय०। इति षडङ्गे न्यसेदिति मूलविद्यान्यासः। ततः सूत्रोक्तं मूलषडङ्गम्। मूलेन व्यापकं कृत्वा स्वात्मनि बीजापूरेति महागणपतिं ध्यात्वा सङ्कल्पादिगणेशप्रार्थनान्तं मार्तण्डभैरवार्घ्यं च कृत्वा ततः सामान्यकलशविशेषार्घ्यसामान्यार्घ्यहेतुपात्रद्वितीयतृतीयमुद्रापात्राणि चेति सप्त पात्राण्यासाद्य सामान्यकलशादिहेतुपात्रस्थापनान्तं बालाप्रकरणवत्। सामान्यकलशादिमण्डलेषु गणपतिषडङ्गैः पूजनम्। गणपतिमूलजपः कलशादौ। अत्र सूत्रे मूलसप्तधामन्त्रितेन गन्धाक्षतपुष्पपूजितेन शुद्धेन वारिणेति सामान्यकलशस्थापनं द्योतितम्। तत्र तन्त्रोक्तमूलाष्टाभिमन्त्रणेनैव मूलसप्ताभिमन्त्रितत्वसिद्धिः। ततः सामान्यार्घ्याधः त्रिकोणषट्कोणवृत्तचतुरस्राणि कृत्वा तत्र पुष्पाणि विकीर्य तत्र चतुरस्रे षडङ्गानि विन्यस्येति श्रीक्रमसूत्राभ्यर्च्येत्यनुरोधात् पूजनम्। अग्निमण्डलायेत्याद्यशुद्धजलमापूर्येत्यनुरोधादाधारादिस्थापने मन्त्रो ज्ञेयः। अग्निकलादिपूजनमपि मूलतन्त्रोक्तं कर्तव्यमेव। अमृतीकरणादिचतुष्टये तन्त्रोक्ते सूत्रोक्तसंरक्षणावगुण्ठनयोरन्तर्भावः। धेनुयोन्योः प्रदर्शनम्। मूलस्याष्टाभिमन्त्रणे सप्तधा मन्त्रणान्तर्भावः। तदुदकेन प्रोक्षणं समानम्। ततः सामान्यार्घ्योदकेन विशेषार्घ्याधः प्रोक्तत्रिकोणादिमण्डलं कृत्वा तद्वदिति सूत्रेण श्रीक्रमोक्तविधिना विशेषार्घ्यस्थापनं ज्ञेयम्। तथा च सूत्रम्-मध्यं विद्यया त्रिद्याखण्डैस्त्रिकोणं बीजावृत्त्या षडस्रं संपूज्य ऐमग्निमण्डलाय दशकलात्मनेऽर्घ्यपात्राधाराय नम इति प्रतिष्ठाप्याधारं प्रपूज्य पावकीः कला मदनादुपरि सूर्यमण्डलाय द्वादश० अर्घ्यपात्राय नम इति सन्निधाय पात्रं संपूज्य कलाः सौरीः सौः सोममण्डलाय षोडश० अर्घ्यामृताय नम इति पूरयित्वाऽऽदिमं दत्त्वोपादिममध्यमौ पूजयित्वा विधोः कलाषोडशकं तत्र विलिख्य त्र्यस्रमकथादिमयरेखं हक्षयुगान्तःस्थितहंसभास्वरं वाक्कामशक्तियुक्तकोणं हंसेनाराध्य बहिर्वृत्तं षट्कोणं

कृत्वा षडङ्गेन पुरोभागाद्यभ्यर्च्य मूलेन सप्तधाभिमन्त्र्य दत्तगन्धाक्षतपुष्पधूपदीपस्त- द्विप्रद्र भः प्रोक्षितपूजाद्रव्यः सर्वं विद्यामयं कृत्वा तत्स्पृष्ट्वा चतुर्नवतिमन्त्रान् जपेत्। त्रितारीनमःसंपुटितारतेजस्त्रितयकला अष्टत्रिंशत्सृष्टिऋद्धि० सिद्धयो ब्रह्मकला दश जरापालि० दार्घा दश विष्णुकलास्तीक्ष्णा० मृत्यवो दश रुद्रकलाः पीताश्वे० सिताश्चतस्र ईश्वरकला निवृत्ति० व्योमरूपा षोडश सदाशिवकलाः हंसः शुचि० बृहत्० । प्र तद्वि० विश्वा० त्र्यम्बकं० मृतात्। तद्विष्णोः० पदम्। विष्णुर्यो० स्रजा। इत्येते मन्त्रा मूलविद्यया चाहृत्य चतुर्नवतिमन्त्राः। एताभिरभिमन्त्र्य ज्योतिर्मयं तदर्घ्यं विधायेति। मण्डलमध्यं विद्यया संपूज्य प्रकृते षडङ्गन्यासार्थं षड्धा विभक्तमन्त्रस्य भागद्वयस्यैकी- कारेण विद्यात्रिखण्डैस्त्रिकोणं ॐ श्री० तपे १ वर नं मे २ वश० स्वाहा ३ इति। बीजावृत्त्येति तत्खण्डत्रयस्य द्विरावृत्त्या षडस्रं पूजयेत्। चतुरस्रे पूर्ववत् षडङ्गम्। वाचं ऐं। पात्रीः कला अग्निकलाः। मदनः क्लीं सौरीः कलाः सूर्यकलाः संपूज्य। आदिमं द्रव्यं पूरयित्वा अर्धाद्धं पात्रप्रथमद्रव्येण पूरयित्वा उपादिममध्यमौ द्वितीयतृतीये दत्त्वा तद्द्रव्यलेशं विशेषार्घ्ये निक्षिप्य। विधोः कलाः सोमकलाः पूजयित्वा। तत्पात्रद्रव्ये अकथादित्रिरेख त्रिकोणम्। त्रिकोणान्तः हंस इत्यनयोर्मध्ये हंस इति लिखितेन भास्वरं कृत्वा तस्याग्रादिवामतः कोणेषु वाक्कामशक्त्यो बालाबीजत्रयमिति विलिख्य। एवंविधं त्रिकोण हंसः नमः इति गन्धाक्षतपुष्पैः संपूज्य त्रिकोणबहिर्वृत्तं षट्कोणं च निर्माय तत्कोणेष्वग्रादिषडङ्गं पूजयेत्। दत्तः समर्पितो गन्धादिः। तत्पात्रस्य सर्वं विशेषार्घ्यादिपात्रम्। विद्यामयं कृत्वा ध्यात्वा। आदौ त्रितारी अन्ते नम इति चतुर्नवतिमन्त्राणाम्। चतुर्नवतिमन्त्रानाह—तेज इति। तेजस्त्रितयकला अग्निसूर्य- सोमकला अष्टत्रिंशत्। ब्रह्मादिसदाशिवान्तानां कलाः पञ्चाशत्। हंसः। प्र तद्वि०। त्र्यम्बकम्। तद्विष्णोः। विष्णुर्योनिमिति पञ्च। मूलं चेति चतुर्नवतिमन्त्राः।

अखण्डादिमन्त्राणामेके इति सूक्ष्मत्वया अमुख्यत्वेन हेतुपात्रे पठितत्वेन चासंग्रहः कृतः। विशेषार्घ्यद्रव्यं ध्यानेन ज्योतिर्मयं विधाय तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात्। गणानां त्वा गण० सादनम् इत्यभिमन्त्र्य अस्त्रेण संरक्षणादियोनिमुद्राप्रदर्शनान्तं सामान्यार्घ्यवत्। तद्बिन्दुभिरित्यात्मपूजनं क्रमोक्त- द्योतकम्। तत्र सूत्रम्—तद्बिन्दुभिस्त्रिशः शिरसि गुरुपादुकां ध्यात्वा आर्द्रं ज्वलति स्वाहेति तद्बिन्दुमात्मनः कुण्डलिन्यां जुहुयादिति। तद्बिन्दुभिरि त। तन्त्रोक्तवत्पुरःसंस्थापितैः गुरुपादुकां त्रिः संतर्प्य आर्द्रमन्त्रेण कुण्डलिन्यग्नौ हुनेत्। रक्तचन्दनपीठस्थे चक्रे पीठपूजां कुर्यात्। पीठाष्टदिक्षु मध्ये च तीव्रादिविघ्ननाशिन्यन्तं पीठाग्नेयादिकोण- चतुष्टये ऋं धर्मायेत्यादिचतुष्कं प्रागादिचतुर्दिक्षु ऋंमधर्मायेत्यादिचतुष्कं च पूजयेत्। अत्र देवाग्रस्य पूर्वता ज्ञेया। आवाहनमपि श्रीक्रमोक्तवत्। तथा च सूत्रम्—अथ हृच्चक्रस्थितामन्तःसुषुम्णापद्माटवीनिर्भेदनकुशलां निरस्तमोहतिमिरां शिवदीपदीप्ति- माद्यां संविद ब्रह्मनासापुटेन निर्गमय्य लीलाकलितवपुषं तां त्रिखण्डमुद्राशिखण्डे कुसु- माञ्जलौ हस्ते समानीयेति। हृत्कमले महागणपतिं ध्यात्वा। तं भक्तानुग्रहलोलया

धृतशरीरं शिवात्मकप्रकाशमयम् अज्ञानलेशशून्यं तेजोरूपं सुषुम्णामार्गभेदनक्रमेण ऊर्ध्वसहस्रदलं नीत्वा नासामार्गेणाञ्जलिस्थकुसुमे संयोज्येत्यर्थः। मू० महागणपतिमावाहयामीति चक्रमध्ये ध्यातमूर्तिमूर्ध्नि निक्षिप्य आवाहनमुद्राप्रदर्शनादिप्राणप्रतिष्ठान्तं तन्त्रोक्तवत् पञ्चोपचारैः संपूज्य मूलान्ते महागणपतिश्रीपादुकां पूजयामीति विशेषार्घ्यादृशधा संतर्प्य चतुरस्रे इन्द्रादीन् अष्टदले प्रागादिदिग्दलेषु वायव्यादिकोणदलेषु ब्राह्म्यादीः षडस्राष्टदलसन्धिषु अङ्गानि, षट्कोणेषु दक्षवामपार्श्वयोश्च ऋद्ध्यामोदादिमिथुनाष्टकम्, त्रिकोणषट्कोणान्तराले दिक्षु श्रीश्रीपत्यादिमिथुनचतुष्कम्, त्रिकोणमध्ये महागणपतिमिति संहाररीत्यैव पूजयेत्, सृष्टिपूजायास्तन्त्रे निषेधनात्।

श्रीपत्यादिनामानि प्रोक्तानि सूत्रे—श्री श्रीपति, गिरिजा गिरिजापति, रति रतिपति, मही महीपति ऋद्ध्यामोद समृद्धिप्रमोद, कान्तिसुमुख, मदनावतीदुर्मुख, मदद्रवविघ्न, द्राविणीविघ्नकर्तृ, वसुधाराशङ्खनिधि, वसुमतीपद्मनिधि—इति। अत्रापि तन्त्रानुसारेण चतुरस्राय नम इत्यादौ पुष्पाञ्जलिं सामान्यार्घ्योदकेन समर्पणं त्रिस्तर्पणम् अभोष्टेति पुष्पाञ्जलिं प्रणामांश्च योजयेत्। तथा त्रिकोणपृष्ठे रेखायां गुरुत्रयार्चनमपि तन्त्रोक्तं ग्राह्यम्। षोडशोपचारैरिति योग्यतया समर्थस्य चतुःषष्ट्युपचारोपलक्षणम्। तत्र नैवेद्यसंस्कारस्तन्त्रोक्तवत्। तथा प्राणादिमुद्राप्रदर्शनादि। श्रीश्रीपत्यादिविघ्नकर्त्रन्तदशमन्त्रैर्होमः। परिषेचनं तूष्णीम्। होमान्ते देवं त्रिस्तर्पयेत्। बलिविशेषविधिस्तु श्रीक्रमे उक्तः। तथा च सूत्रम्—वामभागविहिते त्रिकोणवृत्तचतुरस्रे गन्धाक्षतार्चिते वाग्भवमुच्चर्य व्यापकमण्डलाय नम इति अर्धभक्तभरिताम्भःसादिमोपादिममध्यमभाजनं तत्र न्यस्येति। स्ववामे देवोत्तरतः। मण्डलाय नम इत्यर्चिते। अर्धपात्रं भक्तेन भरितम् अवशिष्टं जलेन पूर्णं प्रथमादित्रययुतम्। एवंविधं बलिपात्रं मण्डले न्यस्य ॐ ह्रीं सर्वेत्यादिमन्त्रं त्रिः पठित्वा बलिं दद्यात्। एकस्मिन् बटुके एकस्यां सुवासिन्यां च गणपतिं सिद्धलक्ष्मीं च विशेषार्घ्यद्रव्यादिभिः संपूज्य मम निर्विघ्नं भूयादिति प्रार्थयेत्। ततस्तन्त्रोक्तबालाक्रमवत् पूजाशेषसमाप्तिः। तत्र तत्र मन्त्रेषु लिङ्गविपरिणामाद्यूहो ज्ञेय इति। अत्र सर्वत्र पूजनादौ न्यूनातिरेके पद्धत्युक्तं प्रायश्चित्तं ज्ञेयम्।

अथात्र प्रसङ्गात् पद्धत्युक्तसन्ध्यादिप्रायश्चित्तविधिर्विविच्यते। तत्र प्रातःस्मरणादिस्नानान्तकर्मैकदेशलोपे तत्समस्तलोपे च प्रसिद्धतन्त्रेषु प्रायश्चित्तादर्शनात् पद्धतिष्वपि तदलेखनाद् यद्यपि प्रातःस्मृत्यादिकर्मणो यत्किञ्चित्फलकल्पनया काम्यत्वं प्राप्नोति, तथापि "यथा स्नानमकृत्वा तु सन्ध्यां कुर्यात्तथा भवेत्" इति विंशत्युल्लासोक्त्या तस्यावश्यकत्वप्राप्तेस्तल्लोपेऽपि प्रायश्चित्तं सामान्योक्तं यत्किञ्चिदभ्यासानभ्यासानुरोधेन कल्प्यम्। सामान्यप्रायश्चित्तं चाग्रे निरूप्यते। अथ सन्ध्यायां प्रायश्चित्तम्। तत्राङ्गाङ्गिभेदस्तल्लोपे प्रायश्चित्तमुक्तं त्रिपुरार्णवे—"अर्घ्यस्तथा मूलदेव्या जपः सन्ध्यासु मुख्यकम्। अन्यदङ्गं क्रमाल्लोपे शतधा दशधा जपः॥" इति। अत्रार्घ्यं तर्पणोपलक्षणम्, योग्यत्वात्, "सन्ध्यायां मूलदेव्यर्घ्ये जपे चाङ्गत्वमिष्यते" इति

स्वतन्त्रवचने चकारेण तत्संग्रहाच्च । क्रमाद् अङ्गिलोपे शतधा जपः, अङ्गलोपे दशधा जप इति तदर्थः । एतच्च विस्मरणेनाङ्गलोपे । बुध्याङ्गलोपे त्रिपुरार्णवे— 'बुद्धि-पूर्वकृतेऽङ्गस्य लोपे साकल्यलोपतः । यत्पापं तद्भवेद्देवि तस्माद् बुध्या न लोपयेत् ॥" इति । तस्माद् बुद्धिपूर्वकाङ्गलोपेऽङ्गिलोपप्रायश्चित्तमेव । स्वतन्त्रे त्वत्र विशेषः— "गौणाङ्गलोपे मूलस्य दशधा जपतः शुचिः । मुख्याङ्गलोपे शतधा त्वङ्गिलोपे पुनः क्रिया ॥ सन्ध्यायां मूलदेव्यर्घ्ये जपे चाङ्गत्वमिष्यते । मार्तण्डवाग्भवार्घ्ये च मुख्याङ्गत्वं प्रकीर्तितम् ॥" इति । अङ्गलोपे द्वितीयकालात् पूर्वं स्मरणे पुनः संध्या कर्तव्या, वक्ष्य-माणकालात्ययप्रायश्चित्तं च कर्तव्यम् । शतधा दशधा जपेदिति प्रागुक्तत्रिपुरार्णववचने शतधेत्यष्टोत्तरशतार्थकम् "सन्ध्यान्तरे तु सम्प्राप्ते शतमष्टोतरं जपेत्" इति स्वतन्त्रोक्तेः । अङ्गिलोपे द्वितीयकालप्राप्तौ न पुनःकरणम्, किन्तु प्रायश्चित्तमात्रमिति । बुद्धिपूर्वाङ्ग-लोपे पापबाहुल्यवद् बुद्धिपूर्वाङ्गिलोपेऽपि पापबाहुल्यं ज्ञेयम् तुल्यत्वात् । सम्पूर्णसन्ध्या-ङ्गलोपे योगिनीतन्त्रे—"सन्ध्यालोपे प्रमादाद्यैर्मूलमष्टशतं जपेत् । अन्यथा तु सहस्रं वै जपेत् पापापनुत्तये ॥" इति । अष्टशतम् अष्टोत्तरशतम् । अन्यथा प्रमादाद्यभावे बुद्ध्येति यावत् । प्रमादाद्यैरिति कार्यान्तरव्यापृतत्वापत्त्योः संग्रहः । सन्ध्यालोपाभ्यासे स्वतन्त्रे—'त्रिरात्रं सन्ध्याहीनः सहस्रजपमाचरेत् । अहोरात्रमनश्नन् वै ततः शुद्धो भविष्यति । अष्टरात्रमसन्ध्यो वै त्रिरात्रोपोषणाज्जपात् । मासेऽतीते तु देवेशि पततश्च बहिष्कृतः ॥ मण्डलाद् ब्राह्मणः सर्वकर्मायोग्यो महेश्वरि ।" इति । जपात् प्रत्यहं सहस्रजपात् । एतच्च बुद्धिपूर्वके ज्ञेयम्, अबुद्धिपूर्वके पातित्यादिबहुदोषानौ-चित्यात् । तत्र प्रायश्चित्तं पूर्वोक्तमेवाभ्यसनीयम् । तथा एष एव जपे मार्गो मासादूर्ध्वं पतत्यधः' इत्यपि तत्रैवोक्तम् । आपदि त्वङ्गलोपे न दोषः, 'आपद्यङ्गस्य लोपे तु काल-त्यागेऽपि नास्त्यघम्' इति स्वतन्त्रोक्तेः । एवं सन्ध्याद्यखिलनित्यकर्मलोपे स्वतन्त्रे उक्तम्—"विप्रक्षत्रियवैश्यानां काले सन्ध्यादिकाः क्रियाः" इति । कर्तव्या भवन्तीति शेषः । "सप्ताहमननुष्ठानात् समयाच्च बहिष्कृतः" इति सन्ध्यादिक्रियाणां सप्ताहमननुष्ठानात् समयान्मण्डलाद्बहिष्कृतो भवतीत्यर्थः । अत्र प्रायश्चित्तमुक्तं त्रिपुरार्णवे—'सन्ध्या-दिकर्मभिर्हीनो दिनैकं यस्तु साधकः । रोगादिना षोडशधा श्रीसूक्तं प्रजपेच्छिवे ॥" इति । एवं दिनत्रयेऽपि तत्रैवोक्तम्—"एवं तु त्रिदिने मूलं जपेदपि सहस्रकम्" इति । अपिना श्रीसूक्तजपश्च । तथा—"ऊर्ध्वं तु त्रिदिनाद्देवि निराहारोऽयुतं जपेत्" इत्यपि तत्रैवोक्तम् । बुद्धिपूर्वलोपे योगिनीतन्त्रे उक्तम्—"यस्तु बुध्या त्यजेत् सन्ध्याद्यखिलं कर्म शाङ्करि । दिने दिने जपेत् पञ्चसहस्रं मूलमम्बिके ॥ दिनत्रयानन्तरं तु त्रिरात्रं स्यादभोजनम् । अयुतं प्रजपेन्मूलं पूजयेच्चक्रनायकम् ॥" इति । एवं सन्ध्यायां कालात्यये स्वतन्त्रे—"मुख्ये मध्ये तथाऽन्ये च कालेऽतीते क्रमाच्छिवे । मूलतत्काल-गायत्रीदशकं शतकं जपेत् ॥ तृतीये मूलशतकं जपेत् कर्म तु नाचरेत् ।" इति । मुख्य-कालातिक्रमे मूलदशकम्, मध्यकालातिक्रमे वाग्भवगायत्र्यादितत्कालगायत्रीशतकम्,

तृतीये गौणकालेऽतीते मूलशतक जपेत्, कर्म तु नाचरेत् , कालस्यातिक्रान्तत्वादिति तदर्थः ।

कालस्तूक्तस्त्रिपुरार्णवे—"सनक्षत्रः समानार्कस्तथार्धार्कस्तु मुख्यकः । प्रातर्मध्याह्नसन्ध्याख्यकालो मध्यः प्रकीर्तितः ।। द्वितीयकालपर्यन्तो गौणः कालः प्रकीर्तितः ।।" इति । पञ्चधाविभक्तदिनस्य प्रथमतृतीयभागौ प्रातर्मध्याह्नकालौ । सन्ध्याकालस्तु सूर्यार्धास्तानन्तरं त्रिनाडिका । अत्र द्वितीयकालपर्यन्तो गौण इति सायंसन्ध्यायां महानिशातः पूर्वमेव, तस्य सर्वनित्यकर्मसु निषिद्धत्वात् । तदुक्तं योगिनीतन्त्रे—'सार्धप्रहरतः पश्चाद्रात्रौ नान्यत् समाचरेत् । तत्कालविहितं त्यक्त्वा कृतं सर्वं निरर्थकम् ।।" इति । तत्कालविहितादन्यत् सर्वं कर्म तत्र कृतं व्यर्थमित्यर्थः । अथ पूजाविघ्नप्रायश्चितम् । तत्र विघ्ने योगिनीतन्त्रे—'सपर्यायां महाविघ्ने प्राप्तेऽर्घ्यादि विसर्जयेत् । निर्वर्त्य मनसा तां तु पश्चादष्टोत्तरं शतम् ।। प्रजप्य मूलविद्यां तु पूजयेत् क्रमतः पुनः । न भुञ्जीयाद्विना पूजां देवतावाहने सति ।। नोद्वासयेद्देवतां तु पुनश्चार्घ्यविधिं चरेत् । अनुष्ठिताच्छेषविधिं कृत्वार्चादि ततश्चरेत् ।। दिनान्तरे तु सम्प्राप्ते होमं तत्र समाचरेत् । अङ्गहोमानन्तरं तु विघ्नशान्त्यर्थमीश्वरि ।। अतीतदिनसंख्यातस्त्रिस्त्रिर्देव्यै हुनेत्ततः । अष्टोत्तरशतं हुत्वा प्रणमेद्देवतां ततः ।। बलिपूजानन्तरं चेद्विसृजेन्मूलदेवताम् । अनन्तरं तु तच्छान्त्यै सहस्रं प्रजपेन्मनुम् ।। शरीरोपद्रवे प्राप्ते संकल्प्यान्येन कर्मणः । परिशेषस्तु कर्तव्यस्तेन दोषो न विद्यते ।। पूर्ववत्प्रजपेत् पश्चादेवमन्यत्र कर्मसु ।।" इति । महाविघ्ने अनिवार्ये प्रबलशत्रुसमागमादिरूपे । अर्घ्यादीत्यादिना देवनापीठादिकम् । तां पूजां यथावकाशं मनसा कृत्वा । विघ्नातिक्रमानन्तरं विघ्नशान्त्यर्थं प्रजप्य । क्रमत इति यावतां विसर्जनं तावतामेव पुनः करणम् । तेन न द्वारपूजादिसंकल्पान्तावृत्तिः, अनुष्ठिताच्छेषविधिं कृत्वेत्यग्रिमवचनस्य योग्यतयात्रापि सम्बन्धात् । स्वतन्त्रेऽपि—'पूजान्तरे महाविघ्ने प्राप्ते संशृणु निश्चितम् । पूर्वं संकल्पतो देवि न दोषस्तत्र विद्यते ।। सङ्कल्पानन्तरं देवि विसृज्योपोषणं चरेत् । सपर्यां मानसीं कुर्वन् पुनः पूजां समाचरेत् ।।" इति । उपोषणं पूजाऽकरणे योगिनीतन्त्रानुरोधात् । एतदेव संकल्पेन विनेति पद्धतावुपलक्षणत्वेनोक्तम् । तस्मिन्दिने विघ्नानिवृत्त्या पूजाऽकरणे आह—न भुञ्जीयादिति । अस्मिन् पक्षे द्वितीयादिदिने पूजने द्वारपूजादिकं कर्तव्यमेव । अथ देवतावाहनानन्तरं विघ्नागमे विशेषमाह—देवतावाहने सतीति । एतेनार्घ्यादि विसर्जयेदिति प्रोक्तपक्षो देवतावाहनात् पूर्वं ज्ञेयः । तत्रापि पात्रासादनात् पूर्वं विघ्नागमेऽर्घ्यादिविसर्जनाभावात्तच्छान्त्यर्थाष्टोत्तरशतजपाभावो ज्ञेयः । तद्दिने विघ्नानिवृत्तौ सङ्कल्पोत्तरं पूजनाकरणादुपवासस्त्वावश्यक एव । नोद्वासयेद्देवतामिति सम्भवाभिप्रायेण । तत्राप्यनुपपत्तौ देवतामप्युद्वासयेदेव । पुनश्चार्घ्यविधिं चरेदिति पूर्वपक्षोक्तार्घ्यादिविसर्जयेदित्यनुवर्तितं वेदितव्यम् । तेन विसृष्टमर्घ्यं पुनः स्थापयेदित्यर्थः ।

शेषविधिमिति। द्वारपूजापीठपूजोपचारपूजादि यावत्पूर्वं कृतं तद्भिन्नम्। तच्चार्घ्यादावाहनोत्तरकृत्यमुपचारार्चादि। ततः अर्घ्यविध्यनन्तरम्। अत्रापि पक्षे अर्घ्यादिविसर्जनशान्तिरष्टोत्तरशतजपः। तद्दिने विघ्नानिवृतावप्यत्रासोऽपि ज्ञेयः। तद्दिने विघ्नानिवृत्तौ विशेषमाह—दिनान्तरे त्विति। होममेवाह—अङ्गहोमेति। पूजाङ्गहोमानन्तरम्। पूजाविघ्नशान्त्यर्थम् इति संकल्पे उद्देशः कर्तव्यः। यावन्ति दिनान्यतीतानि तत्रैकैकदिने त्रिरित्ररिति संख्यातः संख्यया हुनेत्। ततः तदन्ते। अत्र देव्यै इत्युक्त्या मूलेन होमो ज्ञेयः। ततो होमान्ते प्रणमेत्। यद्यनुपपत्त्याधिक्याद्देवताया अपि विसर्गः कृतः, तदा प्रायश्चित्तं स्वतन्त्रे—"आवाहनानन्तरं तु महाविघ्नो भवेद्यदि। पात्रादिकं समुद्वास्य देवतां स्थापयेत्तथा॥ कार्यान्ते तत्र पात्रादिस्थापनं सविधाय च। संकल्पेन विना देवि आवृत्तिं तु समापयेत्। यावन्तो दिवसा देवि व्यतीतास्तावदावृतम्। पायसेन हुनेत्तस्य दोषस्येहापनुत्तये। मूलेनाष्टोत्तरशतं हुत्वा पूज्य च सामयीन्। क्षमापयेत्ततो देवीं गुरुं चापि सुखीभवेत्॥" इति। पात्रादिकमित्यादिना देवतासंग्रहः। कार्यान्तेऽतीते विघ्ने संकल्पेन विना पात्रादिस्थापनं विधाय देवतां तथा पीठपूजात्मपूजादिपुरःसरं स्थापयेत्। देवतां तथा अनुद्वास्य स्थापयेदिति नार्थः, पात्रादिकमिति आदिपदवैयर्थ्यात्। संकल्पेन विनेति संकल्पमात्रनिषेधाच्च। गुरुं चापि संपूज्य क्षमापयेदिति। तद्दिने पूजनेऽष्टोत्तरशतं पायसहोमः। दिनान्तरे चेदतीतदिनसंख्यया आवृत्तिहोमावृत्तिः। अत्र सर्वत्र प्रथमपक्षोक्तमानसपूजनमपि योग्यत्वादनुषञ्जनीयम्। बलिपूजानन्तर विघ्नश्चेत् पूजाविघ्नशान्त्यै। अत्र पक्षे पूजामसमाप्य मध्ये देवतोद्वासननिमित्तहोमस्तु न कर्तव्यः, पुनः पूजनाप्रसक्त्या तदप्राप्तेः। पूजामध्ये शरीरोपद्रवे प्राप्तेऽन्येनाधिकारिणा अमुककृतपूजाशेषकर्म करिष्ये इति संकल्प्य कर्मशेषः कर्तव्यः। तेन पूजालोपदोषो न विद्यते। पूर्ववत् पूजाविघ्नशान्त्यै सहस्रं प्रजपेत्। एतच्च योग्यत्वात् सभवेऽन्यत्र विघ्नेऽपि योजनीयम्। एवं संभवे सति नार्घ्यादिविसर्जनमिति ज्ञेयम्। एवं शारीरोपद्रवेऽप्यन्याधिकार्यलाभे महाविघ्नप्रायश्चित्तमेव यथोक्तरीत्या ज्ञेयम्। एवमन्यत्र कर्मसु दीक्षास्थापनादिषु। पूजामध्ये यद्याशौचागमस्तदा पूजासमाप्तिपर्यन्तं न तस्य कर्मानर्हत्वादिकम्। एतच्च सङ्कल्पानन्तरम्। तदुक्तं योगिनीतन्त्रे—'पुरस्क्रियायां पूजायां संकल्पानन्तरं शिवे। स्थापनाहोमकाम्यादौ नानर्हत्वादि विद्यते॥ कर्तुः कर्मसमाप्त्यन्तं दीक्षादौ ऋत्विजामपि।" इति। काम्यादावित्यादिना नवरात्रादिनैमित्तिकादिसंग्रहः। दीक्षादावित्यादिना स्थापनादिसंग्रहः। ऋत्विजामाचार्यब्रह्मादीनाम्। कर्मसमाप्त्यन्तं कर्तुरिति आवश्यके पित्रादिमृतौ कर्मत्यागस्यावश्यकत्वेन त्यक्तकर्मण आशौचमस्त्येवेति ज्ञेयम्। एवं मृताशौचवतः पूजामण्डलप्रवेशे स्वतन्त्रे उक्तम्—"क्षयाशौचे देवताया मण्डले न व्रजेच्छिवे। अज्ञानेन गतश्चेद्वै देवताशापमाप्नुयात्॥ तद्दोषपरिहारार्थं पुनर्मण्डलमाचरेत्। देवतां पयसा स्नाप्य मालातर्पणमाचरेत्॥ पञ्चवारं घृतेनैवं होमं कुर्याद् वरानने। ब्राह्मणान्

भोजयेत् पश्चाद् देवताशान्तिमाप्नुयात् ॥" इति। पुनर्मण्डलमाचरेदिति प्रवेष्टुः प्रायश्चित्तम्। मण्डलं वक्ष्यमाणं पूजनम्। अथ सूतकिप्रविष्टमण्डले पूजकस्य प्रायश्चित्तमाह---देवतामित्यादि। देवतां पयसा दुग्धेन संस्नाप्य। मालामन्त्रनामभिः क्रमेण आवरणतर्पणं होमस्तु प्रागङ्गहोमेऽनतीते पूजाङ्गहोमानन्तरम्। अतीते पुनरग्निं संस्थाप्य होमं कुर्याद् ब्राह्मणभोजनं च संभवे तत्काले अन्यथा कालान्तरे। एवं कृते क्रुद्धा देवता शान्तिमाप्नोति। देवतोद्वासनानन्तरं चेद् देवताकोपाभावान्न पूजकस्य प्रायश्चित्तम्। मण्डलत्वस्योद्वासानन्तरमपि सत्त्वात् प्रवेष्टुः प्रायश्चित्तं भवत्येव। बुद्धिपूर्वके तु योगिनीतन्त्रे—"पूजायां सूतकी गत्वा देवताशापमाप्नुयात्। पूजकश्चापि देवेशि तस्माच्छान्तिं समाचरेत् ॥ उपवासस्त्रिरात्रं स्यादयुतं प्रजपेत्तथा। पुनर्देवीं प्रपूज्याथ ब्राह्मणान् भोजयेच्छिवे ॥" इति। अत्र यस्य बुद्धिपूर्वकत्वं तस्यैवैतत्। अन्यस्य पूर्वोक्तमेव। ब्राह्मणानिति त्रयान्यूनान्। अत्र यद्यपि वचने बुद्धिपूर्वकेति नोक्तम् तथापि स्वतन्त्रेऽज्ञानेत्युक्त्या तदपेक्षयाऽस्य प्रायश्चित्तस्य महत्त्वेन योग्यतया बुद्धिपूर्वक एवेति ज्ञेयम्। अथ पूजायां प्रायश्चित्तम्। तदुक्तं स्वतन्त्रयोगिनीतन्त्रयोः—'आवृत्तिर्गुरुनित्यार्चासमयाम्नाययोरपि। पूजात्रये जपश्चैव प्रधानं पूजने मतम् ॥ पात्रसंस्था पीठपूजा बलिर्होमस्तथैव च। अर्पणं देहशुद्धिश्च मुख्याङ्गं संप्रकीर्तितम् ॥ शक्तिसामयिकार्चादि गौणाङ्गमिति कथ्यते।' इति। गुरुमण्डलनित्यामण्डलयोरर्चा। समयार्चा आम्नायार्चा। पूजात्रयं परा परापरा अपरा चेति। एतच्च प्राग् व्याख्यातम्। जपः सामयिकपूजोत्तरं क्रियमाणः। एतावत् प्रधानम् अङ्गिरूपम्। इतः पूर्वमिति समर्पणम्। यद्यपि समर्पणमवरपूजात्मकोपचारान्तर्गतत्वेन प्रधानम्, तथापि तस्योपचारत्वेन प्राधान्येऽपि विशेषवचनात् समर्पणत्वेन मुख्याङ्गत्वमेव। देहशुद्धिः भूतशुद्धिः। ननु भूतशुद्धेः कथं पूजाङ्गत्वम् तस्य पूजाबहिर्भूतत्वादिति चेदुच्यते--क्वचित्तन्त्रेषु आत्मपूजोत्तरं भूतशुद्धेः कतिपयन्यासानां च विधानात् तदभिप्रायेणैव तत्कथनम्। एतदभिप्रायेणैव देहशुद्धिः। भूतशुध्यादिन्यासान्त इति सौरभे उक्तम्। तथा च येषां सम्प्रदाये भूतशुध्यादीनाम् आत्मपूजोत्तरं निवेशः, तेषां भूतशुध्यादिकं पूजाङ्गं नान्येषामिति ज्ञेयम्। सामयिकार्चादीत्यादिना द्वारपूजाशान्तिस्तवादिसंग्रहः। एतत्प्रायश्चित्तमपि तत्रैवोक्तम्—"अङ्गलोपे तु मूलेन तर्पणाष्टकमुच्यते। अष्टोत्तरशतावृत्त्या मुख्याङ्गे शृणु पार्वति ॥ शतधा तर्पणं जापसहस्रं च स्मृतं शिवे। प्रधानातिक्रमे देवि प्रसङ्गस्यैवमीरितम् ॥" इति। गौणाङ्गलोपे मूलेनाष्टवारं तर्पणम्। मुख्याङ्गलोपेऽष्टोत्तरशतवारं तर्पणम्। प्रधाने लुप्ते शतवारं तर्पणं सहस्रजपश्च। प्रसङ्गस्यातिक्रमे एवं प्रायश्चित्तमीरितमिति। प्रसङ्ग उक्तो योगिनीतन्त्रे— आवाहनान्तं नैवेद्यान्तमुद्रासान्तमेव च। मुख्यप्रसङ्गो देवेशि तत्तदन्तं तु गौणकम् ॥" इति। आवाहनात् पूर्वतनानां

आवाहनान्तं नैवेद्यपूर्वतनानां नैवेद्यान्तम्। तदनन्तराणामुद्वासनान्तम्। पद्धतौ पूजात्रयस्य आवाहनान्तं प्रसङ्ग उक्तः। तत्र पूजात्रयमिति परापरपूजायाः स्थूलसूक्ष्मरूपत्वेन द्विप्रकारत्वाज्ज्ञेयम् अपरपूजाया आवाहनोत्तरकालिकत्वात्। नैवेद्यस्यापि पूर्वोत्तरभेदे द्वैविध्यात्तत्तत्पूर्वतनानां तत्तदन्तं ज्ञेयम्। एवमुद्वासनमपि देवताविशेषार्घ्ययोरिति द्विविधम्। तत्राप्युक्तवदेव। एवमावृत्त्यादिमुख्यानां प्रसङ्गमुक्त्वा तदेकदेशानां गौणानां प्रसङ्गमाह—तत्तदन्तमिति। कलाद्येकदेशैकनामादिलोपे तत्तदन्तं कलापूजनाद्यन्तम्। एतदेव पद्धतौ यथासंभवमूहनीयमित्युक्तम्। तदङ्गैकदेशलोपे तु पादुकात्रिवारजपादिरूपसामान्यप्रायश्चित्तमिति भाति। प्रसङ्गानतिक्रमे तत्रैवोक्तम् "अष्टधा तर्पणं देवि प्रसङ्गस्यानतिक्रमे। पुनःकरणमप्येवं समुद्दिष्टं महेश्वरि॥" इति। लुप्तस्य पुनःकरणम्। अत्र पक्षेऽप्येकदेशलोपे त्रिधा पादुकां जप्त्वा पुनस्तत्कर्तव्यमिति केचित्। परे तु तत्तदेकदेशलोपेऽपि तद्द्वारा विशिष्टलोपसदृशत्वादष्टवारं तर्पणं पुनरावृत्त्यादितत्तदर्चनं च कार्यमिति। अत्र विशेषार्घ्योद्वासनानन्तरकृत्यस्य निर्माल्यधारणान्तं प्रसङ्गोऽपि ज्ञेयः। अत्र देवतोद्वासनानन्तरं वा विशिष्टपूजानन्तरं वा स्मरणे विशेषार्घ्योद्वासोत्तरकर्मणां लोपे वा तर्पणस्यासम्भवान्मूलजपः पादुकात्रयादिजपो वा सामान्योक्तः कर्तव्य इति भाति। अथवा तर्पणव्यत्यासे। तदुक्तं स्वतन्त्रयोगिनीतन्त्रयोः—"मूलदेवीतर्पणात्तु सर्वं गौणं महेश्वरि। ततः परं गुरोः पङ्क्तिर्नित्यामण्डलकं ततः॥ आवृत्तिश्च ततो देवि क्रमाद् गौणं समीरितम्।" इति। श्रीपात्रात्क्रिप्रमाणमूलदेवीतर्पणाद् गुरुपङ्क्त्यादिसर्वं गौणम्। गुरुपङ्क्त्यादावपि भेदं वक्तुमाह—ततः परमिति। मूलदेवीतर्पणानन्तरं गुरुपङ्क्तितर्पणं ततो नित्यामण्डलम्। तत आवृत्तिरिति क्रमात् पूर्वस्मादुत्तरं गौणं समीरितम्। एतत्प्रायश्चित्तं योगिनीतन्त्रे— "बिन्दुतर्पणव्यत्यासे प्रायश्चित्तं शृणु प्रिये। मुख्याद् गौणार्पणे देवि पुनस्तर्पणमाचरेत्॥ मूलाष्टकस्मृतिश्चापि व्युत्क्रमे शृणु पार्वति। देवतां शङ्खतोयेन मूलेनाभ्युक्ष्य वै प्रिये॥ पुष्पाञ्जलिं समभ्यर्च्य चाष्टधा प्रजपेन्मनुम्॥ पुनः सन्तर्पयेद्देवि चैवं दोषाद्विमुच्यते॥" इति। अत्र योगिनीतन्त्रादिषु नवपात्राण्युक्तानि। तत्र श्रीपात्रान्मूलदेव्या गुरुपात्राद् गुरुमण्डलस्य भोगपात्रान्नित्यामण्डलस्य शक्तिपात्रात्षडङ्गाद्यखिलावृतेस्तर्पणमुक्तम्। तत्र तर्पणव्यत्यासे चैवं प्रायश्चित्तम्। अत्र प्रकृते मूलतन्त्रे तु श्रीपात्रान्मूलदेव्या गुरुपात्राद् गुरुमण्डलस्य अन्यत्र दर्व्या पृथक् श्रीपात्रादादाय नित्यामण्डलस्य आवृतेश्च तर्पणमुक्तम्। त्रिपात्रपक्षे गुरुमण्डलस्यापि दर्व्यैव। अत्रापि देवतोद्वासोत्तरं स्मृतौ मूलस्य पादुकाया वा जपरूपसामान्यप्रायश्चित्तमेव युक्त्या ज्ञेयम्। त्रिधा वा जपेदिति व्युत्क्रमे इत्यस्य गौणान्मुख्यतर्पणे इत्यर्थः। योग्यतया सुवासिनीकुमार्योर्गुरोर्बटुकस्य पूजने पात्रव्यत्यासे चेदमेव प्रायश्चित्तं सामान्योक्तं गौणमुख्यभेदतारतम्याज्ज्ञेयम्। एवं सामयिकपूजायां दीक्षितसुवासिन्याः श्रीपात्रातिरिक्तगौणात्मकहेतुपात्रादिभ्यः पूजने। एवमन्येषां हेतुपात्रातिरिक्तमुख्यपात्रेभ्यः पूजने।

एवं बटुकस्य बलिपात्रान्मुख्यात्मकाभ्यां श्रीपात्रगुरुपात्राभ्यां गौणात्मकहेतुपात्राच्च पूजने ज्ञेयम्। अथ पात्राद्युपघाते। उपघात उक्तो बृहद्दामकेश्वरे—"उच्छिष्टरक्तमूत्रादिसंपर्को यदि जायते। पूजनायोग्यताहेतोरुपघातः स उच्यते। स्थानाद् भ्रंशेऽप्येवमेव महादोषकरः स्मृतः॥" इति। मूत्रादीत्यादिना श्लेष्माद्यपवित्रपदार्थसंग्रहः। मक्षिकादिजीवसंपर्के। तेषां जीवतामेव निर्गमे मूलेनाष्टवारमभिमन्त्रणम्। मृतानां तेषां संपर्के छिन्ननखकेशसंपर्के च तत्पात्रं पुनः संस्थाप्य संस्कुर्यात्। तदुक्तं योगिनीतन्त्रे—"मक्षिकाकीटसंपर्के प्रोद्धृत्याष्टजपं चरेत्। तेषां मृतानां संपर्के छिन्नयोर्नखकेशयोः॥ पात्रस्य संस्कृतिं कुर्यात् तस्य पूर्वोक्तरीतितः।" इति। यस्य संपर्कः तस्य पुनः संस्कारः। तत्पात्रमुद्धृत्य द्रव्यं विसृज्य प्रक्षाल्य पुनराधारे संस्थाप्य सूर्यकलादिसंस्कारं कुर्यात्। हेतुकलशेऽपि सुधादेवीपूजनान्तसंस्कारं कुर्यात्। पात्रस्य संस्कृतिं कुर्यादित्यनेन मक्षिकादिना संपर्केण देवताया: संस्कारः। उपघाते प्रायश्चित्तमुक्तं स्वतन्त्रे—'अथोपघातदोषस्य प्रायश्चित्तं शृणु प्रिये। देवता हेतुकलशविशेषाद्योपघाततः। कर्तुर्मृत्युस्तु षण्मासात्तस्य शान्तिं ब्रवीमि ते। यस्योपघातः संस्थाप्य पुनस्तत्पूजयेत्ततः॥ पश्चात् त्र्यमनश्नन् वै जपेद्दशसहस्रकम्॥" इति। यस्य पात्रस्य देवताया वा उपघातः, तत्पुनः संस्थाप्य पूजयेत् पूजाशेषं समापयेत्। अत्रोच्छिष्टादिनोपघाते साधारं पात्रं सपीठां देवतां विसृज्य उदकेन तत्स्थानं संमार्ज्य मण्डलपूजनादितत्तत्पात्रसंस्थापन पीठपूजां कृत्वान्तःपूजादिपुष्पाञ्जलित्रयान्तेन देवतासंस्थापनं च कुर्यात्। स्थानाद् भ्रंशे तु तत्पात्रम् आधारोपरि संस्थाप्य पुनः संस्कुर्यात्। देवतामपि तत्पीठे संस्थाप्यान्तःपूजादि संस्थापयेत्। देवतोपघाते विशेषस्तत्रैव—'पूजयेच्च यथाशक्त्या देवीं क्षीरेण स्नापयेत्। अष्टोत्तरशतं हुत्वा गुरुं पूज्य च मुच्यते॥" इति। देवतां संस्थाप्य यथाशक्त्या चतुःषष्ट्याद्युपचाराणामन्यतमैर्व्यष्ट्या समष्ट्या वा। तत्रोपचारेषु स्नपनं क्षीरेण। होमान्ते अष्टोत्तरशतं हुत्वा। एवं देवतां संपूज्य गुरुं च यथाशक्त्या संपूज्य तत्प्रत्यवायान्मुच्यते। एतच्च पूजादिकं संभवे तद्दिने एव। अन्यथा उपवासान्ते चतुर्थदिने वा कर्तव्यम्। अत्रोच्छिष्टादिदेवतोपघाते चक्रस्थापनप्रकरणोक्ताः संस्काराश्चानुसन्धेयाः। आवाहनात् पूर्वमुपघाते विशेषस्तत्रैव—"आवाहनस्थापनात्तु पूर्वं जपसहस्रकम्" इति। आवाहनेन स्थापनात्पूर्वमुपघाते जपसहस्रमेव, नोपवासादिकम्। अत्रावाहनेन स्थापनात्पूर्वमित्यनेन संकल्पानन्तरमिति ज्ञेयम्। तेन संकल्पात्पूर्वमुपघाते नैतत्प्रायश्चित्तम्। रक्तादिस्पर्शे तु स्थापनप्रकरणोक्तसंस्कारः कर्तव्य एव। अत्र स्थापनात्पूर्वमिति योग्यत्वात् समाप्तेरादावुद्वासोत्तरमप्येवमनुसन्धेयम्। यन्त्रमूर्त्यादिभङ्गेऽपि विशेषस्तत्रैव—'उपघातात्तु स्फुटिते महासान्तपनं चरेत्" इति। एतच्च योग्यत्वादावाहनोत्तरं ज्ञेयम्। तत्पूर्वादौ सामान्यप्रायश्चित्तमेव। महासान्तपनमग्रे निरूप्यते। अन्यपात्रोपघातेऽपि तत्रैव—"उपघाते तु शङ्खादेरष्टोत्तरसहस्रकम्। दीक्षादिष्वेवमेव शान्तिः स्यादुपघातके॥ दीपोपघाते देवेशि पुनर्मण्डलमाचरेत्। साधकानां दत्तपात्र-

स्योपघाते शतं जपः ॥ पूजकानां साधकानां तुल्यमेतद्विधीयते ।" इति । शङ्खादि-त्यादिना गुर्वादिपात्राणां संग्रहः । पूर्ववत्संस्थाप्याष्टोत्तरसहस्रं जपेत् । दीक्षादिष्वपि तत्तद्विशेषपात्रोपघाते एवमेव प्रायश्चित्तादिकं ज्ञेयम् । तत्र दीक्षायां मध्यकलशस्य देवतास्थानत्वात्तदुपघाते देवतोपघातवदावाहनात् पूर्वमनन्तरं च ज्ञेयम् । इतरकलशो-पघाते हेतुपात्रवत् । दीक्षादीत्यादिना दमनारोपमहायागादिसंग्रहः । एतच्च दीक्षादिमध्ये महाविघ्नोक्तप्रायश्चित्तोपलक्षकम् । अत एव तत्प्रायश्चित्तविधायकयोगिनीतन्त्रवचने एवमन्यत्र कर्मस्वित्युक्तम् । योगिनीतन्त्रे तु दीक्षायां कुम्भोपघाते—"कुम्भोपघाते दीक्षायामयुतं प्रजपेच्छिवे । सहस्रमपि वा होमः कर्तव्यः परमेश्वरि ॥" इति । एतच्चा-शक्तविषयम् । तत्र विघ्नेऽपि तत्रैवोक्तम्—'दीक्षायां यदि विघ्नः स्यात्कुर्यात् कालान्तरे ततः । देवतावाहनात् पश्चात् कलशे यदि चेच्छिवे ॥ अनुद्वास्यैव कर्तव्यं दीक्षणं त्वन्य-वासरे । प्रत्यहं पूजनं कार्यं स्वेन वान्येन वा तथा ॥ यावद्दिनातिक्रमः स्यात्तावत् प्रत्येकमम्बिके । सहस्रं वा जपं देवि शतं वा होममाज्यतः ॥ दीक्षां कुर्याद्विघ्ननाशानन्तरं त्वविलम्बतः । असमर्थस्तु विप्रेण प्रायश्चित्तं तु कारयेत् ॥" इति । देवतावाहनात् पश्चादित्यनेन कालान्तरे कुर्यादिति पूर्वोक्तम् आवाहनात् पूर्वं ज्ञेयम् । कालान्तरे दिनान्तरे । अत्राचार्यादिवरणानन्तरं विघ्ने तत्पक्षे कालान्तरे न पुनः संकल्पादि, पक्षान्तरे वरणात्पूर्वं चेत्पुनः संकल्पादिकं कर्तव्यम् । एतदपि तत्रैवोक्तम्—'वरणा-नन्तरं विघ्ने संकल्पादिकमम्बिके । पुनर्नावर्तयेच्छेषविधिं कुर्यात् समाहितः । पूर्वं विघ्ने पुनः कुर्यात् संकल्पवरणादिकम् ।" इति । स्वस्यानवकाशेऽन्येन पूजनं कर्तव्यम् । अविलम्बतः विघ्नातिक्रमदिने एव । बहुदिनातिक्रमेण जपहोमयोर्बाहुल्यात्कर्तुमसमर्थो ब्राह्मणेन कारयेत् । अत्राप्यनुद्वास्यैवेति सम्भवाभिप्रायेण । अन्यथा देवतामप्युद्वासयेदेव । प्रायश्चित्तं तु पूजायां विघ्नेन देवतोद्वासने स्वतन्त्रोक्तं प्राङ्निरूपितं ज्ञेयम् । अत्र चक्रे देवतावाहनोत्तरं विघ्नेन चक्रकलशान्तरविसर्जने सामान्यप्रायश्चित्तमपि कर्तव्यम् । चक्रे देवतावाहनोत्तरं देवतानुद्वासेऽर्घ्यपात्रादिविसर्जने पूजनेऽधिकार्यन्तराभावात् पूजना-करणेऽपि तत्प्रायश्चित्तं प्रागुक्तं कर्तव्यम् । आवाहनोत्तरमन्येन पूजने कृतेऽपि पूजाविघ्न-शान्त्यर्थं प्रागुक्तसहस्रजपः कर्तव्यः । अत्र गुरोश्चिरविघ्ने तत्रैवोक्तम्—"चिरविघ्ने गुरुज्येष्ठादिभिः सर्वं समापयेत्" इति । एतच्चोपदेशोत्तरं ज्ञेयम् । ततः पूर्वं चैतदुक्तं बृहद्वामकेश्वरे—"दीक्षामध्येऽन्तराये तु गुरुज्येष्ठादितः शिवे । तादृग्विधादप्यन्यस्मा-द्विधिना च पुनर्वृतात् ॥ उपदेशादिकं ग्राह्यं शेषकर्मपुरःसरम् ।" इति । अन्तरायो विघ्नः । ज्येष्ठादीत्यादिना कनिष्ठः । तादृग्विधाद् गुरुलक्षणयुतात् । अन्यस्माद् गुरु-ज्येष्ठादिभिन्नात् । सर्वथा महाविघ्नेऽपि तत्रैवोक्तम्—'महान्तराये सम्प्राप्ते मृतावन्य-तरस्य वा । निराहारस्त्रिरात्रं तु शुद्ध्येदयुतजापतः ॥ आवाहनात्तु पूर्वं चेत्सहस्रं केवलं जपेत् ।" इति । अन्यतरस्य गुरोः शिष्यस्य वा मृतौ सत्यामिति योज्यम् । एतत्प्रायश्चित्तं

गुरुणा शिष्येण वा कर्तव्यम्। एवमेव महायागादिविशेषकर्मसु ज्ञेयम्। तत्राचार्यादि-ऋत्विङ्मरणे तत्रैवोक्तम्—'एवं कर्मान्तरे देवि आचार्यादिविपत्तिषु। शेषकर्मणि वृत्वान्यं कुर्याच्छेषं यथाविधि॥ सहस्रं प्रजेद्विघ्ननाशाय परमेश्वरि।" इति। दीपोपघाते इति दीपस्योपघातो विनाश एव। स चादौ सस्थापितस्यैव, योग्यत्वात्। पुनर्मण्डलं पुनर्विशेषपूजनम्। अत्र विशेषो बृहद्वामकेश्वरे—"दीपान्तरस्य सत्त्वे तु दीपनाशो न दोषदः। तस्माद्दीपाननेकान् वै ज्वालयेत् परितः शिवे॥" इति। तथा सामयिकानां स्वात्मीकारार्थं दत्तपात्रस्योपघाते मूलशतकं जपेत्। एतत्प्रायश्चित्तं साधकानां पूजकानां च तुल्यम्। साधकहस्ते समर्पणात् पूर्वमाचार्यस्यानन्तरं साधक-स्येति विवेकः। अत्र योग्यत्वात् साधकान्तरपात्रोपघाते यन्निमित्तोपघातस्तस्य प्रायश्चित्तं ज्ञेयम्। मण्डलोपघाते योगिनीतन्त्रे—'मलमूत्राश्रुरुधिरपातान्मण्डलघाततः। यत्पापं तन्निरसनं सहस्रजपतो भवेत्॥" इति। ताडनादिना रुधिरकरणे स्वतन्त्रे—"मण्डले रुधिरं कृत्वा क्रोधाच्चान्द्रायणं चरेत्। अज्ञाने कृच्छ्रमेव स्याज्ज्येष्ठे सान्तपनं भवेत्॥" इति। स्वज्येष्ठे रुधिरं कृत्वा सान्तपनम्। पात्राद् बिन्दुस्खलने त्रयोदशे प्रायश्चित्तमुक्तम्। मण्डले ज्वरितक्षताङ्गादिनिषिद्धानां प्रवेशे आचार्यस्य प्रायश्चित्तमुक्तं स्वतन्त्रे "क्षताङ्गो ज्वरितश्चेत्यादि, गणयित्वा प्रविष्टो (मण्डले) य तस्य शागो भवेत्तव। तद्दोषपरिहारार्थं पुनर्मण्डलमाचरेत्॥" इति। मण्डललक्षणमुक्तं योगिनी-तन्त्रे—"कुमार्या बटुकेनापि सुवासिन्या द्वयेन च। पञ्चसामयिकैश्चैव युक्तं मण्डल-मुच्यते॥ एतन्न्यूनं तु देवेशि केवलं पूजनं स्मृतम्।" इति। बलात्कारेण पञ्चमे स्वतन्त्रे—'पञ्चमं च बलात्कारात् कृत्वा चान्द्रायणं चरेत्। ज्येष्ठायां च तथा कृत्वा महासान्तपनं चरेत्॥" इति। तथा बलात्कारेण तथा न्यूनमण्डले स्वात्मीकारे प्रायश्चित्तमुक्तं बृहद्वामकेश्वरे—"मण्डले न्यूनवर्णस्य पूजकस्य महेश्वरि। स्वात्मी-कृत्योत्तमो वर्णः शुध्येदयुतजापतः॥" इति। एतच्च गुरुसुवासिन्याद्यतिरिक्तस्य। तदपि तत्रैवोक्तम्—"गुरुः सुवासिनी चैव कुमारी बटुकस्तथा। एतेषां नैव दोषः स्याद्दोषः सामयिना भवेत्॥" इति। तथा—'एकाम्नाये दीक्षितस्य चतुराम्नाय-दीक्षितः। सपर्यायां तस्य चापि पञ्चाम्नायी महेश्वरि॥ न्यूनदीक्षावतोऽप्येवं स्वात्मी-कृत्य तथेतरः। शुध्येदयुतजापेन समयी परमेश्वरि॥" इति। अत्रापि समयीत्यनेन सामयिकत्वेन स्वात्मीकारे प्रायश्चित्तम्, न तु गुर्वादित्वेन। तथा—'षोडशी येन सम्प्राप्ता तत्पूजायां महेश्वरि। न्यूनो वाप्यधिको वापि सर्वेषामधिकारिता॥" इति। सर्वेषाम् अधिकदीक्षावताम्। नोत्तमवर्णानाम्, उत्तमवर्णस्य सामान्यतो न्यूनवर्णपूजने निषेधात्। तदुक्तं तत्रैव—'पूर्णदीक्षायुतस्यापि हीनवर्णस्य पूजने। उत्तमस्य नाधिकारः स्वात्मीकारविधौ शिवे॥" इति। स्ववात्मीकारभेदे स्वतन्त्र—'विप्रस्तु राजसं कृत्वा सहस्रजपतः शुचिः। वैश्यश्च क्षत्रियश्चैव पशुं कृत्वा तथाचरेत्॥ कृत्वा विप्रः पशुं

देवि चान्द्रायणमथाचरेत्। सोऽपि द्विधा स्थितो देवि शुद्धाशुद्धविभेदतः ॥ अशुद्धे कृच्छ्रमपि स्याद् द्वाभ्यां शुद्धो भवेत्तु सः ॥" इति। राजसं वीरपानम्। पीतद्रव्यस्य शुद्धत्वाशुद्धत्वाभ्यां पशुस्वात्मीकारो द्विविधः। शुद्धो नैवेद्यात्पूर्वं कृत इति ज्ञेयम्। चान्द्रायणकृच्छ्रयोर्निरूपणं भविष्यति। उच्छिष्टभक्षणे प्रायश्चित्तमुक्तं योगिनीतन्त्रे— अयोग्यानां तु वीराणां स्त्रीणामपि च सुन्दरि। उच्छिष्टं भक्षयित्वा तु सहस्रजपमाचरेत् ॥ उच्छिष्टदातुरप्येवं सहस्रं जप उच्यते।" इति। अयोग्यानां येषामुच्छिष्टभक्षणं निषिद्धं तेषाम्। दातुरप्ययोग्यस्य न्यूनवर्णाश्रमिणामुच्छिष्टभक्षणे स्वतन्त्रे— "न्यूनवर्णाश्रमिणां तु त्रिरात्रोपोषणं तथा" इति। तथेति उच्छिष्टभक्षणे पूर्वं विहितसहस्रजपश्च। अप्रक्षाल्य समष्टिपूर्णपात्रयोर्हवनेऽपि तत्रैवोक्तम्— 'तस्मात्प्रक्षाल्य देवेशि समष्टिं पूर्णपात्रकम्। स्वीकुर्यादन्यथा देवि जपेदष्टसहस्रकम् ॥" इति। अष्टसहस्रमष्टोत्तरसहस्रम्। पद्धतौ तु जपेन्मूलसहस्रकमिति पाठानुरोधेन सहस्रजप एवोक्तः। सुवासिन्यै स्वशेषदानेऽपि तत्रैवोक्तम्—"स्वशेषं नैव शक्त्यै तु देयं शिष्यामृते शिवे। अत्र प्रमादो यदि चेज्जपेदष्टसहस्रकम् ॥" इति। प्राकट्येऽपि तत्रैव—"प्रकटो मण्डलाद् बाह्यस्त स्पृष्ट्वा स्नानमाचरेत्। तस्य पूर्वं बाह्यशुद्धिं विधायाभ्यन्तरं चरेत् ॥ चान्द्रायणं च कृच्छ्रं च महासान्तपनं तथा। बाह्यमात्रेण संशुद्धो मण्डलाद् बाह्य एव सः ॥" इति। प्रकटः स्वात्मीकारादौ पशुभिः प्रत्यक्षेण दृष्टः। बाह्यशुद्धिर्धर्मशास्त्रविहिता। महासान्तपनं वक्ष्यमाणम्। अत्र सर्वत्र प्रायश्चित्तेषु प्रमादादिपदसमवधानेऽसमवधाने चाज्ञानकृतस्यैव प्रायश्चित्तं ज्ञेयम्। अत एवोक्तं बृहद्वामकेश्वरे— "प्रायश्चित्तानि चोक्तानि सामान्ये ज्ञानपूर्वके। ज्ञातेऽभ्यासे च योग्यत्वाद् द्विगुणं त्रिगुणं तु तत् ॥" इति। सामान्येनोक्तं प्रायश्चित्तमज्ञानपूर्वके, ज्ञानपूर्वके कृते तद्द्विगुणम्, अभ्यासे भूयःकरणे त्रिगुणं प्रायश्चित्तमिति तदर्थः। अत्र ज्ञानपूर्वकेऽभ्यासे तु चतुर्गुणं कल्पनीयम्। अनुक्तप्रायश्चित्तानां पापानां सामान्येनोक्तं बृहद्वामकेश्वरे— "ज्ञाताज्ञातकृतानां तु पापानां परमेश्वरि। पादुकां तु त्रिधा स्मृत्वा तत्क्षणादेव नाशयेत् ॥" इति। तथा योगिनीतन्त्रे—"अनुक्तानां तु पापानां दशधा मूलसंस्मृतिः" इति, तथा—"पादुकायाः शतजपो भवेत्पापदवानलः सहस्रजापो देवेशि ततोऽप्यधिकमीरितम् ॥ शतमूलजपेनापि नाशयेत् पापसंचयम्। सहस्रेण महादेवि सर्वशुद्धिमवाप्नुयात्।" इति। तथा स्वतन्त्रे—"अज्ञानकृतपापानामन्यानां च विशेषतः। त्रिरात्रोपोषणं मूलायुतजापो हि निष्कृतिः ॥" इति। एतच्च पापतारतम्येन योजनीयम्। योगिनीतन्त्रे तु विशेषः—"सुवासिनीबालवृद्धातुराणां तारतम्यतः। प्रोक्तार्धं वापि पादं वा प्रायश्चित्तमुदीरितम्।" इति। तथा स्वतन्त्रे—'देव्युवाच। देव सर्वस्य पापस्य निष्कृतिं सुलभेन वै। तथैकां वद देवेश पापानां शिव निष्कृतिम्। भैरव उवाच। देवि शृणु रहस्याच्च रहस्यं त्वं समाहिता। द्विधा सा सर्वदोषाणां निष्कृतिः

सर्वगोपिता ।। सर्वनिष्कृतिराद्या स्याद् द्वितीया साक्षिनिष्कृतिः । आद्या सदा सेवनीया द्वितीया मरणोन्मुखे ।। अनुतापो यदा चित्ते तदा भक्त्या समाचरेत् । सितेऽष्टम्यामुषः-काले मौनेनोत्थाय साधकः ।। सन्ध्यान्तं कर्म निर्वर्त्यानुज्ञातो गुरुणाऽथवा । ज्येष्ठादिना वा योग्येन प्राणायामत्रयं चरेत् ।। देशकालादि निर्वाच्य जन्मादेतत्क्षणावधि । कृतानाम-पराधानामघानां चापनुत्तये ।। महासान्तपनाख्यं च करिष्ये देवताव्रतम् । ततः शिवालये पुण्यनदीतीरे रहःस्थले ।। तिथिसंख्यशतं मूलं जप्त्वा होमं समाचरेत् । घृताक्तबिल्वपत्रैश्च ततो रात्रौ सुभक्तितः ।। चक्रराजार्चनं देवि कारयित्वा यथा-विधि । पूजां सामयिकान्तां च निर्वर्त्य च ततः प्रिये ।। स्वीकृत्य च यथायोग्यं त्रिचतुः-पञ्चपात्रकम् । ग्रासं हि पात्रस्यान्ते वै प्रत्येकं भक्षयेत्प्रिये ।। शुद्ध्यादिचर्वणोन्मिश्रं पूर्वसंख्यानुयोगतः । मयूराण्डमितो ग्रासः संख्यया तदपः पिबेत् ।। पश्चाज्जलं पिबेद् देवि जपेन्मलशतत्रयम् । रात्रौ स्थण्डिलशायी च ब्रह्मचर्ययुतः सदा । पूजान्ते भोजयेत् पश्चाद्यथाविभवमम्बिके । एवं त्रिरात्रं निर्वर्त्य चतुर्थे पूजयेद् गुरुम् ।। यथाशक्त्या ततो देवि तदाज्ञावशतः शिवे । व्रतं निवेदयेद् देव्यै ब्राह्मणान् भोजयेत्ततः ।। य एवमाचरेद् देवि तस्य पापक्षयो भवेत् । स शुद्धः सर्वपापेभ्यः सत्यमत्र न संशयः ।।" इति महासान्तपनाख्यं प्रायश्चित्तव्रतमुक्तम् । पापस्य प्रत्येकं सुलभेन निष्कृतिं । आजन्मकृतानां सर्वपापानामेकां निष्कृतिं च । सा निष्कृतिः द्विधा । आद्याया कालमाह—अनुताप इति । तद्विधिमाह—सित इति । शुक्लपक्षे इत्यर्थः । अत्र योग्यत्वात् समुहूर्तादिसंयुते इति चान्द्रायणे प्रोक्तरीत्या शुभयोगोऽप्यपेक्षितः । एतच्च शुक्रास्तादिव्रते वर्जनीयानामप्युपलक्षणम् । गुर्वभावे ज्येष्ठेन तदभावेऽन्येन योग्येना-नुज्ञातः । अपराधाः पञ्चविंशतितमे वक्ष्यमाणाः । अघानि महापातकाद्यतिरिक्तानि । अपनुत्तये क्षयाय । "नित्यं नैमित्तकं तद्वत् प्रायश्चित्तमपीश्वरि । देवतार्थं प्रकर्तव्य-मन्यथा दुःखदं भवेत् ।।" इति बृहद्वामकेश्वरानुरोधेनापराधानामघानां च क्षयद्वारा परदेवताप्रीत्यर्थमिति संकल्पः । तिथिसंख्यशतं पञ्चदशशतम् । होमस्तु जपानन्तरविधानेन वक्ष्यमाणचान्द्रायणाद्यनुसारेण च पुरश्चरणवज्जपदशांशः । आचार्यादिना कारयित्वा । तत्र च संकल्पेऽमुकस्य व्रताङ्गमित्युल्लेखः कर्तव्यः । यथायोग्यं बालोपासकस्य त्रिपात्र-मित्यादि । प्रत्येकम् एकैकपात्रान्ते एकैको ग्रासः । मिश्रं ग्रासम् । अधिकग्रासव्यवच्छेदाय पुनः पूर्वसंख्यानुयोगत इति । मयूराण्डेऽपि स्थूलसूक्ष्मतारतम्यसंभवान्निर्णयाय तन्त्रान्त-रानुरोधेन ओष्ठासंस्पर्शीति पद्धतावुक्तम् । तच्चोक्तं बृहद्वामकेश्वरे—"ओष्ठास्पर्शिनमाहुर्वै पिण्डं ग्रासमितीश्वरि" इति । तदिति लुप्तषष्ठ्यन्तम् । तस्य ग्रासस्य संख्यया अपः पिबेत्, पात्रसमसंख्यया चुलुकोदकं पिबेदिति भावः । तच्च न प्रतिग्रासान्ते एकैक-वारं चुलुकोदकपानं किन्तु सर्वान्ते इत्याह—पश्चादिति । सर्वग्रासान्ते इत्यर्थः । जलपानानन्तरं पुनस्त्रिशतं जपेत् । स्थण्डिले गोमयोपलिप्ते । अत्र ग्रासभक्षणं जलपानं चोक्ताधिकं नास्ति । न च भोजनस्यानिषेधादुक्तग्रासाद्यतिरिक्तभोजनादिकमप्यस्त्विति

वाच्यम्, चान्द्रायणापेक्षयाऽस्य महत्पापे कथनात्ततोऽस्य न्यूनतापत्तेरयुक्तत्वात्, ग्रासं हि पात्रस्यान्ते वै इति वैकारस्यैवार्थत्वात्, पात्रान्ते एव ग्रासं भक्षयेदित्यर्थस्यावश्यकत्वात्। पूजान्ते पश्चात्। पूजासमाप्त्युत्तरम्। यथाविभवं शक्त्यनुरोधेन ब्राह्मणादीन् भोजयेत्। चतुर्थे दिने पूजान्ते यथाशक्त्या गुरुं संपूजयेत्। तदाज्ञावशतः गुर्वाज्ञया। अत्र मौनेन स्नानादिकमष्टम्यामेव न प्रत्यहम्, एवं त्रिरात्रमित्यत्रैवंपदेन ततः शिवालये इत्यादेरेव संग्रहात्। अन्यथा गुर्वाज्ञया संकल्पादेरपि प्रत्यहं कर्तव्यत्वापत्तिरिति। तथास्य जपादेः सन्ध्यान्तं कर्म निर्वर्त्येत्यनेन प्रातःकाले कर्तव्यत्वं द्योतितं ज्ञेयमिति। इयमेव सर्वनिष्कृतिः। साक्षिनिष्कृतिस्तु द्वितीया मरणोन्मुख इत्युक्त्या आसन्नमरणेन कर्तव्या। तद्विधानमप्युक्तरीत्यैव विशेषानुक्तेः। परन्तु कर्तुरशक्त्या सिताष्टम्यादिरूपकाललाभानैयत्याच्च यथाकालं ब्राह्मणपुत्रादिद्वारा करिष्य इति संकल्प्य तदुपयुक्तं द्रव्यमुत्सृजेदिति। चान्द्रायणकृच्छ्रयोरपि स्वरूपं तत्रैवोक्तम्—"चान्द्रायणस्य कृच्छ्रस्य स्वरूपं शृणु साम्प्रतम्। शुद्धपक्षे शुक्रवारे सुमूहूर्तादिसंयुते॥ गुर्वनुज्ञां समादाय स्नातः कृतजपार्चनः। तिथ्यादिकं समुल्लिख्य प्राणायामपुरःसरम्॥ अमुकार्थमहं चैतत्करिष्ये देवताव्रतम्। इति संकल्प्य च ततः पुण्यस्थाने रहःस्थले॥ जपेन्मूलसहस्रस्य त्रयं प्रतिदिनं शिवे। मण्डलं कारयित्वा तु शक्ति पूज्य च भक्तितः॥ अक्षारलवणं भुक्त्वा सहस्रं प्रजपेत् पुनः। ब्रह्मचर्यं च भूशय्यां स्नानं त्रैकालिकं चरेत्॥ एवं वै सप्तरात्रं तु कृत्वा भक्तिसमाहितः। प्रातः स्नात्वा शुक्रवारे स्थाप्याग्निं विधिपूर्वकम्॥ दशांशं जुहुयाद् देवि घृताक्तैर्विल्वपत्रकैः। पायसेनावृतिं हुत्वा उपवासं ततश्चरेत्। तत्त्वशोधनमात्रं तु द्वितीयादियुतं चरेत्। प्रतितत्त्वं ग्रासपूर्तिर्येन केनापि संभवेत्॥ तेनोपवासघातो न विधिः सर्वव्रतेष्वयम्। नवमे दिवसे देवि शक्त्या विप्रांस्तु भोजयेत्॥ इदं चान्द्रायणं नाम साधकानां हितङ्करम्। दिवसैः पञ्चभिः कृत्वा कृच्छ्रः स्यादेवमेव हि॥" इति। शुद्धपक्षः शुक्लपक्षः। स्नातः कृतजपार्चनः गुर्वनुज्ञां समादायेत्यन्वयः। पापविशेषस्य विधानाद् अमुकार्थमिति। एतदिति चान्द्रायणं कृच्छ्रं वा। तयोः साम्यात्। अत्र पूजायाः कालाविधानेऽपि नैमित्तिकत्वादेव रात्रौ ज्ञेया। यथाशक्त्या दक्षिणाद्यैः शक्ति संपूज्य। क्षरत्यनेनेति क्षारो गुडादिरिति। क्षारलवणवर्जनं चेत्यापस्तम्बसूत्रे वैश्वदेवप्रकरणे वृद्धैर्व्याख्यानात् क्षार ऐक्षवम्। पुनः भोजनान्ते। दीक्षोक्तविधिपूर्वकम्। सप्तभिर्दिवसैः कृतस्याष्टाविंशतिसहस्रसंख्यस्य जपस्य दशांशम्। येन केनापीति शुध्यादिवर्णोन्मिश्रणं प्रागुक्तं निरस्तम्। तत्त्वशोधनं द्वितीयादियुतमित्युक्तम्। तच्च न यथेच्छम्, किन्तु ग्रासपूर्तिमितमन्यामिश्रितमित्युक्तं भवति। ग्रासपूर्तिर्येन केनापि यथा संभवेत्तथा कर्तव्येत्यर्थः। ननु उपवासं ततश्चरेदिति प्रागुक्तम्, कथमत्रोच्यते—ग्रासपूर्तिः कर्तव्येत्याशङ्क्याह—तेनेति। नात्रैव व्रतेऽयं विधिः, किन्त्वन्यत्रापीत्या—सर्वेति। एवमेव दिनत्रयमक्षारलवणभोजनं चतुर्थे होमोपवासौ पञ्चमे ब्राह्मभोजनादिसमाप्तिरिति कृच्छ्रः स्यादिति॥ तथा तत्रैव—"सर्वैरपि त्रयं चैतद् व्रतं प्रत्यब्दमाचरेत्। एकं वा शक्त्यभावे तु सर्वपापापनुत्तये॥

एकस्मिन्दिवसे वापि तथा कुर्याद् वरानने। तेन सर्वापराधानां शान्तिर्भवति तत्त्वतः॥ दीक्षादिसर्वकर्मादौ शुद्ध्यर्थं तु समाचरेत्। त्रयमेकं तथान्यद्वा प्रायश्चित्तं समाचरेत्॥" इति। सर्वैरुपासकैः। त्रयं सांतपनादि। अत्यशक्त एकस्मिन्दिवसे कृत्वा द्वितीये सान्तपनं तृतीये चान्द्रायणं कृच्छ्रं च समापयेत्। अन्यत् सामान्यप्रायश्चित्तं यत्किञ्चित्। अत्रैतत् शिष्यस्य शुद्धितारतम्येनापि ज्ञेयम्। महापातकान्यपि तत्रैवोक्तानि—"अन्तर्मार्गे भवेद् देवि महापातकपञ्चकम्। तेषां तु निष्कृतिर्नास्ति शृणु सत्यं वदामि ते॥ गुरुद्रोहश्च तत्पत्नीगमनं समयक्षतिः। आचारस्य परित्यागः पशुप्रकटनं तथा॥ गुरोर्वित्तादिहरणं भर्त्सनं शास्तिलङ्घनम्। आद्यस्यैवं त्रिविधता द्वितीयं द्विविधं भवेत्॥ गुरुस्त्रीतः समानस्त्रीगमनं चेति भेदतः। द्विविधं च तृतीयं स्यात्पूर्वं मध्ये च भञ्जनम्॥ द्विविधं च चतुर्थं स्यादाचारस्य मनोस्तथा। द्विविधं पञ्चमं देवि प्रत्यक्षेण परोक्षतः॥ एवं भेदेन देवेशि बहुधा तत्त्वल्पभेदतः॥" इति। अन्तर्मार्गं उपासनामार्गः॥ तत्स्वरूपमाह—गुरुद्रोह इति। यद्यपि गुरुपत्नीगमनस्य महापातकत्वं स्मृत्यादिभिरेव सिद्धम्, तथाप्यान्तरं प्रायश्चित्तं विधातुमत्र गणनम्। समयस्य साधकैः सपर्याद्यर्थे कृतस्य संकेतस्य क्षतिः प्रतिकूलाचरणेन नाशनम्, पशुषु तत्संप्रदायदूषकेषु सम्प्रदायप्रदर्शनम्। एतेषामवान्तरभेदमाह—गुरोरिति। वित्तादीत्यादिना क्षेत्रादि। भर्त्सनम् अपवदनम्। शास्तिराज्ञा। तत्समास्त्रयोदशे प्रोक्ताः। पूर्वं सपर्यारम्भात्। मध्येऽनन्तरम्। आचारः यथोक्तवत्कर्मानुष्ठानम्। मनुर्मन्त्रः। अत्रेमे सपर्यां कुर्वन्तीति प्रत्यक्षेण प्रदर्शनं परोक्षतः कथनम्। एवमत्राप्यवान्तराल्पभेदेन बहुधा भेदः। अत्र प्रायश्चित्तमपि तत्रैवोक्तम्—"अज्ञानेन महापापे महापूजां समाचरेत्" इति। महापूजा तु महायागः प्राङ्निरूपितः। ज्ञानपूर्वके तु प्रायश्चित्तं नास्तीति प्रागुक्तमेव॥

सौभाग्यानन्दसन्दोहे तेनरापद्यबोधकः।
परमानन्दटिप्पण्यामुल्लासोऽग्र्यशिवसंमितः॥



## चतुर्विंश उल्लासः

देव्युवाच—

> भैरवेत्थं त्वया प्रोक्तं श्रीदेवीपूजनादिकम् ।
> परित्यज्यात्मनिरताः सन्ति योगीन्द्रनायकाः ॥
> तेषां निष्ठा भवेद् देव कीदृशी तद्वदस्व मे ॥१॥
> शृणु देवि प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ।
> सावधानेन मनसा सूक्ष्मात् सूक्ष्मार्थसंयुतम् ॥२॥

---

एवं त्रयोविंशत्युल्लासैस्तस्मादद्य महादेव सुन्दर्यास्तन्त्रमुत्तमम् । सुस्पष्टं सुव्यवस्थं च परमानन्ददायकम् ॥ कृपया वदेति यत्पृष्टं तदभिहितम् । तत्र मुख्यत्वेन बाह्योपासनात्मकं कर्मैव निरूपितम् । क्वचित्प्रसङ्गादान्तरोपासनं ज्ञानमपि । प्रकृते प्रोक्तकर्मणा उपासनेन च शुद्धचित्तानां ज्ञानप्रक्रियां निरूपयितुं देवीप्रश्नमवतारयति—देव्युवाचेति । ननु "क्रमदीक्षां समासाद्य नित्यनैमित्तिकादिकम् । अनाचरन् प्रमादेन दुर्गतिं शाश्वतीं व्रजेत् ॥" इत्यादिवचनात् प्रोक्तनित्यनैमित्तिकाद्यनुष्ठानमावश्यकमपि केचन आत्मनिरता आत्मारामाः परित्यज्य सन्ति । न च ते प्रत्यवायिन एवेति वक्तुं शक्यम्, यतो योगीन्द्रनायकाः प्राप्ताणिमाद्यैश्वर्याः । तथा च कथमेतदेवमित्याशङ्कते—तेषामिति । निष्ठा सिद्धिः । कर्मत्यागात् प्रत्यवायाभावः पुरुषार्थलाभश्च यतः, एवंविधा सा सिद्धिः कीदृशीत्यभिप्रायः । षट्चरणः श्लोकः ॥१॥

उत्तरं भैरव उवाचेति । महत् श्रेष्ठम् । सत्त्वबुध्येकग्राह्यत्वात् सूक्ष्मादित्यादि ॥२॥

तदेवाह—कर्मेत्यादि । योग उपासना । क्वचिन्मनोनिरोधरूपा । मोक्षस्य ज्ञानैकसाध्यत्वेऽपि कर्मयोगयोः परम्परया मोक्षसाधनत्वेन तदुपायत्वं ज्ञेयम् । वस्तुतस्तु मोक्षस्य सिद्धत्वेन न तत्र ज्ञानस्याप्युपयोगः, किन्तु मोक्षाभिव्यञ्जकाज्ञाननाशे एवोपयोगः । तथा च पौरुषाज्ञाननिवृत्तौ भावनारूपयोगविशिष्टदीक्षादिकर्मण उपयुक्तत्वाद् बौद्धाज्ञाननिवृत्तौ ज्ञानस्योपयोगात् त्रिधोपाय इति युक्तमेव । एतच्च श्रीमदभिनवगुप्तपादैस्तन्त्रालोके निरूपितम्—"ज्ञानाज्ञानस्वरूपं यदुक्तं प्रत्येकमध्वरः । द्विधा

**कर्म योगस्तथा ज्ञानं त्रिधोपायस्तु संस्थितः ।**

**मोक्षस्य बन्धनस्तत्र बन्धोऽज्ञानं प्रकीर्तितम् ।।३।।**

---

पौरुषबौद्धत्वाभिधोक्तं शिवशासने ।।'' इति। एवं ज्ञानाज्ञानयोः पौरुषबौद्धत्वाभ्यां द्वैविध्यमुक्त्वा—"तत्र दीक्षादिना पौंस्नमज्ञानं ध्वंसि यद्यपि। तथापि तु शरीरान्ते तज्ज्ञानं व्यज्यते स्फुटम् ।।'' इति दीक्षादिना पौरुषाज्ञाननिवृतावपि देहान्ते एव पौरुषं ज्ञानं व्यज्यत इत्युक्तम् । अत्र पौरुषमज्ञानं न ज्ञानविरोधि, किन्तु पौरुषज्ञानाच्छादक-मलविशेषरूपम्, ताम्राद्यन्तर्गतकालिकदोषतुल्यम् । तदपि तत्रैवोक्तम्— तत्र पुंसो यदज्ञानं मलाख्यं तज्जमप्यथ । सुपूर्णचित्क्रियानन्दशिवतावरणात्मकम् ।।'' इति। तज्जं परमेश्वरस्वातन्त्र्याज्जातमवभासितमित्यर्थः ।

ननु पौरुषाज्ञानस्य तज्ज्ञानाच्छादकस्य दीक्षादिना निवृत्तौ सद्य एव कुतस्त-ज्ज्ञानं नाभिव्यज्यते, तदाह—"क्षीणे तु पशुसंस्कारे पुंसः प्राप्तपरस्थितेः । विकस्वरं तद्विज्ञानं पौरुषं निर्विकल्पकम् ।।" इति। पौरुषं ज्ञानं नाम स्वरूपभूतं ज्ञानम् । बौद्धं च चरमनिर्विकल्पवृत्तिरूपम् । तत्र पौरुषाज्ञाननिवृत्तावपि पशुवासनायाः प्रारब्ध-निमित्ताया आदेहपातमनुवृत्तेर्न पौरुषज्ञानाभिव्यक्तिः । बौद्धाज्ञानं तु तज्ज्ञानेन निव-र्तते । तज्ज्ञाने तु शास्त्रमेव मुख्यं कारणम् । तदपि तत्रैवोक्तम्—"तथाविधावसायात्म बौद्धविज्ञानसम्पदे । शास्त्रमेव प्रधानं तज्ज्ञेयतत्त्वप्रकाशकम् ।।'' इति। तथाविधस्य अनाच्छादितस्वरूपस्यावसायो निश्चयः । ननु किं बौद्धज्ञानेन नष्टपौरुषाज्ञानस्य दीक्षा-युतस्य शरीरपातमात्रेण मोक्षसंभवादित्याशङ्क्य तत्रैवोक्तम्—"दीक्षया गलितेऽप्यन्त-रज्ञाने पौरुषात्मनि । धीगतस्यानिवृत्तत्वाद्विकल्पोऽपि हि संभवेत् ।। देहसद्भावपर्यन्त-मात्मभावो यतो धियि। देहान्ते एव मोक्षः स्यात्पौरुषाज्ञानहानितः ।। बौद्धाज्ञान-निवृत्तौ तु विकल्पोन्मूलनाद् ध्रुवम् । तदैव मोक्ष इत्युक्तं धात्रा श्रीमन्निशाटने ।।'' इति। पौरुषाज्ञाननिवृत्तावपि बौद्धाज्ञानानिवृत्तेर्देहात्मभावरूपविकल्पसम्भवादादेहपातं नैव मोक्षः, बौद्धाज्ञाननिवृत्तौ तु तदैव देहसत्त्वे एव मोक्षः । नैतत् स्वकपोलकल्पित-मित्याह—धात्रेति। श्रीमन्निशाटनाख्ये आगमे दीक्षावतः प्रारब्धस्योपभोगेन क्षयादन्य-कर्मणां दीक्षयैव नष्टत्वाद्देहपातोत्तरं देहान्तराभावेन विकल्पानुदयात् पौरुषज्ञानाभिव्यक्तौ बुद्धेर्विलयाच्च तदज्ञाननिवृत्तौ मोक्षलाभः। अथवा देहपाते तत्तल्लोके शिवाद् बौद्धं ज्ञानं प्राप्य मुच्यन्ते। तदुक्तं त्रिपुरारहस्ये—"दीक्षावन्तस्तु देहान्ते प्राप्य लोकं परा-त्परम् । सदाशिवेन ते सम्यक् प्रबुद्धाः शिवरूपिणः ।।'' इति। एवं च दीक्षोत्तरं शास्त्रेण बौद्धज्ञानोदये जीवन्मुक्ता भवन्ति, अन्यथा देहपातानन्तरं मुक्ता इति भावः। ननु

किमेवंविधदीक्षया शास्त्रेणैव बौद्धज्ञानोदये पुरुषार्थलाभादिति चेन्न, दीक्षां विना शास्त्रश्रवणानधिकारेण बौद्धज्ञानानुदयात् । अत एवोक्तम्—"अदीक्षितानां पुरतो नोच्चरेच्छिवपद्धतिम्" इति, 'गुरुणैव यदा काले सम्प्रदायो निरूपितः । तदा प्रभृति । मुक्तोऽसौ यन्त्रं तिष्ठति केवलम् ॥'' इति । काले दीक्षोत्तरकाले इत्यर्थः । "दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि" इति, "विना दीक्षां न मुक्तिः स्यादित्याज्ञा पारमेश्वरी" इत्यादि ।

ननु किमनया दीक्षया, सांख्याद्युक्तदीक्षानपेक्षसाधनेनापि मोक्षसम्भवादिति चेन्न, तस्यापूर्णमोक्षत्वात् । तदुक्तम्—"सांख्यवेदादिसंसिद्धान् श्रीकण्ठस्तदहर्मुखे । सृजत्येव पुनस्तेन न सद्दङ्मुक्तिरीदृशी ॥" इति । तथा स्वच्छन्दशास्त्रे-- मुक्तं च प्रतिबन्धात्तं पुनर्बध्नाति चेश्वरः । बद्धः संसारतो भूयो यावद्देवं न विन्दति ॥" इत्यादि । तस्मात् परमेश्वरज्ञानं पारमेश्वराच्छास्त्रादेव । तदुक्तम्— 'शिववक्राम्बुजोद्भूतममलं सर्वतोमुखम् । शिवत्वोन्मीलनं तथ्यं ज्ञानमज्ञाननाशनम् ॥ अनेन सिद्धाः पश्यन्ति यत्तत्पदमनामयम् ।'' इति । तथा—"अथात्ममलमायाख्यकर्मबन्धविमुक्तये । व्यक्तये च शिवत्वस्य शिवज्ञानं प्रवर्तते ॥" इति । एतन्निर्णयस्तु तन्त्रालोके वितत्य वर्णितो द्रष्टव्यः। तस्मान्मोक्षस्य कर्मादिकमुपायः । बन्धतो मोक्षस्य त्रिधोपाय इत्यन्वयः । मोक्षो नाम सम्पूर्णस्वरूपप्रथनम् । तदप्युक्तं तन्त्रालोके--"स्वतन्त्रात्मातिरिक्तस्तु तुच्छोऽतुच्छोऽपि कश्चन । न मोक्षो नाम तन्नास्य पृथङ्नामापि गृह्यते ॥" इति । तथान्यत्र—"मोक्षो नाम तु नैवान्यः स्वरूपप्रथनं हि सः" इति । ननु बन्धपदार्थ एव कः ? तदाह—बन्धोऽज्ञानमिति । अत्र बन्धो ज्ञानम् अज्ञानम् इति द्विधा च्छेदः । एतच्च—"चैतन्यमात्मा, ज्ञानं बन्धः" इति शिवसूत्रे संहितापाठे इतरपाठे अकारप्रश्लेषाऽप्रश्लेषाभ्यां वृत्तिकृतोक्तम् ।

अयमभिप्रायः—अद्वितीयचिन्मात्ररूपे आत्मनि तदतिरिक्तबन्धाभिमतस्य ज्ञानस्य वाऽज्ञानस्य वा न संभवः । तत्र ज्ञानं यदि बन्धस्तर्हि तत्स्वप्रकाशज्ञानैकरूपमिति भेदकाभावेनात्मैकरूपत्वान्न बन्धत्वम् । यद्यन्यादृशं ज्ञानं तर्हि न तस्य ज्ञानत्वम् । एवमज्ञानं यदि ज्ञानाभावः, तर्हि स घटादावपि संभवीति तस्यापि संसरणप्रसङ्गः । यदुक्तं तन्त्रालोके--"अज्ञानमिति न ज्ञानाभावश्चातिप्रसङ्गतः । स हि लोष्ठादिकेऽप्यस्ति न च तस्यास्ति संसृतिः ॥" इति । तस्मात् परचिदात्मनः परशिवस्य स्वातन्त्र्यशक्त्या स्वरूपगोपनारूपयाऽतिदुर्घटकारिण्या मायाख्यशक्त्या स्वात्मनो यः संकोचोऽवभासितः, स एव स्वात्मनः पूर्णस्वरूपाख्यातिमयोऽज्ञानमित्युच्यते । यदुक्तं तन्त्रालोके—"अतो ज्ञेयसतत्त्वस्य सामस्त्येनाप्रकाशनम् । ज्ञानमेव तदज्ञानं शिवसूत्रेषु भाषितम् ॥" इति । एवं चात्मनोऽपूर्णख्यातिरज्ञानं बन्धः । तथा आत्मपूर्णख्यातेरेव शरीरादिविषयकज्ञानत्वेन ज्ञानं बन्धः । एवं नीलघटसुखादिज्ञानमपि ज्ञानरूपं बन्ध एव । तदुक्तं श्रीस्पन्दे--"परामृतरसापायस्तस्य यः प्रत्ययोद्भवः" इति ॥३॥

**तच्चात्मन एव स्यात् त्रिधैव परिभेदितम् ।**
**त्रिमलात्मकमेतेनाणवमायीयकार्मिकाः ॥४॥**
**अत्रेदमहमित्येवं द्विधा वस्तु प्रकाशते ।**
**दृश्यं द्रष्टा च देवेशि विचार्यं तद्द्वयं शिवे ॥५॥**

---

ननु प्रोक्तमज्ञानं कस्य भवेदित्याशङ्क्याह--तच्चात्मेति । आत्मन एवेति । यदुक्तं संक्षेपशारीरके--"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला" इति । शुद्धसंविद्रूपेऽप्यज्ञानभासनं मायाशक्त्युद्भावितत्वेनाचोद्यमेव । तदुक्तं परमार्थसारे--"परमं यत् स्वातन्त्र्यं दुर्घटसम्पादनं महेशस्य । दैवी मायाशक्तिः स्वात्मावरणं शिवस्यैतत् ॥" इति । तथा 'दुर्घटैकविधायिन्यां मायायां किमसंभवि" इत्यन्यत्र । तथा सुभगोदयेऽपि--"माया विभेदबुद्धिर्निजांशभूतेषु निखिलभूतेषु । नित्यं तस्य निरङ्कुशविभवं वेलेव वारिधिं रुन्धे ॥ स तया परिमितमूर्तिः सङ्कुचितसमस्तशक्तिरेष पुमान् । रविरिव सन्ध्यारक्तः संहृतरश्मिः स्वभासनेऽप्यपटुः ॥" इति । एवंविधमज्ञानं त्रिधा त्रिप्रकारं भेदितं भेदेन स्थितमेव बन्धकम् । अथवा नन्वन्यत्रागमेषु--"अनादिभिर्मलैर्बद्धः संसरन् पशुरुस्थितः" इति मलानां बन्धकत्वमुक्तम्, तत्कथमत्राज्ञानस्य बन्धकत्वमुच्यत इत्याशङ्क्याह--त्रिधेति । तदेव त्रिधा परिभेदितम् अज्ञानमेव मलत्रयरूपेण स्थितमित्यर्थः । एतेन त्रिधा परिभेदितत्वेन हेतुना त्रिमलात्मकं जातम् । कानि तानि मलानीति चेदाह--आणवेत्यादि । एतेषां लक्षणं प्राङ्निरूपितं विस्तरेण ॥ ४ ॥

प्रसङ्गात् पुनर्मलस्वरूपं निरूपयितुं देहादिशून्यान्तात्मवादिनामात्मतत्त्वविवेचनप्रक्रियां निरूपयन्नाह--अत्रेति । मानाधीना मेयसिद्धिरिति तत्रानुमानागमाभ्यां परोक्षप्रमाणाभ्यामात्मवस्तुसाधने साधितस्यानात्मत्वमेव स्यादिति प्रत्यक्षेणैव साधनीयमिति प्रत्यक्षानुभवमेव विचारयति--इदमहमिति । अत्र लोके प्रत्यक्षेण वस्तु अहमिति इदमिति च द्विधा द्विप्रकारेण प्रकाशते । अत्र द्विधा वस्तु प्रकाशत इत्यनेन वस्तुनः प्रकाशे एव द्वैविध्यम्, न वस्तुस्वरूप इति वक्ष्यमाणवस्त्वद्वैतमुपक्षिप्तं वेदितव्यम् । तत्राहमिदं पश्यामीति सार्वजनीनोऽनपह्नवनीयोऽनुभवः । तत्राऽहम् इदं पश्यामीत्यंशत्रयम् । तत्र पश्यामीति प्रमाणांशस्य प्रमातृप्रमेयसम्बन्धरूपस्य न पृथग् विचार्यत्वम्, सम्बन्धस्य सम्बन्धिमात्ररूपत्वात् । न च विशिष्टबुद्धिनियामकत्वेन सम्बन्धो वस्त्वन्तरमित्यवश्यमभ्युपेयमिति वाच्यम्, सम्बन्धस्य पृथक्त्वे तद्विशिष्टबुद्धौ सम्बन्धान्तरापेक्षायामनवस्थाप्रसक्तेः । न च सम्बन्धबुद्धेर्निरालम्बनत्वं शङ्क्यम्, यतोऽयमत्र परमार्थः--द्विधा हि सम्बन्धः प्रतीयते, वस्तुजनितसंश्लेषनिमितो बुद्धिजनितसंश्लेषनिमित्तश्चेति । तत्राद्यः संयोगादिः । द्वितीयः कार्यकारणभावादिः । तत्र घटपटयोः

**तत्र द्रष्टा देहमयः स्थूलः सर्वैर्विभावितः ।**
**तस्याप्यनेकरूपत्वादवस्थाभेदतः शिवे ॥६॥**
**दृश्यत्वाच्चान्य एव स्याद् द्रष्टा प्राणमयः शिवे ।**
**यतः प्राणयुतो देहः पश्यत्यादाति वाञ्छति ॥७॥**
**तस्यापि वायुरूपत्वाद् दृश्यत्वादप्रकाशतः ।**
**सुषुप्तौ तु महेशानि मत्प्राण इति संज्ञया ॥८॥**

---

संयोगस्तदुभयसंश्लेषनिमित्तः संश्लेषात्मक एव । संश्लेषो नामान्तरत्वेनावस्थितत्वम् । तथा च संयुक्ताविमावित्यत्र अन्तराभाव एव संयोगपदार्थो वेदितव्यः । यदुक्तं प्रत्यभिज्ञायाम्—"तत्र तत्र स्थिते तत्तद्भवतीत्येव दृश्यते । नान्यत्रान्योऽस्ति सम्बन्धः कार्यकारणभावतः ॥" इति । तथा संयोगस्य सम्बन्ध्यनतिरिक्तत्वमासूत्रितं श्रीमत्पतञ्जलिना—"स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः" इति । बुद्धिजनितसंश्लेषनिमित्तस्तु वह्निधूमयोरन्वयव्यतिरेकग्रहजनितोऽव्यभिचाररूपः । स च बहिः पृथगवभासमानयोरन्तरस्येद कारणमित्यैक्याभासात्मसंश्लेषरूपो विकल्पविशेषविषयत्वरूपत्वेनानतिरिक्त एव । एतदप्युक्तं प्रत्यभिज्ञायाम्—"स्वात्मनिष्ठा विविक्ताभा भावा एकप्रमातरि। अन्योन्यान्वयरूपैक्ययुजः सम्बन्धधीपदम् ॥" इति । तथा चेदमहमिति च द्विधैव वस्तु प्रकाशते । तत्र च यथासंख्यमिदमिति दृश्यम्, अहमिति द्रष्टा भवति। तदद्वयं विचार्यम् । तत्द्वयमध्ये कतर आत्मेति विचार्यमिति भावः ॥५॥

तत्रेदंपदार्थस्य दृश्यस्यात्मत्वशङ्काऽपि नास्तीत्यहंपदार्थो द्रष्टैवात्मा । स च किंरूप इति विचारयितुं क्रमेण मतान्यवतारयति—तत्रेति । तत्र इदमहमित्यादिप्रतीतिषु । स्थूलश्चक्षुर्विषयो देहमयो देहैकरूपो द्रष्टा आत्मा इति सर्वैर्लौकिकाद्यैर्विभावितो निश्चितः । मतान्तरमुपपादयितुमेतद् दूषयति—तस्यापीति । योऽहं बाल्ये स्तन्यपिपासुः स इदानीं वार्धके मन्दबुभुक्षुरित्येकत्वेन क्षुधापिपासादिधर्मवत्त्वेन चात्मनः प्रत्यभिज्ञानाद्देहस्य बाल्याद्यवस्थाभेदादनेकरूपत्वान्नात्मत्वम् ॥६॥

एवमसाधारणहेतुमुपपाद्य वक्ष्यमाणनिखिलपक्षसाधारणहेतुमप्याह—दृश्यत्वाच्चेति । अतः प्रोक्ताच्छरीरादन्य एव प्राणमयो द्रष्टा भवेत् । तत्रोपपत्तिमाह—यत इति । यतो देहस्य पश्यामीत्यादिदर्शनादिक्रियाप्राणयोगादेव । अतो मुख्यं द्रष्टृत्वं प्राणस्यैव । आदाति आदत्ते ॥७॥

मतान्तरं वक्तुं तदपि दूषयति—तस्यापीति । प्राणस्यापीत्यर्थः । वायुरूपत्वेन जडतया वेद्यत्वात् सुषुप्तौ द्रष्टृत्वेनाप्रकाशाद् मम गृहं मम शरीरमितिवद् मत्प्राण इति संज्ञया ज्ञानेन प्राणो न द्रष्टेत्यर्थः ॥८॥

मत्पदार्थोऽन्य एव स्याद्यस्मान्मत्प्राण ईरितः ।
तन्मनः स्यात् द्रष्टुरात्मा तदप्यत्र महेश्वरि ॥९॥
बुद्धेर्ग्राह्यत्वतो देवि बुद्धिरात्मा भवेत्तथा ।
तस्याः शून्यात्मकत्वेन सुषुप्तौ परमेश्वरि ॥१०॥
शून्यं स्यादात्मनो रूपमिति लौकिकमुख्यकाः ।
आत्माख्यातिमयं देवि मोहमज्ञानमाश्रिताः ॥११॥
एतदेवाणवमलं जानीहि परमेश्वरि ।
अतोऽभिमानो देहादावात्मत्वेन यदा स्थितः ॥१२॥

---

तस्मान्मत्प्राण इति प्रतीत्या मत्पदार्थो द्रष्टा अन्य एव वाच्यः । स क इति चेदाह—यस्मादिति । यस्मात् यद्वशात् । मत्प्राण इति प्राणस्य द्रष्टृसम्बन्ध ईरितः, तन्मनो द्रष्टुरात्मा स्वरूपं स्यात् । तदपि मतं दूषयति—तदपीति । मनोऽपीत्यर्थः । अत्र व्यवहारे ॥९॥

बुद्धेर्व्यवसायरूपान्तःकरणस्य ग्राह्यत्वान्मनोऽपि न द्रष्टेत्यर्थः । अतो बुद्धिरेव सर्वद्रष्टा आत्मा भवतीति संभाव्यते । तदपि मतं दूषयति—तस्या इति । बुद्धेरित्यर्थः । सुषुप्तौ शून्यात्मकत्वेन अभानप्रत्ययविषयत्वेन ॥१०॥

सुषुप्तिविरामे बुद्ध्यादिशरीरान्तानां तत एवोत्पत्तेः सुषुप्त्यादौ तत्रैव लयाच्छून्यमेवात्मनो रूपं संभाव्यत इति तत्र द्रष्टा देहमय इत्यादिरीत्या लौकिको मुख्य आद्यो येषां चार्वाकादीनां ते । आत्मनः अख्यातिः पूर्णत्वेनाप्रतीतिः । एवंविधं मोहात्मकं भ्रान्तिरूपमज्ञानम् आ अभिव्याप्य सर्वात्मना श्रिताः ॥११॥

एतदेव अपूर्णख्यातिरूपमज्ञानमेवाणवं मलम् । अणोः परिच्छिन्नसंविदात्मनो जीवस्य मलं प्रतिबिम्बग्राहिण आदर्शस्य मलमिव शक्त्याच्छादकत्वान्मलम् । अतः पूर्वोक्तादज्ञानात् । अभिमानोऽहङ्कारः । देहादौ देह आदिर्येषां प्राणादीनां तस्मिन् । कीदृशोऽभिमानः ? अहमात्मेतीत्याह—आत्मत्वेनेति । अयमाशयः—स्वस्वातन्त्र्यादाद परिच्छिन्नत्वाभिमानस्ततो देहादावात्माभिमान इति । एवं द्विविधमाणवमलम् । तदुक्तं प्रत्यभिज्ञायाम्—'स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता । द्विधाणवं मलमिदं स्वस्वरूपापहानितः॥" इति । एवं यदा द्विविधाणवमलविशिष्टः प्रमाता स्थितिं प्राप्तः ॥१२॥

तदा भेदमयं विश्वं विविधं तु प्रपश्यति ।
इदमेव तु मायीयं मलं भेदस्य दर्शनम् ॥१३॥
देहादिरूपसंकोचयुतोऽन्यस्यापि काङ्क्षया ।
भोगस्य कर्म विविधं कृत्वा देव्यभिमन्यते ॥१४॥
स संस्कारः कार्ममलमिति जानीहि तत्त्वतः ।
एवं मलत्रयाबद्धः पशुः संसरति ध्रुवम् ॥१५॥
तस्मात् संसरणे मूलमख्यातिः परमेश्वरि ।
तच्चाज्ञानं स्वाविरुद्धैः कर्माद्यैर्न निवर्तते ॥१६॥

---

तदा स्वस्वरूपैकदेशाभिमानदशायाम् । स्वस्वरूपमेव विश्वं स्वस्माद् भेदमयं पश्यति । तत्रापि परस्परं भेदाद्विविधम् । तुरवधारणे । विविधमेव पश्यति न कथमप्यैक्यं पश्यतीति भावः । इदमेव भेददर्शनं मायीयं मलम् । एतदप्युक्तं प्रत्यभिज्ञायाम्—'भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम्" इति । भेददर्शनं मायापरिच्छिन्नाभिमानेन प्ररूढमावरणं भेददर्शनेन कामनाद्युत्पत्त्या प्ररूढतरं भवतीत्यस्य मायासम्बन्धित्वेन दर्पणमलतुल्यत्वेन च मायीयमलत्वम् ॥१३॥

देहादिरूपसंकोचयुत इति प्रमातुर्हेतुगर्भं विशेषणम् । युतो यत इत्यर्थः । अतोऽन्यस्य भिन्नत्वेन भातस्य स्वर्गादेः काङ्क्षया तद्भोगसम्बन्धित्वेन शास्त्रेषु विहितं विविधं कर्म कृत्वा अभिमन्यतेऽपीत्यन्वयः । मयेदं कर्म कृतं ममैतत्फलं भविष्यतीत्यप्यभिमन्यते ॥१४॥

सः प्रोक्ताभिमानजनितः संस्कारः । कर्मसंबन्धित्वात् कार्मं स्वरूपाच्छादनस्य प्ररूढिसंपादकत्वात् प्रोक्तदिशा मलं भवतीत्यर्थः । एवमुक्तरीत्या आणवादिमलत्रयेण आबद्धः सर्वतो बद्धः पशुः सम्यक् पौनःपुन्येन सरति जननमरणप्रवाहं गच्छति । ध्रुवं चिरम् । आ ज्ञानोदयादित्यर्थः ॥१५॥

बन्धोऽज्ञानं प्रकीर्तितमित्युक्तम् । तत्र प्रसङ्गादज्ञानमेव मलत्रयरूपेण स्थितमिति प्रोक्तमपि मलत्रयस्वरूपं मुख्यप्रकरणत्वेन पुनर्विवेचितम् । एवं मलस्वरूपं विविच्य प्रकृतमेव मोक्षमुख्योपायं वक्तुं संसारमूलकारणमज्ञानमनुवदति—तस्मादिति । यतः त्रिषु मलेषु आद्यमख्यातिः, तस्मात् । अख्यातिः पूर्णस्वरूपाख्यातिः । संसरणे मूलमादिकारणम् । ननु तस्याज्ञानस्य प्रोक्तकर्मणैव निवृत्तिरिष्यताम् ? किं ज्ञानेनेत्याशङ्क्य

रज्ज्वज्ञानात् सर्पदृष्टिजातकम्पभयादिकम् ।
अनेककर्मनिचयैर्न जातु विनिवर्तते ॥१७॥
अतस्तु स्वविरुद्धेन ज्ञानेनैव निवर्तते ।
रज्जुज्ञानाद्यथा सर्पभयकम्पादिकं तथा ॥१८॥
यदज्ञानेन जातं यत्तज्ज्ञानात्तन्निवर्तते ।
स्वस्वरूपाज्ञानजातमनर्थं तु महेश्वरि ॥१९॥
निवर्तयेत् स्वरूपस्य ज्ञानमेव न चान्यथा ।
जिज्ञासामन्तरा तच्च दुर्लभं परमेश्वरि ॥२०॥

---

कर्मणो ज्ञाननिवर्तकत्वं न संभवतीति सदृष्टान्तं वक्तुमुपक्रमते—तच्चेति । प्रोक्ताख्याति-रूपबोधाज्ञानमित्यर्थः । चकारो मायीयकार्ममलयोः समुच्चायकः । कर्माद्यैरित्याद्यशब्दे-नोपासना । बहुवचनं कर्मोपासनयोर्ज्ञानवदेकविधतां व्यवच्छिनत्ति ॥१६॥

कर्मणाऽज्ञानतत्कार्ययोरविरोधे दृष्टान्तमेवाह—रज्ज्वज्ञानादिति । रज्ज्वज्ञानात् सर्पदृष्टिः सर्पबुद्धिः । ततः कम्पो भयं च । आदिना स्वेदमूर्च्छादि जायते । तच्च सर्पदृष्ट्यादिकं सर्वमग्निष्टोमचान्द्रायणदीक्षापुरश्चर्यादिरूपानेककर्मसमुदायैः कदाचिदपि न निवर्तते । जात्विति वृश्चिकाद्वृश्चिकोत्पत्तिर्गोमयादपि वृश्चिकोत्पत्तिर्यथा तथा कर्मणाऽप्यज्ञानादिनिवृत्तिरस्त्विति शङ्का निरस्ता ॥१७॥

एवं यतोऽज्ञानादेः कर्माद्यैः स्वाविरुद्धैरनिवर्त्यत्वम्, अतः । तुरवधारणे । अत एवेत्यर्थः । स्वस्याज्ञानादेर्विरुद्धेन ज्ञानेनैव स्वं निवर्तते । अत्रापि दृष्टान्तमाह—रज्जु-ज्ञानादिति । यथा सर्पभयकम्पादिकमज्ञाननिवृत्तिद्वारा निवर्तत इति शेषः । निवृत्तिश्च चिरानुवृत्तिरूपस्थैर्यनिवृत्तिः । तेनाज्ञाननिवृत्तावपि किञ्चित्कालं कम्पाद्यनुवृत्तौ नानुपपत्तिरिति भावः ॥१८॥

ननु रज्जुज्ञानाज्ञानयोरेवैवं निवर्त्यनिवर्तकभावो नान्यत्रेत्याशङ्क्य सामान्य-मुखीं व्याप्तिमाह—यदिति । प्रकृते योजयति—स्वस्वरूपेति । अनर्थं संसरणम् ॥१९॥

निवर्तयेत् निवर्तयतीति सम्भाव्यते । अन्यथा निवृत्तिर्न सम्भाव्यते । एतावता ग्रन्थेन ज्ञानस्यैव परपुरुषार्थसाधकत्वं संसाध्य ज्ञानस्य साधनं निरूपयति—जिज्ञासामिति । ज्ञातुमिच्छा जिज्ञासा, ज्ञानं मे स्यादितीच्छा । एवमिच्छामन्तरा तत्फलभूतं ज्ञानम् । चकारात्साधनभूतं ज्ञानं भक्तिः श्रद्धेत्यादि वक्ष्यमाणं समुच्चितम् । दुर्लभं दुःखेनाप्य-लभ्यम् । अत एव श्रीमद्बादरायणेनासूत्रितम्—"अथातो ब्रह्मजिज्ञासा" इति । श्रीभग-

सा पि श्रीजगदीशस्य कृपया जायते ध्रुवम् ।
त्रिविधास्तु नरा देवि सत्त्वराजसतामसैः ॥२१॥
कर्मभिः सुप्रबुद्धश्च प्रबुद्धोऽबुद्ध एव च ।
जन्मान्तरशताभ्यस्तसत्त्ववृत्तिर्महेश्वरि ॥२२॥

---

वतापि—"तद्विद्धि प्राणिपातेन परिप्रश्नेन सेवया" इति गीतम् । वासिष्ठेऽपि—"अ बद्धो विमुक्तः स्यामिति यस्यास्ति निश्चयः । नात्यन्तमज्ञो नोऽतज्ज्ञः सोऽस्मिन् शास्त्रेऽधिकारवान् ॥" इति ॥२०॥

नन्विच्छायाः कृतिसाध्यत्वाभावात् सैव कथं स्या दत्याशङ्कायामाह—साऽपीति । सा जिज्ञासा । अपिना निखिलज्ञानसाधनानां फलभूतज्ञानस्य च संग्रहः । ईश्वरकृपा हि जिज्ञासादिचरमफलपर्यन्तस्य कारणमिति भावः । ध्रुवमचलं यथा तथा जायते मोक्षरूपफलश्रवणेन जिज्ञासा भवति प्रायः सर्वेषाम् । अदृढत्वान्न सा फलावहा, तत्परत्वसम्पादकदृढेच्छाया एव फलान्तत्वात् । अत एवोक्तं त्रिपुरारहस्ये—"फलश्रुत्युत्तरोद्भूता नेच्छा कर्मफलावहा । फलश्रुत्या कस्य नाम न स्यात् सा जीवधर्मिणः ॥" इति । तथा—"न साधनं फलं वापि प्रवृत्तिरपि भार्गव । विना श्रीत्रिपुरेशान्याः कृपया संभविष्यति ॥" इति । तथा वासिष्ठे—"यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् । तावन्न सद्गुरुं कश्चित् सच्छास्त्रं वाऽपि नो लभेत् ।" इति कृपायां तदाराधनमेव कारण मिति भगवदाराधनमेव मूलकारणमित्युक्तं भवति । अत एव—"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति श्रीभगवता गीतम् । अस्यैव सुगमोपायत्वं पतञ्जलिरप्याह—"ईश्वरप्राणिधानाद्वा" इति । नन्वेवं ज्ञानस्यैवेश्वराराधनजनितस्योपायत्वे—'कर्मयोगस्तथा ज्ञानं त्रिधोपायस्तु संस्थितः' इति कथमुपायस्य त्रैविध्यमुक्तमित्याशङ्क्य अधिकारिभेदेन कस्यचित्साक्षात् कस्यचित्कर्मादिद्वारा ज्ञानेन मोक्ष इति वक्तुमधिकारिविभागमाह—त्रिविधा इति । सत्त्वराजसतामसैः सात्त्विकराजसतामसैः, कर्मभिरित्यन्वयः ॥२१॥

तेषां नामान्याह—सुप्रबुद्ध इत्यादि । पूर्वजन्मकृतसात्त्विकादिकर्मवासनावासितान्तःकरणाः क्रमेण सुप्रबुद्धादयः । प्रबुद्धः अबुद्धः इति । अत्रेदमनुसन्धेयम्—जनास्त्रिविधाः, सुप्रबुद्धप्रबुद्धाबुद्धभेदात् । तत्र सुप्रबुद्धस्तु शुद्धसात्त्विकान्तःकरणत्वादज्ञानाभावेन स्वतोऽधिगतपरमार्थत्वान्न शास्त्राद्यधिकारी । तदुक्तं श्रीस्पन्दे—"तस्योपलब्धिः सततं त्रिपदाव्यभिचारिणी । नित्यं स्यात् सुप्रबुद्धस्य तदाद्यन्ते परस्य तु ॥" इति । अबुद्धः पुनरुपदेशसहस्रैरपि तामसान्तःकरणत्वेन प्रतिबोधयितुमशक्य एव । यदुक्तम्—"ज्ञेयत्वमभ्युपगता हृदये न रोढुं शक्ताः प्रमूढमनसामुपदेशवाचः ।

**सुतीव्रभक्तिवैराग्यश्रद्धायोगमहित्वतः ।**
**योगिनीभिः सुतीव्रेण योगेन प्रतिबोधितः ॥२३॥**

---

आर्द्रत्वमादधति किं नलिनीदलानां श्लिष्टा निरन्तं तथापि नभोऽम्बुधारा ॥'' इति। एवं च प्रबुद्ध एवोपदेशभाजनम्। उपदेशश्चोपायानाम्। ते चतुर्विधा आगमेषूपदिष्टाः—भेदमयो भेदाभेदमयोऽभेदमयश्च। एतदुक्तम् ''वस्तुतो हि त्रिधैवेयं ज्ञानसत्ता विजृम्भते। भेदेन भेदाभेदेन तथैवाभेदभागिना ॥'' इति। तेषां नामान्युक्तानि तन्त्रालोके—''अभेदोपायमत्रोक्तं शाम्भवं शाक्तमुच्यते। भेदाभेदात्मकोपायं भेदोपायं तदाणवम् ॥'' इति। चतुर्थोपायस्तु एतत्त्रितयातिरिक्तः। तन्नामापि तत्रैवोक्तम्—''ततोऽपि परं ज्ञानमुपायादिविवर्जितम्। आनन्दशक्तिविश्रान्तमनुत्तरमिहोच्यते ॥'' इति। तथा चानुपायः, शाम्भवोपायः, शाक्तोपायः, आणवोपाय इत्युपायचतुष्टयमुक्तम्। तत्र सुप्रबुद्धस्यानुपायः। प्रबुद्धा अप्यवान्तरभेदेन त्रिविधाः। तेषां क्रमेण ज्ञानयोगकर्मरूपाः शाम्भवशाक्ताणवोपाया इति। एतदेव क्रमेण विवक्षुरादौ सुप्रबुद्धं निरूपयति—जन्मान्तरेति। अनेकजन्मसु सत्त्ववृत्ती रजस्तमोवृत्तिपरिहारेण अभ्यासान्निर्मलचित्त इति भावः। एवंविधः सुप्रबुद्ध इति शेषः ॥२२॥

भक्तिः प्रत्यगात्मनि परमेश्वरे निरतिशयानुरक्तिः। वैराग्यं विषयवैतृष्ण्यम्। श्रद्धा असंशयचित्तता। योगः समाहितचित्तता। सुतीव्रा भक्तिवैराग्यश्रद्धायोगाः। तेषां महित्वतः महिम्नः। भक्त्यादेस्तीव्रत्वमव्यभिचरितत्वम्। योगिनीभिर्ब्राह्म्यादिमातृकाशक्तिभिः। सुतीव्रेण योगेन सर्वसंदेहाद्रिकुलिशात्मकवक्ष्यमाणदृढयुक्तिरूपेण प्रतिबोधितः। ब्राह्म्यादिभिरुद्भावितदृढतरयुक्तिरूपविकल्पैः संजातप्रतिबोध इति भावः। अत्रेदं तत्त्वम्—वर्णाभिमानिन्यो ब्राह्म्याद्या योगिन्यः शिवस्य शक्तयः। ता एव राजसान् तामसांश्च प्रमातॄन् विकल्पविशेषोत्पादनेन बन्धयन्ति। सात्त्विकान् विकल्पविशेषेण मोचयन्ति। विकल्पो हि शब्दमयः, शब्दयोगमन्तरा विकल्पानुत्पत्तेः। यदुक्तम्—''न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते'' इति। शब्दश्च वर्णमय इति वर्णाधिष्ठातृयोगिनीभिः प्रेरिता एव शब्दमया विकल्पा उत्पद्यन्ते। ततश्च योगिनीभिः सद्विकल्पोत्पादनेन मोचिताः, असद्विकल्पोत्पादनेन पाशिताः प्रमातारो भवन्तीति। एतदभिप्रायेणैवोक्तं चण्डीस्तवे—''सा विद्या परमा मुक्तेर्हेतुभूता सनातनी। संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥'' इति। श्रीस्पन्देऽपि—''सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी। बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥'' इति ॥२३॥

**स्वरसोद्गतविज्ञानचन्द्रिकाविशदाशयः ।**
**अथवा सकृदादिष्टगुरुवाक्येन शङ्करि ॥२४॥**
**उदेति बोधतरणिरज्ञानतिमिरापहः ।**
**उपायमन्तरैवास्य सुप्रबुद्धस्य शङ्करि ॥२५॥**
**यथा तस्य भवेज्ज्ञानं तत्प्रकारं शृणु प्रिये ।**
**परमेशः प्रकाशात्मा सोऽहं तद्वत् प्रकाशतः ॥२६॥**

---

सुतीव्रभक्त्यादियोगाद्योगिनीभिर्बोधितत्वाद् गुर्वाद्यपेक्षाभावेन स्वरसेन स्वेनैवोद्गतमुद्भूतं विशिष्टं पूर्णं ज्ञानं पूर्णख्यातिरूपं तदेवाज्ञानतिमिरनाशकत्वाच्चन्द्रिकेव चन्द्रिका, तया विशदः स्वच्छः, चिदेकरूप आशयश्चित्तं यस्य । एवंविधः सुप्रबुद्धः कश्चन । नायं शास्त्रोपदेशादिविषयः । तदुक्तं तन्त्रालोके– "स्वयं तु येषां तत्तादृक् किं ब्रूमः किल तान् प्रति" इति । नेदं ज्ञानमनुपायजन्यम्, अनुपाय इत्यस्यानुदरी कन्येति वदल्पोपायत्वोक्तेः । नानुपाय इत्युपायाभावोक्तिः, असतः कारणत्वानुपपत्तेः । तदुक्तं तत्रैव—"सकृत् स्याद् देशना पश्चादनुपायत्वमुच्यते" इति । एतदेवाह—अथवेति । आ ईषद् दिष्टं कथितमुदेतीत्यन्वयः । सकृदिति स्वल्पस्याप्यसकृत्कथनमनल्परूपं व्यावर्तितम् ॥२४॥

बोधस्य तरणित्वोपपादनायाज्ञानतिमिरापह इति । सकृदादेशस्यानुपायत्वमेवाह—उपायमिति । उपायमन्तरैव वक्ष्यमाणशाम्भवाद्युपायं विनैव । उपायेनाल्पोपायरूपेणोक्तवाक्येन बोध उदेतीत्यन्वयः । अस्य सकृदादिष्टगुरुवाक्यश्रोतुः ॥२५॥

सकृदादिष्टगुरुवाक्येन यथा तस्य सुप्रबुद्धस्य ज्ञानं संभवति तत्प्रकारं शृणु । अत्र गुरुवाक्येनेत्युपलक्षणं सिद्धदर्शनादीनाम् । यदुक्तम्—"सिद्धानां योगिनीनां च दर्शनं चरुभोजनम् । कथनं संक्रमः शास्त्रे साधनं गुरुसेवनम् ॥ इत्यादैर्निरुपायस्य संक्षेपोऽयं वरानने ।" इति । योगिनीभिः प्रतिबोधित इत्यत्र सुतीव्रयोगो दर्शनोपदेशादिरूपो यद्युच्यते तदास्तु तस्याप्यनुप्रायत्वम् । अनुपायेन ज्ञानोदयप्रकारमेवाह—परमेश इति । परमेशः प्रकाशात्मेति सकृद्वाक्यश्रवणात् स यः प्रकाशैकरूपः परमात्मा श्रुतः सोऽहम् कुतः ? तद्वत् प्रकाशतः श्रुतपरमेशवत् प्रकाशमात्ररूपेण प्रकाशमानत्वात् । नीलमुखदेहादीनां दृश्यत्वेनाखिलप्रकाशको देहदेशकालापरिच्छिन्नः परप्रकाशैकमात्रवपुरहमेव परमेश इति भावः । देहादौ दृश्यत्वनिश्चयेन द्रष्टृत्वाभिमानापगममात्रेणैव परमेशत्वमात्मनो विदितं भवति । यदुक्तं वासिष्ठे—"एतावतैव देवेशः परमात्मावगम्यते । काष्ठलोष्ठसमत्वेन देहो यदवगम्यते ॥" इति ॥२६॥

अत्रोपायस्योपयोगो नैव जातु भविष्यति ।
उपायेन स्वरूपस्य लाभो मे न भविष्यति ॥२७॥
उपायपूर्वभावाद्धि नहि ज्ञेयमुपायतः ।
आदौ प्रकाशमानत्वादावृत्तेर्न निवारणम् ॥२८॥
तस्य स्वरूपबाह्यस्याप्रकाशत्वादसत्त्वतः ।
अनुप्रवेशोऽपि तस्मादतिरिक्तस्य वै भवेत् ॥२९॥

---

एवं स्थितेऽत्र परपुरुषार्थे परप्रकाशात्मकात्मरूपे कदाचिदपि नोपायस्योपयोगः । यदुक्तम्—"अपरोक्षे भवत्तत्त्वे सर्वतः समवस्थिते । यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते ॥" इति । सर्वाण्युपायफलानि विकल्प्य क्रमेणानुपयोगित्वमुपायानां निरूपयति—उपायेनेति । लाभः उत्पत्तिः प्राप्तिर्वा ॥२७॥

येनोपायेन लाभो भवितव्यस्तदुपायोत्पत्तेः पूर्वमेवोपेयस्य भावात् सिद्धत्वात् प्राप्तत्वाद्वा । ननूपायस्य कारकत्वाभावेऽपि ज्ञापकत्वमस्तु ततश्च तज्ज्ञानायोपायोऽभ्युपेय इत्याशङ्क्याह—नहि ज्ञेयमिति । अप्रकाशमानस्य प्रकाशनं ज्ञापनम्, अस्य तु उपायप्रकाशकत्वेनोपायादौ प्रकाशमानत्वात् । यदुक्तं तन्त्रालोके— 'येऽप्यसाक्षादुपायेन तद्रूपं प्रविविक्षते । नूनं ते सूर्यसंवित्त्यै खद्योताद्युत्सुका जनाः ॥" इति । ननु मास्तु स्वरूपे उपयोगप्रयोगः, स्वरूपावरकाविद्यादिनिवारणेऽस्त्युपयोग इत्याशङ्क्य निषेधति—आवृत्तेर्नेति ॥२८॥

तस्य आवरणस्य । ननु आवरणाभिमतं स्वरूपान्तर्गतमुत स्वरूपबाह्यम् ? आद्ये स्वरूपैक्यादावृतेरसंभवान्नोपायोपेयभाव इति स्पष्टमेवेति द्वितीये दूषणमाह—स्वरूपबाह्यस्येति । स्वरूपात् प्रकाशाद् बाह्यस्यात्यन्तभिन्नस्याप्रकाशत्वेनासत्त्वात् । असतो निवारणे क उपायोगः ? सत्त्वं हि प्रकाशमानत्वमेव, प्रकाशमानत्वव्यतिरेकेण सत्त्वानुपलब्धेः । प्रकाशात्मतामन्तरा न प्रकाशमानत्वं घटते । एतच्च— 'प्रागिवार्थोऽप्रकाशः स्यात् प्रकाशात्मतया विना'' इति प्रत्यभिज्ञासूत्रव्याख्याने श्रीमदभिनवगुप्तपादैर्विततत्य निरूपितं तत एव ज्ञेयमग्रेऽपि भविष्यति । तस्मात् परप्रकाशरूपातिरिक्तस्याभावाद् अनुप्रवेशोऽपि न । यस्मादनुप्रवेशः गङ्गायां स्वातिरिक्ताया यमुनाया दृष्ट इत्यतिरिक्तस्यैव भवतीति संभाव्यते ॥२९॥

नातिरिक्तः स्वरूपात्तूपायः संभवति क्वचित् ।
तस्मादशेषमेतद्वै स्वप्रकाशमयं भवेत् ॥३०॥
प्रकाशवपुषः शम्भोः स्वातन्त्र्याद् भासतेऽखिलम् ।
प्रकाशमात्रदेहोऽहं तस्मान्मयि चराचरे ॥३१॥
भासते सर्वदा सर्वमादर्शनगरादिवत् ।
विचिन्तयन् सतश्चैवं परमेशत्वमास्थितः ॥३२॥

---

तुरवधारणे। स्वरूपादतिरिक्त उपेय एव न क्वचिद् देशे काले वा संभवति। तस्मादुपायस्योपयोगो नेति महावाक्यार्थः। यस्मात् स्वरूपातिरिक्तं विचारितं सन्न किञ्चित् संभाव्यते तस्मात्। एतत् स्वरूपादतिरिक्तत्वेन भासमानमशेषं स्वप्रकाशस्वरूपमयमेव भवतीति संभाव्यते। यदुक्त तन्त्रालोके— 'किञ्चिद्यावदिद बाह्यमान्तरोपायसंमतम्। तत्प्रकाशात्मतामात्रं शिवस्यैव परं वपुः ॥'' इति। तथा— ''इदं द्वैतमय भेद इदमद्वैतमित्यपि। प्रकाशवपुरेवाय भासते परमेश्वरः ॥'' इति ॥३०॥

ननु यदि स्वप्रकाशसंविदात्मातिरिक्तं न किञ्चित्तर्हीदं जगत्कथं भिन्नं भासत इति शङ्कां शमयन्नाह—प्रकाशेति। स्वातन्त्र्यवतां संकल्पादौ स्वस्वरूपमेव विचित्रं भासते। परमेश्वरस्य सर्वस्वतन्त्रस्य जगदवभासने किमाश्चर्यमिति भावः। यस्मात् प्रकाशैकवपुषः शिवस्य स्वातन्त्र्यात् स्वरूपमेव स्वरूपे जगद्रूपेण भासते। यदुक्तम्— 'स्वात्मभित्तौ जगच्चित्र स्वेच्छातूलिकया लिखन्। स्वयमेव समालोक्य प्रीणाति भगवाञ्छिवः ॥'' इति। ततश्च प्रकाशमात्रदेहोऽहमेव तस्माच्चराचरं जगत् सर्वं सर्वदा मय्येव भासत इत्यन्वयः ॥३१॥

ननु कथ स्वस्मिन् स्वरूपमेवातिरिक्तत्वेन भासत इत्याशङ्क्य तत्र दृष्टान्तं दर्शयति—आदर्शनगरादिवदिति। यथा आदर्शे आदर्शस्वरूपमेव आदर्शाद् भिन्ननगरादिरूपेण भासते। यदुक्तं परमार्थसारे—''दर्पणबिम्बे यद्वन्नगरग्रामादि चित्रमविभागि। भाति विभागेनैव च परस्परं दर्पणादपि च ॥'' इति। तन्त्रालोकेऽपि— 'निर्मले मुकुरे यद्वद् भान्ति भूमिजलादयः। अमिश्रास्तद्वदेकस्मिश्चिन्नाथे विश्ववृत्तयः ॥' इति, 'विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्'' इत्यभियुक्तोक्तिश्च। न च दर्पणे भासमानमसदेवेति वाच्यम्, यतो बाधितत्वे सति भासमानत्वमेव सत्त्व नेदं नगरमिति बाधस्तु बिम्बात्मकबाह्यनगरविषयः, न प्रतिबिम्बनगरस्य। ननु

दर्पणे न किञ्चित्प्रतिबिम्बं वस्तु भासते, अपि तु आदर्शतलाभिहता नयनरश्मयः परावृत्ता बाह्यमुखादिकमवभासयन्ति। न च भित्तितलाभिहतनयनरश्मीनामपि मुखाद्यवभासकत्वं स्यादिति वाच्यम्, भित्तेरनिर्मलत्वेन नयनरश्म्यभिहननाक्षमत्वादिति चेदुच्यते—अभिघाते हि लोके काठिन्यमेव निमित्तं दृष्टं न नैर्मल्यम्; प्रतिबिम्बग्रहणं तु नानिर्मले दृष्टम्। स्फटिकादेर्निर्मलस्यैव जपाकुसुमाद्यन्यरूपग्रहणात्। अथ चादर्शस्य पार्श्वसन्निहितकरस्यान्तर्बहिर्विद्यमानकरद्वयस्य बिम्बप्रतिबिम्बभूतस्य युगपद् ग्रहणं नयनरश्मिभिः परावृत्तैरपि न भविष्यत्येव। अथ च परस्परसंमुखत्वेनावस्थापितयोर्दर्पणयोर्मध्ये विद्यमानमुखादेरेकैकत्र दर्पणे बहुसंख्यस्योपलब्धेरनुपपत्तेः। न च दर्पणाभिहतानां नयनरश्मीनां दर्पणशक्त्यैव द्वित्वबहुत्वादिग्रहणं युज्यत इति वाच्यम्, यतो दर्पणशक्त्या नयनरश्मिषु द्वित्वादिकल्पकत्वापेक्षया तच्छक्त्या दर्पणे एव तथा प्रतिबिम्बकल्पनौचित्यात्। ननु तथापि दर्पणदृष्टान्तेन चिदात्मनि जगत्प्रतिबिम्बनं वक्तुमयुक्तम्। यतः प्रतिबिम्बं बिम्बमपेक्ष्य प्रतिभासत इति बिम्बभूतजगतोऽवश्याभ्युपेयत्वे तेनैव व्यवहारोपपत्तौ प्रतिबिम्बकल्पनावैयर्थ्यादिति चेत्, सत्यम्। न वयं बिम्बभूतं जगद् बाह्यमभ्युपगच्छामः। किन्तु भासमानं जगत् प्रतिबिम्बरूपमेवेति वदामः। न च बिम्बमन्तरा प्रतिबिम्बं कथं सिद्ध्येदिति शङ्क्यम्, यतो दर्पणे प्रतिबिम्बितस्य मुखादेर्बाह्यं बिम्बभूतं मुखं नोपादानकारणम्, भिन्नदेशस्थत्वेन पृथगनुभूयमानत्वात्। तस्मान्निमित्तकारणत्वं वक्तव्यम्। निमित्तकारणं च नाव्यभिचरितमेकरूपं सर्वत्र, घटादिनिमित्तकारणस्य दण्डादेरभावेऽपि हस्तपरिभ्रामितचक्रादिना घटाद्युत्पत्तिदर्शनात्। अस्ति चात्रास्माकमपि भगवतः स्वातन्त्र्यरूपा विमर्शशक्तिः प्रतिबिम्बने हेतुः। यदुक्तम्—'अन्तर्विभाति सकलं जगदात्मनीह यद्वद्विचित्ररचना मुकुरान्तराले। बोधः पुनर्निजविमर्शनसारयुक्त्या विश्वं परामृशति नो मुकुरस्तथा तु॥" इति। ननु तथापि परिदृश्यमानं जगद्बिम्बरूपमेवास्तु, किं तत्र तत्र प्रतिबिम्बत्वकल्पनेनेति चेदत्र ब्रूमः—प्रतिबिम्बलक्षणयोगात् प्रतिबिम्बत्वम्, बिम्बलक्षणाभावादेव न बिम्बत्वमिति। बिम्बप्रतिबिम्बादेर्लक्षणमुक्तं तन्त्रालोके—"नैवं तल्लक्षणाभावाद्बिम्बं किल तदुच्यते। अन्यामिश्रं स्वतन्त्रं सद्भासमानं मुखं यथा॥ स्वरूपानपहानेन पररूपसदृक्षताम्। प्रतिबिम्बात्मतामाहुः खडगादर्शतलादिवत्॥ अन्यव्यामिश्रणायोगात् तद्भेदाशक्यभासनम्। प्रतिबिम्बमिति प्राहुर्दर्पणे वदनं यथा॥" इति। तल्लक्षणाभावादिति हेतुना भासमानजगतो नैवमिति बिम्बत्वनिषेधो ज्ञेयः। अन्यामिश्रं स्वतन्त्रं सद्यद्भासते तद् बिम्बम्। अत्रोदाहरणं मुखम्। स्वरूपानपहानेन पररूपसमानत्वं प्रतिबिम्बात्मत्वम्। अत्रोदाहरणं खड्गादर्शतलादि। अन्यामिश्रणेऽशक्यभासमानत्वे सति अन्यव्यामिश्रेण भासमानत्वं प्रतिबिम्बत्वम्। अत्रोदाहरणं दर्पणमुखादि। इत्युदाहरणार्थः। तथा च प्रकृते जगतः संविदात्मरूपाव्यामिश्रेण स्वातन्त्र्येणाभासनाद् बिम्बत्वाभावः। अन्यस्य संविदात्मनोऽमिश्रणेऽशक्यभास-

न तस्य कर्मयोगादावधिकारो विधीयते ।
त इमे त्यक्तपूजाद्या योगीन्द्राः शिवरूपिणः ॥३३॥
प्रबुद्धस्तु महेशानि जन्मान्तरशतार्जितैः ।
उपदेशपदं स्याद् वै गुरोः परशिवात्मनः ॥३४॥

---

नत्वे सति संविदात्मरूपान्यामिश्रेण भासमानत्वाच्च जगतः प्रतिबिम्बत्वम् । स्वरूपस्य संविदात्मत्वस्यानपहानेन जगद्रूपसमानत्वं संविदात्मनोऽस्तीति संविदात्मनः प्रतिबिम्बा-त्मत्वं चेति । एतदप्युक्तं तत्रैव—"बोधमिश्रमिदं बोधाद् भेदेनाशक्यभासनम् । पुर-तत्त्वादिबोधे किं प्रतिबिम्बं न भण्यते ॥" इति । ननु शब्दस्पर्शादिप्रतिबिम्बनं न क्वचिद् दृष्टम्, तत्कथं शब्दस्पर्शादिकमपि भासमानं प्रतिबिम्बरूपमिति चेदुच्यते—रत्नस्फटिकदर्पणादेरपि लोके प्रतिबिम्बग्राहिणो नात्यन्तनिर्मलत्वम्, किञ्चिदाकारे-णावभासमानत्वात् । अतो नाखिलप्रतिबिम्बग्रहणसमर्थत्वम् । संविदात्मा त्वत्यन्त-स्वच्छत्वेन सर्वं स्वात्मनि प्रतिबिम्बत्वेन गृह्णातीति । एतदपि तत्रैवोक्तम्—"अत्यन्त-स्वच्छता सा यत् स्वाकृत्यनवभासनम् । अतः स्वच्छतमो बोधो न रत्नं त्वाकृतिग्रहात् ॥" इति । लोकानां मोहशमनायैव भगवता प्रतिबिम्बग्राहिदर्पणाद्यवभासितमिति च तत्रै-वोक्तम्—"न देशो नो रूपं न च समययोगो न गरिमा न चान्योन्यासङ्गो न च तदप-हानिर्न घनता । न चावस्तुत्वं स्यान्न च किमपि सारं निजमिति ध्रुवं मोहः शाम्येदिति निरदिशद्दर्पणविधिम् ॥" इति । एवं चादर्शनगरादिवत् सर्वं भासत इति स्थितम् । एव-मादर्शनगरादिवत् सतः संविदनतिरिक्तत्वेन सद्रूपान् भावान् विचिन्तयन् परमेशत्व-मास्थितः प्राप्तो य इति शेषः । तस्येत्यग्रिमेणान्वयः ॥३२॥

तस्य प्रोक्तलक्षणस्य सुप्रबुद्धस्य । कर्मणि योगे च नाधिकारः । आदिना ज्ञानेऽपि । शास्त्रेण विधीयते । अतो न तेषामुपायोपयोगः, साक्षात् स्वरूपप्राप्तेः । तेषां स्वरूपावगमप्रकारस्तन्त्रालोके उक्तः—"नैषा शक्तिर्महादेवी न परत्राश्रितो यतः । न चैष शक्तिमान् देवो न कस्याप्याश्रयो यतः ॥ नैष ध्येयो ध्यात्रभावान्न ध्याता ध्येय-वर्जनात् । न पूज्यः पूजकाभावात् पूज्याभावान्न पूजकः ॥" तथा—"तेषामिदं समाभाति सर्वतो भावमण्डलम् ॥ पुरःस्थमेव संवित्तिभैरवाग्निविलापितम् ॥" इति । तथान्यत्र—'यथोषरायां पतिताः काष्ठपर्णोपलादयः । लवणत्वाय कल्पन्ते तथा भावाश्चिदात्मनि ॥" इति । कर्माद्यनधिकारोऽपि समस्तयन्त्रणातन्त्रत्रोटनाटङ्कधर्मिणो नानुग्रहात् परं किञ्चिच्छेष-वृत्तौ प्रयोजनमिति तन्त्रालोके उक्तः । त इम इति । पूजादिकं परित्यज्य सन्ति योगीन्द्र-नायकाः । तेषां का निष्ठेति यत्त्वया पृष्टम् । त इमे त्यक्तपूजाद्या योगीन्द्रा येषा निष्ठा एतावद्ग्रन्थेन प्रोक्ता । शिवरूपिण इति कर्मत्यजने निमित्तप्रदर्शकं विशेषणम् । यद् भगवतापि गीतम्—"नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन" इति ॥३३॥

एवं सुप्रबुद्धमनुपायेन तस्य ज्ञानोदयप्रकारं च निरूप्य प्रबुद्धं निरूपयति—प्रबुद्ध-

**सोऽपि त्रिधा महेशानि सत्त्वाधिक्यरजोमयः ।**
**समानसत्त्वसहितरजस्कः परमेश्वरि ॥३५॥**

---

स्त्विति । तुशब्देन सुप्रबुद्धाद् व्यवच्छेद उक्तः । तदेवाह—जन्मान्तरेति । शतार्जितैः कर्मभिरुपासनाभिर्वेति शेषः । उपदेशस्य ज्ञानोपदेशस्य पदं विषयः, उपदेशयोग्यः शिष्यो भवतीति यावत् । कस्य गुरोः । कथंविधस्येत्याशङ्क्याह—परशिवात्मन इति । परशिव आत्मा यस्य । प्रत्यभिज्ञातपरशिवात्मस्वभावस्येति भावः । ननु प्रत्यभिज्ञात-स्वरूपस्योपदेशनमप्यनुपपन्नमिति चेन्न, यतः स्वरूपप्रत्यभिज्ञावास्तारतम्येनोपदेशस्यापि संभवात् । यदनुपदमेवोदाहृतम्—"समस्तयन्त्रणातन्त्रत्रोटनाटङ्कधर्मिणः । नानुग्रहात् परं किञ्चिच्छेषवृत्तौ प्रयोजनम् ॥" इति । सुप्रबुद्धस्याप्यनुग्रहकरणम् । प्रत्यभिज्ञात-स्वरूपास्त्रिविधाः—मन्दा मध्यमा उत्तमाश्च । मन्दाः प्रत्यभिज्ञातात्मस्वभावा अपि प्रारब्धोपनतेषु विषयेषु सक्तास्तात्कालिककामक्रोधादिभिरभिभूयमानाः । ते चोक्ता-स्त्रिपुरारहस्ये—'प्रारब्धोपनतैर्भोगैः खिद्यमानाः क्षणे क्षणे । स्वरूपज्ञास्तु ये राम ते मन्दज्ञानिनः स्मृताः ॥' इति । मध्यास्तु सदा समाहिताः । समाध्यन्तरेषु गाढसुषुप्तौ मशकदंशनं मन्दमारुतमिव प्रारब्धोपनतमापाततोऽनुभूयमाना जीवन्मुक्ता इत्युच्यन्ते । तेऽपि तत्रैवोक्ताः—"ये तु प्रारब्धसंप्राप्तान् भुञ्जाना अपि नो विदुः । मधुक्षीबा रसमिव मध्यास्ते ज्ञानिनः स्मृताः ॥" इति । उत्तमास्तु प्रारब्धोपनतसुखदुःखसहस्रेणापि हर्षोद्वेगलेशरहिता असमाहिता बहिरन्तःसमाहिताश्च लोकयात्रामनुवर्तमानाः । तेऽपि तत्रैवोक्ताः—"ये तु प्रारब्धकोटीनां फलैरपि विचित्रितैः । न स्वस्थितेः प्रच्यवन्ते नोद्विजन्त्यापदां गणैः ॥ न विस्मयन्ति चाश्चर्यैर्न हृष्यन्ति महासुखैः । अन्तःशान्ता बहिर्लोकसमास्ते ज्ञानिषूत्तमाः ॥" इति । एवं च मध्यमस्यैवोपदेशनमनुपपन्नम् । मन्दोत्तमयोरस्त्युपदेशनावसरः । मन्दस्योपदेशनादिभिरुत्तमता संपद्यते । तदपि तत्रै-वोक्तम्—'ज्ञात्वा कथञ्चिदात्मानमन्यान् प्रति निरूपयेत् । निरूपयन् सदा राम समावेशं समाप्नुयात् ॥ एवं निरूपणाद्यैस्तु समावेशे दृढे सति । शिवतामाप्य तच्चित्तं हर्षोद्वेगविवर्जितम् ॥ यत्र यत्र व्रजति तत्सर्वं तच्छिवसात्कृतम् । करोत्युत्तमविज्ञानी जीवन्मुक्तपदस्थितः ॥" इति । अन्यत्रापि—"शिवभावनयौषध्या बद्धे मनसि संसृतेः । काष्ठकुड्यादिषु क्षिप्ते रसवच्छिवहेमता ॥" इति ॥३४॥

सोऽपि उपदेशपात्रभूतोऽपि । त्रैविध्यमेवाह—सत्त्वेति । सत्त्वमत्यन्ताधिकम् । स्वल्पं रजः । सत्त्वस्याधिक्यं यस्मिन् एवंविधरजःप्रचुरः । सत्त्वाद्याश्रयान्तःकरण-तादात्म्यात् प्रमातुस्तन्मयता । तमस्त्वनुद्भूतं ज्ञेयम् । समानेन सत्त्वेन सहितं रजो यस्य ॥३५॥

ईषत्तमोयुतश्चापि त्रिधैवं स्यात् प्रबुद्धकः ।
ज्ञानाधिकारो तत्राद्यो योगाधिकृतकोऽपरः ।।३६।।
कर्मण्यधिकृतो देवि तृतीयः परिकीर्तितः ।
कर्म तु प्राङ्निरुक्तं स्याद्दीक्षापूजाजपादिकम् ।।३७।।
उपयोगः कर्मणोऽपि चाज्ञानस्य निवर्तने ।
रज्ज्वज्ञाननिवृत्तौ तु समीपगमनं यथा ।।३८।।
आत्मनस्तु स्वरूपं वै दुर्लक्ष्यं विषयोन्मुखैः ।
वासना विषयाणां तु बहुजन्मशतैश्चिता ।।३९।।

---

समानसत्त्वरजस्क एवेषदुद्भूततमोयुतः । एवमुक्तप्रकारेण तत्र त्रिषु मध्ये आद्यः सत्त्वाधिक्यरजोमयः । अपरः समानसत्त्वसहितरजस्कः । अधिकृत एवाधिकृतकः ।।३६।।

तृतीयः । ईषत्तमोयुक्तो द्वितीयः । ज्ञानयोगकर्मणामेव शाम्भवशाक्ताणवसंज्ञा आगमप्रसिद्धा प्राङ्निरूपिता । तत्र प्रबुद्धेषु तृतीयस्य कर्मात्मकाणवोपायेऽधिकारः । आणवोपायलक्षणमुक्तमागमे—"उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः । यो भवेत् स समावेशः सम्यगाणव उच्यते ।।" इति । तन्त्रालोकेऽपि—"अणूनां तु स्फुटो भेदस्तदुपाय इहाणवः । विकल्पनियतात्मैव पर्यन्ते निर्विकल्पकः ।।" इति । प्राक् त्रयोविंशत्युल्लासैर्निरुक्तम् । आदिना पारायणन्यासादि ।।३७।।

ननु तच्चाज्ञानं स्वाविरुद्धैः कर्माद्यैर्न निवर्तत इति प्रागुक्तम् , तत्कथं प्रकृते कर्मण उपायत्वमुक्तमित्याशङ्क्याह—उपयोग इति । अस्तीति शेषः । चेत्युपासनायाः संग्रहः । अत्र दृष्टान्तमाह—रज्ज्विति । तुरप्यर्थे । रज्ज्वज्ञाननिवृत्तौ यद्यपि रज्जुज्ञानमेव मुख्यं कारणम्, तथापि समीपगमनादिकमन्तरा न रज्जुज्ञानमपि संभवतीति यथा समीपगमनं कर्मापि रज्जुज्ञानद्वारा तदज्ञाननिवृत्तावुपयुज्यते । समीपगमनादिकमित्यादिना प्रकाशसम्पादनादि ।।३८।।

एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिके तदुपयोगं विविच्य प्रदर्शयति—आत्मन इति । विषयोन्मुखैः विषयवासनावासितान्तःकरणैः । तुरिति अनात्मव्यवच्छेदः । वै निश्चयेन । दुर्लक्ष्यमित्यत्र न संशय इति भावः । ननु वासनैव परित्याज्या किं कर्मणेत्याशङ्क्य तस्या दुस्त्यजत्वमाह—वासनेति । विषयाणां स्रक्चन्दनादीनां सर्पव्याघ्रादीनां च संबन्धिनी वासना विषयजनितसुखदुःखाद्यनुभवैरनेकजन्मस्वभ्यस्तैः प्ररूढा काम-

**तस्याः प्रबलताहानिः कर्मणा भवतीश्वरि ।**
**तत्कर्म त्रिविधं देवि सार्थं व्यर्थमनर्थकम् ॥४०॥**
**वासनायाः कृशीभावो ह्यनर्थेनैव कर्मणा ।**
**अनर्थं द्विविधं देवि शैवं लौकिकमेव च ॥४१॥**
**शैवं शिवार्पितं लोकशिक्षार्थं लौकिकं भवेत् ।**
**शैवेन ज्ञानसिद्धिः स्यात् सिद्धं ज्ञानस्य लौकिकम् ॥४२॥**
**तस्मादनर्थं कुर्वीत विद्वान् विविदिषुस्तथा ।**
**अर्थप्राप्तिस्तु सार्थेन वासनारूढिरेव च ॥४३॥**

---

क्रोधादिनिदानभूता प्रियाप्रियत्वादिनिश्चयसंस्काररूपा वासनेति भावः । चिता आहिता । किञ्चित्कालाभ्यस्तस्यैव झटिति दुस्त्यजत्वेन बहुजन्मेत्यादिनात्यन्तदुष्पारहरत्वमुक्तम् ॥३९॥

ननु तत्र कर्मणापि किं स्यादित्याशङ्क्याह—तस्या इति । वासनायाः प्रबलता पारम्पर्येण वासनान्तरोत्पादकसामर्थ्यम् । ननु—"नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" इत्युक्तेः कर्म सर्वदा सर्वैः क्रियत एव, तत्कुतो न क्षीणा वासनेत्याशङ्क्य न सर्वं कर्म वासनाक्षयकरमिति कर्मविशेषस्यैव तथात्वं वक्तुं कर्म विभजति—तदिति । तत् सामान्यभूतं प्रसिद्धम् । अर्थेन शास्त्रोद्दिष्टफलेनानिष्टाननुबन्धीष्टरूपेण सहितं सार्थम् । वाञ्छितस्वर्गपुत्रादिफलप्रदं ज्योतिष्टोमादिरूपमिति भावः । व्यर्थं विरुद्धनरकादिरूपोऽर्थः फलं यस्य तन्मारणब्रह्महत्यादि । अनर्थकं नास्ति अर्थो वाञ्छितरूपो यस्य । फलमनभिसंधाय कृतं कर्मेति यावत् ॥४०॥

हि यस्मादनर्थेनैव कर्मणा वासनायाः कृशीभावोऽतस्तस्यैव ज्ञाने उपयोग इति शेषः । एवं भूतमनर्थमपि द्विविधम्, शैवलौकिकभेदात् ॥४१॥

तयोर्लक्षणमाह—शैवमिति । शिवार्पितम् आदौ शिवप्रीत्यर्थमिति संकल्प्यान्ते शिवः प्रीयतामिति विसृष्टम् । यदुक्तं त्रिपुरारहस्ये—"त्वत्प्रीतये च संक्लृप्तमन्ते त्वत्प्रीतयेऽर्पितम् । त्वद्रूपफलदं कर्म कर्मयोगं विदुर्बुधाः ॥" इति । लोकशिक्षार्थं कर्म भगवताऽप्युक्तम्—"लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि" इति, "न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इत्यादि । शैवं कर्म ज्ञानसाधकम् । ज्ञानिना लोकशिक्षार्थं क्रियमाणं लौकिकम् ॥४२॥

यतः शैवात्मकेनानर्थकर्मणा ज्ञानसिद्धिर्लौकिकात्मना लोकशिक्षणं च, तस्माद्विद्वान् विविदिषुर्जिज्ञासुश्च तथा शास्त्रोक्तरीत्याऽनर्थं कर्म कुर्वीत । एवं च न कर्म-

**व्यर्थेन नाश एव स्यात् सर्वथा परमेश्वरि ।**
**अधिकारो भवेत् तस्मादनर्थेनैव कर्मणा ॥४४॥**
**अनर्थकर्मणा चित्ते रजोभागोऽभिभूयते ।**
**तेनार्थग्रहणे योग्यं चित्तं वै जायते शिवे ॥४५॥**
**तत आचार्योपदिष्टं चित्तभूमिं प्ररोहति ।**
**सम्यक्प्ररूढैर्विज्ञाने कर्मसंन्यासमर्हति ॥४६॥**

---

सामान्यस्य ज्ञानोपयोगित्वमपि तु प्रोक्तस्यैवेति । ननु सार्थव्यर्थाभ्यां कर्मभ्यामपि ज्ञानं कुतो नोपयुज्यत इत्याशङ्क्य तयोः फलं निरूपयति—अर्थ इति । सार्थेन कर्मणा संकल्पितार्थप्राप्तिः । तथा च तदर्थोपभोगेनेच्छाद्युद्भावकवासनाया रूढिर्दृढतैव भवति न कृशीभाव इति भावः ॥४३॥

नाशः कथञ्चित् प्राप्तान्मोक्षसौधचरमसोपानभूतान्नरदेहात् सर्वाधोभूमिकारूपतिर्यक्स्थावरादिजन्मप्राप्तिः । एवकारेण फलान्तरव्यवच्छेदः । सर्वथा न कथञ्चिन्नाशाभाव इति भावः । यतः सार्थव्यर्थयोर्ज्ञाने नोपयोगः, तस्मादनर्थेनैव कर्मणा साधकस्य ज्ञानेऽधिकारो भवेत् ॥४४॥

ननु किं तत्कर्म ज्ञाने दृष्टद्वाराऽदृष्टद्वारा वोपयुज्यत इत्याशङ्क्य दृष्टद्वारैवेत्याह—अनर्थेति । रजोभाग इति तमोभागस्याप्युपलक्षकम्, ईषत्तमोयुतस्यैव कर्माधिकारस्योक्तत्वात् । चित्ते सत्त्वांशः प्रकाशः । रजोंऽशः प्रवृत्तिरूपं चाञ्चल्यम् । तमोंऽशो मूढत्वरूपं जाड्यम् । यथा हि चलन्मलिनदर्पणादिः प्रतिबिम्बग्रहणासमर्थः, एवं रजस्तमोंऽशाभ्यां चित्तं गुरूपदिष्टार्थग्रहणासमर्थम् । अनर्थकर्मणा यो रजस्तमोंऽशाभिभवः, तेन गुरूपदिष्टार्थग्रहणे योग्यं चित्तं निश्चयेन जायते । अनर्थकर्मणा रजस्तमोंऽशाभिभवोऽदृष्टद्वारेणैव ज्ञेयः । एतेन मोक्षेऽज्ञाननिवृत्तौ ज्ञानोत्पत्तौ वा कर्मणः पारम्पर्येणैवोपयोग उक्तो वेदितव्यः । अत एव तन्त्रालोके उक्तम्—"द्वावप्येतौ समावेशौ निर्विकल्पार्णवं प्रति । प्रयात एव तद्रूढिं विना नैव हि किञ्चन ॥" इति । द्वौ शाक्ताणवोपायौ । निर्विकल्पार्णवं ज्ञानसमुद्रम् । तद्रूढिं ज्ञानरूढिम् । इति तदर्थः ॥४५॥

ततः अर्थग्रहणयोग्यत्वात् । आचार्येति शास्त्राद्युपलक्षणम् । प्ररोहति प्रकर्षेण संशयविपर्ययाभ्यां निष्प्रकम्पतया रोहति रूढिं स्थितिं प्राप्नोति । एवं प्ररूढं ज्ञानं यदा सम्यगभ्यासविशेषेण—"स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिः" इति योगसूत्रोक्तरीत्या प्रकर्षेण—"देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् । आत्मन्येव भवेद्यस्य

**अप्ररूढे तु विज्ञाने योगेनारोहयेद् बुधः ।**
**तद्विज्ञानं प्रवक्ष्यामि शृणु देवि समाहिता ॥४७॥**
**ज्ञेयं ज्ञानेन विज्ञाय परमं पदमृच्छति ।**
**ज्ञेयमादौ प्रवक्ष्यामि शृणुष्वावहिता प्रिये ॥४८॥**

---

स नेच्छन्नपि मुच्यते ॥" इति रीत्या सर्वथा निष्प्रकम्पत्वेन प्ररोहं स्थितिं प्राप्नोति तदा कर्मसंन्यासमर्हति । कर्मणः शास्त्रविहितस्य सम्यक् सर्वथा संन्यासाश्रमविहितस्यापि न्यासं त्यागमकरणमर्हति । विधिनिषेधनियन्त्रणं जहातीति तात्पर्यम् । समस्तयन्त्रणातन्त्रत्रोटनाटङ्कधर्मिण इति यत् प्रागुदाहृतम् । यद् भगवतापि गीतम्—"नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन" इति, "हत्वापि स इमान् लोकान्न हन्ति न निबध्यते" इति च ॥४६॥

एवं कर्मणा तमोंऽशपरिहारेण निर्मलं चित्तं प्रमेयं गृह्णाति । गृहीतेऽपि रजोंऽशेन तज्ज्ञानं यदा प्ररूढिं न प्राप्नोति तदा वक्ष्यमाणेन योगेन तज्ज्ञानं चित्तमारोहयेत् । नन्वेवंविधं विज्ञानं कीदृशं यस्यैवंविधानावधिसाधनैः शास्त्रेषु साध्यतोपदिश्यत इत्याशङ्क्य विज्ञानमेव निरूपयितुपक्रमते—तद्विज्ञानमिति । यद्यपि क्रमप्रसङ्गाभ्यां प्राप्तो योग एव निरूपयितुं युक्तः, तथापि क्वचिद्योगे विज्ञानस्य परोक्षरूपस्याप्युपयुक्तत्वेनैतन्निरूपणसङ्गतिः । तद् यच्छास्त्रेषु बहुसाधनैर्मुख्यसाध्यत्वेनोपदिष्टम् । तस्यातिसूक्ष्मत्वादाह—समाहितेति ॥४७॥

विज्ञानं च ज्ञानविशेषः । तच्चान्तःकरणवृत्तिरूपं तत्संकुचितसंविद्रूपं वा । द्विविधस्यापि ज्ञेयमन्तरा न स्वरूपं सिद्ध्यतीति ज्ञेयं निरूपयितुमाह—ज्ञेयमिति । ज्ञेयस्य परप्रकाशरूपपरमात्मनः सर्वात्मभूतस्य सर्वप्रत्ययवेद्यत्वेऽपि स्वात्मत्वेनाप्रत्यभिज्ञातत्वादाह-विज्ञायेति । विशेषतः स्वात्मरूपत्वेन ज्ञात्वेत्यर्थः । ज्ञानेन वक्ष्यमाणभक्तिश्रद्धादिसाधनेन । परममुत्कृष्टं पदं स्थानं स्वात्मरूपम् । ननु ज्ञेयत्वं संविदात्मनः स्वप्रकाशस्य निषिद्धम्, "दृक्स्वाभासैव नान्येन वेद्या" इत्यादिना शास्त्रेषु, तत्कथं ज्ञेयं विज्ञायेति चेन्न, वृत्तिव्याप्तेराचार्यैरिष्टत्वात् । यदुक्तम्—"स्वप्रकाशोऽपि साक्ष्येष धीवृत्त्या व्याप्यतेऽन्यवत् । फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ॥ बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ॥ ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता । स्वयं स्फुरणरूपत्वान्नाभास उपयुज्यते ॥" इति । संकुचितसंविद्रूपत्वेऽपि विज्ञानस्य शास्त्रजनितस्य मोहापसारकत्वान्मोहापसरणेनाज्ञात इव स्थितो ज्ञात इव भवतीति गौणज्ञेयत्वस्यानिषिद्धत्वात् । अत एव—

अनादिनित्यसच्चैकं समं कूटस्थमक्षरम् ।
जाग्रत्स्वप्नसुषुप्तं च त्रयं यत्र स्थितं भवेत् ।।४६।।

---

'किन्तु मोहवशादस्मिन् दृष्टेऽप्यनुपलक्षिते । शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते ।।" इति । "अप्रवर्तितपूर्वोऽत्र केवलं मूढतावशात् । शक्तिप्रकाशेनेशादिव्यवहारः प्रवर्त्यते ।।" इति च प्रत्यभिज्ञायामुक्तम् । वक्ष्यमाणार्थस्यातिसूक्ष्मत्वान्मुख्यप्रमेयत्वाच्च शिष्यमभिमुखीकर्तुं प्रतिजानाति--ज्ञेयमिति । आदौ प्रतिज्ञातविज्ञाननिरूपणादौ । विज्ञानादपि सूक्ष्मत्वादस्य विज्ञानश्रवणे समाहिता भवेत्युक्त्याऽत्राऽसमाहितत्वं कदाचित् स्यादिति तन्निरसनाय पुनरत्रावहितेति ।।४८।।

ज्ञेयस्वरूपमेवाह--अनादीत्यादि । अनादीत्यादिविशेषणषट्केन षड्भावविकारनिरासो ज्ञेयः । न आदिरुत्पत्तिर्यस्येति जननाभावः । नित्यसदिति अस्तीतिकालादिपरिच्छिन्नसत्ताभावः । एकमित्यखण्डरूपत्वेनावयवित्वाभावाद् वृद्ध्यभावः । सममिति सदैकरूपत्वाद्विपरिणामाभावः । कूटस्थमिति लोहकूटवन्निष्प्रकम्पस्थितिमत्त्वादपक्षयाभावः । अक्षरमिति क्षरणराहित्यान्नाशाभावः । नन्वेवंविधं न किञ्चिदुपलब्धं लोके इति शून्यमेव स्यादित्याशङ्क्य सकलजगदधिष्ठानत्वाच्छून्यत्वं न घटत इति निरूपयति--जाग्रदिति । "ज्ञानं जाग्रत् । स्वप्नो विकल्पाः । अविवेको मायासौषुप्तम् ।" इति शिवसूत्रोक्तनीत्या बाह्येन्द्रियजन्यज्ञानमनोमात्रव्यापाररूपविकल्पमोहमयाविवेकरूपप्रमातृदशा जाग्रदाद्याः । एतज्जाग्रदादित्रयं यत्र स्थितं सद् भवेत् सत्तां प्राप्नुयात्, तत्सन्मात्रं ज्ञेयमुच्यत इत्यन्वयः । यदुक्तं स्पन्दे--"जाग्रदादिविभेदेऽपि तदभिन्ने प्रसर्पति । निवर्तते निजान्नैव स्वरूपादुपलब्धृतः ।।" इति । ।।४६।।

येनैकरूपेणानुवेधादधिष्ठितत्वाद् नेत्रादीन्द्रियाणां गणः समुदायः स्वयमिति स्वातन्त्र्येण स्वेषु स्वकीयेषु गुणेषु रूपादिषु चरति प्रवर्तते तज्ज्ञेयमुच्यते । एतदप्युक्तं स्पन्दे--"यतः करणवर्गोऽयं विमूढो मूढवत् स्वयम् । सहान्तरेण चक्रेण प्रवृत्तिस्थितिसंहृतीः ।। लभते तत्प्रयत्नेन परीक्ष्यं तत्त्वमादरात् ।" इति । तथा--यत्र यस्मिन् दर्पणतुल्ये प्रतिबिम्बाश्रये सर्वं दृश्यं प्रकाशते, तज्ज्ञेयं परशिवतत्त्वमुच्यते । अयमाशयः--बाह्येन्द्रियज्ञानादिरूपा जाग्रदाद्यवस्थाः स्वरूपेणापह्नोतुमशक्याः सर्वानुभवसिद्धाः सन्ति । नहि ता एकमवस्थातारमन्तरा स्वस्वरूपे एवात्यन्तविभिन्नाः सन्ति, जाग्रति स्वप्नादिस्मरणानुपपत्तेः, स्मरणानुभवयोः सामानाधिकरण्यनियमात् । तस्माज्जाग्रदादिदशानुभविता विभिन्नासु दशास्वभिन्नः सिद्धो भवति । प्रवृत्तेरिच्छापूर्वकत्वेन चेतनधर्मत्वादिन्द्रियाणां वेद्यत्वेन जडत्वस्य साधितत्वात् स्वतः प्रवृत्त्यनुपपत्त्या प्रक्षिप्तलोष्ठादिप्रवर्तकवदिन्द्रियप्रवर्तकोऽप्यन्यः सिद्धो भवति । सर्वस्य जगतोऽपि दृश्यत्वेन जडत्वात् स्वप्रकाशत्वासंभवेन तत्प्रकाशकोऽन्यः सिद्धो भवति । नह्यन्येन प्रकाशेन प्रकाशमानाश्च

**एकरूपेणानुवेधाद् येनेन्द्रियगणः स्वयम् ।**
**गुणेषु स्वेषु चरति यत्र सर्वं प्रकाशते ॥५०॥**

प्रकाशकात् पृथक् स्वात्मनि प्रकाशन्ते । यतो दर्पणे नगरवत् पृथक्सत्तामलभमाना एव प्रकाशन्तेऽन्यपदार्थान्तर्गताः, अन्यथा प्रकाशबहिर्भूतानां प्रकाशानुपपत्तेः ।

ननु प्रकाशरूपज्ञानसम्बन्धात् प्रकाशन्ते पदार्थाः ? न । यः प्रकाशपदार्थयोः सम्बन्धः स किं प्रकाशरूपो वा तद्भिन्नः ? आद्ये ज्ञानप्रकाशाद् व्यतिरेके सम्बन्धान्तरापेक्षायामनवस्था । तत्सम्बन्धादेव पदार्थप्रकाशसिद्धौ ज्ञानवैयर्थ्यं च । अव्यतिरेके सम्बन्धत्वानुपपत्तिः । द्वितीये सम्बन्धस्य प्रकाशे ज्ञानसम्बन्धापेक्षायामनवस्थेति । न चेन्द्रियविषयसंयोगाज्ज्ञानमात्मनि जन्यते, तच्च विषयतया पदार्थनिष्ठमिति प्रकाश उपपन्न इति वाच्यम्; उक्तदोषग्रस्तत्वात् । किञ्च, सा विषयता घटादेः शुक्लरूपादिवत् स्वतन्त्रा, द्वित्वादिवज्ज्ञानकृता वा ? आद्ये ज्ञानोत्पत्तेः पूर्वं विषयप्रकाशापत्तिः । द्वितीये विषयताकारणत्वेन पूर्वक्षणे स्थितस्य ज्ञानस्य निरालम्बनत्वापत्तिः । अपि च, सा विषयता न केनापि प्रमाणेन साधयितुं शक्या । प्रमाणभूतज्ञानानां विषयतासिद्धेः पूर्वं प्रमेयासम्बन्धादिति । एतेन प्रकटताबुद्धिप्रतिबिम्बाद्यखिलपक्षः प्रतिक्षिप्तो ज्ञेयः । अत्र नये त्वेवं स्थितिः—नीलं सुखमित्यादि ज्ञानं स्वप्रकाशसिद्धं सर्वैः सर्वथाऽनपह्नवनीयम् । तदपह्नवे न प्रश्नो नाप्युत्तरम् । यद् वक्ष्यति—"तद्वते नहि किञ्चन" इति । तच्च ज्ञानं नीलं सुखमित्यादिकिञ्चिद्रूपेण भासते । तच्च नीलादिरूपं ज्ञानान्न बाह्यम् । तथात्वे ज्ञानस्य ज्ञानमात्ररूपत्वेन स्वरूपे विशेषाभावान्नीलपीतादिज्ञानानां साङ्कर्यप्रसक्तिः । यदुक्तं प्रत्यभिज्ञायाम्—"भिन्ने प्रकाशे चाभिन्ने संकरो विषयस्य तत्" इति । न च नीलादिजनितत्वं ज्ञाने विशेष इति वाच्यम्, नीलपीतज्ञानभेदसिद्धेः पूर्वं नीलपीतभेदासिद्धेरन्योन्याश्रयापत्तेः । अपि च, नीलजनितत्वादिकं ज्ञानशरीरविश्रान्तमुत बाह्यम् ? बाह्यत्वे ह्यकिञ्चित्करत्वम् । ज्ञानशरीरान्तर्गतत्वे ज्ञानभिन्नस्य विषयस्य ज्ञानान्तर्गतत्वं सिद्धम् । सिद्धे च ज्ञानभिन्नस्य ज्ञानान्तर्गतत्वे तच्चान्तर्गतत्वं प्रतिबिम्बविधयैव वाच्यम्, अन्यथा वक्तुमशक्यत्वात् । तथा च लाघवात् सर्वमेव जगज्ज्ञानान्तर्गतमेव वक्तुं योग्यं प्रतिबिम्बलक्षणयुक्तत्वात् प्रतिबिम्बविधया । एतच्च प्राग्वितत्य विवेचितम् ।

ननु प्रतिबिम्बसमर्पकं तत्समानाकारं ज्ञानाद् बहिरवश्यं वस्तु स्वीकर्तव्यम्, अन्यथा प्रतिबिम्बनायोगात् । तच्च प्रत्यक्षं वा नित्यानुमेयं वाऽस्त्विति चेन्न किञ्चिदेतत् । यतः प्रतिबिम्बितैरेव सर्वव्यवहारसिद्धौ बहिस्तत्कल्पनावैयर्थ्यात् । एतदुक्तं प्रत्यभिज्ञायाम्—"स्यादेतदवभासेषु तेष्वेवावसिते सति । व्यवहारे किमन्येन बाह्येनानुपपत्तिना ॥" इति । प्रतिबिम्बने निमित्तं भगवतः स्वातन्त्र्यमिति च प्रागसकृदुक्तम् । ननु ज्ञानात्मनो भगवत ऐक्ये तत्र सर्ववस्तुनः प्रतिबिम्बत्वेनावभासे सर्वं सर्वदा

**न सुखं नापि दुःखं वा न ग्राह्यो ग्राहकोऽपि वा ।**
**न ज्ञानं ज्ञेयमपि वा सन्मात्रं तदिहोच्यते ॥५१॥**
**यस्मात् सर्वमिदं चेत्थं नाभाति च विभाति च ।**
**तदेव तत्परं तत्त्वं तद्दते नहि किञ्चन ॥५२॥**

---

भासेतेति चेत्सत्यम्, भासत एव सर्वं भगवतः । तर्हि ममेदमिदानीं भातीदं नेति कथम् ? उच्यते—भगवान् परिपूर्णस्वातन्त्र्यशक्तिरपरिच्छिन्नप्रकाशैकरूपः स्वस्वातन्त्र्यात् स्वमात्मानं परिच्छिन्नमाभासयति । तत्परिच्छेदावभासनमेव भगवतोऽपोहनशक्तिः । तत्र परिच्छिन्नप्रकाशरूपाः प्रमातारः । तेऽपि परिच्छेदस्याभासनमात्ररूपत्वाद्वस्तुतः पूर्णरूपा एव । तेषां पूर्णं स्वातन्त्र्यमपि परिच्छिन्नत्वेनाभासितं भगवतो नियतिशक्त्या नियमितम् । तथा च भगवतो नियतिशक्तिनियमताद्देहादिमयः सन् दर्पणनगरवद् भगवति प्रतिबिम्बितम् । ततो व्यतिरेचितः प्रमाता करणादिपारतन्त्र्येण तन्नियतिशक्तिनियमनात् किञ्चिदेव कदाचिदेव कुत्रचिदेव केनचिदेव कथञ्चिदेव पश्यति । पूर्णप्रमाता तु सर्वं सर्वदा प्रकाशैकरूपं पश्यतीति । तस्मात् सर्वं भगवति परप्रकाशे दर्पणे नगरवच्छक्तिरूपेण सत् प्रतिभासत इति । अत एवोक्तम्—"शक्तिश्च शक्तिमांश्चेति पदार्थद्वयमुच्यते । शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः ॥" इति । प्रत्यभिज्ञायामपि—"इत्थमत्यर्थभिन्नार्थावभासखचिते विभौ । समलो विमलो वापि व्यवहारोऽनुभूयते ॥" इति । वासिष्ठेऽपि—"यथा भावस्य भावत्वं यथा शून्यस्य शून्यता । आकारिणो यथाकारस्तथा चिन्नभसो जगत् ॥" इति । तथा—"अनुत्कीर्णा यथा स्तम्भे संस्थिता सालभञ्जिका । तथा विश्वं स्थितं तत्र तेन शून्यं न तत्पदम् ॥" इति ॥५०॥

नन्वेवंविधं किं तज्ज्ञेयमिति चेदाह—न सुखमित्यादि । सुखमनुकूलसंवेदनीया चित्तवृत्तिः । दुःखं प्रतिकूलसंवेदनीया सा ( चित्तवृत्तिः ) । ग्राह्यो नीलादिः । ग्राहकश्चक्षुरादिः । ज्ञानं नीलसुखादिविषयम् । ज्ञेयमान्तरं हर्षविषादादि । एवं सर्वस्यापि निषेधे अन्ते सुखादिज्ञेयान्तनिषेधावधित्वेन यच्छिष्यते तदेव सन्मात्ररूपं ज्ञेयमिहोच्यते । यदुक्तं वासिष्ठे—'ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् । अनाख्यमनभिव्यक्तं यत्किञ्चिदवशिष्यते ॥" इति । तथा—"नेति नेतीति नेतीति शेषितं यत्परं पदम् । निराकर्तुमशक्यत्वात् सोऽस्मि सोऽस्मीति भावय ॥" इति । स्पन्देऽपि—"न दुःखं न सुखं यत्र न ग्राह्यो ग्राहको न च । न चास्ति मूढभावोऽपि तदस्ति परमार्थतः ॥" इति ॥५१॥

ननु सुखादिसर्वनिषेधे सन्मात्ररूपं न किमपि सिद्ध्यतीत्याशङ्क्याह—यस्मादिति । सर्वमिदं सुखादि ज्ञेयान्तम् इत्थं सुखादिरूपेण । विभाति भासते । न आभाति

इति ज्ञेयं समासोक्तमधुना ज्ञानमुच्यते ।
भक्तिः श्रद्धा च वैराग्यमिन्द्रियार्थेष्वदम्भिता ॥५३॥
एकान्तसेवा शौचं चाप्यसन्देहोऽनहङ्कृतिः ।
यतवाङ्नियताहारो नित्यं शास्त्रार्थचिन्तनम् ॥५४॥
दया सत्यं क्षमा तुष्टिर्देहाक्षादिष्वचापलम् ।
इति ज्ञानं तु संक्षिप्तं विज्ञानमधुना शृणु ॥५५॥

---

न भासते च । भावाभावौ यद्वशाद्भासेते इति यावत् । तदेव तत्परं तत्त्वं प्रकृते ज्ञेयत्वेनोद्दिष्टम् । तदृते नहि किञ्चन भासेतेति शेषः । यदनभ्युपगमे भावो वा अभावो वा न किञ्चिद्भासेतेति भावः । यदुक्तम्—"भावाभावतया ज्ञानं बहिरन्तः प्रकाशते । ज्ञानादृते नार्थसत्ता ज्ञानरूपं ततो जगत् ॥" इति । त्रिपुरारहस्येऽपि—"समुद्रमन्तरा भङ्गा दिवावार्थं विना प्रभाः । यथा न सन्ति तद्वद् वै संविद्रूपं विना जगत् ॥" इति ॥५२॥

ज्ञेयनिरूपणमुपसंहरति—इतीति । समासेन संक्षेपेणोक्तम् । ज्ञायते ज्ञेयमनेनेति ज्ञानसाधनं ज्ञानम् । अधुना ज्ञेयं ज्ञानेन विज्ञायेत्युद्देशक्रमेण ज्ञेयनिरूपणानन्तरम् । तदेवाह—भक्तिरित्यादि । भक्तिः प्रोक्तज्ञेयवस्तुनि परानुरक्तिः । श्रद्धा शास्त्रादिबोधितार्थेऽविपर्ययचित्तता । इन्द्रियार्थेषु दृष्टश्रुतविषयेषु वैराग्यमप्रीतिः । अदम्भिता दम्भः कैतवम्, एवमाचरणेन जनैः पूज्यो भवामीत्यनुसन्धिः, तद्रहितता ॥५३॥

एकान्तस्य जनसंघवर्जितदेशस्य सेवा संश्रयणम् । शौचं कायवाङ्मनसां शुचित्वम् । तदुक्तम्—"मृज्जलाद्यैः कायशुद्धिः स्वाध्यायेन च सत्यतः । वाकशुद्धिर्वासनात्यागान्मनःशुद्धिः समीरिता ॥" इति । असन्देहः शास्त्राद्युक्तार्थे विकल्पराहित्यम् । अनहङ्कृतिः अहमुत्कृष्ट इत्यादिचित्तसमुन्नत्यभावः । यतवागिति मितभाषणरूपो वाङ्नियमः । नियताहारः पवित्रहितमितभक्षणम् । नित्यं सदा शास्त्रार्थस्य चिन्तनं मननम् ॥५४॥

दयाऽनुकम्पा प्राणिदुःखप्रेक्षणासहनसत्यं यथार्थहितवचनम् । क्षमाक्रोधनिमित्तप्राप्तावक्षुब्धचित्तता । तुष्टिः संतोषः, अपेक्षाराहित्यम् । देहो हस्तपादादि । अक्षादि बाह्येन्द्रियमन्तःकरणं च । एतेषामचापलं व्यर्थप्रवृत्तिराहित्यम् । चद्वयेनापिना च अहिंसाऽद्रोहऋजुत्वादिसंग्रहः । इति भक्त्यादिषोडशकम् । ज्ञानं ज्ञानसाधनम् । तुरप्यर्थे । ज्ञानमपीत्यर्थः । संक्षिप्तं संक्षिप्य निरूपितम् । एवंविधसाधनात्मकज्ञानेन यत्साध्यं विज्ञानं तन्निरूपयितुमाह—विज्ञानमिति । अधुना उद्देशक्रमेण ज्ञाननिरूपणान्ते ॥५५॥

**स्वात्मानं गुरुतः शास्त्राद् देहादिव्यतिरेचितम् ।**
**विज्ञायादौ शिवात्मानं साधर्म्येण विशेषतः ॥५६॥**
**ततः स्वयं विजानीयात् प्रमाणैरुपपादयन् ।**
**तदेतत् तेऽभिधास्यामि विज्ञानक्रममीश्वरि ॥५७॥**
**यद्यत्रानेकरूपेण भाति तत्तत्र कल्पितम् ।**
**अनेकेष्वेकरूपेण भाति यत्तदकल्पितम् ॥५८॥**
**बालाद्यनेकरूपस्तु देहो ज्ञाने प्रकाशते ।**
**तज्ज्ञानमेकरूपं वै विषयोपाधिवर्जितम् ॥५९॥**

---

तदेवोपपादयति—स्वात्मानमिति । गुरुतः गुरोः सकाशात् । शास्त्राच्छ्रुतात् । देहादीत्यादिनेन्द्रियादिशून्यान्तं वक्ष्यमाणम् । तस्माद् व्यतिरेचितं पृथक्कृतं स्वात्मानमादौ विज्ञाय तं च प्रोक्तज्ञेयात्मकशिवस्य साधर्म्येण समानधर्मवत्त्वेन शिवात्मानं शिवरूपं चादौ विशेषतो विज्ञाय परोक्षतो ज्ञात्वा ततः स्वयं विजानीयादित्यन्वयः ॥५६॥

ततः एवं गुरुशास्त्रोक्त्या परोक्षज्ञानानन्तरम् । प्रमाणैर्वक्ष्यमाणयुक्तिभिः । उपपादयन् उपपत्तिं प्रापयन् विमृशन् स्वयं स्वात्मानं देहादिव्यतिरेचितं शिवात्मानं प्रोक्तज्ञेयात्मकशिवरूपं विजानीयात् विशेषेणापरोक्षेण जानीयात् । तदेतत् एवमुद्दिष्टं विज्ञानस्य क्रमं युक्तिपूर्वमुपपादनम् ॥५७॥

तत्रादौ सामान्यतो व्याप्तिमुपदिशति—यद्यत्रेति । यद् घटशरावादिकं गजतुरगादिकं तरङ्गकल्लोलावर्तबुद्बुदादिकम् । यत्र मृदि दर्पणे जलधौ । अनेकरूपेण परस्परव्यावृत्तविचित्ररूपेण भाति प्रकाशते । तद् घटगजतरङ्गादिकम् । तत्र मृद्दर्पणजलधिषु कल्पितम्, आरोपितं रज्जुभुजङ्गवत् । तत्सत्तातिरिक्तसत्तारहितमिति यावत् । अनेकेषु घटगजतुरङ्गादिव्यावृत्तरूपेण यद् भाति तत् मृदादिकमकल्पितम् अनारोपितम् ॥५८॥

एवं सामान्यव्याप्तिमुक्त्वा देहादिभ्य आत्मविवेचनायेमामेव व्याप्तिं प्रकृते योजयति—बाल्यादीति । बाल्यादीत्यादिना तारुण्यादि । ज्ञाने अहं जानामीत्यादिज्ञाने । देह एकस्मिन् ज्ञानात्मनि बाल्याद्यनेकरूपेण परस्परं व्यावृत्तोऽनेको विचित्र एव भासते । न च सोऽयं देह इत्यनुसंधानाद् बाल्याद्यवस्थाभिन्ने (? भेदेऽपि) देह एक एवेति वाच्यम्, सोऽयं दीपः, सेयं नदीत्यादिवत्तदनुसन्धानस्य भ्रान्तत्वात्, देहावयवोपचयापचययोः प्रत्यक्षदृष्टत्वात् । ननु तज्ज्ञानमपि भिन्नं बालोऽहं जानामि स्थविरोऽहं

देहोऽनेकः कल्पितः स्याज्ज्ञानं त्वेकमकल्पितम् ।
क्षुधातर्षादिसंयुक्तः प्राणोऽज्ञाने प्रकाशते ॥६०॥
तज्ज्ञानमेकरूपं वै विषयोपाधिवर्जितम् ।
प्राणोऽनेकः कल्पितः स्याज्ज्ञानं त्वेकमकल्पितम् ॥६१॥
अप्रवृत्त्यादियुक्तं तु नेत्रं ज्ञाने प्रकाशते ।
तज्ज्ञानमेकरूपं वै विषयोपाधिवर्जितम् ॥६२॥
अनेकं कल्पितं नेत्रं ज्ञानं त्वेवमकल्पितम् ।
संकल्पादियुतं तद्वद् मनोज्ञानं प्रकाशते ॥६३॥
तज्ज्ञानमेकरूपं वै विषयोपाधिवर्जितम् ।
मनोऽनेकं कल्पितं स्याज्ज्ञानं त्वेकमकल्पितम् ॥६४॥
निश्चयानिश्चययुता बुद्धिर्ज्ञाने प्रकाशते ।
तज्ज्ञानमेकरूपं वै विषयोपाधिवर्जितम् ॥६५॥

---

जानामीति ज्ञानस्वरूपभेदादित्याशङ्क्याह—विषयोपाधिवर्जितमिति । ज्ञाने भासमानो भेदो विषयात्मकोपाधिकृतः । यथा एकस्मिन् दर्पणे क्रमेण गजतुरगाद्यनेकप्रतिबिम्बयुते गजसंबन्धित्वादिभेद औपाधिकः, तथा ज्ञाने भेद औपाधिकः । ज्ञानस्य प्रकाशैकरूपत्वेनाभेदाद् विषयरूपोपाधिवर्णितं ज्ञानमात्रमेकरूपमेव ॥५९॥

यत एकत्र ज्ञानप्रकाशे देहोऽनेकरूपो भासते, अनेकरूपे देहे ज्ञानमेकरूपं प्रकाशते, तस्मात् प्रागुक्तसामान्यव्याप्त्या अनेकरूपो देहः कल्पितः स्वातन्त्र्येण सत्ताभाववान्, एकं ज्ञानं तु अकल्पितं स्वतन्त्रं सत् । एवं व्याप्तियोजनेन देहस्य वस्तुत्वनिरसनेन देहात्मवादिनं प्रतिक्षिप्य प्राणाद्यात्मवादिनोऽपि प्राणादीनामवस्तुत्वनिरूपणेन प्रतिक्षिपति—क्षुधेति । क्षुधा औदर्याग्निनिमित्तः प्राणस्य क्षोभरूपो धर्मः । तर्षा तृषापिपासानिमित्तः प्राणधर्मः । आदिनोर्ध्वाधोगतिः ॥६०-६१॥

अप्रवृत्तिः स्वरूपस्थितिः । आदिना विषये प्रवृत्तिः ॥६२॥

संकल्पो दृष्टवस्तुनि शब्दयोजनाभिः परिच्छेदनात्मा व्यापारो मानसः । आदिना असंकल्पस्तूष्णी स्थितिः ॥६३-६४॥

निश्चयः अयमित्थमित्यध्यवसायः ॥६५॥

बुद्धिर्नैका कल्पिता स्याज्ज्ञानं त्वेकमकल्पितम् ।
अप्रकाशप्रकाशाभ्यां शून्यं ज्ञाने प्रकाशते ॥६६॥
तज्ज्ञानमेकरूपं वै विषयोपाधिवर्जितम् ।
शून्यं नैकं कल्पितं स्याज्ज्ञानं त्वेकमकल्पितम् ॥६७॥
उत्पत्त्यादिसमायुक्तो भावो ज्ञाने प्रकाशते ।
तज्ज्ञानमेकं रूपं वै विषयोपाधिवर्जितम् ॥६८॥
भावोऽनेकः कल्पितः स्याज्ज्ञानं त्वेकमकल्पितम् ।
ज्ञेयरिक्तं तु तज्ज्ञानं प्रकाशवपुरव्ययम् ॥६९॥

---

नैका अनेका । शून्यस्याप्रकाशो जाग्रदादौ । प्रकाशः सुषुप्तौ । स्मरणानुपपत्त्या तत्प्रकाशस्य सुषुप्तौ सर्वैरिष्टत्वात् ॥६६॥

नैकम् अनेकम् ॥६७॥

एवं देहाद्यात्माभिमतानां कल्पितत्वं प्रसाध्याऽनात्माभिमतानापि सामान्यतः कल्पितत्वं साधयति—उत्पत्त्यादीति । आदिना स्थितिनाशौ । भावः सत्त्वेन प्रतीयमानो घटादिः ॥६८॥

ननु देहादिभावान्तभासकं ज्ञानमपि नैकम्, बाल्यादिदेहभासकानां ज्ञानानामैक्येऽपि इन्द्रियमनोबुद्धिघटाद्यवभासमानामनैक्यात् । कथञ्चिद्वा तेषामभेदेन प्रमातृभेदेन वा ज्ञानं भिन्नमेवेत्याशङ्क्यां निराकर्तुमाह—ज्ञेयरिक्तमिति । नहि ज्ञेयज्ञानयोरभेदः, सदा ज्ञेयस्य प्रकाशापत्तेः । एवं च ज्ञेयस्य भिन्नत्वेन ज्ञानस्य ज्ञेयेन रिक्तं रहितं यत् स्वरूपम् । एवंविधमेव तज्ज्ञानं देहादिभ्यो विभिन्नत्वेनैकरूपेण साधितम् । तुरवधारणे । ज्ञेयरिक्तमेवेत्यर्थः । नन्वेवंविधज्ञाने किं प्रमाणम् ? शुद्धज्ञानविषयकज्ञानस्यानुव्यवसायाख्यस्याभावादित्याशङ्क्याह—प्रकाशवपुरिति । यथा दीपप्रकाशे दीपान्तरानपेक्षा । स दीप एव घटादिकं स्वात्मानमपि प्रकाशयत्येवं ज्ञानमपि ज्ञेयं स्वात्मानं च प्रकाशयति । न तत्र ज्ञानान्तरापेक्षा । अन्यथानवस्थाप्रसक्तिः । तस्मात्तज्ज्ञानं प्रकाशवपुः प्रकाश एव वपुः शरीरं यस्य । ननु ज्ञानानां स्वप्रकाशरूपत्वेऽपि दीपविस्फुलिङ्गादीनामिव प्रतिक्षणोत्पत्तिनाशवत्त्वेनानित्यत्वादनेकत्वमस्त्वित्याशङ्क्याह—अव्ययमिति । न व्ययो नाशो यस्य । ज्ञाननाशक्षणे तन्नाशसाक्षित्वेन यदि ज्ञानान्तरमभ्युपेयते, तर्हि तज्ज्ञानं पूर्वज्ञानं चैकमेव । केवलं तज्ज्ञाने एव बाह्यविषयोन्मुखत्वतदभावाभ्यां पूर्वापरीभावः । न तु पूर्वं ज्ञानं नष्टमुत्तरज्ञानमुत्पन्नं प्रमाणाभावात् । यदुक्तं स्पन्दे—

**देहदेशकालभेदेऽप्यखण्डैकरसात्मकम् ।**
**तदेव स्वात्मतत्त्वं स्याच्छिवादिस्तम्बसंयुतम् ॥७०॥**
**अप्रकाश्यमखण्डं तत् स्वतन्त्रं बहुशक्तिकम् ।**
**न स्वप्रकाशे चान्यस्य स्यादपेक्षा कदाचन ॥७१॥**

---

"कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते । तस्मिन् लुप्ते विलुप्तोऽस्मीत्यबुद्धः प्रतिपद्यते ॥ न तु योऽन्तर्मुखो भावः सर्वज्ञत्वगुणास्पदम् । तस्य लोपः कदाचित् स्यादन्यस्यानुपलम्भनात् ॥" इति । यदि ज्ञाननाशक्षणे ज्ञानान्तरं नाभ्युपेयते, तर्ह्यसाक्षिकस्य तन्नाशादेरसिद्धिरेव । न चेन्द्रियादीनामिव तन्नाशस्य नित्यानुमेयत्वं वक्तुं शक्यम्, प्रत्यक्षादिप्रमाणान्तरेण तत्कार्यादीनामेवासिद्धेरिति दिक् ॥६९॥

ननु एकस्य प्रमातुर्या घटपटाद्यवभासनरूपा ज्ञानधारा तस्या एव विषयरिक्ताया वैचित्र्याभावानभेदे सिद्धेऽपि चैत्रमैत्रदेहदेशकालानां भेदकधर्माणामनुभवसिद्धत्वेन 'ज्ञानभेदः' सिद्ध्यतीत्याशङ्क्याह—देहेत्यादि । देहानां मनुष्यतिर्यगादिस्वज्ञानानाम् । देशानाम् ऊर्ध्वाधःप्रभृतीनाम् । कालानाम् अतीतानागतमुखानाम् । भेदे भासमाने स्थितेऽपि । तज्ज्ञानमखण्डैकरसात्मकम् । अखण्डैकरसमिति देशादिधर्मैरपरिच्छेद उक्तः । अयं भावः—यथा एकस्य प्रमातुः क्रमेण भासमानानि विषयविरहितानि ज्ञानानि स्वरूपे भेदकाभावादेकत्वं प्राप्तानि, तथा भिन्नदेहादिज्ञानान्यपि देहादीनामपि विषयत्वेन ज्ञानभेदकत्वाभावाद् ज्ञानमात्रैकरूपाणीति सिद्धस्तेषामप्यभेदः । घटादेर्हि एकस्मादन्यस्य स्वरूपान्तरं तद्घटस्वरूपाद् बहिः पृथग् उपलब्धम्, एवं देशः कालश्चोपलब्ध इति घटादेः स्वरूपदेशकालैर्भेदः संभवति । प्रकृते तु ज्ञानाद् बहिः पृथक्त्वेन न कश्चनाकारो देशः कालो वा उपलब्ध इति । न ज्ञानकुक्षिप्रविष्टैराकारदेशकालैस्तत्प्रसादलब्धप्रकाशैर्ज्ञानस्य भेदसिद्धिरिति । तदेव अखण्डैकरसात्मकं ज्ञेयरिक्तं ज्ञानमेव । स्वस्य प्रमातुः आत्मनः, तत्त्वं यथार्थं रूपम् । शिवः सर्वज्ञत्वादिगुणगणयुतः । स्तम्ब इति सूक्ष्मतमकृमिविशेषः । पूर्णप्रमातारमारभ्य अतिसूक्ष्मोपाधिपरिच्छिन्नान्तप्रमातृषु सम्यक् स्वात्मतया युतं सर्वस्वात्मभूतमिति यावत् ॥७०॥

पूर्वमनादिनित्यसदित्यादि तद्वते नहि किञ्चनेति यज्ज्ञेयस्य परशिवस्य स्वरूपमुक्तं तदेव विज्ञायादौ शिवात्मानं साधर्म्येण विशेषत इति शिवस्वरूपमेव समानधर्मत्वात् स्वात्मनो रूपमित्यादौ विज्ञाय ततः प्रमाणादिभिर्विजानीयादित्युक्त्वा तदेतत्तेऽभिधास्यामीत्युपक्रान्तम् । ततो देहादिभ्यः स्वात्मरूपं विविच्येदानीं विविक्तस्य स्वात्मनः शिवसाधर्म्यात्तदात्मतां प्रतिपादयति—अप्रकाश्यमित्यादि । तत्

**सूर्यप्रकाशे दीपादिप्रकाशापेक्षणं यथा।**
**तस्मात् स्वयंप्रभः शान्तो ज्ञानं स्वात्मा शिवो भवेत्॥७२॥**

---

स्वात्मतत्वम्। अप्रकाश्य प्रकाश्याद्विषयरूपादिदंपदार्थाद्भिन्नम्। अखण्डं चिन्मात्रैकरूपम्। इति विशेषणद्वयेन चिद्रूपत्वमपरिच्छिन्नत्वं चोक्तम्। स्वतन्त्रं स्वस्वरूपप्रकाशेऽनन्यमुखप्रेक्षम्। एतेन जडस्वभावता व्यावृत्ता। बहुशक्तिकम् इच्छाद्यनेकशक्तियुतम्। एतेनानेकरूपत्वेन स्वरूपावभासेऽपि भासमानानेकस्य शक्तित्वेन नैकरूपताहानिः। ननु चिद्रूपत्वमखण्डरूपत्वं प्राग् निर्वाहितम्। स्वतन्त्रत्वं च कर्तृत्वं क्रियारूपम्। क्रिया चानित्यो धर्म इति तद्योगे स्वात्मतत्त्वस्याप्यनित्यताप्रसक्तिरित्याशङ्क्य स्वातन्त्र्यमेव प्रतिपादयति—न स्वप्रकाश इति। स्वस्य स्वरूपस्य प्रकाशे अवभासने, अन्यस्य स्वरूपातिरिक्तस्य, अपेक्षा कदाचन न स्यात्। कदाचनेति प्रोक्तस्वरूपप्रकाशेऽनन्यापेक्षत्वरूपस्वातन्त्र्यस्यानित्यधर्मता व्यावर्तिता। अनन्यापेक्षत्वं च न क्रियारूपमित्यतो नोक्तदोषः। एवंविधं स्वातन्त्र्यं यदि स्वात्मनि नाभ्युपेयते, तर्हि जडत्वमेव तस्य भवेत्। यदुक्तं प्रत्यभिज्ञायाम्—"स्वभावमवभासस्य विमर्शं विदुरन्यथा। प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः॥" इति। औपनिषदास्त्वेतदेव स्वातन्त्र्यं स्फुरद्रूपत्वं स्वप्रकाशत्वमित्याहुः। सेयं क्रियात्मिका शक्तिरिति, कर्तरि ज्ञातरीति, विश्वरूपोऽहमिदमित्यखण्डामर्शबृंहित इति स्वातन्त्र्यस्य क्रियारूपता कर्तृत्वरूपता अहन्तारूपता चोक्ताप्येवंविधस्वातन्त्र्यस्यैव तैः शब्दैर्व्यवहारो न बाह्यपरिस्पन्दरूपाऽनित्यक्रियादेरित्यदोषः। एवंविधं स्वातन्त्र्यमपि न भिन्नधर्मः, किन्तु स्वरूपमेवभूतमेव। अन्यथा अद्वितीयत्वाखण्डत्वादिहानिः। न च—'शक्तिश्च शक्तिमांश्चेति पदार्थद्वयमुच्यते" इति कथं सङ्गच्छत इति वाच्यम्, यथा ब्रह्मणश्चिद्रूपत्व सद्रूपत्वं चेति शिष्यव्युत्पादनाय विभज्य कथनमात्रेण न स्वरूपाभिन्नं तदेवं प्रकृते स्वातन्त्र्यशक्तिरिति स्वरूपानतिरिक्तस्यैव विभज्य कथनम्। यदुक्तं तन्त्रालोके—"नैषा शक्तिर्महादेवी न कस्याप्याश्रिता यतः। न चैष शक्तिमान् देवो न कस्याप्याश्रयो यतः॥" इति। ननु यदि स्वातन्त्र्यमपि शक्तिस्तर्हि बहुशक्तिकमित्यनेनैवोक्तत्वात् पुनः स्वतन्त्रमिति व्यर्थमिति चेन्न, सर्वासां शक्तीनां स्वातन्त्र्यशक्तिपल्लवभूतत्वेन तस्यामुख्यत्वोद्यतनाय पृथगादावुपादानम्। यदुक्तं तन्त्रालोके—"बहुशक्तित्वमप्यस्य तच्छक्त्यैवावियुक्तता" इति। प्रत्यभिज्ञायामपि—"चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता। स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः॥" इति॥७१॥

अत्र दृष्टान्तमाह—सूर्येति। यथा न कदाचित् स्यादिति सम्बन्धः। यस्मात् प्रकाश्यत्वाद्यागमाद्युक्तशिवलक्षणेन युतः स्वात्मा, तस्मात् स्वयंप्रभः स्वप्रकाशरूपः शिव एव स्वात्मा भवेत्॥७२॥

अनेतादृश एव स्याद् विषयः सर्व एव हि ।
एवमादौ तु विज्ञाय पश्चाद् दृश्यं समस्तकम् ।।७३।।
द्रष्टृज्ञानात्मकं पश्येदुपपत्त्या तु साधकः ।
कार्यकारणभावेन भावाभावतया तथा ।।७४।।
प्रकाशते बहिश्चान्तः सर्वं ज्ञानं महेश्वरि ।
विना ज्ञानं तु किमपि कदाचिन्नैव भासते ।।७५।।
मृत्तिकामन्तरेणात्र घटादिर्न प्रकाशते ।
रज्जुं विना भ्रान्तिसर्पः क्वचिन्नैव प्रकाशते ।।७६।।

---

एवं दृश्याद्व्यतिरेचितं स्वात्मरूपं शिव एवेति प्रतिपादितम् । अधुना स्वात्मनो व्यतिरिक्तेन दृश्येन द्वैतपरिहाराय स्वात्मनो विभिन्नत्वेन तस्यावस्तुतां निरूपयितुमाह—अनेतादृश इति । यद्यपि यद्यत्रानेकरूपेणेत्यादिव्याप्तिनिरूपणेन दृश्यस्य कल्पितत्वं प्रतिपादितम्, तथापि तदेवोपपत्त्युपलब्धिभ्यां विशदयितुं पुनरारभ्यते । अनेतादृशः प्रोक्तज्ञानात्मस्वरूपाद्विपरीतः । प्रकाश्यः सखण्डः परतन्त्र इत्यादि । सर्वः बाह्य आन्तरश्च । एवम् उक्तरीत्या आदौ ज्ञानाभ्यासादौ । समस्तकं पश्येदित्यन्वयः ।।७३।।

समस्तं दृश्यं द्रष्टुः प्रमातुर्यज्ज्ञानं तदात्मकं पश्येत् । किमुपदेशमात्रात् पश्येत् ? नेत्याह—उपपत्त्येति । तामेवाह—कार्येत्यादि । सर्वोऽपि दृश्यवर्गः कार्यकारणभावेन कार्यत्वेन कारणत्वेन वा । तथा भावाभावतया सद्रूपेणासद्रूपेण वा प्रकाशत इत्यन्वयः ।।७४।।

बहिर्निर्विकल्पज्ञाने । अन्तः सविकल्पके विमर्शरूपे यत्प्रकाशते तत्सर्वं ज्ञानमेव । कुत इति चेदाह - विनेति । तुर्ह्यर्थे । हि यस्मात् । ज्ञानं विना किमपि कार्यादिरूपेण भासमानेष्वेकमपि । कदाचिदपीति अपिरुभयत्र योजनीयः । नैव भासते । सर्वं दृश्यं दृगात्मकज्ञानमयम्, दृगतिरेकेणाभासनात् । यद् यद्व्यतिरेकेण न भासते तत्तदेवेति प्रयोगः ।।७५।।

अत्र दृष्टान्तमाह—मृत्तिकेति । यथाऽत्र सर्वसाधारणव्यवहारे मृत्तिकामन्तरेण घटादिर्न भासत इति मृत्तिकैव घटादिः । ननु मृत्तिकापरिणामरूपघटादेर्न कल्पितत्वम्, सर्ववादिभिस्तत्र सत्यताऽभ्युपगमादित्याशङ्क्य सर्ववादिसिद्धं दृष्टान्तान्तरमाह—रज्जुमिति । यथा रज्जुं विना भ्रान्तिसर्पो न क्वचित् प्रकाशते, अत रज्जुरेव स सर्प इति शेषः ।।७६।।

विना मनः स्वप्नराज्यनगरादिर्न भाति वै ।
तत्सर्वं तु तदेव स्यादेवमत्रापि शङ्करि ॥७७॥
तस्माज्जगदशेषं वै ज्ञानमेव प्रकाशते ।
एकरूपे तथा ज्ञाने जगच्चानेकरूपकम् ॥७८॥
प्रकाशतेऽतः सर्वेषां ज्ञानमात्मेति हि स्थितम् ।
व्यवहारो मृषाबुद्ध्या घटादिव्यवहारवत् ॥७९॥

---

ननु रज्जुसर्पेण दंशनविषजननादिरूपार्थक्रिया नेति तस्य कल्पितत्वाद् रज्जुमात्रस्वरूपता, नैवं घटादेरित्याशङ्क्याह—विना मन इति । नगरादिरित्यादिना जाग्रति मनोराज्यान्तर्गतगजतुरगादि । मनो विना सुषुप्तौ न किञ्चित् प्रकाशते । अतो यथा तत्सर्वं राज्यनगरगजतुरगादिकम् । तदेव मन एव स्यात् । एवं प्रोक्तवत् । अत्रापि प्रकृतानुमाने सर्वं दृगात्मकमित्यत्रापि । एतच्चोपलक्षणमैन्द्रजालिकादिसृष्टेः । तेन प्रमात्रन्तरसाधारण्यप्रसिद्धार्थक्रियाकारित्वचिरस्थायित्वाद्यभावप्रयुक्तदोषो निरस्तः ॥७७॥

निगमयति—तस्मादिति । तस्माद् ज्ञानं विना न किञ्चित् प्रकाशते तस्मात् । वै निश्चयेन । ज्ञानमेवाशेषजगद्रूपेण प्रकाशते नहि तत्तज्ज्ञानं भिन्नमित्येवं पूर्वं साधितम । सर्वमुपसंहाराय संक्षिप्यानुवदति—एकरूप इति । तथा पूर्वसाधिते एकरूपेऽखण्डे ज्ञानेऽनेकरूपं जगत् प्रकाशत इति सम्बन्धः ॥७८॥

यत एवं प्रकाशते, अतः । सर्वेषां घटादीनां दृश्यभूतानाम् । निरुक्ताखण्डशुद्धज्ञानमेवात्मेति हि निश्चयेन स्थितं सिद्धम् । ननु यदि सर्वं ज्ञानैकरूपं तर्हि कोऽपि द्रष्टृदर्शनदृश्यादिभेदव्यवहारः कथमित्याशङ्क्याह—व्यवहार इति । मृषाबुद्धिर्भ्रान्तिः । मृदेकरूपे घटादौ यथा घटः शराव इत्यादिभेदव्यवहारः, तदत् । एतदुक्तं वासिष्ठे—"अव्युत्पन्नस्य कनके कानके कटके यथा । कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥ तथा ज्ञस्य पुरागारनगनागेन्द्रगोचरा । इयं दृश्यदृगेवास्ति न त्वन्या परमार्थदृक् ॥" तथा— 'यथा न तोयतो भिन्नाः फेनोर्मिहिमबुद्बुदाः । आत्मनो न तथा भिन्नं विश्वमात्मविनिर्गतम् ॥" इति ॥ अयं भावः—यथा हि अज्ञातघटादितत्त्वस्य मृद्भेदेनैव घटशरावादिव्यवहारः, यथा च रज्जुसर्पे भ्रान्तस्य स्वप्नराज्यादौ स्वाप्नपुरुषस्य, ऐन्द्रजालिकादिसृष्टगजतुरगादौ अविदिततन्मायस्य वाञ्छाभिधानग्रहणहानादिव्यवहार इति ! एवं च नैतेषामागमिकानामारम्भवादः परिणामवादो वा । किन्तु भगवान् स्वस्वातन्त्र्यशक्त्या दुर्घटसंपादिन्या सर्वमित्थं स्वात्मरूपमेव शुद्धसंवेदनात्मकमखण्डैकरसमनेक-

एवं स्वाव्यतिरेकेण जगज्ज्ञात्वा तु सुस्थितः ।
पूजादिकर्म नैवास्य यतः सर्वं हि तन्मयम् ॥८०॥
समानसत्त्वरजस ईदृशं तत्त्वमात्मनः ।
नापरोक्षी भवेत्तस्माद्योगं सम्यक् समाश्रयेत् ॥८१॥

---

रूपतयाऽवभासयतीति शक्तिवादोऽभिहितः । तदुक्तम्—' विविधैरुपाधिभिरवस्थितैर्बहिःस्फटिकादिवत्नवचित्रतोच्यताम्, यदि ते कदाचन कथञ्चन क्वचिद्भवितुं क्षमास्त्वदवभासतः पृथक् । परमाणुपाकपरिणाममविभ्रमादुत वा विवर्त इति विश्वमिष्यताम् । विबुधोत्तमैर्यदिह तद्विकल्पनाः शिवशक्तिरेव नहि चान्यथा भवेत् ॥" इति । तथा—"शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः" इति । परमार्थसारेऽपि—निजशक्तिवैभवभरादण्डचतुष्टयमिदं विभागेन । शक्तिर्माया प्रकृतिः पृथ्वी चेति प्रभावितं प्रभुणा ॥" इति । तथा भगवत्पादैरप्युक्तम्—' त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं शिवयुवतिभावेन बिभृषे' इति । तन्त्रालोकेऽपि—"आत्मा संवित्प्रकाशस्थितिरनवयवा संविदिच्छादिशक्तिव्रातं तस्य स्वरूपं स च निजमहसश्छादनाद् द्वन्द्वरूपः । आत्मा ज्योतिस्वभावप्रकटनविधिना तस्य मोक्षः स चायं चित्राकारस्य चित्रः प्रकटित इह यत् संग्रहेणार्थं एषः ॥ मिथ्याज्ञानं तिमिरमसमान् दृष्टिदोषान् प्रसूते तस्माद्भावाद्विमलमपि सद्भाति मालिन्यधाम । यत्तत्प्रेक्ष्यं दृशिपरिगतं तैमिरीं दोषमुद्रां दूरं रुन्धेत् प्रभवतु कथं तत्र मालिन्यशङ्का ॥" इति । तथा प्रत्यभिज्ञायाम्—"किन्तु निर्माणशक्तिः साऽप्येवं विदुष ईशितुः । तथा विज्ञातृविज्ञेयभेदो यदवभासते ॥' इति ॥७९॥

उपसंहरति—एवमिति । एवम् उक्तरीत्या । स्वस्मादव्यतिरेकेणापृथक्तया । तुरवधारणे । अव्यतिरेकेणैव जगज्ज्ञात्वा । यः सुष्ठु स्थितः पूर्णसत्तां प्राप्तः । तस्यास्य पूजादिकर्म नैवेति पूजादिकं परित्यज्य स्थितानां का निष्ठेति प्रथमप्रश्नोत्तरं ज्ञेयम् । कुत इत्याशङ्क्याह—यत इति । यस्मात् कर्तव्यकरणादि सर्वं तन्मयं स्वात्मैकरूपमतः पूज्यादेरतिरिक्तस्याभावादित्यर्थः । एतदुक्तं तन्त्रालोके—"नैष ध्येयो ध्यातृभावान्न ध्याता ध्येयवर्जनात् । न पूज्यः पूजकाभावाद् पूज्याभावान्न पूजकः ॥" इति । अनुत्तराष्टकेऽपि—"पूजापूजकपूज्यभेदसरणिः केयं कथाऽनुत्तरे संक्रामः किल केन कस्य विदधे को वा प्रवेशक्रमः । मायेयं न चिदद्वयात्परतया भिन्नाप्यहो वर्तते सर्वं स्वानुभवस्वभावविमलं चिन्तां वृथा मा कृथाः ॥" इति ॥८०॥

सत्त्वाधिक्यरणोमयस्येदृशं तत्त्वं प्रोक्तक्रमेणापरोक्षीभवेत् । समानसत्त्वरजसः स्वात्मन ईदृशं तत्त्वं यतो नापरोक्षीभवेत्तस्मात् स वक्ष्यमाणं योगम् अपरोक्षता-

यथा रज्जूद्भवः सर्प आप्तोक्त्या तु मृषात्मकः ।
अदृष्ट्वा चापरोक्ष्येण रज्जुं नैव प्रसीदति ॥८२॥
मनस्तस्माद् गुरूक्त्या वै यावदात्मापरोक्षतः ।
नोपलब्धस्तावदिह भवेत् संसरणं पशोः ॥८३॥
प्रमाणेन गुरूक्त्या वा युक्त्या शास्त्रेण वाऽथवा ।
सकृदात्मस्वरूपं तु स्वस्मिन् येनोपलभ्यते ॥८४॥

---

सम्पादकं सम्यग्यथोक्तरीत्या आश्रयेदभ्यसेत् । तद्विज्ञानं प्रवक्ष्यामीत्यादिनैतदन्तेन शाम्भवोपायो निरूपितः। तल्लक्षणमुक्तम्—"अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः । उत्पद्यते य आवेशः शाम्भवोऽसावुदीरितः ॥" इति । गुरुणा महता पूर्णेन प्रतिबोधतो ज्ञानेन द्वैतलेशरहितेन अकिञ्चिच्चिन्तकस्य स्वात्मातिरिक्तं किञ्चिदप्यपश्यत इति तदर्थः । तन्त्रालोकेपि—"तेनाविकल्पसंवित्तिर्भावनाद्यनपेक्षिणी । शिवतादात्म्यमापन्ना समावेशोऽत्र शाम्भवः ॥" इति ॥८१॥

तत्त्वापरोक्षस्यैवावश्यकत्वं सदृष्टान्तमाह—यथेति । रज्जौ उद्भवो भ्रान्त्या-भासो यस्य । मृषात्मकः असत्यभूतः सर्पः । तुरप्यर्थे आप्तस्य यथार्थवक्तुरुक्त्या नायं सर्प इति वचनेन परोक्षतया विदितोऽपीति शेषः । रज्जुम् । अपरोक्षेण प्रत्यक्षेण चादृष्ट्वा मनो नैव प्रसीदतीति सम्बन्धः । तत्पञ्जनितभयादिराहित्येन न प्रसन्नं भवतीत्यर्थः ॥८२॥

यस्मादेवं तस्माद् गुरुवाक्यादिना श्रुतस्य मननादिभिर्यावत्कालं वै निश्चयेन संशयविपर्ययराहित्येनापरोक्षेणात्मा नोपलब्धो न प्रत्यभिज्ञातः तावत्कालम् अविद्या-पाशितत्वात् पशोः, इह मनुष्यादियोनिषु सम्यक्करणं पुनः पुनर्गमनागमनं भवेत् ॥८३॥

अपरोक्षे कारणनिममं व्युदस्य यथा कथञ्चिदपरोक्षेणैव साधिते न पुरुषार्थलाभ इति निरूपयति—प्रमाणेनेत्यादि । अत्यन्तसमाहितचित्तस्य प्रमाणेन निर्विकल्पक-ज्ञानेन । अत्यन्तदृढविश्वासवतो गुरूक्त्या वा । युक्त्या अति निपुणेन सत्तर्केण वा । अथवा कुतर्करहित्वेन भूयः परिशीलितेन शास्त्रेण । तुरवधारणे । स्वस्मिन्नेव स्वस्वरूपाभेदेनैव सर्वात्मकं सर्वजगतात्मस्वरूपं निश्चयेन संशयविपर्ययराहित्येन येन साधकेनोपलभ्यते साक्षात् क्रियते, अखिला ध्यानसमाध्यादिक्रियाः पिष्टपेषणतुल्य-त्वाद्व्यर्था इति सम्बन्धः । यदुक्तम्—'एकवारं प्रमाणेन शास्त्राद् वा गुरुवाक्यतः । ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ॥ करणेन नास्ति कृत्यं नास्ति भावनयापि च । सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना ॥" इति ॥८४॥

**सर्वात्मकं निश्चयेन व्यर्थास्तस्याखिलाः क्रियाः।**
**सर्वदेशे सर्वदेहे सर्वकाले समात्मना ॥८५॥**
**परित्यक्तक्रमोपाधिसंविदात्मतया शिवः।**
**येनोपलब्धस्तस्येह न कार्यमवशिष्यते ॥८६॥**
**अन्यैर्दृष्टं कृतमिव द्रष्टॄणामेव तद् भवेत्।**
**अश्वमेधसहस्राणि ब्रह्महत्याशतानि च ॥८७॥**
**आरूढशिवयोगस्य नेषत्स्पृशति कुत्रचित्।**
**शिवात्मरूपं सर्वेषां भासते सर्वदैव हि ॥८८॥**

---

एवंविधात्मस्वरूपं न सकृच्छ्रवणादिना बुद्धिभूवं निष्प्रकम्पत्वेनावतरत्यतोऽत्र भूयोऽभ्यासो विधेय इति द्योतयितुं तमेवार्थमीषद्भङ्ग्यन्तरेण पुनर्निरूपयति—सर्वदेश इति। सर्वदेशादौ। समात्मना अविशेषरूपेण। अद्वितीयसंविदात्मकत्वेनेति यावत् ॥८५॥

एतदेव स्पष्टमाह—परित्यक्तेति। परितस्त्यक्तः सर्वथाऽसंस्पृष्टकालदेशक्रमाद्याधायक उपाधिर्येन। कालादिक्रमसमर्पकविषयच्छायानाच्छुरित इति यावत्। एवंविधशुद्धसंविदात्मत्वेन शिवः परमेश्वरो येनोपसमीपे स्वात्मरूपे लब्धः प्रत्यभिज्ञातः, तस्य प्राप्तपरपुरुषार्थत्वेन कृतकृत्यत्वान्न कार्यमवशिष्यते ॥८६॥

नन्वेवंविधानामपि शारीरमशनशयनगमनादिरूपमन्यच्च कर्म दृश्यते, तत्कथमिति चेदाह—अन्यैरिति। अन्यैरप्राप्तात्मतत्त्वैः पशुभिर्दृष्टं कृतमिव कर्मेव यत्किञ्चित् तद् द्रष्टॄणामेव भवेत्। यथा भ्रमन्नेत्रस्य तरुशिखरादिभ्रमणम्, यथा वा रथाद्युपविष्टस्य क्षिप्रतरयायिनस्तरुशिखरादियानं स्वनिष्ठमेवं परयोगिनोऽननुसन्धानेन संस्कारमात्रेण निर्वृत्तकर्मणां तत्फलजननासमर्थानां कृततुल्यत्वमेव। मयेदं कर्म कृतमित्याद्यनुसन्धानाभावात्तदन्तःकरणभूम्यनारोहेण न तत्र योगिनः सम्बन्धः। अनेनेदं कृतमित्यनुसन्धानादयोग्यन्तःकरणारोहादयोगिनस्तत्र सम्बन्ध इति भावः। अत एवाह—अश्वमेधेत्यादि ॥८७॥

आ अभिव्याप्य रूढः रूढिं प्राप्तः विपर्ययेण बाधसम्भावनारहितः। शिवे अद्वयसंवित्स्वभावे योगः समाधिश्चित्तविश्रान्तिर्यस्य, तस्य कुत्रचिद्देशे काले वा अश्वमेधसहस्राद्यात्मकं कर्म ईषत् स्वल्पमपि न स्पृशति फलदानेन न तत्सम्बन्धो भवतीत्यर्थः। अयमाशयः—कर्मकर्तुः स्वोचितं फलम् ईश्वरो नियतिशक्तिनियमितं ददाति। प्रोक्तशिवयोगिनोऽद्वयसंविन्मात्रशरीरत्वेन तथाविधस्य करचरणादिस्पन्दनात्मककर्मणि

न प्रज्ञातं तु पशुभिस्तस्मात् प्रज्ञापको गुरुः ।
शास्त्रादिकं च नित्यात्मज्ञानत्वादेव सुस्फुटम् ॥८९॥
अप्रज्ञातसुवर्णेन पुरुषेणासकृत्तु तत् ।
दृष्टं प्रज्ञायते नैव यथाभूतं सुवर्णकम् ॥९०॥
आप्तोक्त्या तु तदेवाद्धा सम्यक् प्रज्ञायते जनैः ।
तस्मात् प्रज्ञापकं शास्त्रं गुरुर्वा परमेश्वरि ॥९१॥

---

कर्तृत्वस्यासम्भावना। देहस्य तु जडस्येच्छादिघटितकर्तृत्वं वा सुखाद्यनुभवरूपफलं वा दूरापास्तमिति निरुक्तयोगिकृतं कर्म न तस्य किञ्चित् फलमादधाति। अन्येषां द्रष्टॄणां शुभचित्तानां तन्निषिद्धकर्मसूदासीनानां सुकर्मस्वनुमोदकानां "कर्ता कारयिता चैव प्रेरकश्चानुमोदकः" इत्यादिवचनाच्छुभकर्मफलम्। अशुभचित्तानां तच्छुभकर्मस्वसूयावतामशुभकर्मसु परीवादपराणामशुभफलमिति। यदुक्तम्—"सुहृदः साधुकृत्यानि दुष्कृत्यानि च दुर्हृदः। विभज्य योगी प्राप्नोति परमं पदमच्युतम् ॥" इति। नन्वेवमभ्यासात् पूर्वमद्वयसंवित्स्वभावः प्रकाशते न वा? आद्येऽभ्यासादिवैयर्थ्यम्। द्वितीये तथाविधात्मनः प्रकाशरूपताहानिरित्याशङ्कां निरसितुमुपक्रमते—शिवात्मेति। अद्वयसंवेदनस्वभावशिवात्मकमात्मरूपं हि निश्चयेन सर्वदैव सर्वेषां प्रमातॄणां भासत एव ॥८८॥

ननु तर्हि किं साधनैरभियाच्यते इत्याशङ्क्याह—न प्रज्ञातमिति। तुरवधारणे। भातमपि पशुभिरहं सोऽस्मीति न प्रज्ञातमेव। यत एवं तस्माद् गुरुः स्वरूपप्रज्ञापको न तु भासकः। शास्त्रादिकं च प्रज्ञापकमेव। आदिना सद्युक्तिः। अत्र हेतुः—नित्येत्यादि। नित्यम् आत्मभूतत्वाज्ज्ञानरूपत्वाच्च। आत्मत्वेन नित्यसिद्धस्य ज्ञानत्वेन नित्यभातस्य न शास्त्रादिकं साधकं भासकं वेति भावः। सुस्फुटं न प्रज्ञातमित्यन्वयः ॥८९॥

ननु भासते न प्रज्ञातं चेति विप्रतिषिद्धमित्याशङ्कां व्यपोहितुं सदृष्टान्तं तदुपपादयति—अप्रज्ञातेति। प्रकर्षेण तत्तच्छब्दयोजनेनेदं सुवर्णमिति ज्ञातं प्रज्ञातम्। न प्रज्ञातं सुवर्णं येन स अप्रज्ञातसुवर्णः। एवंविधेन पुरुषेण। तुरप्यर्थे। असकृद् भूयः। इदं किञ्चिदिति दृष्टमपि तत्सुवर्णं यथाभूतं सत्यात्मकं नैव प्रज्ञायते ॥९०॥

तदेव सामान्येन ज्ञातं सुवर्णमेव। आप्तस्य यथार्थवक्तुः। इदं सुवर्णमित्युक्त्या सम्यक्संशयविपर्ययराहित्येन इदं सुवर्णमिति विशेषतः साक्षात् प्रज्ञायते। यस्मादेवं लोके भातस्यापि प्रज्ञातत्वं न, तस्मात् शास्त्रं गुरुर्वा भातस्यैव प्रज्ञाने कारणमिति ॥९१॥

समानसत्त्वरजसा पुरुषेण गुरूक्तितः ।
न प्रज्ञायते यस्माद्धि तस्माद्योगं समाश्रयेत् ॥९२॥
श्रुतो मनोहरः कान्तो सकृत् प्रज्ञायते न तु ।
यदा तदाऽपूर्णकामा निरानन्दैव सा शिवे ॥९३॥
तमेव सा तदानीं च प्रज्ञाय हितवाक्यतः ।
पूर्णानन्दमयं भावं यथाप्नोति भवेत्तथा ॥९४॥
अद्वयं शिवमात्मानमप्रज्ञाय गुरूक्तितः ।
जनः शोकहतो नित्यं यथा वै विस्मृताकरः ॥९५॥
आत्मानन्दमयः सर्वप्रियहेतुत्वतः शिवे ।
भारादित्यागसुव्यक्तसुखात्मत्वाच्च शङ्करि ॥९६॥

---

एवं सामान्येन भासमानमात्मतत्त्वं गुरूक्त्या समानसत्त्वरजसा प्रागुक्तलक्षणेन पुरुषेण न प्रज्ञायते, अयमहं शिवोऽस्मीति न प्रत्यभिज्ञायते यस्मात्, तस्मात् स योगं वक्ष्यमाणं शास्त्रोपायरूपं सम्यक्फलप्राप्त्यन्तमाश्रयेत् ॥९२॥

ननु सामान्येनात्मनो ज्ञानस्य फलादधिकं प्रज्ञानफलं न किञ्चिदित्याशङ्क्य तद्विशेषफलं सदृष्टान्तं निरूपयति—श्रुत इति । कयाचित् कामिन्या कश्चनातिसुन्दरो मनोहर ईदृशातिसुन्दरस्वरूपवानिति सखीवचनश्रवणेन भूयः परोक्षेण ज्ञातोऽपि यदा न प्रज्ञायत एव अपरोक्षेण न ज्ञात एव । सा कामिनी तद्दर्शनोत्कण्ठितान्तरङ्गा तदा असकृत् परोक्षेणापि तद्दर्शनकाममनवाप्य तत्सुखानुभवविधुरैव भवति ॥९३॥

तमेव कालान्तरेऽकस्माद् दृष्टिगोचरमप्युपलभ्य सा कामिनी तेन सप्रेमभावं भाषिता संस्पृष्टा परिष्वक्तापि विशेषेण तमविदुषी तत्सुखमलभमानैव तदानीमेवाकस्मादयं मनोहरः स यस्त्वया चिराद्दिदृक्षित इति स्वस्यात्यन्तहितवाक्यश्रवणेन तमेव सविधवर्तिनं सोऽयं यो मया द्रष्टुं चिरादभिलषित इति प्रज्ञाय पूर्णानन्दमयं भावं चित्तं सा कामिनी यथाऽऽप्नोति, तथा प्रकृतेऽपि भवेत् ॥९४॥

तदेवं प्रकृते योजयति— अद्वयमिति । अद्वयं शिवं स्वात्मभूतमपि गुरुवचनादिना स एवाहमित्यप्रत्यभिज्ञाय जनो जननमरणधारासमारूढो नित्यमनादिकालादेतत्क्षणावधि शोकेन दुःखेन हतो हिंसितो भवति । अत्र दृष्टान्तः—यथेति । विस्मृतः स्वनिहिताकरो येन । यथा स्वेन निक्षिप्ताऽमूल्यानन्तरत्नविस्मरणेनैकैकवराटकभिक्षणेनातिदुःखितः कश्चिद्दैवहतः ॥९५॥

प्रकृते स्वस्वरूपप्रज्ञानस्य मोक्षरूपं फलमुक्तम् । तच्च वेद्यसुखरूपं चेद्यदि तदनित्यं तर्हि पुनः संसारप्रसक्तिर्यदि नित्यं तर्हि द्वैतप्रसङ्ग इत्याशङ्क्य मोक्षात्मकं

**अकारणेन सौषुप्ते सुखरूपोपलम्भतः ।**
**तथा न दुःखं देवेशि यस्मात् तत्तु सहेतुकम् ॥९७॥**

---

सुखमात्मरूपमेवेत्याह—आत्मेति । आत्मा आनन्दमयः आनन्दैकरूपः । कुत इति चेदाह—सर्वेति । सर्वेषां प्राणिनाम् अन्यत्र प्रियबुद्धौ हेतुत्वात् । आत्मार्थमन्यत्सर्वं प्रियं यस्मादिति यावत् । "आत्मनोऽर्थं प्रियं सर्वं पुत्रमित्रकलत्रकम्" इत्युक्तेः । लोके हि तृप्त्यर्थमोदनं प्रियमिति ओदनात्तृप्तेः प्रियतरत्वम्, तृप्तिरपि स्वात्मसुखाय प्रियमिति स्वात्मसुखं प्रियतमम्, सुखमपि स्वात्मार्थमिति स्वात्मैवातिप्रियतमः । आत्मा न कस्याप्यर्थेऽपेक्ष्यत इति न ततः किञ्चिदधिकं प्रियम् । न चात्रात्मनः सुखमित्यात्मनः सुखस्य भेद इति वाच्यम्, यतस्तत्सुखमनुकूलसंवेदनीयम् । यद्वियोगस्मरणमपि क्लेशावहम् । स्पष्टं चैतल्लोके सुखसाधनस्यापि कान्ताकनकादेर्वियोगस्मरणं दुःखावहमिति । नहि कस्यचित् सुखं मे मा भूत संप्राप्तं सुखं वा निवर्तत्वित्यभिलाषः । एवं चात्मस्वरूपस्य भवननिषेधो निवृत्तिर्वा न केनचिदिष्यत इति सुखरूपत्वमात्मनः, प्रियेषु पर्यवसानभूतस्यैव सुखरूपत्वौचित्यात् । तस्यैव परमफलत्वादात्मैव सुखरूपः । आत्मनः सुखमिति तु राहोः शिर इत्यादिवन्नेयम् । नन्वात्मनः सुखरूपत्वं नानुभवसिद्धमित्याशङ्क्याऽस्तीत्यनुभवमेव प्रदर्शयति—भारादीति । मस्तकसमूढात्यन्तभारादित्यागेन सुष्ठु संशयादिराहित्येन व्यक्तमनुभूतं सुखात्मत्वं यस्य । आदिना गाढव्यापारादिसंग्रहः । न च भारादित्यागेन सुखमुत्पद्यत इति वाच्यम्, भारत्यागस्याभावत्वेन भावकारणत्वासम्भवात् । न च धननाशेन दुःखोत्पत्तेरानुभविकत्वादभावाद्भावोत्पत्तिः प्रामाणिकीति वाच्यम्, यतस्तत्र धननाशो न दुःखहेतुः, किन्तु तद्धनसाध्यत्वेन संभाविता गामिसुखाभावसंभावनयैव दुःखोत्पत्तेः, अन्यथा धननाशाज्ञानदशायामपि दुःखप्रसक्तेः । न चैवं भारादित्यागस्थले तत्स्मरणादेः सुखहेतुत्वमानुभविकम् । तस्मात्तत्सुखं स्वभावभूतमेव ॥९६॥

तुष्यतु दुर्जन इति न्यायेनाभावस्य हेतुत्वमभ्युपेत्याह—अकारणेनेति । सौषुप्ते सुषुप्त्यवस्थायाम् । अकारणेन कारणं विनैव सुखात्मकस्वरूपोपलम्भात् । तत्र सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सर्वानुभवः । तत्र न किञ्चिदवेदिषमिति कारणाभिमतस्य न कस्याप्युपलब्धिः । न च ज्ञानसामान्याभावस्यैव तद्धेतुत्वमिति वाच्यम्, पाषाणादावतिव्याप्तेः । न किञ्चिदवेदिषमिति ज्ञानेन ज्ञानसामान्याभावासिद्धेश्च । नन्वेवं दुःखमप्यात्मरूपं कुतो नेत्याशङ्क्याह—तथेति । दुःखं तथा आत्मरूपं न । यस्माद् दुःखं सहेतुकम् अभिघातादिकारणजन्यम् । इदमत्र तात्पर्यम्—सुखं दुःखं च प्राणिनां भासते । तत्र सुखं सुषुप्त्यादौ स्वरूपातिरिक्तनिमित्तसामान्याभावे सति भासत इति स्वात्मरूपमेव सुखम् । दुःखं तु स्वातिरिक्तनिमित्तपूर्वकं भासत इति न स्वरूपम् । न

**प्रज्ञाततत्त्वस्यानन्दाविर्भावो भवतीश्वरि ।**
**यावदानन्दमयता नोदेति पुरुषस्य तु ॥९८॥**
**समसत्त्वरजस्कस्य तावद् योगं समाश्रयेत् ।**
**योगोऽपि बहुधा प्रोक्तस्तन्त्रभेदेषु शङ्करि ॥९९॥**

---

च यदि सुखं स्वरूपं तर्हि स्वात्मनः संवेदनैकरूपत्वेन सुखस्यापि तावन्मात्रतायां संवेदनस्य सदा भासमानत्ववत् सुखस्य कुतो न भासमानत्वमिति शङ्क्यम् । यथा कामिलारोगहतस्य श्वेतात्मकशङ्खग्रहणेऽपि श्वैत्याग्रहणवत् प्रकृतेऽपि भेदवासनादोषेण संविद्रूपावभासेऽपि सुखात्मतानवभासादिति ॥९७॥

तस्मात् प्रज्ञातशिवात्मतत्त्वस्य प्रमातुरानन्दस्याविर्भावोऽवभासनं भवति, भेदवासनाविगलनात् । तस्मात् समसत्त्वरजस्कस्य पुरुषस्य यावदमन्दमयता नोदेति नावभासते । तुरवधारणे । तावद्योगमेव समाश्रयेदिति सम्बन्धः ॥९८॥

एवं च समसत्त्वरजस्केन आनन्दमयत्वं यावत् स्वात्मनो न भासते तावद्वक्ष्यमाणयोगस्याभ्यासः कर्तव्यः । तदानन्दमयताभासनं नाम भेदाप्रथनपूर्वकस्वरूपप्रथनात्मकाद्वितीयस्वरूपप्रथनमेव । न ततोऽधिकं किञ्चित् । तस्यानन्दरूपत्वं चानुकूलवेदनीयत्वेन सर्वस्पृहणीयत्वात् । एतदुक्तमनुत्तराष्टके—"आनन्दोऽत्र न मद्यवित्तमदवन्नैवाङ्गनासङ्गवद्दीपार्केन्दुकृतप्रभाप्रकरवन्नैव प्रकाशोदयः । हर्षः संभृतभेदमुक्तिसुखभूर्भारावतारोपमः सर्वद्वैतपदस्य विस्मृतिनिधिप्राप्तिः प्रकाशोदयः ॥" इति । अत एव सर्वद्वैतप्रथाशून्यात्मकसुषुप्तौ तिरश्चामपि प्रवृत्तिः । परिचितसमाध्यवस्थानां तु स्पष्टतरमेवैतत् । ननु प्रियापरिष्वङ्गदशासमुपलब्धसुखं सुषुप्तिसुखादधिकम्, यतस्तदर्थं सुषुप्तिमपि परित्यजतीति विषयसुखमात्मसुखादधिकमिति चेच्छृणु—तदपि सुखं स्वरूपभूतमेव । यथा गाढवटच्छायासमाश्रितपुरुषानुभूयमानतच्छैत्यगुणाद् ग्रीष्मातपसंतप्ततनुः सद्यस्तच्छायासमाक्रमणेन तमेव शैत्यगुणमत्यन्तमधिकतममनुभवति, एवं तदेव सुखमधिकतमत्वेन भासतेऽनङ्गदहनावलीढवपुषः । अत एव वनितालिङ्गनसुखमपि तद्भर्तुः शतगुणोत्तरमनुभवत्यन्यश्चिरकालसंप्रार्थितप्रथमपरीरम्भे । ततः स एव द्वितीयादिपरीरम्भेषु मन्दतरं मन्दतममेव सुखमुपलभते । यदुक्तं गोवर्धनाचार्यैः—"सुरतं तदेव सुरतं कृच्छ्राल्लब्धं यदन्यनारीषु" इति । ननु यदि कान्तालिङ्गनजमपि सुखमात्मसुखं तर्हि मुमुक्षूणां बहुप्रयाससाध्यस्तदनुभवो विषयेणापि सिद्ध्यति कथं विषयिणाम्, सिद्धस्य वा तस्य कुतो न पुरुषार्थरूपत्वम् ? इति चेदुच्यते—पुरुषस्येदं मे स्यादिदं मे स्यादिति सूक्ष्मकामवासनाकण्टकसहस्रसमाविद्धवपुषस्तत्रकतरविषयप्राप्तिसम्भावनासमुदिततत्कामनाप्रौढानलज्वालाप्लुष्टस्य सामान्यवासनाकण्टकवेधव्यथा कृशीभवति, यथा गाढानलदग्धाङ्गस्य पूर्वस्थितकण्टकव्यथा तदा प्रकृतप्रोद्भूततीव्रकामानलस्य विषयप्राप्त्योपशमे

तत्सारमत्र संगृह्य वदामि शृणु संयता ।
यदा सकृत् श्रुता नाथवक्त्रादपि महेश्वरि ॥१००॥
नान्तर्निरूढिमायाति तत्रोपायत्रयं शृणु ।
सत्सङ्गपूर्वकोऽभ्यासो गुरूक्तार्थस्य शङ्करि ॥१०१॥

---

तत्कालेऽन्यवासनानामभिभूतत्वेन प्रौढतरकामाग्नेरुपशमाद्विच्युतिद्योतितमाणिक्यवत् क्षणमात्रं तदात्मसुखं भासते । ततः कामान्तरोद्भवेन स्वरूपं पुनराच्छादितं भवति । तत्परिज्ञानाभावेनापुरुषार्थत्वमिति । यदुक्तं स्पन्दे—"निजाशुद्ध्यासमर्थस्य कर्तव्येष्वभिलाषिणः । यदा क्षोभः प्रलीयेत तदा स्यात् परमं पदम् ॥" इति । एवं च सर्ववासनात्यागेनैव सुखात्मस्वरूपोपलब्धिरिति सिद्धम् । तदेतद् गीत भगवतापि—"प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥" इति । श्रीभागवतेऽपि—"एवं प्रसन्नमनसो भगवद्भक्तियोगतः । भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥" इति । वासिष्ठेऽपि—"समाधिमथ कर्माणि मा करोतु करोतु वा । हृदयेनास्तसर्वाशो मुक्त एवोत्तमाशयः ॥" इति । तथा—"यथाऽभ्रलेखा शशिनं सुधालेपं मषी यथा । दूषयत्येवमेवान्तर्नरमाशापिशाचिका ॥" इति । त्रिपुरारहस्येऽपि—"चैतन्यं निहितं चित्तकरण्डेऽतिसुनिर्मले । अनन्तवासनापङ्कमग्नं नैवोपलक्ष्यते ॥" इति । एवं सुखात्मतां प्रसाध्य योगं वक्तुमुपक्रमते—योग इति । कर्मवद्योगोऽपि बहुधेत्यर्थः । योगश्चित्तस्य निग्रहः । तत्साधनमपि प्रकृते योग इत्युच्यते । तन्त्रभेदेषु तन्त्रान्तरेषु ॥९९॥

तेषां तन्त्रान्तरेषु प्रोक्तानां योगानां मध्ये सारभूतम् अल्पायासे शीघ्रफलदम् । अत्रास्मिन् त्वया पृष्टे परमानन्दसंज्ञिते तन्त्रे । संगृह्य संक्षेपरूपेण कृत्वा । एतस्य सारभूतत्वात् संयता समाहितचित्ता शृणु । तमेव योगमागमेषु शाक्तोपायत्वेन प्रसिद्धं वक्तुं तद्विभजनेनोद्देष्टुमारभते—यदेति । तल्लक्षणमुक्तम्—'उच्चाररहितं वस्तु चेतसैव विचिन्तयन् । य समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥" इति । उच्चाररहितं वागविषयं चेतसा चिन्तनं ध्यानमिति तदर्थः । तन्त्रालोकेऽपि—'अभिमानेन संकल्पाध्यवसायक्रमेण यः । शाक्तः समायोपायोऽपि तदन्ते निर्विकल्पकः ॥" इति । अभिमानादिकं मनोमात्रव्यापारः । समायः सभेदो विकल्पभूतः । तस्यान्ते फलभूतो निर्विकल्पक इति तदर्थः । यदा असकृत् श्रुतापि सा संविद्रूपत्ता अन्तर्निरूढिं नायातीति सम्बन्धः ॥१००॥

अन्तः चित्तभूमौ । निरूढिं नायाति अपरोक्षनिश्चयभूमिं नावतरति । तदा तत्रोपायत्रयं क्रमेणापरोक्षनिश्चयसम्पादकं वक्ष्यमाणं शृणु । ते चोपाया अभ्यासमनोनिरोधप्राणनिरोधरूपाः । तत्राद्यमाह—सत्सङ्गेति । सत्सङ्गः पूर्वो यस्य । सतां सेवनादि

विद्याविलयसंयुक्तः सर्वदैव समभ्यसेत् ।
अनवाप्तफलोऽप्येष फलं यत् प्राप्नुयाच्छिवे ॥२१४॥
शृणु तत्तेऽभिधास्यामि न योगो व्यर्थतां व्रजेत् ।
अनष्टकामनायुक्तः कामनानुगतिं गतिम् ॥२१५॥
प्राप्य देवादिलोकेषु ज्ञात्वान्ते तत्पदं विशेत् ।
अशेषकर्मयुक्त्याऽपि नाप्यते योगिनः कला ॥२१६॥
तस्मादेषा मया प्रोक्ता निष्ठा योगीन्द्रसंमता ।
एवं कर्मपरित्यागस्त्वन्यथा पतितो भवेत् ॥२१७॥
हृल्लेखामात्रशेषस्तु न शिष्यो न गुरुर्भवेत् ।
सर्वलोकगुरुः साक्षाच्छिव एव न संशयः ॥२१८॥

---

एवमालस्येनोपासनात्यागं निषिध्य त्यक्तोपासनस्य योगे आलस्यं निषेधति—विद्येति । विद्याया विलयो विलापनम् । स सर्वदैवाभ्यसेत् । अन्यथा तत्संसर्गेऽपि पातित्यं पूर्वोक्तमनुसन्धेयम् । नन्वेवं त्यक्तोपासनस्य केनापि विघ्नेन फलमप्राप्तस्य का गतिरित्याशङ्क्याह—अनवाप्तेति । तच्छृण्वित्यन्वयः ॥२१४॥

तत्काले फलाजननेऽपि न योगो व्यर्थतां व्रजेत् । स योगी द्विविधः—निष्कामोऽनुवृत्तकामलेशश्च । तत्रानष्टकामनायुक्तो वाञ्छितकामानुसारिणीं स्वर्गादिगतिं प्राप्य तत्र ज्ञात्वा परमां गतिं विशेदित्यन्वयः ॥२१५॥

निष्कामस्यार्थात् सिद्धं ज्ञेयम् । तस्मादशेषकर्मानुष्ठानेऽपि योगिनः फलांशोऽपि न प्राप्यते ॥२१६॥

यस्मात्तेषां निष्ठा कीदृशीति त्वयाहं पृष्टस्तस्मात् । योगीन्द्रेषु सम्यङ्मता विद्वद्भिः । एवमुक्तप्रकारेण ॥२१७॥

ननु एवं विद्योपसंहारेण संसिद्धोऽनुग्रहात् कस्यचिद्भक्तस्योपदेशादि कुर्यादिति चेदाह—हृल्लेखेति । हृल्लेखामात्रशेषस्य त्यक्तविद्यत्वेन न गुरुत्वमिति भावः । एतच्च दीक्षाप्रकरणे वितानितम् । न शिष्य इति शिष्यत्वाप्रसक्तावपि प्रसङ्गान्निषिद्धं ज्ञेयम् । एतेन मूलविद्याशेषस्य गुरुत्वमस्तीत्युक्तं भवति । यदि गुरुत्वरहितस्तर्हि वन्द्योऽपि न भवेदित्याशङ्क्याह—सर्वेति ॥२१८॥

इत्येतद्यत् समाख्यातं गुह्याद् गुह्यतरं महत् ।
तव प्रीत्या मया प्रोक्तं पुनः किं श्रोतुमिच्छसि ॥२१६॥

इति श्रीपरमानन्दतन्त्रे देवीभैरवसंवादेऽध्यात्मकथनं
नाम चतुर्विंशत्युल्लासः ॥२४॥

---

उपसंहरति—इत्येतदिति । यदेतद् गुह्याद् गुह्यतरम् अत्यन्तगोप्यं महत् श्रेष्ठम् अन्यत्र सर्वतन्त्रेषु सम्यग् विस्तृतत्वेनाख्यातम् । तदेव तव प्रीत्या प्रकर्षेण सुस्पष्टत्वेन संग्रहेण चोक्तम् इति । एतदध्यात्मसर्वस्वं ज्ञानं श्रीभैरवोदितम् । शुद्धबुद्ध्या विमृशतां शिवात्मत्वप्रकाशनम् ॥ व्याख्यातमतिबालानामवबोधनहेतवे । विदुषामप्युपालम्भ-विषयः स्यामितीच्छया । विद्वद्भिरपि वाच्यत्वं मादृशस्य सुदुर्लभम् । देवता प्रीयतां चैतत्क्रियया परमेश्वरी ॥२१६॥

सौभाग्यानन्दसन्दोहे श्रीपरापद्यबोधकः ।
परमानन्दटिप्पण्यामुल्लासोऽध्यक्षिसंमितः ॥२४॥



## पञ्चविंश उल्लासः

देव्युवाच—

भैरव श्रोतुमिच्छामि सर्वधर्मोत्तमोत्तमान् ।
महत्तरानधर्मांश्च कौलिकानां महेश्वर ॥१॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि धर्मान् कौलाननुत्तमान् ।
यस्य श्रवणमात्रेण देवताप्रीतिमाप्नुयात् ॥२॥
रहस्यधर्मानष्टौ ते कथयापि शृणु प्रिये ।
पूजामण्डलरक्षार्थं पशुभ्यः प्रयतेत यः ॥३॥
तस्य धर्मः प्राथमिक उच्छिष्टादिप्रमार्जनम् ।
द्वितीयस्तु गुरोराज्ञा तृतीयः परमेश्वरि ॥४॥
पूजोपस्करदानं श्रीदेवतोपासकाय वै ।
चतुर्थो मातृवत् स्त्रीषु वर्तनं पञ्चमो भवेत् ॥५॥

---

एवं चतुर्विंशत्युल्लासैः कर्मोपासनाज्ञानमिति पुरुषार्थसाधनं निरूपितम् । प्रकृते उपासकानामल्पायासेन महोदयकारणं तद्विपरीतं च प्रष्टुं देव्युवाचेति । कौलिकानां प्रोक्तकुलधर्मपराणाम् ॥१॥

उत्तरं भैरव उवाचेति । कौलान् प्रोक्तकुलधर्ममध्यभवान् । श्रवणमात्रेण देवताप्रीतौ किमाचरणे वक्तव्यमिति भावः ॥२॥

रहस्यभूतान् अन्यत्र गोपितान् धर्मान् । पशुभ्यः सम्प्रदायदूषकेभ्यः । पूजामण्डलं त्रयोदशे उक्तम् । तद्रक्षणं च पशुभिर्यथा न विदितं स्यात्तथा करणम् ॥३॥

तस्य धर्मो रक्षणानुकूलक्रिया । अर्थान्मण्डलस्थ नैवेद्यस्वात्मीकारसम्बन्धिन उच्छिष्टस्य पात्रस्य च प्रकर्षेण मार्जनं मृदादिभिः शोधनम् । गुरोराज्ञा अर्थात्तत्पालनम् ॥४॥

पूजायां उपस्कर उपकरणमर्घ्यपात्रादि । परस्त्रीषु मातृवद्वर्तनम् अकामहतत्वेनावलोकनादि ॥५॥

मण्डलान्तर्गतानां तु तोषणं षष्ठ उच्यते।
सर्वत्र देवताभावः सप्तमः परिकीर्तितः ॥६॥
कौलशास्त्रे तथा श्रद्धा त्वष्टमः परिकीर्तितः।
एतेष्वेकमपि प्राज्ञे सेवते यस्तु साधकः ॥७॥
वीरेन्द्रः स तु देवेशि सर्वपूज्यस्तथोत्तमः।
तस्य पुण्यमनन्तं स्यात् साक्षाच्छिवपदं भवेत् ॥८॥
अधर्मानपि ते वक्ष्ये शृणु चैकाग्रमानसा।
भोगेच्छया मण्डलस्थस्त्रीणां यदवलोकनम् ॥९॥
अयमाद्यः समुद्दिष्टः कामवत्यास्त्रियस्तथा।
प्रतिषेधो द्वितीयः स्यात्तृतीयः पशुसंगतिः ॥१०॥
मण्डलस्य तु विघ्नः स्याच्चतुर्थः परमेश्वरि।
निर्माल्यस्य पदा स्पर्शः पञ्चमः प्रोच्यते शिवे ॥११॥

---

मण्डलान्तर्गतानां सामयिकानां सर्वात्मना तोषणम्। सर्वत्र प्राणिषु भावेषु वा प्रोक्तविज्ञानप्रक्रियया चिदात्मदेवताया भावो बुद्धिः ॥६॥

कौलानां प्रोक्तानां यच्छास्त्रं शासनम् आगमरूपं तस्मिन् तत्प्रतिपाद्येऽर्थे श्रद्धा विश्वासः। शास्त्रे श्रद्धेति दीक्षाप्रकरणे धर्माष्टकान्तर्गतस्य रहस्यधर्मत्वविधानायात्र गणनम्। प्राज्ञे इति देवीसम्बोधनम् ॥७॥

वीरा ब्रह्माद्या गुणमूर्तयः। तेषामिन्द्रः समष्टिरूपस्तुर्यः परशिवः। योगिनीभिस्तथा वीरैर्वीरेन्द्रैरिति योगिनीहृदयश्लोकेऽभियुक्तैस्तथा व्याख्यानात्। शिवपदं तस्य भवेत्। एकधर्मसेवने एवं फलं किं धर्माष्टकसेवने वक्तव्यमिति भावः ॥८॥

एवं रहस्यधर्मानुक्त्वा क्रमादधर्मानप्याह—अधर्मानिति ॥९॥

अवलोकनमेवायमाद्यः प्रथमः अधर्मः। या मण्डले स्वस्मिन् कामवती भोगेच्छावती तस्या अभिप्रायं विदित्वा प्रतिषेधो द्वितीयः। पशुभिः प्रोक्तैः संगतिर्मैत्र्यादिकरणम् ॥१०॥

मण्डलस्य प्रोक्तस्य विघ्नकरणम् उपरोधनम्। निर्माल्यस्य देवतायां समर्पितपुष्पादेः ॥११॥

नैवेद्यस्य परित्यागः कुलमार्गस्य निन्दनम् ।
मण्डले पारुष्यवादस्त्वष्टमः स्यान्महेश्वरि ॥१२॥
एकेनापि युतो देवि पातकी स्यान्न संशयः ।
महाधर्मत्रयं वक्ष्ये शृणु देवि समाहिता ॥१३॥
श्रीचक्रदानं विप्राय देवताभक्तियोगिने ।
श्रद्धावते चास्तिकाय निर्लोभत्वेन शङ्करि ॥१४॥
मन्त्रमार्गप्रदानं वै आचारस्यापि गोपनम् ।
एतैस्तु सदृशो धर्मो विद्यते न क्वचिच्छिवे ॥१५॥
अशेषधर्मसारात्मकाः स्युरेते त्रयः शिवे ।
इत्येतत् कथितं सर्वं यन्मां त्वं पृच्छसीश्वरि ॥१६॥
एतत्तन्त्रं महागोप्यं सर्वशक्तिमयं शिवे ।
सर्वतन्त्रसारभूतं परमानन्दसंज्ञकम् ॥१७॥

---

नैवेद्यस्य पात्रे परिवेषितस्य परित्यागः अभुक्त्वा विसर्जनम् । कुलमार्गः शास्त्रोक्तः कुलाचारः । पारुष्यवादो निष्ठुरभाषणम् ॥१२॥

प्रोक्तेष्वष्टधर्मेष्वेकेनापि । महान्तः प्रोक्ताखिलधर्मेषूत्कृष्टा धर्माः, तेषां त्रयम् ॥१३॥

निर्लोभत्वेन अस्मै मया श्रीचक्रं दत्तं चेन्मम किञ्चिद्धनादिकं दास्यतीत्याद्यभिसन्धिरहितत्वेन ॥१४॥

पूर्वोक्तभक्तियोगादियुक्ताय मन्त्रमार्गस्योपासनामार्गस्य प्रदानं प्रकाशनम् । अत्रापि निर्लोभत्वेनेति योग्यत्वाद्योज्यम् । आचारस्योपासनाया गोपनं दूषकेष्वप्रकाशनम् ॥१५॥

अशेषधर्मेषु सारा त्मका बलवत्तराः सर्वधर्मफलदातृत्वात् । उपसंहरति—इत्येतद्रिति । पृच्छसि पृष्टवत्यसि ॥१६॥

एवमुपसंहृत्य तन्त्रं प्रशंसति—एतदिति । महागोप्यम् अत्यन्तगुप्तम् । अद्यावधि न केनचिज्ज्ञातम् । अतिगोप्यत्वे हेतुः—सर्वशक्तिमयमिति ! सर्वं जगच्छक्तिभूतं "यस्य स परशिवः, "शक्तयोऽस्य जगत्सर्वम्" इत्युक्तेः । तत्साधनत्वात्तन्मयम्, परशिवस्वरूपावबोधनमिति यावत् । अत एवान्यसर्वतन्त्रेषु सारभूतम् । अत एव परमोऽनवच्छिन्न आनन्दो यस्मादित्यन्वर्थसंज्ञायुतम् ॥१७॥

**धर्मार्थकाममोक्षाणां निधानं ह्येतदुत्तमम् ।**
**पुरुषार्थमपेक्षन् वै पुरुषः संश्रयेदिदम् ॥१८॥**
**सन्त्यन्यानि तु तन्त्राणि श्रीविद्याप्रभवाणि वै ।**
**परमानन्दतन्त्रस्य कलां नार्हन्ति षोडशीम् ॥१९॥**
**पुरुषार्थं समिच्छन् वै योऽन्यत्र स्यात् कृतादरः ।**
**स हस्तगं मणिं त्यक्त्वा काचं गृह्णाति वै शिवे ॥२०॥**
**अद्वैतविद्यां श्रीविद्यां परमानन्दरूपिणीम् ।**
**विहाय पुरुषार्थेच्छुर्मृगतृष्णां पिबत्यसौ ॥२१॥**
**तस्मादेतत् प्रयत्नेन गोपनीयं महेश्वरि ।**
**य इदं पशवे देवि निन्दकाय समर्पयेत् ॥२२॥**

---

निधीयतेऽस्मिन्निति निधानं स्थानभूतम् । अत एवोत्तमम् । हि यस्मादेवं तस्मात् पुरुषार्थमित्यादि ॥१८॥

नन्वन्यैरपि पुरुषार्थः सिद्ध्यतीत्याशङ्क्याह—सन्तीति । श्रीविद्यायाः प्रकर्षेण सोपासनत्वेन भव उत्पत्तिः प्रकाशो येषु ॥१९॥

अत एवाह—पुरुषार्थमिति । सम्यग् अयमेव परमपुरुषार्थ इति यथार्थज्ञानपूर्वकमिच्छन् । मणिं चिन्तामणिम् ॥२०॥

कुत एवमिति चेदाह—अद्वैतेति । संसारगाढातपसन्तप्तो जनः पुरुषार्थेच्छुः परसुखेच्छावान् सन् परमानन्दतन्त्ररूपिणीं महासरितं विहाय अन्यतन्त्रेषु दृष्टैहिकप्रत्ययेषु कृतादर आभासमात्रसारत्वेन विषयसुखं मृगतृष्णा तां पिबति सेवते । अद्वैतं वेद्यतेऽनयेत्यद्वैतविद्या श्रीविद्याप्रतिपादकत्वात्तन्मयो परमानन्दसरित् । अन्यत्रैवमद्वैतानिरूपणान्नैतत्सदृशमन्यतन्त्रमिति भावः ॥२१॥

यस्मादिदं सर्वत उत्कृष्टं तस्मात् । एतत् प्रकृततन्त्रोक्तं प्रमेयं प्रयत्नेनोपेक्षादिराहित्येन । गोपनीयम् अविस्मरणेन साधकैः रक्षणीयम् । एवं मदुक्ततन्त्रार्थं श्रुत्वा अनुष्ठानाकरणेन विस्मरणे न किञ्चिद्भवतीति भावः । यदुक्तं वासिष्ठे—"भाव्यसे चेत्तदेतस्मात् सर्वं प्राप्नोषि निश्चयात् । नो चेद् बह्वपि संप्रोक्तं त्वयि भस्मनि हूयते ॥ इति ॥२२॥

**तस्य क्रुद्धा महादेवी विमुखीभवति क्षणात् ।**
**दत्वा तु पशवे ह्येतदापदां भाजनं भवेत् ॥२३॥**

**एतत्तन्त्रं पठन् देवि लिखंश्चापि प्रपूजयन् ।**
**देवताप्रीतिमाप्नोति पुरुषार्थान् समश्नुते ॥२४॥**

**इति श्रीपरमानन्दतन्त्रे देवीभैरवसंवादे रहस्यधर्मकथनं नाम पञ्चविंशत्युल्लासः ॥२५॥**

---

समर्पणक्षणे एव विमुखी पराङ्मुखी भवति । नैतावदेव, किन्तु क्रुद्धा च । ननु तत्क्रोधेनापि किं भवेदित्यत आह—दत्वेति ॥२३॥

एतत्तन्त्रपठनेन वाचनेन तत्पुस्तकस्य लेखनेन च पूजनेन च देवताप्रीतिं तद्द्वारा पुरुषार्थान् धर्मादीन् प्राप्नोति चेत् किं वक्तव्यं तत्तन्त्रोक्तार्थोपासनेनेति शिवम् ॥२४॥

सौभाग्यानन्दसन्दोहे भारपद्यार्थबोधकः ।
परमानन्दटिप्पण्यामुल्लासः पञ्चविंशतिः ॥२५॥



जयन्ति पूर्वगुरवः सर्वविद्याविशारदाः ।
बालगोपालेन्द्रयतिप्रवराः शिवरूपिणः ॥१॥

ईश्वरानन्दनाथाख्या विज्ञानविशदाशयाः ।
तत्पादसेवनप्राप्तस्वरूपानन्दनिर्भराः ॥२॥

लोकनाथाश्रमाख्यानाः सद्विद्यापरिनिष्ठिताः ।
यादवानन्दनाथाह्वाः परिव्राट्कुलसंनताः ॥३॥

तत्पादपद्मजामोदसमास्वादसुनिर्वृताः ।
द्राविडान्वयदुग्धाब्धिपरिपूर्णसुधांशवः ॥४॥

प्राप्ताष्टादशसद्विद्यातत्त्वार्थविशदाशयाः ।
श्रीदेवतापादसेवापरताक्षपितायुषः ॥५॥

माधवानन्दनाथाख्या लक्ष्मणाभिधसूरयः ।
पत्न्याऽम्बिकाम्बया दुर्गानाम्न्या संप्राप्तदीक्षया ॥६॥

पारायणन्यासपूजाध्यात्मविद्यैकनिष्ठया ।
गङ्गाधराख्यविदुषा पुत्रेण सुमहात्मना ॥७॥

कल्पद्रुमस्य व्याख्यानकर्त्रा शान्तसुचेतसा ।
श्रीक्षेमानन्दनाथेन लोके विख्यातसत्कथाः ॥८॥

तदङ्घ्रिपङ्कजोदश्चत्प्रेमपीयूषपोषिताः ।
श्रीनिवासाभिधबुधशिरोमणितनूद्भवाः ॥९॥

द्राविडाख्यलसद्वंशमध्यमुक्ताफलायिताः ।
श्रीमातृपादसंसेवापरतानन्दितान्तराः ॥१०॥

विद्याद्वयसुनिष्णाता विश्वनानाख्यसूरयः ।
अमृतानन्दनाथाख्या विदितस्वात्मवैभवाः ॥११॥

तच्छिष्येण कोङ्कणस्थभास्कराभिधयज्वनः ।
विद्वत्समुदयोद्गीतयशसः शान्तचेतसः ॥१२॥

पत्न्याः साध्वीजनश्लाघ्यचारित्रायाः सुगर्भतः ।
समुद्भूतेन सावित्र्याख्यायाः सन्मार्गवर्तिना ॥१३॥

श्रीनाथकरुणाप्राप्तदेवतापदभक्तिना ।
महेश्वरानन्दनाथाख्यचिन्तामणिशर्मणा ॥१४॥

शम्भूनाथबालकृष्णमुखज्येष्ठनियोगतः ।
गणेशविश्वनाथादिसाधकप्रार्थनेन च ॥१५॥

नन्दपक्षाङ्कजलधिमिताऽतीताब्दके कलौ ।
भाद्रे शुक्लानङ्गदिने भानुवारेण संयुते ॥१६॥

परमानन्दतन्त्रस्य गूढार्थैकप्रकाशिका ।
सौभाग्यानन्दसंदोहाख्या टीका रचिताऽभवत् ॥१७॥

कुलज्ञानार्णवौ वामकेश्वरं त्रिपुरार्णवम् ।
संहितां दक्षिणामूर्तेस्त्रिकूटाया रहस्यकम् ॥१८॥

त्रिपुराया रहस्यं च कल्पसूत्रं स्वतन्त्रकम् ।
देवीरहस्यं स्पन्दं च प्रत्यभिज्ञां तथैश्वरीम् ॥१९॥

तन्त्रालोकं चापि दृष्ट्वा तच्छ्लोकाः समुदाहृताः ।
उद्योते सेतुबन्धे च ताराभक्तिसुधार्णवे ॥२०॥

वचनान्युपलभ्यैव लिखितानि प्रसङ्गतः ।
तत्राप्यस्पष्टवचनं विवृतं सम्प्रदायतः ॥२१॥

उपालभेऽहमेवात्र स्वात्मानं विवृतेः कृतौ ।
तथापि श्रीजगन्मातृप्रेरणैव गरीयसी ॥२२॥

मूकोऽपि यत्कृपालेशाद्भवेद्वाक्पतिसंमितः ।
किं तत्र चित्रं व्याख्यातं मयेति सुविचार्यताम् ॥२३॥

बध्वाञ्जलिं प्रार्थयेऽहं विदुषः करुणावतः ।
औद्धत्यमेतत् क्षन्तव्यं मम साहसकारिणः ॥२४॥

सौभाग्यानन्दसन्दोहकृतिर्या निर्मिता मया ।
सौभाग्यविद्याचरणे सैषा भूयात् समर्पिता ॥२५॥

संक्षेपादतिविस्तरेण बहुशो गूढार्थसापेक्षतोऽ-
साकल्याद्विषयस्य साधनविधौ नैवोपकुर्वन्ति वै।
तन्त्राणीदमनल्पविस्तृतमतिस्पष्टं समस्तार्थकं
रेखालोलमितं विहाय न भवेच्छ्रीदेवतोपासनम् ॥२ ॥

अत्युक्तं पुनरुक्तमस्फुटवचोऽपभ्रंशदोषाः क्वचिद्
दृश्यन्ते महतामपीह कृतिषु स्यादत्र भूयस्ततः।
तत्सर्वं मयि बालके सुकृपया संशोध्य विद्वज्जना
निर्मात्सर्यतया निसर्गसरलाः कुर्वन्तु मेऽनुग्रहम् ॥२७॥

तन्त्राणां हृदयं शिवेन विदितं तस्माच्छिवांशात्मकै-
र्व्याख्यातं विबुधैर्हि भास्करमुखैर्युक्तं ततस्तद्भवेत्।
मन्देनेह मयाऽतिसाहसतया व्याख्या कृता या तया
स्वात्मा मे शिववाक्यसङ्गवशतः स्यात् पावितः सर्वथा ॥२८॥

सर्वं श्रीचक्रसाम्राज्ञी सदसत्कर्म मत्कृतम्।
स्वीकरोतु स्वचरणे सर्मर्पितमनुग्रहात् ॥२९॥

वेदरामौ वाणिरामौ श्रुतिरामौ शरागकौ।
वेदरामौ श्रुतिदिशौ नगेभौनन्ददृग्दृशः ॥३०॥

गजनन्दौ रामदिशौ नन्देभौ वेददृग्दृशः।
खेषुदस्राः शररदौ खाभ्रवेदाः खवेदक्ष्माः ॥३१॥

इभाब्धिक्ष्मास्त्र्यब्धिचन्द्राः शरेभौ व्योमनन्दकौ।
रददस्रौ वह्निशरौ रविहस्तौ नखाक्षिणी ॥३२॥

रसदस्रौ मूलभवा ग्रन्थसंख्या पृथक्कृता।
खनागक्ष्माः श्रुतिनगौ खदिशौ त्रीषुनेत्रकाः ॥३३॥

खाङ्कौ खाङ्गुलयोऽभ्राब्धिहस्ताः शून्याग्निकृत्तिकाः।
खरसौ दिक्करौ खाक्षिरामाः खकरपर्वताः ॥३४॥

दिग्दिशौ खाब्ध्यगा अभ्रखरसाः खशराग्नयः।
खेभक्ष्मा नखनेत्रौ खेभहस्ताः खगजेषवः ॥३५॥

खेखेषवो ऽऽकराः खत्वङ्का नखरामक्ष्माः ।
अभ्रेमाविति टीकाया ग्रन्थसंख्या पृथक्कृता ॥३६॥
करेभाब्ध्यग्नयो गर्तुक्ष्माशा अङ्काब्धिषट्त्रिक्ष्माः ।
तत्र व्याख्या विशिष्टानां ग्रन्थसंख्या पृथक्कृता ॥३७॥

इति परमानन्दतन्त्रटीका सौभाग्यानन्दसन्दोहाख्या समाप्ता ॥



# व्याख्योद्धृतग्रन्थग्रन्थकारसूची

# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याभिनवप्रकाशनानि

| क्रमसंख्या ग्रन्थनाम | | मूल्यम् |
|---|---|---|
| १ शुक्लयजुर्वेदकाण्वसंहिता— | [ उत्तरविंशतिः ] संहितेयं सायणभाष्यसहिता प्रकाशिता। सम्पादकः—श्रीचिन्तामणिमिश्रशर्मा— | २२-०० |
| २. वाक्यपदीयम्— | [ तृतीयकाण्डस्य द्वितीयो भागः ] ग्रन्थरत्नमिदं हेलाराजप्रणीतया प्रकाशव्याख्यया तथा च प० रघुनाथशर्मविरचितया 'अम्बाकर्त्री' टीकया च विभूष्य प्रकाशितम्— | १०७-०० |
| ३. महाभाष्यनिगूढाकूतयः – | अनुसन्धानप्रबन्धोऽयं नूनम् आनुसन्धानिकफलश्रुतिभिः समेधितो वर्तते। लेखकः सम्पादकश्च—डॉ० देवस्वरूपमिश्रः— | २६-८० |
| ४ व्याकरणदर्शनप्रतिमा— | आचार्यरामाज्ञापाण्डेयविरचितेऽस्मिन् ग्रन्थे व्याकरणशास्त्रस्य दार्शनिकपदार्थानां मौलिकं विवेचनं कृतमस्ति-— | ३६-६० |
| ५. बौधायनशुल्बसूत्रम्— | ग्रन्थोऽयं श्रीव्यंकटेश्वरदीक्षितविरचितया बोधायनशुल्बमीमांसाख्यया तथा च श्रीद्वारकानाथयज्वप्रणीतबौधायनशुल्बसूत्रव्याख्यानाख्यया टीकयाऽथ च प्रभूतैः संवादात्मकैः रेखाचित्रैश्च सनाथीकृतः— | ७५-०० |
| ६. तन्त्ररत्नम्— | [ पञ्चमभागः ] पार्थसारथिमिश्रविरचितः टुप्टीकासनाथितो मीमांसाग्रन्थोऽयं साम्प्रतं सम्पादकपण्डितपट्टाभिरामशास्त्रिविरचिततात्त्विकया भूमिकया सनाथितो विराजते— | ४६-६० |
| ७. तन्त्रसङ्ग्रहः— | [तृतीयो भागः] तन्त्रशास्त्रस्य विविधतन्त्रसङ्ग्रहात्मकोऽयं ग्रन्थो बहुविधैरनुसन्धानात्मकैः भूमिका-टिप्पण-परिशिष्टैश्च समुल्लसति— | ६२-२० |
| ८. योगिनीहृदयम्— | [ तृतीयसंस्करणम् ] तन्त्रशास्त्रीयोऽयं ग्रन्थः अम्बिकानन्दयोगिकृतदीपिकाख्यया, भास्कररायकृतसेतुबन्धव्याख्यानाख्यया च टीकया समलङ्कृत्य प्रकाशितः— | ३३-४० |
| ९. रुद्रयामलम्— | तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं विविधैः किल गवेषणापूर्णैः भूमिका-टिप्पण-परिशिष्टादिभिः विभूष्य प्रकाशितम्— | ६४-०६ |
| १०. यन्त्रराजविचारविंशाध्यायी— | आचार्यनयनसुखोपाध्यायविरचितेऽस्मिन् ग्रन्थे ज्योतिषशास्त्रीयोपयोगिनां वेधादियन्त्राणां खलु सैद्धान्तिकं प्रायोगिकञ्च विवेचनं कृतं वर्तते— | ११-०६ |
| ११. पुराणेतिहासयोः साङ्ख्ययोगदर्शनविमर्शः— | अनुसन्धानप्रबन्धेऽस्मिन् लेखकेन सम्पादकेन च डॉ० श्रीकृष्णमणित्रिपाठिना महता प्रयासेन पौराणिका महाभारतीयाश्च साङ्ख्य-योगपदार्था विवेचिताः— | ३२-८० |
| १२. भारतीयविचारदर्शनम्— | [ द्वितीयो भागः ] ग्रन्थेऽस्मिन् लेखकेन डॉ० हरिहरनाथत्रिपाठिना भारतीयविचाराचाराणाम् ऐतिहासिकं तुलाबोधकञ्च विवेचनं कृतम्— | १०५-६० |
| १३. पालितिपिटकसद्दानुक्कमणिका— | पालित्रिपिटकान्तर्गतानां शब्दानां सान्दर्भिकः समावेशोऽस्मिन् ग्रन्थे कृतो वर्तते— | १००-३ |

प्राप्तिस्थानम्—विक्रयविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य–२२१००२.